**भावविवृतिः–** 'नापयाति युधः क्वापि न क्वचिच्छद्म चाऽचरेत्' इत्यत्र युधः युद्धान्नापयाति परावृत्य न गच्छति । क्वचिदपि विष्ण्वाज्ञां विनेत्यर्थः । अन्यथा अभिमन्युना पद्मव्यूहप्रवेशकाले जयद्रथेन सह युध्यतो भीमस्यापयानकथनात् । तदुक्तम्- '....जयद्रथेनात्र वृकोदरस्तु । विष्णोरभीष्टं वधमार्जुनेस्तदा विज्ञाय शक्तोऽपि न चात्यवर्तत ।।' (ता.नि-२६.४१) इति । क्वचिदपि छद्माकरणं वैष्णवेष्वेवेति सूचनाय चशब्दः । अन्यथा छद्मना पुरोचनादिवधोक्त्यसम्भवात् । तदुक्तम्-

'तस्याग्रजा च सहिता सुतपञ्चकेन तत्रागमत् तदनु मारुतिरेष कालः ।
इत्थं विचिन्त्य स निशम्य च तान् प्रसुप्तान् भ्रातृंश्च मातरमथाशु बिले न्यधात् प्राक् ।।
तं भागिनेयसहितं भगिनीञ्च तस्य पापां ददाह सगृहां पवमानसूनुः ।।' (ता.नि-१९.३८-३९)

'निकृत्या निकृतिं हन्यात् निकृत्या नैव धार्मिकम्' इति श्रुतेः (ता.नि-२८.२१५) तद्धननस्य छद्मनैव विहितत्वात् ।।७।।

**जनार्दनीया–** क्वापि कुत्रापि । प्रतीपं विरोधम् । अनुपस्करिणः कवचास्त्रादिरहितान् । स्वयं उपस्करी कवचादिमान् । युधः युद्धात् नापयाति न परावृत्य गच्छति । छद्म अदृश्यत्वादि ।।७।।

**भावचन्द्रिका–** ।।१-६।। युद्धादिना प्रतीपाकरणेऽपि अधर्माचरणमेव प्रतीपकरणं इत्यत आह– **अनुपस्करिण इत्यादिना** ।।७।।

**चट्टि–** सः भीमः क्वापि कुत्रापि कथञ्चन केनापि प्रकारेण हरेः प्रतीपं विरोधं न करोति । अनुपस्करिणः वर्मादिसाधनरहितान् स्वयं उपस्करी कवचादिमान् युद्धे नाभियाति । युधः युद्धात् क्वापि नापयाति न परावृत्य गच्छति । क्वचिदपि छद्म अदृश्यत्वादिछद्म च नाचरेत् ।।७।।

**[१]नैवोर्ध्वदैहिकानुज्ञामवैष्णवकृतेऽकरोत् ।**
**न करोति स्वयं नैषां प्रियमप्याचरेत् क्वचित् ।।८।।**

**व्यासतीर्थीया–** ऊर्ध्वं देहात् ऊर्ध्वदेहं ऊर्ध्वदेहस्येदं और्ध्वदैहिकम् ।।८-९।।

**वादिराजतीर्थीया–** 'नैवोर्ध्वदैहिकानुज्ञाम्' इत्यत्र अवैष्णवकृते और्ध्वदैहिकं कुर्वित्यनुज्ञां नाकरोत् । स्वयं न करोति च ।।८-९।।

**वरदराजीया–** अवैष्णवकृते दुर्योधनाद्यर्थम् । स्वयं च न करोति । एषां अवैष्णवानाम् ।।८।।

**जनार्दनीया–** अवैष्णवकृते दुर्योधनाद्यर्थे और्ध्वदैहिकानुज्ञां देहत्यागानन्तरं कर्तव्यकर्मणोऽनुज्ञाम् । स्वयं न करोति, अन्त्यकर्मेति शेषः । एषामवैष्णवानाम् ।।८।।

---

१. 'न चौर्ध्वदैहिकानुज्ञां' इति भावचन्द्रिकापाठः । तथा एकविंशतितमेऽध्याये १६३ तमे श्लोके सत्वात् ।

**चट्टि–** अवैष्णवकृते दुर्योधनाद्यर्थे । और्ध्वदैहिकानुज्ञां देहत्यागानन्तरकर्तव्यकर्मणोऽनुज्ञां नाकरोत् । स्वयं न करोति । एषामवैष्णवानां क्वचिदपि प्रियं नाचरेत् ।।८।।

**सख्यं नावैष्णवैश्चक्रे प्रतीपं वैष्णवेन च[१] ।**
**परोक्षेऽपि हरेर्निन्दां कृतो जिह्वां छिनत्ति च ।।९।।**

**वरदराजीया–** वैष्णवेन च प्रतीपं न करोति । हरेर्निन्दां कृतवतः जिह्वां छिनत्ति ।।९।।

**भावविवृतिः–** 'सख्यं नावैष्णवैश्चक्रे प्रतीपं वैष्णवेन तु' इत्यत्र असुरावेशरहितैर्वैष्णवैः प्रतीपं न चक्रे इत्यर्थः । विशेषसूचनाय तुशब्दः । अन्यथा द्रोणद्रौणिकर्णादिभिः युद्धकरणायोगात् । उक्तश्च तेष्वसुरावेशः।

'सर्वांश्च तत्र कलिराविशदेव भीमपूर्वान्विनैव चतुरः सपृथाश्च कृष्णाम् ।
क्षत्तारमेव च ततो न हि भीष्ममुख्यैस्ते वारिता.... ।।' इति । (ता.नि-२१.३१०)

अत एव वाह्लीकेन प्रार्थितत्वात् तं जघानेत्युक्तम् । किञ्च राजसूयार्थं दिग्विजयकाले-

'हिमवच्छिखरे देवान् जित्वा शक्रपुरोगमान् । क्रीडार्थं युध्यतस्तेभ्यः तुष्टेभ्यो रत्नसञ्चयम् ।।
बाहुयुद्धेन शेषश्च गरुडश्च महाबलम् । क्रीडमानो विनिर्जित्य भूषणान्याप तोषतः ।।
ताभ्याश्च दृढमाश्लिष्टः स्नेहविक्लिन्नया धिया ।
पोप्लूयमानस्स ततोऽम्बुधौ बली जगाम बाणस्य पुरं हरश्च ।
रणेऽजयद् वारणरूपमास्थितं क्रीडन्तमेतेन च तोषितो हरः ।।' (ता.नि-२१.१८९-१९१)
इत्याद्युक्तम् । तदा भीमेन शल्यवाह्लीकयोर्जयमपि नोक्तम् ।।

।। **परोक्षेऽपीति** ।। न केवलं स्वस्य हरिसमक्षमवस्थितौ स्वेन शृण्वतः सतः यो हरिनिन्दां करोति तस्य जिह्वां छिनत्तीति । किन्तु परोक्षेऽपि स्वस्य हर्यसमक्षमवस्थितावपि स्वेन शृण्वतः सतः हरिनिन्दां कर्तुः जिह्वां छिनत्तीत्यर्थः । भीमस्यैवं सदा प्रतिज्ञाऽस्तीति चशब्दः । तदुक्तम्– 'दूरेऽपि केशवविनिन्दनकारिजिह्वां उच्छेत्स्य इत्युरुतराऽस्य सदा प्रतिज्ञा' (ता.नि-२१.२४४) इति ।।९।।

**लघ्वनन्तभट्टीया–** ।। **परोक्षेऽपीति** ।। कृष्णस्य परोक्षे स्वपुरतः ।।९।।

**जनार्दनीया–** परोक्षेऽपि दूरेऽपीत्यर्थः । कृतवतः ।।९।।

**ताम्रपर्णीया–** परोक्षेऽपि कृष्णस्य परोक्षेऽपि स्वपुरतः अजीघनद्वा ।।९-११।।

**चट्टि–** अवैष्णवैः सख्यं न चक्रे । वैष्णवेन विष्णुभक्तेन प्रतीपं विरोधं नाकरोत् । परोक्षेऽपि दूरेऽपि हरेः निन्दां कृतवतः जिह्वां छिनत्ति च ।।९।।

---

१. 'वैष्णवेन तु' इति भावविवृतिकाराणां पाठः ।

**प्रतीपकारिणो हन्ति [1]विष्णोर्वैतानजीघनत् ।**
**न संशयं कदाऽप्येष धर्मे ज्ञानेऽपि वाऽकरोत् ॥१०॥**

**व्यासतीर्थीया–** अजीघनत् अघातयत् ॥१०॥

**वादिराजतीर्थीया–** 'प्रतीपकारिणो हन्ति विष्णोर्वैतानजीघनत्' इत्यत्र विष्णोः प्रतीपकारिणः स्वयं हन्ति । एतान् प्रतीपकारिणः अजीघनद्वा घातयामास वा । अन्यकरेण घातयति वेत्यर्थः ॥१०-११॥

**वरदराजीया–** विष्णोः प्रतीपकारिणः स्वयं हन्ति । हि एतान् अन्यैः अजीघनत् घातयामास ॥१०॥

**अनन्तभट्टीया–** विष्णोः प्रतीपकारिणः ॥१०॥

**लघ्वनन्तभट्टीया-** अजीघनत् घातयामास वा ॥१०॥

**भावविवृतिः–** 'प्रतीपकारिणो हन्ति विष्णोर्वै तानजीघनत्' इत्यत्र स्वभावतो विष्णोः प्रतीपकारिणः भीमः स्वयं हन्ति । वैशब्दो असुरावेशद्योतकः । तानसुरावेशिनो विष्णोः प्रतीपकारिणो भीष्मद्रोणकर्ण-शल्यभगदत्तादीनजीघनत् । अर्जुनादिभिर्घातयामासेत्यर्थः । स्वतो विष्णोः प्रतीपकारिष्वपि कृष्णवध्य-साल्वहंसडिभिकादीन् विनैवेति सूचनाय वैशब्दः । अन्यथा 'प्रतीपं वैष्णवेन तु' इत्युक्तिविरोधः स्यात् । 'न संशयं कदाप्येषः धर्मे ज्ञानेऽपि वाऽकरोत्' इत्यत्र सर्वं ज्ञानं धर्मिण्यभ्रान्तं सर्वेषां धर्म्यंशे संशयाद्य-भावात् । जीवेशयोः स्वातन्त्र्यपारतन्त्र्याद्यशेषधर्मांशे संशयं तद्विषये विपरीतज्ञानं नाकरोदित्यर्थः ॥१०॥

**जनार्दनीया–** प्रतीपकारिणः द्वेषकारिणः स्वयं हन्ति । एतान् अकृतोद्वाहराजपुत्रदुष्टस्त्रीद्यूत-कितवाद्यवैष्णवान् अजीघनत् घातयति, परैरिति शेषः ॥१०॥

**भावचन्द्रिका–** प्रकारांशेऽपि किञ्चिदयथार्थं संशयरूपज्ञानं नास्ति, किमु वक्तव्यं अयथार्थज्ञानं नास्तीत्याह– **नेति** ॥१०॥

**चट्टि–** विष्णोः प्रतीपकारिणः स्वयं हन्ति । एतान् प्रतीपकारिणः अजीघनत् वा घातयामास वा । अन्यकरेण घातयति वेत्यर्थः । एषः भीमः कदापि धर्मज्ञानेऽपि वा संशयं नाकरोत् ॥१०॥

**विद्योपजीवनं नैष चकाराऽपद्यपि क्वचित् ।**
**अतो न धर्मनहुषौ प्रत्युवाच कथञ्चन ॥११॥**

**व्यासतीर्थीया–** आपद्यपि विद्योपजीवनं न च करोतीति कुत इत्यत आह– **अत इति** ॥११॥

**वादिराजतीर्थीया–** 'अतो न धर्मनहुषौ' इत्यत्र अतः स्वजीवनकाम्यया विद्योपजीवनस्याकार्यत्वात् सर्परूपी नहुषः पक्षिरूपी यमः तौ कथञ्चन स्वस्य वन्धनाद्यायासप्राप्तावपि न प्रत्युवाच तत्कृतप्रश्नप्रतिवचनं न दत्तवान् ॥११॥

---

[1]. 'विष्णोर्वै तान्' इति भावविवृतिकाराणां पाठः ।

**वरदराजीया**– विद्यया उपजीवनं शरीरनिर्वाहादिकम् । धर्मं यमं नहुषं च प्रति नोवाच प्रश्नोत्तरं न दत्तवान् ।।११।।

**अनन्तभट्टीया**– ।। **वियेति** ।। विद्यया उपजीवनम् उदरपूरणसङ्कटमोचनादि ।।११।।

**जनार्दनीया**– विद्योपजीवनं विद्यया उपजीवनं उदरपूरणम् । यतः अतः धर्मनहुषौ यमनहुषौ प्रति नोवाच प्रश्नोत्तरं न दत्तवान् ।।११।।

**चट्टि**– एषः भीमः आपद्यपि क्वचित् विद्यया उपजीवनं शरीरनिर्वाहादिकं नैव चकार । यतः अतः धर्मनहुषौ पक्षिरूपी यमः सर्परूपी नहुषः तौ कथञ्चन स्वस्य बन्धनाद्यायासप्राप्तावपि न प्रत्युवाच तत्कृतप्रश्नप्रतिवचनं न दत्तवान् ।।११।।

**आज्ञयैव हरेर्द्रौणेरस्त्राण्यस्त्रैरशामयत् ।**
**अदृश्योऽलम्बुसो भग्नो नान्यत्र तु कथञ्चन ।।१२।।**

**व्यासतीर्थीया**– ननु भीमः अस्त्रयुद्धं धर्मं न मन्यते चेत्कथं द्रौणेरस्त्राण्यस्त्रैरवारयत् अलम्बुसश्च हत इत्यत आह– **आज्ञयेति** ।।१२।।

**वादिराजतीर्थीया**– 'अदृश्योऽलम्बुसो भग्नः' इत्यत्र भग्नः पराभवं प्रापितः ।।१२-१५।।

**वरदराजीया**– हरेः कृष्णस्याज्ञयैव द्रौणेः अस्त्राणि अस्त्रैरशामयत् परिहृतवान् । अलम्बुसो राक्षसो अदृश्य एव भग्नः । हरेराज्ञयैव इत्यनुवर्तते ।।१२।।

**भावविवृतिः**– 'नान्यत्र तु कथञ्चन' इत्यत्र भीम एव द्रौण्यलम्बुसं विना अन्यत्र अस्त्रयुद्धं न कृतवानिति वक्तव्यम् । देवासुरयुद्धे 'अस्त्राणि तस्यास्त्रवरैर्निवार्य मुमोच तस्योरसि काञ्चनीं गदाम्' (ता.नि-११.१८५) इति वायोः अस्त्रयुद्धकथनात् हरिरप्यत्रैनं न प्रेषितवान् इति सूचनाय तुशब्दः ।।१२।।

**जनार्दनीया**– ननु अस्त्रयुद्धं धर्मं न मन्यते इत्युक्तम्, तर्हि कथं द्रौणिना अलम्बुसेन च सह अस्त्रयुद्धं कृतवानित्यत आह– **आज्ञयेति** ।। हरेः कृष्णस्य अनुज्ञयैव । अशामयत् परिहृतवान् । अदृश्योऽलम्बुसो भग्नः पराजितः । न तु हतः । अन्यत्र तु 'घटोत्कचेन हतः' इति षड्विंशाध्यायेऽभिधानात् । आज्ञया इत्यनुवर्तते ।।१२।।

**ताम्रपर्णीया**– भग्नः पराभवं प्रापितः ।।१२-१४।।

**भावचन्द्रिका**– देवासुरयुद्धे वायोरस्त्रयुद्धोक्त्या भीमावतारे नान्यत्रेत्यर्थः ।।१२।।

**चट्टि**– ननु 'भीमः अस्त्रयुद्धं धर्मं न मन्यते' इत्युक्तम् । तर्हि कथं द्रौणिना अलम्बुसेन च अस्त्रयुद्धं कृतवानित्यत आह– **आज्ञयेति** ।। हरेः श्रीकृष्णस्य अनुज्ञयैव द्रौणेः अश्वत्थाम्नः अस्त्राणि अस्त्रैः अशामयत्

परिहृतवान् । अदृश्योऽलम्बुसो भग्नः पराजितः । न तु हतः । 'अलम्बुसो घटोत्कचेन हतः' (श्लो-८१) इति षड्विंशाध्यायेऽभिधानात् । आज्ञयेत्यनुवर्तते । अन्यत्र कथञ्चन नास्त्रयुद्धं कृतवान् ।।१२।।

**न ह्यस्त्रयुद्धे सदृशो द्रौणेरस्त्यर्जुनादृते ।**
**सर्ववित्त्वं ततो भीमे प्रदर्शयितुमीश्वरः ।**
**अदादाज्ञामस्त्रयुद्धे तथैवालम्बुसं प्रति ।।१३।।**

**व्यासतीर्थीया–** ननु कृष्णोऽप्यधर्मेऽस्त्रयुद्धे कथमाज्ञामदादित्यत आह– **न हीति** ।।१३-१४।।

**वरदराजीया–** हरिणापि किमर्थं तथा अज्ञा दत्ता इत्यत आह– **न हीत्यादिना** ।। अस्त्रयुद्धविषये अर्जुनादृते द्रौणेः समः नास्ति । ततः द्रौणिजयार्थं अलम्बुसं प्रत्यपि तद्धननार्थं आज्ञामदादित्यर्थः ।।१३।।

**भावविवृतिः–** 'न ह्यस्त्रयुद्धे सदृशो द्रौणेरस्त्यर्जुनादृते' इत्यत्र अर्जुनस्य द्रौणिसाम्यं नरावेशनिमित्तकं ब्रह्मशापात् कदाचिदाधिक्यश्चेति सूचनाय हिशब्दः । तदेतदुक्तम्- (ता.नि-२.४३.)

बलदेवस्ततः पश्चात् ततः पश्चाच्च फल्गुनः । नरावेशादन्यथा तु द्रौणिः पश्चात्ततोऽपरे ।। इति ।।
... .. .इति ब्रह्मा शिवं तदा । शशाप मानुषेषु त्वं क्षिप्रं जातः पराभवम् ।।
शक्रान्नरतनोर्यासि यस्मै त्वं तु मृषाऽवदः । (ता.नि-१८.१३१-१३२.) इत्युक्तेः ।।१३-१४।।

**जनार्दनीया–** हरिणा किमर्थं आज्ञा दत्तेत्यत आह– **न हीति** ।। द्रौणेः अश्वत्थाम्नः । युद्धे युद्धविषये । ततः अर्जुनात् । सर्ववित्त्वं सर्वज्ञत्वं प्रदर्शयितुं आज्ञामदादित्यर्थः ।।१३।।

**भावचन्द्रिका–** ।। **न हीति** ।। साम्याभावे आधिक्याभावे । अर्जुनस्य नरावेशादाधिक्येऽपि साम्यमिति भावः । अन्यथा 'ततोऽप्यति'(ता.नि-१८.३३) इति वक्ष्यमाणविरोधात् ।।१३।।

**चट्टि–** ननु श्रीकृष्णोऽप्यधर्मेऽस्त्रयुद्धे कथमाज्ञां अदादित्यत आह– **न हीति** ।। अस्त्रयुद्धे विषये अर्जुनादृते द्रौणेरश्वत्थाम्नः सदृशः समो नास्ति । ततः अर्जुनात् सर्ववित्त्वं सर्वज्ञत्वं भीमे प्रदर्शयितुं ईश्वरः श्रीकृष्णः अस्त्रयुद्धे आज्ञामदादित्यर्थः । तथैव अलम्बुसं प्रत्याज्ञामदादित्यर्थः ।।१३।।

**प्रत्यक्षीभूतदेवेषु बन्धुज्येष्ठेषु वा नतिम् ।**
**मर्यादास्थितयेऽशासद् भगवान् पुरुषोत्तमः ।।१४।।**

**वरदराजीया–** नतिं नमस्कारं अशासत् आज्ञापितवान् । बन्धुज्येष्ठेषु कुन्तीयुधिष्ठिरादिषु अशासत् अशिक्षयदित्यर्थः ।।१४।।

**अनन्तभट्टीया–** पुरुषोत्तमः विष्णुः नतिं अशासयत नमस्कारं कुर्वित्याज्ञापयामासेत्यर्थः ।।१४।।

**भावविवृतिः—** 'मर्यादास्थितयेऽशासत्' इत्यत्र देवानां मानुषत्वप्राप्तौ तदा देवतानियमनं न कार्यमिति या मर्यादा तस्याः स्थितये रक्षणार्थमशासत् आज्ञापयत् ।।१४।।

**जनार्दनीया—** बन्धुज्येष्ठेषु बान्धवाश्च ते ज्येष्ठाश्च तेषु कुन्तीयुधिष्ठिरादिषु । अशासत् अशिक्षयदित्यर्थः ।।१४।।

**चट्टि—** प्रत्यक्षीभूतदेवेषु बान्धवाश्च ते ज्येष्ठाश्च तेषु कुन्तीयुधिष्ठिरादिषु नतिं मर्यादास्थितये भगवान् पुरुषोत्तमः अशासत् अशिक्षयदित्यर्थः ।।१४।।

**तत्रापि विष्णुमेवासौ नमेन्नान्यं कथञ्चन ।**
**आज्ञयैवास्त्रदेवांश्च प्रेरयामास[१] नार्थनात् ।।१५।।**

**व्यासतीर्थीया—** ननु हरेराज्ञयास्त्रैर्द्रौण्यस्त्रवारणेन देवतायाचनायाः प्राप्तत्वात् कथं 'नायाचद् देवमानुषान्' इत्युक्तिरित्यत आह— **आज्ञयेति** ।।१५।।

**वरदराजीया—** तत्रापि प्रत्यक्षीभूतदेवादिषु बन्धुष्वपि । अस्त्रयुद्धे अस्त्रदेवांश्च अस्त्राभिमानिनो देवान् आज्ञयैव भृत्यानिव प्रेरयामास । न प्रार्थनात् ।।१५।।

**भावविवृतिः—** 'आज्ञयैवास्त्रदेवांश्च प्रेरयामास नार्थनात्' इत्यत्र अस्त्राभिमानिदेवान् नाप्रार्थयत् । किन्तु आज्ञयैव प्रेषयेति हर्याज्ञयैव अस्त्रदेवताः भीमस्तदा प्रेषयामासेति । एतद्विशेषसूचनाय चशब्दः । एवं सति वायोरस्त्रयुद्धे नमस्कारादिकं विना आज्ञयैवास्त्रदेवतानियमनं सम्भवतीति भावः ।।१५।।

**जनार्दनीया—** तत्रापि प्रत्यक्षीभूतदेवेषु बन्धुज्येष्ठेष्वपि । अस्त्रयुद्धे अस्त्रदेवान् अस्त्राभिमानिदेवान् आज्ञयैव भृत्यानिव प्रेरयामास । नार्थनात् न प्रार्थनात् ।।१५।।

**ताम्रपर्णीया—** ।। **आज्ञयैवास्त्रदेवांश्चेति** ।। नन्वेवं चेत् 'नास्त्रयुद्धं क्वचिद् भीमः'(ता.नि-१८.१) इति कुतः? आज्ञयैव देवताप्रेरणेन तदुपपत्तेरिति चेन्न । साक्षान्नारायणद्विट्तदनुबन्धिनिग्रहस्यैव परम-धर्मत्वे वा अस्त्रदेवताद्वारकयुद्धस्य तादृशधर्मानापादकत्वात् । अत एव 'अञ्जसा' इत्युक्तमिति ज्ञेयम् ।। १५।।

**भारतश्री—** ।। **आज्ञयैवास्त्रदेवांश्चेति** ।। 'न हि भागवतो धर्मो देवताभ्युपयाचनम्'(ता.नि-१८.३) इत्युक्तेः । तर्हि किमिति नास्त्रयुद्धं चकारेति । एतस्य काम्यकर्मत्वात् न चकारेति । तदुक्तम्- 'ह्यस्त्रं काम्यफलप्रदम्' (ता.नि-१८.४) इति । काम्यकर्मत्वेऽप्यलम्बुसादौ विष्ण्वाज्ञया चकार न स्वयमतो न दोष इति ।।१५।।

---

१. 'प्रेषयामास' इति भावविवृतिपाठः ।

**चट्टि–** तत्रापि प्रत्यक्षीभूतदेवेषु बन्धुज्येष्ठेष्वपि असौ भीमः विष्णुमेव नमेत् । अन्यं कथञ्चन न नमेत् । अस्त्रयुद्धे अस्त्रदेवान् अस्त्राभिमानिदेवान् आज्ञयैव भृत्यानिव प्रेरयामास । नार्थनात् न प्रार्थनात् ।।१५।।

**अन्वेनमेव तद्धर्मे कृष्णैका संस्थिता सदा ।**
**धृतराष्ट्रादपि वरं ततो नाऽत्मार्थमग्रहीत् ।।१६।।**

**व्यासतीर्थीया–** ननु कृष्णाया अपि [1]भागवतधर्मनियतत्वापत्तौ किन्तु तत्र सतीत्यत आह– **अन्विति** ।। या एनमन्वेव तद्धर्मे संस्थिता । कृष्णायाः भागवतधर्मे नियतत्वं कुत इत्यत आह– **धृतराष्ट्रादिति** ।। ततो भगवद्धर्मनियतत्वात् ।।१६-१७।।

**वादिराजतीर्थीया–** *'अन्वेनमेव तद्धर्मे'* इत्यत्र एनं भीमं अनु अनुसृत्य एका कृष्णैव तद्धर्मे कृष्णधर्मे संस्थितेति योजना ।।१६-१८।।

**वरदराजीया–** एनं भीममनु तद्धर्मे तादृशधर्मे । तदेव विवृणोति– **धृतराष्ट्रादित्यादिना** ।। ततः तद्धर्मवत्वात् ।।१६।।

**भावविवृतिः–** अन्वेनमेव तद्धर्मे अच्छिन्नभगवद्धर्म इत्यर्थः ।।१६-१७।।

**जनार्दनीया–** एनमनु भीममनु तद्धर्मे भागवते धर्मे । यतः अतः कारणात् । श्वशुरादपि वरं स्वीकारयोग्यं श्वशुरादपि । आत्मार्थे स्वार्थे ।।१६।।

**ताम्रपर्णीया–** ।। **धृतराष्ट्रादपि वरमिति** ।। 'छन्दिता सा वरैस्तेन धर्मे भागवते स्थिता । नैवात्मनो वरान् वव्रे वव्रे तेषां विमोक्षणम्' (ता.नि-२१.३६८) इति वक्ष्माणत्वादिति भावः ।।१६।।

**चट्टि–** एनमनु भीममन्वेव । तद्धर्मे भागवते धर्मे । एका कृष्णा सदा संस्थिता । यतस्ततः कारणात् । धृतराष्ट्रात् वरस्वीकारयोग्यश्वशुरादपि आत्मार्थं वरं नाग्रहीत् ।।१६।।

**[2]नाशपद् धार्तराष्ट्रांश्च महापद्यपि सा ततः ।**
**न वाचा मनसा वाऽपि प्रतीपं केशवेऽचरत् ।।१७।।**

---

१. मूलकोशेषु अस्पष्टमिदं वाक्यम् ।

२. विराटपर्वणि- २१.१-५ जनमेजय उवाच– 'अहो दुःखतरं प्राप्ता कीचकेन पदा हता । पतिव्रता महाभागा द्रौपदी योपितांवरा ।। दुःशलां स्मारयन्ती सा भर्तॄणां भगिनीं शुभाम् । नाशपत् सिन्धुराजं सा बलात्कारेण वाहिता ।। किमर्थमिह संप्राप्ता कीचकेन दुरात्मना । नाशपत् तं महाभागा कृष्णा पादेन ताडिता ।। तेजोराशिरियं देवी धर्मज्ञा सत्यवादिनी । केशपाशे परामृष्टा मर्षयन्ती ह्यशक्तवत् ।। नैनत्कारणमल्पं हि श्रोतुकामोऽस्मि सत्तम । कृष्णायास्तु परिक्लिशान्मनो मे दूयते भृशम् ।।'

**वरदराजीया–** धार्तराष्ट्रान् दुर्योधनादीन् सभायां वस्त्रापहरणसमये नाशपत् न शशाप । प्रतीपं विरोधम् ।।१७।।

**भावविवृतिः–** 'न वाचा मनसा वापि प्रतीपं केशवेऽचरत्' इत्यत्र असुरावेशरहिते वैष्णवेऽपि प्रतीपं नाचरेदिति सूचनाय अपिपदम् । 'ये धर्मं न वदन्तीह न ते वृद्धा इतीरिताः' (ता.नि-२१.३१७) इत्याद्युक्त्या द्रौपद्या भीष्मादीनां तिरस्कारकथनात् ।।१७-२५।।

**जनार्दनीया–** ततः भीमानुकूलधर्मवत्वात् ।।१७।।

**ताम्रपर्णीया–** ।। नाशपदिति ।। अन्यथा तपोभङ्गप्राप्तेरिति भावः । ब्रह्मा तु जगत्क्षेमाय भगवदाज्ञया च शापादि ददातीति न क्षुद्रोपद्रवः ।।१७।।

**भावचन्द्रिका–** ।। नाशपदिति ।। ब्रह्मणा शापदानात् अनपायिशापो दीयत इत्यधर्मे संस्थिते इत्युक्तेरिति चेन्न । तेनापि स्वोपद्रवपरिहाराय शापादानात् अनपायि न दत्तः । तस्य स्वार्थं ऐहिकफले देवताविनियोगरूपत्वात् वचनमात्रं हन्तृत्वाभावादिति ।।१७।।

**चट्टि–** ततः तद्धर्मवत्वात् सा धार्तराष्ट्रान् दुर्योधनादीन् महापद्यपि वस्त्राकर्षणादिरूपमहापद्यपि नाशपत् । वाचा मनसापि केशवे प्रतीपं विरोधं नाचरत् ।।१७।।

**अन्ये भागवतत्वेऽपि छिन्नधर्माः क्वचित् क्वचित् ।**
**[१]स्यमन्तकार्थे रामोऽपि कृष्णस्य विमना भवत् ।।१८।।**

---

विराटपर्वणि- (२१.३१-३५) 'एतत्ते कथितं सर्वं कीचकस्य पराक्रमम् । द्रौपदी न शशापैनं यस्मात् तद्वदतः शृणु ।। रक्षन्ति हि तपः क्रोधात् ऋषयो न शपन्ति च । जानन्ती तद्यथातत्त्वं द्रौपदी न शशाप तम् ।। क्षमा धर्मः क्षमा दानं क्षमा यज्ञः क्षमा तपः । क्षमा सत्यं क्षमा शीलं क्षमा सर्वमिति श्रुतिः ।। क्षमावतामयं लोकः परश्चैव क्षमावताम् । एतत्सर्वं विजानन्ती सा क्षमामन्वपद्यत ।। भर्तॄणां मतमाज्ञाय क्षमिणां धर्मचारिणाम् । नाशपत् तं विशालाक्षी सती शक्तापि भारत ।।'

अत्र केवलं कीचकशापाकरणे कारणं श्रूयते । सैन्धवं प्रति शापादाने कारणं न श्रूयते तत्रापि एतदुपस्कर्तव्यम् । अन्यथा भगवतः व्यासस्य न्यूनतापत्तेः ।

दुर्योधनदुश्शासनादीनां शापादानेऽपि एतदेव कारणमिति आचार्या वदन्ति । तत्रापि एतदेव प्रमाणं भवति । अन्यस्य अनुक्तेः । न हि कीचकसैन्धवौ शप्तुं समर्था न तु दुर्योधनादीन् इत्यत्र विशेषनियामकमस्ति ।

१. 'निहन्तुं शतधन्वानं सत्यभामापितुर्द्रुहम् । शतधन्वनि दुर्बुद्धौ हते सीरधरोऽग्रजः ।। कुपितो मामनादृत्य विदेहान् विमना ययौ । एतावन्तमहं कालं तदागमनकाङ्क्षया ।। पुर एवावसं क्वापि नागच्छं कार्ययन्त्रितः ।।' भागवते-१०.६२.१३-१५.

**व्यासतीर्थीया–** ननु बलादेरपि भागवतत्वात् कृष्णैका भगवद्धर्मनियतेत्युक्तिरयुक्तेत्यत आह– **अन्य इति** ।। कथं छिन्नधर्मत्वं तेषामित्यतस्तद्दर्शयति– **स्यमन्तकार्थ इत्यादिना** ।। विरुद्धं मनो यस्यासौ विमनाः । भवत् । अनित्यमागमशासनमित्यडागमाभावः ।।१८।।

**वरदराजीया–** अन्ये शेषाद्यात्मकबलभद्राद्याः । तदेव विवृणोति– **स्यमन्तकार्थ इत्यादिना** ।। विमनाः विरुद्धमनाः ।।१८।।

**जनार्दनीया–** अन्ये बलभद्राद्याः । भागवतत्वेऽपि भगवद्भक्तत्वे सत्यपि । तदेव दर्शयति– **स्यमन्तकार्थ इत्यादिना** ।। कृष्णस्येति कर्मणि षष्ठी । विमनाः विरुद्धमनाः भवत् ।।१८।।

**ताम्रपर्णीया–** भवत् अभवत् । अडभावः छान्दसः ।।१८-२२।।

**भारतश्री–** न केवलं उग्रसेनादयः (नाप) रामोऽपि इत्यपेरर्थः ।।१८।।

**अतिविशद–** 'अन्ये भागवतत्वेऽपि छिन्नधर्माः क्वचित् क्वचित्' इत्यत्र भागवतानां भावः भागवतत्वं तस्मिन् । भगवद्धर्मे छिन्नधर्मा छिन्नमनोवृत्तय इत्यर्थः । अन्येषामित्यध्याहारेण अन्येषां भागवतत्वेऽपीति वा ।।१८।।

**चट्टि–** अन्ये शेषाद्यात्मकबलभद्राद्याः । भागवतत्वेऽपि भगवद्भक्तत्वेऽपि सत्यपि क्वचित् क्वचित् छिन्नधर्मा इति । तदेव दर्शयति– **स्यमन्तकार्थ इत्यादिना** ।। रामोऽपि स्यमन्ताकार्थे कृष्णस्य । विरुद्धं मनः यस्य असौ विमनाः भवत् । अनित्यमागमशासनमिति अडागमाभावः । यद्वा विरुद्धा मा ज्ञानं यस्य सः विमः स चासौ ना च विमना ।।१८।।

**अवमेनेऽर्जुनः कृष्णं विप्रस्य शिशुरक्षणे ।**
**प्रद्युम्न उद्धवः साम्बोऽनिरुद्धाद्याश्च सर्वशः ।।१९।।**

**वादिराजतीर्थीया–** 'अवमेनेऽर्जुनः कृष्णम्' इत्यत्र 'नाहं सङ्कर्षणो ब्रह्मन्न कृष्णः कार्ष्णिरेव च । अहं धनञ्जयो नाम गाण्डीवं यस्य कार्मुकम् ।।'(१०.८९.३९) इति भागवतोक्तेः अर्जुनः कृष्णमवमेने इत्यर्थः ।।१९-२२।।

**वरदराजीया–** अवमेने तिरस्कृतवान् ।।१९।।

**जनार्दनीया–** अवमेने तिरस्कृतवान् ।।१९।।

**चट्टि–** अर्जुनः विप्रस्य शिशुरक्षणे विषये श्रीकृष्णमवमेने तिरस्कृतवान् ।।१९।।

**हरेरिष्टं सुभद्रायाः फल्गुने दानमञ्जसा ।**
**ज्ञात्वाऽपि रुरुधुः सम्यक् सात्यकिः कृष्णसम्मितम् ।।२०।।**

**वरदराजीया–** प्रद्युम्नाद्याः सुभद्रायाः फल्गुने दानं हरेरिष्टं ज्ञात्वाऽपि रुरुधुः प्रतिवन्धं कृतवन्तः सात्यकिः कृष्णसम्मितं कृष्णेन सदृशं पार्थं अर्जुनं मन्यते ।।२०।।

**अनन्तभट्टीया–** अर्जुने सुभद्रायाः आदानं हरेरिष्टं ज्ञात्वाऽपि ।।२०।।

**जनार्दनीया–** रुरुधुः प्रतिवन्धं चक्रुः । कृष्णस्य सम्मितं कृष्णेन सदृशम् पार्थम् ।।२०।।

**चट्टि–** प्रद्युम्नः उद्धवः साम्वः अनिरुद्धाद्याश्च सर्वशः सुभद्रायाः फल्गुने दानमञ्जसा हरेरिष्टं ज्ञात्वाऽपि सम्यक् रुरुधुः प्रतिवन्धं चक्रुः । सात्यकिः कदाचित् पार्थं श्रीकृष्णेन सम्मितं सदृशम् मन्यते ।।२०।।

**[१]कदाचिन्मन्यते पार्थं धर्मजोऽपि नरं हरिम् ।**
**मत्वाऽबिभेज्जरासन्धवधे कृष्णमुदीरितुम् ।।२१।।**

**वरदराजीया–** धर्मराजोऽपि हरिं नरं मत्वा अविभेत् शङ्कितवान् ।।२१।।

**जनार्दनीया–** अविभेत् शङ्कितवान् ।।२१।।

**चट्टि–** धर्मजोऽपि हरिं श्रीकृष्णं नरं मत्वा जरासन्धवधे श्रीकृष्णमुदीरितुं अविभेत् शङ्कितवान् । 'ञिभी भये' इति धातोः लङ् ।।२१।।

**बन्धनं शङ्कमानो हि कृष्णस्य विदुरोऽपि तु ।**
**कौरवेयसभामध्ये नावतारमरोचयत् ।।२२।।**

**वादिराजतीर्थीया–** 'नावतारमरोचयत्' इत्यत्र 'तॄ प्लवने' इति धातोः अवतारं अवतरणं प्लवनं गमनमिति यावत् ।।२२-२४।।

**वरदराजीया–** कृष्णस्य वन्धनं शङ्कमानः कृष्णावतारं नारायणावतारं न अरोचयत् । कौरवेयसभामध्ये अवतारं कृष्णस्यागमनं वा ।।२२।।

**अनन्तभट्टीया–** कृष्णस्य वन्धनम् ।।२२।।

**जनार्दनीया–** विदुरः अवतारं आगमनम् । नारोचयत् न तुतोष ।।२२।।

**चट्टि–** विदुरोऽपि श्रीकृष्णवन्धनं शङ्कमानः सन् कौरवेयसभामध्ये श्रीकृष्णस्य अवतारं आगमनम् । नारोचयत् न तुतोष ।।२२।।

---

१. कदाचिद्धर्मजोऽपि श्रीकृष्णं पार्थसम्मितं मन्यते इति विराटपर्वणि-(३.३३-३४) 'एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् । सोऽयमिन्द्रादनवमो वासुदेवाच्च भारत ।।'

**[१]नकुलः करदानाय प्रेषयामास केशवे ।**
**अवमेने हरेर्बुद्धिं सहदेवः कुलक्षयात् ॥२३॥**

**व्यासतीर्थीया–** कुलक्षयत्वकारणात् ॥२३॥

**सत्याभिनवतीर्थीया–** 'नकुलः करदानाय..' इति श्लोकः । तस्यार्थः- नकुलः करदानाय करादानाय केशवे केशवं प्रति दूतं प्रेषयामास । सहदेवः हरेः बुद्धिं कुलक्षयात् कुलक्षयकारिणीं मत्वा अवमेने इति । एतेन 'करादानाय केशवं प्रति दूतं प्रेषयामास' इति वक्तव्यम् । 'करदानाय केशवे प्रेषयामास' इति कथनमनुपपन्नमिति चोद्यं प्रत्युक्तम् । 'करदानाय' इत्यत्र दानशब्देन आदानमुच्यते । 'केशवे' इति सप्तमी द्वितीयादेशः, प्रति दूतमित्यनयोः शेषः इति च स्वीकृत्य करादानाय केशवं प्रति दूतं प्रेषयामासेत्यर्थस्योक्तत्वात् । एतेनैव कुलक्षयकारिणीं मत्वेति वक्तव्यम् । 'कुलक्षयात्' इति कथनमनुपपन्नमिति दूषणं परास्तम् । कुलक्षयशब्देन कुलस्य क्षयो यस्या इति बहुव्रीहिः कुलक्षयादिति लिङ्गव्यत्ययः छान्दसः, पञ्चमी ल्यब्लोपनिमित्तेत्यङ्गीकृत्य कुलक्षयकारिणीमित्यर्थस्योक्तत्वात् ॥२३॥

**वरदराजीया–** करदानाय कृष्णात् करं गृहीतुं इति यावत् । कुलक्षयात् कुलक्षयं कृतवानिति कृत्वा हरेः कृष्णस्य बुद्धिमवमेने हीनां मेने ॥२३॥

**अनन्तभट्टीया–** ॥ कुलेति ॥ कुलक्षयकारणात् ॥२३॥

**जनार्दनीया–** करदानाय कृष्णः करं ददात्विति । कुलक्षयात् कुलक्षयकारणात् । अवमेने हीनं मेने ॥२३॥

**ताम्रपर्णीया–** कुलक्षयात् कुरुभिर्विग्रहकरणे कुलक्षयो भविष्यतीति हेतोः ॥२३-२५॥

**चट्टि–** नकुलः करदानाय श्रीकृष्णात् करं गृहीतुमिति यावत् । केशवे श्रीकृष्णे प्रेषयामास, दूतमिति शेषः । सहदेवः कुलक्षयात् कुलक्षयकारणात् हरेः श्रीकृष्णस्य बुद्धिं अवमेने हीनं मेने ॥२३॥

**[२]देवकीवसुदेवाद्या मेनिरे मानुषं हरिम् ।**
**भीष्मस्तु भार्गवं राममवमेने युयोध च ॥२४॥**

**वरदराजीया–** भीष्मः अवमेने निन्दां कृतवान् युयोध च ॥२४॥

**जनार्दनीया–** भीष्मः अवमेने निन्दां कृतवानिति भावः ॥२४॥

---

१. 'तत्रस्थः प्रेषयामास वासुदेवाय भारत । स चास्य गतभी राजन् प्रतिजग्राह शासनम् ॥' इति सभपर्वणि-३५.१३.

२. भागवते (१०.७३.२८) नारद उवाच । नातिचित्रमिदं विप्र वसुदेवो बुभुत्सया । कृष्णं मत्वार्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ इति ।

**चट्टि–** देवकीवसुदेवाद्याः हरिं श्रीकृष्णं मानुषं मेनिरे । भीष्मस्तु भार्गवं रामं अवमेने । निन्दां कृतवानिति भावः । युयोध च ।। २४ ।।

**[१]द्रोणकर्णद्रौणिकृपाः कृष्णाभावे मनो दधुः ।**
**[२]देवाः शिवाद्या अपि तु विरोधं चक्रिरे क्वचित् ।।२५।।**

**व्यासतीर्थीया–** सन्त्ववतारे देवाश्छिन्नधर्मिणः मूलरूपे नैवमित्यत आह– **देवा इति** ।।२५।।

**वादिराजतीर्थीया–** कृष्णाभावे युद्धे शरताडनादिना कृष्णनाशे ।।२५।।

**वरदराजीया–** कृष्णाभावे कृष्णस्य विनाशे । शिवाद्या देवाः मूलरूपेणापि क्वचित् कदाचित् विरोधं चक्रिरे । देवा अपि विरोधं चक्रिरे ।।२५।।

**अनन्तभट्टीया–** कृष्णाभावे कृष्णहनने ।।२५।।

**भावविवृतिः–** 'देवाः शिवाद्या अपि तु विरोधं चक्रिरे क्वचित् । ....अवजानन्ति यत्सदा' इत्यत्र शिवाद्याः देवऋषिमानुषगन्धर्वाः अपि । तुशब्दोऽसुरावेशसूचकः । क्वचिद्विरोधं चक्रिरे ।।२५।।

**जनार्दनीया–** कृष्णाभावे कृष्णहनने । देवाः मूलरूपेणापि देवा अपि विरोधं चक्रिरे ।।२५।।

**भारतश्री–** मूलरूपेऽप्येवमेवेत्याह– **देवा इति** ।।२५।।

**चट्टि–** द्रोणकर्णद्रौणिकृपाः श्रीकृष्णाभावे युद्धे शरताडनादिना श्रीकृष्णनाशे मनो दधुः । शिवाद्याः देवाः मूलरूपेणापि क्वचिद् कदाचित् विरोधं चक्रिरे ।।२५।।

---

१. द्रोणपर्वणि.१८४. धृतराष्ट्र उवाच । कर्णदुर्योधनादीनां शकुनेः सौबलस्य च । अपनीतं महत् तात तव चैव विशेषतः ।।१।। यदि जानीथ तां शक्तिमेकघ्नीं सततं रणे । अनिवार्यामसह्यां च देवैरपि सवासवैः ।।२।। सा किमर्थं तु कर्णेन प्रवृत्ते समरे पुरा । न देवकीसुते मुक्ता फल्गुने वापि सञ्जय ।।३।। सञ्जय उवाच । संग्रामाद् विनिवृत्तानां सर्वेषां नो विशाम्पते । रात्रौ कुरुकुलश्रेष्ठ मन्त्रोऽयं समजायत ।।४।। प्रभातमात्रे श्वोभूते केशवायार्जुनाय वा । शक्तिरेषा हि मोक्तव्या कर्ण कर्णेति नित्यशः ।।५।। अत्र सञ्जयवचने 'सर्वेषां नः' इति वचनात् द्रोणद्रौणिकृपादयोऽपि सङ्ग्रहीतुं शक्यते । तथा सौषुप्तिकपर्वणि १२ अध्याये । अश्वत्थामा कृष्णं सुदर्शनचक्रं दातुमयाचत । तदुद्धरेति कृष्णेनोक्ते सति अश्वत्थामा तदुद्धर्तुं समर्थो न बभूव । कुत इदं याचसि इति पृष्टः आह । 'प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह । प्रार्थितं ते मया चक्रं देवदानवपूजितम् । अजेयः स्यामिति विभो सत्यमेतद् ब्रवीमि ते ।।३७।।' इति अश्वत्थामा कृष्णायुधेन कृष्णं जेतुं ऐच्छत् ।

२. 'देवाः प्रतीपं कुर्वन्ति रुद्रेन्द्राद्याः सुरेश्वराः । प्रतीपं क्वापि कुरुते न प्राणः सर्वगोचरः ।।' स्कन्दपुराणे वैष्णव-खण्डे वैशाखमाहात्म्ये-१९.६५. पूर्वश्लोकानुसारेणात्रत्यप्रतीपशब्दस्य वासुदेवप्रतीपमित्यर्थः ।

**ऋषिमानुषगन्धर्वा वक्तव्याः [१]किमतः परम् ।**
**जन्मजन्मान्तरेऽज्ञानादवजानन्ति यत् सदा ।।२६।।**

**व्यासतीर्थीया–** ज्ञानादिति अकारसंश्लेषभावाभावाभ्यां योज्यम् ।।२६।।

**वेदाङ्गतीर्थीया–** ऋषिमानुषगन्धर्वाः जन्मजन्मान्तरे स्थिताः अज्ञानात् अन्यथाज्ञाना(नुगमात्) एव अवजानन्ति । यत् तस्मात् ते ऋष्यादयः छिन्नधर्मा इति वक्तव्याः (किम्) ।।२६।।

**वादिराजतीर्थीया–** 'जन्मजन्मान्तरेऽज्ञानात्' इत्यत्र जन्मजन्मान्तरे सदा सर्वदा अज्ञानात् विद्यमानादज्ञानात् अवजानन्ति कदाचित् कदाचिदवजानन्ति ।।२६।।

**वरदराजीया–** अतः परं किं ऋष्याद्याः विरोधं चक्रिरे इति किं वक्तव्यः । सिद्धत्वात् न वक्तव्य एवेत्यर्थः । यत् यस्मात् जन्मजन्मान्तरे अनेकेषु जन्मसु अज्ञानात् सदा प्रतिजन्मनि अवजानन्ति अवज्ञां कुर्वन्ति ।।२६।।

**अनन्तभट्टीया–** ।। **जन्मेति** ।। अत्र ज्ञानात् अज्ञानादिति च्छेदेन योज्यम् ।।२६।।

**भावविवृतिः–** परे दैत्याः । यद्यस्मात् जन्मजन्मान्तरेऽज्ञानात् सदा हरिमवजानन्ति अवज्ञां कुर्वन्ति । तस्मात् ते दैत्यांशाः दुर्योधनादयः अवजानन्तीति पुनर्वक्तव्यः किमित्यन्वयः ।।२६-२७।।

**जनार्दनीया–** ऋषिमानुषगन्धर्वाः जन्मजन्मान्तरे स्थितादज्ञानादनाद्यज्ञानात् । सदा प्रतिजन्मन्यवजानन्ति अवज्ञां कुर्वन्ति । अतः तस्मात् परं ऋष्याद्याः छिन्नधर्मा इति किं वक्तव्याः । सिद्धत्वान्न वक्तव्या एवेत्यर्थः ।।२६।।

**ताम्रपर्णीया–** 'ऋषिमानुष' इत्यत्र मानुषपदेन चक्रवर्तिनः । अतः परमस्मदादयः यद्यस्माज्जन्मजन्मान्तरे सदा भगवदज्ञानात् सदाऽवजानन्ति, अतः विरोधं कुर्वन्तीति किमु वाच्यमित्यर्थः । यद्वा 'ऋषिमानुष' इत्यत्र मानुषपदेनास्मदादयो विवक्षिताः । यदा प्राप्तपदा देवा अपि मूलरूपिणो विरोधं चक्रिरे । अतः परं ऋषिमानुषगन्धर्वा विरोधं चक्रिर इति किमु वक्तव्यम् । तदुपपादयति– **जन्मेति** ।। जन्मनि ऋष्यादिजन्मनि जन्मान्तरे च सदा अज्ञानात् सर्वदा ज्ञानाभावात् सदा नियमेनावजानन्तीति तस्मादित्यर्थः ।।२६।।

**चट्टि–** देवा अपि यदा विरोधं चक्रिरे अतः परे ऋष्याद्याः विरोधं चक्रिरे इति किं वक्तव्याः । सिद्धत्वात् न वक्तव्या एवेत्यर्थः । यत् यस्मात् जन्मजन्मान्तरे स्थितादज्ञानादनाद्यज्ञानात् । सदा प्रतिजन्मन्यवजानन्ति अवज्ञां कुर्वन्ति ।।२६।।

---

१. 'किमतः परं' इति भावविवृतिचट्टीटिप्पण्योः पाठः ।

**तस्मादेको वायुरेव धर्मे भागवते स्थितः ।**
**लक्ष्मीः सरस्वती चेति परशुक्लत्रयं [१]श्रुतम् ॥२७॥**

**व्यासतीर्थीया–** वायोरेव भागवतधर्मनियतत्वं प्रसाध्योपसंहरति– **तस्मादिति** ॥ वाय्वनन्तरं सरस्वती भागवते धर्मे नियता इत्येतत्प्रमाणयन्नाह– **परेति** ॥२७॥

**वेदाङ्गतीर्थीया–** शुक्लत्रयं भागवतधर्मे व्यभिचाराभावेन शुद्धत्रयम् ॥२७॥

**वादिराजतीर्थीया–** 'परशुक्लत्रयं श्रुतम्' इत्यत्र सरस्वती वायुः लक्ष्मीश्चेति परे परमात्मनि शुक्लानां शुद्धानां त्रयं त्रिकं श्रुतं श्रुतिप्रसिद्धम् । वायुर्भारतीत्यनुक्त्वा सरस्वतीति कथनात् वायुपदेन ब्रह्माऽपि गृह्यते । सरस्वतीपदेन भारत्यपि गृह्यत इति सूचितम् ॥२७-३१॥

**वरदराजीया–** उपसंहरति– **तस्मादिति** ॥ तस्मात् परिशेषात् वायुरेव भागवते धर्मे स्थितः । तथा लक्ष्मीः सरस्वती चेति द्वे धर्मे स्थिते । अतो वाय्वादित्रयं परशुक्लत्रयमिति शुद्धाः त्रयः स्मृताः ॥२७॥

**भावविवृतिः–** 'तस्मादेको वायुरेव धर्मे भागवते स्थितः । लक्ष्मीः सरस्वती चेति परशुक्लत्रयं स्मृतम्' इत्यत्र स्मृतं स्मृत्युक्तम् । 'श्रुतम्' इति पाठे श्रुत्युक्तमिति । परशुक्लत्रयं परे परमात्मनि, भक्त्या इत्युपस्कर्तव्यम् । शुक्लाः शुद्धाः तेषां त्रयं त्रिकम् । अत्र वायुपदेन ऋजवोऽपि ग्राह्याः । सरस्वतीपदेन तत्पदयोग्याः सर्वाः ग्राह्याः । तेषामप्यसुरावेशादिसर्वदोषराहित्यस्यावश्यं वक्तव्यत्वात् । तदुक्तम्- 'अनादिकालतस्सर्वदोषहीना गुणाधिकाः' (ता.नि.३२.७२) 'ऋजवो नाम ये देवा देवानामपि देवताः' (ता.नि.३२.७३) 'सर्वगुह्योपदेष्टारः सर्वेषां गुरवो हि ते' (छा.३.मधुविद्या) 'ऋजूनामेक एवास्ति परमोत्साहवर्जनम् ॥' इत्यादि (अनु.३.३.अनुवन्धाधिकरणम्) ॥२७-३७॥

**लघ्वनन्तभट्टीया–** परशुक्लत्रयं परमशुद्धत्रयम् । केचित्तु परमात्मनि शुद्धत्रयमित्याहुः ॥२७॥

**जनार्दनीया–** उपसंहरति– **तस्मादिति** ॥ वायुरेव धर्मे स्थितः । तथा लक्ष्मीः सरस्वती च स्थिते । इति एतत्त्रयं परशुक्लत्रयं स्मृतम् । भगवद्धर्मव्यभिचाराभावेनातिशुद्धाः त्रयः स्मृता इति भावः ॥२७॥

**ताम्रपर्णीया–** परशुक्लत्रयं परमशुद्धत्रयम् । स्वसंविदा अन्यानुपजीविस्वरूपभूतज्ञानेन ॥२७॥

**चट्टि–** तस्मात् एको वायुरेव भागवते धर्मे स्थितः । तथा लक्ष्मीः सरस्वती चेति द्वे भागवते धर्मे स्थिते अतः परशुक्लत्रयं स्मृतम् । शुद्धभगवद्धर्मे स्थितत्वात् अतिशुद्धाः त्रयः स्मृता इति भावः । वायुभारतीत्यनुक्त्वा सरस्वतीतिकथनाद्वायुपदेन ब्रह्मापि गृह्यते । सरस्वतीपदेन भारत्यपि गृह्यत इति सूचितम् ॥२७॥

---

१. 'स्मृतम्' इति जनार्दन-चट्टि-भावविवृतिकाराणां पाठः । 'श्रुतम्' इति भावविवृतिकाराणां पाठान्तरम् ।

**सर्वमेतच्च कथितं तत्र तत्रामितात्मना ।**
**व्यासेनैव पुराणेषु भारते च स्वसंविदा ॥२८॥**

**व्यासतीर्थीया—** 'वाय्वादय एव भागवतधर्मनियताः अन्ये छिन्नधर्मिणः' इत्यत्र प्रमाणान्तरं सूचयन्नाह— **सर्वमिति** ॥२८॥

**वेदाङ्गतीर्थीया—** स्वसंविदा स्वरूपज्ञानेन व्यासेन ॥२८॥

**वरदराजीया—** तत्र तत्र ग्रन्थे अमितात्मना व्यासेन । 'तत्र' इत्युक्तस्य विवरणम्— **पुराणेषु भारते चेति** ॥२८॥

**अनन्तभट्टीया—** स्वसंविदा स्वप्रतिभया ॥२८॥

**लघ्वनन्तभट्टीया-** स्वसंविदा स्वरूपसंविदा ॥२८॥

**जनार्दनीया—** इदं स्वकपोलकल्पितं नेत्याह— **सर्वमिति** ॥ स्वसंविदा स्वरूपज्ञानेन व्यासेन पुराणेषु भारते च तत्र तत्र रामार्जुनादिप्रसङ्गे एतद्रामादीनां छिन्नधर्मत्वम् । कथितमिति योजना ॥२८॥

**ताम्रपर्णीया—** स्वसंविदा अन्यानुपजीविस्वरूपभूतज्ञानेन ॥२८॥

**चट्टि—** इदं स्वकपोलकल्पितं नेत्याह— **सर्वमिति** ॥ अमितात्मना व्यासेनैव स्वसंविदा स्वरूपज्ञानेन पुराणेषु भारते च तत्र तत्र रामार्जुनादिप्रसङ्गे एतद्रामादीनां छिन्नधर्मत्वम् । कथितमित्यन्वयः ॥२८॥

**यदा ते सर्वशस्त्रास्त्रवेदिनो राजपुत्रकाः ।**
**बभूवू रङ्गमध्ये तान् भारद्वाजोऽप्यदर्शयत्[१] ॥२९॥**

**व्यासतीर्थीया—** प्रसङ्गप्राप्तं किञ्चिद्विविच्य प्रकृतमनुसन्धत्ते— **यदा त इत्यादिना** ॥२९॥

**वेदाङ्गतीर्थीया—** 'सर्वेष्वप्यधिकोऽर्जुनः' इति प्रसङ्गप्राप्तशङ्कापरिहारत्वेन भीमाधिक्यमुक्त्वा परिसंहृत्य प्रकृतमनुसरति— **यदा त इत्यादिना** ॥२९-३७॥

**वरदराजीया—** एवं 'तेष्वधिकोऽर्जुनः' इत्युक्त्या प्राप्तां भीमस्य हीनत्वशङ्कां परिहृत्य उत्तरकथां वक्ति— **यदा त इत्यादिना** ॥ भारद्वाजो द्रोणः तान् राजपुत्रान् तच्छिक्षितविद्यां व्यदर्शयत् प्रदर्शयामास ॥२९॥

**जनार्दनीया—** 'सर्वेष्वप्यधिकोऽर्जुनः' इत्युक्तिप्राप्तार्जुनाधिक्यशङ्कां परिहर्तुं भीमाधिक्यमुक्त्वा तदुपसंहृत्य प्रकृतमनुसरति— **यदेत्यादिना** ॥ भारद्वाजो द्रोणः । एतान् कुमारान् दर्शयामासेत्यर्थः ॥२९॥

---

१. 'व्यदर्शयत्' इति व्यासतीर्थीय-वरदराजीय-चट्टिपाठः ।

**भावचन्द्रिका–** पुरबाह्यप्रदेशे निर्मिते समस्थले रङ्गमध्ये ।।२९।।

**चट्टि–** '**सर्वेष्वप्यधिकोऽर्जुनः**' इत्युक्तिप्राप्तार्जुनाधिक्यशङ्कां परिहर्तुं भीमाधिक्यमुक्त्वा प्रकृतमनुसरति– **यदेत्यादिना** ।। यदा ते राजपुत्रकाः सर्वशस्त्रास्त्रवेदिनो बभूवुः । तदा भारद्वाजो द्रोणः तान् कुमारान् रङ्गमध्ये व्यदर्शयत् ।।२९।।

> **[1]रक्तचन्दनसत्पुष्पवस्त्रशस्त्रगुडोदनैः[2] ।**
> **सम्पूज्य भार्गवं राममनुजज्ञे कुमारकान् ।।३०।।**

**व्यासतीर्थीया–** 'व्यदर्शयत्' इत्युक्तं विवृणोति– **रक्तेति** ।।३०-३१।।

**वरदराजीया–** ।। **शस्त्रेति** ।। शस्त्रसमर्पणमपि पूजेति भावः । भार्गवं रामं सम्पूज्य [3]मूलगुरुत्वादिति भावः । अनुजज्ञे आज्ञापयामास ।।३०।।

**अनन्तभट्टीया–** ।। **अस्त्रशस्त्रेति** ।। अस्त्रसमर्पणमेव । तेन पूजनमनुजज्ञे ।।३०।।

**जनार्दनीया–** अनुजज्ञे आज्ञापयामास ।।३०।।

**चट्टि–** रक्तचन्दनसत्पुष्पवस्त्रशस्त्रगुडोदनैः द्रोणो भार्गवं रामं सम्पूज्य । स्वगुरुत्वादिति भावः । कुमारान् अनुजज्ञे आज्ञापयामास ।।३०।।

> **ते भीष्मद्रोणविदुरगान्धारीधृतराष्ट्रकान् ।**
> **सराजमण्डलान् नत्वा कुन्तीं चादर्शयञ्छ्रमम् ।।३१।।**

**व्यासतीर्थीया–** श्रममभ्यासम् ।।३१।।

---

१. 'सर्वदा भगवान् विष्णुः धनुर्वेदस्य दैवतम् । आयुधानां च सर्वेषां स एव भगवान् हरिः । तस्मादाराध्य देवेशं विष्णुं विष्णुपरायणः । क्रमेण मण्डलं दृष्ट्वा दीक्षाव्रतपरायणः ।। आविद्याग्रहणान्नित्यं ब्रह्मचारी जितेन्द्रियः । अर्चयेद्धि सदा विष्णुं ध्यायन् विष्णुमतन्द्रितः । भक्त्या परमया युक्तस्त्वष्टाक्षरपरायणः । कृत्वाऽधिवासं क्रमशो लिखित्वा चक्रमण्डलम् । अस्त्रशस्त्राणि तत्रैव अर्चयित्वा तु मण्डले । आचार्यमभिवाद्यादौ प्रणम्यास्त्राणि सर्वशः । लोकपालान् नमस्कृत्य दत्त्वा पुष्पाक्षतानि तु । अष्टाक्षरशतं जप्त्वा ध्यात्वा नारायणं प्रभुम् । आरभेतास्त्रशिक्षां तु धनुर्गृह्य यथाविधि । दत्वा भगवते पश्चात् दक्षिणा च यथाविधि । एवमभ्यस्यतो नित्यं धनुर्वेदं यथाक्रमम् । शस्त्राण्यस्य प्रसीदन्ति विजयश्च रणे ध्रुवः । तस्मात् सर्वप्रयत्नेन व्रतेनानेन शिक्षयेत् । ऋषिरात्रमिति प्रोक्तं बार्हस्पत्यमनन्तरम् ।।' सनत्कुमारसंहितायाम् ऋषिरात्रम् १०.५६-६४.

२. 'रङ्गमध्यं तदाचार्यः सपुत्रः प्रविवेश ह । नभो जलधरैर्हीनं साङ्गारक इवांशुमान् ।। व्यासस्यानुमते चक्रे बलिं बलवतां वरः ।।' इत्यादिपर्वणि १४४.२२-२३.

३. 'कुलगुरुत्वात्' इति क्वचित् कोशेषु पाठः ।

**वादिराजतीर्थीया–** 'अदर्शयञ्छ्रमम्' इत्यत्र श्रमं विद्यापरिश्रमम् ॥३१-३३॥

**वरदराजीया–** ते कुमाराः राजमण्डलेन सह वर्तमानान् भीष्मादीन् । श्रमं विद्यापरिश्रमम् ॥३१॥

**जनार्दनीया–** श्रमं विद्याभ्यासम् ॥३१॥

**चट्टि–** ते राजपुत्रकाः सराजमण्डलान् भीष्मद्रोणविदुरगान्धारीधृतराष्ट्रकान् कुन्तीं च नत्वा श्रमं विद्याभ्यासं अदर्शयन् ॥३१॥

**सर्वैः प्रदर्शितेऽस्त्रे तु द्रोणादात्तमहास्त्रवित् ।**
**द्रौणिरस्त्राण्यमेयानि दर्शयामास चाधिकम्[1] ॥३२॥**

**व्यासतीर्थीया–** अमेयानि अन्यैर्ज्ञातुमशक्यानि ॥३२-३४॥

**वरदराजीया–** सर्वैः कुमारैः अस्त्रे प्रदर्शिते सति । सर्वेभ्यः अधिकं यथा भवति तथा ॥३२॥

**अनन्तभट्टीया–** (दर्शयामास) विद्याप्रदर्शनायेति भावः ॥३२॥

**जनार्दनीया–** आत्तमहास्त्रवित् प्राप्तमहास्त्रज्ञः ॥३२॥

**चट्टि–** सर्वैः अस्त्रे प्रदर्शिते सति द्रोणादात्तमहास्त्रवित् प्राप्तमहास्त्रज्ञः द्रौणिः अश्वत्थामा च अमेयानि अस्त्राणि सर्वेभ्यः अधिकं यथा भवति तथा दर्शयामास ॥३२॥

**ततोऽप्यतितरां पार्थो दिव्यास्त्राणि व्यदर्शयत्[2] ।**
**अविध्यन्माशके पादे पक्षिणः [3]पक्ष्म एव च ।**
**एवमादीनि चित्राणि बहून्येष व्यदर्शयत् ॥३३॥**

**वादिराजतीर्थीया–** 'पक्षिणः पक्ष्म एव च' इत्यत्र 'पा रक्षणे' इति धातोः पं नयनरक्षणं तत्र क्ष्मं क्षमं समर्थमिति व्युत्पत्त्या पक्षममेव पक्ष्म तस्मिन्नित्यर्थः ॥३३-५७॥

**वरदराजीया–** ततो द्रौणेरपि अतितरां अधिकाम् । माशके मशकस्य विद्यमाने पादे, पक्षिणः अक्षिपक्ष्म[4] च अविध्यदित्यर्थः । एषः पार्थः ॥३३॥

**अनन्तभट्टीया–** पादे पादमित्यर्थः । पक्ष्मं पक्ष्मे इत्यर्थः ॥३३॥

---

१. 'अश्वत्थामा रहस्येषु सर्वेष्वभ्यधिकोऽभवत्' इत्यादिपर्वणि-१४२.७२.

२. 'दिव्यास्त्राण्यप्यदर्शयत्' इति चट्टीपाठः ।

३. 'पक्ष्ममेव च' इति अनन्तभट्टीयपाठः ।

४. 'अक्षिलोमनि' इति क्वचित् पाठः ।

**जनार्दनीया–** माशके मशकस्य पादे, पादमित्यर्थः । 'पक्षिणः पक्ष्मे अक्षिलोमनि । पक्ष्मपत्रे च सूक्ष्मांशे किञ्जल्के नेत्रलोमनि ।।' इत्यमरः ।।३३।।

**ताम्रपर्णीया–** ।। पक्षिण इति ।। अक्षिपक्ष्मणि रूढोऽयं पक्ष्मशब्दो अकारान्तोऽप्यस्तीति भावेन पक्ष्म इत्युक्तम् । पक्षिणः अक्षिपक्ष्मणीत्यर्थः ।। ३३-३६ ।।

**चट्टि–** ततः द्रौणेरप्यतितरां अधिकं यथा भवति तथा पार्थः दिव्यास्त्राण्यप्यदर्शयत् । माशके मशकसम्बन्धिनि पादे, पादमित्यर्थः । पक्षिणः पक्ष्म एव च । 'पा रक्षणे' इति धातोः पा नयनरक्षणं तत्र क्षमं समर्थमिति व्युत्पत्या पक्षमं पक्ष्ममेव पक्ष्मं तस्मिन् इत्यर्थः । अविध्यत् । एषः पार्थः एवमादीनि वहूनि चित्राणि व्यदर्शयत् ।।३३।।

**तदैव कर्ण आगत्य रामोपात्तास्त्रसम्पदम् ।**
**[१]दर्शयन्नधिकः पार्थादभूद् राजन्यसंसदि ।।३४।।**

**वरदराजीया–** तदैव शिक्षाप्रदर्शनसमये रामात् परशुरामात् उपात्तानां प्राप्तानां अस्त्राणां मन्त्राणां सम्पदं उत्कर्षं दर्शयन् प्रदर्शयन् कर्णः पार्थादधिकोऽभूत् ।।३४।।

**जनार्दनीया–** राजन्यसंसदि राजन्यानां क्षत्रियाणां संसदि सभायाम् ।।३४।।

**चट्टि–** तदैव शिक्षाप्रदर्शनसमय एव कर्णः आगत्य रामादुपात्तानां प्राप्तानां अस्त्राणां मन्त्राणां सम्पदमुत्कर्षं राजन्यसंसदि राजन्यानां क्षत्रियाणां संसदि सभायां दर्शयन् प्रदर्शयन् सन् पार्थादधिकोऽभूत् ।।३४।।

**कुन्ती [२]निजं सुतं ज्ञात्वा लज्जया नावदच्च तम् ।**
**पार्थोऽसहंस्तं युद्धायैवाऽह्वयामास संसदि ।।३५।।**

**व्यासतीर्थीया–** असहन्नेव न तु समर्थः ।।३५।।

**वरदराजीया–** कुन्ती तं निजं सुतं कर्णम् । तं कर्णं असहन् असहमानो युद्धायैव आह्वयामास । न तु भीषयितुमित्यर्थः ।।३५।।

---

१. 'पार्थ यत्ते कृतं कर्म विशेषवदहं ततः । करिष्ये पश्यतां नृणां माऽऽत्मना विस्मयं गमः ।।९।।'
'ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा । यत्कृतं तत्र पार्थेन तच्चकार महाबलः ।।१२।।' आदिपर्वणि-१४६.
'स चापि वीरः कृतशस्त्रनिश्रमः परेण साम्नाऽभ्यवदत सुयोधनम् । युधिष्ठिरस्याप्यभवत्तदा मतिर्न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ ।।' आदिपर्वणि-१४७.२५.

२. 'निजसुतम्' इति भावचन्द्रिकाचट्टीटिप्पण्योः पाठः ।

**जनार्दनीया—** असहन् असहमानः ।।३५।।

**भावचन्द्रिका—** कुन्ती कर्णं ज्ञात्वापि निजसुतं नावदत् । कन्यावस्थायां जातम् । तदनुक्तौ कारणम्— **लज्जयेति** ।। अतः पार्थो युद्धायाह्वयामास इति योजना ।। ३५ ।। अयं समीचीन इत्यु..*[१]

**चट्टि—** कुन्ती निजसुतं ज्ञात्वा लज्जया नावदत्, इतरेभ्यः इति शेषः । पार्थः तं कर्णं असहन् असहमानः सन् संसदि युद्धायैव आह्वयामास । न तु भीषयितुमित्यर्थः ।।३५।।

**रणायाक्षत्रियाह्वानं जानन् धर्मप्रतीपकम् ।**
**[२]भीमो निवार्य बीभत्सुं कर्णायादात् प्रतोदकम् ।।३६।।**

**वेदाङ्गतीर्थीया—** प्रतोदकमदात् । 'सूतजातेस्तव रथनियमनमेव धर्मः । न क्षत्रियैः सह युद्धम्' इति सञ्ज्ञया ज्ञापयन् अश्वताडनाङ्गं तोत्रमदात् इति भावः ।।३६।।

**वरदराजीया—** रणाय युद्धार्थे अक्षत्रियस्य आह्वानं धर्मस्य प्रतीपकं विरोधि जानन् भीमो बीभत्सुं निवार्य 'आह्वानं न कर्तव्यम्' इति निवार्य कर्णाय प्रतोदकं अश्वताडनार्थं कशामदात् । अनेन तस्य सूतत्वं सूचितम् ।।३६।।

**अनन्तभट्टीया—** प्रतोदकं नाम अश्वताडनसाधनम् । अनेन तस्य सूतत्वं सूचितम् ।।३६।।

**जनार्दनीया—** रणाय युद्धार्थम् । प्रतोदकं तोत्रं अदात् । 'सूतजातेस्तव रथनियमनमेव धर्मः । न क्षत्रियैः सह युद्धम्' इति सञ्ज्ञया ज्ञापयन्, अश्वताडनाङ्गं तोत्रं अदादिति भावः ।।३६।।

**चट्टि—** रणाय युद्धार्थं अक्षत्रियाह्वानं धर्मप्रतीपकं धर्मविरोधीति जानन् भीमः बीभत्सुं निवार्य कर्णाय प्रतोदकं तोत्रं अदात् । 'सूतजातेस्तव रथनियमनमेव धर्मः । न क्षत्रियैः सह युद्धम्' इति सञ्ज्ञया ज्ञापयन्, अश्वताडनार्थं तोत्रं अदादिति भावः ।।३६।।

**अक्षत्रसंस्कारयुतो जातोऽपि क्षत्रिये कुले ।**
**न क्षत्रियो हि भवति यथा व्रात्यो द्विजोत्तमः ।।३७।।**

**वेदाङ्गतीर्थीया—** क्षत्रियकन्याजातत्वात् कथमस्य सूतत्वमित्यतः आह— **अक्षत्रियेति** ।। व्रात्यः उपनयनादिसंस्कारहीनः । द्विजः क्षत्रियादिः तस्मादुत्तमो ब्राह्मणः स न भवति ब्राह्मणकुले जातोऽपि ब्राह्मणसंस्कारहीनो यथा ब्राह्मणो न भवति एवं क्षत्रियकुले जातोऽपि क्षत्रियसंस्काररहितः क्षत्रियो न भवतीति भावः ।।३७-३९।।

---

१. अत्र ग्रन्थपातः ।

२. 'भीमसेनस्तदा वाक्यमब्रवीत् प्रहसन्निव । न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम् ।। कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया ।।' इत्यादिपर्वणि-१४७.६.

**मधुसूदनीया–** ।। **अक्षत्रसंस्कारेति** ।। द्विजोत्तमः द्विजाभ्यां क्षत्रियवैश्याभ्यामुत्तमः ब्राह्मणः व्रात्यः संस्कारहीनश्चेत् यथा द्विजो न भवति एवं क्षत्रियकुले जातोऽपि अक्षत्रसंस्कारयुतः क्षत्रियसंस्कारवर्जितश्चेत् क्षत्रियो न भवतीत्यन्वयः । उक्तञ्च–'ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्या द्विजातयः' इति भागवते । 'अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च । पुनस्संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ।।' इति कौर्मे च (उत्तरभागे.३४.३०.३१)। 'ब्राह्मणाः क्षत्रिया वैश्या शूद्रवर्णा यथाक्रमम् । आद्यास्त्रयो द्विजाः प्रोक्ताः तेषां वै मन्त्रसत्क्रियाः ।।' इति हारीतोऽपि । 'व्रात्यः संस्कारहीनः स्यात्' इत्यमरः ।।३७।।

**वरदराजीया–** ननु क्षत्रियक्षेत्रे जातत्वात् कथं कर्णस्याक्षत्रियत्वमित्यत आह– **अक्षत्रेति** ।। क्षत्रिये तत्सम्बन्धिनि कुले जातोऽपि अक्षत्रसंस्कारयुतः उपनयनादिक्षत्रियसंस्कारयुतो न भवतीति चेत् अक्षत्रिय एव भवति । यथा द्विजोत्तमः द्विजात् क्षत्रियादुत्तमः ब्राह्मण इति यावत् । तत्कुले जात इति यावत् । ब्राह्मणः व्रात्यः उपनयनादिसंस्काररहितः अद्विजोत्तमः द्विजोत्तमो ब्राह्मणो न भवतीति द्विरावृत्त्या योज्यम् ।। ३७ ।।

**भावविवृतिः–** 'अक्षत्रसंस्कार...द्विजोत्तमः' इत्यत्र क्षत्रियकुले जातो हि कर्णः क्षत्रिययोग्योपनयनादिसंस्काररहितत्वात् क्षत्रियो न भवति । यथा द्विजोत्तमः द्विजेषु वैश्यक्षत्रियब्राह्मणेषु उत्तमो ब्राह्मणकुलोत्पन्नः संस्कारहीनः, स तु ब्राह्मणो न भवति तथैवेति । ननु तर्हि 'अष्टवर्षं ब्राह्मणं उपनयीत'[१] इति श्रुतिविरोध इति चेत् सत्यम् । ब्राह्मणकुलोत्पत्तेः योग्यतामात्रसम्पादकत्वम् । तत्तद्वर्णोचितोपनयनादिसंस्कारस्यैव ब्राह्मण्यादिसम्पादकत्वमित्युक्तौ न विरोधः । उक्तञ्च बृहद्भाष्ये-(६.४.४) 'यथा हि स्वर्णरूप्याद्यं मलहानौ हि तद्भवेत् । पूर्वं तु योग्यतामात्रं द्विजत्वं बालके यथा ।।' इत्यादि ।।३७।।

**अनन्तभट्टीया–** भीमस्य अज्ञानं परिहरति– **अक्षत्रेति** ।। व्रात्यः अष्टवर्षेऽप्युपनयनादिद्विजसंस्काररहितः । द्विजोत्तमः क्षत्रियादिः तस्मादुत्तमः ब्राह्मण इत्यर्थः । प्रायश्चित्तं विधाय संस्कारान् कृत्वा ।।३७।।

**लघ्वनन्तभट्टीया–** द्विजोत्तमः ब्रह्मक्षत्रवैश्येषु श्रेष्ठ उत्तमः, ब्राह्मणकुलोत्पन्न इति यावत् ।।३७।।

**जनार्दनीया–** क्षत्रियकन्यकायां जातत्वात् कथमस्य सूतत्वमित्यत आह– **अक्षत्रेति** ।। यथा व्रात्यः उपनयनादिसंस्कारहीनः द्विजोत्तमः द्विजः (क्षत्रियादिः) तस्मादुत्तमो ब्राह्मणः स न भवति । ब्राह्मणकुले जातोऽपि । तथा क्षत्रियसंस्कारहीनः क्षत्रियो न भवतीति भावः ।।३७।।

**ताम्रपर्णीया–** द्विजोत्तमः ब्रह्मक्षत्रविशामुत्तमः, ब्राह्मणकुलोत्पन्न इति यावत् । व्रात्योऽष्टमे वर्षे अनुपनीतः ।।३७।।

**भारतश्री–** द्विजोत्तमः ब्राह्मणः क्षत्रियवैश्योत्तमत्वात् द्विजोत्तमः ।।३७-९७।।

---

१. आपस्तम्बसूत्रम् १.२.१४.

**अतिविशद–** 'यथा व्रात्यो द्विजोत्तमः' इत्यत्र व्रात्यो व्रतनिष्ठः द्विजोत्तमो यथा इति व्यतिरेकदृष्टान्तः । यथा महानसः तथा महाह्रदो वह्निमान् न । यथा विष्णुर्देवश्रेष्ठः तथा वायुर्नेत्यत्र यथा व्यतिरेकदृष्टान्तः । तथा प्रकृतेऽपीति । न तु भवत्पक्षे व्याहतिः । 'व्रात्यः संस्कारहीनः स्यात्' इत्यनेन व्रात्यशब्दस्य संस्कारहीने प्रयोगादिति चेन्न । अरिष्टशब्दवदुभयवाचित्वात् । अत एव जयतीर्थश्रीमच्चरणैः 'व्रात्यो व्रतनिष्ठः' इति व्याख्यातम् । किञ्च यदि द्विजशब्दः रूढ्या ब्राह्मणवाची तदा व्रात्यो द्विजो यथेत्येतावतैव पूर्तेः उत्तमशब्दवैयर्थ्यम् । यदि च द्विजाभ्यामुत्तमयोगेन तदा 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः' इति वचनेन संस्कारोपेतवैश्यक्षत्रियोत्तमत्वं संस्कारोपेतस्यैव वक्तव्यम् । अन्यथा तदुत्तमत्वानुपपत्तेः । तथा च संस्कारोपेत एव द्विजशब्दमुख्यार्थः । तस्य मुख्यार्थबाधादि विना परित्यज्य ब्राह्मणकुलोत्पन्नाङ्गीकारे मुख्यार्थपरित्यागादिको दोषो अन्वयदृष्टान्ते । व्यतिरेकदृष्टान्ते तु नैवमिति ।।३७।।

**चट्टि–** ननु क्षत्रियकन्यायां जातत्वात् कथमस्य सूतत्वमित्यत आह– **अक्षत्रसंस्कारेति** ।। द्विजोत्तमः द्विजाभ्यां क्षत्रियवैश्याभ्यां उत्तमो ब्राह्मणः व्रात्यः संस्कारहीनश्चेत् यथा द्विजो न भवति । तथा क्षत्रिये कुले जातोऽपि अक्षत्रसंस्कारयुतः क्षत्रियसंस्कारवर्जितश्चेत् क्षत्रियो न भवतीत्यन्वयः । 'वर्णास्त्वाद्या द्विजातयः' इति भागवते । 'अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च । पुनस्संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ।।' इति कौर्मे च । 'व्रात्यः संस्कारहीनः स्यात्' इत्यमरः ।।३७।।

**निरुत्तरे कृते कर्णे भीमेनैव सुयोधनः ।**
**अभ्यषेचयदङ्गेषु राजानं पित्रनुज्ञया ।**
**धृतराष्ट्रः पक्षपातात् पुत्रस्यानु वशोऽभवत् ।।३८।।**

**व्यासतीर्थीया–** ननु कुन्तीसुतत्वात् कथं कर्णं क्षत्रियं कृत्वाऽङ्गेष्वभ्यषेचयत् । धृतराष्ट्रः अभिषेकाय कथमनुजज्ञे इत्यत आह– **धृतराष्ट्र इति** ।।३८।।

**वेदाङ्गतीर्थीया–** पक्षपातात् पुत्रपक्षपातात् पुत्रस्यानुकूल्येन वशोऽधीनः ।।३८।।

**वरदराजीया–** एवं भीमेन कर्णे निरुत्तरे कृते सति अङ्गेषु देशेषु राजानं कृत्वा अभ्यषेचयत् अभ्यषिञ्चत् । राज्याभिषेकेण तस्य क्षत्रियत्वं सम्पादितवानिति भावः । पितुः धृतराष्ट्रस्यानुज्ञया । पक्षपातात् पुत्रस्य अनुवशोऽधीनः अभवत् ।।३८।।

**मधुसूदनीया–** ।। **अभ्यषेचयदिति** ।। 'यद्ययं फल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति । तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ।।' इत्यादिपर्ववचनात् (१४६.३८) अर्जुनभीत्या अभिषिक्तवानिति भावः ।।३८-४०।।

**अनन्तभट्टीया–** अङ्गेष्वभ्यषेचयत् ।।३८।।

**जनार्दनीया–** राजानं कृत्वा । पक्षपातात् पुत्रपक्षपातात् । पुत्रस्य वशोऽन्वभवत् पुत्राधीनोऽभवदित्यर्थः।

**ताम्रपर्णीया–** ।। अभ्यषेचयदिति ।। 'यद्ययं फल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति । तस्मादेवाङ्गविषये मया राज्येऽभिषिच्यते ।।' इत्यादिपर्ववचनरीत्या अभिषिक्तवानिति भावः ।।३८।।

**अतिविशद–** 'अभ्यषेचयदङ्गेषु राजानं पित्रनुज्ञया' इत्यत्र अङ्गराज्यैकदेशे उत्पन्नेषु प्राणिष्वित्यर्थः। न त्वङ्गराज्यप्रदेशेष्वित्यर्थ इति । 'पूर्वं हि तस्य निजराज्यपदैकदेशः दुर्योधनेन विहितः' (ता.नि-१९.१९९) इत्युत्तरवाक्यात् । अथवा तदेकदेशस्य अवान्तरदेशमपेक्ष्य बहुवचनम् ।।३८।।

**चट्टि–** भीमेनैव कर्णे निरुत्तरे कृते सति सुयोधनः पितुः धृतराष्ट्रस्य अनुज्ञया तं कर्णं अङ्गेषु राजानं कृत्वा अभ्यषेचयत् । 'यद्ययं फल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति । तस्मादेवाङ्गविषये मया राज्येऽभिषिच्यते ।।' इत्यादिपर्ववचनरीत्या अभिषिक्तवानिति भावः । धृतराष्ट्रः पक्षपातात् पुत्रपक्षपातात् पुत्रस्य वशः अधीनः अन्वभवत् ।।३८।।

**अभिषिक्ते तदा कर्णे प्रायादधिरथः पिता ।**
**[१]सर्वराजसदोमध्ये ववन्दे तं [२]वृषा तदा ।**
**तुतुषुः कर्मणा तस्य सन्तः सर्वे समागताः ।।३९।।**

**व्यासतीर्थीया–** वृषा कर्णः ।।३९।।

**वेदाङ्गतीर्थीया–** वृषा समर्थः ।।३९।।

**सत्याभिनवतीर्थीया–** तत्रैव 'सर्वराजसदोमध्ये..' इति श्लोके 'सन्तः' इति विशेषणं असतां दुर्योधनादीनां पितृनमस्कारेण सन्तोषो न जात इति ज्ञापनार्थम् । अनेन असतां असत्कर्मणैव सन्तोषः न तु सत्कर्मणा इत्यौत्सर्गिको नियमः सूचितः ।।३९-४२।।

**वरदराजीया–** अधिरथः सूतः कर्णस्य पिता पोषकः । तं अधिरथं वृषा श्रेष्ठोऽपि कर्णः ववन्दे वन्दितवान् । तस्य कर्णस्य कर्मणा ।।३९।।

**अनन्तभट्टीया–** वृषा श्रेष्ठः ।।३९।।

**जनार्दनीया–** विप्रेभ्यो हेमवर्षणात् वृषा कर्णः । 'वृषा कर्णमहेन्द्रयोः' इति विश्वः । 'ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः । रिपुष्वपि दयावांश्च तस्मात् कर्णो वृषा स्मृतः ।।' (द्रोणपर्व-१८१.३३) इति वचनाद्वा वृषा । तस्य कर्णस्य ।।३९।।

---

१. 'सर्वराजसभामध्ये' इति चट्टीपाठः ।

२. 'वृषो महेन्द्रो देवेषु वृषः कर्णो नरेष्वपि । तृतीयमन्यं लोकेषु वृषं नैवानुशुश्रुमः ।।' इति कर्णपर्वणि-५.२४.

**ताम्रपर्णीया–** वृषा श्रेष्ठः कर्णः ।।३९।।

**अतिविशद–** 'सर्वराजसदोमध्ये ववन्दे तं वृषा तदा' इत्यत्र वृषेति लुप्तोपमा देवेन्द्र इव इत्यर्थः । 'वासवो वृत्रहा वृषा' इत्यमरः । वृषाशब्देन इन्द्रग्रहणे सर्वराजपदास्वारस्यम् । वृषा कर्ण इति वा । 'वृषा कर्णमहेन्द्रयोः' इति विश्वः । 'ब्रह्मण्यः सत्यवादी च तपस्वी नियतव्रतः । निपुणश्च दयावांश्च तस्मात्कर्णो वृषा स्मृतः ।।' इति वचनात् ।।३९।।

**चट्टि–** कर्णे अभिषिक्ते सति तदा कर्णस्य पिता पोषकः अधिरथः तन्नामा सूतः प्रायात् । विप्रेभ्यो हेमवर्षणात् वृषा कर्णः । तदा सर्वराजसभामध्ये तमधिरथं ववन्दे । समागताः सर्वे सन्तः तस्य कर्णस्य कर्मणा नमनरूपकर्मणा तुतुषुः ।।३९।।

**भीमदुर्योधनौ तत्र शिक्षासन्दर्शनच्छलात् ।**
**समादाय गदे गुर्वी संरम्भादभ्युदीयतुः ।।४०।।**

**व्यासतीर्थीया–** गुर्वी औठः पूर्वसवर्णभावात् । संरम्भात् कोपात् ।।४०-४२।।

**वेदाङ्गतीर्थीया–** संरम्भात् कोपात् ।।४०-४४।।

**मधुसूदनीया–** संरम्भात् क्रोधात् द्वेषोत्कर्षाद्वा ।।४०-४४।।

**वरदराजीया–** छलात् व्याजेन । गुर्वी गुर्व्यौ । संरम्भात् आटोपात् अभ्युदीयतुः ।।४०।।

**अनन्तभट्टीया–** गुर्वी गुर्व्यौ ।।४०।।

**जनार्दनीया–** छलात् व्याजेन । गुर्वी गुर्व्यौ । संरम्भात् कोपात् ।।४०।।

**ताम्रपर्णीया–** गुर्वी गुर्व्यौ ।।४०-४५।।

**अतिविशद–** 'गदे गुर्वी' इत्यत्र गुर्वी शिक्षा तदित्यध्याहारः । ततश्च या गुर्वी शिक्षा तद्दर्शनच्छलात् गदां समादाय संरम्भात् अभ्युदीयतुरिति योजना सूचिता ।।४०।।

**चट्टि–** तत्र भीमदुर्योधनौ शिक्षासन्दर्शनच्छलात् शिक्षायाः सन्दर्शनमेव छलं व्याजः तस्मात् गुर्वी गुर्व्यौ गदे समादाय संरम्भात् कोपात् अभ्युदीयतुः ।।४०।।

**देवासुरमनुष्यादि जगदेतच्चराचरम् ।**
**सर्वं तदा द्विधा भूतं भीमदुर्योधनाश्रयात् ।।४१।।**

**वरदराजीया–** भीमदुर्योधनाश्रयात् निमित्तात् द्विधा भूतम् ।।४१।।

**जनार्दनीया–** आश्रयात् निमित्तात् ।।४१।।

**चट्टि–** देवासुरमनुष्यादि चराचरं सर्वमेतज्जगत् तदा भीमदुर्योधनाश्रयान्निमित्तात् द्विधा भूतम् ।।४१।।

**देवा देवानुकूलाश्च भीममेव समाश्रिताः ।**
**असुरा आसुराश्चैव दुर्योधनसमाश्रयाः ।**
**द्विधाभूता [१]मानुषाश्च देवासुरविभेदतः ।।४२।।**

**व्यासतीर्थीया–** 'सर्वं तदा द्विधा भूतम्' इत्युक्तं विवृणोति– **देवेति** ।।४२-४४।।

**वरदराजीया–** तदेव विवृणोति– **देवा इति** ।। आसुराः असुरानुकूलाः । मानुषाश्च देवासुरानुकूलत्वेन द्विधा जाता इत्यर्थः ।।४२।।

**जनार्दनीया–** तदेव विवृणोति– **देवेति** ।। आसुराः असुरानुकूलाः ।।४२-४३।।

**चट्टि–** तदेव विवृणोति– **देवा इति** ।। देवाः देवानुगाश्चैव भीममेव समाश्रिताः । असुराः आसुराः असुरानुकूलाश्चैव । दुर्योधनः समाश्रयो येषां ते तथा । मनुष्याश्च देवासुरविभेदतः देवपक्षस्थाः असुरपक्षस्थाश्चेति विभेदाद् द्विधा भूताः ।।४२।।

**जय भीम महाबाहो जय दुर्योधनेति च ।**
**हुङ्कारांश्चैव फट्कारान् चक्रुर्देवासुरा अपि ।।४३।।**

**मधुसूदनीया–** ।। **जय भीमेति** ।। हे भीम! जयेति हे दुर्योधन! जयेति देवासुराः हुङ्कारान् फट्कारान् 'कवचाय हुम्' 'अस्त्राय फट्' इति दिग्बन्धनपूर्वकं जयघोषं चक्रुरित्यर्थः । यद्वा हुङ्कारफट्काराश्च अनुकारशब्दावित्यर्थः । 'फट्कारश्चैव फूत्कारः तथा किलकिलादयः । अनुकारशब्दा विज्ञेया ये चान्ये तादृशा मताः ।।' इत्यभिधानात् । (भा.ता-३.१८.५)।।४३-५९।।

**वरदराजीया–** देवाश्च असुराश्च यथाक्रमं भीम जयेति देवा अवदन्, दुर्योधन जयेति असुराः हुङ्कारांश्च फट्कारांश्च अनुकरणशब्दांश्चक्रुरित्यर्थः ।।४३।।

**चट्टि–** देवाश्चासुराश्च देवासुरा अपि यथाक्रमं हे भीम! हे महाबाहो जयेति देवाः । हे दुर्योधन! जयेत्यसुराश्च हुङ्कारान् फट्कारांश्च अनुकारशब्दान् चक्रुरित्यर्थः ।।४३।।

**दृष्ट्वा जगत् सुसंरब्धं द्रोणोऽथ द्विजसत्तमः ।**
**नेदं जगद् विनश्येत भीमदुर्योधनाश्रयात् ।**
**[२]इति पुत्रेण तौ वीरौ न्यवारयदरिन्दमौ ।।४४।।**

---

१. 'मनुष्याश्च' इति चट्टीपाठः ।

२. 'कुरुराजे हि रङ्गस्थे भीमे च बलिनां वरे । पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ।। जय हे कुरुराजेति जय हे भीम

**व्यासतीर्थीया–** संरब्धं कुपितम् ।।४४ ।।

**मधुसूदनीया–** संरब्धं कुपितम् ।।४४।।

**वरदराजीया–** सुसंरब्धं संरम्भेण मिलितम् । पुत्रेण अश्वत्थाम्ना ।।४४।।

**जनार्दनीया–** सुसंरब्धं कोपयुक्तम् ।।४४।।

**चट्टि–** अथ द्विजसत्तमः द्रोणः सुसंरब्धं अतिकोपयुक्तं जगद्दृष्ट्वा इदं जगत् भीमदुर्योधनाश्रयात् न विनश्येत इति पुत्रेणाश्वत्थाम्ना । अरीन् दमयत इति अरिन्दमौ । वीरौ तौ भीमदुर्योधनौ न्यवारयत् ।।४४।।

**स्वकीयायां स्वकीयायां योग्यतायां नतु क्वचित् ।**
**युवयोः सम इत्युक्त्वा द्रौणिरेतौ न्यवारयत् ।**
**द्रोणाज्ञया वारितौ तौ ययतुः स्वं स्वमालयम् ।।४५।।**

**व्यासतीर्थीया–** स्वकीयायां स्वकीयायामित्यस्यायमभिप्रायः । लोकापेक्षया सूक्ष्मविद्यासु नास्ति दुर्योधनसमः उत्तमाधमत्वलक्षणयोग्यतायां क्वचिद्युवयोर्नैव सम इति वेति ।।४५-४८।।

**सत्याभिनवतीर्थीया–** तत्रैव 'स्वकीयायां स्वकीयायां..' इति श्लोकः । तस्यार्थः- स्वकीयायां स्वकीयायां योग्यतायां क्वचित् क्वचित् देशे क्वचित् काले च युवयोः समः न तु नैव । युवां समौ । अतः स्वजयपरपराजयरूपयुद्धफलाभावात् युद्धं न कर्तव्यमित्युक्त्वा एतौ न्यवारयदिति । एतेन युवयोः समो नास्तीत्युक्तेः युद्धत्यागहेतुत्वाभावात् युवयोः समो नेत्युक्त्वा न्यवारयदिति कथनमनुपपन्नमिति दूषणं परास्तम् । 'युवां समौ' इत्यादेः शेषेण युद्धत्यागहेतोरुक्तत्वात् ।।४५-४९।।

**मधुसूदनीया–** ।। **स्वकीयायां स्वकीयायामिति** ।। लौकिकापेक्षया सूक्ष्मविद्यासु दुर्योधनसमो नास्ति । उत्तमत्वलक्षणयोग्यतायां भीमसमो नास्ति । अधमत्वलक्षणयोग्यतायां दुर्योधनसमो नास्तीति भावः ।।४५।।

**वरदराजीया–** तौ वीरौ भीमदुर्योधनौ न्यवारयत् । स्वकीयायां स्वस्य विद्यमानायां युवयोः समः क्वचिदपि नास्ति इत्युक्त्वा द्रौणिः अश्वत्थामा द्रोणाज्ञया न्यवारयत् । वारितौ तौ भीमदुर्योधनौ ।।४५।।

**अनन्तभट्टीया–** ।। **स्वकीयायामिति** ।। सूक्ष्मविद्यायाम् लोकदृष्ट्या दुर्योधनस्य गदाविद्यायां भीमसेनस्य समो नास्तीति भावः ।।४५।।

---

इत्युत । पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः ।। ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान् । भारद्वाजः प्रियं पुत्रं अश्वत्थामानमब्रवीत् ।। वारयैतौ महावीर्यौ कृतयोग्यावुभावपि । माऽभूद्रङ्गप्रकोपोऽयं भीमदुर्योधनोद्भवः ।।' '..तत उत्थाय वेगेन अश्वत्थामा न्यवारयत् । गुरुगङ्गा भीम इति गान्धारे गुरुशासनम् ।। अलं शिक्षाकृतं वेगमलं साहसमित्युत ।।' इति आदिपर्वणि १४०.१-७.

**जनार्दनीया–** कचित् स्वकीयायां स्वकीयायां युवयोः समो न ।।४५।।

**ताम्रपर्णीया–** ।। **स्वकीयायामिति** ।। 'ब्रह्मैव सर्वजीवेभ्यः सदा सर्वगुणाधिकः ।'(ता.नि-१.१३३)'कलिः दुःखाधिकस्तेषु'(ता.नि-१.१३२)इत्युक्तयोग्यतायां युवयोर्न सम इति हृदयम् ।।४५-४९

**चट्टि–** कचित् स्वकीयायां स्वकीयायां स्वस्य विद्यमानायां योग्यतायां युवयोः समो नास्तीत्युक्त्वा द्रौणिरेतौ न्यवारयत् । द्रोणाज्ञया अश्वत्थाम्ना निवारितौ तौ भीमदुर्योधनौ स्वं स्वं आलयं गृहं ययतुः ।।४५।।

**सुरासुरान् सुसंरब्धान् कालेन द्रक्ष्यथेति च ।**
**ब्रह्मा निवार्य ससुरो ययौ सेशः स्वमालयम् ।।४६।।**

**वेदाङ्गतीर्थीया–** काले द्रक्ष्यथ, जयपराजयाविति शेषः ।।४६-५६।।

**वरदराजीया–** कालेन कालान्तरेण अनयोः युद्धं द्रक्ष्यथ इति सुरानसुरांश्च निवार्य । सेशः सरुद्रः ।।

**अनन्तभट्टीया–** कालेन कालान्तरे इत्यर्थः । सुरासुरान् निवार्य ।।४६।।

**जनार्दनीया–** कालेन द्रक्ष्यथ, जयपराजयाविति शेषः । सेशः सरुद्रः ।।४६।।

**चट्टि–** सुसंरब्धान् अतिकोपयुक्तान् सुरासुरान् कालेन द्रक्ष्यथ इति, जयपराजयाविति शेषः । ब्रह्मा निवार्य ससुरः सेशः सन् स्वमालयं गृहं प्रति ययौ ।।४६।।

**[१]कर्णं हस्ते प्रगृह्यैव धार्तराष्ट्रो गृहं ययौ ।**
**पार्थं हस्ते प्रगृह्यैव भीमः प्रायात् स्वमालयम् ।।४७।।**

**वरदराजीया–** धार्तराष्ट्रः दुर्योधनः ।।४७।।

**अनन्तभट्टीया–** हस्ते हस्तमित्यर्थः । कर्णस्य हस्तं प्रगृह्येत्यर्थः ।।४७।।

**जनार्दनीया–** आलयम् । पार्थं अर्जुनम् ।।४७।।

**चट्टि–** धार्तराष्ट्रः दुर्योधनः कर्णं हस्ते प्रगृह्यैव गृहं ययौ । पार्थं हस्ते प्रगृह्यैव भीमः स्वमालयं गृहं प्रायात् ।।४७।।

**पार्थेन कर्णो हन्तव्य इत्यासीद् भीमनिश्चयः ।**
**वैपरीत्येन तस्याऽसीद् दुर्योधनविनिश्चयः ।**
**तदर्थं नीतिमतुलां चक्रतुस्तावुभावपि ।।४८।।**

---

१. 'ततो दुर्योधनः कर्णं आलम्ब्याग्रकरे नृपः । दीपिकाभिः कृतालोकः तस्माद्रङ्गाद्विनिर्ययौ ।।' इत्यादिपर्वणि१४७.२८.

**व्यासतीर्थीया–** हस्ते प्रगृह्य गच्छतो भावमाह– **पार्थेनेति** ।। नीतिं सामादिरूपाम् ।।४८।।

**वरदराजीया–** तस्य पूर्वोक्तस्य वैपरीत्येन कर्णेन पार्थो हन्तव्य इत्येवं प्रकारेणेत्यर्थः । तदर्थं कृतनिश्चयसिद्ध्यर्थम् । नीतिं प्रवृत्तिम् ।।४८।।

**अनन्तभट्टीया–** तस्य भीमनिश्चयस्य वैपरीत्ये । कर्णेन पार्थो हन्तव्य इत्यनेन प्रकारेणेत्यर्थः । तदर्थं कर्णजयार्थम् । तौ भीमदुर्योधनौ[१] ।।४८।।

**जनार्दनीया–** तस्य भीमनिश्चयस्य । वैपरीत्येन कर्णेनार्जुनो हन्तव्यः । तावुभौ भीमदुर्योधनौ । तदर्थं कर्णार्जुनयोर्वधार्थम् ।।४८।।

**ताम्रपर्णीया–** नीतिं सामादिरूपाम् ।।४८।।

**चट्टि–** पार्थेन अर्जुनेन कर्णो हन्तव्यः इति भीमनिश्चयः भीमस्य निश्चयः आसीत् । तस्य भीमनिश्चयस्य वैपरीत्येन कर्णेन अर्जुनो हन्तव्यः इति दुर्योधनस्य विनिश्चयः आसीत् । तावुभौ अपि भीमदुर्योधनौ तदर्थं कर्णार्जुनयोर्वधार्थं अतुलां नीतिं सामादिरूपां चक्रतुः ।। ४८ ।।

**तथोत्कर्षे फल्गुनस्य यशसो विजयस्य च ।**
**उद्योग आसीद् भीमस्य धार्तराष्ट्रस्य चान्यथा ।।४९।।**

**वरदराजीया–** फल्गुनस्य अर्जुनस्य यशस उत्कर्षे भीमस्योद्योगः प्रयत्न आसीत् । धार्तराष्ट्रस्य अन्यथा उक्तवैपरीत्येन उद्योग आसीदित्यर्थः ।।४९।।

**जनार्दनीया–** उद्योगो यत्नः । अन्यथा भीमोद्योगवैपरीत्येन ।।४९।।

**चट्टि–** तथा फल्गुनस्य अर्जुनस्य यशसः विजयस्य चोत्कर्षे भीमस्य उद्योगः प्रयत्नः आसीत् । धार्तराष्ट्रस्य दुर्योधनस्य अन्यथा भीमोद्योगवैपरीत्येन उद्योगः आसीत् ।।४९।।

**भीमार्थं केशवोऽन्ये च देवाः फल्गुनपक्षिणः ।**
**आसन् यथैव रामाद्याः सङ्ग्रहेण हनूमतः ।**
**सुराः सुग्रीवपक्षस्थाः पूर्वमासंस्तथैव हि ।।५०।।**

**वरदराजीया–** भीमार्थं भीमप्रीत्यर्थं । हनूमतः सङ्ग्रहेण हनुमता सङ्गृहीतत्वात् सुग्रीवपक्षस्थाः ।।५०।।

**अनन्तभट्टीया–** भीमार्थं भीमप्रियकरणार्थम् ।। **हनूमत इति** ।। हनुमत्कर्तृकसुग्रीवकर्मकसङ्ग्रहणे इत्यर्थः । हनुमता सुग्रीवस्य परिगृहीतत्वात् इति तात्पर्यम् ।।५०।।

---

१. 'कर्णदुर्योधनौ' इति मूलकोशे लिपिकृत्प्रमादः स्यात् ।

**जनार्दनीया–** भीमार्थं भीमप्रियार्थम् । सङ्ग्रहेण सङ्ग्रहणात् ।।५०।।

**चट्टि–** भीमार्थं भीमप्रियार्थं केशवः श्रीकृष्णः अन्ये देवाश्च फल्गुनपक्षिणः आसन् । हनूमतः सङ्ग्रहेण हनुमत्कर्तृकसङ्ग्रहेण श्रीरामाद्याः सुराः पूर्वं यथैव सुग्रीवपक्षस्थाः आसन् तथैव केशवादयोऽपि फल्गुनपक्षस्थाः आसन्निति पूर्वेणान्वयः ।। ५० ।।

**तदर्थमेव भीमस्य ह्यनुजत्वं सुरेश्वरः ।**
**आप पूर्वानुतापेन तेन भीमस्तथाऽकरोत् ।।५१।।**

**वरदराजीया–** सुरेश्वरः इन्द्रः तदर्थं आत्मनो परिग्रहणार्थम् । पूर्वानुतापेन वालिजन्मनि जातेन अनुतापेन । तेन अनुतापेन तस्मादेव । भीमः तथा पूर्वोक्तप्रकारेण अकरोत् ।।५१।।

**अनन्तभट्टीया–** तदर्थम् आत्मनो मुख्यप्राणग्रहीतत्वार्थम् ।।५१।।

**जनार्दनीया–** सुरेश्वरः पूर्वानुतापेन वालिजन्मनि स्ववधदुःखात् । तदर्थमात्मनः परिग्रहार्थम् । तेन तस्मात् । तथा परिपालनम् ।।५१।।

**ताम्रपर्णीया–** तदर्थं श्रीकृष्णानुग्रहविशेषसिद्ध्यर्थम् ।।५१।।

**चट्टि–** सुरेश्वरः पूर्वानुतापेन वालिजन्मनि स्ववधदुःखात् । तदर्थमात्मनः परिग्रहार्थम् । भीमस्य अनुजत्वमाप । तस्माद् भीमः तस्य अर्जुनस्य तथा परिपालनं अकरोत् ।।५१।।

**दुर्योधनार्थं कर्णस्य पक्षिणो दैत्यदानवाः ।**
**आसुः सर्वे ग्लहावेतावासतुः कर्णफल्गुनौ ।।५२।।**

**वेदाङ्गतीर्थीया–** एतौ कर्णफल्गुनौ ग्लाहावासतुः द्यूतकर्त्रोः जयपराजयौ यथा ग्लहानुकूल्यप्रातिकूल्य-निमित्तकौ एवं भीमदुर्योधनयोः जयपराजयौ पार्थकर्णजयपराजयनिमित्तकाविति भावः ।।५२-६९।।

**वरदराजीया–** दुर्योधनार्थं तत्प्रीत्यर्थम् । एतौ ग्लहौ द्यूताक्षरूपौ जयाजयव्यवस्थापकौ इत्यर्थः ।।५२।।

**अनन्तभट्टीया–** सश्चार्यकाष्ठविशेषौ ।।५२।।

**जनार्दनीया–** एतौ कर्णपार्थौ । ग्लहौ आसतुः द्यूते देयद्रव्यरूपौ बभूवतुः ।।५२।।

**ताम्रपर्णीया–** ग्लहावक्षौ ।।५२।।

**चट्टि–** सर्वे दैत्यदानवाः दुर्योधनार्थं तत्प्रीत्यर्थं कर्णस्य पक्षिणः आसुः । एतौ कर्णपार्थौ । ग्लहौ द्यूताक्षरूपौ जयपराजयव्यवस्थापकौ इत्यर्थः ।।५२।।

**अथ पृष्टो [1]दक्षिणार्थं द्रोण आह कुमारकान्[2] ।**
**वध्वा पाञ्चालराजानं दत्तेत्यूचुस्तथेति ते ॥५३॥**

**वादिराजतीर्थीया–** 'वध्वा पाञ्चालराजानम्' इत्यत्र अनित्यत्वात् समासान्तविधेः 'पाञ्चालराजानम्' इत्युक्तम् ॥५३-६९॥

**वरदराजीया–** दक्षिणार्थं गुरुदक्षिणार्थम् । 'दक्षिणायाम्' इति पाठे दक्षिणाविषये । का दक्षिणा तव दातव्येति पृष्ट इत्यर्थः । पाञ्चालदेशस्य राजानं द्रुपदम् ॥५३॥

**जनार्दनीया–** दक्षिणार्थं गुरुदक्षिणार्थम् । 'दक्षिणायाम्' इति पाठे दक्षिणाविषये ॥ ५३ ॥

**अतिविशद–** 'अथ पृष्टो दक्षिणार्थम्' इत्यत्र 'वृषभान् गजमिश्रांस्तु क्षत्रियो गुरुदक्षिणाम् । विप्रो दद्याद् वृषानेव विप्रो गाः प्रतिविध्यकम् ॥' इति मानसंहितावचनात् । यद्यपि गजादि दक्षिणार्थं दातव्यं तथापि द्रोणवचनात् द्रुपदबन्धनार्थं प्रयाणमिति ज्ञातव्यम् ॥५३॥

**चट्टि–** अथ द्रोणः दक्षिणार्थं पृष्टः, कुमारैरिति शेषः । कुमारकानाह । किमिति? पाञ्चालराजानं द्रुपदं वध्वा आदत्तेत्याहेति सम्बन्धः । ते कुमाराः तथेति तथास्त्विति ऊचुः । समासान्तविधेरनित्यत्वात् पाञ्चालराजानमित्युक्तम् ॥५३॥

**ते धार्तराष्ट्राः कर्णेन सहिताः पाण्डवा अपि ।**
**ययुर्द्रोणेन सहिताः पाञ्चालनगरं प्रति ॥५४॥**

**वरदराजीया–** पाञ्चालनगरं द्रुपदपुरम् ॥५४॥

**जनार्दनीया–** पाञ्चालनगरं द्रुपदपुरम् ॥५४॥

**चट्टि–** कर्णेन सहिताः ते धार्तराष्ट्राः दुर्योधनादयः पाण्डवा अपि द्रोणेन सहिताः सन्तः पाञ्चालनगरं द्रुपदपुरं प्रति ययुः ॥५४॥

**[3]अथाऽह भीमः सामर्थ्यविवेकाभीप्सया गुरुम् ।**

---

१. 'दक्षिणायाम्' इति जनार्दनीयवरदराजीययोः पाठान्तरम् ।

२. 'एवमुक्तास्ततः सर्वे शिष्या द्रोणमथाब्रुवन् । भगवन् किं प्रयच्छाम आज्ञापयतु नो गुरुः । ततः शिष्यान् समाहूय आचार्योऽर्थमचोदयत् । द्रोणः सर्वानशेषेण दक्षिणार्थं महीपते ॥ पञ्चालराजं द्रुपदं गृहीत्वा रणमूर्धनि । पर्यानयत भद्रं वः सा स्यात् परमदक्षिणा ॥' इत्यादिपर्वणि १४८.३-४.

३. 'पूर्वमेव तु सम्मन्त्र्य पार्थो द्रोणमथाब्रवीत् । दर्पोद्रिक्तान् कुमाराणामाचार्यं द्विजसत्तमम् । एषां पराक्रमस्यान्ते वयं कुर्याम साहसम् । एतैरशक्यः पाञ्चालो ग्रहीतुं रणमूर्धनि ॥ एवमुक्त्वा तु कौन्तेयो भ्रातृभिः सहितोऽनघः । अर्धक्रोशे तु नगरादतिष्ठद्बहिरेव सः ॥' आदिपर्वणि-१४८.१४-१६.

**गर्व एष कुमाराणामनिवार्यो द्विजोत्तम ।**
**गच्छन्त्वेतेऽग्रतो नैषां वशगो द्रुपदो भवेत् ।।५५।।**

**व्यासतीर्थीया–** यद्येते पुरतो गत्वा तं बध्वा आनयेयुस्तर्हि युष्माकं कीर्तिर्न स्यादित्यत आह– **नैषामिति** ।।५५-६१।।

**वरदराजीया–** सामार्थ्यविवेकाभीप्सया पाण्डवानां कौरवाणां सामर्थ्यासामर्थ्यविवेकज्ञानेच्छया इत्यर्थः । गुरुं द्रोणम् । हे द्विजोत्तम! अग्रतः पुरतः एते दुर्योधनाद्याः गच्छन्तु । वशगो वश्यो न भवेत् ।।५५।।

**अनन्तभट्टीया–** दत्तेत्याह– **सामर्थ्येति** ।। अस्य शक्तिरस्ति अन्यस्य नास्तीति शक्तिविवेकेच्छा ।।५५-५९।।

**जनार्दनीया–** सामर्थ्यविवेकाभीप्सया शक्ताशक्तविवेकज्ञानेच्छया । अग्रतः पुरतः ।।५५।।

**चट्टि–** अथ भीमः सामर्थ्यविवेकाभीप्सया पाण्डवानां कौरवाणां च सामर्थ्यविवेकज्ञानेच्छया गुरुं द्रोणं प्रति हे द्विजोत्तम! कुमाराणां एषः गर्वः अनिवार्यः एते दुर्योधनादयः अग्रतः पुरतः गच्छन्तु । द्रुपदः एषां वशगो नैव भवेत् ।।५५।।

**निवृत्तेष्वकृतार्थेषु वयं बध्वा रिपुं तव ।**
**आनयाम न सन्देह इति तस्थौ ससोदरः ।।५६।।**

**वरदराजीया–** ससोदरः सभ्रातृकः ।।५६।।

**जनार्दनीया–** अकृतकार्येषु निवृत्तेषु सत्सु परावृत्तेषु ।।५६।।

**चट्टि–** एषु अकृतकार्येषु अकृतः अर्थः प्रयोजनं यैस्ते तेषु । निवृत्तेषु सत्सु द्रुपदबन्धनकार्ये असमर्थेषु सत्सु इत्यर्थः । वयं तव रिपुं बध्वा आनयामः । अत्र सन्देहो नास्तीत्याहेति पूर्वेणान्वयः । ससोदरस्सन् भीमस्तस्थौ च ।।५६।।

**सद्रोणकेषु पार्थेषु स्थितेष्वन्ये ससूतजाः ।**
**ययुरात्तप्रहरणाः पाञ्चालान्तःपुरं द्रुतम् ।।५७।।**

**वरदराजीया–** सद्रोणकेषु पार्थेषु स्थितेषु सत्सु । अन्ये दुर्योधनाद्याः ससूतजाः सकर्णाः । द्रुतं वेगेन।।

**जनार्दनीया–** अन्ये दुर्योधनादयः । आत्तप्रहरणाः गृहीतायुधाः ।।५७।।

**चट्टि–** सद्रोणकेषु द्रोणसहितेषु पार्थेषु तत्र स्थितेषु सत्सु अन्ये दुर्योधनादयः ससूतजाः सकर्णाः सन्तः आत्तप्रहरणाः गृहीतायुधाः सन्तः द्रुतं वेगेन पाञ्चालस्य द्रुपदस्य अन्तःपुरं प्रति ययुः ।।५७।।

**कुमारान् ग्रहणेप्सूंस्तानुपयातानुदीक्ष्य सः ।**
**अक्षौहिणीत्रितययुङ् निस्सृतो द्रुपदो गृहात् ॥५८॥**

**वरदराजीया–** ग्रहणेप्सून् स्वग्रहणेप्सून् । सः द्रुपदः अक्षौहिणीत्रयेण युक्तः ॥५८॥

**जनार्दनीया–** ग्रहणेप्सून् स्वग्रहणेच्छून् ॥५८॥

**चट्टि–** ग्रहणेप्सून् ग्रहणेच्छून् उपयातान् कुमारान् सः द्रुपदः उदीक्ष्य अक्षौहिणीनां त्रितयेन युक् युक्तः सन् गृहात् निस्सृतः ॥५८॥

**ते शरैरभिवर्षन्तः परिवार्य कुमारकान् ।**
**[१]अर्दयामासुरुद्धत्तान् स्त्रियो बालाश्च सर्वशः ॥५९॥**

**मधुसूदनीया–** ॥ **अर्दयामासुरिति** ॥ ननु कर्णदुर्योधनादीनां अजेयत्ववरसद्भावेन कथं तान् अर्दयामासुरित्यत आह– **उद्धत्तान् इति** ॥ तथाच कर्णदुर्योधनादीनां रामरुद्रादिदत्ताजेयत्ववरसद्भावेऽपि उद्धत्तत्वेन तत्र प्रयोक्तव्यास्त्रदेवताप्रार्थनपूर्वकं अस्त्रप्रयोगाद्यभावेन सूर्यवरमात्रवद्द्रुपदात् पलायनं युज्यत एव । अत एव अग्रे 'कुमारान् सुसुखेधितान्' 'सुखसंवर्धितांश्च' इत्यभ्यासेन ततः पूर्वं कदापि युद्धाऽनभिज्ञत्वकथनेन तेषां पलायनं युज्यत इति सम्प्रदायविदः ॥५९-६०॥

**वरदराजीया–** ते पाञ्चालाः उद्धत्तान् उद्धतान् कुमारान् परिवार्य परितः आवृत्य अर्दयामासुः पीडयामासुः । न केवलं पुरुषाः किन्तु स्त्रियो बालाश्च सर्वशः सर्वे ॥५९॥

**जनार्दनीया–** ते पाञ्चालाः उद्धत्तान्, परिवार्य परितः आवृत्य, अर्दयामासुः पीडयामासुः ॥५९॥

**चट्टि–** ते पाञ्चालाः उद्धत्तान् उद्धतान् कुमारकान् परिवार्य परितः आवृत्य शरैरभिवर्षन्तः सन्तः अर्दयामासुः पीडयामासुः । सर्वशः स्त्रियो बालाश्च अर्दयामासुरित्यर्थः ॥५९॥

**हर्म्यसंस्थाः स्त्रियो बाला ग्रावभिर्मुसलैरपि ।**
**अत्यर्थमर्दयामासुः कुमारान् सुसुखेधितान् ॥६०॥**

**वरदराजीया–** हर्म्यसंस्थाः उच्चागारस्थाः । ग्रावभिः शिलाभिः । अत्यर्थं अत्यन्तं सुखेन सम्यगेधितान् वर्धितान् ॥६०॥

**अनन्तभट्टीया–** अत्यर्थं अतिशयेन ॥६०॥

---

१. 'ततस्तु नागराः सर्वे मुसलैर्यष्टिभिस्तदा । अभ्यवर्षन्त कौरव्यान् वर्षमाणा घना इव ॥ सबालवृद्धाः काम्पिल्याः कौरवानभ्ययुस्तदा । श्रुत्वा सुतुमुलं युद्धं कौरवानेव भारत ॥ द्रवन्ति स्म नदन्ति स्म क्रोशन्तः पाण्डवान् प्रति ॥' इत्यादिपर्वणि- १४८.२५-२७.

**जनार्दनीया–** स्त्रियो बालाश्च अर्दयामासुः । हर्म्यसंस्थाः उच्चागारस्थाः । ग्रावभिः शिलाभिः । अत्यर्थं अतिशयेन एधितान् वर्धितान् ।।६०।।

**चट्टि–** स्त्रियो बालाश्च हर्म्यसंस्थाः उच्चागारस्थाः । ग्रावभिः मुसलैरपि सुसुखं यथा स्यात् तथा एधितान् कुमारान् । अत्यर्थं अतिशयेन अर्दयामासुः ।।६०।।

**द्रुपदस्य वरो ह्यस्ति सूर्यदत्तस्तपोबलात् ।**
**आ योजनात् पुरमुप न त्वां जेष्यति कश्चन ।।६१।।**

**व्यासतीर्थीया–** नन्वनेकास्त्रविदः कुमाराः स्वयमविजित्य द्रुपदेन जिता इत्यत आह– **द्रुपदस्येति** ।।६१-६९।।

**मधुसूदनीया–** ।। द्रुपदस्येति ।। केचित् 'ननु कर्णाऽश्वत्थामादीन् कथमर्दयामासुरित्यत आह– **द्रुपदस्येति** ।।' इति व्याचक्षते । तच्चिन्त्यम् । पूर्वोत्तरग्रन्थपर्यालोचने अश्वत्थाम्नो गमनादर्शनादिति ।।६१-८९।।

**वरदराजीया–** ननु कर्णाश्वत्थामादीन् कथमर्दयामासुरित्यत आह– **द्रुपदस्येति** ।। हि यस्मात् तपोबलात् द्रुपदानुष्ठिततपोबलात् सूर्यदत्तो वरो द्रुपदस्य अस्ति । किमिति? पुरमुप पुरस्य समीपे आसमन्तात् योजनाद्योजनपर्यन्तं कश्चन त्वां न जेष्यति इति वरः इति सम्बन्धः ।।६१।।

**अनन्तभट्टीया–** आयोजनात् पुरस्य समीपे योजनपर्यन्तम् ।।६१।।

**जनार्दनीया–** ननु कर्णादीन् कथं अर्दयामासुरित्यत आह– **द्रुपदस्येति** ।। हि यस्मात् । पुरमुप-नगरसमीपे । आयोजनात् योजनपर्यन्तम् ।।६१।।

**चट्टि–** ननु कर्णादीन् कथं अर्दयामासुरित्यत आह– **द्रुपदस्येति** ।। हि यस्मात् तपोबलात् द्रुपदानुष्ठिततपोबलात् सूर्यदत्तो वरो द्रुपदस्यास्ति । किमिति? पुरमुप तव पुरस्य समीपे आयोजनात् योजनपर्यन्तं कश्चन त्वां न जेष्यतीति वर इति सम्बन्धः ।।६१।।

**इति तेन वरेणैव सुखसंवर्धिताश्च ते ।**
**भग्नाः कुमारा आवृत्य दुद्रुवुर्यत्र पाण्डवाः ।।६२।।**

**वरदराजीया–** तेन वरेणैव सुखवर्धिताश्च पूर्वं कदापि अदृष्टयुद्धाश्च ते कुमाराः भग्नास्सन्तः आवृत्य परावृत्य दुद्रुवुः ।।६२।।

**भावविवृतिः–** 'भग्नाः कुमारा आवृत्य दुद्रुवुर्यत्र पाण्डवाः' इत्यत्र रुद्रवरादजेयस्य दुर्योधनस्य रामवरादजेयस्य कर्णस्य च पराजयः कथमिति चेत्? सत्यम् । तदितरेषां सूर्यवरेण पराजयः, तयोस्तु

'उद्वृत्तान्' इत्युक्तत्वात् ताभ्यां तदानीं अस्त्रदेवतावन्दनादिकं विना अस्त्रयुद्धं कृतमिति ज्ञायते । अतस्तयोः पराजय इति श्रुतोऽर्थः ।।६२-७२।।

**जनार्दनीया–** तेन वरेणैव ।।६२।।

**अतिविशद–** 'आयोजनात् पुरमुप..यत्र पाण्डवाः' इत्यत्र रुद्रवराद्युपेतानां दुर्योधनादीनां सूर्यवरमात्रेण भग्नत्वमुच्यते । 'तेनेशवरेणैव' इत्यवधारणाच्च । तस्मात् कथमेतदिति चेत् उच्यते– **सुखेति** ।। सुखसंवर्धिताः इति हेतुगर्भविशेषणमित्याहुः । 'तेन वरेणैव' इत्यत्र एवकारः सुखसंवर्धिता इत्यनेन सम्बध्यते । 'सुखसंवर्धिताश्च' इत्यत्रत्यः चशब्दः दुद्रुवुश्च इत्यनेन सम्बध्यते । ततश्च सुखसम्बन्धित्वादेव तेन वरेण भग्नाः सन्तः यत्र पाण्डवास्तत्र दुद्रुवुश्चेत्युक्तं भवति । वस्तुतस्तु तेन वरेणैव भग्नाः सन्तः यत्र पाण्डवास्तत्र दुद्रुवुरित्येवाक्षरयोजना । रुद्रवराद्युपेतानां सूर्यवरेणैव कथं द्रवणं युक्तमतिप्रसङ्गादित्यतः 'सुखसंवर्धिताश्च' इत्यनेन सम्भावनोक्ता । सत्यम्, उत्तमवरोपेतानां नीचवरेणैव पराभवाभाव इति । तथापि सुखसंवर्धिता इति कारणेन भग्ना इत्युच्यमानत्वान्नासम्भवः । यथा मद्यपानादिना मत्तानां बलवतामपि देहपारवश्यात् तत्समये केनचिदल्पेन पुरुषेण पराभवो दृष्टस्तथेति ।।६२।।

**चट्टि–** तेन वरेणैव तथा सुखसंवर्धिताश्च पूर्वं कदाप्यदृष्टयुद्धाश्चेत्यर्थः । ते कुमाराः भग्नाः सन्तः आवृत्य यत्र पाण्डवाः वर्तन्ते तत्र दुद्रुवुः ।।६२।।

**स्त्रीबालवृद्धसहितैः पाञ्चालैरप्यनुद्रुताः ।**
**भीमार्जुनेति वाशन्तो ययुर्यत्र स्म पाण्डवाः ।।६३।।**

**वरदराजीया–** अनुद्रुताः पृष्ठतो विद्राविताः । हे भीम! हे अर्जुन! इति वाशन्तः शब्दं कुर्वन्तः ।।६३।।

**अनन्तभट्टीया–** वाशन्तः शब्दं कुर्वन्तः ।।६३।।

**जनार्दनीया–** अनुद्रुताः पृष्ठतो विद्राविताः । वाशन्तः वाश्यमानाः शब्दं कुर्वन्तः ।।६३।।

**चट्टि–** स्त्रीबालवृद्धसहितैः पाञ्चालैः अनुद्रुताः पृष्ठतो विद्राविताः अपि हे भीम! हे अर्जुन! इति वाशन्तः शब्दं कुर्वन्तः यत्र पाण्डवाः तत्र ययुः ।।६३।।

**तान् प्रभग्नान् समालोक्य भीमः प्रहरतां वरः ।**
**आरुरोह रथं वीरः पुर आत्तशरासनः[१] ।।६४।।**

**वेदाङ्गतीर्थीया–** पुरः पूर्वं आत्तशरासनः सन्नद्ध इति भावः ।।६४-७२।।

---

१. 'युधिष्ठिरं निवार्याशु मा युध्यस्वेति पाण्डवम् । माद्रेयौ चक्ररक्षौ तु फल्गुनश्च तदाऽकरोत् । सेनाग्रगो भीमसेन-स्तदाऽभूद् गदया सह ।।' आदिपर्वणि-१४८.२०..

**वरदराजीया–** प्रहरतां युद्धं कुर्वतां वरः श्रेष्ठः । पुरः पुरस्तादेव । तदैव, निर्ययाविति शेषः । रथमारुरोह रथेन निर्गत इत्यर्थः । आत्तशरासनः प्रगृहीतधनुरित्यर्थः ।।६४।।

**अनन्तभट्टीया–** पुरः अग्रे ।।६४।।

**जनार्दनीया–** प्रहरतां युद्धं कुर्वताम् । पुरः पूर्वम् । आत्तशरासनः धृतकार्मुकः ।।६४।।

**चट्टि–** प्रभग्नान् तान् समालोक्य प्रहरतां युद्धं कुर्वतां वरः श्रेष्ठः वीरः भीमः । पुरः पुरस्तात् आत्तशरासनः धृतकार्मुकः सन् रथमारुरोह ।।६४।।

**तमन्वयादिन्द्रसूनुः यमौ तस्यैव चक्रयोः ।**
**युधिष्ठिरस्तु द्रोणेन सह तस्थौ निरीक्षकः ।।६५।।**

**वादिराजतीर्थीया–** 'यमौ तस्यैव चक्रयोः' इत्यत्र तस्य अर्जुनस्य चक्रयोः रथचक्रयोः समीप एव अन्वगाताम् ।।६५-१०३।।

**वरदराजीया–** इन्द्रसूनुः अर्जुनः भीमं अनु अयात् ययौ । यमौ तस्य भीमस्यैव चक्रयोः रथचक्रयोः समीपे गतावित्यर्थः । निरीक्षकः अवलोकिता ।।६५।।

**अनन्तभट्टीया–** तस्यैव भीमस्यैव चक्रयोः रथचक्रसमीपदेशयोः ।।६५।।

**जनार्दनीया–** तमनु भीममनु । तस्य भीमस्य चक्रयोः रथचक्रयोः समीपेन, जग्मतुरिति शेषः । निरीक्षकः द्रष्टा सन् ।।६५।।

**ताम्रपर्णीया–** ।। **यमौ तस्येति** ।। तस्यार्जुनस्येत्यर्थः । चक्ररक्षौ । तदुक्तं भारते- 'माद्रेयौ चक्ररक्षौ तु भवतः फल्गुनस्य तौ ।' (आदिपर्वणि-१४८.२९) इति ।।६५-७६।।

**चट्टि–** इन्द्रसूनुः अर्जुनः तं भीमं अन्वयात् । यमौ नकुलसहदेवौ तस्य भीमस्यैव चक्रयोः रथचक्रयोः समीपेन, जग्मतुरिति शेषः । युधिष्ठिरः द्रोणेन सह निरीक्षकः पश्यन् सन् तस्थौ ।।६५।।

**आयान्तमग्रतो दृष्ट्वा भीममात्तशरासनम्[१] ।**
**दुद्रुवुः सर्वपाञ्चाला विविशुः पुरमेव च ।।६६।।**

**वरदराजीया–** आयान्तमभियान्तम् ।।६६।।

**जनार्दनीया–** आयान्तमभियान्तम् ।।६६।।

---

१. भारते- 'भीमसेनस्तदाभूद्गदया सह'(२९) 'स्वयमभ्यद्रवद्भीमो नागानीकं गदाधरः'(३३) 'अहनत्कुञ्जरानीकं गदया कालरूपधृक्' (३४) इत्यादिभिः भीमः गदामादाय युयुधे इत्युच्यते । आदिपर्वणि-१४८.

**चट्टि–** आत्तशरासनं अग्रतः आयान्तमभियान्तं भीमं दृष्ट्वा सर्वे पाञ्चालाः दुद्रुवुः । पुरमेव विविशतुश्च । न तु मध्ये स्थिताः ।।६६।।

**द्रुपदस्त्वभ्ययाद् भीमं सपुत्रः [१]सारसेनया ।**
**चक्ररक्षौ तु तस्याऽस्तां युधामन्यूत्तमौजसौ ।।६७।।**

**वेदाङ्गतीर्थीया–** सारसेनया प्रबलसेनया ।।६७-७८।।

**वरदराजीया–** ससुतो द्रुपदः सेनया सह भीमं अभ्ययात् । ससुत इत्येतद्विवृणोति– **चक्रेति** ।। युधामन्युश्च उत्तमौजाश्च इति द्वौ पुत्रौ द्रुपदस्य चक्ररक्षौ रथचक्ररक्षकौ ।।६७।।

**जनार्दनीया–** ससुतो द्रुपदोऽभ्ययात् । ससुत इत्येतद्विवृणोति– **चक्रेति** ।। युधामन्युश्च उत्तमौजाश्च इति द्वौ पुत्रौ चक्ररक्षौ रथचक्ररक्षकौ ।।६७।।

**चट्टि–** द्रुपदो ससुतः सन् सेनया सह भीमं अभ्ययात् । ससुत इत्येतद्विवृणोति– **चक्रेति** ।। युधामन्युश्च उत्तमौजाश्च इति द्वौ पुत्रौ तस्य द्रुपदस्य चक्ररक्षकौ आस्ताम् ।।६७।।

**धात्रर्यमावेशयुतौ विश्वावसुपरावसू ।**
**सुतौ तस्य [२]महावीर्यौ सत्यजित् पृष्ठतोऽभवत् ।**
**स मित्रांशयुतो वीरश्चित्रसेनो महारथः ।।६८।।**

**वरदराजीया–** तौ पूर्वं कावित्यत आह– **धात्रेति** ।। विश्वावसुपरावसू तन्नामानौ गन्धर्वौ धात्रर्यमांशयुतौ । द्वादशादित्येषु मध्ये तन्नामकादित्यावेशयुक्तावित्यर्थः । तस्य द्रुपदस्य सुतः सत्यजिन्नामा पुत्रकः पृष्ठतो रक्षकोऽभवदित्यर्थः । सः सत्यजित् पूर्वं चित्रसेनः चित्रसेनाख्यगन्धर्वः । तथा मित्रस्य तन्नामकस्य आदित्यस्यांशेन युक्त इत्यर्थः ।।६८।।

**भावविवृतिः–** 'धात्रर्यमावेशयुतौ युधामन्यूत्तमौजसौ' इत्यत्र धातुर्ब्रह्मणः अर्यम्णश्च तयोरावेशाभ्यां युताविति । ब्रह्मावेशयुतो युधामन्युः । तदुक्तम्– 'युधामन्युः पार्षदस्तु ब्रह्मावेशयुतो बली'(श्लो-५५) इत्यंशावतरणे ।।६८-९६।।

**अनन्तभट्टीया–** ।। **धात्रेति** ।। तत्तन्नामसूर्यौ । तस्य द्रुपदस्य । विश्वावसुपरावसू तदाख्यगन्धर्वौ । चित्रसेनः पूर्वं चित्रसेनाख्यगन्धर्वः मित्रांशयुतः तन्नामैकसूर्यांशयुतः ।।६८।।

---

१. 'सह सेनया' इति चट्टीपाठः ।

२. 'महावीर्यो' इति चट्टीपाठः ।

**जनार्दनीया–** तौ पूर्वं कावित्यत आह– **धात्रेति** ।। विश्वावसुपरावसू तदाख्यगन्धर्वौ । धात्रर्यमावेशयुतौ द्वादशादित्येषु मध्ये धात्रर्यम्णोः आवेशयुतौ । तस्य द्रुपदस्य सुतौ । सत्यजित् सत्यजिन्नामा सुतः । सत्यजित् पूर्वं चित्रसेनाख्यो गन्धर्वः । मित्रांशयुतः मित्राख्यादित्यांशयुक्तः ।।६८।।

**चट्टि–** तौ पूर्वं कावित्यत आह– **धात्रेति** ।। विश्वावसुपरावसू तदाख्यगन्धर्वौ । धात्रर्यमावेशयुतौ द्वादशादित्येषु मध्ये धात्रर्यम्णोः आवेशयुतौ । तस्य द्रुपदस्य सुतौ । महावीर्यो सत्यजिन्नामकः पुत्रः पृष्ठतः अभवत् रक्षको अभवदित्यर्थः । वीरः महारथः सः सत्यजित् पूर्वं चित्रसेनाख्यो गन्धर्वः । मित्रांशयुतः मित्राख्यादित्यांशयुक्तः ।।६८।।

**अग्रतस्तु शिखण्ड्यागाद् रथोदारः शरान् क्षिपन् ।**
**जनमेजयस्तमन्वेव पूर्वं चित्ररथो हि यः ।**
**त्वष्टुरावेशसंयुक्तः स शरानभ्यवर्षत ।।६९।।**

**व्यासतीर्थीया–** पूर्वं चित्ररथो नाम गन्धर्वः । तमनु शिखण्डिनमनु ।।६९-८८।।

**वरदराजीया–** अग्रतः द्रुपदस्य । रथोदारः रथेन उदारः उत्कृष्टः । जनमेजयः तन्नामा तं शिखण्डिनं अनु । यः पूर्वं चित्ररथो गन्धर्वः स जनमेजय इत्यर्थः । त्वष्टुः तन्नामकादित्यस्यांशेन संयुक्तः । अभ्यवर्षत ववर्ष ।।६९।।

**अनन्तभट्टीया–** त्वष्टुः तन्नामकसूर्यांशयुतस्य ।।६९।।

**जनार्दनीया–** रथोदारः रथेन उत्कृष्टः । जनमेजयाख्यसुतः तमनु शिखण्डिनमनु । यः पूर्वं चित्ररथाख्यो गन्धर्वः स त्वष्टृनामकादित्यावेशसंयुक्तो जनमेजयः ।।६९।।

**चट्टि–** रथोदारः रथेन उदारः उत्कृष्टः शिखण्डी शरान् क्षिपन् सन् द्रुपदस्य अग्रतः अगात् । जनमेजयाख्यः सुतः तमनु शिखण्डिनमनु एवागात् । यः पूर्वं चित्ररथाख्यो गन्धर्वः त्वष्टुः तन्नामकस्य आदित्यस्यावेशसंयुतः सः शरान् अभ्यवर्षत ।।६९।।

**तावुभौ विरथौ कृत्वा विचापौ च विवर्मकौ ।**
**भीमो जघान तां सेनां सवाजिरथकुञ्जराम् ।।७०।।**

**वरदराजीया–** तावुभौ शिखण्डिजनमेजयौ वाजिरथकुञ्जरैः सहितां सेनाम् ।।७०।।

**अनन्तभट्टीया–** तौ शिखण्डिजनमेजयौ ।।७०-७५।।

**जनार्दनीया–** तावुभौ शिखण्डिजनमेजयौ ।।७०।।

**चट्टि–** आत्तशरासनं अग्रतः आयान्तमभियान्तं भीमं दृष्ट्वा सर्वे पाञ्चालाः दुद्रुवुः । पुरमेव विविशतुश्च । न तु मध्ये स्थिताः ।।६६।।

> **द्रुपदस्त्वभ्ययाद् भीमं सपुत्रः [१]सारसेनया ।**
> **चक्ररक्षौ तु तस्याऽस्तां युधामन्यूत्तमौजसौ ।।६७।।**

**वेदाङ्गतीर्थीया–** सारसेनया प्रबलसेनया ।।६७-७८।।

**वरदराजीया–** ससुतो द्रुपदः सेनया सह भीमं अभ्ययात् । ससुत इत्येतद्विवृणोति– **चक्रेति** ।। युधामन्युश्च उत्तमौजाश्च इति द्वौ पुत्रौ द्रुपदस्य चक्ररक्षौ रथचक्ररक्षकौ ।।६७।।

**जनार्दनीया–** ससुतो द्रुपदोऽभ्ययात् । ससुत इत्येतद्विवृणोति– **चक्रेति** ।। युधामन्युश्च उत्तमौजाश्च इति द्वौ पुत्रौ चक्ररक्षौ रथचक्ररक्षकौ ।।६७।।

**चट्टि–** द्रुपदो ससुतः सन् सेनया सह भीमं अभ्ययात् । ससुत इत्येतद्विवृणोति– **चक्रेति** ।। युधामन्युश्च उत्तमौजाश्च इति द्वौ पुत्रौ तस्य द्रुपदस्य चक्ररक्षकौ आस्ताम् ।।६७।।

> **धात्रर्यमावेशयुतौ विश्वावसुपरावसू ।**
> **सुतौ तस्य [२]महावीर्यौ सत्यजित् पृष्ठतोऽभवत् ।**
> **स मित्रांशयुतो वीरश्चित्रसेनो महारथः ।।६८।।**

**वरदराजीया–** तौ पूर्वं कावित्यत आह– **धात्रेति** ।। विश्वावसुपरावसू तन्नामानौ गन्धर्वौ धात्रर्यमांशयुतौ । द्वादशादित्येषु मध्ये तन्नामकादित्यावेशयुक्तावित्यर्थः । तस्य द्रुपदस्य सुतः सत्यजिन्नामा पुत्रकः पृष्ठतो रक्षकोऽभवदित्यर्थः । सः सत्यजित् पूर्वं चित्रसेनः चित्रसेनाख्यगन्धर्वः । तथा मित्रस्य तन्नामकस्य आदित्यस्यांशेन युक्त इत्यर्थः ।।६८।।

**भावविवृतिः–** 'धात्रर्यमावेशयुतौ युधामन्यूत्तमौजसौ' इत्यत्र धातुर्ब्रह्मणः अर्यम्णश्च तयोरावेशाभ्यां युताविति । ब्रह्मावेशयुतो युधामन्युः । तदुक्तम्– 'युधामन्युः पार्षदस्तु ब्रह्मावेशयुतो बली'(श्लो-५५) इत्यंशावतरणे ।।६८-९६।।

**अनन्तभट्टीया–** ।। **धात्रेति** ।। तत्तन्नामसूर्यौ । तस्य द्रुपदस्य । विश्वावसुपरावसू तदाख्यगन्धर्वौ । चित्रसेनः पूर्वं चित्रसेनाख्यगन्धर्वः मित्रांशयुतः तन्नामैकसूर्यांशयुतः ।।६८।।

---

१. 'सह सेनया' इति चट्टीपाठः ।

२. 'महावीर्यो' इति चट्टीपाठः ।

**जनार्दनीया–** तौ पूर्वं कावित्यत आह– **धात्रेति** ।। विश्वावसुपरावसू तदाख्यगन्धर्वौ । धात्र्यर्यमावेशयुतौ द्वादशादित्येषु मध्ये धात्र्यर्यम्णोः आवेशयुतौ । तस्य द्रुपदस्य सुतौ । सत्यजित् सत्यजिन्नामा सुतः । सत्यजित् पूर्वं चित्रसेनाख्यो गन्धर्वः । मित्रांशयुतः मित्राख्यादित्यांशयुक्तः ।।६८।।

**चट्टि–** तौ पूर्वं कावित्यत आह– **धात्रेति** ।। विश्वावसुपरावसू तदाख्यगन्धर्वौ । धात्र्यर्यमावेशयुतौ द्वादशादित्येषु मध्ये धात्र्यर्यम्णोः आवेशयुतौ । तस्य द्रुपदस्य सुतौ । महावीर्यो सत्यजिन्नामकः पुत्रः पृष्ठतः अभवत् रक्षको अभवदित्यर्थः । वीरः महारथः सः सत्यजित् पूर्वं चित्रसेनाख्यो गन्धर्वः । मित्रांशयुतः मित्राख्यादित्यांशयुक्तः ।।६८।।

**अग्रतस्तु शिखण्ड्यागाद् रथोदारः शरान् क्षिपन् ।**
**जनमेजयस्तमन्वेव पूर्वं चित्ररथो हि यः ।**
**त्वष्टुरावेशसंयुक्तः स शरानभ्यवर्षत ।।६९।।**

**व्यासतीर्थीया–** पूर्वं चित्ररथो नाम गन्धर्वः । तमनु शिखण्डिनमनु ।।६९-८८।।

**वरदराजीया–** अग्रतः द्रुपदस्य । रथोदारः रथेन उदारः उत्कृष्टः । जनमेजयः तन्नामा तं शिखण्डिनं अनु । यः पूर्वं चित्ररथो गन्धर्वः स जनमेजय इत्यर्थः । त्वष्टुः तन्नामकादित्यस्यांशेन संयुक्तः । अभ्यवर्षत ववर्ष ।।६९।।

**अनन्तभट्टीया–** त्वष्टुः तन्नामकसूर्यांशयुतस्य ।।६९।।

**जनार्दनीया–** रथोदारः रथेन उत्कृष्टः । जनमेजयाख्यसुतः तमनु शिखण्डिनमनु । यः पूर्वं चित्ररथाख्यो गन्धर्वः स त्वष्टृनामकादित्यावेशसंयुक्तो जनमेजयः ।।६९।।

**चट्टि–** रथोदारः रथेन उदारः उत्कृष्टः शिखण्डी शरान् क्षिपन् सन् द्रुपदस्य अग्रतः अगात् । जनमेजयाख्यः सुतः तमनु शिखण्डिनमनु एवागात् । यः पूर्वं चित्ररथाख्यो गन्धर्वः त्वष्टुः तन्नामकस्य आदित्यस्यावेशसंयुतः सः शरान् अभ्यवर्षत ।।६९।।

**तावुभौ विरथौ कृत्वा विचापौ च विवर्मकौ ।**
**भीमो जघान तां सेनां सवाजिरथकुञ्जराम् ।।७०।।**

**वरदराजीया–** तावुभौ शिखण्डिजनमेजयौ वाजिरथकुञ्जरैः सहितां सेनाम् ।।७०।।

**अनन्तभट्टीया–** तौ शिखण्डिजनमेजयौ ।।७०-७५।।

**जनार्दनीया–** तावुभौ शिखण्डिजनमेजयौ ।।७०।।

**चट्टि–** भीमः तावुभौ शिखण्डिजनमेजयौ विरथौ विचापौ विवर्मकौ च कृत्वा सवाजिरथकुञ्जरां तां सेनां जघान ।।७०।।

**अथैनं शरवर्षेण युधामन्यूत्तमौजसौ ।**
**अभीयतुस्तौ विरथौ चक्रे भीमो निरायुधौ ।।७१।।**

**वरदराजीया–** एनं भीमम् । युधामन्यूत्तमौजसौ विरथौ निरायुधौ चक्रे ।।७१।।

**जनार्दनीया–** एनं भीमम् ।।७१।।

**चट्टि–** अथ अनन्तरं युधामन्यूत्तमौजसौ एनं भीमं शरवर्षेण अभीयतुः । भीमस्तौ विरथौ निरायुधौ च चक्रे ।।७१।।

**हस्तप्राप्तं च पाञ्चालं नाग्रहीत् स वृकोदरः ।**
**गुर्वर्थमर्जुनस्योर्वीं प्रतिज्ञां कर्तुमप्यृताम् ।**
**मानभङ्गाय कर्णस्य पार्थमेव न्ययोजयत् ।।७२।।**

**वेदाङ्गतीर्थीया–** गुर्वर्थं गुरुप्रयोजनाय (प्रतिज्ञां) तद्बन्धनविषयाम् ।।७२।।

**वरदराजीया–** हस्तेन प्राप्तं गृहीतं कुतो नाग्रहीदित्यत आह– **गुर्वर्थमिति** ।। गुर्वर्थं कृतां अर्जुनस्य प्रतिज्ञां ऋतां सत्यां कर्तुं अपि च कर्णस्य मानभङ्गाय अहङ्कारखण्डनायापि पार्थमेव द्रुपदग्रहणे न्ययोजयत् ।।७२।।

**जनार्दनीया–** हस्तप्राप्तम्, गृहीतुमिति शेषः । कुतो नाग्रहीदित्यत आह– **गुर्वर्थमिति** ।। गुर्वर्थं गुरुप्रयोजनमुद्दिश्य, कृतामिति शेषः । ऋतां सत्यां कर्तुम् । कर्णस्यापि मानभङ्गाय पार्थमेव न्ययोजयत् । पाञ्चालम्, ग्रहीतुमिति शेषः ।।७२।।

**चट्टि–** सः वृकोदरः हस्तप्राप्तं च पाञ्चालं द्रुपदं नाग्रहीत् । कुतो नाग्रहीदित्यत आह– **गुर्वर्थमिति** ।। गुर्वर्थं गुरुप्रयोजनमुद्दिश्य, कृतामिति शेषः । अर्जुनस्य उर्वीं प्रतिज्ञां ऋतां सत्यां कर्तुं, कर्णस्य मानभङ्गायापि पार्थमेव न्ययोजयत् । द्रुपदम्, गृहीतुमिति शेषः ।।७२।।

**स शरान् क्षिपतस्तस्य पाञ्चालस्यार्जुनो द्रुतम् ।**
**पुप्लुवे स्यन्दने चापं छित्वा तं चाग्रहीत् क्षणात् ।**
**सिंहो मृगमिवाऽदाय [१]स्वरथं चाभिपेदिवान् ।।७३।।**

१. 'स्वरथं चाभिपतितवान्' इति वेदाङ्गतीर्थीयः पाठः ।

**वेदाङ्गतीर्थीया–** स्वरथे अभिपेतिवान् स्वरथे पुप्लुवानिति भावः ।।७३-८३।।

**वरदराजीया–** क्षिपतो वर्षतस्तस्य द्रुपदस्य स्यन्दने पुप्लुवे । चापं छित्वा तं द्रुपदं च अग्रहीत् । स्वरथं प्रति चाभिपेदिवान् प्राप ।।७३।।

**जनार्दनीया–** क्षिपतो वर्षतः । तं द्रुपदम् । अभिपेदिवान् प्राप ।।७३।।

**चट्टि–** सः अर्जुनः शरान् क्षिपतो वर्षतः तस्य पाञ्चालस्य द्रुपदस्य स्यन्दने रथे द्रुतं पुप्लुवे । तस्य चापं छित्वा तं द्रुपदं च क्षणादग्रहीत् । सिंहो मृगमिवादाय, द्रुपदमिति शेषः । स्वरथं अभिपेदिवान् प्राप ।।७३।।

**अथ प्रकुपितं सैन्यं फल्गुनं पर्यवारयत् ।**
**जघान भीमस्तरसा तत् सैन्यं शरवृष्टिभिः ।।७४।।**

**वरदराजीया–** प्रकुपितं कोपयुक्तं सैन्यं सेना फल्गुनं परितः अवारयत् । तत् अर्जुनं परिवार्य स्थितं सैन्यम् । तरसा वेगेन ।।७४।।

**जनार्दनीया–** पर्यवारयत् पार्थं स्वमध्यस्थं कृत्वा स्थितमिति भावः । तरसा वेगेन ।।७४।।

**चट्टि–** अथ सैन्यम्, द्रुपदस्येति शेषः । प्रकुपितं कोपयुक्तं सत् फल्गुनं पर्यवारयत् पार्थं स्वमध्ये कृत्वा स्थितमिति भावः । भीमः तरसा वेगेन तत्सैन्यं शरवृष्टिभिः जघान ।। ७४ ।।

**अथ सत्यजिदभ्यागात् पार्थं मुञ्चञ्छरान् बहून् ।**
**तमर्जुनः क्षणेनैव चक्रे विरथकार्मुकम् ।।७५।।**

**वरदराजीया–** सत्यजित् द्रुपदपुत्रः । विरथकार्मुकं विगतरथकार्मुकम् ।।७५।।

**जनार्दनीया–** कार्मुकं धनुः ।।७५।।

**चट्टि–** अथ सत्यजित् बहून् शरान् मुञ्चन् सन् पार्थमभ्यागात् । अर्जुनः क्षणेनैव तं विरथकार्मुकं चक्रे ।।७५।।

**घ्नन्तं भीमं पुनः सैन्यमर्जुनः प्राह मा भवान् ।**
**सेनामर्हति राज्ञोऽस्य वीर हन्तुमशेषतः ।।७६।।**

**वरदराजीया–** सैन्यं घ्नन्तं संहरन्तं प्राह । किमिति? हे वीर! अस्य द्रुपदस्य राज्ञः सेनां अशेषतः सर्वान् हन्तुं नार्हति ।।७६।।

**अनन्तभट्टीया–** राज्ञः सेनामशेषतो हन्तुं नार्हति ।।७६।।

**जनार्दनीया–** घ्नन्तं संहरन्तम् । अशेषतः सर्वान् । हन्तुं भवान्नार्हति ।।७६।।

**ताम्रपर्णीया–** ।। **घ्नन्तं भीममिति** ।। 'आततायिनमायान्तं हन्यात्' इति धर्मशास्त्रानुसारेण शस्त्रपाणिं सैन्यं घ्नन्तं अर्जुनेन सम्बन्धयोग्य इत्यादि वाचयित्वा तस्मिन् द्रुपदस्य स्नेहपाशं सम्पाद्य द्रौपद्युत्पादनाय च घ्नन्तमित्यर्थः । अत्यर्थं सेनाया अहनने अर्जुनस्य तूष्णींभावप्राप्तेरिति भावः ।।७६-८६।।

**चट्टि–** पुनः सैन्यं सेनां घ्नन्तं संहरन्तं भीमं अर्जुनः प्राह । किमिति? हे वीर! अस्य राज्ञः द्रुपदस्य सेनां अशेषतः सर्वान् हन्तुं भवान्नार्हति ।।७६।।

**सम्बन्धयोग्यस्तातस्य सखाऽयं नः सुधार्मिकः ।**
**नेष्याम एनमेवातो गुरोर्वचनगौरवात् ।।७७।।**

**वेदाङ्गतीर्थीया–** अयं नः सम्बन्धयोग्यः ।।७७-९२।।

**वरदराजीया–** तत्र हेतुः– **सम्बन्धेति** ।। तातस्य पाण्डोः सखा नोऽस्माकं सम्बन्धयोग्यः भाविशरीरसम्बन्धयोग्यः सुधार्मिकश्च । अतः कारणादेव एनं द्रुपदं नेष्यामः नयामः । नयनमपि गुरोर्वचनस्य गौरवात् अलङ्घ्यत्वादित्यर्थः ।।७७।।

**अनन्तभट्टीया–** तातस्य पाण्डोः सखा नः सम्बन्धयोग्यः । भाविसम्बन्धं हृदि निधायैवमुक्तम् ।।७७-८२।।

**जनार्दनीया–** तत्र हेतुः– **सम्बन्धेति** ।। तातस्य पाण्डोः सखा । 'सम्बन्धी कुरुवीराणां द्रुपदो राजसत्तमः । मा वधीस्तद्बलं भीम गुरुदानं प्रदीयताम् ।।' (आदिपर्वणि-१४८.६६) इत्यत्र भारते सम्बन्धीति कथमुक्तम्? सम्बन्धस्याजातत्वादित्यतो वाऽऽह– **सम्बन्धयोग्येति** ।। नः अस्माकम् । सम्बन्धयोग्यः भाविसम्बन्धं हृदि निधायेदमुक्तम् । सुधार्मिकश्च यत् यतः अतः कारणात् । एनं द्रुपदं नेष्यामः । नयनमपि गुरोर्वचनगौरवादलङ्घ्यत्वादित्यर्थः ।।७७।।

**चट्टि–** तत्र हेतुः– **सम्बन्धेति** । तातस्य पाण्डोः सखा । अयं द्रुपदः नोऽस्माकं सम्बन्धयोग्यः भाविसम्बन्धं हृदि निधाय एवमुक्तम् । सुधार्मिकश्च यत् यतः अतः कारणात् एनं द्रुपदं एव नेष्यामः । नयनमपि गुरोर्वचनस्य गौरवादलङ्घ्यत्वादित्यर्थः ।।७७।।

**स्नेहपाशं ततश्चक्रे बीभत्सौ द्रुपदोऽधिकम् ।**
**ततः सेनां विहायैव भीमो बीभत्सुमन्वयात् ।।७८।।**

**वरदराजीया–** ततस्तत एव बीभत्सौ अर्जुने अधिकं स्नेहाख्यं पाशम् । ततः कारणादेव ।।७८।।

**जनार्दनीया–** ततः कारणात् । बीभत्सौ अर्जुने ।।७८।।

**चट्टि–** ततः कारणात् । बीभत्सौ अर्जुने द्रुपदः अधिकं स्नेहाख्यं पाशं चक्रे । ततः भीमः सेनां विहाय बीभत्सुमर्जुनमेवान्वयात् ।।७८।।

**मुक्ता कथञ्चिद् भीमास्यात् सा सेना दुद्रुवे भयात् ।**
**द्रुपदं स्थापयामासाथार्जुनो द्रोणसन्निधौ ।।७९।।**

**वरदराजीया–** भीमास्यात् भीममुखात् [१]कथञ्चित् दैवेन सेना दुद्रुवे । द्रोणसन्निधौ स्थापयामास ।।७९।।

**जनार्दनीया–** भीमास्यात् भीममुखात् ।।७९।।

**चट्टि–** सा सेना भीमास्यात् भीममुखात् कथञ्चिन्मुक्ता सती भयात् दुद्रुवे । अथार्जुनः द्रुपदं द्रोणसन्निधौ स्थापयामास ।।७९।।

**पप्रच्छैनं तदा द्रोणः सख्यमस्त्युत नेति वा ।**
**अस्तीदानीमिति प्राह द्रुपदोऽङ्गिरसां वरम् ।।८०।।**

**वरदराजीया–** एनं द्रुपदं आवयोः सख्यमस्ति न वा इति पप्रच्छ । इदानीं सख्यमस्तीति अङ्गिरसां वरं द्रोणं प्रत्याह ।।८०।।

**अनन्तभट्टीया–** अङ्गिरसां वरं द्रोणम् ।।८०।।

**जनार्दनीया–** आवयोः सख्यमस्ति न वेति पप्रच्छ । अङ्गिरसां वरं द्रोणम् ।।८०।।

**चट्टि–** तदा द्रोणः एनं द्रुपदं आवयोः सख्यमस्ति न वेति पप्रच्छ । इदानीं सख्यमस्तीति द्रुपदो अङ्गिरसां वरं द्रोणं प्राह ।। ८० ।।

**अथाऽह द्रुपदं द्रोणः सख्यमिच्छेऽक्षयं तव ।**
**न ह्यराज्ञो भवेत् सख्यं तवेतीदं कृतं मया ।।८१।।**

**वरदराजीया–** अक्षयं सख्यमिच्छे । अराज्ञो राजपदवीरहितस्य मया तव सख्यं न भवेत् इति हेतोः इदं तवानयनं कृतम् ।।८१।।

**जनार्दनीया–** अक्षयम् । हि यतः अराज्ञः राजपदवीरहितस्य मम, तव सख्यं न भवेत् । अतः इदं तवानयनं कृतम् ।।८१।।

**चट्टि–** अथ द्रोणः द्रुपदं प्राह । किमिति? अक्षयं तव सख्यमिच्छे । हि यस्मात् अराज्ञः राजपदरहितस्य मम तव सख्यं न भवेत् इति तस्मात् इदं तवानयनं मया कृतम् ।।८१।।

---

१. 'कथञ्चिदेव' इति कचित् कोशेषु ।

**न विप्रधर्मो यद् युद्धमतस्त्वं न मया धृतः ।**
**शिष्यैरेतत् कारितं मे तव सख्यमभीप्सता ॥८२॥**

**वरदराजीया–** युद्धं यत् यतो विप्रधर्मो न भवति अतो मया न धृतः । मे शिष्यैः एतत् तवानयनं तव सख्यमभीप्सता इच्छता कारितम् । अतस्त्वया कोपो न कार्य इति भावः ॥८२॥

**जनार्दनीया–** अभीप्सता इच्छता ॥८२॥

**चट्टि–** यत् यतो युद्धं विप्रधर्मो न भवति अतः त्वं मया न धृतः मे शिष्यैस्तव सख्यं अभीप्सता इच्छता मया एतदानयनं कारितम् ॥८२॥

**अतः सख्यार्थमेवाद्य त्वद्राज्यार्धो हृतो मया ।**
**[१]गङ्गाया दक्षिणे कूले त्वं राजैवोत्तरे त्वहम् ।**
**न ह्यराजत्व एकस्य सख्यं स्यादावयोः सखे ॥८३॥**

**वरदराजीया–** सख्यार्थमेव ममापि राज्यार्धः त्वद्राज्यस्य अर्धभागो मया हृतः । समासान्तत्वस्य अविवक्षितत्वात् अर्ध इति पुल्लिङ्गता । गङ्गायाः भागीरथ्याः दक्षिणे कूले त्वं राजा भव । उत्तरे तु कूले अहं राजा भवामि । सर्वं राज्यं किमिति नापहृतमित्यत आह– **न हि इति** ॥ तर्हि हे सखे! अवयोर्मध्ये एकस्य अराजत्वे राजत्वाभावे सति सख्यं न स्याद्धि ॥८३॥

**अनन्तभट्टीया–** समासान्तत्वस्याविवक्षितत्वात् अर्ध इति पुल्लिङ्गनिर्देशः ॥८३-८४॥

**जनार्दनीया–** अतः सख्यार्थमेव सखित्वार्थम् । त्वद्राज्यार्धः तव राज्यस्यार्धभागः हृतः । समासान्तत्वस्य अविवक्षितत्वादर्ध इति पुल्लिङ्गनिर्देशः । उत्तरे उत्तरकूले । अहं राजा भवामि ॥८३॥

**चट्टि–** अतः राज्यरहितस्य तव सख्यं न भवेदिति हेतोः तव सख्यार्थमेव अद्य त्वद्राज्यार्धः तव राज्यस्यार्धभागः हृतः । समासान्तत्वस्य अविवक्षितत्वादर्ध इति पुल्लिङ्गनिर्देशः । गङ्गायाः भागीरथ्याः दक्षिणे कूले त्वमेव राजा भव । उत्तरे उत्तरकूले तु अहं राजा भवामि । सर्वं राज्यं किमिति नापहियते इत्यत आह– **न हीति** ॥ हे सखे! आवयोः मध्ये एकस्य अराजत्वे राजत्वाभावे सख्यं न स्यात् हि ॥८३॥

---

१. 'अराजा किल नो राज्ञः सखा भवितुमर्हति । राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे । सखायं मां विजानीहि पाञ्चाल यदि मन्यसे ॥ माकन्दीमथ गङ्गायास्तीरे जनपदायुताम् । सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम् ॥ दक्षिणांश्चापि पञ्चालान् यावच्चर्मण्वती नदी । द्रोणेन चैवं द्रुपदः परिभूयाथ पालितः ॥ ..अहिच्छत्रं च विषयं द्रोणः समभिपद्यत ॥ आदिपर्वणि-१४८.७४-८१.

**इत्युक्त्वोन्मुच्य तं द्रोणो राज्यार्धं गृह्य चामुतः ।**
**ययौ शिष्यैर्नागपुरं न्यवसत् सुखमत्र च ।**
**ब्राह्मण्यत्यागभीरुः सन् नागृह्लद्धनुरप्यसौ ॥८४॥**

**वेदाङ्गतीर्थीया–** 'न विप्रधर्मो यद्युद्धम्' इत्युक्तत्वात् द्रोणः कस्माद् युद्धमकार्षीदित्यत आह– **ब्राह्मण्येति** ॥८४-८५॥

**वरदराजीया–** तं द्रुपदम् । अमुतः सकाशात् राज्यार्धं गृह्य गृहीत्वा शिष्यैः सह नागपुरं हस्तिनपुरं सुखं यथा भवति तथा । अत्र नागपुरे । ननु प्रतिग्रहोज्झो निजधर्मवर्ती चेत् द्रोणः कथं पाण्डवैः युयोध इति शङ्कां प्रसङ्गसङ्गत्या परिहरति– **ब्राह्मण्येति** ॥८४॥

**जनार्दनीया–** अमुतः द्रुपदात् सकाशात् । गृह्य गृहीत्वा । सुखं यथा भवति तथा । ननु 'न विप्रधर्मो यद्युद्धम्' इत्युक्तत्वात् द्रोणः कथं युद्धमकार्षीदित्यत आह– **ब्राह्मण्येति** ॥ धनुर्नागृह्लत् नाग्रहीत् ॥८४॥

**चट्टि–** द्रोणः इत्युक्त्वा अमुतः द्रुपदात् राज्यार्धं गृह्य गृहीत्वा शिष्यैः सह नागपुरं ययौ । अत्र नागपुरे सुखं यथा तथा न्यवसत् । ननु 'न विप्रधर्मो यद्युद्धम्' इत्युक्तत्वात् द्रोणः कथं युद्धमकार्षीदित्यत आह– **ब्राह्मण्येति** ॥ ब्राह्मण्यत्यागभीरुः सन् धनुर्नागृह्लत् ॥ ८४ ॥

**धार्तराष्ट्रैस्तु भीमस्य भयात् पादौ प्रणम्य च ।**
**शरणार्थं याचितत्वात् सपुत्रो युयुधे परैः ।**
**एवं हरीच्छयैवासौ [1]क्षात्रं धर्ममुपेयिवान् ॥८५॥**

**व्यासतीर्थीया–** [2]त्वं मामगृह्लन् मत्समकस्यैरेभिः कस्मादग्राह्य इत्यत आह– **एवमिति** ॥ एवं परैः युयुधे ॥८५॥

**वरदराजीया–** धनुः अगृह्लन्नपि भीमभयान्निमित्तात् धार्तराष्ट्रैः दुर्योधनादिभिः शरणार्थं संरक्षणार्थं पादौ प्रणम्य याचितत्वात् असौ सपुत्रो द्रोणः परैः पाण्डवादिभिः युयुधे युद्धं चकार । [3]युद्धकरणे मुख्यञ्च कारणमाह– **एवं हरीच्छयैवेति** ॥ क्षात्रं धर्मं क्षत्रियवृत्तिं उपेयिवान् प्राप ॥८५॥

**अनन्तभट्टीया–** भीमस्य भयान्निमित्तात् धार्तराष्ट्रैः शरणार्थं याचितत्वात् असौ द्रोणः युयुधे इत्यन्वयः । युद्धकरणे मुख्यकारणमाह– **हरीच्छयेति** ॥८५-८६॥

---

१. 'क्षत्रधर्मम्' इति जनार्दनीयपाठः ।

२. इदं वाक्यं मूलकोशेषु अस्पष्टं विद्यते ।

३. 'रामशिष्यो द्रोणः अवैष्णवरक्षार्थं कथं क्षात्रधर्ममाप इत्यत आह– एवमिति ॥' इति कचित् कोशेषु ।

**जनार्दनीया–** तथापि भीमस्य भयान्निमित्तात् धार्तराष्ट्रैः शरणार्थं रक्षणार्थं पादौ प्रणम्य याचितत्वात् असौ द्रोणः परैः पाण्डवैः युयुध इत्यर्थः । रामशिष्यो द्रोणः अवैष्णवरक्षार्थं कथं परधर्मं प्राप्तवानित्यत आह– **एवमिति** ।। हरीच्छयैव क्षत्रधर्मं क्षत्रवृत्तिं उपेयिवान् ।।८५।।

**ताम्रपर्णीया–** नन्वसुरवरैः शरणार्थं याचितत्वेऽपि कथं परमभागवतो द्रोणः ब्राह्मणधर्मं परित्यज्य देवोत्तमैः पाण्डवैर्युयुधे इत्यत आह– **एवं हरीच्छयेति** ।। द्रोणः सुयोधनादिसाहाय्यं आचरत्विति हरीच्छयैवेत्यर्थः ।।८५-८९।।

**चट्टि–** तथापि असौ द्रोणः धार्तराष्ट्रैः दुर्योधनादिभिः भीमस्य भयात् पादौ प्रणम्य शरणार्थं याचितत्वात् सपुत्रः अश्वत्थाम्ना सहितः सन् परैः पाण्डवैः युयुधे च । ननु रामशिष्यो द्रोणः अवैष्णवरक्षार्थं कथं परधर्मं प्राप्तवानित्यत आह– **एवमिति** ।। एवं हरीच्छयैव असौ द्रोणः क्षात्रं धर्मं क्षत्रवृत्तिं उपेयिवान् प्राप ।।८५।।

**[1]द्रुपदस्तु दिवारात्रं तप्यमानः पराभवात् ।**
**भीमार्जुनबलं दृष्ट्वा [2]चेच्छन् पाण्डवसंश्रयम् ।।८६।।**

**वरदराजीया–** पराभवान्निमित्तात् दिवारात्रं तप्यमानः । पाण्डवानां संश्रयमिच्छन् ।।९५।।

**जनार्दनीया–** पराभवान्निमित्तात् ।।८६।।

**चट्टि–** द्रुपदः पराभवान्निमित्तात् दिवारात्रं तप्यमानः सन् भीमार्जुनं बलं च दृष्ट्वा पाण्डवानां संश्रयं ऐच्छत् ।।८६।।

**सम्बन्धीत्यर्जुनवचश्चिकीर्षुः सत्यमेव च ।**
**मार्दवं चार्जुने दृष्ट्वा सुतामैच्छत्[3] तदर्थतः ।**
**पुत्रं च द्रोणहन्तारमिच्छन् विप्रवरौ ययौ ।।८७।।**

**व्यासतीर्थीया–** इत्युक्तप्रकारेण।अर्जुनार्थतः कन्येच्छायां निमित्तमुक्तम्– **मार्दवमिति** ।।८७-९६।।

**वेदाङ्गतीर्थीया–** तदर्थतः अर्जुनार्थतः । द्रोणहन्तारं पुत्रं चैच्छत् इत्युभयमिच्छन् याजोपयाजौ विप्रवरौ ययौ ।।८७।।

**वरदराजीया–** ।। **सम्बन्धीति** ।। सम्बन्धयोग्य इत्यर्जुनवचः । तदर्थतः अर्जुनाय सुतां दातुमिति यावत् । द्रोणस्य हन्तारं पुत्रं चैच्छत् । विप्रवरौ वक्ष्यमाणौ प्रति ययौ ।।८७।।

---

१. 'द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरंस्तदा ।' इत्यादिपर्वणि- १४९..१.

२. 'चैच्छत्' इति चट्टीपाठः ।

३. 'येन मे कर्मणा ब्रह्मन् पुत्रः स्याद् द्रोणमृत्यवे । अर्जुनस्यापि वै भार्या भवेद्या वरवर्णिनी ।। स हि ब्रह्मविदां श्रेष्ठो ब्राह्मे क्षात्रेऽप्यनुत्तमः ।।' इत्यादिपर्वणि- १४०..२९-३०.

**अनन्तभट्टीया–** तदर्थतः अर्जुनार्थम् । विप्रवरौ वक्ष्यमाणौ । ययौ जगाम ।।८७।।

**जनार्दनीया–** तदर्थतः अर्जुनार्थम् । द्रोणहन्तारं पुत्रमिच्छन् इत्युभयमिच्छन् । याजोपयाजौ ययौ ।।८७।।

**चट्टि–** ।। **सम्बन्धीति** ।। सम्बन्धयोग्य इति अर्जुनस्य वच एव सत्यं चिकीर्षुः सन् अर्जुने मार्दवं च दृष्ट्वा तदर्थतः अर्जुनार्थम्, अर्जुनाय दातुं इति यावत् । सुतां ऐच्छत् । द्रोणहन्तारं पुत्रमिच्छन् विप्रवरौ ययौ ।।८७।।

**याजोपयाजावानीयाथार्बुदेन गवां नृपः ।**
**चकारेष्टिं तु तद्भार्या द्विजाभ्यामत्र चाऽहुता[१] ।**
**द्रुपदात् सुतलब्ध्यर्थं [२]साऽहङ्काराद् व्यलम्बयत् ।।८८।।**

**वेदाङ्गतीर्थीया–** अथ तत्प्राप्त्यनन्तरं गवामर्बुदेन करणेन तावानीय कृतायामपीष्टौ मदपेक्षास्तीति अहङ्कारात् व्यलम्बयत् आयातुं कालक्षेपमकरोत् ।।८८-१०१।।

**मधुसूदनीया–** ।। **याजोपयाजाविति** ।। अथ तत्प्राप्त्यनन्तरं गवामर्बुदेन गवां अर्बुददानेन याजोपयाजावानीयेत्यर्थः । केचित्तु- 'गवामर्बुदेन दक्षिणारूपेण इष्टिं गोसवेष्टिं चकार' इति व्याचक्षते । तच्चिन्त्यम् । 'पुत्रकामः पुत्रकामेष्ट्या यजेत' इति श्रुत्या पुत्रकामेष्टेरेव पुत्रकामकर्तव्यत्वेन गोसवेष्टिकरणायोगात् । ग्रन्थान्तरविरोधाच्च । 'द्रोणान्तकमहं पुत्रं लभेयम्' इत्यादिना द्रोणहन्ता पुत्रः कथं स्यात्तथा कुर्वित्युक्त्वा 'तत्कर्म कुरु मे याज निर्वपाम्यर्बुदं गवाम्' इत्येतत्कर्मणि कृते गवामर्बुदं शुल्कं दास्यामीति द्रुपदेनाऽभिहिते 'तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयत्' इत्यादिना याजेन तदङ्गीकृत्य, 'आजह्रे तत्तथा सर्वं द्रुपदः कर्मसिद्धये । ब्राह्मणो द्विपदां श्रेष्ठो जुहाव च यथाविधि ।। [३]कौलिकी नाम तस्यासीद्या वै तां पुत्रगृद्धिनः । सौत्रामणिं तथा पत्नीं ततः कालेऽभ्ययात्तदा ।।' इत्यादिना (१४९.२९-५०) कौलिकाख्यसौत्रामणीष्टिद्वयमुक्त्वा पुत्रकामेष्टिकथनात् आदिपर्वणि । इष्टिं पुत्रकामेष्टिम् ।।८८।।

---

१. 'याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदा । प्रेहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ।। कुमारश्च कुमारी च पितृवंशविवृद्धये ।।' पृषत्युवाच- 'नालिप्तं वै मम मुखं पुण्यान् गन्धान् बिभर्मि च । न पत्नी तेऽस्मि सूत्यर्थे तिष्ठ याज मम प्रिये ।।' इत्यादिपर्वणि १४९.५०-५२. पुनः एतद्वृत्तान्तः १८१ अध्यायेऽस्ति । 'अवलिप्तं मुखं ब्रह्मन् दिव्यान् गन्धान् बिभर्मि च । सुतार्थे नोपलब्धास्मि तिष्ठ याज मम प्रिये' ।।३८।। इत्युपरि अस्ति ।

२. 'सालङ्कारात्' इति पाठान्तरमिति भारतश्रीः ।

३. 'कौसवी नाम' इति क्वचित् कोशेषु ।

**वरदराजीया–** याजोपयाजौ विप्रवरावानीय, स्वगृहं प्रतीति शेषः । गवार्बुदेन दक्षिणारूपेणेष्टिं गोसवेष्टिं चकार । तस्य द्रुपदस्य भार्या अत्र इष्टौ हविःप्राशनेन द्रुपदात् सुतलब्ध्यर्थं आहूता अहङ्कारात् गर्वेण व्यलम्बयत् आगन्तुं विलम्बं चकार ।।८८।।

**भावविवृतिः–** 'याजोपयाजावानीयाथार्बुदेन गवां नृपः । चकारेष्टिं च' इत्यत्र नृपो द्रुपदः तयोः गवां अर्बुदेन अर्बुदसङ्ख्याकगोप्रदानेन याजोपयाजावानीयेष्टिं पुत्रकामेष्टिं चकारेति ।।८८।।

**अनन्तभट्टीया–** गवामर्बुदेन दक्षिणात्वेन दत्तेन । व्यलम्बयत् विलम्बं चकार ।।८८-९१।।

**लघ्वनन्तभट्टीया–** ।। **अर्बुदेनेति** ।। गवामर्बुददानतो तोषयित्वा, आहूयेत्यर्थः ।। **अहङ्कारादिति** ।। इष्टौ कृतायामपि मदपेक्षास्तीत्यहङ्कारात् इत्यर्थः । गवार्बुदस्य दक्षिणात्वेन दत्तत्वात् अहङ्कारादित्यप्याहुः ।।८८।।

**जनार्दनीया–** अथ तत्प्राप्त्यनन्तरं गवामर्बुदेन करणेन तावानीय, स्वगृहमिति शेषः । द्विजाभ्यां द्रुपदात् । सुतलब्ध्यर्थं सुतश्च सुता च सुतौ, तयोः प्राप्त्यर्थम् । आहूता द्रुपदभार्या पुत्रोत्पादनार्थं मदपेक्षा अस्तीति अहङ्काराद् व्यलम्बयत् कालक्षेपमकरोत् ।।८८।।

**ताम्रपर्णीया–** ।। **अर्बुदेनेति** ।। गवामर्बुददानेन तोषयित्वेत्यर्थः ।। **अहङ्कारादिति** ।। इष्टौ कृताया-मपि मदपेक्षाऽस्तीत्यहङ्कारादित्यर्थः । गवामर्बुदस्य दक्षिणत्वेन दत्तादहङ्कार इत्याहुः ।।८८।।

**भारतश्री–** साऽहङ्काकाराद् व्यलम्बयत् । 'साऽलङ्काराद् व्यलम्बयत्' इत्यपि पाठः ।।८८।।

**चट्टि–** अथ तत्प्राप्त्यनन्तरं नृपः द्रुपदः गवामर्बुदेन अर्बुददानेन याजोपयाजावानीय, स्वगृहमिति शेषः । इष्टिं पुत्रकामेष्टिं चकार । अत्र इष्ट्या द्विजाभ्यां याजोपयाजाभ्यां द्रुपदात् सुतलब्ध्यर्थं सुतश्च सुता च तयोः प्राप्त्यर्थम् । आहूता सा प्रसिद्धा तस्य द्रुपदस्य भार्या पुत्रोत्पादनार्थं मदपेक्षा अस्तीति अहङ्काराद् व्यलम्बयत् कालक्षेपमकरोत् ।।८८।।

**[१]किमेतयेत्यवज्ञाय तावुभौ विप्रसत्तमौ ।**
**अजुहुतां तत्पुत्रार्थं पत्न्या प्राश्यं हविस्तदा ।।८९।।**

**वरदराजीया–** एतया भार्यया किं प्रयोजनमिति तौ अवज्ञया पुत्रार्थं यत्पत्न्या राजपत्न्या प्राश्यं भक्षणीयं तद्धविः अग्नौ अजुहुताम् ।।८९।।

**जनार्दनीया–** अवज्ञाय तिरस्कृत्य । तत्पुत्रार्थं द्रुपदस्य पुत्रार्थम् ।।८९।।

**चट्टि–** उभौ तौ विप्रसत्तमौ ब्राह्मणश्रेष्ठौ एतया भार्यया किं प्रयोजनं इत्यवज्ञाय तिरस्कृत्य तत्पुत्रार्थं तस्य द्रुपदस्य पुत्रार्थं पत्न्या प्राश्यं भक्षणीयं हविः तदा अजुहुताम्, अग्नाविति शेषः ।।८९।।

---

१. 'याजेन श्रपितं हव्यमुपयाजेन मन्त्रितम् । कथं कामं न सन्दध्यात् पृषति प्रेहि तिष्ठ वा ।।' इत्यादिपर्वणि-१४०.७३.

**[1]हुते हविषि मन्त्राभ्यां वैष्णवाभ्यां तदैव हि ।**
**दीप्ताङ्गारनिभो वह्निः कुण्डमध्यात् समुत्थितः ॥९०॥**

**वरदराजीया–** वैष्णवाभ्यां विष्णुदेवताकाभ्यां याजोपयाजाभ्यामिति वा । दीप्तेन अङ्गारेण निभः सदृशः वह्निरेव ॥९०॥

**भावविवृतिः–** ॥ **हुते हविषि मन्त्राभ्यां... द्रुपदमभ्ययादिति** ॥ ननु चतुर्विंशाङ्गुलं वा तद्विस्तारो द्वादशेन वा इति कुण्डपरिमाणस्य अल्पत्वात् कथं धृष्टद्युम्नस्य रथेन सह कुण्डमध्यादागमनमिति चेत् । सत्यम् । अणिमाद्यैश्वर्ययोगात् भवतीति सूचनाय हिशब्दः । द्वितीयहिशब्देन द्रौपद्याः द्व्यङ्गुलत्र्यङ्गुल-परिमितवेदिमध्यादागमनमपि अणिमादियोगादिति ज्ञायते ॥९०-१०७॥

**जनार्दनीया–** वैष्णवाभ्यां विष्णुदेवताभ्याम् ॥९०॥

**चट्टि–** वैष्णवाभ्यां विष्णुदेवताभ्यां मन्त्राभ्यां हविषि हुते सति तदैव दीप्ताङ्गारेण निभः सदृशः वह्निः कुण्डमध्यात् समुत्थितः ॥९०॥

**किरीटी कुण्डली दीप्तो हेममाली वरासिमान् ।**
**रथेनाऽदित्यवर्णेन नदन् द्रुपदमभ्ययात्[2] ॥९१॥**

**वरदराजीया–** वरासिमान् उत्तमखड्गधारी आदित्यस्य वर्ण इव वर्णो यस्य स तथा तेन सहितः । नदन् सिंहनादं कुर्वन् ॥९१॥

**जनार्दनीया–** नदन् सिंहनादं कुर्वन् ॥९१॥

**चट्टि–** किरीटी कुण्डली दीप्तः प्रकाशमानः हेममाली वरासिमान् उत्तमखड्गधारी । आदित्यस्य वर्ण इव वर्णो यस्य सः तेन । रथेन सहितः नदन् सिंहनादं कुर्वन् द्रुपदमाद्रवत् ॥९१॥

**धृष्टत्वाद् द्योतनत्वाच्च धृष्टद्युम्न इतीरितः[3] ।**
**मुनिभिर्द्रुपदेनापि सर्ववेदार्थतत्त्ववित् ॥९२॥**

---

१. 'एवमुक्त्वा तु याजेन हुते हविषि संस्कृते । उत्तस्थौ पावकात्तस्मात् कुमारो देवसन्निभः । ज्वालावर्णो घोररूपः किरीटी वर्म धारयन् । वीरः सखड्गः सशरो धनुष्मान् स नदन् मुहुः । सोऽभ्यरोहद्रथवरं तेन च प्रययौ तदा ॥' इत्यादिपर्वणि-१४९.५४-५६. 'अग्नेर्भागं तु विद्धि त्वं धृष्टद्युम्नं महारथम् ।' इति आदिपर्वणि- ६८.१२६.

२. 'द्रुपदमाद्रवत्' इति चट्टीपाठः ।

३. 'धृष्टत्वात् अप्रधृष्यत्वात् द्युम्नात् द्युत्सम्भवादपि । धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥' इत्यादिपर्वणि-१४९.७२. 'द्युम्नाद्युत्सम्भवात् हिरण्यादिभिः सह जातत्वात्' इति व्याख्यानम् ।

**वेदाङ्गतीर्थीया–** धृष्टद्युम्न इतीदं नामान्वर्थकमित्याह– **धृष्टत्वात् इत्यादिना** ।। धृष्टत्वात् धृष्टः द्योतमानत्वात् द्युम्नः । धृष्टश्चासौ द्युम्नश्चेति धृष्टद्युम्न इत्यन्वर्थकमिति भावः ।।९२।।

**सत्याभिनवतीर्थीया–** तत्रैव 'धृष्टत्वाद् द्योतनत्वाच्च..' इति श्लोकः । तस्यार्थः:- मुनिभिः द्रुपदेनापि धृष्टत्वात् द्योतनत्वाच्च धृष्टद्युम्न इतीरितः इति । ननु पित्रैव नामस्थापनं कर्तव्यं मुनिभिरपि एतन्नामस्थापनं कुतः कृतमित्यत आह– **सर्ववेदार्थतत्त्वविदिति** ।। एतेन 'सर्ववेदार्थदतत्वविवित्' इत्येतत् व्यर्थमिति दूषणं परिहृतम् । सर्ववेदार्थतत्त्ववित्वात् एतन्नामस्थापनं मुनिभिः कृतमिति वक्तुं सर्ववेदार्थतत्त्व-विदित्युक्तमिति स्वीकरणात् ।।९२।।

**वरदराजीया–** मुनिभिः याजोयाजादिभिः द्रुपदेनापि धृष्टद्युम्न इतीरितः । कुतः? धृष्टत्वात् धाष्टर्यात् द्योतनत्वात् प्रकाशमानत्वाच्च धृष्टश्चासौ द्युम्नश्च इति धृष्टद्युम्न इति नाम प्राप्त इत्यर्थः । सर्ववेदार्थं भगवन्तं तत्वतो जानीतीति तथा ।।९२।।

**अनन्तभट्टीया–** मुनिभिः द्रुपदेनापि ईरितः ।।९२।।

**जनार्दनीया–** मुनिभिर्द्रुपदेनापि धृष्टद्युम्न इतीरितः । धृष्टद्युम्न इति नाम किमर्थमभूदित्यत आह– **धृष्टत्वादिति** ।। धृष्टत्वात् धाष्टर्यात् धृष्टः । द्योतनत्वात् प्रकाशमानत्वात् द्युम्नः । धृष्टश्चासौ द्युम्नश्चेति धृष्टद्युम्नः । सर्ववेदार्थं भगवत्तत्वं च जानातीति ।।९२।।

**चट्टि–** मुनिभिर्द्रुपदेनापि धृष्टद्युम्न इतीरितः । धृष्टद्युम्न इति नाम किमर्थमकुर्वन् इत्यत आह– **धृष्टत्वादिति** ।। धृष्टत्वात् धाष्टर्यात् धृष्टः । द्योतनत्वात् प्रकाशमानत्वात् द्युम्नः । धृष्टश्चासौ द्युम्नश्चेति धृष्टद्युम्नः इति नाम प्रापेत्यर्थः । सर्ववेदार्थं भगवत्तत्वं जानातीति सर्ववेदार्थतत्वविवित् ।।९२।।

**अन्वेनं भारती साक्षाद् [४]वेदिमध्यात् समुत्थिता ।**
**प्राणो हि भरतो नाम सर्वस्य भरणाच्छ्रुतः ।।९३।।**

**व्यासतीर्थीया–** भारतीशब्दवाच्यत्वं कथमिति जिज्ञासायां निर्वचनम्– **प्राण इति** ।।९३।।

---

४. '.....हुते हविषि मन्त्रिते । कुमारी चापि पाञ्चाली वेदिमध्यात् समुत्थिता । प्रत्याख्याते पृषत्या च याजके भरतर्षभ । पुनः कुमारी पाञ्चाली सुभगा वेदिमध्यगा । अन्तर्वेद्यां समुद्भूता कन्या सा सुमनोहरा । श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा । मानुषं विग्रहं कृत्वा साक्षाच्छ्रीरिव वर्णिनी । ताम्रतुङ्गनखी सुभ्रूः चारुपीनपयोधरा । नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रधावति । या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि । देवदानवयक्षाणामीप्सिता वरवर्णिनी । तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी । सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रस्य नेष्यति । सुरकार्यमियं काले करिष्यति सुमध्यमा ।। अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम् ।' इत्यादिपर्वणि-१४९.६०-६६ । तथा 'द्रुपदस्य सुता चाहं धृष्टद्युम्नस्य चानुजा । अग्निकुण्डसमुद्भूता नोर्व्यां जातु चराम्यहम् ।।' इति विराटपर्वणि-२२.३९.

**वेदाङ्गतीर्थीया–** साक्षात् समुत्थिता प्रत्यक्षतया समुत्थिता । कथं भारतीनामेत्यतः मुख्यप्राणभार्येति तद्भावं वक्तुं भरतनाम्नो निरुक्तिपूर्वं भारतीशब्दं निर्वक्ति– **प्राणो हीत्यादिना** ।।९३।।

**सत्याभिनवतीर्थीया–** तत्रैव 'प्राणो हि भरतो नाम..' इति श्लोकः । तस्यार्थः- प्राणः सर्वस्य भरणात् भरत इति नाम नाम्ना विशिष्ट इति श्रुतः श्रुतिप्रसिद्धः इत्येतत् हि स्मृतिप्रसिद्धम् । तद्भार्या भरत-नामकमुख्यप्राणभार्या भारतीति नाम नाम्ना विशिष्टा । भारत्याः सरस्वतीशब्दवाच्यत्वे निमित्तमाह– **वेदरूपेति** ।। यतो वेदाभिमानिनी अतः सरस्वतीशब्दवाच्येति । एतेन भरतो नाम इत्येतदनन्वितमिति दूषणं परिहृतम् । नामेति प्रथमा तृतीयादेशः इति विशिष्ट इत्यनयोः शेषः इति च स्वीकृत्य भरत इति नाम्ना विशिष्ट इत्यन्वयस्योक्तत्वात् ।।९३-९४।।

**मधुसूदनीया–** ।। **अन्वेनं भारती साक्षादिति** ।। मुद्गलवचनात् द्रुपदयज्ञकुण्डवेदिमध्यात् समुत्थिता इति भावः । तथाचोक्तम्- 'यस्मात् त्वं मयि निःशङ्का ह्यवक्तव्यं प्रभाषसे । आचरन्ती तपोविघ्नं तस्माच्छृणु वचो मम ।। भविष्यति नृलोकेऽस्मिन् राजपुत्री यशस्विनी । पाञ्चालराजस्य सुता द्रुपदस्य महात्मनः ।। भवितारस्तत्र तव पतयः पञ्च विश्रुताः ।।' इति मुद्गलवचनात् इन्द्रसेनां प्रत्यादिपर्वणि (२१३.८-१०) ।।९३-१०४।।

**वरदराजीया–** एनं धृष्टद्युम्नमनु साक्षाद् भारती न तूपचारेण । साक्षाद्भारतीत्वं निर्वचनेनाह– **प्राणो हीति** ।। सर्वस्य जगतः भरणाद् रक्षणात् प्राणः मुख्यप्राणः भरतो नाम श्रुतः प्रसिद्धः । अतस्तस्य भरतस्य भार्या भारती नाम ।।९३।।

**जनार्दनीया–** साक्षात् समुत्थिता प्रत्यक्षतया समुत्थिता । 'साक्षात् प्रत्यक्षमुख्ययोः' इत्यमरः । कथं भारतीनामेत्यतो मुख्यप्राणभार्यात्वादिति वक्तुं मुख्यप्राणे भरतशब्दं निर्वक्ति– **प्राणो हीत्यादिना** ।। भरणाद्रक्षणात् ।।९३।।

**ताम्रपर्णीया–** साक्षात् भारती न तु वलभद्रे सङ्कर्षणवदन्याविष्टेत्यर्थः ।।९३।।

**चट्टि–** एनं धृष्टद्युम्नं अनु वेदिमध्यात् भारती साक्षात् प्रत्यक्षतया समुत्थिता । 'साक्षात् प्रत्यक्षमुख्ययोः' इत्यमरः । कथं भारतीनामेत्यतो मुख्यप्राणभार्यात्वादिति वक्तुं मुख्यप्राणे भरतशब्दं निर्वक्ति– **प्राणो हीत्यादिना** ।। सर्वस्य जगतः भरणाद्रक्षणात् प्राणो मुख्यप्राणो भरतो नाम भरत इति प्रसिद्धः सन् श्रुतः ।।९३।।

**तद्भार्या भारती नाम वेदरूपा सरस्वती ।**
**शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्तिता ।।९४।।**

**व्यासतीर्थीया–** वेदो जातः, सरस्वती जाता, श्रीर्जातेत्युक्तं व्याचष्टे– **वेदेत्यादिना** ।।९४।।

**वेदाङ्गतीर्थीया–** नामान्तरं चाह– **सरस्वतीति** ।। कुतः वेदरूपा वेदवाचामभिमानित्वत एव सरस्वतीति भावः । क्वचिद् भारती च श्रीरित्युक्तत्वात् श्रीरित्येतदर्थमाह– **शमिति** ।।९४।।

**वादिराजतीर्थीया–**इदानीं पञ्चद्रौपदीस्वरूपं निरूपयितुमारभते–**शंरूपमाश्रिता वायुमित्यादिना** ।। शकारस्याऽवृत्त्या शं सुखरूपं वायुं श्रिता श्रीरित्यर्थः । यद्वा शंरूपेण वायुना रमत इति श्रीः । आश्रितेति तु फलितकथनम् ।।९४।।

**वरदराजीया–** वेदरूपा वेदाभिमानिनी सरस्वती एष्यत्सरस्वती । शं सुखरूपं वायुमाश्रिता अतः श्रीरिति कीर्तिता । अनेन भारतादौ द्रौपद्याः भारतीवेदसरस्वतीशब्दाः प्रयुक्ताः । तत्र तैः शब्दैः एका एव सा उच्यत इति घटना कृता भवति ।।९४।।

**अनन्तभट्टीया–** वेदो जातः सरस्वती जाता श्रीर्जाता इत्युक्तिं घटयति– **वेदेति** ।।९४।।

**लघ्वनन्तभट्टीया–** सरस्वतीति नाम कुत इत्यत आह– **वेदरूपेति** ।।९४।।

**जनार्दनीया–** नामान्तरमाह– **सरस्वतीति** ।। तत्कुतः? यतो वेदरूपा वेदवाचामभिमानिनी । अत एव सरस्वतीति भावः । क्वचित् भारती श्रीरित्युच्यते । तदर्थमाह– **शमिति** ।। शंरूपं सुखरूपम् ।।९४।।

**ताम्रपर्णीया–**सरस्वत्येव द्रौपदी जातेति पौराणिकवचनतात्पर्यमाह–**वेदरूपेति** ।।इदमुक्तं भवति । सरश्शब्दस्तावत् सर्वगतसर्वज्ञबलपूर्णपरमसुखभगवद्वाचकः । तादृशहरिवाचकत्वेन भारती सरस्वती-शब्देनोच्यते । वाचकत्वं च वेदाभिमानित्वेनेति । तदुक्तं ऋग्भाष्ये- 'सरणात् सर्वगत्वेन सर्वज्ञो वा सरो हरिः । सरसः सरतित्वाद्वा तद्वत्येव सरस्वती ।। हरौ गुणास्सरश्शब्दा देवी तु हरिवाचिनी' इति (१.३.१०) । तट्टीकायां च वेदाभिमानित्वाद्धरिवाचिनीत्युक्तम् ।। **शंरूपमास्थितेति** ।। शंरूपे सुखरूपे वायौ रतः श्रीः आश्रितेति तात्पर्यकथनम् । यद्वक्ष्यति ।'शमात्मके रतेर्वायौ श्रीः'(२.१२६) इति । यद्वा शकारस्यावृत्त्या शं सुखरूपं वायुं श्रिता श्रीरित्यर्थः । वायोः 'अज्ञानं तु चतुर्वारं द्विवारं भयमेव च । शोकोऽपि तावान्' (भा.ता-६.९.२४) इत्युक्तदुःखेनाप्यसम्पीडितत्वेन सर्वदा स्वरूप-सुखाविर्भावेन च शंरूपत्वं बोध्यम् ।।९४।।

**भारतश्री–** ग्रन्थान्तरे द्रौपद्यां श्रीशब्दप्रयोगोऽस्ति । तस्याभिप्रायमाह– **शंरूपमिति** ।।९४।।

**चट्टि–** तस्य भरतस्य भार्या भारतीनाम भारतीति प्रसिद्धा । नामान्तरमाह– **सरस्वतीति** ।। तत्कुतः? यतो वेदरूपा वेदवाचामभिमानिनी । तत एव सरस्वती क्वचित् भारती श्रीरित्युच्यते । तदर्थमाह– **शमिति** ।। शंरूपं सुखरूपं वायुमाश्रिता अतः श्रीरित्येव च कीर्तिता । अनेन भारतादौ द्रौपद्यां भारतीवेदसरस्वतीशब्दाः प्रयुक्ताः । तत्र तैः शब्दैः सैव उच्यते इति भावः इति घटना कृता भवति ।।९४।।

**आवेशयुक्ता [1]शच्याश्च श्यामलायास्तथोषसः ।**
**ताश्चेन्द्रधर्मनासत्यसंश्रयाच्छ्रिय ईरिताः ॥९५॥**

**वेदाङ्गतीर्थीया–** सा किंविशिष्टेत्यत आह– **आवेशेति** ॥ किं केवलं भारत्येव श्रीनाम्नीत्याह– **ताश्चेति** ॥९५॥

**वादिराजतीर्थीया–** शचीश्यामलोषस्सु तु श्रितत्वाच्छ्रियः । इन्द्रधर्मनासत्यानां तु योग्यतया सम्बन्धः । संसारेऽपि वायोः सर्वदा वृत्तिरूपसुखानुभवितृत्वात् शंरूपं वायुमित्युक्तम् । गौतमशापेन सहस्राक्षे बलिवलेन स्वर्गात् पलायिते ब्रह्महत्याभयेन कमलनालान्तःप्रविष्टे च इन्द्रे तदभावात् शंशब्देन तदग्रहणम् । ततोऽपि नीचानां यमनासत्यानां तु सुतरां तदभावात् शंशब्देन तदग्रहणम् । भारतीपक्षेऽपि शं श्रितेति स्थिते 'छन्दसि समाने पूर्वलोपः' इति वचनात् पूर्वशकारस्य लोपे श्रीरित्येव शब्दस्वरूपमुर्वरितमिति ज्ञेयम् ॥९५॥

**वरदराजीया–** शच्याः इन्द्रपत्न्याः, श्यामलायाः यमस्य पत्न्याः, उषसः अश्विभार्यायाश्च आवेशैः युक्ता । श्रिय आवेशयुक्ता इति क्वचिदुक्तिस्तां घटयति– **ताश्चेति** ॥ ताः शच्याद्याः यथाक्रमं इन्द्रादिसंश्रया-च्छ्रिय इतीरिताः ॥९५॥

**अनन्तभट्टीया–** श्रिया आवेशयुक्ता इत्युक्तं अन्यथाप्रतीतिं निवारयन् व्याचष्टे– **ताश्चेति** ॥९५॥

**लघ्वनन्तभट्टीया–** ॥ **श्रिय ईरिता इति** ॥ इन्द्रादीनामपि शंरूपत्वादिति भावः ॥९५॥

**जनार्दनीया–** सा किंविशिष्टेत्यत आह– **आवेशेति** ॥ न केवलं भारत्यैव श्रीनाम्नी । किन्तु शच्याद्या अपीत्याह– **ताश्चेति** ॥ ताः शचीश्यामलोषसः इन्द्रयमाश्विसंश्रयाच्छ्रिय ईरिताः ॥९५॥

**ताम्रपर्णीया–** ॥ **आवेशयुक्तेति** ॥ भारत्याः मुख्यभावात् प्राधान्यात् तत्संव्यवहाराच्च अन्यासा-मावेशवचनम् । अत एव सतीष्वन्यासु सा कृष्णा नामत इति तन्मात्रपरामर्शः । वक्ष्यति च 'भारतीदेहनिर्गताम्' (ता.नि-१८.१३४) इति । क्वचित् 'श्रिया युक्ताः' इत्युक्तेः गतिमाह– **ताश्चेति** ॥ 'मुक्तानां पाण्डवानां च अन्तरं किञ्चिदेव हि' (गी.ता.३.१९) इत्युक्तेरिन्द्रादीनामपि शंरूपत्वादिति भावः । यद्वा श्रयन्त इति श्रियः योग्यतयेन्द्रादीनां सम्बन्धः ॥९५॥

**चट्टि–** सा किंविशिष्टेत्यत आह– **आवेशेति** ॥ शच्याः इन्द्रपत्न्याः श्यामलायाः यमपत्न्याः उषसः अश्विभार्यायाश्च आवेशैः युक्ता । न केवलं भारत्यैव श्रीनाम्नी किन्तु शच्याद्या अपीत्याह– **ताश्चेति** ॥ ताः शचीश्यामलोषसश्च इन्द्रधर्मनासत्यसंश्रयाच्छ्रियः ईरिताः ॥९५॥

---

१. 'द्रौपदी त्वथ सञ्जज्ञे शची भागादनिन्दिता । नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी ॥ पद्मायताक्षी सुश्रोणी स्वसिताञ्चितमूर्धजा ॥ सर्वलक्षणसम्पन्ना वैदूर्यमणिसन्निभा ॥' आदिपर्वणि-६८.१५७-१५९.

**सा कृष्णा नामतश्चाऽसीदुत्कृष्टत्वाद्धि योषिताम् ।**
**कृष्णा सा [१]वर्णतश्चाऽसीदुत्कृष्टानन्दिनी च सा ॥९६॥**

**वेदाङ्गतीर्थीया–** भारत्या अवतारनामार्थमाह– **सेति** ॥ कृषृशब्दस्य उत्कृष्टवाचकत्वात् णशब्दस्यानन्दवाचकत्वात् उत्कृष्टानन्दिनीत्वात् कृष्णेत्युक्ता ॥९६॥

**वादिराजतीर्थीया–** योषितां मध्ये उत्कृष्टत्वात् कृष्णा । निरुक्तत्वात् सवर्णत्वात् टकारस्य णकारः, निरुक्तत्वादेव उत्पदलोपश्चेति भावेनोक्तम्– **सा कृष्णा नामतश्चासीदुत्कृष्टत्वाद्धि योषितामिति** ॥ वर्णतः कृष्णेति तु स्पष्टम् । 'णश्च निर्वृतिवाचकः' इति वचनात् उत्कृष्टं णं सुखं यस्याः सा कृष्णेति च भावेनोक्तम्– **उत्कृष्टानन्दिनी च सेति** ॥ एवं च भारती त्रेधापि कृष्णापदवाच्या । इतरासां तु 'कृष्णा सा वर्णतश्चासीत्' इति वदता ग्रन्थकारेणैव वर्णतः कृष्णाशब्दवाच्यत्वं उक्तप्रायमिति ज्ञेयम् ॥९६-९७॥

**सत्याभिनवतीर्थीया–** तत्रैव 'सा कृष्णा नामतश्च..' इति श्लोकः । तस्यार्थः:- सा द्रौपदी कृष्णेति नामतः नाम्ना विशिष्टा आसीत् । द्रौपद्याः कृष्णेति नामवत्त्वे निमित्तद्वयमाह– **उत्कृष्टत्वादिति** ॥ चशब्दौ परस्परसमुच्चये । योषितां मध्ये उत्कृष्टत्वाच्च वर्णतश्च कृष्णवर्णाच्च कृष्णेति नाम्ना विशिष्टा । कृष्णेति नामवत्त्वे निमित्तद्वयान्तरमाह– **सा कृष्णेति** ॥ यतः सा प्रसिद्धा पूर्वप्रकृता द्रौपदी कृष्णा कृष्णप्रिया उत्कृष्टानन्दिनी च आसीत् । अतः कृष्णेति नाम्ना विशिष्टा इत्येतत् हि प्रमाणप्रसिद्धमिति । एतेन 'कृष्णा नामतः' इत्येतदनन्वितमिति दूषणं परास्तम् । विशिष्टेत्यध्याहृताभ्यामन्वयस्योक्तत्वात् । एतेनैव 'कृष्णा वर्णतः' इत्यस्य किं वर्णतः कृष्णा कृष्णवर्णेत्यर्थः । किं वा वर्णतः कृष्णवर्णतः कृष्णा कृष्णेति नामवतीत्यर्थः । नाद्यः । वर्णतः इत्यस्य वैय्यर्थ्यात् । न द्वितीयः । 'वर्णतः' इत्यस्य कृष्णा नामतः इत्यनेनैवान्वयसम्भवात् कृष्णेत्यस्य वैय्यर्थ्यप्रसङ्गादिति दूषणं परिहृतम् । परमेश्वरवाचककृष्णशब्दात् मत्वर्थत्वमङ्गीकृत्य प्रियत्वेन कृष्णः अस्या अस्तीत्यर्थः कृष्णेत्यनेनोच्यत इत्यभ्युपगमात् ॥९६॥

**वरदराजीया–** सा द्रौपदी च नामतः कृष्णा आसीत् । कृष्णेति नामवती बभूवेत्यर्थः । तस्यां कृष्णाशब्दं त्रेधा निर्वक्ति– **उत्कृष्टत्वादिति** ॥ योषितां मध्ये उत्कृष्टत्वात् कृष्णा, वर्णतः कृष्णा कृष्णवर्णा वा आसीत् । उत्कृष्टानन्दिनी उत्कृष्टानन्दवती यतोऽतश्च कृष्णेत्यर्थः ॥९६॥

**अनन्तभट्टीया–** योषितां मध्ये उत्कृष्टत्वात्, वर्णतः, उत्कृष्टानन्दवत्त्वाच्च एवं त्रिभिर्निमित्तैः नामतः सा कृष्णासीदित्यर्थः ॥९६॥

**लघ्वनन्तभट्टीया–** ॥ **उत्कृष्टत्वाच्चेति** ॥ चरतेर्विचरणार्थकत्ववत् कृषिरुत्कर्षवाची । उपसर्गस्य धात्वर्थव्यञ्जकत्वात् । अत एव भगवान् 'ज्योतिश्चरणाभिधानात्' (ब्र.सू.१.१.२४) इत्याहेति भावः ॥

---

१. 'कृष्णेत्येवाभवत् कन्या कृष्णाभूत् सा हि वर्णतः ।' आदिपर्वणि-१४९.७२.

**जनार्दनीया–** भारत्या अवतारनामार्थमाह– **सेति** ।। सा द्रौपदी । योषितां मध्ये उत्कृष्टत्वात् नामतः, कृष्णवर्णतश्च कृष्णेत्यासीत् । 'उत्कृष्टानन्दिनी' इति हेतुगर्भविशेषणम् । कृष्शब्दस्य उत्कृष्टत्वात्, णशब्दस्य आनन्दवाचकत्वात् नाम्ना कृष्णेत्यासीत् ।।९६।।

**ताम्रपर्णीया–** ।। **उत्कृष्टत्वाच्चेति** ।। चरतेर्विचरणाभिधायकत्ववत् कृषिरुत्कर्षवाची । उपसर्गस्य धात्वर्थव्यञ्जकत्वात् । अत एव भगवान् 'ज्योतिश्चरणाभिधानात्' इत्याहेति भावः । केचित्तु- 'उत्कृष्टत्वात् कृष्णा । निरुक्तत्वात् सवर्णत्वाच्च टकारस्य णकारः । निरुक्तत्वादेव उत्पदलोपश्चेत्युपसर्गस्य धात्वर्थ-व्यञ्जकत्वं नास्तीति पक्षानुसारेण' आहुः ।। **उत्कृष्टानन्दिनीति** ।। कृषिरुत्कर्षवाची णश्च निर्वृतिवाचकः इति भावः ।।९६।।

**चट्टि–** भारत्या अवतारनामार्थमाह– **सेति** ।। सा योषितां मध्ये उत्कृष्टत्वात् नामतः कृष्णेत्यासीत् । कृष्णवर्णतश्च कृष्णेत्यासीत् । 'उत्कृष्टानन्दिनी' इति हेतुगर्भविशेषणम् । कृष्शब्दस्य उत्कर्षत्वात्, णशब्दस्य आनन्दवाचकत्वात् नाम्ना कृष्णेत्यासीत् ।।९६।।

**उत्पत्तितश्च सर्वज्ञा सर्वाभरणभूषिता ।**
**सम्प्राप्तयौवनैवाऽसीदजरा लोकसुन्दरी[1] ।**
**[2]उमांशयुक्ताऽतितरां[3] सर्वलक्षणसंयुता[4] ।।९७।।**

**वेदाङ्गतीर्थीया–** शच्यादिभ्यः अतितरां सर्वव्यवहारेषु भारत्या सहावस्थानादिति भावः ।।९७।।

**वादिराजतीर्थीया–** 'उमांशयुक्ताऽतितराम्' इत्यत्र अतितरामित्यस्य सर्वलक्षणसंयुतेत्युत्तरवाक्येन सम्बन्धः ।।९७।।

---

१. 'स्थिता राजकुले नार्यो याश्चेमा मम वेश्मनि । त्वामेवैकां निरीक्षन्ते विस्मयाद्वरवर्णिनी ।। वृक्षांश्चोपस्थितान् पश्य य इमे मम वेश्मनि । विनमन्ते हि त्वां दृष्ट्वा पुमांसं कं न लोभयेः ।। बिभर्षि परमं रूपं अतिमानुषमद्भुतम् । तिर्यग्योनिगताश्चापि निरीक्षन्ते सविस्मयाः । तव रूपमनिन्द्याङ्गि किं पुनर्मानवा भुवि ।।' इति विराटपर्वणि-१४.५६-५८.

२. 'उमापि च जगद्धात्री द्रुपदस्य महीभुजः । यजतो वह्निकुण्डाच्च प्रादुश्चक्रेऽतिसुन्दरी ।।' इति स्कान्दे काशीखण्डे ४९.४.

३. 'उमांशयुक्ता नितराम्' इति वरदराजीय-जनार्दनीय-चट्टीपाठः ।

४. 'गूढगुल्फा समानोरुस्त्रिगम्भीरा षडुन्नता । स्निग्धा पञ्चसु रक्तेषु हंसगद्गदभाषिणी ।। सुकेशी सुस्वरा श्यामा पीनश्रोणिपयोधरा । अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ।। कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना ।।' इति विराटपर्वणि-१४.२९-३१.

**वरदराजीया–** उत्पत्तित एव सर्वज्ञा । उत्पत्तित इति सर्वत्र सम्बध्यते । नितरां[१] शच्याद्यपेक्षया अतिशयनोमांशयुक्ता ।।९७।।

**भावविवृतिः–** उमांशयुक्ता, व्यवहारेष्विति शेषः । 'संयुक्ता व्यवहारेषु' (१३६) इति वक्ष्यमाणत्वात् । अतितरां सर्वलक्षणसंयुता सम्यग्द्वात्रिंशल्लक्षणोपेता इत्यर्थः ।।९७-११३।।

**अनन्तभट्टीया–** अयोनिजत्वात् अजरा ।। **उमांशेति** ।। शच्याद्यपेक्षया उमांशावेशो अतिशयेन वर्तत इत्यर्थः ।।९७।।

**जनार्दनीया–** उत्पत्तित एवेति सर्वत्र सम्बध्यते । उमैव कृष्णेत्युक्तेर्गतिमाह– **उमेति** ।। शच्यादिभ्यो नितरां उमया सह सर्वव्यवहारेषु भारत्या अवस्थानादिति भावः ।।९७।।

**ताम्रपर्णीया–** अजरा कदापि जरारहिता ।। **उमांशयुक्तातितरामिति** ।। शच्यादिभ्योऽतिशयेन उमासन्निधियुक्ता अत एव 'भारत्यैव च पार्वती । संयुक्ता व्यवहारेषु' इति वक्ष्यतीति ज्ञेयम् । 'अतितरां सर्वलक्षणसंयुता' इत्युत्तरान्वय इत्यप्याहुः ।।९७।।

**भारतश्री–** अतितरां सर्वलक्षणसंयुता पूर्णसर्वलक्षणसंयुता । अथवा इतरापेक्षया अतितरां व्यवहारादिषु पार्वत्यंशयुक्तेति । 'भारत्यैव तु पार्वती' इत्युत्तरत्रोक्तेः ।।९७।।

**चट्टि–** उत्पत्तित एवेति सर्वत्र सम्बध्यते । उत्पत्तित एव सर्वज्ञा सर्वाभरणैश्च भूषिता सम्प्राप्तयौवना अजरा जरारहिता लोकेषु सुन्दरी चासीत् । उमैव कृष्णेत्युक्तेर्गतिमाह । नितरां शच्याद्यपेक्षया अतिशयेन उमांशयुक्ता उमया सह सर्वव्यवहारेषु भारत्या सह अवस्थानादिति भावः । सर्वलक्षणसंयुता च ।।९७।।

**पूर्वं ह्युमा च देव्यस्ताः कदाचिद् भर्तृभिर्युताः ।**
**विलासं दर्शयामासुर्ब्रह्मणः पश्यतोऽधिकम् ।।९८।।**

**व्यासतीर्थीया–** ब्रह्मणः पश्यतः इत्यनादरे षष्ठी । पश्यन्तं ब्रह्माणमनादृत्येत्यर्थः ।।९८।।

**वेदाङ्गतीर्थीया–** भारत्यां उमावेशे कारणमाह– **पूर्वमित्यादिना** ।। अधिकं विलासं दर्शयामासुः।।९८।।

**वादिराजतीर्थीया–** 'उमा च देव्यस्ताः' इत्यत्र शचीश्यामलोषारूपाः देव्यः न तु भारती ।।९८।।

**वरदराजीया–** द्रौपद्या उमावेशयुक्तत्वे कारणमाख्यायिकामाह– **पूर्वमित्यादिना** ।। पूर्वं पुरा उमाशच्याद्याः पूर्वोक्ताः चतस्रः देव्यश्च भर्तृभिर्युक्ताः सत्यः विलासं हावभावादिविलासं दर्शयामासुः । ब्रह्मणः पश्यत इत्यानादरे षष्ठी । पश्यन्तं ब्रह्माणं अनादृत्येत्यर्थः ।।९८।।

**अनन्तभट्टीया–** भारत्या जनने कारणमाह– **पूर्वमित्यादिना** ।। ब्रह्मणः इत्यनादरे षष्ठी । ब्रह्माणमनादृत्येत्यर्थः ।।९८।।

---

१. 'अतितराम्' इति क्वचित् कोशेषु ।

**जनार्दनीया–** भारत्यां उमावेशे कारणमाह– **पूर्वमित्यादिना** ।। ताः देव्यः शच्याद्याः ब्रह्मणः पश्यतः सतः यदा अधिकं विलासं दर्शयामासुः ।।९८।।

**ताम्रपर्णीया–** शच्याद्यावेशे नितरामुमांशयोगे च निमित्तमाह– **पूर्वमित्यादिना** ।। ब्रह्मणः पश्यत इत्यनादरे षष्ठी । पश्यन्तं ब्रह्माणं अनादृत्येति ।।९८-२०१।।

**भारतश्री–** उमाद्यावेशकारणमाह– **पूर्वमित्यादिना** ।। ब्रह्मणः इत्यनादरे षष्ठी । पश्यन्तं ब्रह्माण-मनादृत्येत्यर्थः ।।९८।।

**चट्टि–** भारत्यां उमाद्यावेशे कारणमाह– **पूर्वमित्यादिना** ।। पूर्वं पुरा उमा च ताः देव्यः शच्याद्याः तिस्रश्च कदाचित् भर्तृभिः युतास्सत्यः ब्रह्मणः पश्यतः सतः यदा अधिकं विलासं दर्शयामासुः ।।९८।।

**शशाप तास्तदा ब्रह्मा मानुषीं योनिमाप्स्यथ ।**
**तत्रान्यगाश्च भवतेत्येवं शप्ताः सुराङ्गनाः ।।९९।।**

**व्यासतीर्थीया–** अन्यान् गच्छन्तीत्यन्यगाः तासां भावः अन्यगात्वम् ।।९९-१०१।।

**वेदाङ्गतीर्थीया–** तदा ब्रह्मा ताः शशाप । तत्र मानुषजन्मनि । स्वपतेरन्यगाः ।।९९।।

**वादिराजतीर्थीया–** महासभायां स्वैरिणीवदाचरणात् 'तत्रान्यगाश्च भवत' इत्युक्तम् । अन्यान् गच्छन्तीति अन्यगाः । परपुरुषस्पर्शमात्रवत्य इत्यर्थः । न तु तैः सह रन्तव्यमिति शापः । तथा सति स्पष्टमन्यरमण्यो भवतेत्येव वदेत् । अत एव 'मारुतादन्यं न स्पृशेम' इति वदिष्यन्ति । 'अदृश्यत्वमसंस्पर्शो ह्यसम्भाषणमेव च' (ता.नि-११.४१) इति वचनात् मानुषसंस्पर्शोऽपि देवानां महादोषः ।।९९।।

**वरदराजीया–** यदा विलासं दर्शयामासुः । तदा ब्रह्मा ताः देवीः उमाद्याः शशाप शप्तवान् । किमिति? मानुषीं तनुं मानुषदेहं आप्स्यथ प्राप्ता भविष्यथ । तत्र पूर्वदत्तशापान्तरप्रयुक्तमानुषदेहे अन्यगाश्च अन्यगामिन्यो अन्यपुरुषगामिन्यो भवत इति ।।९९।।

**अनन्तभट्टीया–** आप्स्यथ प्राप्नुत । अन्यपुरुषगामिन्यः । सर्वेष्वपि जन्मसु अन्यगात्वनियमो नास्ति ।।९९।।

**जनार्दनीया–** तदा ब्रह्मा इति शशाप । मानुषीं योनिं आप्स्यथ आप्नुत । तत्र मनुष्यजन्मनि अन्यगाः अन्यपुरुषगामिन्यश्च भवतेति शप्ताः ।।९९।।

**ताम्रपर्णीया–** तत्र मानुषजन्मनि । केचित्तु– 'तत्र वक्ष्यमाणशापान्तरप्रयुक्तमानुषजन्मसु' इत्यर्थ-माहुः । अयं च शापः इन्द्रसेनादेहविषये । तत्रैवान्यगात्वप्रतीतेः ।।९९-१०४।।

**भारतश्री–** तत्र मनुष्ययोनौ ।।९९।।

**चट्टि–** तदा ब्रह्मा ता देवीः उमाद्या इति शशाप शप्तवान् । किमिति? मानुषीं योनिं आप्स्यथ आप्नुत । तत्र मनुष्यजन्मनि । अन्यगाः अन्यपुरुषगामिन्यश्च भवतेति शप्ताः । एवं उक्तरीत्या शापं प्राप्ताः शप्ताः सुराणां रुद्रादीनां अङ्गनाः उमाद्याः ।।९९।।

**विचार्य भारतीमेत्य सर्वमस्यै निवेद्य च ।**
**सहस्रवत्सरं चैनां शुश्रूषित्वा बभाषिरे ।।१००।।**

**वेदाङ्गतीर्थीया–** अन्यगात्वे च कं गच्छाम इति विचार्य, वायुमेव गमिष्याम इति निश्चित्य भारत्याः अनुज्ञां गृहीतुं भारतीमेत्य । सर्वव्यापारं शापप्रकारं च ।।१००-१०१ ।।

**वरदराजीया–** एवमुक्तरीत्या शप्ताः शापं प्राप्ताः सुराणां रुद्रादीनां अङ्गनाः उमाद्याः विचार्य किं कर्तव्यमिति विचार्य भारतीं देवीमेत्य प्राप्य अस्यै भारत्यै सर्वं वृत्तान्तं निवेद्य विज्ञाप्य सहस्रवत्सरम् । 'कालाध्वनोरत्यन्तसंयोगे' (सि.कौ.५८८) इति द्वितीया । सहस्रवर्षपर्यन्तं एनां भारतीं शुश्रूषित्वा सेवित्वा बभाषिरे ऊचिरे ।।१००।।

**जनार्दनीया–** वयमन्यगात्वे कं उत्तमं पुरुषं गच्छाम इति विचार्य, वायुमेव गमिष्याम इति निश्चित्य, भारतीमेत्य, अस्यै सर्वं स्वापराधं शापप्रकारं च निवेद्य विज्ञाप्य, शुश्रूषित्वा परिचर्यां कृत्वा ।।१००।।

**भारतश्री–** ।। **विचार्येति** ।। द्विवारं ब्रह्मणा शप्ताः तेनास्माकं चतुर्जन्म भवेद् भूमौ । तत्रैकस्मिन् जन्मनि अन्यगात्वं च तत्र उत्तमपुरुषं गच्छामेति विचार्य ।।१००।।

**भावचन्द्रिका–** ।। **विचार्येति** ।। 'पत्युरुत्तमसङ्गेन न दोषो योषितां क्वचित् । तस्माद्देवोत्तमो वायुः तस्य पत्नीं विशामहे ।।' इत्युक्तप्रकारेण ।। १०० ।।

**चट्टि–** वयमन्यगात्वे कं उत्तमं पुरुषं गच्छाम इति विचार्य, वायुमेव गमिष्याम इति निश्चित्य, भारतीमेत्य, अस्यै सर्वं स्वापराधं शापप्रकारं च निवेद्य विज्ञाप्य, सहस्रवत्सरम् । कालाध्वनोरत्यन्तसंयोगे द्वितीया । सहस्रवर्षपर्यन्तं एनां भारतीं शुश्रूषित्वा परिचर्यां कृत्वा बभाषिरे ऊचिरे ।

''वादिराजतीर्थानां व्याख्यानम्– 'उमा च देव्यः ताः' इत्यत्र देव्यः शचीश्यामलोषारूपाः न तु भारती । महत्सभायां स्वैरिणीवदाचरणात् 'तत्रान्यगाश्च भवत' इत्युक्तम् । अन्यान् गच्छन्ति इति अन्यगाः । परपुरुषस्पर्शमात्रवत्यः इत्यर्थः । न तु तैः सह रन्तव्यमिति शापः । तथा सति स्पष्टं अन्यरमण्यो भवतेत्येव वदेत् । अत एव 'मारुतादन्यं न स्पृशेम' इति वदिष्यन्ति । 'अदृश्यत्वमसंस्पर्शो ह्यसम्भाषणमेव च' इति वचनात् मानुषसंस्पर्शोऽपि देवानां महादोषः । स्नुषास्थानीयानां साक्षाद्वायुपत्न्या त्वया सह स्थितानामस्माकं कदाचित् त्वया सह रममाणेन वायुना स्पर्शोऽपि पुत्र्याः पितुः स्पर्शवत् न दोष इति भावेनाहुः– मारुतादन्यं न स्पृशेम कथञ्चनेति ।। 'एकदेहा मानुषत्वम्' इत्यत्र एकदेहतया

त्रिशो मद्धश्चनार्थमागतत्वात् त्रिशः ऐक्येन मानुषत्वमाप्स्यथेत्येव शापो न तु अत्राप्यन्यगामित्वशापः इति विज्ञेयः'' इति ।। १०० ।।

**देवि नो मानुषं प्राप्यमन्यगात्वं च सर्वथा ।**
**तथाऽपि[1] मारुतादन्यं न स्पृशेम कथञ्चन ।।१०१।।**

**वादिराजतीर्थीया–** सुधास्थानीयानां साक्षाद्वायुपत्न्या त्वया सह स्थितानामस्माकं कदाचित् त्वया सह रममाणेन वायुना स्पर्शोऽपि पुत्र्याः पितुः स्पर्शवत् न दोष इति भावेनाहुः– **मारुतादन्यं न स्पृशेम कथञ्चनेति** ।।१०१।।

**वरदराजीया–** किमिति? हे देवि! नोऽस्माकं मानुषं जन्म प्राप्यम् । शापान्तरप्रयुक्तजन्मान्तरे अन्यगात्वं च सर्वथा प्राप्यम् । सर्वथा इत्यनेन ब्रह्मशापस्य अनिवार्यत्वं दर्शितम् । तथा तत्रापि मारुतात् मुख्यप्राणात् अन्यं पुरुषं कथञ्चन शापेनापि न स्पृशेम नानुभवेम । मारुताख्यान्यगामित्वेन ब्रह्मशापस्य अन्यथासिद्धत्वादिति भावः ।।१०१।।

**अनन्तभट्टीया–** स्पृशेम अनुभवेम ।।१०१।।

**जनार्दनीया–** देवि! नोऽस्माभिः मानुषं प्राप्यम् । अन्यगात्वं च सर्वथा प्राप्यम् । सर्वथेत्यनेन शापस्यानिवार्यत्वमुक्तम् । न स्पृशेम न व्रजामः ।।१०१।।

**भारतश्री–** सर्वथा अपरिहार्यम् ।।१०१।।

**चट्टि–** हे देवि! नोऽस्माभिः । मानुषं जन्म अन्यगात्वं च सर्वथा प्राप्यम् । सर्वथेत्यनेन ब्रह्मशापस्यानिवार्यत्वं दर्शितम् । तत्रापि मारुतादन्यं पुरुषं कथञ्चन शापेनापि न स्पृशेम न व्रजेम ।।१०१।।

**ब्रह्मणैव च[2] शप्ताः स्मः पूर्वं चान्यत्र लीलया ।**
**एकदेहत्वमाप्यैनं यदा वञ्चयितुं गताः ।।१०२।।**

**व्यासतीर्थीया–** अन्यत्र च शप्ता स्मः ।।१०२-१०६।।

**वेदाङ्गतीर्थीया–** पूर्वमन्यत्र शप्ताः स्मः ।।१०२।।

**वादिराजतीर्थीया–** 'पूर्वं चान्यत्र लीलया' इत्यत्र पूर्वं अन्यगामित्वशापात् पूर्वमित्यर्थः।।१०२-३।।

---

१. 'तत्रापि' इति वरदराजीयचट्टीटिप्पण्योः पाठः ।

२. 'ब्रह्मणैव हि' इति ताम्रपर्णीयपाठः ।

**मधुसूदनीया–** ।। **ब्रह्मणैवेति** ।। पूर्वं एतच्छापात् पूर्वमपि अन्यत्र स्थलान्तरे ब्रह्मणैव शप्ताः । स्थलान्तरे पूर्वं किमर्थं शापमदादित्यत आह– ***लीलयैकदेहत्वमिति*** ।।१०२-१०६।।

**वरदराजीया–** अन्यगात्वं च सर्वथा इत्येतत् स्पष्टयितुं एकेनैव जन्मनालम् । किन्तु कालान्तरीयतच्छापान्तरेण पुनर्जन्मत्रयं च प्राप्यमस्तीत्याहुः इत्याह– **ब्रह्मणैवेत्यादिना** ।। पूर्वञ्च पुरापि ब्रह्मणैव हि शप्ताः स्मः । कुतः? यदा लीलया विनोदेन एकदेहत्वं प्राप्य एकस्मिन्नेव देहे स्थित्वा एनं ब्रह्माणं एकैवाहमिति वञ्चयितुं [1]प्रतारयितुं गताः प्राप्ताः । तदा, शशाप इति शेषः ।।१०२।।

**जनार्दनीया–** पूर्वं अन्यत्र स्थलान्तरे । इति शप्ताः स्मः ।।१०२।।

**ताम्रपर्णीया–** ब्रह्मणैव सर्वशिक्षकेन साक्षाद् ब्रह्मणैव ।। **हीति** ।। हिशब्दो हेतौ । यस्माद् ब्रह्मणा शप्ता स्मः । विलासप्रदर्शनेन शप्ताः तस्माद्देवि नो मानुषं प्राप्यम् । अस्मिन् मानुषजन्मनि अन्यगात्वं चावर्जनीयतया प्राप्यमित्यर्थः । केचित्तु- 'अन्यगात्वं च शापान्तरप्रयुक्तदेहेषु अन्यगात्वं च' इत्यर्थमाहुः ।। **पूर्वं चेति** ।। विलासप्रदर्शनेन अन्यगात्वशापादानात् पूर्वं यदा वयं लीलया अन्यत्र स्थानान्तरे एकदेहत्वमाप्यैनं ब्रह्माणमयं जानाति न वेति त्रिशः त्रिवारमागताः । तदा हे उद्धताः स्त्रियः! यत एकदेहाः त्रिशो मद्वञ्चनाय इताः प्राप्ताः अत एकदेहास्त्रिशो मानुषत्वमाप्स्यथ इति तेन ब्रह्मणैवोदिताः । शप्ताः स्म इति योजना ।।१०२-१०६ ।।

**भारतश्री–** एनं ब्रह्माणम् । पूर्वं एतच्छापात् पूर्वम् । अन्यत्र स्थलान्तरे ।।१०२ ।।

**भावचन्द्रिका–** वञ्चयितुं जानाति न वेति परीक्षार्थम् । ऋजुत्वान्निर्दोषस्य वायोः कथं परस्त्रीगामित्वमिति चेन्न । स्त्रीणां पतिसमपुरुषगमने दोष उक्तो माद्रीप्रसङ्गे । नीचपुरुषगमने महान् दोषो वक्ष्यति 'अधोऽधः' इति । एवं पत्युत्तमान्यस्याप्रसक्तेः वायुरेव तादृश इति भारतीद्वारा वायुप्रार्थनमेव चक्रुः । यद्यपि शच्याद्यपेक्षया रुद्रादिः पत्यधिकोऽस्ति । तथापि एकदेहे अन्यगामित्वप्राप्त्यापत्त्या पार्वतीसौकर्यार्थं वायुप्रार्थनमिति । एवञ्चानन्यगतिकाभिः प्रार्थितो अनुग्रहार्थं प्रवृत्त इति परस्त्रीगामित्वकामनापूर्वकप्रवृत्तिरूपदोषो नास्तीति ज्ञेयम् । यथा अनन्यगतिकैः प्रार्थितस्य क्षत्रियसन्ताने प्रवृत्तस्य ब्राह्मणस्य दोषो न भवति न वायोर्नकुलस्य वा[2] । एवं प्रकृतेऽपि । अत एव हिडिम्बीसन्तानं वक्ष्यति आचार्य इति 'प्रतिवासरं कन्यैव बभूव' । 'नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती' इति भारतवचनात् (आदिपर्वणि-१८४.७) । एतत् द्वितीयशापनिमित्तं आद्यं जन्म तत्रान्यगामित्वशापाभावात् । पतियोगवरस्य पूर्वमसम्पादितत्वात् तत्तत्पतीनां भूमौ स्वभावतस्तत्काले अनुत्पत्तेश्च ।।१०२।।

---

१. 'प्रलोभयितुम्' इति क्वचित् ।

२. इदं वाक्यमस्पष्टम् ।

**चट्टि—** अन्यगात्वं च सर्वथेत्येतत्स्पष्टयितुं एकमेव जन्मनि भवति । किन्तु तदीयतच्छापान्तरेण पुनर्जन्मत्रयं च प्राप्यमस्तीत्याहुरित्याह— **ब्रह्मणैवेत्यादिना** ।। पूर्वं च तच्छापात् पूर्वमपि अन्यत्र स्थलान्तरे ब्रह्मणैव इति शप्ताः स्मः । स्थालान्तरे पूर्वं किमर्थं शापमदादित्यत आह— **लीलयेति** ।। यदा लीलया विनोदेनैकदेहत्वमाप्य प्राप्य एकदेहे स्थित्वा एनं ब्रह्माणं एकैवाहमिति वञ्चयितुं गताः प्राप्ताः । तदा, शशापेति शेषः ।।१०२।।

**एकदेहा मानुषत्वमाप्स्यथ त्रिश उद्धताः ।**
**त्रिशो मद्वञ्चनायेता इति तेनोदिता वयम् ।।१०३।।**

**वेदाङ्गतीर्थीया—** त्रिशः मद्वञ्चनाय इताः भवत्यः त्रिशः एकदेहाः मानुषत्वमाप्स्यथ ।।१०३।।

**वादिराजतीर्थीया—** 'एकदेहा मानुषत्वम्' इत्यत्र एकदेहतया त्रिशो मद्वञ्चनार्थमागतत्वात् त्रिशो देहैक्येन मानुषत्वमवाप्स्यथेत्येव शापः । न त्वत्राप्यन्यगामित्वशाप इति ज्ञेयम् । नन्वेकदेहत्वजन्मसु अन्यगामित्वशापाभावात् कुतो भारतीप्रार्थनम् । चतुर्थजन्मनि पश्चात्तनान्यगामित्वशापे सत्यपि एकदेहत्वशापस्य त्रिश इति निर्णीतत्वेन कुतो देहैक्यमिति चेत् । सत्यम् । शापाभावेऽपि देवस्त्रीत्वेन अतिमनोहरतनुत्वात् रावणादिवत् कामी कोऽपि मानवः अस्मान् बलात् स्पृक्ष्यतीति भिया भारतीप्रार्थनम् । चतुर्थजन्मनि स्वार्थं भारत्या वायोश्च बहुमानुषदेहेषु मानुषत्वप्रापणमनुचितमिति भीत्या स्वयमेव भारत्या सह पूर्वाभ्यस्तैकदेहत्वं सम्पाद्य जाताः । यद्वा एकदेहे स्थित्वैव पतिप्रार्थनात् शिवोऽपि एकदेहतयैव स्वस्वपतिप्राप्तिवरं ददौ । अतोऽपि द्रौपदीजन्मनि पश्चानामेकदेहत्वमिति ज्ञेयम् । शिवेन ब्रह्मशापं विमोच्य स्वपतिसंयोगवरे दत्ते सति पुनरन्यगामित्वशङ्काभावेऽपि 'अतस्त्वयैकदेहत्व-मिच्छामो देवि जन्मसु । चतुर्ष्वपि' इति प्रागुक्तसत्यसंरक्षणाय मोहनरूपत्वेन कस्यचित् कामिनः स्पर्शशङ्कानिवारणार्थं च एकस्मिन्नेव देहे भारत्या सहैव चतुर्वारं जन्मेति सर्वत्र समाधानसम्भवात् । ब्रह्मशापस्य विमोचनाभावे कुपितो ब्रह्मा शिवस्य कुतः शापं दद्यात् । विरुद्धफलं च कथमेकत्र स्यादिति युक्तिरप्यनुसन्धेया । तस्मादुक्तविधयैव समाधानमिति ज्ञेयम् ।।१०३-१०८।।

**वरदराजीया—** किमिति? एकदेहाः एकस्मिन्नेव देहे स्थिताः सत्यो अन्यत्र स्थलान्तरे त्रिशः त्रिवारं मानुषत्वं मानुषजन्मेति यावत् । आप्स्यथ । 'त्रिवारं मानुषत्वं प्राप्यम्' इत्यत्र ब्रह्मा कारणमाह इत्याहुरित्याह— **उद्धता इति** ।। यतः उद्धता सत्यः त्रिशः त्रिवारं मद्वञ्चनाय मां वञ्चयितुमिताः प्राप्ताः अतः त्रिशो मानुषत्वं प्राप्स्यथेत्यर्थः । इत्युक्तप्रकारेण तेन ब्रह्मणोदिताः शप्ताः वयं यतः अतः हे देवि! त्वया सह चतुर्ष्वपि जन्मसु एकदेहत्वं त्वया सह एकदेहविशिष्टत्वेनोत्पत्तुमिच्छामः ।।१०३।।

**जनार्दनीया—** हे उद्धताः! त्रिशः त्रिवारं मद्वञ्चनाय इताः प्राप्ताः । त्रिशः त्रिवारं एकदेहाः सत्यो मानुषत्वं आप्स्यथ आप्नुत इति तेन ब्रह्मणा वयं उदिताः ।।१०३।।

**भारतश्री–** शापप्रकारमाह– **एकेति** ।।१०३।।

**चट्टि–** किमिति? हे उद्धताः! त्रिशः त्रिवारं मद्वञ्चनाय इताः प्राप्ताः । त्रिशः त्रिवारं एकदेहाः सत्यो मानुषत्वं आप्स्यथ आप्नुत इति तेन ब्रह्मणा वयं उदिताः ।।१०३।।

**अतस्त्वयैकदेहत्वमिच्छामो देवि जन्मसु ।**
**चतुर्ष्वपि यतोऽस्माकं शापद्वयनिमित्ततः ।।१०४।।**

**वेदाङ्गतीर्थीया–** अस्माकं शापद्वयनिमित्ततः । एकदेहाः त्रिशो मानुषत्वमाप्स्यथ इत्येकः शापः । तस्मिन् शापे जन्मत्रयम् । मानुषीं योनिमाप्स्यथ । अन्यगाश्च भवत इत्येकः शापः । तस्मिन् शापे एकं जन्म । एवं शापद्वयनिमित्ततः भूमौ चतुर्जन्म भवेत् यतः अतः हे देवीति सम्बन्धः ।।१०४।।

**वरदराजीया–** कथं जन्मचतुष्टयं भवतीनामित्यतो विज्ञापयन्तीत्याह– **यतोऽस्माकमिति** ।। शापद्वयनिमित्ततः वञ्चनस्थले जन्मत्रयप्रापकात् एकस्माच्छापात्, विलासप्रदर्शनस्थले एकजन्मप्रापकात् एकस्माच्छापात् इति शापद्वयाख्यान्निमित्तात् भूमौ मानुषे चतुर्वारं जन्म भवेत् ।।१०४।।

**भावविवृतिः–** 'अतस्त्वयैकदेहत्व..भवेद्भूमौ' इत्यत्र हे देवि! यतो यस्मात् अस्माकं शापद्वयनिमित्ततः भूमौ चतुर्वारं जन्म भवेत् । अतस्तेषु चतुर्षु जन्मसु मध्ये आद्यशापनिमित्तकत्रिजन्मस्वपि त्वया सहैकदेहत्वमिच्छाम इत्यन्वयः ।।१०४-११७।।

**अनन्तभट्टीया–** ।। **शापद्वयेति** ।। एकदेहत्वेन कृतेषु त्रिषु वञ्चनेषु अन्तिमवञ्चने दत्त एकः शापः, पृथग्देहत्वेन वञ्चने एकः शापः । एवं शापद्वयं तदेव निमित्तं तस्माच्छापद्वयनिमित्तः यतः भूमौ चतुः चतुर्वारं जन्म भवेदित्यन्वयः ।।१०४।।

**जनार्दनीया–** अस्माकं शापद्वयनिमित्ततः । एकदेहाः त्रिशो मानुषत्वमवाप्स्यथेत्येकः शापः । तस्मिन् शापे जन्मत्रयम् । मानुषीं योनिमाप्स्यथ अन्यगाश्च भवतेत्येकः शापः, तस्मिन् शापे एकं मानुषं जन्म । एवं शापद्वयनिमित्ततः चतुर्जन्म भवेद्यतः अतः देहेऽपि चतुर्षु जन्मसु मध्ये जन्मत्रये त्वया सह एकदेहत्वमिच्छाम इत्यन्वयः । एवं चतुर्ष्वपि जन्मसु एकदेहत्वं शच्यादिभिः वाञ्छितमिति न भ्रमितव्यम् । तथा च एकदेहत्वेन त्रिजन्मसु मध्ये एकतमे अन्यगात्वं भविष्यतीति भावः ।।१०४।।

**ताम्रपर्णीया–** ।। **अतस्त्वयैकदेहत्वमिति** ।। यतोऽस्माकं शापद्वयाख्यनिमित्ततश्चतुर्वारं भूमौ जन्म भवेत् अतस्त्वयैकदेहत्वमिति सम्बन्धः । नन्वेकस्मिन् जन्मन्यन्यगात्वमिति हि भगवत्सिद्धान्तः । तर्हि जन्मचतुष्टयं भाग्त्या सहभावप्रार्थनमनुपपन्नमिति चेन्न । जन्मत्रये अन्यगात्वपक्षेऽपि तौल्यात् विप्रकन्यादेहे अन्यगात्वाभावेन सहभाववैयर्थ्यात् । वस्तुतस्तु ब्रह्मणा 'एकदेहा मानुषत्वम्' इति पुनश्च 'मानुषीं योनिमाप्स्यथ । तत्रान्यगाश्च भवत' इति च शप्तत्वाद्यास्मिन् जन्मन्यन्यगात्वं भविष्यतीति

अन्यगात्वजन्मन अनिर्धारितत्वात् सन्देहेन जन्म चतुष्टयेऽपि भारतीसहभावप्रार्थनोपपत्तेः । ननु जन्मत्रये देहैक्यस्य शापप्रयुक्तत्वेऽपि अन्यगात्वजन्मनि देहैक्यशापाभावात् कुतः देहैक्यमिति चेत्? अन्यगात्वदेहे तासां देहैक्यस्य मारुतसम्बन्धार्थमिच्छयोपपत्तेः । प्रत्येकं भारतीयुक्तत्वेन मारुत-सम्बन्धेच्छाया अशक्तत्वात् । न हि महत्या भारत्या वायोश्च तासामन्यगात्वजन्मनि बहुमानुषदेहेषु सहभावसम्भोगप्रार्थनं शक्यमतो भीतिवशेनेशप्रेरणया च सङ्कुच्य भारत्या परस्परं चैकदेहा भूत्वा मारुतसम्बन्धा इत्यङ्गीकारे तु न काप्यनुपपत्तिः ।

केचित्तु– जन्मत्रये देहैक्यं चतुर्थं जन्म तु पृथगेव । जन्मत्रये एव भारतीयुक्तत्वम् । 'देवि जन्मसु चतुर्ष्वपि' इत्येतत् प्रायिकाभिप्रायिकम् । चतृषु मध्ये त्रिष्विति वा योजना । उमायास्तु चतुर्थं जन्म नास्त्येव । 'भारत्यैव च पार्वती' इति भारत्या सहैव जन्मोक्त्वा 'नान्यथा' इति पृथग्जन्मनिषेधात् । न चैवं शापानुसारेणापृथग्जन्म अन्यगामित्वं शिवायाश्चतुर्थं जन्म च स्यादिति वाच्यम् । मानुष्यं प्राप्य देहैक्ये अन्यगात्वमिति द्वितीयशापाभिप्रायादित्याहुः ।।१०४-१०९।।

**अतिविशद–** 'अतस्त्वयैकदेहत्वमिच्छामो..मारुतात्' इत्यत्र 'चतुर्जन्मसु मध्ये' इति केचित् पठन्ति । तेषां पक्षे अतःशब्दः सावकाशः । मध्ये इत्यध्याहारश्च । चतुर्ष्वपि जन्मसु न केवलं त्रिषु जन्मसु किन्तु चतुर्ष्वपि जन्मसु इत्यपिशब्दः सार्थक इति केचित् । अत्र जन्मनां चतुष्टयं कथमित्युक्ते विप्रकन्यैका, नळन्दिनी द्वितीया, तृतीया द्रौपदी, चतुर्थी कालीत्यादि । ननु 'सा केवला भारती नान्यदेव्यस्तत्राविष्टा' इत्यनेन काल्याः शुद्धभारतीत्वात् कथं काली चतुर्था इत्याशङ्कायां सा केवला भारती नान्यदेव्यस्तत्राविष्टा इत्यपि वदन्ति । चान्द्री वा चतुर्था इत्यपि वदन्ति । उभयत्रापि हेतुः 'भारती जाता' इत्यनुक्त्वा 'कृष्णा जाता' इत्युक्तमेव ।।१०४।।

**भारतश्री–** अतो वयं चतुर्ष्वपि जन्मसु त्वयैकदेहत्वमिच्छामः । ब्रह्मणैव त्रिश इति शप्ताः एकस्मिन् जन्मनि वयमेव एकदेहत्वमिच्छामः । यतः प्रथमं मानुषीं योनिं आप्स्यथ इति सामान्यशापः, द्वितीयशापे च 'एव' इत्यवधारणाभावात् चतुर्ष्वपि जन्मसु एकदेहत्वमिच्छाम इत्यर्थः । अत्रान्ये व्याचक्षते- 'यतः चतुर्जन्म भवेदतः चतुर्षु जन्मसु मध्ये त्वया सह एकदेहत्वमिच्छामः । एवं चतुर्ष्वपि जन्मसु एकदेहत्वं शच्यादिभिर्वाञ्छितमिति न भ्रमितव्यम् । तथा च एकदेहत्वं त्रिजन्मसु मध्ये एकतमे अन्यगात्वं भविष्यतीति भावः' इति । अस्मत्पक्षे चतुर्षु एकदेहजन्मसु मध्ये एकतमे अन्यगात्वं भविष्यतीति भावः । द्वितीयशाप एवान्यगात्वस्योक्तत्वात् एवं व्याख्येयम् ।।१०४।।

**चट्टि–** अस्माकं शापद्वयनिमित्ततः वञ्चनस्थले जन्मत्रयप्रापकात् जन्मत्रयमध्ये एकस्मिन् जन्मनि अन्यगात्वप्रापकादेकस्मात् शापात् विलासप्रदर्शनस्थले एकजन्मप्रापकादेकस्मात् शापादिति शापद्वय-निमित्तात् भूमौ चतुर्जन्म भवेत् यतः अतः हे देवि! चतुर्ष्वपि जन्मसु त्वया सह एकदेहत्वमिच्छामः इत्यन्वयः ।।१०४।।

**चतुर्ज्जन्म भवेद् भूमौ त्वां नान्यो मारुताद् व्रजेत् ।**
**नियमोऽयं हरेर्यस्मादनादिर्नित्य एव च ।**
**अतस्त्वयैकदेहान्नो नान्य आप्नोति मारुतात् ॥१०५॥**

**व्यासतीर्थीया–** चतुश्चतुर्वारं मयैकदेहत्वप्राप्त्या भवतीनामभिलषितसिद्धिः भविष्यति किमित्यत आह– **त्वामिति** ॥१०५॥

**वेदाङ्गतीर्थीया–** एकदेहत्वेन किं प्रयोजनमित्यतः तदाहुरित्याह– **त्वामिति** ॥ अन्यगात्वेऽपि मारुतगामित्वमेवास्माकं त्वयैकदेहत्वप्रयोजनमिति भावः ॥१०५-१०७॥

**वरदराजीया–** एकदेहत्वेन जन्मप्राप्तौ सिद्धं प्रयोजनं विज्ञापयन्तीत्याह– **त्वामिति** ॥ अनादिनित्य एवायं नियमो यन्मारुतादन्यस्त्वां न व्रजेदिति । अतः कारणात् त्वया सह एकदेहात् प्राप्तान्निमित्तात् नोऽस्मान् मारुतादन्यो न प्राप्नोति । अत्र चतुर्ष्वपि जन्मसु एकदेहत्वप्रार्थनं स्त्रीत्वात् अन्यपुरुषसंस्पर्श-भीत्या एव । नतु एकदेहत्वनियमसिद्ध्यर्थम् । अत एव चतुर्ष्वपि जन्मसु अन्यपुरुषगामित्वनियमोऽपि नास्ति । तथैव शप्तत्वादिति भावः । स्पष्टयिष्यते चैतत् ॥१०५॥

**अनन्तभट्टीया–** एकदेहात् एकदेहत्वादित्यर्थः ॥१०५॥

**जनार्दनीया–** मया एकदेहत्वे किं प्रयोजनमित्यतः तदाहुरित्याह– **त्वामिति** ॥ हरेर्नित्य एवायं नियमः यतः मारुतादन्यस्त्वां न व्रजेदिति अतः अन्यगात्वेऽपि मारुतगामित्वमेवास्माकं त्वया एकदेहत्वप्रयोजनमिति भावः ॥१०५॥

**भारतश्री–** मया एकदेहत्वे किं प्रयोजनमित्यतस्तदाहुरित्याह– **त्वामिति** ॥ अन्यगात्वेऽपि मारुतगामित्वमेवास्माकं त्वयैकदेहत्वप्रयोजनमिति भावः ॥१०५॥

**चट्टि–** मया एकदेहत्वे किं प्रयोजनमित्यतस्तदाहुरित्याह– **त्वामिति** ॥ हरेरनादिः नित्य एवायं नियमः यत् मारुतादन्यस्त्वां न व्रजेदिति । अतः कारणात् त्वया सहैकदेहान्निमित्तान्नो अस्मान् मारुतादन्यः नाप्नोति । अन्यागात्वेऽपि मारुतगामित्वमेवास्माकं त्वयैकदेहत्वप्रयोजनमिति ज्ञेयम् । अयं भावः । चतुर्ष्वपि जन्मसु एकदेहत्वमन्यगात्वं शच्यादिभिरपेक्षितं इति नो शङ्कनीयं अपि तु त्रिजन्मसु एकदेहत्वं एकदेहविशिष्टजन्मत्रयमध्ये एकतमे जन्मनि अन्यपुरुषगामित्वम्, चतुर्थजन्मनि पृथक् पृथक् मानुषं जन्म भवतीति ज्ञेयम् । ब्रह्मणा तथैव शप्तत्वात् । उत्तरत्र इन्द्रसेनाजन्मन्येव मुद्गलमुन्यन्तर्गतवायुना तासां सम्भोगस्योक्तत्वाच्च । अत एव विप्रजन्मनि विवाहात् प्राक् कन्या-वस्थायामेव देहत्यागः उक्तः । द्रौपदीजन्मनि अभिमानोत्पत्त्यभिमाननाशाकथनेन अन्यगात्वाभाव उक्तः ॥१०५॥

**इतीरिते तथेत्युक्त्वा पार्वत्यादियुतैव सा ।**
**[१]विप्रकन्याऽभवत् तत्र चतस्रः पार्वतीयुताः ।**
**एकदेहस्थिताश्चक्रुर्गिरिशाय तपो महत् ॥१०६॥**

**जनार्दनीया—** तत्र विप्रकन्याजन्मनि । पार्वतीयुताश्चतस्रः शच्याद्याः ॥१०६॥

**वरदराजीया—** इति उक्तप्रकारेण ईरिता, उमादिभिरिति शेषः । सा भारती तथेति तथास्त्वित्युक्त्वा पार्वत्यादियुता सती कस्यचिद्विप्रस्य सुता अभवत् । तत्र विप्रकन्याजन्मनि पार्वतीयुताः शच्याद्याः एवं चतस्रः एकदेहस्थिताः गिरिशाय महत्तपः चक्रुः ॥१०६॥

**भारतश्री—** कस्यचिद् विप्रस्य शिवनामकस्य कन्याऽभवत् । तत्र विप्रकन्याजन्मनि पार्वतीयुताः चतस्रः शच्याद्याः ॥१०६॥

**चट्टि—** इति उक्तप्रकारेणेरिते सति, उमादिभिरिति शेषः । सा भारती तथेति तथास्त्वित्युक्त्वा पार्वत्यादियुता सत्येव विप्रकन्या कस्यचित् विप्रसुता अभवत् । तत्र विप्रकन्याजन्मनि एकदेहस्थिताः पार्वत्यादियुताश्चतस्रः शच्याद्याः गिरिशाय महत् तपः चक्रुः ॥ १०६ ॥

**तद्देहस्था भारती तु रुद्रदेहस्थितं हरिम् ।**
**तोषयामास तपसा कर्मैक्यार्थं धृतव्रता ॥१०७॥**

**वेदाङ्गतीर्थीया—** रुद्रदेहस्थितं रुद्रनामानं हरिं कर्मैक्यार्थं रुद्रपरिचर्यादिः । तासां कर्मणः स्वकर्मणश्च एकविषयत्वार्थम् । अन्यथा विरुद्धकर्मत्वेन एकशरीरस्थानां तदुन्मथनादिप्रसङ्ग इति भावः ॥१०७॥

**वादिराजतीर्थीया—** 'कर्मैक्यार्थं धृतव्रता' इत्यत्र एकदेहे कृतनमस्कारसकृद्भोजनादिकर्मणामैक्यार्थं फलैक्येनैक्यार्थम् । अन्यथा भारत्या शिवान्तर्गतविष्णुपूजारूपकर्मणः कृतत्वेन अन्याभिः शिवपूजारूप-कर्मणः कृतत्वात् कर्मैक्यायोगात् । 'स्वभर्तृसंयोगं वरम्' इति वचनात् अन्यासामपि चतसृणां स्वभर्तृ-संयोग एव । भीमोऽपि द्रौपदीदेहे भारतीमेव रमयति । न शच्याद्याः परनारीः । प्राचीनान्यगामित्वशापस्य अभिनवस्वपतिसंयोगाख्यशिववरेण तिरस्कृतत्वेन अन्यगमने कारणाभावात् । 'इतीरिते पृथयाहूतवायु-संस्पर्शमात्रादभवद् बलद्वयी' (ता.नि-१२.५३) इति वचनात् यो वायुः पुत्रजननार्थं कुन्तीसमीपं प्रत्यागतोऽपि कुन्त्याः उदरमेव पस्पर्श न तु रेमे । सोऽयं निरवद्यशिरोमणिः वायुरूपो भीमः निर्निमित्तं स्नुषां एव न दूषयेदिति किं वक्तव्यम् । अतः पार्वत्या अपि वक्ष्यमाणब्रह्मशापान्न स्वपतिसंयोगो

---

१. 'आसीत् तपोवने काचिद् ऋषेः कन्या महात्मनः । विलग्नमध्या सुश्रोणी सुभ्रूः सर्वगुणान्विता ॥ कर्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत । नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती ॥ तपस्तप्तुमथारेभे पत्यर्थमसुखा ततः । तोषयामास तपसा सा किलोग्रेण शङ्करम् ॥' आदिपर्वणि-१८४.६-८.

नाप्यन्यपतिसंयोग इति तत्पातिव्रत्यं न कोऽपि त्याजयेदिति सर्वमवदातम् । अत एव भीमस्य द्रौपद्या सह एकाकितया रतिकाले 'अन्या देवीः स्वापयित्वा शरीरे' (ता.नि-२०.१४९) इति स्वयमेव वक्ष्यत्याचार्यः ।।१०७।।

**वरदराजीया–** तद्देहस्था तस्मिन्नेव देहे स्थिता भारती तु कर्मैक्यार्थं रुद्रदेहस्थितं हरिं तपसा तोषयामास । धृतव्रता व्रतनिष्ठा ।। **कर्मैक्यार्थमिति** ।। एकविधमेव कर्म कर्तुम् । अन्यथा अनेकचेतनाधिष्ठितत्वेन विरुद्धादिक्रियं शरीरं उन्मथ्येतेति भावः ।।१०७।।

**भावविवृतिः–** 'तद्देहस्था भारती तु...शङ्कर एव च' इत्यत्र भारती तु न केवलं कर्मैक्यार्थं तपश्चक्रे । किन्तु स्ववहुजन्मसु स्वभर्त्रा सह क्रियमाणं कर्म विष्णुप्रीतिकरं भवेदिति च तपश्चकारेति सूचनाय तुशब्दः । तस्यै भारत्यै रुद्रदेहस्थो हरिः कर्मैक्यं भूयादिति वरं ददौ ।।१०७।।

**अनन्तभट्टीया–** कर्मैक्यार्थं कर्मणः एकविषयत्वार्थम् ।।१०७।।

**जनार्दनीया–** तद्देहस्था तस्मिन्नेव देहे स्थिता धृतव्रता व्रतनिष्ठा भारती कर्मैक्यार्थं पार्वत्यादीनां रुद्रपरिचर्यादिकर्मणः स्वकृतकर्मणश्च एकविषयत्वार्थम् । अन्यथा विरुद्धकर्मत्वेन एकशरीरस्थानां तदुन्मथनादिप्रसङ्गादिति भावः । रुद्रदेहस्थितं रुद्रनामानं हरिं तपसा तोषयामासेत्यन्वयः । 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' (भा.ता.१.२.२४) इति वचनात् ।।१०७।।

**ताम्रपर्णीया–** कुतो वा भारती रुद्राधिष्ठानेऽपूजयदित्यत आह– **कर्मैक्यार्थमिति** ।। कर्मणामेकविषयत्वसिद्ध्यर्थमित्यर्थः ।।१०७।।

**भारतश्री–** कर्मैक्यार्थं पार्वत्यादिकृतव्यापाराणां स्वकृतकर्मणश्च एकविषयत्वार्थम् । अन्यथा विरुद्धकर्मत्वेन एकशरीरस्थानां तदुन्मथनादिप्रसङ्गः स्यादिति भावः । कर्मैक्यप्रार्थनमपि विष्णुतोषणार्थमितिकृत्वा न शुद्धभागवतत्वविरोधः ।।१०७।।

**भावचन्द्रिका–** ।। **कर्मैक्येति** ।। अधिष्ठानसंस्पर्शिपूजाकरणे रुद्रस्यापि पूज्यत्वं स्यादिति देहस्य च जडत्वात् न पूज्यत्वं स्यादिति भावेन 'रुद्रदेहस्थितम्' इत्युक्तम् । कर्मेति(११८)वक्ष्यमाणत्वात् । किन्तु अधिष्ठानान्तरं विना रुद्रदेहे हर्युपासनं भारत्याः कुत इत्यतः पूजारूपकर्मणः एकाधिष्ठानविषयत्वरूप ऐक्यार्थमिति । युगपत् विरुद्धाधिष्ठानविषयत्वायोगात् ।।१०७।।

**चट्टि–** तद्देहस्था तस्मिन्नेव देहे स्थिता धृतव्रता व्रतनिष्ठा भारती तु कर्मैक्यार्थं एकदेहकृतनमस्कारसकृद्भोजनादिकर्मणां ऐक्यार्थम् । अन्यथा भारत्या शिवान्तर्गतविष्णुपूजारूपकर्मणः कृतत्वेन अन्याभिः शिवपूजारूपकर्मणः कृतत्वेन कर्मैक्यायोगात् । एकशरीरस्थानां शरीरोन्मथनादिप्रसङ्गादिति भावः । रुद्रदेहस्थितं रुद्रनामकं हरिं तपसा तोषयामास । 'ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः' इति वचनात् ।।१०७।।

**तस्यै स रुद्रदेहस्थो हरिः प्रादाद् वरं प्रभुः ।**
**अनन्ततोषणं विष्णोः स्वभर्त्रा सह जन्मसु ॥१०८॥**

**व्यासतीर्थीया–** अनन्ततोषणमपरिमिततोषणम् ॥१०८-१०९॥

**वेदाङ्गतीर्थीया–** रुद्रदेहस्थः स हरिः तस्यै इति वरं ददौ । किमिति? तत्राह– **अनन्तेति** ॥ सर्वेष्वपि जन्मसु स्वभर्त्रा सह विष्णोरनन्ततोषणम् ॥१०८॥

**वादिराजतीर्थीया–** 'अनन्ततोषणम्' इत्यत्र अनन्ततोषणं करिष्यसीति योग्यक्रियाध्याहारः ॥१०८॥

**वरदराजीया–** तस्यै भारत्यै सर्वेष्वपि जन्मसु स्वभर्त्रा सह विष्णोः अनन्ततोषणं अपरिमिततोषणं वरं प्रादादित्यर्थः ॥१०८॥

**भावविवृतिः–** न केवलं तावन्मात्रं अन्यच्च वरं ददावित्याह– **अनन्ततोषणमिति** ॥ स्वभर्त्रा सह सर्वेष्वपि (जन्मसु) क्रियमाणं कर्म विष्णोरनन्ततोषणं अविच्छिन्नप्रीतिकरं भवत्विति वरं ददावित्यर्थः ॥१०८॥

**अनन्तभट्टीया–** अनन्ततोषणं अपरिमिततोषणम् ॥१०८॥

**जनार्दनीया–** स हरिः तस्यै भारत्यै इति वरं ददौ । किमिति? तत्राह– **अनन्तेति** ॥ सर्वेष्वपि जन्मसु स्वभर्तृसंयोगम् । स्वभर्त्रा सह विष्णोरनन्ततोषणं अमिततोषणम् ॥१०८॥

**ताम्रपर्णीया–** ॥ **अनन्ततोषणमिति** ॥ स्वभर्त्रा सह विष्णोः अपरिच्छिन्नतोषणमित्यर्थः ॥१०८॥

**अतिविशद–** 'तस्यै स रुद्रदेहस्थो...सर्वेष्वपि' इत्यत्र भारत्याः सर्वेष्वपि जन्मसु स्वभर्त्रा सहेत्यस्य स्वभर्त्रानुकूल्याङ्गीकारात् । राज्ञा सह अमात्यः कार्यं करोतीतिवत् । भारत्याः सर्वेष्वपि जन्मसु स्वभर्त्रानुकूल्यं प्रसिद्धमेव । परशुक्लत्रयत्वात् । अथवा सर्वचेष्टानां 'तस्मिन्नपो मातरिश्वा दधाति' इत्यादिना ईशावास्योपनिषदा तद्भाष्ये 'मारुत्येव यतश्चेष्टा सर्वा तां हरयेऽर्पयेत्' (ई.भा-४) इत्यादिना मारुताधीनत्वश्रवणात् स्वभर्त्रा सह मारुतेन यदनन्ततोषणं तत् तस्य सर्वेष्वपि जन्मसु सहैवास्तु इत्यादिना रुद्रदेहस्थो हरिः वरं प्रादात् इति भर्त्रा सह इत्यस्य भर्त्रा सहितत्वमेवार्थः । यद्वा अशून्यशयनं व्रतं विधवादिभिः सर्वाभिः स्त्रीभिः पुरुषैश्च कार्यमित्युच्यते । तत्फलश्च दम्पत्योः सर्वदा अशून्यशयनमेव । तत्तु विधवाया विधुरस्यानुपपद्यमानं तदतिरिक्तजन्मनि यथा कल्प्यते, एवमेव भारत्या इदानीं कन्याजन्मत्वादेव तदतिरिक्तसर्वेष्वपि जन्मसु इत्युपपत्तेः । अत एवाचार्यैः पूर्वं 'विप्रकन्याऽभवत्' इत्युक्तम् । अन्यथा 'वभूव नलनन्दिनी' इत्यादिवत् 'विप्रपुत्र्यभवत्' इत्यवक्ष्यत् ॥१०८॥

**चट्टि–** प्रभुः रुद्रदेहस्थः स हरिः तस्यै भारत्यै इति वरं प्रादात् । किमिति? तत्राह– **अनन्तेति** ॥ सर्वेष्वपि जन्मसु स्वभर्त्रा सह विष्णोरनन्ततोषणं वरं प्रादादिति पूर्वेण सम्बन्धः ॥१०८॥

**सर्वेष्वपीति चान्यासां ददौ शङ्कर एव च ।**
**[१]वरं स्वभर्तृसंयोगं मानुषेष्वपि जन्मसु ॥१०९॥**

**वेदाङ्गतीर्थीया–** अन्यासां शङ्कर एव मानुषेष्वपि जन्मसु स्वभर्तृसंयोगवरं ददौ । भारत्याः काम्यवरप्रार्थनाभावात् स्वभर्तृसंयोगो नाम स्वभर्त्रा सह विष्णोरनन्तप्रीतियोगः प्रार्थितः । हरिणा स एव वरो दत्तः । अन्यासां तु केवलं स्वभर्तृसंयोग एव रुद्रेण दत्त इति हृदयम् ॥१०९॥

**वरदराजीया–** अन्यासां उमादीनां शङ्कर एव वरं ददौ । मानुषेष्वपि जन्मसु मध्ये कुत्रचित्स्वभर्तृ-संयोगरूपं वरं ददौ । 'तत्रान्यगाश्च भवत' इति सामान्येनोक्तत्वादिति भावः ॥१०९॥

**भावविवृतिः–** न केवलं तव जन्मसु मात्रं क्रियमाणं विष्णुप्रीतिकरं किन्तु हिडिम्ब्यादिषु त्वदावेश-रूपैः क्रियमाणमपि विष्णुप्रीतिकरं भवत्विति वरं ददाविति सूचनाय अपिपदम् ॥१०९॥

**लघ्वनन्तभट्टीया–** ॥ **मानुषेष्विति** ॥ मनुष्यजन्मसु मध्ये एकस्मिन् जन्मनीत्यर्थः । अस्मिन् देहमेकैवेति ज्ञानात् देहैक्ये भर्तृसंयोगो भूयादिति प्रार्थनाभावेन वरस्य सामान्येन प्रवृत्तत्वात् । विष्णुदत्तवरस्यान्यैरश्रुतत्वात् नानुपपत्तिः शङ्कनीया ॥१०९॥

**जनार्दनीया–** अन्यासां शङ्कर एव मानुषेष्वपि जन्मसु मध्ये कुत्रचिज्जन्मनि स्वभर्तृसंयोगं वरं ददौ । अत्र भारत्याः काम्यवरप्रार्थनाभावात् स्वभर्तृसंयोगं नाम स्वभर्त्रा सह तया विष्णोरनन्तप्रीतिसंयोगः प्रार्थितः । हरिणा स एव वरो दत्तः । अन्यासां तु केवलं स्वभर्तृसंयोग एव रुद्रेण दत्त इति हृदयम् ॥१०९॥

**ताम्रपर्णीया–** ॥ **मानुषेष्वपीति** ॥ मानुषजन्मसु मध्ये एकस्मिन् जन्मनीत्यर्थः । पृथक्पृथक् जन्माशयेन वा बहुवचनोपपत्तिः । विष्णुदत्तवरस्यान्यैरश्रुतत्वान्नानुपपत्तिः । वक्ष्यमाणचतुर्मुखशापेन शिवाविषये शिववरस्यान्यथाभाव इति न दोषः ॥१०९॥

**भारतश्री–** मानुषेष्वपि जन्मसु मध्ये कुत्रचित् जन्मनि ॥१०९॥

**भावचन्द्रिका–** जन्मत्रयस्य भावित्वात् 'जन्मसु' इत्युक्तम् ॥ **स्वभर्तृसंयोगमिति** ॥ अस्य स्वपतिसंयोगमिति नार्थः । नालायिन्यां वरस्य मोघापत्तेः । नच द्रौपदीदेहे वरस्य उपपत्तेः । 'जन्मसु' इति बहुवचनात् । पञ्चभर्तृत्वात् बहुवचनोपयोग इति न शरीरस्य इह जन्म शरीरश्चैकं अतो जन्मनां इति स्यात् । उपचार इति चेत् स एव दोषः । एकेनैव सिद्धे द्वितीयवरवैयर्थ्यापत्तेश्च । नच सिद्धमज्ञात्वा

---

१ 'अथेश्वरमुवाचेदमात्मनः सा वचो हितम् । पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः ॥ तामथ प्रत्युवाचेदमीशानो वदतां वरः । पञ्च ते पतयो भद्रे भविष्यन्तीति भारताः ॥ एवमुक्ता ततः कन्या देवं वरदमब्रवीत् । एकमिच्छाम्यहं देव त्वत्प्रसादात् पतिं प्रभो ॥ पुनरेवाब्रवीत् देव इदं वचनमुत्तमम् । पञ्चकृत्वस्त्वया ह्युक्तः पतिं देहीत्यहं पुनः । देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति ॥ द्रुपदस्य कुले जज्ञे सा कन्या देवरूपिणी । निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ॥' आदिपर्वणि.१८४.१०-१३.

प्रार्थनं तासां निमित्तम् । अज्ञानकल्पनापत्तेः । अतः स्वाभिप्रेतो वायुः भर्ता । तत्संयोगमित्यर्थः । एवञ्च आदौ मारुतसंयोगप्रार्थनं अनन्तरं निजपतिसंयोगप्रार्थनमिति वरद्वयसाफल्यं त्रिष्वपि जन्मसु मारुतसंयोगः । द्रौपदीत्वे स्वपतिसंयोगोऽपि ज्ञायते । ननु भारतीप्रार्थनसमये तस्याः वायुप्राप्तिर्नियम एवेति ज्ञातत्वात् इदानीं वायुसंयोगप्रार्थने नियमाज्ञानं दोष इति चेन्न । ज्ञात्वापि नियमं बलवद्ब्रह्मशापात् द्रौपदीत्वे वायुसंयोगाविरोधेन स्वपतिसंयोगवत् मुद्गलसंयोगप्राप्तौ तत्रापि वायुसंयोग एव स्यात् । द्रौपदीत्वेऽपि पञ्चभर्तृकवरप्राप्तावपि अन्यसंयोगो माऽभूत् । स्वपतितदन्तर्गतवायुसंयोग एव स्यादित्येवं प्रकारकहरीच्छयैव वायुसंयोगार्थं रुद्रप्रार्थनं चक्रुरिति ।।१०९।।

**अतिविशद–** 'मानुषेष्वपि जन्मसु' इत्यत्र जन्मसु इति बहुवचनात् सर्वेष्वपि जन्मसु पतियोगवरः प्रतीयते । तदनुपपन्नम् । द्रौपदीव्यतिरिक्तजन्मनि पतियोगाभावात् । तस्मात् कथमेतदिति चेन्न । प्रतिदिनं जननात् जन्मसु इत्युपपत्तेः । यथोक्तमेकोनविंशे- 'प्रतिदिनं जननाद्धि कन्या'(१८६) इति । मानुषेषु जन्मस्वपि सम्भाविते द्रौपदीजन्मनीति वा । 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' (सि.कौ.५५७) इति सूत्रात् ।।१०९-१५४।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ अष्टादशोऽध्यायः ।।

**चट्टि–** अन्यासां उमादीनां मानुषेष्वपि जन्मसु मध्ये कुत्रचित् स्वभर्तृसंयोगरूपं वरं शङ्कर एव ददौ । तत्र अन्यगाश्च भवत इति सामान्येनोक्तत्वादिति भावः ।।१०९।।

**ततस्तदैव देहं ता विसृज्य नलनन्दिनी ।**
**[१]बभूवुरिन्द्रसेनेति देहैक्येन सुसङ्गताः ।।११०।।**

**व्यासतीर्थीया–** नलनन्दिनी नलस्य । पुरा सुसंगताः एकाभिरामा इत्यर्थः ।।११०।।

**वेदाङ्गतीर्थीया–** देवानां बहुत्वात् 'बभूवुः' इति बहुवचनम् । नलनन्दिनीदेहस्यैकत्वात् नलनन्दिनीत्येकवचनम् । ततः वरप्राप्त्यनन्तरं तदैव शीघ्रं देहं विप्रकन्यादेहं विसृज्य सुसङ्गताः सम्यग् एककार्यबुद्धयः । देहैक्येन नलनन्दिनी नलस्य पुत्री इन्द्रसेना नाम्नीति बभूवुः ।।११०।।

---

१. 'आसीत् तपोवने काचिद् ऋषेः कन्या महात्मनः । नाध्यगच्छत् पतिं सा तु कन्या रूपवती सती' ।।५६।। इत्युक्त्वा, '..द्रुपदैषा हि सा जज्ञे सुता ते देवरूपिणी । पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता ।। सैव नालायनी भूत्वा रूपेणाप्रतिमा भुवि । मौद्गल्यं पतिमास्थाय शिवाद् वरमभीप्सती ।।' आदिपर्वणि-२१४.६३-६४.
'नालायनी चेन्द्रसेना रूपेणाप्रतिमा भुवि । पतिमन्वचरद् वृद्धं पुरा वर्षसहस्रिणम् ।।' विराटपर्वणि-२४.२१.

**वादिराजतीर्थीया–** 'नलनन्दिनी बभूवुरिन्द्रसेना' इत्यत्र द्वितीयजन्मनि नलनन्दिनी बभूवुः । तं च देहं स्वेच्छयैव विसृज्य तृतीयजन्मनि पुनरिन्द्रसेनेति बभूवुरित्यर्थः । न तु नलनन्दिन्येवेन्द्रसेना । तथा सत्यारब्धत्रित्वस्यान्तगमनाभावेन ग्रन्थकर्तुरकौशल्यप्रसङ्गात् ।।११०।।

**सत्याभिनवतीर्थीया–** तत्रैव 'ततस्तदैव देहं ता विसृज्य..' इति श्लोकः । नलनन्दिनी इत्यस्य नलनन्दिन्य इत्यर्थः । एतेन 'बभूवुः' इत्यस्य बहुवचनान्तत्वात् 'नलनन्दिन्यः' इति वक्तव्यम् । 'नलनन्दिनी' इत्येकवचनप्रयोगः अनुपपन्न इति दूषणं परास्तम् । 'नलनन्दिनी' इत्येकवचनं नलनन्दिन्य इति बहुवचनादेशः इत्यभ्युपगमात् ।।११०।।

**मधुसूदनीया–** ।। **तत इति** ।। देहं विप्रकन्यादेहं नलनन्दिनी नलपुत्री इन्द्रसेना इन्द्रसेनानाम्नी । अनेन 'नालायनीन्द्रसेना यथैव [1]कन्या नित्यं मौद्गलस्याजमीढ' इत्यरण्यपर्ववचनार्थो (११४.२४) विहित इति ज्ञेयम् । नालायनीत्यस्य 'नडादिभ्यः फक्' (सि.कौ.११०३) इत्यनेन फकि कृते 'आयनेयीनी' (सि.कौ.४७५) इत्यनेन फस्याऽयनादेशे 'टिड्ढाणञ्' (सि.कौ.४७०) इत्यादिना ङीपि कृते नालायनीत्यस्य नलनन्दिनीत्यर्थ इति सूचितं भवति । इन्द्रसेनया पतिं देहि इति एकवारमुक्ते सति, तद्वचः पतिं देहीति सकृदुक्तं वचः पञ्चकृत्वः पञ्चवारमभवत् । यतः यस्मात् कारणात् चतुर्ष्वपि जन्मसु विषये शापद्वयनिमित्ततः शापद्वयनिमित्तसद्भवात् चतुश्चतुर्वारं भूमौ जन्म भवेत् । अतः देहेऽपि त्रिषु जन्मसु त्वयैकदेहत्वमिच्छामेति पूर्वेणान्वयः । चतुर्ष्वपि जन्मसु विषये शापद्वयनिमित्तत इत्येतत् अनुवादरूपमित्यङ्गीकर्तव्यम् । अन्यथा चतुर्ष्वपि जन्मसु एकदेहत्वमिच्छाम इत्यन्वयाङ्गीकारे चतुर्जन्मसु एकदेहत्वस्य कुत्राप्यदर्शनादसाङ्गत्यापत्तेरिति ध्येयम् । तासां चतुर्थजन्मत्वे एवं शच्याः पाण्ड्यपुत्रीत्वम्, श्यामलायाः शिशुपालपुत्रीत्वम्, उषादेव्याः जरासन्धपुत्रीत्वम्, पार्वत्यास्तु पितृपुत्रीत्वम् । तच्च हरिवंशे आदिपर्वणि च स्पष्टमिति द्रष्टव्यम् ।।११०-११३।।

**वरदराजीया–** ततस्तदनन्तरं तदैव कालक्षेपमन्तरेण ताः देव्यः देहं विप्रकन्यादेहं विसृज्य त्यक्त्वा इन्द्रसेनेति नाम्ना नलस्य राज्ञः नन्दिनी पुत्री बभूवुः । देहैक्येन निमित्तेन सुसङ्गताः कर्मैक्यवत्यः ।।११०।।

**अनन्तभट्टीया–** नलनन्दिनी नलपुत्री नाम्ना इन्द्रसेनेति बभूव । इदं द्वितीयजन्म । सुसङ्गताः एकाभिप्रायाः ।।११०।।

**लघ्वनन्तभट्टीया–**पृथक्पृथक् जन्म आदाय बहुवचनोपपत्तिः ।सुसङ्गताःएकविषयबुद्धिमन्तः।।११०।।

**जनार्दनीया–** ततः वरप्राप्त्यनन्तरं ताः देव्यः तदैव शीघ्रं देहं विप्रकन्यादेहं विसृज्य सुसङ्गताः सम्यगेककार्यबुद्धयः देहैक्येन इन्द्रसेनेति नाम्ना, नलनन्दिनी नलनाम्नः पुत्री बभूवुः । देवीनां बहुत्वाद् 'बभूवुः' इति बहुवचनम् । नलनन्दिनीदेहस्यैकत्वात् नलनन्दिनीत्येकवचनम् । न चात्र नलनन्दिनी

---

१. 'वश्या नित्यं मुद्गलस्याजमीढ' इति उपलभ्यमान पाठः ।

इन्द्रसेनाख्यं देहद्वयमिति शङ्क्यम् । इन्द्रसेनेतीतिकरणेन नलनन्दिन्यामिन्द्रसेनाशब्दाभिधेयत्वस्य प्रतीतेः । पदार्थविपर्यासे हि इतिकरणः प्रयुज्यते । 'मृत्तिकेत्येव सत्यम्' (छां.६.१.३) इतिवत् । नलनन्दिनीदेहस्य कार्यान्तरानुक्तेश्च । तस्मात् नलनन्दिन्या एव इन्द्रसेनेतिसञ्ज्ञा न तु देहद्वयम् ।।११०।।

**ताम्रपर्णीया–** ।। **नलनन्दिनीति** ।। इन्द्रसेनेति नाम्ना नलस्य पुत्री वभूवुरित्यर्थः । तदुक्तं महाभारते- 'हन्त ते कथयिष्यामि कृष्णायाः पूर्वदैहिकम् । इन्द्रसेनेति विख्याता पुरा नालायनी श्रुता । मौद्गल्यं पतिमासाद्य चचार विगतज्वरा ।।' (१.२१३.३) इति । केचित्तु- 'द्वितीयजन्मनि नलनन्दिनी वभूवुः । तं च देहं स्वेच्छयैव विसृज्य तृतीयजन्मनि पुनरिन्द्रसेनेति नाम्ना वभूवुरित्यर्थः । अन्यथा जन्मचतुष्टया-नुक्तदोषः' इत्याहुः । विप्रकन्येति प्रथमं जन्म तत्र न स्वपरपुरुषसंयोगः । नलनन्दिनीति द्वितीयं तत्र मुद्गलस्थवायुसंयोगः । द्रौपदीति तृतीयं तत्र पार्वत्यतिरिक्तानां स्वपतिमात्रसंयोगः । पार्वत्यास्तु तस्याप्यभावः । कलियुगे तु भगवत आचार्यावतारसमये चतुर्थं जन्म । यद्वक्ष्यति 'तदैव कृष्णापि भुवि प्रजाता' (ता.नि-३२.१२२) इति । सा तु कल्याणी तस्याश्च विप्रकन्यावन्न विवाहः इति सम्प्रदायविदः । तथा च (न) जन्मचतुष्टयानुक्तिदोषः इत्यलम् । सुसङ्गताः एकविषयबुद्धिमत्यः क्षीरनीरवन्मिलिता वा ।।११०।।

**भारतश्री–** नलनन्दिनी नलस्य राज्ञो नन्दिनी पुत्री नाम्ना इन्द्रसेना । देवीनां बहुत्वात् बहुवचनम् । देहस्यैकत्वादेकवचनश्च ।। ११०।।

**भावचन्द्रिका–** दमयन्त्यां नलाज्जातत्वात् नलनन्दिनी । नाम्ना इन्द्रसेनेत्यर्थः । 'इन्द्रसेनेति विख्याता पुरा नालायनी सुता' इति सभापर्वणि भारतवचनात् । तत्रापि पदार्थविपर्यासकारि इति शब्दप्रयोगाच्च ।। **सुसङ्गता इति** ।। ब्रह्मवरेण । तदुक्तं तत्रैव माहात्म्ये– 'ततो देव्यस्तपसा ब्रह्मणो वरम् । ऐकमत्यप्रवृत्त्यर्थं लेभिरे भुवि जन्मसु ।।' इति । सर्वक्षेत्रे ब्रह्मणा कृष्णाभिप्रायेण वरस्य..." उत्पादनाय आदौ सामान्येन 'अभूत्' इत्युक्तम् । शापानुग्रहकारणादेहसंयोगमात्रेण 'कृष्णादेहे भविष्यति' इत्युक्तमहामात्स्यवचनात् । (अदृष्टाफलकं) पापं न चेत्यर्थः ।।११०।।

**चट्टि–** ततः वरप्राप्त्यनन्तरं ताः देव्यः तदैव शीघ्रं देहं विप्रकन्यादेहं विसृज्य त्यक्त्वा सुसङ्गताः सम्यगेककार्यबुद्धयः देहैक्येन इन्द्रसेनेति नाम्ना, नलनन्दिनी नलनाम्नः पुत्री वभूवुः । देवीनां वहुत्वाद् 'वभूवुः' इति बहुवचनम् । नलनन्दिनीदेहस्यैकत्वात् नलनन्दिनीत्येकवचनम् । अनेन 'नालायनी हीन्द्रसेना यदैव वश्या नित्यं मुद्गलस्याजमीढ' इत्यरण्यपर्ववचनार्थो विवृत इति ज्ञेयम् । नालायनीत्यस्य 'नडादिभ्यः फक्' इत्यनेन फकि कृते 'टिड्ढाणञ्' इत्यादिना ङीपि च कृते फस्य अयनादेशे कृते नालायनीत्यस्य नलनन्दिनीत्यर्थ इति सूचितं भवति ।।११०।।

**तदाऽऽसीन्मुद्गलो नाम मुनिस्तपसि संस्थितः ।**
**चकमे पुत्रिकां ब्रह्मेत्यशृणोत् स कथान्तरे ।।१११।।**

**व्यासतीर्थीया–** चकमे अकामयत ।।१११।।

**वेदाङ्गतीर्थीया–** चकमे अकामयत । कथान्तरे कस्याश्चित् कथायाम् ।।१११।।

**मधुसूदनीया–** ।। **पुत्रिकामिति** ।। पुत्रिकां मनुष्येषु वागभिमानिनीं काचन देवतां स्वपुत्रीत्वेन जातामित्यर्थः । चकमे काङ्क्षितवानित्यर्थः । न तु पुत्रीभूतां स्वपत्नीं सरस्वतीम् । 'प्रजापतिस्ततस्तन्वीं तत्याज व्रीळितस्तदा'(३.१३.३३) इत्युत्तरत्र भागवते तत्त्यागोक्तेः । 'यां तत्याज विभुर्ब्रह्मा मानुषी वाक् तु सा स्मृता । सरस्वती निजा भार्या देवीं वाचं तु तां विदुः ।।' इति वचनाच्च ।।१११-१२१।।

**वरदराजीया–** तदा द्वितीये जन्मनि । तपसि संस्थितः तपस्वी आसीत् । सः मुद्गलः कथान्तरे कथाविशेषे ब्रह्मा पुत्रिकां चकमे कामितवान् इत्यशृणोत् ।।१११।।

**अनन्तभट्टीया–** चकमे ऐच्छत् । कथान्तरे कथाविशेषे ।।१११।।

**लघ्वनन्तभट्टीया–** कथान्तरे कथामध्ये ।।१११।।

**जनार्दनीया–** चकमे अकामयत । कथान्तरे कस्याश्चित् कथायाम् ।।१११।।

**ताम्रपर्णीया–** कथान्तरे कथा मध्ये ।।१११।।

**भारतश्री–** कथान्तरे कस्याश्चित् कथायां मध्ये ।।१११।।

**चट्टि–** तदा मुद्गलो नाम मुनिस्तपसि स्थितः आसीत् । सः मुद्गलः कथान्तरे कस्याश्चित् कथायां ब्रह्मा पुत्रिकां चकमे अकामयत इत्यशृणोत् ।।१११।।

**अपाहसत् सोऽब्जयोनिं शशापैनं चतुर्मुखः ।**
**भारत्याद्याः पञ्च देवीर्गच्छ मानिन्नभूतये**[१] **।।११२।।**

**व्यासतीर्थीया–** अहं कामादिरहित इति मानिन् ।।११२-१३१।।

**वेदाङ्गतीर्थीया–** तर्हि साध्यो नहीत्याशङ्क्य परिहरति– **नेति** ।। भूतये सुखाय न, किन्तु पापायेति भावः ।। ११२ ।।

**वादिराजतीर्थीया–** पञ्च देवीर्गच्छेति ब्रह्मशापस्य 'न त्वं यास्यसि ता देवीः' इति ब्रह्मवरेणैव परिहृतत्वात् । 'मारुतस्त्वच्छरीरगः यास्यति' इति वचनस्य सामान्यवचनत्वेन ताः देवीरित्यनुकर्षे कारणाभावात् । मुद्गलवत् ताः देवीर्गच्छेति वायोः शापाभावेन च इन्द्रसेनामिति वक्ष्यमाणपदाकर्षणेन भारतीरूपामिन्द्रसेनां यास्यतीति सम्बन्धसम्भवात् । अत्रापि वायोर्न परस्त्रीगमनं शङ्क्यम् । अत एव

१. 'मानिन् न भूतये' इति वेदाङ्गतीर्थीयपाठः ।

'इन्द्रसेनां गृहीत्वा' इति 'रेमे च स तया सार्धम्' इति च स्थानद्वयेऽप्येकवचनमेव । न तु ताभिः इति बहुवचनम् । किञ्च आपाततः प्रतीतोऽपि दोषो न महत्सु शङ्कनीयः । किन्तु वाक्यमेवान्यथा व्याख्येयम् । अप्रतीतदोषस्योहनं तु मोहादेवेति ज्ञेयम् ।।११२।।

**वरदराजीया–** सः मुद्गलः । अब्जयोनिं ब्रह्माणं अपाहसत् । चतुर्मुखः एनं मुद्गलं शशाप । किमिति? हे मानिन्! अहं कामरहित इत्यभिमानिन्! भारत्याद्याः पञ्च देवीः गच्छ । कथमस्य शापत्वमित्यत उक्तम्– **अभूतय इति** ।। नरकाद्यनर्थप्राप्तये ।।११२।।

**अनन्तभट्टीया–** मानिन्! अहं कामरहित इत्यभिमानिन् । अभूतये नरकप्राप्तये ।।११२-११८।।

**लघ्वनन्तभट्टीया–** मानिन् कामादिरहित इत्यहङ्कारवान् । अभूतये इत्यनेन अनर्थहेतुत्वं तस्याह ।।११२।।

**जनार्दनीया–** हे मानिन्! अहं कामरहित इत्यभिमानिन् । अभूतये नरकाद्यनर्थप्राप्तये ।।११२।।

**ताम्रपर्णीया–** मानिन्! कामादिरहित इत्यहङ्कारिन्! ।।११२।।

**भारतश्री–** अहं कामरहित इति मानिन्! अभूतये नरकाद्यनर्थप्राप्तये ।।११२।।

**चट्टि–** सः मुद्गलः अब्जयोनिं ब्रह्माणं अपाहसत् । चतुर्मुखः एनं मुद्गलं शशाप । किमिति? हे मानिन्! अहं कामरहित इत्यभिमानिन्! अभूतये नरकाद्यनर्थप्राप्तये भारत्याद्याः पञ्चदेवीः गच्छेति शशापेति पूर्वेणान्वयः ।।११२।।

**इतीरितस्तं तपसा तोषयामास मुद्गलः ।**
**शापानुग्रहमस्याथ चक्रे कञ्जसमुद्भवः ।।११३।।**

**वरदराजीया–** इति ईरितः शप्तः स मुद्गलः तपसा तं ब्रह्माणं तोषयामास प्रसन्नमकरोत् । अथ तोषणानन्तरं शापानुग्रहं शापानन्तरं अनुग्रहं चक्रे ।।११३।।

**जनार्दनीया–** तं ब्रह्माणम् । कञ्जसमुद्भवः ब्रह्मा । शापानुग्रहं शापानन्तरं शापस्य अनुग्रहस्तमिति वा चक्रे ।।११३।।

**भारतश्री–** शापस्यानुग्रहः शापानुग्रहः तम् ।।११३।।

**चट्टि–** इतीरितः सः मुद्गलः तपसा तं ब्रह्माणं तोषयामास प्रसन्नमकरोत् । अथ अनन्तरं कञ्जसमुद्भवः ब्रह्मा अस्य मुद्गलस्य शापानुग्रहं शापानन्तरं अनुग्रहं चक्रे ।।११३।।

**न त्वं यास्यसि ता देवी मारुतस्त्वच्छरीरगः ।**
**यास्यति त्वं तदा मूर्च्छा गतो नैव विबुद्ध्यसे ।।११४।।**

**वरदराजीया–** अनुग्रहमेव स्पष्टयति– **नेति** ।। ताः भारत्याद्याः देवीः त्वं न यास्यसि । किन्तु त्वच्छरीरगो मारुत एव यास्यति । तदा तद्भोगसमये त्वं तु मूर्च्छां गतः सन् नैव विबुद्ध्यसे न ज्ञास्यसि ।।११४।।

**जनार्दनीया–** अनुग्रहं स्पष्टयति– **न त्वमिति** ।। नैव विबुद्ध्यसे न ज्ञास्यसि ।।११४।।

**भारतश्री–** अनुग्रहं स्पष्टयति– **न त्वमिति** ।। मूर्च्छां देहाभिमानाभावम् ।।११४ ।।

**चट्टि–** ।। **न त्वमिति** ।। ताः भारत्याद्याः देवीः त्वं न यास्यसि । किन्तु त्वच्छरीरगो मारुतो यास्यति । तदा तद्भोगसमये त्वं तु मूर्च्छां गतः सन् नैव विबुद्ध्यसे न ज्ञास्यसि ।।११४।।

**न च पापं ततस्ते स्यादित्युक्ते चैनमाविशत् ।**
**मारुतोऽथेन्द्रसेनां च गृहीत्वाऽथाभवद् गृही ।।११५।।**

**वेदाङ्गतीर्थीया–** अथ मुद्गलशापानुग्रहानन्तरं मारुतः एनं मुद्गलमाविशत् । अथ तत्प्रवेशानन्तरं इन्द्रसेनां गृहीत्वा उद्वह्य अथ मङ्गलतया गृही गृहस्थः अभवत् । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यभिधानम् ।।११५।।

**वादिराजतीर्थीया–** 'न च पापं ततस्ते स्यात्' इत्यत्र शप्यतेऽनेनेति शापं शापवचनं न तु शपनं शापः । अतो न पुल्लिङ्गतानियम इति ज्ञेयम् ।।११५-१३३।।

**वरदराजीया–** ततः कारणात् ते पापं उत्तमस्त्रीसंस्पर्शजन्यं पातकं न स्यात् इत्युक्ते ब्रह्मणा मारुतः एनं मुद्गलं आविशत् । अथ इन्द्रसेनां नलपुत्रीं गृहीत्वा विवाह्य अथ अनन्तरं गृही गृहस्थोऽभवत् ।।११५।।

**भावविवृतिः–** 'न च पापं ततस्ते स्यादित्युक्ते चैनमाविशत्' इत्यत्र शरीरसम्बन्धतश्च ते तव पापं न स्यादित्युक्ते सतीत्यर्थः । द्वितीयश्चशब्दः 'विष्णुवैष्णववाक्याच्च हानिः पापस्य कर्मणः' (ता.नि-२९.४२) इत्याद्युक्तार्थसङ्ग्राहकः ।।११५-१२७।।

**जनार्दनीया–** ततः कारणात् । ते पापं देवाङ्गनासम्बन्धजन्यदोषो न स्यात् । इत्युक्ते मारुतः एनं मुद्गलमाविशत् । अथ प्रवेशानन्तरम् । इन्द्रसेनां गृहीत्वा उद्वह्य, अथ तया गृही गृहस्थोऽभवत् ।।११५।।

**भारतश्री–** पापं देवाङ्गनासम्बन्धजम् । गृहीत्वा उद्वह्य ।।११५।।

**चट्टि–** ततः कारणात् ते पापं उत्तमस्त्रीसंस्पर्शजन्यं पातकं न स्यात् । इत्युक्ते सति, ब्रह्मणा इति शेषः । मारुतः एनं मुद्गलमाविशत् । अथ अनन्तरं सः मारुतः इन्द्रसेनां गृहीत्वा विवाह्य गृही गृहस्थोऽभवत् ।।११५।।

**रेमे च स तया सार्धं दीर्घकालं जगत्प्रभुः ।**
**ततो मुद्गलमुद्बोध्य ययौ च स्वं निकेतनम् ॥११६॥**

**वरदराजीया—** सः जगत्प्रभुः मारुतः तया इन्द्रसेनया सार्धं दीर्घकालं रेमे । ययौ मारुतः ॥११६॥

**जनार्दनीया—** तया इन्द्रसेनया ॥११६॥

**चट्टि—** जगत्प्रभुः मारुतः तया इन्द्रसेनया सार्धं सह दीर्घकालं रेमे च । ततः मुद्गलमुद्बोध्य मारुतः स्वं निकेतनं ययौ च ॥११६॥

**[1]ततो देशान्तरं गत्वा तपश्चक्रे स मुद्गलः ।**
**सेन्द्रसेना वियुक्ताऽथ भर्त्रा चक्रे महत् तपः ॥११७॥**

**वरदराजीया—** देशान्तरम् । इन्द्रसेनां विहायेत्यर्थः । भर्त्रा वियुक्ता वियोगं प्राप्ता ॥११७॥

**भावविवृतिः—** ततो देशान्तरं गत्वा तपश्चक्रे स मुद्गलः । ततः सञ्ज्ञाप्राप्त्यनन्तरं तस्माद्देशादिति वा । भर्त्रा मुद्गलस्थेन वायुना ॥११७-१५३॥

**जनार्दनीया—** भर्त्रा वियुक्ता वियोगं प्राप्ता ॥११७॥

**चट्टि—** ततः सः मुद्गलः देशान्तरं गत्वा तपः चक्रे । अथ भर्त्रा वियुक्ता वियोगं प्राप्ता सेन्द्रसेना महत् अधिकं तपश्चक्रे ॥११७॥

**तद्देहगा भारती तु केशवं शङ्करे स्थितम् ।**
**तोषयामास तपसा कर्मैक्यार्थं हि पूर्ववत् ।**
**उमाद्या रौद्रमेवात्र तपश्चक्रुर्यथा पुरा ॥११८॥**

**वरदराजीया—** तद्देहगा तद्देहस्था । पूर्ववदेव उमाद्याश्च रौद्रं रुद्रसम्बन्ध्येव ॥११८॥

**जनार्दनीया—** तद्देहगा भारती तु शङ्करस्थं केशवं पूर्ववत् कर्मैक्यार्थं तोषयामास । उमाद्याः यथा पुरा तथा चक्रुः ॥११८॥

---

१ 'ततः कदाचिद् धर्मात्मा तृप्तः कामैर्व्यरज्यत । अन्विच्छन् परमं धर्मं ब्रह्मयोगपरोऽभवत् ॥ उत्ससर्ज स तां विप्रः सा तदा चापतद् भुवि' ॥६॥ '..सैवं शप्ता तु विमना वनं प्रागाद् यशस्विनी । भोगैरतृप्ता देवेशं तपसाराधयत् तदा ॥ निराशीर्मारुताहारा निराहारा तथैव च । अनुवर्तमाना त्वादित्यं तथा पञ्चतपाभवत् ॥ तीव्रेण तपसा तस्यास्तुष्टः पशुपतिः स्वयम् । वरं प्रादात् तदा रुद्रः सर्वलोकेश्वरः प्रभुः ॥ भविष्यति परं जन्म भविष्यसि वराङ्गना । भविष्यन्ति परं भद्रे पतयः पञ्च विश्रुताः ॥ महेन्द्रवपुषः सर्वे महेन्द्रसमविक्रमाः ॥' ॥११-१५॥ ...महेश्वर उवाच- 'पञ्चकृत्वस्त्वया चोक्तः पतिं देहीत्यहं पुनः । पञ्च ते पतयो भद्रे भविष्यन्ति सुखावहाः ॥१७॥ आदिपर्वणि-२१३.

**भारतश्री–** केचन वरद्वयमङ्गीकृत्य द्रौपदीजन्मनि देवकीचित्राङ्गदादिजन्मनि च स्वभर्तृयोगं वदन्ति । अस्माभिः विप्रकन्याजन्मनि तपस्तप्तं शिवेन वरो दत्तः तथा द्वितीयजन्मनि नाभूत् इतः परं वा अव्यवहित जन्मन्येव स्वभर्तृयोगो भवतु शिवप्रसादेनेति विचिन्त्य पूर्वं दत्तवरस्य शीघ्रप्राप्त्यर्थं महत्तपश्चक्रे । 'प्रददौ चतुरः पतीन्' इत्यत्रापि अव्यवहितजन्मन्येव ददौ इति ।।११८।।

**चट्टि–** तद्देहगा तद्देहस्था भारती तु शङ्करस्थं केशवं पूर्ववत् कर्मैक्यार्थं तपसा तोषयामास । उमाद्याः पुरा यथा पुरेव रौद्रं रुद्रसम्बन्धि एव तपः चक्रुः ।।११८।।

**प्रत्यक्षे च शिवे जाते तद्देहस्थे च केशवे ।**
**पृथक् पृथक् स्वभर्त्रास्यै ताः पञ्चाप्येकदेहगाः ।**
**[1]प्रार्थयामासुरभवत् पञ्चकृत्वो वचो हि तत् ।।११९।।**

**वेदाङ्गतीर्थीया–** स्वभर्त्रास्यै वरं पृथक् पृथक् प्रार्थयामासुः । तद्वचः पञ्चानां स्वस्वपतिप्रार्थनानुरूपं वचः पञ्चकृत्वः पञ्चवारं अभवत् हि यस्मात् तस्मात् पतिरस्त्विति वचोऽपि पञ्चकृत्वोऽभवत् इति वाक्यशेषः ।।११९।।

**मधुसूदनीया–** अभवत् पञ्चवारमुक्तमिति श्रुतमभवत् । पञ्चभिरुक्तमिव श्रुतम् । शिवेनेति यावदित्यर्थः ।। ११९ ।।

**वरदराजीया–** शिवे उमादीनां प्रत्यक्षे जाते केशवे च भारत्याः प्रत्यक्षे जात इत्यर्थः । एकदेहगा अपि ताः पञ्चदेव्यः पृथक् पृथक् स्वभर्त्रास्यै प्रार्थयामासुः । तद्वचः पतिं देहीति प्रार्थनारूपं वचनं पञ्चकृत्वः पञ्चवारमभवत् ।।११९।।

**लघ्वनन्तभट्टीया–** ।। **पञ्चकृत्व इति** ।। पञ्चकृत्ववचनं दैवादागतमिति ज्ञानानुपपत्तिः ।।११९।।

**जनार्दनीया–**स्वभर्त्रास्यै वरं पृथक् पृथक् प्रार्थयामासुः । तद्वचः पञ्चानां तासां स्वस्वपतियोगप्रार्थनारूपं पञ्चकृत्वः पञ्चवारं अभवत् हि यस्मात् तस्मात् पतिरस्त्विति वचोऽपि पञ्चकृत्वोऽभवदिति वाक्यशेषः ।।११९।।

**ताम्रपर्णीया–** ।। **पृथक्पृथगिति** ।। ननु भारत्याः पतिविघटनप्रसक्त्यभावात् । स्वभर्त्रास्यै तपःकरणं वरदानं च व्यर्थमिति चेत्, स्वभर्त्रातिपदेन स्वभर्त्रा सह विष्णोरनन्ततोषणस्य विवक्षितत्वात् ।। **तत् पञ्चकृत्व इति** ।। पञ्चकृत्वो वचनं दैवादागतमिति तासां ज्ञानान्नानुपपत्तिः ।।११९-१२३।।

**भारतश्री–** पञ्चकृत्वः पञ्चवारमवदत् ।।११९।।

---

१. 'पतिं देहि पतिं देहि पतिं देहि त्रिलोचन । पतिं देहि पतिं देहि पञ्चवारं पतिव्रता' ।।७८।। ..'शिवस्तत्प्रार्थनां श्रुत्वा सस्मितो रसिकेश्वरः । प्रिये तव प्रियाः पञ्च भवन्तीति वरं ददौ' ।।७९।।' इति ब्रह्मवैवर्ते प्रकृतिखण्डे-१४.

**चट्टि–** शिवे उमादीनां प्रत्यक्षे जाते तद्देहस्थे केशवे च भारत्याः प्रत्यक्षे जाते सति एकदेहगा अपि ताः पश्चदेव्यः स्वभर्त्रास्यै वरं पृथक् पृथक् प्रार्थयामासुः । तद्वचः पञ्चानां तासां पतिं देहीति प्रार्थनारूपं वचः पञ्चकृत्वः पञ्चवारं अभवत् ।।११९।।

**शिवदेहस्थितो विष्णुर्भारत्यै तु ददौ पतिम् ।**
**अन्यासां शिव एवाथ प्रददौ चतुरः पतीन् ।।१२०।।**

**वेदाङ्गतीर्थीया–** तत्रायं प्रभेदः । शिवदेहस्थित इत्यादिना भारतीवरदानमुक्ताभिप्रायम् ।।१२०।।

**वरदराजीया–** शिवदेहमास्थितो विष्णुः भारत्यै पतिं ददौ । अथ अनन्तरं अन्यासां उमादीनां चतुरः चतुस्सङ्ख्याकान् पतीन् शिव एव ददौ ।।१२०।।

**जनार्दनीया–** विष्णुः भारत्यै पतिं पत्या सह विष्णोः अनन्ततोषणरूपं वरं पूर्ववद्ददौ । अन्यासां शिव एव चतुरः चतुःसङ्ख्याकान् पतीन् ददौ ।।१२०।।

**भारतश्री–** पतिं पत्या सह विष्णोरनन्ततोषणं वरं पूर्ववद्ददौ । चतुरः चतुःसङ्ख्याकान् ।।१२०।।

**चट्टि–** शिवदेहस्थितः विष्णुः भारत्यै पतिं पत्या सह विष्णोः अनन्ततोषणं वरं पूर्ववद्ददौ । अथ अनन्तरं अन्यासां उमादीनां चतुरः चतुस्सङ्ख्याकान् पतीन् शिव एव प्रददौ ।।१२०।।

**देव्यश्चतस्रस्तु तदा दत्तमात्रे वरेऽमुना ।**
**देवानामवतारार्थं पञ्च देव्यः स्म इत्यथ ।**
**नाजानन्नेकदेहत्वाच्चियोगात् क्षीरनीरवत् ।।१२१।।**

**व्यासतीर्थीया–** न तदा स्मः इति अजानन् ।।१२१।।

**वेदाङ्गतीर्थीया–** चियोगात् चितां परस्परं संश्लेषात् ।।१२१।।

**वादिराजतीर्थीया–** 'देवानामवतारार्थम्' इत्यत्र देवानां धर्मवाय्विन्द्रनासत्याख्यदेवानां भार्यासंयोगानर्हशङ्कराख्यदेवस्य चावतारार्थमित्यर्थः ।।१२१।।

**वरदराजीया–** तदा अमुना शिवेन वरे दत्तमात्रे सति चतस्रः पार्वत्याद्याः देव्यः देवानामवतारार्थं वयं पृथक् पञ्चदेव्यः स्म ह इति न अजानन् न ज्ञातवत्यः । देवानामवतारार्थं न अजानन्निति वा सम्बन्धः । अज्ञाने सति रोदनम्, तेन इन्द्रस्य कोपः, ततो मृषावचनम्, रुद्रस्य ब्रह्मदत्तशापः, ततोऽर्जुनाश्वत्थामादिरूपेण देवानामवतारार्थम् । अज्ञानं तासामित्यर्थः । अज्ञाने हेतुमाह– **चियोगादिति** ।। जीवचितः योगात् मिश्रीभावात् वयं पृथक् पृथक् देव्यः इति ज्ञानं तासां नास्तीत्यर्थः । तत्र दृष्टान्तमाह– **क्षीरनीरवदिति** ।। क्षीरनीरयोः मिश्रीभावात् यथा इदं क्षीरं इदं नीरमिति विवेकज्ञानं नास्ति तथेत्यर्थः ।।१२१।।

**अनन्तभट्टीया–** पञ्चदेवीत्वापरिज्ञाने मुख्यकारणमाह– **देवानामिति** ।। देवानामवतारे एतदाज्ञा परम्परया कारणम् । तच्चोत्तरत्र स्फुटीभविष्यति । चियोगात् ज्ञानस्य[1] मिश्रितत्वात् ।।१२१।।

**लघ्वनन्तभट्टीया–** देवानामवतारार्थमिति पूर्वत्र सम्बन्धः । अथवा देवानां स्वभर्तॄणां अवतारार्थं सम्बन्धार्थं वयं पञ्च देव्य इति नाजानन्नित्यर्थः । चियोगात् अप्रतिघातत्वेन चेतनानां समावेशात् । मत्यैक्यात् इति केचिदाहुः ।।१२१।।

**जनार्दनीया–** अमुना रुद्रेण वरे दत्तमात्रे दत्त एव सति चतस्रः पार्वत्याद्याः देवानामवतारार्थं वयं पृथक् पञ्चदेव्यः स्म इति नाजानन् नाज्ञासिषुः । तत्कुतः? एकदेहत्वात्, चियोगात् जीवचितां परस्परं संश्लेषात् अहमेवैकैवेति ज्ञानात् रोदनम्, तेनेन्द्रस्य रुद्रशापस्ततो रुद्रस्य मृषावचनम्, तेन रुद्रस्य ब्रह्मदत्तः शापस्ततोऽर्जुनाश्वत्थामादिरूपेण देवानामवतारार्थं अज्ञानं तासामित्यर्थः ।।१२१।।

**ताम्रपर्णीया–** ।। **देव्य इति** ।। चतस्रो देव्यस्तदा तपःकरणानन्तरं अमुना वरे दत्तमात्रे रुरुदुरित्यर्थः। रोदने हेतुमाह– **अथेति** ।। यस्मादेकस्याः स्वस्याः पञ्चभर्तृतां मेनिरे अथ तस्मात् रुरुदुरित्यर्थः ।।१२१।।

**भारतश्री–** चियोगात् जीवानां परमसूक्ष्मदेहानां एकत्रयोगात् । क्षीरनीरवत् यथा क्षीरं नीरं च एकत्र स्थितं मिश्रितं स्थूलदृष्टिभिः न ज्ञायते । तथा अहमेकैव इत्यज्ञानात् रोदनम्, तेनेन्द्रस्य रुद्रशापः, ततो रुद्रस्य मृषावचनम्, तेन रुद्रस्य ब्रह्मशापः, ततोऽर्जुनाश्वत्थामादिरूपेण देवानामवतारार्थं तासामज्ञान-मित्यर्थः ।।१२१।।

**चट्टि–** अमुना रुद्रेण वरे दत्तमात्रे दत्त एव सति तदा चतस्रः पार्वत्याद्याः देव्यः देवानामवतारार्थं वयं पृथक् पृथक् पञ्चदेव्यः स्म इति नाजानन् नाज्ञासिषुः । तत्कुतः? एकदेहत्वात्, चियोगात् क्षीरनीरवत् जीवचितां योगात् परस्परं संश्लेषात्, अहमेवैकैवेति अज्ञानात् रोदनम्, तेनेन्द्रस्य रुद्रशापः, ततो रुद्रस्य मृषावचनम्, तेन रुद्रस्य ब्रह्मदत्तशापः, ततोऽर्जुनाश्वत्थामादिरूपेण देवानामवतारार्थं अज्ञानं तासामित्यर्थः ।।१२१।।

**ताः श्रुत्वा स्वपतिं देवि नचिरात् प्राप्स्यसीति च ।**
**विष्णूक्तं शङ्करोक्तं च चत्वारः पतयः पृथक् ।।१२२।।**

**वेदाङ्गतीर्थीया–** विष्णूक्तं शङ्करोक्तं च पञ्चकृत्वः उपपन्नं वचनं श्रुत्वा, अथ तद्वचनश्रवणानन्तरम्, अस्मिन् देहे अहमेवैकैवेति स्थिताः एवं मन्वानाः । पृथक् पृथक् इति भावः ।।१२२।।

**वादिराजतीर्थीया–** 'ताः श्रुत्वा स्वपतिं देवि' इत्यत्र हे देवि! स्वपतिं नचिरात् प्राप्स्यसीति सकृद्विष्णूक्तं चतुर्वारं शङ्करोक्तं चेति मिलित्वा पञ्चकृत्वः वचनं श्रुत्वा पृथक् स्वस्वपतिभ्यः पृथक् चत्वारः पतयो भविष्यन्तीत्येकस्याः पञ्चभर्तृतां मेनिर इति योजना ।।१२२।।

---

१. 'जीवस्य' इति क्वचित् ।

**वरदराजीया—** ताः देव्यः देवी भारती च । स्वपतिं नचिरात् विलम्बं विना शीघ्रमेव प्राप्स्यसि इति भारतीं प्रति विष्णूक्तं तथा पार्वत्याद्याः प्रति चत्वारः पतयः पृथग्भविष्यन्तीति शङ्करोक्तञ्च श्रुत्वा एकस्याः पञ्चभर्तृतां पञ्चभर्तृत्वं मेनिरे । अहमेकैव एकस्यै मह्यं पञ्चभर्तारो अनेन दत्ता इति प्रत्येकं मेनिरे इति भावः ।।१२२।।

**अनन्तभट्टीया—** ताः श्रुत्वा एकस्याः पञ्चभर्तृतां मेनिरे इति सम्बन्धः । देवि! हे भारति! स्वपतिं प्राप्स्यसीति शिवेनोक्तमिति[१] । भारतीं प्रति विष्णूक्तम् । चत्वारः पतयः भविष्यन्तीति पृथक् शङ्करोक्तमित्यन्वयः ।।१२२।।

**जनार्दनीया—** ताः देव्यः । देवि भारति! 'नचिरात् शीघ्रं स्वपतिं प्राप्स्यसि' इति भारतीं प्रति विष्णूक्तं च । तथा पृथक् चत्वारः पतयः भविष्यन्ति इति शङ्करोक्तं च । पञ्चकृत्वः उत्पन्नं वचनं श्रुत्वा, अथ तद्वचनश्रवणानन्तरम् । एकस्याः पञ्चभर्तृतां मेनिरे इत्यन्वयः ।।१२२।।

**ताम्रपर्णीया—** पञ्चभर्तृताज्ञाने कारणमाह— **ता इति** ।। देवि! स्वपतिं नचिरात् प्राप्स्यसीति विष्णूक्तं चत्वारः पतयः पृथग्भविष्यन्तीति शङ्करोक्तञ्च श्रुत्वा पञ्चभर्तृतां मेनिर इति योजना । देवि! स्वपतिं नचिरात् प्राप्स्यसि चत्वारः पतयः पृथग्भविष्यन्तीति रुद्रमुखेन निःसृते स्वपत्यतिरिक्ताश्चत्वारः पतित्वेनोक्ता इति भ्रान्त्या रुरुदुरिति भावः । एकैकस्या एकैको भर्तेति ज्ञानासम्भवात् । कुतो भ्रान्ता इत्यत आह— **पञ्च देव्य इति** ।। यस्मात् पञ्चदेव्यः एकदेहस्था स्म इति तदा नाजानन् प्रत्युत एकैवाहमिति स्थिताः निश्चयवत्यः अथ तस्मात् एकस्या मेनिरे पञ्चभर्तृतामिति योजना । पञ्चदेव्यः स्म इत्यज्ञानकारणमाह— **एकदेहत्वात् क्षीरनीरवद्वियोगात् अप्रतिघातत्वेन चेतनानां योगात् देवानां अवतारार्थं चेति** ।। 'पञ्चदेव्यः स्मः' इति ज्ञाने रोदनाभावेन इन्द्रानागमने च इन्द्ररुद्रयोः शापाभावेन तदनुत्पत्तिः 'मृषा वाक् येषु' इति वक्ष्यमाणरीत्या अन्यदेवतोत्पत्तिश्च न स्यात् । अतस्तदर्थं ईश्वर एव मोहयामासेति भावः । यद्वा 'देवानामवतारार्थम्' इति पूर्वत्र सम्बध्यते । केचित्तु- 'चियोगादित्यस्य मत्यैक्यात्' इत्यर्थमाहुः ।।१२२।।

**चट्टि—** ताः देव्यः । हे भारति! नचिरात् शीघ्रं स्वपतिं प्राप्स्यसि इति भारतीं प्रति विष्णूक्तं तथा पार्वत्याद्याः प्रति चत्वारः पतयः पृथक् भविष्यन्तीति शङ्करोक्तं वचनं श्रुत्वा, अथ अनन्तरं एकस्याः पञ्चभर्तृतां मेनिरे इत्यन्वयः ।।१२२।।

**भविष्यन्तीत्यथैकस्या मेनिरे पञ्चभर्तृताम् ।**
**[२]रुरुदुश्चैकदेहस्था एकैवाहमिति स्थिताः ।।१२३।।**

---

१. 'एकैकां प्रति स्वपतिं प्राप्स्यसीति शिवोक्तमिति' इति क्वचित्

२. 'इत्युक्ता विश्वरूपेण रुद्रं कृत्वा प्रदक्षिणम् । जगाम गङ्गामुद्दिश्य पुण्यां त्रिपथगां नदीम् ।।' आदिपर्वणि-२१३.२९.

**वादिराजतीर्थीया–** रुरुदुः सर्वज्ञभारतीव्यतिरिक्ताः पार्वत्याद्याः ।।१२३-१२६।।

**वरदराजीया–** अत एव एक एवाहमिति स्थिताः निश्चययुक्ताः। तत्र हेतुः– **एकदेहस्था इति** ।।१२३।।

**जनार्दनीया–** अस्मिन् देहे अहमेकैवेति स्थिता एवं पृथक् पृथक् मन्वाना एकदेहस्था उमाद्याः रुरुदुः ।।१२३।।

**चट्टि–** अस्मिन् देहे अहमेकैवेति स्थिता एवं पृथक् पृथक् मन्वाना एकदेहस्था उमाद्याः रुरुदुश्च ।।१२३।।

**[1]अथाभ्यगान्महेन्द्रोऽत्र सोऽब्रवीत् तां वरस्त्रियम् ।**
**किमर्थं रोदिषीत्येव साऽब्रवीत् वटुरूपिणम् ।।१२४।।**

**वरदराजीया–** महेन्द्रो अत्र रोदनावसरे अभ्यागात् । सः महेन्द्रः किमर्थं रोदिषि इत्येवाब्रवीत् । सा इन्द्रसेना वटुरूपिणं शङ्करं दर्शयित्वैव अब्रवीत् ।।१२४।।

**चट्टि–** अथ महेन्द्रः अत्र अवसरे अभ्यागात् । सः इन्द्रः किमर्थं रोदिषि इत्येवं तां वरस्त्रियं अब्रवीत् ।।१२४।।

**शङ्करं दर्शयित्वैव पञ्चभर्तृत्वमेष मे ।**
**वरार्थमर्थितः प्रादादिति तं शिव इत्यथ ।।१२५।।**

**वेदाङ्गतीर्थीया–** वरार्थं स्वभर्त्रादिप्रदानार्थम् ।।१२५।।

**वरदराजीया–** एषः वटुः वरार्थं मे मया अर्थितः प्रार्थितः पञ्चभर्तृतां प्रादादिति पूर्वेणान्वयः ।

**अनन्तभट्टीया–** वरार्थं पत्यर्थं वरायेति वाऽर्थः । पञ्चभर्तृतां प्रादात् ।।१२५।।

**लघ्वनन्तभट्टीया–** वरार्थं वराय पत्यर्थमित्यप्याहुः ।।१२५।।

**जनार्दनीया–** वटुरूपिणं शङ्करं दर्शयित्वा, वरार्थं स्वभर्त्राप्तिवरदानार्थं प्रार्थितः एषः मे पञ्चभर्तृत्ववरं प्रादादिति अब्रवीत् ।।१२५।।

**ताम्रपर्णीया–** वरार्थं वराय पत्यर्थं वा ।।१२५-१३०।।

**चट्टि–** सा वटुरूपिणं शङ्करं दर्शयित्वैव एषः वटुः मे मया वरार्थं स्वभर्तृप्राप्तिवरदानार्थं अर्थितः सन् पञ्चभर्तृत्वं वरं प्रादादिति अब्रवीत् ।।१२५।।

---

सा तत्र योषा रुदती जलार्थिनी गङ्गां देवीं व्यवगाह्य व्यतिष्ठत् । तस्याश्रुबिन्दुः पतितो जले यस्तत्पद्ममासीदथ तत्र काञ्चनम् ।। तदद्भुतं प्रेक्ष्य वज्री तदानीमपृच्छत् तां योषितमन्तिकाद्वै । का त्वं भद्रे रोदिषि कस्य हेतोः वाक्यं तथ्यं कामयेऽहं ब्रवीहि ।।' आदिपर्वणि- २१४.११-१२.

१. आदिपर्वणि २१४. १४-३६.

[1]अजानन् शक्र आहोचैः किमेतद् भुवनत्रये ।
मत्पालिते योषितं त्वं वृथा शपसि दुर्मते ।।१२६।।

**वरदराजीया–** तं वटुं शिव इत्यजानन् शक्र उच्चैराह । किमिति? मत्पालिते भुवनत्रये किमेतत्? एतत् किं? न्याय्यं न भवतीत्यर्थः । 'एतत्' इत्युक्तं दर्शयति– **योषितमिति** ।। हे दुर्मते! इमां योषितं स्त्रियं वृथा अपराधं विना शपसि ।। १२६ ।।

**जनार्दनीया–** शक्रः तं वटुरूपिणं शिव इति अजानन् उच्चैराह । एतत् किमन्याय्यं भवतीत्यर्थः । 'एतत्' इत्युक्तं दर्शयति– **योषितमिति** ।। वृथा अपराधं विना । शपसि शप्स्यसि ।।१२६।।

**चट्टि–** अथ शक्रः तं वटुरूपिणं शिव इति अजानन् उच्चैराह । किमिति? मत्पालिते भुवनत्रये एतत् किम्? न्याय्यं न भवतीत्यर्थः । 'एतत्' इत्युक्तं दर्शयति– **योषितमिति** ।। हे दुर्मते! त्वं योषितं स्त्रियं वृथा अपराधं विना शपसि ।।१२६।।

इतीरिते शिवः प्राह पत मानुष्यमाप्नुहि ।
अस्याश्च भर्ता भवसि त्वामेवैषा वरिष्यति ।।१२७।।

**वादिराजतीर्थीया–** 'त्वामेवैषा वरिष्यति' इत्यत्र एषा द्रौपदीदेहस्था शची त्वामेव वरिष्यतीत्यर्थः । अत एव स्वयंवरे द्रौपदी अर्जुनकण्ठ एव मालां ददाविति ज्ञेयम् ।।१२७-१३३।।

**वरदराजीया–** इति ईरिते इन्द्रेण शिवः प्राह । किमिति– **पतेति** ।। पतनमेव स्पष्टयति– **मानुष्यमिति** ।। अस्याः स्त्रियः भर्ता भवसि । एषा त्वामेव वरिष्यति परिगृह्णीयात् ।। १२७ ।।

**जनार्दनीया–** शिवः प्राह किमिति? पत, स्वर्लोकादिति शेषः । मानुष्यं मनुष्यदेहम् । वरिष्यति परिग्रहिष्यति ।।१२७।।

**चट्टि–** इन्द्रेण इतीरिते सति शिवः प्राह । किमिति? पत, स्वलोकादिति शेषः । मानुष्यं मनुष्यदेहं आप्नुहि । त्वमस्याः भर्ता भवसि भविष्यसि । एषा त्वामेव वरिष्यति परिग्रहिष्यति ।।१२७।।

[2]पश्यात्र मदवज्ञानात् पतितांस्त्वादृशान् सुरान् ।
गिरेरधस्तादस्यैवेत्युक्तोऽसौ पाकशासनः ।।१२८।।

---

१. 'तां गच्छन्तीमन्वगच्छत् तदानीं सोऽपश्यदारात् तरुणं दर्शनीयम् । सिद्धासनस्थं युवतीसहायं क्रीडन्तमक्षै-र्गिरिराजमूर्धनि ।। तमब्रवीद्देवराजो ममेदं त्वं विद्धि विद्वन् भुवनं वशे स्थितम् । ईशोऽहमस्मीति समन्युरब्रवीद् दृष्ट्वा तमक्षैः सुभृशं प्रमत्तम् ।।' आदिपर्वणि-२१४.१४-१५.

२. 'निवर्तयैनं च महाद्रिराजं बलं च वीर्यं च तवाप्रमेयम् । छिद्रस्य चैवाविश मध्यमस्य यत्रासते त्वद्विधाः सूर्यभासः ।।' आदिपर्वणि-२१४.१९.

**वरदराजीया–** स्वयमपि शापं गृहीतुमाह– **पश्येत्यादिना** ।। अत्रेत्यस्य विवरणं अस्य गिरेः समीपवर्तिनः पर्वतस्याधस्तात् अधः मदवज्ञानात् मम द्रोहात् पतितान् त्वादृशान् त्वत्सदृशान् सुरान् पश्येत्युक्तः पाकशासनः इन्द्रः तं गिरिं उद्ववर्ह उत्पाटितवान् ।।१२८।।

**अनन्तभट्टीया–** त्वादृशान् प्राप्तेन्द्रपदानित्यर्थः । तद्घटयितुं 'पूर्वेन्द्रान्' इत्युक्तम् ।।१२८।।

**लघ्वनन्तभट्टीया–** ।। **मदवज्ञानादिति** ।। मां दृष्ट्वाऽनुत्थितानेतान् अनुत्थानलक्षणावज्ञानात् भूमावुत्पत्तुं गिरेरधस्तात् पतितानित्यर्थः । एतेन 'एते हि मारुताद्याः' इति वक्ष्यमाणमुपपन्नं भवतीति द्रष्टव्यम् ।।१२८।।

**जनार्दनीया–** मदवज्ञानात् मम द्रोहात् । त्वादृशान् त्वत्सदृशान् प्राप्तेन्द्रपदानित्यर्थः ।।१२८।।

**ताम्रपर्णीया–** ।। **मदवज्ञानादिति** ।। मां दृष्ट्वाप्यनुत्थिता एत इत्यनुत्थानलक्षणमदवज्ञानाद् भूमौ उत्पत्तुं गिरेरधः पतितानित्यर्थः । तेन 'एते हि मारुताद्याः'(१३७) इति वक्ष्यमाणमुपपन्नं भवतीति ज्ञेयम् ।।१२८।।

**चट्टि–** मदवज्ञानात् मम द्रोहात् अत्र स्थले अस्यैव गिरेरधस्तात् पतितान् त्वादृशान् त्वत्सदृशान् प्राप्तेन्द्रपदानित्यर्थः । सुरान् पश्येत्युक्तो असौ पाकशासनः इन्द्रः तं गिरिं उद्ववर्ह उत्पाटितवान् । अत्र गिरेरधस्थान् । तान् सुरांश्च ददर्श ।।१२८।।

**उद्ववर्ह गिरिं तं तु [१]ददर्शात्र च तान् सुरान् ।**
**पूर्वेन्द्रान् मारुतवृषनासत्यांश्चतुरः स्थितान् ।**
**मानुषेष्ववताराय मन्त्रं रहसि कुर्वतः ।।१२९।।**

**व्यासतीर्थीया–** [२]त्वादृशानित्यत आह– **पूर्वेन्द्रानिति** ।। वृषो धर्मः ।।१२९।।

**वेदाङ्गतीर्थीया–** अत्र स्थितान् चतुरः सुरान् ।।१२९।।

**वरदराजीया–** अत्र गिरेरधस्तात् तान् सुरान् ददर्श । 'तान्' इत्युक्तं विवृणोति– **पूर्वेन्द्रानिति** ।। पूर्वमन्वन्तरे इन्द्रान् अत एव 'त्वादृशान्' इत्युक्तम् । मारुतो वायुः, वृषो यमः, नासत्यौ अश्विनौ इति चतुरः चतुःसङ्ख्याकान् । ते तत्र किमर्थं स्थिता इत्यत आह– **मानुषेष्विति** ।। मानुषेषु जनेषु अवतारार्थं अवतारं कर्तुं रहसि एकान्ते मन्त्रं विचारं कुर्वतः कुर्वाणान् ।।१२९।।

---

१. 'स तद्विवृत्य विवरं महागिरेस्तुल्यद्युतींश्चतुरोऽन्यान ददर्श । स तानभिप्रेक्ष्य बभूव दुःखितः कच्चिन्नाहं भविता वै यथेमे ।।' आदिपर्वणि-२१४.२०.

२. 'त्वादृशान्' इत्येतद् घटयन्नाह– **पूर्वेन्द्रानिति** ।। इति स्यात् ।

**अनन्तभट्टीया–** वृषो यमः ॥१२९॥

**लघ्वनन्तभट्टीया–** त्वादृशानित्येतत् घटयन्नाह– **पूर्वेन्द्रानिति** ॥१२९॥

**जनार्दनीया–** पाकशासनः इन्द्रः उद्ववर्ह उच्चाटितवान् । अत्र गिरेरधः तान् सुरान् ददर्श । 'तान्' इत्युक्तं विवृणोति– **पूर्वेन्द्रानिति** ॥ पूर्वेन्द्रान् पूर्वमन्वन्तरेषु इन्द्रान् । अत एव 'त्वादृशान्' इत्युक्तम् । वृषो यमः । इति चतुरः चतुःसङ्ख्यान् रहसि एकान्ते मन्त्रं विचारं कुर्वतः कुर्वाणान् ॥१२९॥

**ताम्रपर्णीया–** 'त्वादृशान्' इत्येतद्घटयितुमाह– **पूर्वेन्द्रानिति** ॥१२९॥

**चट्टि–** 'तान्' इत्युक्तं विवृणोति– **पूर्वेन्द्रानिति** ॥ पूर्वेन्द्रान् पूर्वमन्वन्तरे इन्द्रान् । अत एव 'त्वादृशान्' इत्युक्तम् । मारुतो वायुः, वृषो यमः, नासत्यौ अश्विनौ इति चतुरः चतुःसङ्ख्यान् तत्र स्थितान् । ते तत्र किमर्थं स्थिता इत्यत आह– **मानुषेष्विति** ॥ मानुषेष्ववतारार्थं अवतारं कर्तुं रहसि एकान्ते मन्त्रं विचारं कुर्वतः कुर्वाणान् ददर्शेति पूर्वेण सम्बन्धः ॥१२९॥

**[१]ततो वरेण्यं वरदं विष्णुं प्राप्य स वासवः ।**
**तत्प्रसादान्नरांशेन युक्तो भूमावजायत ॥१३०॥**

**व्यासतीर्थीया–** वरेण्यं वरणीयम् ॥१३०-१३७॥

**वेदाङ्गतीर्थीया–** वरेण्यं उत्तमैः प्राप्यम् ॥१३०॥

**वरदराजीया–** ततोऽनन्तरं वरेण्यं वरणीयं विष्णुं प्राप्य तपसा तोषयित्वा सः वासवः इन्द्रः तस्य विष्णोः प्रसादात् नरस्य शेषात्मकस्य अंशेन युक्तः सन् अजायतेत्यर्थः । अर्जुनत्वेन अवततारेति भावः ।

**अनन्तभट्टीया–** वरेण्यं वरणीयम् ॥१३०॥

**जनार्दनीया–** वरेण्यं उत्तमैः प्राप्यम् । तपसा आराधयित्वा, तत्प्रसादाद्विष्णोः प्रसादात् । नरांशेन नरस्य हरिवायुशेषांशेन ॥१३०॥

**चट्टि–** ततो अनन्तरं सः इन्द्रः वरेण्यं वरणीयं वरदं श्रीविष्णुं प्राप्य तं तपसा तोषयित्वा तस्य श्रीविष्णोः प्रसादात् नरांशेन नरस्य हरिवायुयुक्तस्य शेषस्य अंशेन युक्तः सन् भूमौ अजायत ॥१३०॥

**मदवज्ञानिमित्तेन पतिता इति तान् सुरान् ।**
**मारुतादीन् मृषाऽवादीरिति ब्रह्मा शिवं तदा ॥१३१॥**

---

१. 'तैरेव सार्धं तु ततः स देवो जगाम नारायणमप्रमेयम् । अनन्तमव्यक्तमजं पुराणं सनातनं विश्वमनन्तरूपम् ॥ स चापि तद्व्यदधात् सर्वमेव ततः सर्वे सम्बभूवुर्धरण्याम् । नरं तु देवं विबुधप्रधानमिन्द्राज्जिष्णुं पञ्चमं कल्पयित्वा ॥' आदिपर्वणि-२१४.३१-३२.

**वेदाङ्गतीर्थीया–** मृषा असत्यम् ।।१३१।।

**वरदराजीया–** इदानीं मृषावादापराधेन ब्रह्मदत्तशिवशापप्रकारमाह– **मदवज्ञेति** ।। मारुतादीन् सुरान् प्रति मदवज्ञानिमित्तेन एते पतिता इति मृषा मिथ्यैव अवादीः उक्तवानसि इत्युक्त्वा ब्रह्मा शिवं शशाप ।।१३१।।

**जनार्दनीया–** इदानीं मृषोक्तेः शिवस्य ब्रह्मदत्तशापप्रकारमाह– **मदवज्ञेति** ।। सुरान् प्रति मदवज्ञानिमित्तेन मम द्रोहनिमित्तेन । एते पतिताः इति मृषावादीरिति ब्रह्मा शिवं शशाप ।।१३१।।

**भावचन्द्रिका–** ।। **अवज्ञानात्** ।। (अनुत्थानपुरुषादास्त इति) । एतद्वक्ष्यमाणप्रमाणरीत्या मृषा-वचनप्रकार एवं मानुषेषु मध्ये को जातः । पश्य देवतातनुरिति चतुर्जन्मप्रसक्तिमुक्त्वा द्रौपदीत्व-पर्यन्तमेवोक्तम् । तन्मात्रस्य प्रकृतसङ्गतत्वात् । एकजन्म विशिष्य नोक्तमिति ज्ञेयम् । परन्तु चरमाध्यायोक्तरीत्या...मुद्गलवद् वाय्वादेर्नान्यगामित्वं भविष्यति । एतत्कलियुगो...।।१३१।।[1]

**चट्टि–** इदानीं मृषावादापराधेन शिवस्य ब्रह्मदत्तशापप्रकारमाह– **मदवज्ञेति** ।। मारुतादीन् सुरान् प्रति मदवज्ञानिमित्तेन मम द्रोहनिमित्तेन । एते पतिताः इति मृषा अवादीरिति ब्रह्मा शिवं शशाप ।।१३१।।

> **शशाप मानुषेषु त्वं क्षिप्रं जातः पराभवम् ।**
> **शक्रान्नरतनोर्यासि यस्मै त्वं तु मृषाऽवदः ।।१३२।।**

**वेदाङ्गतीर्थीया–** यस्मै इन्द्राय । नरतनोः नरेषूत्पन्नात् तस्मात् शक्रात् पराभवं यासि ।।१३२।।

**वरदराजीया–** किमिति? मानुषेषु लोकेषु त्वं क्षिप्रं शीघ्रं जातः सन् नरतनोः अर्जुनात् शक्रात् शक्रात्मजात् पराभवं पराजयं यासि प्राप्नोषि । तत्र कारणमाह– **यस्मा इति** ।। यस्मै शक्राय शक्रं प्रतीति यावत् । अनृतं अवदः अवादीः ।।१३२।।

**अनन्तभट्टीया–** मानुषेषु जन्मसु ।।१३२।।

**जनार्दनीया–** किमिति? त्वं मानुषेषु मनुष्यलोकेषु क्षिप्रं प्रजातः सन् नरतनोः नरेषूत्पन्नात् अर्जुनस्वरूपाच्छक्रात् पराभवं पराजयं यासि यास्यसि । तत्कारणमाह– **यस्मा इति** ।। यस्मै शक्राय मृषा अवदः अवादीः ।।१३२।।

**चट्टि–** किमिति? मानुषेषु मनुष्यलोकेषु त्वं क्षिप्रं जातः सन् नरतनोः नरेषूत्पन्नादर्जुनस्वरूपाच्छक्रात् पराभवं पराजयं यासि प्राप्नोषि । तत्र कारणमाह– **यस्मा इति** ।। यस्मै शक्राय मृषा अवदः अवादीः ।।१३२।।

---

१. मूलकोशेषु एतानि वाक्यान्यतीवास्पष्टानि । यथा दृश्यते तथैव मुद्रितम् ।

**मच्छप्तानां च देवीनामविचार्य मया यतः ।**
**पतियोगवरं प्रादा नावाप्स्यसि ततः प्रियाम् ॥१३३॥**

**वेदाङ्गतीर्थीया–** मया सह अविचार्य, मच्छप्तानां पतियोगवरं प्रादाः यतः । अतो मानुषेषु स्थितः प्रियां नावाप्स्यसि इति ब्रह्मा तदा शिवं शशाप ॥१३३॥

**वरदराजीया–** अन्योऽप्यपराधोऽस्ति तेन अन्यमपि शापं गृहाणेत्याह– **मच्छप्तानामिति** ॥ 'तत्र अन्यगाश्च भवत' इति मया शप्तानां देवीनां पार्वत्यादीनां मया साकमविचार्य मदाज्ञामगृहीत्वेत्यर्थः । पतियोगाख्यं वरं प्रादाः । चत्वारः पतयो भविष्यन्तीति पतियोगं दत्तवानसि । यतः ततः अपराधात् प्रियां भार्यां मानुषेष्ववतारे नावाप्स्यसि ॥१३३॥

**जनार्दनीया–** मया सह अविचार्य, मच्छप्तानां च देवीनां पतियोगवरं प्रादाः यतः । अतो मानुषेषु स्थितस्त्वं प्रियां न यास्यसि इति ब्रह्मा तदा शिवं शशाप ॥१३३॥

**ताम्रपर्णीया–** अविचार्य मया, सहेति शेषः । ननु चतुर्मुखशापानुसारेण इन्द्रसेनादेहे अन्यगात्वस्य प्राप्तत्वात् तदनन्तरभाविरुद्रवरस्य कथं तच्छापविघटकत्वं येन मच्छप्तानामित्यादि घटते? स्वपति-वियोगस्य ब्रह्मणा दत्तत्वादिति चेन्न । जन्मत्रये एकदेहस्थिततया मानुष्यशापस्य पतिवियोगाभावा-भिप्रायकत्वात् । अन्यथैकदेहस्थितानां मध्ये एकस्याः स्वभर्तृसंयोगस्यान्यासामन्यगात्वं विनानुपपत्तेः, एकस्मिन् देहे अन्यगात्वं स्यादिति स्वोक्तिर्वन्ध्या स्यात् । द्रौपदीदेहे तु विशेषं वक्ष्यतीति ज्ञेयम् ॥१३३-१३७॥

**चट्टि–** मया सह अविचार्य, मच्छप्तानां च देवीनां पतियोगवरं प्रादाः यतः अतो मानुषेषु स्थितस्त्वं प्रियां भार्यां न अवाप्स्यसि ॥ १३३॥

**मानुषेषु ततः पश्चाद् भारतीदेहनिर्गताम् ।**
**स्वलोके प्राप्स्यसि स्वार्थे वरोऽयं ते मृषा भवेत् ॥१३४॥**

**व्यासतीर्थीया–** मानुषेषु जन्मसु ॥१३४॥

**वेदाङ्गतीर्थीया–** ततः पश्चात् उमायास्तव च मानुषत्वनिवृत्त्यनन्तरं भारतीदेहात् निर्गतां उमां स्वलोके कैलासे, रुद्रभूतस्त्वमिति भावः । प्राप्स्यसि । स्वार्थे स्वविषये । ते अयं त्वया दत्तवरः उमायाः पतियोगवरः मृषा भवेत् ॥१३४॥

**वादिराजतीर्थीया–** 'स्वार्थे वरोऽयं ते मृषा भवेत्' इत्यत्र वरः स्वपतिं देवि नचिरात् प्राप्स्यसीति वरः । स्वार्थे हे शङ्कर! त्वदर्थे मृषा भविष्यति । द्रौपदीदेहस्थपार्वतीं प्रति तया त्वं न प्राप्स्यसीत्यर्थः । 'वरं स्वभर्तृसंयोगं मानुषेष्वपि जन्मसु' (ता.नि-१८.१०९) इति वचनात् सकलमानुषजन्मसु साधारण्येन

पतिप्राप्तिवरे दत्तेऽपि 'स्वपतिं देवि नचिरात् प्राप्स्यसि' इति वचनात् एतस्माद् द्वितीयजन्मन्येव स्वपतिप्राप्त्यर्थं पुनस्तपःकरणमिति ज्ञेयम् ।।१३४-१३५।।

**वरदराजीया–** 'मानुषेषु' इत्युक्तस्य व्यावर्त्यमाह– **तत इति** ।। तदनन्तरं मानुषावतारानन्तरं लोके स्वलोके पश्चात् भारतीदेहनिर्गतां पार्वतीं मूलरूपेण प्राप्स्यसि । अतः स्वार्थे स्वार्थविषये वरः पार्वत्याः पतियोगवरः इति यावत् । मृषा भवेत् सत्यो न भवेत् । शच्यादित्रयविषये वरः सत्यो भवतु इति हृदयम् ।।१३४।।

**अनन्तभट्टीया–** निर्गतां प्रियाम् । स्वार्थे पार्वत्याः स्वभर्तृप्राप्तौ । मृषा असत्यः ।।१३४।।

**जनार्दनीया–** ततः पश्चात् उमायाः मानुषत्वनिवृत्त्यनन्तरं भारतीदेहनिर्गतां उमां स्वलोके कैलासे, रुद्रभूतस्त्वमिति भावः । प्राप्स्यसि । स्वार्थे स्वविषये, ते अयं त्वया दत्तो वरः उमायाः पतियोगवरः मृषा भवेत् ।।१३४।।

**भारतश्री–** वरोऽयं ते मृषा भवेत् । 'एकदेशेन सत्यं तु योग्येष्वपि कदाचन'(ता.नि-९.३७) इति ह्युक्तम् ।।१३४।।

**चेट्टी–** ततः पश्चादुमायाः मानुष्यनिवृत्त्यनन्तरं भारतीदेहात् निर्गतां उमां स्वलोके कैलासे प्राप्स्यसि । रुद्ररूपस्त्वं इति भावः । स्वार्थे स्वविषये, अयं त्वया दत्तो वरः उमायाः पतियोगवरः मृषा भवेत् । इति ब्रह्मा शिवं शशापेति पूर्वेण सम्बन्धः ।।१३४।।

**एषा सा द्रौपदी नाम पञ्चदेवीतनुर्भवेत् ।**
**मृषावाग् येषु ते प्रोक्ता मारुताद्यास्तु तेऽखिलाः ।।१३५।।**

**व्यासतीर्थीया–** पञ्चदेवीतनुः सैषा द्रौपदी नाम भवेत् ।।१३५।।

**वेदाङ्गतीर्थीया–** पञ्चदेवीतनुः सैषा त्वया दत्तवरा एषा इन्द्रसेना द्रौपदीनाम भवेत् । येषु यद्विषये मारुतादीनुद्दिश्य इन्द्रं प्रतीति भावः । ते त्वया मृषावागसत्यवाणी प्रोक्ता ते अखिलाः धर्माद्या एवेति भावः ।।१३५।।

**वरदराजीया–** एतदेव स्पष्टयति । पञ्चदेव्यात्मिका द्रौपदीति नाम्ना प्रसिद्धा भवेत् । येषु सुरेषु ते त्वया मृषावाक् अनृतवचनं प्रोक्ता उक्तम्, ते सुराः मारुताद्याः अखिलाः तासां भारत्यादीनां पतित्वमाप्स्यन्ति ।।१३५।।

**जनार्दनीया–** पञ्चदेवीतनुः सैषा त्वया दत्तवरा एषा इन्द्रसेना द्रौपदीनाम भवेत् । येषु येषां विषये मारुतादीनुद्दिश्येति भावः । ते त्वया मृषा वागसत्यवाणी प्रोक्ता ते अखिलाः मारुताद्याः वायुयमाद्याः तासां भारत्यादीनां पतित्वं आप्स्यन्ति । पार्वती भारत्या संयुक्ता व्यवहारेष्वेव हानोपादानादिव्यवहारेष्वेव प्रवर्तेत । अन्यथा इतरदेवीवत् पतिप्राप्तितया च न प्रवर्तेत ।।१३५-१३६।।

**ताम्रपर्णीया–** ।। **एषा सेति** ।। सैषा द्रौपदीनाम पञ्चदेवीतनुर्भवेदित्यर्थः । केचित्तु- 'सैषा पञ्चदेवीतनुः द्रौपदीनाम भवेत्' इत्याहुः ।। **मृषेति** ।। न च नेदं रुद्रस्यानिष्टं स्वपतिसंयोगवराप्रतिवन्धकत्वादिति वाच्यम् । विविक्तदेहेषु स्वपतिसंयोगवरस्य रुद्रदत्तत्वेन प्रतिबन्धकत्वात् । अत एव 'चत्वारः पतयः पृथक्' इत्यस्य पृथग्देहेष्वित्यप्यर्थमाहुः । अत एव रुद्रवरविरोधितया सैषेन्द्रसेना द्रौपदीति नाम्ना पञ्चदेवीति तनुर्भवेदित्युक्तं ज्ञेयम् ।।१३५।।

**चट्टि–** पञ्चदेवीतनुः सैषा त्वया दत्तवरा इन्द्रसेना द्रौपदीनाम भवेत् । येषु येषां विषये मारुतादीनुद्दिश्येति भावः । ते त्वया मृषा वागसत्यवाणी प्रोक्ता ते अखिलाः मारुताद्याः तासां भारत्यादीनां पतित्वं आप्स्यन्ति । पार्वती तु भारत्या संयुक्ता व्यवहारेषु भोजनाभ्यञ्जनादिव्यवहारेष्वेव प्रवर्तेत । अन्यथा रमणादिप्रकारान्तरेण न चेत्यर्थः ।।१३५-१३६।।

**तासां पतित्वमाप्स्यन्ति भारत्यैव तु पार्वती ।**
**संयुक्ता व्यवहारेषु प्रवर्तेत न चान्यथा ।।१३६।।**

**व्यासतीर्थीया–** उमाया इतरावत् स्वपतिप्राप्त्यभावे व्यवहाराभावस्तर्हीत्यत आह– **भारत्यैवेति** ।।१३६।।

**वादिराजतीर्थीया–** 'संयुक्ता व्यवहारेषु प्रवर्तेत न चान्यथा' इत्यत्र व्यवहारेषु भोजनाभ्यञ्जनादिव्यवहारेषु । अन्यथा रमणादिरूपप्रकारान्तरेण न चेत्यर्थः । 'द्रुपदैषा ततो जज्ञे सुता ते देवरूपिणी । पञ्चानां सहिता कृष्णारूपा पार्वत्यनिन्दिता ।।'[१] इत्यादिमूलभारतवाक्यार्थप्रपञ्चनाय द्रौपद्या निरवद्यत्वसमर्थनाय च सविस्तरं पञ्चद्रौपदीकथानिरूपणं कृतमाचार्यैरिति ज्ञेयम् । हे द्रुपद! ततः पञ्चदेवीनां पञ्चकृत्वः स्वस्वपतियोगवरदानमहिम्ना द्रौपदीदेहेऽपि पञ्चदेवीनामावश्यकत्वात् कारणात् देवरूपिण्येषा ते सुता कृष्णारूपा पार्वतीभारत्याद्याश्चतस्रश्चेति मिलित्वा पञ्चानां पञ्चभिर्देवीभिः सहिता सती जज्ञे । पञ्चानां देवीनामंशैः सहितेति वा । ततः एषा ते सुता अनिन्दिता भारत्यादीनां चतसृणां देवीनां स्वस्वपतिभिरेव संयोगात् पञ्चम्याः पार्वत्याः पतिसंयोगस्याभावात् प्राज्ञैर्निन्दिता न भवतीत्यर्थः । 'कर्तृकर्मणोः कृति' (सि.कौ.६२३) इति वचनात् पञ्चानामिति कर्तरि षष्ठीयं पञ्चदेवीनामपि पृथक् पृथगेकदेहे कर्तृत्वसूचनार्थम् । अन्यथा सहयोगे तृतीयाविधानात् 'पञ्चभिस्सहिता' इत्यवक्ष्यत् ।।१३६।।

**वरदराजीया–** पार्वती तु व्यवहारेषु भोगादिव्यवहारेषु भारत्या संसृष्टैव प्रवर्तेत । तस्यास्तज्जन्मनि मारुतं विना अन्यगामित्वं न स्यात् । स्वपतिप्राप्तिश्च न स्यादेवेति भावः । अनेन 'स्वार्थे वरो मृषा भवेत्' इत्युक्तं विवृतं भवति । 'तासां पतित्वमाप्स्यन्ति' इत्यनेन शच्यादिविषये पतियोगवरः सत्यः

---

१. 'द्रुपदैषा हि सा जज्ञे सुता वै देवरूपिणी । पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता ।।' इति इदानीमुपलभ्यमानः पाठः । आदिपर्वणि-२१४.६३.

स्यादिति हृदयं उद्घाटितं भवति । 'मारुताद्या' इत्यत्र मारुतग्रहणेन अन्यगामित्वशापः स्वेन दत्तश्च अपरिहार्य इत्यपि सूचितम् ।।१३६।।

**अनन्तभट्टीया–** ननु पार्वत्याः स्वपतिप्राप्त्यभावात् असंस्पृष्टतया जन्म नास्ति किमित्याशङ्क्य सत्यमित्याह– **भारत्यैवेति** ।। ननु पार्वत्या वेति भारत्या संयुक्तैव व्यवहारेषु प्रवर्तेत । ब्रह्मवचनात् पार्वत्याः चतुर्थजन्माभावः ।।१३६।।

**लघ्वनन्तभट्टीया–** ननु रुद्रस्य प्रियासम्बन्धाभावे कदा पार्वत्यावेश इत्यत आह– **भारत्यैवेति** ।। अत्र तस्याः मारुतसम्बन्धः अस्तीत्येकः पक्षः । आदानादिव्यवहारेष्वेव भारत्या सयोगतास्तीत्यपरः । तथाच विप्रकन्येति प्रथमं जन्म, नलनन्दिनीति द्वितीयम्, द्रौपदीति तृतीयम्, कलियुगे कल्याणीति चतुर्थमिति जन्मचतुष्टयं द्रष्टव्यम् । तासां चतुर्जन्मसु देहैक्यं शापतः चतुर्थदेहे *..मारुतसम्बन्धार्थम् । तासामिच्छया प्रत्येकं भारतीयुक्तत्वेन मारुतसम्बन्धेच्छया शक्यत्वात् *..प्रेरणाभावाच्च । तस्मात् जन्मचतुष्टये अस्मिन् जन्मनि मारुतसम्बन्ध इति ज्ञातुमशक्यत्वात् चतुर्ष्वपि जन्मसु भारतीयुक्तत्वप्रार्थना । तत्राद्य तद्देहयोः विवाहाभावः । द्वितीये परपुरुषसंयोगः । तृतीयस्थितिः *..भविष्यतीत्यत्र विवेको द्रष्टव्यः । केचित्तु- जन्मत्रये देहैक्यं चतुर्थं जन्म तु पृथगेव । जन्मत्रय एव भारतीयुक्तत्वं देवि जन्म चतुर्ष्वपि इत्येतत् प्रायिकाभिप्रायः । चतुर्षु मध्ये त्रिष्विति वा योजना । उमाया चतुर्थं जन्म नास्तीति । 'भारत्येव तु पार्वती' इति भारत्या सहैव जन्मोक्तत्वात् नान्यथेति पृथङ् निषेधात् । न चैवं शापानुसारेण पृथक्जन्म नान्यगामित्वं शिवायास्तु चतुर्थजन्म च स्यादिति वाच्यम् । मानुषं प्राप्य *..अन्यगामित्वमिति द्वितीशापाभिप्रायादित्याहुः । अन्येऽप्येवमेवाङ्गीकृत्य तृतीयजन्मनि स्वपुरुषसम्बन्धमाहुः । अन्ये तु विप्रकन्या प्रथमं जन्म, नलनन्दिनीति द्वितीयम्, इन्द्रसेनेति तृतीयम्, द्रौपदीति चतुर्थं जन्मेति जन्मचतुष्टयमाहुः ।।१३६।।

**ताम्रपर्णीया–** ननु रुद्रस्य प्रियासम्बन्धाभावे कदा पार्वत्या प्रवृत्तिरित्यत आह– **भारत्यैवेति** ।। पार्वती व्यवहारेष्वेव भोजनाभ्यञ्जनादिव्यवहारेष्वेव भारत्यैव संयुक्ता न तु रमणादौ नापि शच्यादिभि-रित्यर्थः । ननु व्यवहारपदेन रमणस्याविवक्षितत्वे शच्यादिभिरपि संयुक्तत्वोपपत्तेः अवधारणानुपपत्तिरिति चेन्न । शच्यादिभिरपि संयोगे अर्जुनाद्युच्छिष्टभोजनपादसंवाहनादिप्रसक्तेरिति भावः ।।१३६।।

**भारतश्री–** उमायाः स्वपतिप्राप्त्यभावे व्यवहाराभावस्तर्हि इत्यत आह– **भारत्यैवेति** ।। पार्वती भारत्या संयुक्ता हानोपादानादिषु व्यवहारेषु प्रवर्तेत । न चान्यथा इतरदेवीवत् पतिप्राप्तितया ।।१३६।।

**एते हि मारुताद्यास्ते देवकार्यार्थगौरवात् ।**
**जाता इति श्रुतिस्तत्र नावज्ञा तेऽत्र कारणम् ।**
**दीर्घकालं मनुष्येषु ततस्त्वं स्थितिमाप्स्यसि ।।१३७।।**

**व्यासतीर्थीया–** मदवज्ञानत एव पततो भुवि जनिष्यतो मृषा वादित्वमेव कथमित्यत आह– **एत इति** ।।१३७।।

**वेदाङ्गतीर्थीया–** ननु मदवज्ञातः तेषां जन्म किं न स्यात्? मम मृषावात्त्वं कुतोऽवगतमित्यतः श्रुतेरेवेत्याह– **एत इति** ।। तत्र त्वदवज्ञा कारणं नेत्यत्र श्रुतिरस्ति । अतः अत्र तेषां मानुषजन्मनि कारणं न । ततः अनृतोक्तिदोषात् दीर्घकालं मानुषेषु स्थितिमाप्स्यसि । इत्युक्त्वा ब्रह्मा प्रययौ ।।१३७-१३८।।

**सत्याभिनवतीर्थीया–** तत्रैव 'एते हि मारुताद्यास्तु..' इति श्लोके 'देवकार्यार्थगौरवात्' इत्यस्य देवकार्यस्य तत्साध्यफलस्य च महत्वादित्यर्थः । एतेन देवकार्यगौरवात् इत्यनेनैव पूर्णत्वात् अर्थशब्दो व्यर्थ इति दूषणं परास्तम् । देवकार्यस्यैव तत्साध्यफलस्यापि महत्वं वक्तुं अर्थशब्दः प्रयुक्त इत्यभ्युपगमात् ।।१३७।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादनां शिष्येण श्रीसत्याभिनवयतिना विरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां अष्टादशोऽध्यायः ।।

**वरदराजीया–** शिवस्य मृषावादित्वं उपपादयति– **एते हीति** ।। देवकार्यार्थगौरवात् देवताकार्यरूपे अर्थे गौरवात् अत्यादरात् देवताकार्यरूपस्य अर्थस्य गौरवात् महत्वादिति वा । 'एते जाता' इति श्रुतिः तत्र उक्तार्थे अस्ति यतः अत्र जनने ते तव अवज्ञानकारणमित्यर्थः । ततः कारणात् दीर्घकालं बहुकालं मनुष्येषु मध्ये स्थितिः अवस्थानं अवाप्स्यसि ।।१३७।।

**जनार्दनीया–** ननु मदवज्ञानतस्तेषां जन्म किं न स्यात्? मम मृषावात्त्वं कुतोऽवगतमित्यतः श्रुतिरेवेत्याह– **एत इति** ।। देवकार्यार्थगौरवात् महत्त्वात् तत्र त्वदवज्ञा कारणं न इति श्रुतिरस्ति । अतः तत्र तेषां मानुषजन्मनि ते अवज्ञा कारणं न । ततस्त्वं दीर्घकालं मनुष्येषु स्थितिं अवस्थानं आप्स्यसि इत्युक्त्वा ब्रह्मा प्रययौ ।।१३७।।

**भारतश्री–** जाता मिलिताः । नावज्ञा तेऽत्र कारणम् । मदवज्ञानादेव किं न स्यात् इत्यत आह– **इति श्रुतिरिति** ।। अन्यथा चेत् श्रुतेरप्रामाण्यं भवतीति भावः ।।१३७।।

**चट्टि–** ननु मदवज्ञानतस्तेषां जन्म किं न स्यात्? मम मृषावात्त्वं कुतोऽवगतमित्यतः श्रुतित एवेत्याह– **एत इति** ।। एते मारुताद्याः देवकार्यार्थगौरवात् देवैः कार्यः कर्तव्यः अर्थः भूभारसंहरणादिः तत्र गौरवादित्यर्थः । 'जाता' इति श्रुतिः तत्र उक्तार्थे अस्ति यतः अतः अत्र तेषां मानुषजन्मनि ते अवज्ञा कारणं न भवति । ततः कारणात् त्वं दीर्घकालं बहुकालं मनुष्येषु स्थितिं अवस्थानं आप्स्यसि इत्युक्त्वा, शिवमिति शेषः । ब्रह्मा प्रययौ ।।१३७।।

**इत्युक्त्वा प्रययौ ब्रह्मा सोऽश्वत्थामा शिवोऽभवत् ।**
**पञ्चदेवीतनुस्त्वेषा द्रौपदी नाम चाभवत् ।।१३८।।**

**वरदराजीया–** इत्युक्त्वा शिवं प्रति । स शिवोऽश्वत्थामनामा अभवदित्यर्थः । एषा तु इन्द्रसेना पञ्चदेवीतनुः पञ्चदेवीसन्निहितदेहवती द्रौपदी नाम प्रसिद्धाऽभवत् ।।१३८।।

**अनन्तभट्टीया–** पञ्चदेवीतनुः सैषा द्रौपदीनाम चाभवत् । इदं तृतीयं जन्म । शच्यादीनां भारत्यसंस्पृष्टतया स्वपतिप्राप्त्यर्थं यज्जननं तच्चतुर्थमिति सम्प्रदायविदः । इदं जन्म पृथग् देहत्वेन कृतवञ्चनफलम् । अतस्त्वयैकदेहत्वमिति चतुर्षु जन्मसु एकदेहत्वकथनं प्रायिकत्वाभिप्रायम् ।

केचित्तु- 'नलनन्दिनीति द्वितीयं जन्म, इन्द्रसेनेति तृतीयम् । अन्ये तु- विप्रकन्येति प्रथमम्, नलनन्दिनीति द्वितीयम्, द्रौपदीति तृतीयम्, चन्द्रेति चतुर्थं जन्म' इत्याहुः । अत एव गरुडपुराणे–

'हनुमांश्च यदा जज्ञे त्रेतायां राजसत्तम । तदा शिवाख्यविप्राच्च जाता सा भारती स्मृता ।।
न केवला भारती सा शच्याद्याश्चैव संयुता । तस्मिन् जन्मनि ताः सर्वा नापुर्योगं स्वभर्तृभिः ।।
अन्यगात्वञ्च नैवाप कन्या जन्मनि सा स्मृता । त्रेतान्ते सैव पक्षीन्द्र शच्याद्याभिश्च संयुता ।।
दमयन्त्यां नलाज्जाता इन्द्रसेनेति सञ्ज्ञिता । नलं नन्दयते यस्मात् तस्माच्च नलनन्दिनी ।।
तत्र स्वभर्तृसंयोगं नैव चाप खगेश्वर । तत्रान्यगात्वं विज्ञेयं मुद्गलस्थेन वायुना ।।
कश्चित्कालं भुवि स्थित्वा पश्चान्मृतिमवाप सा । शच्यादिसंयुता सैव द्रुपदस्य महात्मनः ।।
वेदिमध्यात् समुद्भूता भीमसेनार्थमेव च । तत्रान्यगात्वं नास्त्येव योगश्चापि स्वभर्तृभिः ।।
केवला भारती ज्ञेया काशिराजस्य कन्यका । काली नाम्ना तु विज्ञेया भीमसेनप्रिया तदा ।।
शच्यादिभिः संयुतैव द्रौपदी द्रुपदात्मजा । देहं त्यक्त्वा विशिष्टैव कालडीग्रामसञ्ज्ञके ।।
शङ्करस्य गृहे चन्द्रा भविष्यति कलौ युगे । वायोस्तृतीयरूपार्थं सा कन्यैव गतिं गता ।।'[१]
(ग.पु.३.१६.९२-१०१) इत्युक्तम् ।।१३८।।

**जनार्दनीया–** एषा इन्द्रसेना । देवकीति श्यामलायाश्चतुर्थं जन्म, चित्राङ्गदेति शच्याः, जरासन्ध-कन्यारूपं उषायाः, एवं पार्वत्या अपि चतुर्थं जन्मास्तीति बोध्यम् । अन्यथा द्रौणेः स्त्रीवियोगलक्षणशापो न स्यात् । सत्यां स्त्रियां तदलाभस्यैव स्त्रीवियोगत्वात् । पतियोगप्राप्तिरूपवरद्वयस्य द्रौपदीदेहे देवक्यादि-पृथगवतारे च फलं ज्ञेयम् ।।१३८।।

**भारतश्री–** ।। **पञ्चदेवीति** ।। प्रथमं विप्रकन्या, ततो नलनन्दिनी, तृतीया द्रौपदी, एवं चतुर्थं जन्मास्तीति ज्ञातव्यमित्यस्मदाचार्याः । एके तु- 'चन्द्रेति काचन पञ्चदेवीतनुः' इति वदन्ति । अपरे तु- 'जन्मत्रये एकदेहत्वं श्यामलायाश्चतुर्थं जन्म देवकी इति, चित्राङ्गदेति शच्याः, जरासन्धकन्यारूपं उषायाः, एवं पार्वत्या अपि चतुर्थं जन्मास्तीति ज्ञातव्यम्' इति । सैषा पञ्चदेवीतनुः नालायनी द्रौपदीनामा भवत् ।।१३८।।

---

१. उपलभ्यमानपाठे व्यत्यासो दृश्यते ।

**चट्टि–** शिवः अश्वत्थामा अभवत् । एषा इन्द्रसेना । पञ्चदेवीतनुः पञ्चदेवीसन्निहितदेहवती द्रौपदीति नाम प्रसिद्धा अभवत् । एवं च देवकीति श्यामलायाश्चतुर्थं जन्म, चित्राङ्गदेति शच्याः, जरासन्धकन्यारूपं उषायाः, एवं पार्वत्या अपि चतुर्थं जन्मास्तीति बोद्धव्यम् । अन्यथा द्रौणेः स्त्रीवियोगलक्षणः शापो न स्यात् । सत्यां स्त्रियां तदलाभस्यैव स्त्रीवियोगत्वात् ; पतियोगप्राप्तिरूपवरद्वयस्य द्रौपदीदेहे देवक्यादि-पृथगवतारे च फलं ज्ञेयम् ।।१३८।।

**वेदेषु सपुराणेषु भारते चावगम्यते ।**
**उक्तोऽर्थः सर्व एवायं तथा पूर्वोदिताश्च ये ।।१३९।।**

**व्यासतीर्थीया–** पञ्चदेव्यो द्रौपदीत्वेन जाता इत्यादिरुक्तोऽर्थः कुतः सिद्ध इत्यतः प्रमाणं सूचयन्नाह– **वेदेष्विति** ।।१३९।।

**वेदाङ्गतीर्थीया–** उक्तमर्थं प्रमाणेन स्थापयति– **वेदेष्वित्यादिना** ।।१३९।।

**वरदराजीया–**एवं च भारतीसंसृष्टतया विप्रकन्या इन्द्रसेना द्रौपदी इति जन्मत्रयं एकदेहकृतवञ्चनफलम् । भारत्यसंसृष्टतया पृथक् स्वपतिप्राप्त्यर्थं देवक्यादिरूपेण चतुर्थं जन्म पृथग्देहकृतविलासदर्शनफलम् । तत्र अन्यगामित्वशापः [१]'एकदेहत्वेनानुभूतः । 'तत्रान्यगाश्च भवत' इत्युक्तत्वात् । पार्वत्याः पृथग्जन्माभावस्तु 'भारत्यैव तु पार्वती' इति ब्रह्मवचनबलात् । ब्रह्मशिवाभ्यां दत्तयोः शापवरयोः परपुरुषगामित्वस्वभर्तृ-गामित्वरूपयोः सामान्योक्त्या दत्तयोः क्वचित्पर्यवसानोपपत्तेः । विप्रकन्याजन्मनि स्वपुरुषपरपुरुष-संयोगाभावः । इन्द्रसेनारूपे परपुरुषगामित्वमात्रम् । द्रौपदीरूपे स्वपरपुरुषोभयसंयोगः । पृथग्देहत्वेन जनने स्वपुरुषमात्रसंयोग इति सर्वमवदातम् । उक्तार्थस्य स्वकपोलकल्पितत्वशङ्कां निवारयति– **वेदेति** ।। वेदादिषु उक्तोऽर्थ अवगम्यते । तथा ये अर्थाः पूर्वोदिताः पूर्वमुक्ताः ते च उदिता इत्यर्थः ।।१३९।।

**अनन्तभट्टीया–** उदिता अर्थादासीत् ।।१३९।।

**जनार्दनीया–** इममर्थं प्रमाणेन स्थापयति– **वेदेष्वित्यादिना** ।। पुराणैः सहितेषु । वेदेषु भारते च उक्तोऽर्थः । देवीनां शापादन्यगात्वजन्माद्यर्थोऽवगम्यते । तथा येऽर्थाः पूर्वोदिताः सृष्ट्याद्याः । ते च उदिता इत्यर्थः ।।१३९।।

**भारतश्री–** स्वोक्तार्थे वहुप्रमाणतो सम्मतिमाह– **वेदेष्विति** ।।१३९।।

**चट्टि–** उक्तार्थं प्रमाणेन स्थापयति– **वेदेष्वित्यादिना** ।। पुराणैः सहितेषु । वेदेषु भारते चायं उक्तोऽर्थः सर्व एवावगम्यते तथा ये अर्थाः पूर्वोदिताः सृष्ट्याद्याः ते च उदिता इत्यर्थः ।।१३९।।

---

१. 'एक देह एवानुभूतः' इति क्वचित् ।

**[१]मुमुदुः सर्वपाञ्चाला जातयोः सुतयोस्तयोः ।**
**मानुषान्नोपभोगेन संसर्गान्मानुषेषु च ॥१४०॥**

**वेदाङ्गतीर्थीया–** सुता च सुतश्च सुतौ । तयोः जातयोः सतोः ॥१४०॥

**वरदराजीया–** तयोः कन्यापुत्रयोः जातयोः सतोः मानुषान्नस्योपभोगेन सेवनेन तथा मानुषेषु संसर्गात् तैः सह अवस्थानात् मनुष्यपुत्रतायाः मनुष्यपुत्रत्वेन एतयोः द्रौपदीधृष्टद्युम्नयोः मानुषो भावः किञ्चिदभूत् ॥१४०॥

**ताम्रपर्णीया–** ननु द्रौपद्या वेदिमध्यादुत्थितत्वात् ब्रह्मशापमोघता । कथं च कृष्णाधृष्टद्युम्नयोः मनुष्यत्वव्यवहार इत्यत आह– **मानुषेति** ॥१४०॥

**जनार्दनीया–** सुतयोः सुता च सुतश्च तौ तयोः । जातयोः सतोः । मानुषान्नोपभोगेन मानुषान्नस्य उपभोगेन सेवनेन तथा मानुषेषु संसर्गात् मनुष्यैः सहावस्थानात् मनुष्यपुत्रतायाश्च इष्टिं कृत्वा पुत्रत्वेन मनुष्यलब्धत्वाच्च ॥१४०॥

**भारतश्री–** सुता च सुतश्च सुतौ तयोः । जातयोः सतोः ॥१४०॥

**चट्टि–** तयोः सुतयोः जातयोः सतोः सर्वपाञ्चालाः मुमुदुः । मानुषान्नोपभोगेन मानुषान्नस्य सेवनेन तथा मानुषेषु संसर्गात् मनुष्यैः सहावस्थानात् च मनुष्यपुत्रतायाश्च इष्टिं कृत्वा पुत्रत्वेन मनुष्यलब्धत्वाच्च ॥१४०॥

**मनुष्यपुत्रतायाश्च भावो मानुष एतयोः ।**
**अभून्नातितरामासीत् तदयोनित्वहेतुतः ॥१४१॥**

**वरदराजीया–** तथाप्यतितरं अत्यन्तं मानुषो भावो मनुष्यस्वभावः किञ्चिदभूत् । तथापि अतितरामत्यन्तं मानुषो भावः नासीत् । इतरदेवतासाधारण्यं नाभूत् । तत्र हेतुमाह– **तदिति** ॥ मनुष्ययोनिजत्वाभावाद्धेतोरित्यर्थः । इतरेषाञ्च मनुष्ययोनिजत्वेऽपि मानुषान्नोपभोगादेः सत्वात् अतितरां मानुषो भाव इत्यसाधारण्यं उपपन्नमिति भावः ॥१४१॥

**भावविवृतिः–** 'मनुष्यपुत्रतायाश्च' इत्यत्र मनुष्यपुत्रत्वाय तद्योग्यमन्त्रैः अभिमन्त्र्य हुतहविषोत्पत्तेर्निमित्ताच्च इत्यर्थः । यथा क्षत्रियकुलोत्पन्नस्य विश्वामित्रस्य ब्राह्मण्यप्राप्तौ तद्योग्यमन्त्राभिमन्त्रितहविःप्राशनमेव कारणं तथाऽत्रापीति द्रष्टव्यम् ॥१४१॥

॥ इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ अष्टादशोऽध्यायः॥

---

१. 'तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसङ्घवत् । न चैतान्हर्षसम्पूर्णानियं सेहे वसुन्धरा ॥' इति आदिपर्वणि-१८१.७२.

**अनन्तभट्टीया–** मानुषो भाव इत्यनुषङ्गः । तदयोनीति मानुषयोनित्वाभावे हेतुः ।।१४१।।

**जनार्दनीया–** एतयोः कृष्णाधृष्टद्युम्नयोः मानुषो भावः स्वभावः किञ्चिदभूत् । अतितरां अत्यन्तं मानुषो भावो नासीत् । तत्र हेतुमाह– **तदिति** ।। तदयोनित्वहेतुतः मनुष्ययोन्यभावत्वहेतोः ।।१४१।।

**ताम्रपर्णीया– ।। मनुष्यपुत्रताया इति ।।** मनुष्यकृतपुत्रकामेष्टिप्रयुक्तत्वात् तदुपपत्तेरिति भावः ।।

**भावचन्द्रिका–** मानुषभावः मनुष्यसमानधर्मत्वं क्षुत्पिपासादीनि । अहं मनुष्य इति मिथ्याभिमाने भवत्येव मनुष्यदेहावच्छिन्नस्यैव मनुष्यत्वेनापि विरोधात् । शुकवदयोनिजत्वेऽपि मानुषत्वाद् भारतीं विना विपर्ययराहित्यस्योक्तत्वादिति ।।१४१-१५४।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां अष्टादशोऽध्यायः ।।

**चट्टि–** एतयोः कृष्णाधृष्टद्युम्नयोः मानुषो भावः स्वभावः किञ्चिदभूत् । तथापि अतितरां अत्यन्तं मानुषो भावो नासीत् । तत्र हेतुमाह– **तदिति** ।। तच्छब्देन मानुषपदप्रस्तुतो मनुष्यो गृह्यते । योनिः कारणम् । 'योनिर्भार्या तथा स्थानं योनिः कारणमेव च'(गी.ता.-३.१५) इति शब्दनिर्णयमानात् तेन योनिः कारणमित्यर्थः । सः अयोनिः ययोस्तौ तदयोनी तयोः भावः तत्त्वं तदेव हेतुः तस्मादित्येवार्थः । न तु मनुष्ययोनित्वाभावादित्यर्थः । तथात्वे अतद्योनित्वहेतुत इति स्यात् । योनिशब्दस्य तच्छब्दसापेक्षत्वेन नञ् तन्मध्ये प्रवेशानुपपत्तेः । यद्वा 'तत्' इति भिन्नं पदम् । अतितरां नासीत् । तन्नासीदित्येतदयोनित्वहेतुतः । कुण्डोत्पन्नत्वेन योनिजत्वाभावादित्यर्थः ।।१४१।।

**याजोपयाजौ तावेव दयिता द्रुपदस्य सा ।**
**[१]मातृस्नेहार्थमनयोर्ययाचे ददतुश्च तौ ।।१४२।।**

**व्यासतीर्थीया–** मातृस्नेहार्थम् ।।१४२।।

**वेदाङ्गतीर्थीया–** मातृस्नेहार्थं मातृत्वेन स्नेहार्थम् ।।१४२।।

**मधुसूदनीया– ।। ययाचे ददतुश्च ताविति ।।** अनयोस्सुतयोः द्रुपदपत्न्यै स्वस्यां स्नेहसद्भावलक्षणवरं ददतुरित्यर्थः ।।१४२।।

**वरदराजीया–** सा द्रुपदस्य दयिता या आहूतापि व्यलम्बयदित्यर्थः । याजोपयाजौ तावेव आह्वानं कृतवन्तौ प्रति ययाचे प्रार्थितवती । किमर्थं? अनयोः द्रौपदीधृष्टद्युम्नयोः मातृस्नेहार्थं स्वस्मिन् मातृस्नेहोत्पत्त्यर्थं अनयोर्मत्प्रसूतत्वाभावेऽपि प्रसवित्र्यां यथा स्नेहः तथा मय्यपि स्नेहं कुरुतां तथा भवद्भ्यां विधेयमिति प्रार्थितवती इति भावः । तौ याजोपाजौ तस्यै ददतुः तस्यै प्रार्थितं दत्तवन्तावित्यर्थः ।।१४२।।

---

१. 'तौ दृष्ट्वा पृषती याजं प्रपेदे सा सुतार्थिनी । न वै मदन्यां जननीं जानीयातामिमाविति ।। तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ।।' इत्यादिपर्वणि- १४९.६९-७०.

**अनन्तभट्टीया–** ।। याजेत्यादि ।। द्रुपदस्य भार्या द्रौपदीधृष्टद्युम्नौ मे मयि मातरीव स्नेहं यथा करिष्यत तथा भवद्भ्याम् अनुग्रहः कर्तव्यमिति याजोपयाजौ ययाच इत्यर्थः ।।१४२।।

**जनार्दनीया–** अनयोः कृष्णाधृष्टद्युम्नयोः । मातृस्नेहार्थं मातरि स्नेहार्थम् ।।१४२।।

**ताम्रपर्णीया–** मातृस्नेहार्थं मातरीव स्नेहार्थम् । अन्यथा स्वस्मिन् स्नेहार्थमित्यवक्ष्यत् ।।१४२-९।।

**चट्टि–** सा द्रुपददयिता या आहूतापि व्यलम्बयत् सेत्यर्थः । तावेव याजोपयाजौ कर्मभूतौ अनयोः कृष्णाधृष्टद्युम्नयोः मातृस्नेहार्थं स्वस्मिन् मातृस्नेहोत्पत्त्यर्थं अनयोः मत्प्रसूतत्वाभावेऽपि प्रसवित्र्यां यथा तथा मयि स्नेहः क्रियतां आभ्यामिति ययाचे । तौ याजोपयाजौ ददतुश्च, वरमिति शेषः ।।१४२।।

**जातमात्मनिहन्तारं [१]भारद्वाजो निशम्य तम् ।**
**यशोऽर्थमस्त्राणि ददावग्रहीत् सोऽपि लोभतः ।**
**रामास्त्राणां दुर्लभत्वात् त्रिदशेष्वपि वीर्यवान् ।।१४३।।**

**व्यासतीर्थीया–** आत्ममृत्यवे कथं ददावित उक्तम्– **यशोऽर्थमिति** ।। सोऽपि कथं वैरिणोऽस्त्राण्य-ग्रहीदित्यत उक्तम्– **लोभत इति** ।। तदस्त्रलोभे किमित्यत उक्तम्– **रामेति** ।।१४३-१४९।।

**वरदराजीया–** आत्मनः स्वस्य निहन्तारं घातकं स्वात्महननार्थं जातं तं धृष्टद्युम्नं निशम्यापि यशोऽर्थं ददौ । वीर्यवान् सोऽपि धृष्टद्युम्नोऽपि रामास्त्राणां रामात् प्राप्तपरमास्त्राणां त्रिदशेष्वपि दुर्लभत्वात् लोभात् अग्रहीत् ।।१४३।।

**अनन्तभट्टीया–** तं धृष्टद्युम्नम् ।।१४३।।

**जनार्दनीया–** भारद्वाजो द्रोणः आत्मनिहन्तारं आत्मनः स्वस्य निहन्तारं घातकं धृष्टद्युम्नं जातं निशम्य यशोऽर्थं ददौ । सः वीर्यवानपि धृष्टद्युम्नोऽपि रामास्त्राणां रामात् प्राप्तास्त्राणां त्रिदशेष्वपि देवेष्वपि दुर्लभत्वात् लोभतोऽग्रहीत् ।।१४३।।

**भारतश्री–** लोभतः रामास्त्राणां अन्यत्राभावाल्लोभतो अग्रहीत् ।।१४३-१४४।।

**चट्टि–** भारद्वाजो द्रोणः आत्मनिहन्तारं आत्मनः स्वस्य, निहन्तारं घातकं तं धृष्टद्युम्नं जातं निशम्यापि यशोऽर्थं अस्त्राणि ददौ । वीर्यवानपि सः धृष्टद्युम्नः रामास्त्राणां परशुरामात् प्राप्तास्त्राणां त्रिदशेषु देवेष्वपि दुर्लभत्वात् लोभतोऽग्रहीत् ।।१४३।।

---

१. 'तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे । वैदिकाध्ययने पारं धृष्टद्युम्नो गतस्तदा ।। धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् । उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ।। अमोक्षणीयं दैवं हि भावि मत्वा महामतिः । तथा तत्कृतवान् द्रोण आत्मकीर्त्यनुरक्षणात् ।।' आदिपर्वणि-१४०.७३-७५.

**भीमार्जुनाभ्यां बद्धं तं श्रुत्वा पाञ्चालभूपतिम् ।**
**प्राहिणोत् कृतवर्माणं पाण्डवानां जनार्दनः[१] ।**
**पाण्डवेष्वतुलां प्रीतिं लोके ख्यापयितुं प्रभुः ॥१४४॥**

**व्यासतीर्थीया–** पाण्डवानाम्, सकाशमिति शेषः ॥१४४॥

**वेदाङ्गतीर्थीया–** पाण्डवानाम्, सकाशमिति शेषः ॥१४४॥

**वरदराजीया–** पाञ्चालभूपतिं द्रुपदं भीमार्जुनाभ्यां बद्धं बध्वा आनीतम् । पाण्डवानां सकाशं प्रीतिं ख्यापयितुं प्राहिणोत् ॥१४४॥

**अनन्तभट्टीया–** तं धृष्टद्युम्नम् । पाण्डवानाम्, सकाशमिति शेषः ॥१४४॥

**जनार्दनीया–** पाण्डवानां प्राहिणोत्, सकाशमिति शेषः । प्रभुः कृष्णः ॥१४४॥

**चट्टि–** प्रभुः जनार्दनः श्रीकृष्णं तं पाञ्चालभूपतिं द्रुपदं भीमार्जुनाभ्यां बद्धं बध्वा आनीतं श्रुत्वा पाण्डवेष्वतुलां प्रीतिं लोके ख्यापयितुं कृतवर्माणं पाण्डवानां प्राहिणोत्, सकाशमिति शेषः ॥१४४॥

**[२]सन्मान्य[३] पाण्डवान् सोऽपि शूरानुजसुतासुतः ।**
**तैर्मानितः कृष्णभक्त्या भ्रातृत्वाच्च हरिं ययौ ॥१४५॥**

**वादिराजतीर्थीया–** 'शूरानुजसुतासुतः' इत्यत्र शूरानुजस्य या सुता तस्याः सुत इत्यर्थः । अत एव शूरानुजसुतायाः सुतः कृतवर्मा । शूरसुतायाः कुन्त्याः पाण्डवाः । तेन ज्येष्ठायाः पुत्रत्वात् कनिष्ठायाः पुत्रत्वाच्च भ्रातृत्वम् ॥१४५-१५४॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां अष्टादशोऽध्यायः ॥

**वरदराजीया–** सोऽपि कृतवर्मापि पाण्डवान् सम्मान्य सत्कृत्य स्वयं तैः पाण्डवैः मानितः सत्कृतः । पाण्डवैः सत्कृतत्वे कारणमाह– **कृष्णभक्त्या भ्रातृत्वाच्चेति** ॥ कृष्णे अत्यन्तं भक्त्या निमित्तभूतया

१. 'कदाचिद् देवकीपुत्रो रामशैनेयसंयुतः । सेव्यमानः सभायां वै नानादेशेश्वरैर्नृपैः ॥ पाञ्चालराजं द्रुपदं बालैः कुन्तीसुतैर्मृधे । बद्धं शुश्राव कौरव्य ब्राह्मणैः सत्रयाजिभिः ॥ तच्छ्रुत्वा हृष्टहृदयः कृतवर्माणमच्युतः । नगरं हस्तिनपुरं प्रेषयामास वेदितुम् ॥' भागवते-१०.५६.१-५.

२. 'युधिष्ठिरं च राजानं चतुर्भिर्भ्रातृभिर्वृतम् । सभाजयामास भृशं कुन्तीं च हृदिकात्मजः' ॥५॥ सभाजितश्च हार्दिक्यः सुखसम्भाषणादिभिः ॥९॥ हार्दिक्यस्ताननुज्ञाप्य बान्धवान् पृथया सह । मातृष्वसेयान् धर्मज्ञानभिवन्द्य यथावयः ॥११॥ भागवते-१०.५६.

३. 'सम्मान्य' इति वरदराजीयः पाठः ।

**अनन्तभट्टीया–** ।। याजेत्यादि ।। द्रुपदस्य भार्या द्रौपदीधृष्टद्युम्नौ मे मयि मातरीव स्नेहं यथा करिष्यत तथा भवद्भ्याम् अनुग्रहः कर्तव्यमिति याजोपयाजौ ययाच इत्यर्थः ।।१४२।।

**जनार्दनीया–** अनयोः कृष्णाधृष्टद्युम्नयोः । मातृस्नेहार्थं मातरि स्नेहार्थम् ।।१४२।।

**ताम्रपर्णीया–** मातृस्नेहार्थं मातरीव स्नेहार्थम् । अन्यथा स्वस्मिन् स्नेहार्थमित्यवक्ष्यत् ।।१४२-९।।

**चट्टि–** सा द्रुपददयिता या आहूतापि व्यलम्बयत् सेत्यर्थः । तावेव याजोपयाजौ कर्मभूतौ अनयोः कृष्णाधृष्टद्युम्नयोः मातृस्नेहार्थं स्वस्मिन् मातृस्नेहोत्पत्त्यर्थं अनयोः मत्प्रसूतत्वाभावेऽपि प्रसवित्र्यां यथा तथा मयि स्नेहः क्रियतां आभ्यामिति ययाचे । तौ याजोपयाजौ ददतुश्च, वरमिति शेषः ।।१४२।।

**जातमात्मनिहन्तारं [१]भारद्वाजो निशम्य तम् ।**
**यशोऽर्थमस्त्राणि ददावग्रहीत् सोऽपि लोभतः ।**
**रामास्त्राणां दुर्लभत्वात् त्रिदशेष्वपि वीर्यवान् ।।१४३।।**

**व्यासतीर्थीया–** आत्ममृत्यवे कथं ददावित उक्तम्– **यशोऽर्थमिति** ।। सोऽपि कथं वैरिणोऽस्त्राण्यग्रहीदित्यत उक्तम्– **लोभत इति** ।। तदस्त्रलोभे किमित्यत उक्तम्– **रामेति** ।।१४३-१४९।।

**वरदराजीया–** आत्मनः स्वस्य निहन्तारं घातकं स्वात्महननार्थं जातं तं धृष्टद्युम्नं निशम्यापि यशोऽर्थं ददौ । वीर्यवान् सोऽपि धृष्टद्युम्नोऽपि रामास्त्राणां रामात् प्राप्तपरमास्त्राणां त्रिदशेष्वपि दुर्लभत्वात् लोभात् अग्रहीत् ।।१४३।।

**अनन्तभट्टीया–** तं धृष्टद्युम्नम् ।।१४३।।

**जनार्दनीया–** भारद्वाजो द्रोणः आत्मनिहन्तारं आत्मनः स्वस्य निहन्तारं घातकं धृष्टद्युम्नं जातं निशम्य यशोऽर्थं ददौ । सः वीर्यवानपि धृष्टद्युम्नोऽपि रामास्त्राणां रामात् प्राप्तास्त्राणां त्रिदशेष्वपि देवेष्वपि दुर्लभत्वात् लोभतोऽग्रहीत् ।।१४३।।

**भारतश्री–** लोभतः रामास्त्राणां अन्यत्राभावाल्लोभतो अग्रहीत् ।।१४३-१४४।।

**चट्टि–** भारद्वाजो द्रोणः आत्मनिहन्तारं आत्मनः स्वस्य, निहन्तारं घातकं तं धृष्टद्युम्नं जातं निशम्यापि यशोऽर्थं अस्त्राणि ददौ । वीर्यवानपि सः धृष्टद्युम्नः रामास्त्राणां परशुरामात् प्राप्तास्त्राणां त्रिदशेषु देवेष्वपि दुर्लभत्वात् लोभतोऽग्रहीत् ।।१४३।।

---

१. 'तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे । वैदिकाध्ययने पारं धृष्टद्युम्नो गतस्तदा ।। धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् । उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ।। अमोक्षणीयं दैवं हि भावि मत्वा महामतिः । तथा तत्कृतवान् द्रोण आत्मकीर्त्यनुरक्षणात् ।।' आदिपर्वणि-१४०.७३-७८.

**भीमार्जुनाभ्यां बद्धं तं श्रुत्वा पाञ्चालभूपतिम् ।**
**प्राहिणोत् कृतवर्माणं पाण्डवानां जनार्दनः[१] ।**
**पाण्डवेष्वतुलां प्रीतिं लोके ख्यापयितुं प्रभुः ॥१४४॥**

**व्यासतीर्थीया–** पाण्डवानाम्, सकाशमिति शेषः ॥१४४॥

**वेदाङ्गतीर्थीया–** पाण्डवानाम्, सकाशमिति शेषः ॥१४४॥

**वरदराजीया–** पाञ्चालभूपतिं द्रुपदं भीमार्जुनाभ्यां बद्धं बध्वा आनीतम् । पाण्डवानां सकाशं प्रीतिं ख्यापयितुं प्राहिणोत् ॥१४४॥

**अनन्तभट्टीया–** तं धृष्टद्युम्नम् । पाण्डवानाम्, सकाशमिति शेषः ॥१४४॥

**जनार्दनीया–** पाण्डवानां प्राहिणोत्, सकाशमिति शेषः । प्रभुः कृष्णः ॥१४४॥

**चट्टि–** प्रभुः जनार्दनः श्रीकृष्णं तं पाञ्चालभूपतिं द्रुपदं भीमार्जुनाभ्यां बद्धं बध्वा आनीतं श्रुत्वा पाण्डवेष्वतुलां प्रीतिं लोके ख्यापयितुं कृतवर्माणं पाण्डवानां प्राहिणोत्, सकाशमिति शेषः ॥१४४॥

**[२]सन्मान्य[३] पाण्डवान् सोऽपि शूरानुजसुतासुतः ।**
**तैर्मानितः कृष्णभक्त्या भ्रातृत्वाच्च हरिं ययौ ॥१४५॥**

**वादिराजतीर्थीया–** 'शूरानुजसुतासुतः' इत्यत्र शूरानुजस्य या सुता तस्याः सुत इत्यर्थः । अत एव शूरानुजसुतायाः सुतः कृतवर्मा । शूरसुतायाः कुन्त्याः पाण्डवाः । तेन ज्येष्ठायाः पुत्रत्वात् कनिष्ठायाः पुत्रत्वाच्च भ्रातृत्वम् ॥१४५-१५४॥

॥ इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां अष्टादशोऽध्यायः ॥

**वरदराजीया–** सोऽपि कृतवर्मापि पाण्डवान् सम्मान्य सत्कृत्य स्वयं तैः पाण्डवैः मानितः सत्कृतः । पाण्डवैः सत्कृतत्वे कारणमाह– **कृष्णभक्त्या भ्रातृत्वाच्चेति** ॥ कृष्णे अत्यन्तं भक्त्या निमित्तभूतया

---

१. 'कदाचिद् देवकीपुत्रो रामशैनेयसंयुतः । सेव्यमानः सभायां वै नानादेशेश्वरैर्नृपैः ॥ पाञ्चालराजं द्रुपदं बालैः कुन्तीसुतैर्मृधे । बद्धं शुश्राव कौरव्य ब्राह्मणैः सत्रयाजिभिः ॥ तच्छ्रुत्वा हृष्टहृदयः कृतवर्माणमच्युतः । नगरं हस्तिनपुरं प्रेषयामास वेदितुम् ॥' भागवते-१०.५६.१-५.

२. 'युधिष्ठिरं च राजानं चतुर्भिर्भ्रातृभिर्वृतम् । सभाजयामास भृशं कुन्तीं च हृदिकात्मजः' ॥५॥ सभाजितश्च हार्दिक्यः सुखसम्भाषणादिभिः ॥९॥ हार्दिक्यस्ताननुज्ञाप्य बान्धवान् पृथया सह । मातृष्वसेयान् धर्मज्ञानभिवन्द्य यथावयः ॥११॥ भागवते-१०.५६.

३. 'सम्मान्य' इति वरदराजीयः पाठः ।

तदीयोऽयमिति मानित इत्यर्थः । तथा भ्रातृत्वाच्च कृतवर्मणः । कृतवर्मा कथं पाण्डवानां भ्राता इत्यत उक्तम्– **शूरानुजसुतासुत इति** ।। शूरस्य कुन्त्याः पितुः योऽनुजस्तस्य सुतायाः सुतः । तथा च शूरसुतासुताः पाण्डवाः शूरानुजसुतासुतश्च कृतवर्मा एवं मातृष्वसुसुतत्वात् भ्राता इत्युक्तं भवति ।।१४५।।

**अनन्तभट्टीया–** 'शूरानुजसुतासुतः' इत्यनेन कृतवर्मणः पाण्डवभ्रातृत्वमुक्तं भवति । शूरपुत्रीपुत्रत्वेन पाण्डवानाम्, तदनुजपुत्रत्वेन कृतवर्मणः विचार्यमाणे मातृस्वसापुत्रत्वं पाण्डवानां भविष्यतीत्यर्थः । शूरः वसुदेवपिता । तैः पाण्डवैः स्वभ्रातृत्वात् मानितः ययौ ।।१४५।।

**जनार्दनीया–** सोऽपि कृतवर्मापि पाण्डवान् सन्मान्य सत्कृत्य, तैः पाण्डवैर्मानितः सत्कृतः । पाण्डवसत्कारे कारणमाह– **कृष्णभक्त्या भ्रातृत्वाच्चेति** ।। कृष्णे भक्तिमन्तः पाण्डवाः, कृतवर्मा तदीय इति मानित इत्यर्थः । कृतवर्मा कथं पाण्डवानां भ्रातेत्यत आह– **शूरानुजसुतासुत इति** ।। शूरपुत्री कुन्ती, तदनुजसुता कृतवर्ममाता, एवं मातृभगिनीसुतत्वात् भ्राता इत्युक्तं भवति । स हरिं कृष्णं प्रति ययौ, परावृत्त्येति शेषः ।।१४५।।

**भारतश्री–** शूरानुजसुतासुता कृतवर्ममाता, शूरपुत्री कुन्ती एवं मातृभगिनीसुतत्वात् 'भ्राता' इत्युक्तम् ।।१४५-१५४।।

।। इति डम्वलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अष्टादशोऽध्यायः ।।

**चट्टि–** सोऽपि कृतवर्मा पाण्डवान् सन्मान्य सत्कृत्य, तैः पाण्डवैः श्रीकृष्णभक्त्या भ्रातृत्वाच्च मानितः सत्कृतः । श्रीकृष्णे भक्तिमद्भिः पाण्डवैः कृतवर्मा तदीय इति स्वेषां भ्राता इति च मानित इत्यर्थः । कृतवर्मा कथं पाण्डवानां भ्रातेत्यत आह– **शूरानुजसुतासुत इति** ।। शूरपुत्री कुन्ती, शूरानुजसुता कृतवर्ममाता, एवं मातृभगिनीसुतत्वात् भ्रातेत्युक्तं भवति । स कृतवर्मा हरिं श्रीकृष्णं प्रतिययौ, परावृत्त्येति शेषः ।।१४५।।

**ततः प्रभृति सन्त्यज्य देवपक्षा जरासुतम् ।**
**पाण्डवानाश्रिता भूपा ज्ञात्वा भैमार्जुनं बलम् ।।१४६।।**

**वरदराजीया–** ततः प्रभृति तत आरभ्य देवपक्षाः देवपक्षपातिनो भूपाः सर्वे जरासन्धं सन्त्यज्य पाण्डवानेव आश्रिताः । तत्र कारणद्वयम्, भैमार्जुनं भीमार्जुनयोर्विद्यमानं बलं द्रुपदबन्धनादिना ज्ञात्वा, तथा एषु पाण्डवेषु कृष्णस्य विशेषतो अत्यन्तं स्नेहं कृतवर्मप्रेषणादिना विज्ञाय चेति ।।१४६।।

**अनन्तभट्टीया–** देवपक्षाः भूपाः ।।१४६।।

**जनार्दनीया–** देवपक्षाः भूपाः । भैमार्जुनं बलं भीमार्जुनयोः सम्बन्धि भैमार्जुनं तच्च तत् बलं चेति ।।१४६।।

**चट्टि–** ततः प्रभृति तत आरभ्य देवपक्षाः भूपाः भैमार्जुनं वलं भीमार्जुनयोः सम्वन्धि वलं द्रुपद-वन्धनादिना ज्ञात्वा तथा एषु पाण्डवेषु कृष्णस्य विशेषतः स्नेहं अत्यन्तस्नेहं च कृतवर्मप्रेषणादिना विज्ञाय तं जरासुतं सन्त्यज्य पाण्डवानाश्रिताः ।।१४६।।

**विशेषतश्च कृष्णस्य विज्ञाय स्नेहमेषु हि ।**
**पराजिताश्च बहुशः कृष्णेनाचिन्त्यकर्मणा ।।१४७।।**

**वरदराजीया–** ननु देवपक्षास्ते कथं पूर्वं जरासन्धं आश्रिता इत्यत आह– **पराजिता इत्यादिना** ।। बहुशो वहुवारं पराजिता इति ।।१४७।।

**जनार्दनीया–** एषु पाण्डवेषु । ननु देवपक्षास्ते पूर्वं जरासन्धवशं कथं गता इत्यत आह– **पराजिता इति** ।। बहुशः कृष्णेन पराजिताः भूपाः ।।१४७।।

**ताम्रपर्णीया–** ।। **पराजिताश्चेति** ।। चशब्दोऽनौचित्यद्योतकः । पराजिता अपि पाण्डवानाश्रिता इति पूर्वेणान्वयः । यद्वा ननु पाण्डवनिष्ठकृष्णस्नेहज्ञानमात्रेण कथं तावाश्रिता इत्यत आह– **पराजिताश्चेति** ।। यतः कृष्णेन पराजिता ततस्तानाश्रिता इत्यर्थः । यद्वा पराजिता अपि स्निग्धा इत्युत्तरेणान्वयः ।।१४७।।

**चट्टि–** ननु देवपक्षास्ते पूर्वं कथं जरासन्धवशं गता इत्यत आह– **पराजिता इत्यादिना** ।। वहुशो वहुवारं अचिन्त्यकर्मणा श्रीकृष्णेन पराजिता अपि ।। १४७ ।।

**प्रतापादेव ते पूर्वं जरासन्धवशं गताः ।**
**न स्नेहात् तद् बलं ज्ञात्वा पार्थानां केशवस्य च ।।१४८।।**

**व्यासतीर्थीया–** देवपक्षिणः पूर्वं जरासन्धं कस्मादाश्रिता इत्यत आह– **प्रतापादिति** ।। पश्चात् पार्थानां वलं द्रुपदवन्धादिरूपं वलं ज्ञात्वा आश्रिताः ।।१४८-१५०।।

**वरदराजीया–** ते भूपाः पूर्वं प्रतापात् सन्तापादेव क्लेशेनैव जरासन्धस्य प्रतापात् पराक्रमात् वा भयेन वा जरासन्धवशंगताः । न तु जरासन्धस्नेहादित्यर्थः । पार्थानां केशवस्य च तत् पूर्वोक्तं वलं ज्ञात्वा ।।१४८।।

**अनन्तभट्टीया–** तद्वलं द्रुपदवन्धनादिरूपम् ।।१४८।।

**जनार्दनीया–** पूर्वं जरासन्धस्य प्रतापात् पराक्रमात् वशंगताः । प्रतापात् सन्तापाद्वा न तु स्नेहादित्यर्थः । तद्वलं पूर्वोक्तवलम् ।।१४८।।

**ताम्रपर्णीया–** तर्हि प्राग्जरासुताश्रयणे किं निमित्तं भगवद्भक्तत्वादित्यत आह– **प्रतापादिति** ।। जरासुतस्येति शेषः ।।१४८।।

**चट्टि–** ते भूपाः पूर्वं जरासन्धप्रतापात् पराक्रमादेव जरासन्धवशंगताः न तु जरासन्धस्नेहादित्यर्थः। पाण्डवानां केशवस्य च तत् पूर्वोक्तं बलं ज्ञात्वा ॥१४८॥

**जन्मान्तराभ्यासवशात् स्निग्धाः कृष्णे च पाण्डुषु ।**
**जरासन्धभयं त्यक्त्वा तानेव च समाश्रिताः ॥१४९॥**

**वरदराजीया–** देवत्वादेव जन्मान्तराभ्यासवशात् कृष्णे पाण्डवेषु च स्निग्धाः स्नेहयुक्ताः। अतो जरासन्धभयं त्यक्त्वा तानेव पाण्डवानेव ॥१४९॥

**जनार्दनीया–** स्निग्धाः स्नेहयुक्ताः। तानेव पाण्डवानेव ॥१४९॥

**चट्टि–** जन्मान्तराभ्यासवशात् श्रीकृष्णे पाण्डवेषु च स्निग्धाः स्नेहयुक्ताः अतो जरासन्धभयं त्यक्त्वा तानेव पाण्डवानेव समाश्रिताः ॥१४९॥

**अपि तं बहुशः कृष्णविजितं नैव तत्यजुः ।**
**असुराः पूर्वसंस्कारात् संस्कारो बलवान् यतः ॥१५०॥**

**वरदराजीया–** असुरास्तु नैवमित्याह– **अपीत्यादिना** ॥ कृष्णेन विजितं पराजितं जरासन्धं नैव तत्यजुः। कुतः पूर्वसंस्कारात् जन्मान्तरीयविष्णुद्वेषादिसंस्कारात्। यतो देवेषु असुरेषु वा प्रवर्तकः संस्कार एव वलवान्। अतो विरुद्धसंस्कारवशात् विरुद्धा प्रवृत्तिः युक्तैवेति भावः ॥१५०॥

**अनन्तभट्टीया–** न तत्यजुः, मागधमिति शेषः ॥१५०॥

**जनार्दनीया–** कृष्णविजितं कृष्णेन पराजितं जरासन्धं नैव तत्यजुः। कुतः? पूर्वसंस्कारात् ॥१५०॥

**चट्टि–** असुरास्तु नैवमित्याह– **अपीत्यादिना** ॥ यतः संस्कारो वलवान् अतो असुराः बहुशः श्रीकृष्णविजितमपि तं जरासन्धं पूर्वसंस्कारात् जन्मान्तरीयश्रीविष्णुद्वेषादिसंस्कारात् नैव तत्यजुः ॥१५०॥

**देवा हि कारणादन्यानाश्रयन्तोऽपि नाऽन्तरम् ।**
**स्नेहं त्यजन्ति दैवेषु तथाऽन्येऽन्येष्वपि स्फुटम् ॥१५१॥**

**व्यासतीर्थीया–** [१]जन्मजन्मान्तरेऽप्युक्तं न्यायमन्वशप्यति दर्शयति– **देवा हीति** ॥१५१-१५३॥

**मधुसूदनीया–** ॥ **तथान्येष्वपीति** ॥ अन्यान् कारणादाश्रयन्त इत्येतत् आवृत्त्या योज्यम्। अन्ये असुरा अपि कारणवशादन्यान् देवानाश्रयन्तोऽपि अन्येषु असुरेषु आन्तरं स्नेहं न त्यजन्तीत्यन्वयः। एवं वैपरीत्येन ॥१५१॥

---

१. मूलकोशेषु अस्पष्टमिदं वाक्यम्।

**वरदराजीया–** संस्कारस्य वलवत्वं उपपादयति– **देवा हीत्यादिना** ।। कुतश्चित् भयादिकारणात् अन्यान् असुरान् आश्रयन्तोऽपि देवेषु आन्तरं मानसं स्नेहं न त्यजन्ति । संस्कारदार्ढ्यादित्यर्थः । तथाऽन्येऽसुराः अन्येषु असुरेषु स्नेहं न त्यजन्तीत्यर्थः ।।१५१।।

**अनन्तभट्टीया–** अन्ये दैत्याः । अन्येषु विष्णुपक्षिषु ।।१५१।।

**जनार्दनीया–** संस्कारस्य वलवत्वमुपपादयति– **देवा इति** ।। कारणादेव कुतश्चित् कारणादेव अन्यान् दैत्यान् । आन्तरं मानसं स्नेहम् । तथा अन्येऽसुराः असुरेषु स्नेहं न त्यजन्तीत्यर्थः ।।१५१।।

**ताम्रपर्णीया–** अन्येषु ऋषिगन्धर्वादिषु अथवा असुरा इति वर्तते । यथा देवा देवेषु स्नेहं न त्यजन्ति तथा असुरा अन्येषु असुरेषु स्नेहं न त्यजन्तीत्यर्थः ।।१५१-१५३।।

**चट्टि–** संस्कारस्य वलवत्वमुपपादयति– **देवा इत्यादिना** ।। देवाः कारणात् कुतश्चित् भयादि-कारणादन्यान् दैत्यान् आश्रयन्तोऽपि देवेषु आन्तरं मानसं स्नेहं न त्यजन्ति । संस्कारदार्ढ्यादित्यर्थः । तथा अन्येऽसुराः अपि कारणवशादन्यान् देवानाश्रयन्तोऽपि अन्येषु असुरेषु स्फुटं यथा तथा आन्तरं स्नेहं न त्यजन्तीत्यावृत्त्या योज्यम् ।।१५१।।

**धृतराष्ट्रो बलं [१]दृष्ट्वा बहुशो भीमपार्थयोः ।**
**देवत्वाच्च स्वभावेन ज्येष्ठत्वाद् धर्मजस्य च ।**
**सुप्रीत एव तं चक्रे [२]यौवराज्याभिषेकिणम् ।।१५२।।**

**वेदाङ्गतीर्थीया–** धृतराष्ट्रः भीमपार्थयोः वलं दृष्ट्वा स्वभावतः देवत्वाच्च सुप्रीत एव धर्मजस्य ज्येष्ठत्वात् तं यौवराज्याभिषेकिणं चक्रे ।।१५२।।

**मधुसूदनीया–** ज्येष्ठत्वाद्दुर्योधनापेक्षया गुणैर्वयसा च ज्येष्ठत्वादित्यर्थः ।।१५२-१५४।।

।। इति श्रीविद्याधीशतीर्थपूज्यपादानां शिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे अष्टादशोऽध्यायः ।।

**वरदराजीया–** भीमपार्थयोः बलं ज्ञात्वा स्वभावेन देवत्वात् इदानीं कलिनाविष्टत्वेऽपि देवस्वभावादित्यर्थः । ज्येष्ठत्वात् दुर्योधनाद्यपेक्षया । यौवराज्ये युवराजपदेषु अभिषेकिणं अभिषेकयुक्तं सुप्रीत एव चक्रे । नतु निर्वन्धक्लेशेनेत्यर्थः ।।१५२।।

**अनन्तभट्टीया–** देवत्वात् धृतराष्ट्रस्य देवत्वादित्यर्थः ।।१५२।।

---

१. 'ज्ञात्वा' इति वरदराजीयपाठः ।

२. 'यौवराज्येऽभिषेकिणम्' इति वरदराजीयपाठः ।

**लघ्वनन्तभट्टीया–** धर्मस्य ज्येष्ठत्वात् ।।१५२-१५४।।

।। इति श्रीमुष्णं अनन्ताचार्यविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां सत्तत्त्वमालायां अष्टादशोऽध्यायः ।।

**जनार्दनीया–** भीमार्जुनयोर्बलं बहुशः दृष्ट्वा, स्वभावेन देवत्वाच्च सुप्रीत एव, धर्मजस्य ज्येष्ठत्वात्, यौवराज्याभिषेकं चक्रे ।।१५२।।

**चट्टि–** धृतराष्ट्रो बहुशो बहुवारं भीमपार्थयोः बलं दृष्ट्वा, स्वभावेन देवत्वादिदानीं कलिनिविष्टत्वेऽपि देवस्वभावेनेत्यर्थः । सुप्रीत एव धर्मजस्य ज्येष्ठत्वात् तं यौवराज्याभिषेकिणं चक्रे ।।१५२।।

**[१]भीमार्जुनावथो जित्वा सर्वदिक्षु च भूपतीन् ।**
**चक्रतुः करदान् सर्वान् धृतराष्ट्रस्य दुर्जयौ ।।१५३।।**

**वेदाङ्गतीर्थीया–** अथो युधिष्ठिराभिषेकानन्तरम् । दुर्जयौ भीमार्जुनौ । धृतराष्ट्रस्य करदान् चक्रतुः ।।१५३।।

**वरदराजीया–** अथो यौवराज्येऽभिषेकानन्तरम् । सर्वदिक्षु विद्यमानान् भूपतीन् जित्वा धृतराष्ट्रस्य करदान् यथा करं प्रयच्छन्ति तथा चक्रतुः । यतो दुर्जयौ केनापि जेतुमशक्यावित्यर्थः ।।१५३।।

**जनार्दनीया–** अथो युधिष्ठिराभिषेकानन्तरम् । दुर्जयौ जेतुमशक्यौ भीमपार्थौ धृतराष्ट्रस्य करदान् चक्रतुः ।।१५३।।

**चट्टि–** अथो अनन्तरम् । दुर्जयौ जेतुमशक्यौ भीमार्जुनौ सर्वदिक्षु विद्यमानान् भूपतीन् जित्वा सर्वान् धृतराष्ट्रस्य करदान् चक्रतुः ।।१५३।।

**तयोः प्रीतोऽभवत् सोऽपि पौरजानपदास्तथा ।**
**भीष्मद्रोणमुखाः सर्वेऽप्यतिमानुषकर्मणा ।।१५४।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते
श्रीमन्महाभारततात्पर्यनिर्णये अष्टादशोऽध्यायः ।।

---

१. 'त्रिवर्षकृतयज्ञस्तु गन्धर्वाणामुपप्लवे । अर्जुनप्रमुखैः पार्थैः सौवीरः समरे हतः । न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् । सोऽर्जुनेन वशं नीतो राजासीद्यवनाधिपः । अतीव बलसम्पन्नः सदा मानी कुरून् प्रति । विपुलो नाम सौवीरः शस्तः पार्थेन धीमता । दत्तामित्र इति ख्यातं सङ्ग्रामे कृतनिश्चयम् । सुमित्रं नाम सौवीरं अर्जुनोऽदमयच्छरैः । भीमसेनसहायश्च रथानामयुतश्च सः । अर्जुनः समरे प्राच्यान् सर्वानेकरथोऽजयत् । तथैवैकरथो गत्वा दक्षिणामजयद्दिशम् । धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः । यतः पञ्चदशे वर्षे सर्वमेतच्चकार सः । तं दृष्ट्वा धार्तराष्ट्राणां ततो भयमजायत ।' इति आदिपर्वणि-१५१.४४-५०.

**व्यासतीर्थीया–** मानुषमतिक्रम्यातिमानुषम् ।।१५४।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां अष्टादशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** सोऽपि धृतराष्ट्रोऽपि तयोरतिमानुषकर्मणा तयोः प्रीतो अभवदिति सम्बन्धः ।।१५४।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां अष्टादशोऽध्यायः ।।

**वरदराजीया–** तयोः भीमार्जुनयोः । सोऽपि धृतराष्ट्रोऽपि प्रीतोऽभवत् । तथा भीष्मद्रोणमुखाः पौरजानपदाः पुरस्थाः जानपदस्थाश्च देशस्थाश्च सर्वेऽपि अतिमानुषकर्मणा मनुष्यैः कर्तुमशक्येन मानुषकर्माण्यतिक्रान्तालौकिककर्मणा भीमार्जुनयोः कर्मणा प्रीतोऽभवत् । इत्यशेषमतिमङ्गलम् ।।१५४।।

श्रीमद्भारतात्पर्यनिर्णयाध्याय एव हि । व्याकृतोऽष्टादशस्तावत्प्रीत्यै माधवमध्वयोः ।।

।। इति आद्यवरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां अष्टादशोऽध्यायः ।।

**अनन्तभट्टीया–** अतिमानुषं मनुष्यासाध्यम् ।।१५४।।

।। इति श्रीमद्विद्वच्छिखामणिनरसिंहाचार्यसुतेन अनन्ताख्येन कृतायां तन्त्रमालायां अष्टादशोऽध्यायः ।।

**जनार्दनीया–** सोऽपि धृतराष्ट्रोऽपि भीष्मद्रोणमुखाश्च तयोः अतिमानुषकर्मणा मनुष्यैः कर्तुमशक्येन कर्मणा तयोः प्रीतः अभूत् । प्रीताः, अभूवन्निति शेषः ।।१५४।।

यं गङ्गा जमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात् पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसंपद्युतात् ।
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायः किलाष्टादशः श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां अष्टादशोऽध्यायः ।।

**ताम्रपर्णीया–** अतिमानुषकर्मणा मानुषकर्माण्यतिक्रान्तालौकिककर्मणा ।।१५४।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) अष्टादशोऽध्यायः ।।

**चट्टि–** सोऽपि धृतराष्ट्रोऽपि तयोः भीमार्जुनयोः प्रीतो अभवत् । तथा भीष्मद्रोणादयः पौरजानपदाः सर्वेऽपि तयोः भीमार्जुनयोः अतिमानुषकर्मणा मनुष्यैः कर्तुमशक्येन कर्मणा प्रीताः, अभवन्निति शेषः । इत्यशेषमतिमङ्गलम् ।।१५४।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अष्टादशोऽध्यायः ।।

# अथ एकोनविंशोऽध्यायः

**एवं शुभोच्चगुणवत्सु जनार्दनेन**
**युक्तेषु पाण्डुषु चरत्स्वधिकं शुभानि ।**
**नास्तिक्यनीतिमखिलां[१] गुरुदेवतादि-**
**सत्स्वञ्जसैव जगृहुर्धृतराष्ट्रपुत्राः ॥१॥**

**व्यासतीर्थीया–** दुर्योधनादिवर्तमानमाह– **एवं शुभेत्यादिना** ॥१॥

**वेदाङ्गतीर्थीया–** गुरुदेवतादिसत्सु गुरुदेवतादिविषये ॥१॥

**वादिराजतीर्थीया–** 'अञ्जसैव' इत्येवकारस्य गुरुदेवतादिसत्स्वेवेति सम्बन्धः ॥१॥

**वरदराजीया–** ॥ **एवमित्यादि** ॥ शुभाः शुद्धाः उच्चाः उत्तमाः गुणाः येषां सन्ति इति ते तथा तेषु । पाण्डवेषु अधिकं यथा भवति तथा । शुभानि कर्माणि अधिकं चरत्सु कुर्वाणेषु सत्सु । तत्र हेतुः– **जनार्दनेन कृष्णेन युक्तेषु आनुकूल्येन स्थितेषु इति** ॥ गुरुदेवतादिषु सत्सु । नास्तिक्यनीतिं गुरुः नास्ति देवतापि नास्ति इत्यादिप्रतिपादिकां अखिलां नीतिं नीतिशास्त्रं जगृहुः अभ्यस्तवन्तः ॥१॥

**अनन्तभट्टीया–** युक्तेषु विचारितेषु ॥ **नास्तिक्येति** ॥ गुर्वादयो न सन्तीति प्रतिपादिकां नीतिम् ॥१॥

**जनार्दनीया–** ॥ **एवमिति** ॥ शुभाः शुद्धाः, उच्चाः उत्तमाः, गुणाः येषां सन्तीति ते तथा तेषु । पाण्डवेषु अधिकं यथा भवति तथा । शुभानि उत्तमानि चरत्सु सत्सु कुर्वाणेषु सत्सु, कर्माणीति शेषः । गुरुदेवतादिसत्सु गुर्वादिविषये नास्तिक्यनीतिं गुरुर्नास्ति देवतापि नास्ति इत्यादिप्रतिपादिकां अखिलां नीतिं नीतिशास्त्रं जगृहुः ॥१॥

**ताम्रपर्णी–** युक्तेषु विचारितेषु ॥१-२॥

**भारतश्री–** गुरुदेवतादिसत्सु विषयेषु नास्तिक्यनीतिमतुलां गुरुः नास्ति देवता नास्ति धर्मो नास्ति परद्रोहादिना पापं च नास्ति इति प्रतिपादकं शास्त्रमित्यर्थः ॥१॥

**चट्टि–** दुर्योधनादीनां वर्तमानान्याह– **एवमित्यादिना** ॥ शुभाः शुद्धाः उच्चाः उत्तमाः गुणाः येषां सन्तीति ते तथा तेषु । जनार्दनेन श्रीकृष्णेन युक्तेषु पाण्डुषु अधिकं यथा भवति तथा । शुभानि कर्माणि । एवं चरत्सु कुर्वाणेषु सत्सु । धृतराष्ट्रपुत्राः दुर्योधनादयः गुरुदेवतादिसत्सु गुरुदेवतादिसज्जनादि-

---

१. 'नास्तिक्यनीतिमतुलां' इति भारतश्री-चट्टिपाठः ।

विषये अतुलां नास्तिक्यनीतिं गुरुर्नास्ति देवतापि नास्तीति प्रतिपादकं नीतिशास्त्रं अञ्जसैव जगृहुः अभ्यस्तवन्तः ।।१।।

**नाम्ना कलिङ्ग इति चासुरको[१] द्विजोऽभूत्**
**शिष्यः सुरेतरगुरोः शकुनेर्गुरुः सः ।**
**[२]नीतिं स कुत्सिततमां[३] धृतराष्ट्रपुत्रे-**
**ष्वाधाद् रहो वचनतः शकुनेः समस्ताम् ।।२।।**

**व्यासतीर्थीया–** नास्तिक्यनीतौ तेषां को गुरुरित्यत आह– **नाम्नेति** ।। २ ।।

**वेदाङ्गतीर्थीया–** तेषां नास्तिक्यनीतौ को गुरुरित्यत आह– **नाम्नेति** ।। यः आसुरकः नाम्ना कलिङ्ग इति द्विजोऽभूत् । सुरेतरगुरोः शिष्यः, शकुनेः स गुरुः, सः शकुनेः वचनतः रहः समस्तां सुकुत्सिततमां नीतिं धृतराष्ट्रपुत्रेषु आधात् ।। २ ।।

**वादिराजतीर्थीया–** 'नाम्ना कलिङ्ग इति चासुरकः' इत्यत्र आसुरकः द्विजश्चेति चशब्दसम्बन्धः ।।२।।

**वरदराजीया–** आसुरकः कुत्सितोऽसुरः, पूर्वमिति शेषः । अत्र कलिङ्ग इति द्विजोऽभूत् । सुरेतरगुरोः शुक्रस्य शिष्यः शकुनेश्च गुरुः । सः कलिङ्गः कुत्सितेषु शास्त्रेषु विद्यमानां अतिशयितां कुत्सिततमां समस्तां नीतिं रहः एकान्ते शकुनेः वचनतः प्रार्थनया आधात् स्थापितवानित्यर्थः ।।२।।

**अनन्तभट्टीया–** ।। **सुरेतरगुरोरिति** ।। शुक्रस्य ।। २ ।।

**जनार्दनीया–** एषां नास्तिक्यनीतौ को गुरुरित्यत आह– **नाम्नेति** ।। असुरकः कुत्सितोऽसुरः, पूर्वमिति शेषः । अत्र नाम्ना कलिङ्ग इति द्विजोऽभूत् । स सुरेतरगुरोः सुरेतराः असुरास्तेषां गुरोः शुक्रस्य शिष्यः । स शकुनेर्गुरुः शकुनेर्वचनतः रहः समस्तां कुत्सिततमां नीतिं धृतराष्ट्रपुत्रेष्वाधात् ।।२।।

**भारतश्री–** तदुपदेशकगुरुनामाह– **नाम्नेति** ।। असुरको द्विजः, असुरेष्वपि वर्णविभागोऽस्तीति अनेन ज्ञायते । अथवा पूर्वमासुरकः असुरेषु कुत्सितः । इदानीं कलिङ्गोऽभूदिति ।। २ ।।

**चट्टि–** एषां नास्तिक्यनीतौ गुरुः क इत्यत आह– **नाम्नेति** ।। आसुरकः कुत्सितासुरः, पूर्वमिति शेषः । अत्र नाम्ना कलिङ्ग इति द्विजोऽभूत् । स सुरेतरगुरोः सुरेतराः असुरास्तेषां गुरोः शुक्रस्य शिष्यः ।

---

१. 'असुरकः' इति पदविभागः जनार्दनीय-भारतश्रीटिप्पण्याम् ।

२. 'दुर्योधनोऽथ शकुनिः कर्णदुश्शासनावपि । कणिङ्कमुपसङ्गम्य मन्त्रिणं सौबलस्य च ।। पप्रच्छुर्भरतश्रेष्ठ पाण्डवान् प्रति नैकधा । प्रवृद्धाः पाण्डवा ह्येते नित्यं तेभ्यस्त्रसाम्यहम् ।। तत्र मे सहपक्षस्य यद्भवेत् क्षेमकारकम् । कणिङ्क तन्त्वमाचक्ष्व करिष्यामः कथं वयम् ।।' इत्यादिपर्वणि पृ-930 BORI

३. 'सुकुत्सिततमाम्' इति वेदाङ्गतीर्थ-चट्टीपाठः ।

स च स एव शकुनिगुरुः शकुनेर्वचनतः रहः रहसि एकान्ते सुकुत्सिततमां समस्तां नीतिं धृतराष्ट्रपुत्रेष्वाधात् ।।२।।

**[1]छद्मैव यत्र परमं न सुराश्च पूज्याः**
**स्वार्थेन वञ्चनकृते जगतोऽखिलं च ।**
**धर्मादिकार्यमपि यस्य महोपधिः स्यात्**
**श्रेष्ठः स एव [2]निखिलासुरदैत्यसङ्घात् ।।३।।**

**व्यासतीर्थीया–** कुत्सितां नीतिं एकदेशतो दर्शयति । यत्र पुंसि । परमं तात्पर्यगोचरम् । यस्याखिलं च धर्मादिः कार्यं करणमपि स्वार्थम् । जगतो वञ्चनकृते महानुपधिः स श्रेष्ठ इति योजना ।।३-६।।

**वेदाङ्गतीर्थीया–** दुर्नीतिस्वरूपं लेशतो दर्शयति– **छद्मेति** ।। यत्र यस्यां नीतौ छद्मैव परमं परमतात्पर्यगोचरं सर्वप्रकारेण छद्म एव प्रतिपाद्यमिति भावः । स्वार्थेन स्वप्रयोजनत्वेन सुराश्च न पूज्याः । जगतः वञ्चनकृते अखिलं धर्मादिकार्यं कर्तव्यम् । यस्य वञ्चकस्य पुंसः महोपधिः स्यात् सः महाछद्मवानेव पुरुषः निखिलात् सुरदैत्यसङ्घात् श्रेष्ठः इति योजना ।।३।।

**वादिराजतीर्थीया–** यत्र यस्यां नीतौ छद्मैव परमं उत्तममिति प्रतिपाद्यते तां नीतिमाधादिति पूर्वेणान्वयः । यस्य पुरुषस्य सुराश्च स्वार्थेन स्वप्रयोजनेन निमित्तेन न पूज्याः । अन्ये किमिति कैमुत्यं चशब्देन सूचयति । अखिलं धर्मादिकार्यमपि सन्ध्यावन्दनयज्ञदानादिसुरपूजारूपधर्मादि कार्यमपि जगतो वञ्चनकृते कर्तव्यम् । 'अपिः पदार्थसम्भावनान्ववसर्गगर्हासमुच्चयेषु' इत्यनुशासनात् । अव्याजत्वेन कार्यत्वसम्भावनासूचनार्थमपिशब्दः । यस्य महोपधिः महानुपधिः कपटं यस्य सः महोपधिः स्यात् । 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे' इत्यमरः । स एव निखिलासुरदैत्यसङ्घात् श्रेष्ठ इति च यस्यां नीतौ प्रतिपाद्यते तां नीतिमिति पूर्वेणान्वयः ।। ३ ।।

**मधुसूदनीया–** ।। **छद्मैवेति** ।। यत्र यस्मिन् पुरुषे छद्मैव परमं वञ्चनमेव तात्पर्यारूढम् । येन पुंसा सुराः स्वार्थेन पूज्याः न । यः सुरपूजां स्वाभीष्टसिद्धिसाधनं न मन्यत इत्यर्थः । जगतो वञ्चनकृते जगद्वञ्चनार्थमेव । यस्याऽखिलं समस्तं धर्मादिकार्यं कर्तव्यम् । यश्च महोपधिः महानुपधिः उत्कृष्टं कैतवं मृषावचनं यस्य स चेत्यर्थः । स एव पुमान् निखिलासुरदैत्यसङ्घात् श्रेष्ठ इति । वेदाङ्गतीर्थास्तु- 'यत्र नीतौ छद्मैव परमं परमतात्पर्यगोचरं सर्वप्रकारेणैव छद्मैव प्रतिपाद्यमिति भावः' इति । वरदराजाचार्यस्तु- 'यत्र नीतौ छद्मैव परमं प्रतिपाद्यं स्वार्थेन निमित्तेन सुराः पूज्याः, वस्तुतस्तु सुराः पूज्याः न भवन्तीति

१. 'अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः । लोकान् विश्वासयित्वैव ततो लुम्पेद्यथा वृकः ।।' इत्यादिपर्वणि-१४३.७०.

२. 'निखिलात् सुरदैत्यसङ्घात्' इति वेदाङ्गतीर्थीयपाठः ।

प्रतिपाद्यमित्यर्थः' इति व्याचक्षते । तच्चिन्त्यम् । 'श्रेष्ठस्स एव' इति तच्छब्देन पुरुषस्य परामृष्टत्वेन यच्छब्देन तस्यैव परामृष्टव्यत्वादिति । अध्याहारदोषदुष्टत्वाच्च ।। ३ ।।

**वरदराजीया–** नीतेः कुत्सिततमत्वं दर्शयति– **छद्मैव इत्यादिना** ।। यत्र नीतौ छद्मैव परमं प्रतिपाद्यं स्वार्थेन निमित्तेन सुराः पूज्याः, वस्तुतस्तु सुराः पूज्याः न भवन्तीति प्रतिपाद्यमित्यर्थः । जगतो वञ्चनकृते लोकप्रतारणार्थं निखिलं धर्मादिकं कार्यमिति प्रतिपाद्यम् । यस्य पुरुषस्य महोपधिः महत् छद्म स्यात् वर्तते स पुरुष एव निखिलात् असुरसङ्घादेः श्रेष्ठ इति च प्रतिपाद्यमित्यर्थः ।।३।।

**अनन्तभट्टीया–** ।। **छद्मेति** ।। यत्र यस्मिन् पुरुषे छद्मैव परमं तात्पर्यारूढम् । येन सुराः स्वार्थेन पूज्याः न । यः स्वाभीष्टसिद्धेः सुरपूजासाधनं न भवतीति मन्यत इत्यर्थः । किञ्च यस्य जगतः वञ्चनकृते अखिलं धर्मादिकं कार्यम् । यो जगद्वञ्चनार्थमेव सन्ध्यादिकमनुष्ठातव्यम्, न परलोकार्थमिति मन्यत इत्यर्थः । यः महोपधिः महानुपधिः कपटं यस्य तथोक्तः । सः श्रेष्ठः ।। ३ ।।

**जनार्दनीया–** दुर्नीतिस्वरूपं लेशतो दर्शयति– **छद्मेति** ।। यत्र यस्यां नीतौ छद्मैव परमं परमतात्पर्यगोचरम् । सर्वप्रकारेण छद्मैव प्रतिपाद्यमिति भावः । सुराश्च न पूज्याः । यदि पूज्याः तर्हि स्वार्थेन निमित्तेन पूज्याः । जगतः वञ्चनकृते, अखिलं धर्मादि विहितानुष्ठानम् । आदिशब्देन निषिद्धत्यागः । एतद्द्वयं कार्यमपि कर्तव्यम् । यस्य पुंसः महोपधिः महान् उपधिः कपटं स्यात् । स महच्छद्मवान् पुरुषः । निखिलासुरदैत्यसङ्घात् असुभिः प्राणिभिः रमन्ते भक्षयन्ति ते असुराः राक्षसा इत्यर्थः । असुराश्च, दैत्याश्च, तेषां सङ्घात् समूहात् श्रेष्ठ इति योजना ।। ३ ।।

**ताम्रपर्णी–** ।। **छद्मैवेति** ।। यत्र पुंसि छद्मैव परममतिशयितं सुराश्च येन न पूज्याः । यस्याखिलं धर्मादिकार्यं करणमपि स्वार्थेन किन्तु जगतो वञ्चने कृते महानुपाधिः स्यात् । यद्वा सुराश्च स्वार्थेन स्वप्रयोजनहेतुतया न पूज्याः किन्तु वञ्चनकृते जगतः धर्मादिकं कार्यमपि यस्य महोपधि औपाधिकं स्यात् । स एव श्रेष्ठ इत्यादि ।।३।।

**अतिविशद–** 'श्रेष्ठः स एव निखिलासुरदैत्यसङ्घात्' इत्यत्र आसुराः असुरसम्बन्धिन इति व्याख्येयम् । 'असुराः' इति पदच्छेदे दैत्यशब्देन पौनरुक्त्यमिति भावः ।। ३-२९ ।।

**भारतश्री–** कुत्सितनीतिं लेशेन दर्शयति– **छद्मैवेत्यादिना** ।। यत्र यस्यां नीतौ छद्मैव परमं परमतात्पर्यगोचरम् । सुराः न पूज्याः यदि च पूज्याः तदा स्वार्थेन द्रव्यादिप्रयोजनोद्देशेन जगतो वञ्चनकृते पूज्याः । अयं देवपूजादि करोति । अतः सज्जन इति जगतो वृद्धिं जनयित्वा द्रव्यादिस्वार्थः सम्पाद्य इत्यर्थः । रत्यादिकुशास्त्रप्रतिपाद्यश्रवणेन यस्य पुंसः धर्मादिकार्यम् । आदिशब्देन निषिद्धत्यागः । अपीत्यनेन ऐहिकादिकमपि महोपधिः स्यात् महाकपटः स्यात् । स महाछद्मवान् पुरुषः निखिलासुरदैत्यसङ्घात् महान् श्रेष्ठ इति योजना ।। ३ ।।

**चट्टि—** नीतेः सुकुत्सिततमत्वं दर्शयति— **छद्मेति** ।। यत्र यस्यां नीतौ छद्मैव परमं परमतात्पर्यगोचरम्, सर्वप्रकारेण छद्मैव प्रतिपाद्यमिति भावः । सुराश्च स्वार्थेन निमित्तेन न पूज्याः । जगतः वञ्चनकृते, अखिलं धर्मादि धर्मादिविहितानुष्ठानम् । आदिशब्देन निषिद्धत्यागश्च । एतद्वयमपि कार्यं कर्तव्यं यस्य पुंसः । महोपधिः महान् उपधिः कपटं स्यात् । स महाछद्मवान् पुरुषः एवाखिलासुरदैत्यसङ्घात् श्रेष्ठः । यद्वा यत्र यस्मिन् पुरुषे छद्मैव परमं वञ्चनमेव तात्पर्यरूढं येन पुंसा सुराः स्वार्थेन पूज्याः न, यः सुरपूजां स्वाभीष्टसिद्धिसाधनं न मन्यत इत्यर्थः । जगतो वञ्चनकृते जगद्वञ्चनायैव यस्याखिलं समस्तं धर्मादिकार्यं कर्तव्यं यश्च महोपधिः महानुपधिरुत्कृष्टं कैतवं मृषा वचनं यस्य स च स एव पुमान् निखिलासुरदैत्यसङ्घात् श्रेष्ठ इति ।। ३ ।।

**इत्यादि [1]कुत्सिततमां जगृहुः स्म विद्या-**
**मज्ञात एव धृतराष्ट्रमुखैः समस्तैः ।**
**तेषां स्वभावबलतो रुचिता च सैव**
**विस्तारिता च निजबुद्धिबलादतोऽपि ।।४।।**

**वेदाङ्गतीर्थीया—** अतोऽपि गुरूक्तादपि ।। ४-५ ।।

**वादिराजतीर्थीया—** 'अज्ञात एव धृतराष्ट्रमुखैस्समस्तैः' इत्यत्र अज्ञाते प्रदेश एवेत्यर्थः । 'निजबुद्धिबलादतोऽपि' इत्यत्र अतोऽपि गुरूक्तादपि ।। ४-५ ।।

**सत्याभिनवतीर्थीया—** 'इत्यादि कल्पिततमां..' इत्यस्ति । तस्यार्थः- धृतराष्ट्रपुत्राः धृतराष्ट्रमुखैः समस्तैः अज्ञाते स्थल एव इत्यादिकल्पिततमां विद्यां जगृहुः स्मेति । एतेन धृतराष्ट्रमुखैः समस्तैः विद्याग्रहणं यथा न ज्ञायते तथा विद्यां जगृहुः इति अज्ञानस्य विद्याग्रहणसमकालत्वं वक्तव्यम् । अज्ञाते सति जगृहुरिति अज्ञानस्य विद्याग्रहणपूर्वभावित्वकथनमनुपपन्नमिति दूषणं परास्तम् । स्थल इत्यस्य शेषेण अज्ञात इत्यस्य अज्ञातस्थले इत्यर्थः । धृतराष्ट्रमुखैः समस्तैः विद्याग्रहणं यथा न ज्ञायते तथा जगृहुरिति तात्पर्यार्थ इत्यङ्गीकारात् ।। ४ ।।

**मधुसूदनीया—** ।। **इत्यादि कुत्सिततमामिति** ।। आदिशब्देन 'भयेन भीषयेद्भीरुं शूरमञ्जलिकर्मणा। लुब्धमर्थप्रदानेन [2]सख्येनैव समौजसम् ।।' (१५३.६०) इत्यादिपर्वोक्तनीतिर्ग्राह्या ।। ४-१५ ।।

**वरदराजीया—** इत्याद्यर्थप्रतिपादिकां अत एव कुत्सिततमां विद्यां धृतराष्ट्रमुखैः अज्ञात एव सति जगृहुरित्यर्थः । तेषां दुर्योधनादीनां कुत्सितस्वभावबलतः सा विद्या रुचितैव स्वादुतया आस्वादिता, निजबुद्धिबलात् अतोऽपि कलिङ्गोपदेशादपि विस्तारिता ।।४।।

---

१. 'कल्पिततमाम्' इति सत्याभिनवतीर्थीयपाठः ।

२. 'समं न्यूनं तथौजसा' इति प्रचलितः पाठः ।

**अनन्तभट्टीया–** अज्ञातस्थले । अतः गुरोरपि ।। ४-५ ।।

**जनार्दनीया–** समस्तैरज्ञाते सति तेषां ज्ञानाभावे सति । तेषां दुर्योधनादीनाम् । स्वभाववलतः योग्यतावलात् । सैव दुर्नीतिरेव । रुचिता प्रिया । अतो गुरूक्तादपि कलिङ्गादपि वा विस्तारिता ।।४।।

**ताम्रपर्णी–** ।। **कुत्सिततमामित्यादि** ।। नीचा च सा कुत्सिततमा च इत्यादि कुत्सिततमां तां विद्यां जगृहुरित्यर्थः । यद्वा यत्र नीतौ इत्यादि प्रतिपाद्यते तां विद्यां जगृहुरिति योजना ।। ४-६ ।।

**भावविवृतिः–** ।।१-३।। अतोऽपि उपदेष्टृवृद्धेस्सकाशादपि ।। ४-२० ।।

**भारतश्री–** अज्ञाते देशे, रहसीति यावत् । स्वभाववलतः योग्यतावलात् ।। ४-५ ।।

**चट्टि–** इत्यादिकुत्सिततमां विद्यां धृतराष्ट्रमुखैः समस्तैरज्ञात एव सति जगृहुः । 'इत्यादि' इत्यत्र आदिशब्देन- 'भयेन भीषयेत् भीरुं शूरमञ्जलिकर्मणा । लुब्धमर्थप्रदानेन सख्येनैव समौजसम् ।।' इत्याद्यादिपर्ववाक्योक्तनीतिर्ग्राह्या । तेषां दुर्योधनादीनाम् । स्वभाववलतः योग्यतावलात् । सैव दुर्नीतिरेव रुचिता प्रिया । निजवुद्धिवलात् अतोऽपि गुरूक्तादपि विस्तारिता ।। ४ ।।

**[१]सम्पूर्णदुर्मतिरथो धृतराष्ट्रसूनु-**
**स्तातप्यमानहृदयो[२] निखिलान्यहानि ।**
**दृष्ट्वा श्रियं परमिकां विजयं च पार्थे-**
**ष्वाहेदमेत्य [३]पितरं सह सौबलेन ।।५।।**

**वरदराजीया–** विद्याभ्यासफलमाह– **सम्पूर्णेति** ।। अतोऽपि तस्मादेव निखिलान्यहानि सर्वकालं तातप्यमानहृदयः सन्तप्यमानमनाः । तत्र कारणमाह– **दृष्ट्वेति** ।। परमिकां उत्तमाम् । पितरं धृतराष्ट्रम् । सौवलेन शकुनिना ।।५।।

**जनार्दनीया–** विद्याभ्यासफलमाह– **सम्पूर्णेति** ।। निखिलान्यहानि सर्वकालम् । परमिकां उत्तमाम् ।।५।।

---

१. 'यः सर्वान् धृतराष्ट्रस्य पुत्रान् विप्रचकार ह । भीमसेनो महावाहुर्वलाद्धलवतां वरः ।। अदुष्टभावं तं दोषैः जगृहुर्दोषबुद्धयः । धार्तराष्ट्रास्तथा सर्वे भयाद्भीमस्य कर्मणा ।।' इत्यादिपर्वणि- १५२.५१-५२.

२. 'तान् दृष्ट्वा कर्मभिः पार्थान् सर्वानागतलक्षणान् । वलाद्बहुगुणाँस्तेभ्यो बिभियुर्दोषवुद्धयः ।। एवं सर्वे महात्मानः पाण्डवा मनुजोत्तमाः। पराराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः पुरा । ततो वलमतिख्यातं विज्ञाय दृढधन्विनाम् । दूषितः सहसा भावो धृतराष्ट्रस्य पाण्डुषु । स चिन्तापरमो राजा न निद्रामलभन्निशि ।।' आदिपर्वणि-१५१.५४-५५ । 'प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् । दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मनाः ।।' आदिपर्वणि-१५२.१.

३. 'स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे । ईर्ष्यया चापि सन्तप्तो धृतराष्ट्रमुपागमत् ।। ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः । पौरानुरागसन्तप्तः पश्चादिदमभाषत ।।' इत्यादिपर्वणि १५२.११-१२.

**चट्टि–** विद्याभ्यासफलमाह– **सम्पूर्णेति** ।। सम्पूर्णा दुर्मतिः दुष्टबुद्धिर्यस्य स तथा । असौ धृतराष्ट्रसूनुः पार्थेषु परमिकां उत्तमां श्रियं विजयं च दृष्ट्वा, निखिलान्यहानि सर्वकालं तातप्यमानं सन्तप्यमानं हृदयं मनो यस्य स तथाभूतः सन् सौबलेन शकुनिना सह पितरं धृतराष्ट्रमेत्य इदं वक्ष्यमाणमाह ।।५।।

**ज्येष्ठस्य तेऽपि हि वयं हृदयप्रजाता**
**नार्हत्वमेव गमिता भवतैव राज्ये ।**
**भ्रातुः कनीयस उतापि हि दारजाता**
**अन्यैश्च राज्यपदवीं भवतैव नीताः ।।६।।**

**वेदाङ्गतीर्थीया–** हृदयप्रजाताः औरसाः । अन्यैः कनीयस उत कनीयसश्च भ्रातुः दारजाताः अपि ।।६।।

**वादिराजतीर्थीया–** 'तेऽपि हि वयं हृदयप्रजाताः' इत्यत्र ते तव हृदयप्रजाता अपीत्यपिपदसम्बन्धः । ज्येष्ठपुत्रस्यैवराज्ययोग्यत्वप्रसिद्धिसूचनायहिशब्दः ।भवतैवार्हत्वंनैवगमिताइत्येवकारद्वयसम्बन्धः ।।६।।

**वरदराजीया–** ज्येष्ठस्य पाण्डोः सकाशात् ज्येष्ठस्य भ्रातुः ते तव हृदयेन रेतसा प्रजाता अपि वयं राज्ये अर्हत्वं योग्यत्वं त्वयैव न गमिताः । भ्रातुः कनीयसः कनिष्ठस्य भ्रातुः उत तत्रापि दाराजाताः क्षेत्रजाताः न तु वयमिव औरसाः । तत्रापि अन्यैः पुरुषैः दारजाताः न तु देवरादिभिः । एवम्भूता अपि पाण्डवाः त्वयैव राज्यपदवीं नीताः प्रापिताः ।। ६ ।।

**अनन्तभट्टीया–** अन्यैः पुरुषैः भ्रातुः दारजाताः । राज्यपदवीं राज्यमार्गम् । यौवराज्यमित्यर्थः ।।६।।

**जनार्दनीया–** हृदयप्रजाता औरसाः । अर्हत्वं योग्यत्वम् । उत कनीयसः कनिष्ठस्य भ्रातुः पाण्डोः अन्यैः अन्यपुरुषैः दारजाताः क्षेत्रजाः धर्मादयः राज्यपदवीं राज्यमार्गम् । यौवराज्यमित्यर्थः । भवतैव त्वयैव नीताः प्रापिताः ।।६।।

**भारतश्री–** हृदयप्रजाता औरसाः ।। ६ ।।

**चट्टि–** वयं ज्येष्ठस्य पाण्डोः सकाशात् ज्येष्ठस्य ते हृदयप्रजाता औरसाः अपि राज्ये यौवराज्ये अर्हत्वं योग्यत्वं भवतैव न गमिताः न प्रापिताः । उत कनीयसः कनिष्ठस्य भ्रातुः पाण्डोः अन्यैः अन्यपुरुषैः दारजाताः क्षेत्रजाः अपि धर्मादयः भवतैव राज्यपदवीं राज्यमार्गम् । यौवराज्यमित्यर्थः । नीताः प्रापिताः ।। ६ ।।

**राज्यं महच्च समवाप्स्यति धर्मसूनु-**
**स्त्वत्तोऽथवाऽनुजबलात्[१] प्रसभं वयं तु ।**

---

१. 'अथ चानुजबलात्' इति चट्टीपाठः ।

**[1]दासा भवेम निजतन्तुभिरेव साकं**
**कुन्तीसुतस्य परतोऽपि तदन्वयस्य ॥७॥**

**व्यासतीर्थीया–** उपधिममितमित्यतो वहुरूपां नीतिं दर्शयन्नाह । महच्च सम्पूर्णं च । तदन्वयस्य मदन्वये जातो दासो भवेत् ॥ ७ ॥

**वेदाङ्गतीर्थीया–** धर्मसूनुः त्वत्तः त्वत्प्रसादात् वा अथ अनुजवलात् प्रसभं वा, महद् राज्यं च साम्राज्यं च समवाप्स्यति । परतोऽप्यस्मदनन्तरमपि तदन्वयस्य मदन्वयो दासो भवेत् ॥ ७ ॥

**वादिराजतीर्थीया–** निजतन्तुभिः सार्धं वयं कुन्तीसुतस्य परतोऽपि पश्चादपि तदन्वयस्य तस्य कुन्तीसुतस्य अन्वयो यस्य सः तदन्वयः तत्सन्तानः तस्य च दासा भवेमेति योजना । वयं तु कुन्तीसुतस्य, अस्मत्तन्तवः तत्तन्तूनां दासा इति विवेकः ॥ ७ ॥

**वरदराजीया–** महच्च राज्यं समवाप्स्यति । न केवलं यौवराज्यं त्वत्तः सकाशाद्वा अनुजवलेन प्रसभं बलात्कारेण वा समवाप्स्यतीति सम्बन्धः । वयं च निजतन्तुभिः स्वसन्तानैः सह कुन्तीसुतस्य युधिष्ठिरस्य दासाः भवेम । परतः उत्तरत्रापि तस्यान्वयो वंशः तस्य, मदन्वयाः दासाः स्युरिति सम्बन्धः ॥७॥

**अनन्तभट्टीया–** यः महत् सम्पूर्णम् । प्रसभं त्वामनादृत्येत्यर्थः । तन्तुभिः स्वपुत्रैः । तदन्वयस्य तदन्वयो राजा भवेत्, मदन्वयो नाशो भवेत् ॥ ७ ॥

**जनार्दनीया–** स धर्मसूनुः त्वत्तः त्वत्प्रसादात् अथवा अनुजवलात् प्रसभं बलात्कारेण वा महत् सम्पूर्णं राज्यं साम्राज्यं समवाप्स्यति । निजतन्तुभिरेव साकं स्वसन्तानैरेव साकं कुन्तीसुतस्य दासाः भवेम । परतोऽपि अस्मदनन्तरं तदन्वयस्य मदन्वयो दासो भवेत् ॥ ७ ॥

**ताम्रपर्णी–** कुन्तीसुतस्य परतोऽनन्तरं तदन्वयस्य च निजतन्तुभिः साकं दासाः भवेम वयं कुन्तीसुतस्य दासाः । तदन्वयस्यास्मदन्वयो दासो भवेदित्यर्थः ॥ ७-१९ ॥

**भारतश्री–** प्रसभं बलात्कारेण वा ॥ ७-८ ॥

**चट्टि–** धर्मसूनुः त्वत्तः त्वत्प्रसादात्, अथ अनुजवलाच्च प्रसभं बलात्कारेण वा, महत् सम्पूर्णं राज्यं साम्राज्यं च समवाप्स्यति । वयं तु निजतन्तुभिरेव स्वसन्तानैरेव साकं सह कुन्तीसुतस्य दासाः भवेम । परतः अस्मदनन्तरमपि तदन्वयस्य, मदन्वयो दासो भवेदिति शेषः ॥ ७ ॥

---

१. 'पितृतः प्राप्तवान् राज्यं पाण्डुरात्मगुणैः पुरा । त्वमन्धगुणसंयोगात् प्राप्तं राज्यं न लब्धवान् ॥ स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः । तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चापरः ॥ ते वयं राजवंशेन हीनाः सह सुतैरपि । अवज्ञाता भविष्यामो लोकस्य जगतीपते ॥ सततं निरयं प्राप्ताः परपिण्डोपजीविनः । न भवेम यथा राजन् तथा नीतिर्विधीयताम् ॥ यदि त्वं हि पुरा राजन्निदं राज्यमवाप्तवान् । ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने ॥' आदिपर्वणि-१५२.१५-१९..

**नाऽत्मार्थमस्ति मम दुःखमथातिशुद्ध-**
**लोकप्रसिद्धयशसस्तव कीर्तिनाशः ।**
**[1]अस्मन्निमित्त इति दुःखमतो हि सर्वेऽ-**
**पीच्छाम मर्तुमथ नः कुरु चाप्यनुज्ञाम् ॥८॥**

**व्यासतीर्थीया–** तदर्थं तव दुःखं न चेत् कस्यार्थे तव दुःखमित्यत आह– **अथेति** ॥ ८ ॥

**वेदाङ्गतीर्थीया–** तव अस्मन्निमित्तं कीर्तिनाशः इत्येव दुःखम् ॥ ८ ॥

**वादिराजतीर्थीया–** वयं निमित्तं यस्य सः अस्मन्निमित्तः तव कीर्तिनाशः । दुःखं जायत इति क्रिया-ध्याहारेण योजना । अतो हेतोः अथ तव विज्ञापनानन्तरं वयं मर्तुमिच्छामः । पितुर्यशोनाशः पुत्राणामसह्य इति प्रसिद्धिसूचनाय हिशब्दः । कुर्विति मध्यमपुरुषप्रयोगप्राप्तत्वंपदेन अपिपदसम्बन्धः । त्वमपि आज्ञां कुरु चेति योजना । स्वेच्छाया आज्ञाकरणस्य च समुच्चयार्थश्चशब्दः ॥ ८ ॥

**वरदराजीया–** कलिङ्गनीत्यभ्यासवलात् पितरमपि वञ्चयतीत्याह– **नात्मार्थमिति** ॥ आत्मार्थं स्वस्य राज्यप्राप्त्यर्थं मम दुःखं नास्ति । अथापि तर्हि अतिशुद्धं लोकेषु प्रसिद्धं यशो यस्य स तथा तस्य । तव कीर्तिनाशः अस्मन्निमित्तः अस्मान्निमित्तीकृत्य स्यादिति मम दुःखमित्यर्थः । अतः कारणात् हि सर्वे वयं मर्तुं पञ्चत्वं प्राप्तुं इच्छामः । अथ तस्मात् अनुज्ञामपि वा कुरु देहीत्यर्थः ॥ ८ ॥

**अनन्तभट्टीया–** अनुज्ञामपि कुरु देहीत्यर्थः ॥ ८ ॥

**जनार्दनीया–** आत्मार्थं स्वस्य साम्राज्यप्राप्त्यर्थम् । अथापि तर्हि अतिशुद्धं लोके प्रसिद्धं यशो यस्य स तथा तस्य । तव कीर्तिनाशः अस्मन्निमित्तं अस्मान्निमित्तीकृत्य स्यादिति मम दुःखम् । अतो हि सर्वे वयं मर्तुमिच्छामः । अथ तस्मान्नः अस्माकम् अनुज्ञां मरणानुज्ञाम् । कुरु देहीत्यर्थः ॥ ८ ॥

**चट्टि–** कलिङ्गोक्तदुर्नीतिवलात् पितरमपि वञ्चयतीत्याह– **नात्मार्थमिति** ॥ आत्मार्थं स्वस्य राज्यप्राप्त्यर्थं मम दुःखं नास्ति । अथापि तर्हि अतिशुद्धलोकप्रसिद्धयशसो अतिशुद्धं लोकेषु प्रसिद्धं यशो यस्य स तथा तस्य । तव कीर्तिनाशः अस्मन्निमित्त अस्मान्निमित्तीकृत्य स्यादिति मम दुःखं इत्यर्थः । अतो हि सर्वेऽपि वयं मर्तुमिच्छामः । अथ तस्मान्नः अस्माकं अनुज्ञां च कुरु देहीत्यर्थः ॥ ८ ॥

**एवं स्वपुत्रवचनं स निशम्य राजा**
**[2]प्रोवाच नानुगुणमेतदहो मनस्ते ।**

१. 'अस्मन्निमित्तमिति' इति वेदाङ्गतीर्थ-जनार्दनीयपाठः ।

२. 'धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् । मुहूर्तमिव सञ्चिन्त्य दुर्योधनमथाब्रवीत् ॥२०॥ धर्मनित्यस्तथा पाण्डुः सुप्रीतो मयि कौरवः । सर्वेषु ज्ञातिषु तथा मदीयेषु विशेषतः ॥२१॥ तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरः सदा ।

**को नाम पाण्डुतनयेषु गुणोत्तमेषु**
**प्रीतिं न याति निजवीर्यभवोच्चयेषु[1]** ॥९॥

**व्यासतीर्थीया–** एतत् ते मनः धर्मस्यानुगुणं न भवति । धर्मस्यानुगुणं कथं न भवतीत्यत आह– **को नामेति** ॥ ९ ॥

**वेदाङ्गतीर्थीया–** ते एतन्मनः अनुगुणं श्रेयसे अनुकूलं न ॥ ९-११ ॥

**वादिराजतीर्थीया–** 'निजवीर्यभवोच्चयेषु' इत्यत्र निजवीर्यभवः उच्चयः उत् उत्कृष्टः चयः 'चिञ् चयने' इति धातोः । चयः द्रव्यसङ्ग्रहो येषां ते तथोक्ताः ॥ ९-१६ ॥

**वरदराजीया–** सः राजा धृताराष्ट्रः प्रोवाच । किमिति? ते मनः नानुगुणं पाण्डवेषु प्रतिकूलं एतदहो आश्चर्यम् । अहो इत्येतद्विवृणोति– **को नामेति** ॥ निजवीर्येण भवः सम्पादितः उच्चयः उत्कर्षो यैस्ते तथा तेषु । गुणोत्तमेषु पाण्डोः तनयेषु प्रीतिं को नाम न याति । अपि तु सर्वोऽपि यात्येवेत्यर्थः ॥९॥

**अनन्तभट्टीया–** एतत्ते मनः नानुगुणं दृष्टमित्यर्थः ॥ ९ ॥

**जनार्दनीया–** ते तव मनः नानुगुणं श्रेयसः अनुकूलं न । एतदहो आश्चर्यम् । निजवीर्यभवोच्चयेषु स्ववीर्येण सम्पादितः उत्कर्षो यैस्ते तथा तेषु । पाण्डवेषु को नाम प्रीतिं न याति । सर्वोऽपि यात्येवेत्यर्थः । कुत्सितः पुरुषो न याति ॥९॥

**भारतश्री–** नानुगुणम्, श्रेयश्च इति शेषः । निजवीर्यभवोच्छ्रयेषु स्ववीर्यसम्पादितोत्कर्षेषु ॥ ९ ॥

**चट्टि–** सः धृतराष्ट्रः एवम्भूतं स्वपुत्रवचनं निशम्य प्रोवाच । किमिति? ते तव मनः नानुगुणं श्रेयसः अनुकूलं न भवतीत्येतद् अहो आश्चर्यम् । निजवीर्यभवोच्चयेषु निजवीर्येण भवः सम्पादितः उच्चयः उत्कर्षो यैस्ते तथा तेषु । गुणैः उत्तमेषु पाण्डोः तनयेषु को नाम प्रीतिं न याति । सर्वोऽपि यात्येवेत्यर्थः ॥ ९ ॥

**ते हि स्वबाहुबलतोऽखिलभूपभूतिं**
**मय्याकृषन्ति न च वः प्रतिषेधकास्ते ।**
**तस्माच्छमं व्रज शुभाय कुलस्य तात**
**क्षेमाय नो भवति वो बलवद्विरोधः** ॥१०॥

**व्यासतीर्थीया–** न केवलं तु स्वयमेव निजवीर्यभवोच्छ्रया अपि तर्हीत्यत आह– **ते हीति** ॥ विरोधाकरणे निमित्तान्तरमाह– **न चेति** ॥१०-११॥

---

गुणवाँल्लोकविख्यातो नगरे च प्रतिष्ठितः । स कथं शक्यतेऽस्माभिरपाक्रष्टुं नरर्षभः' ॥२४॥ इत्यादिपर्वणि-१५२.

१. 'निजवीर्यभवोच्छ्रयेषु' इति भारतश्रीपाठः ।

**वरदराजीया–** ते पाण्डवाश्च अखिलभूपानां भूतिं ऐश्वर्यं मयि आकृषन्ति समर्पयन्ति । न केवलमेतावत् । वो युष्माकं प्रतिषेधकाः विरोधिनश्च न भवन्ति । तस्मात् कुलस्य शुभाय क्षेमाय हे तात! शमं कुरु । यतो बलवद्भिः पाण्डवैः सह विरोधो वो युष्माकं क्षेमाय न भवति तस्मादित्यर्थः ।।१०।।

**अनन्तभट्टीया–** आकृषन्ति निदधतीत्यर्थः । वः क्षेमाय ।। १०-११ ।।

**जनार्दनीया–** भूतिं ऐश्वर्यमपि । आकृषन्ति समर्पयन्ति । प्रतिषेधकाः विरोधिनः । कुलस्य शुभाय । शमं शान्तिम् ।।१०।।

**भारतश्री–** प्रतिषेधकाः विरोधिनः ।। १०-१२ ।।

**चट्टि–** ते पाण्डवाः स्वबाहुबलतः अखिलभूपानां भूतिं ऐश्वर्यं मयि आकृषन्ति समर्पयन्ति । ते पाण्डवाः वः प्रतिषेधकाः विरोधिनश्च न भवन्ति । तस्मात् हे तात! कुलस्य शुभाय क्षेमाय शमं शान्तिं व्रज । यतः बलवद्विरोधः बलवद्भिः पाण्डवैः सह विरोधः वो युष्माकं क्षेमाय नो भवति न स्यादित्यर्थः ।।१०।।

**एवं ब्रुवत्यपि नृपे पुनराह पाप**
**आश्रित्य सौबलमतं यदि नैव पार्थान् ।**
**अन्यत्र [1]यापयसि नागपुरात् परेतान्**
**दृष्ट्वाऽखिलानपि हि नो मुदमेहि पार्थैः ।।११।।**

**वरदराजीया–** नृपे धृतराष्ट्रे एवमुक्तरीत्या ब्रुवत्यपि पापो दुर्योधनः सौबलेः शकुनेर्मतं समाश्रित्य पुनराह । किमिति? पार्थान् पाण्डवान् नागपुरात् हस्तिनपुरादन्यत्र स्थानान्तरे यदि न प्रापयसि न प्रेषयसि तर्हि नोऽस्मान् अखिलान् परेतान् मृतान् दृष्ट्वा पार्थैः पाण्डवैर्मुदं एहि सुखमाप्नुहि ।।११।।

**लघ्वनन्तभट्टीया–** परेतान् मृतान् ।।११-१२।।

**जनार्दनीया–** अन्यत्र स्थलान्तरम् । न यापयसि न प्रेषयसि । परेतान् परलोकं इतान् प्राप्तान् । मृतानित्यर्थः । मुदं एहि आप्नुहि ।। ११ ।।

**चट्टि–** नृपे धृतराष्ट्रे एवमुक्तरीत्या ब्रुवत्यपि पापो दुर्योधनः सौबलस्य मतं सम्मतिमाश्रित्य पुनः आह । किमिति? पार्थान् पाण्डवान् नागपुरात् हस्तिनपुरात् अन्यत्र स्थलान्तरं यदि न यापयसि न प्रेषयसि । तर्हि अखिलानपि नो अस्मान् परेतान् परलोकं प्राप्तान् । मृतानित्यर्थः । दृष्ट्वा पार्थैः पाण्डवैः मुदं एहि आप्नुहि ।। ११ ।।

---

१. 'प्रापयसि' इति वरदराजीयपाठः ।

**एवं निशम्य गदितं सुतहार्दपाशै-**
**राकृष्यताऽऽशु स नृपोऽरिधरेच्छयैव ।**
**प्रोवाच पुत्रमपि ते बलिनो न पार्थाः**
**शक्याः पुरात् तनय यापयितुं कथञ्चित् ॥१२॥**

**व्यासतीर्थीया–** हार्दः स्नेहः । पूर्वमविद्यमानः सहसा सुतहार्द एव कस्माज्जायत इत्यत उक्तम्– **अरीति** ॥१२॥

**वेदाङ्गतीर्थीया–** गदितं पुत्रवचनम् । सुतहार्दपाशैः पुत्रस्नेहपाशैः ॥ १२ ॥

**वरदराजीया–** सुतस्य हार्दपाशैः स्नेहाख्यपाशैः आकृष्यत आकृष्टोऽभूत् । ननु महात्मनः धृतराष्ट्रस्य कथं सुतस्नेहाकृष्टता इत्यत आह– **अरिधरस्येति** ॥ चक्रधरस्य हरेः इच्छयैव । बलिनो हि यस्मात् तस्मात् पुरात् कथञ्चिद् यापयितुं निस्सार्य प्रेषयितुं न शक्याः ॥१२॥

**अनन्तभट्टीया–** हार्दः स्नेहः । आकृष्यत आकृष्टोऽभूत् । न शक्याः ॥ १२ ॥

**जनार्दनीया–** गदितं पुत्रोक्तम् । सुतहार्दपाशैः पुत्रस्नेहपाशैः आकृष्यत आकृष्टोऽभूत् । पुत्रवशो बभूवेत्यर्थः । अरिधरेच्छया चक्रधरस्य हरेरिच्छया । बलिनो यस्मात् तस्मात् पुरात् नागपुरात् कथञ्चिद् यापयितुं निःसार्य प्रेषयितुं न शक्याः न समर्थाः ॥ १२ ॥

**चट्टि–** सः नृपः धृतराष्ट्रः एवं गदितं पुत्रोक्तं निशम्य अरिधरस्य चक्रधरस्य हरेरिच्छयैव सुतहार्दपाशैः पुत्रस्नेहपाशैः आशु आकृष्यत आकृष्टोऽभूत् । पुत्रवशो बभूवेत्यर्थः । पुत्रमपि प्रोवाच । किमिति? हि यस्मात् ते पार्थाः बलिनो तस्मात् पुरात् हस्तिनपुरात् कथञ्चिद् यापयितुं निःसार्य प्रेषयितुं न शक्याश्च॥

**इत्युक्त आह पितरं[१] शकुनिं निरीक्ष्य**
**सृष्टो मया विधिरिहाय शृणुष्व तं च ।**
**आसंस्त्रयोदश समा नगरं प्रविष्टे-**
**ष्वेतेषु तावदयमेव विधिर्मयेष्टः ॥१३॥**

**व्यासतीर्थीया–** उपप्रदानरूपां नीतिं निरूपयन्नाह– **इत्युक्त इत्यादिना** ॥ विधिप्रकारमाह– **आसन् इति** ॥१३॥

**वेदाङ्गतीर्थीया–** इह तेषां पुरात् निर्यापणविषये विधिरुपायः [२]इष्टः निरूपितः ॥ १३ ॥

---

१. 'नृपतिम्' इति सत्याभिनवतीर्थीयपाठः ।

२. 'सृष्टः' इति क्वचित् कोशेषु ।

**सत्याभिनवतीर्थीया–** तत्रैव 'इत्युक्त आह नृपतिम्..' इति श्लोकः । तस्यार्थः- इत्युक्तः दुर्योधनः शकुनिं निरीक्ष्य एतेषु पाण्डवेषु नगरं प्रविष्टेषु सत्सु चिन्तायां प्राप्तायां इह पाण्डवनिर्यापणविषये यो विधिः उपायः सृष्टः विचारितः यद्विचारानन्तरं त्रयोदशसमाः आसन् तावत् तदारभ्य योऽयं विधिः कर्तव्यत्वेन मया इष्टः तं च तमेव विधिं अद्य शृणुष्वेति । एतेन एतेषु नगरं प्रविष्टेषु इत्यादिकमनन्वितमिति दूषणं परास्तम् । चिन्तायां प्राप्तायामित्यादिना शेषेणान्वयस्योक्तत्वात् ।।१३।।

**वरदराजीया–** पितरं धृतराष्ट्रं प्रत्याह । किमिति? इह कार्ये मया विधिः उपायः सृष्टो निर्मितः । तं विधिं चाद्य शृणुष्व । पूर्वकल्पितं उपायं दर्शयति– **आसन्नित्यादिना** ।। एतेषु पाण्डवेषु नगरं हस्तिनपुरं प्रविष्टेषु सत्सु तदनन्तरं त्रयोदशसमाः वर्षाणि आसन् बभूवुः । तावत्कालमारभ्य अयं वक्ष्यमाण एव विधिः मया इष्टः अपेक्षितः ।।१३।।

**अनन्तभट्टीया–** विधिः प्रकारः, उपाय इति यावत् । इष्टः विचारितः ।। १३ ।।

**जनार्दनीया–** इह तेषां पुरात् निर्यापणविषये विधिः उपायः सृष्टः निर्मितः । तमुपायं श्रुणुष्व । समाः वर्षाणि । तावत् कालमारभ्य । अयं वक्ष्यमाण एव विधिः मया इष्टः विचारितः ।।१३।।

**भारतश्री–** त्रयोदशसमाः आसन् । तावत् तावत्कालमारभ्य । अयं वक्ष्यमाणो विधिरुपायः ।।१३-१५।।

**चट्टि–** इति पित्रोक्तो दुर्योधनः शकुनिं निरीक्ष्य पितरं धृतराष्ट्रं प्रत्याह । किमिति? इह पाण्डवानां पुरात् निर्यापणविषये मया विधिः उपायः सृष्टः निर्मितः । तमुपायं च शृणुष्व । एतेषु पाण्डवेषु नगरं हस्तिनपुरं प्रविष्टेषु सत्सु तदनन्तरं त्रयोदश समाः वर्षाणि आसन् बभूवुः । तावत् कालमारभ्य अयं वक्ष्यमाण एव विधिः मया इष्टः विचारितः ।। १३ ।।

**[1]द्रौणेर्हि नास्ति सदृशो बलवान् प्रतापी**
**सोऽयं मया बहुविधैः परमैरुपायैः ।**
**नीतो वशं वशगतोऽस्य च मातुलेन**
**साकं पिता तमनु चैष नदीप्रसूतः ।।१४।।**

**व्यासतीर्थीया–** तस्य विरोधे चेद्बाधितत्वज्ञापनार्थमपि परमन्यश्च गुणैर्वशंगतः ।। १४ ।।

**वेदाङ्गतीर्थीया–** पिता द्रोणश्च अस्य द्रौणेः मातुलेन कृपेण साकं वशं नीतः । एषः नदीप्रसूतश्च तमनु द्रोणमनु, वर्तते इति शेषः । द्रोणमनुसरतीति भावः ।। १४ ।।

---

१. 'मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः । यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ।। कृपः शारद्वतश्चैव यत एव वयं ततः ।। भागिनेयं ततो द्रौणिं न त्यक्ष्यति कथञ्चन ।।' इत्यादिपर्वणि १५२.२९-३०.

**वरदराजीया–** द्रौणेः अश्वत्थाम्नः । सोऽयं द्रौणिः । वशं नीतः । अस्य द्रौणेः पिता द्रोणः तथा अस्य मातुलेन कृपाचार्येण साकं वशं गतः । तं द्रोणं अनु नदीप्रसूतः भीष्मः ।।१४।।

**अनन्तभट्टीया–** अस्य पिता । मातुलेन कृपेण । अस्य अश्वत्थाम्नः । वशं गतः । तमनु द्रोणमनु।।१४।।

**जनार्दनीया–** पिता द्रोणः । अस्य द्रौणेः मातुलेन कृपेण साकं सह वशं नीतः । एषः नदीप्रसूतश्च भीष्मश्च तमनु द्रोणमनु, वर्तत इति शेषः । द्रोणमनुसरतीति भावः ।। १४ ।।

**चट्टि–** द्रौणेः अश्वत्थाम्नः सदृशः समो वलवान् प्रतापी नास्ति । सोऽयं द्रौणिः मया वहुविधैः परमैरुत्तमैरुपायैः वशं नीतः । पिता द्रोणः अस्य द्रौणेः मातुलेन कृपेण साकं सह वशं गतः नीतः । एषः नदीप्रसूतः भीष्मः तमनु द्रोणमनु, वर्तत इति शेषः । द्रोणमनुसरतीति भावः ।। १४ ।।

**[१]एवं हि सैनिकगणा अपि दानमानैः**
**प्रायो वशं मम गता अपि चैष कर्णः ।**
**अस्त्रे बलेऽप्यधिक एव सुरेन्द्रसूनोः**
**जेष्ये च मन्त्रबलतस्त्वहमेव भीमम्** ।।१५।।

**व्यासतीर्थीया–** दण्डाख्यनीतिं निरूपयन्नाह– जेष्य इत्यादिना ।।१५-१६।।

**वेदाङ्गतीर्थीया–** अस्त्रे वलेऽपि सुरेन्द्रसूनोरधिक एव सन् एषः कर्णोऽपि वशं गतः । स पार्थं हनिष्यतीति भावः ।। १५-१६ ।।

**वरदराजीया–** दानैः द्रव्यादिदानैः मानैः सन्मानादिभिश्च एषः कर्णोऽपि वशं गतः । सुरेन्द्रसूनोः इन्द्रसुतादर्जुनादपि अस्त्रादिविषये अधिक एव । तस्मात् कर्ण एव जेष्यतीति भावः । अहमेक एव मन्त्रवलतः मन्त्रसामर्थ्यात् भीमं जेष्ये ।।१५।।

**जनार्दनीया–** अस्त्रे वलेऽपि सुरेन्द्रसूनोरधिक एव सन् एषः कर्णोऽपि वशं गमितः । स पार्थं हनिष्यतीति भावः ।।१५।।

**चट्टि–** एवं सैनिकगणा अपि दानैः द्रव्यादिदानैः मानैः सन्मानादिभिश्च प्रायः वाहुल्येन मम वशं गताः । अस्त्रे वलेऽपि सुरेन्द्रसूनोरधिक एव सन् एषः कर्णोऽपि वशं गतः । स पार्थं हनिष्यतीति भावः । अहमेव मन्त्रवलतः भीमं च जेष्ये ।। १५ ।।

---

१. 'एवमेतन्मया तात भावितं दोषमात्मनि । दृष्ट्वा प्रकृतयः सर्वा अर्थमानेन पूजिताः । ध्रुवमस्मत्सहायास्ते भविष्यन्ति प्रधानतः । अर्थवर्गः सहामात्यः मत्संस्थोऽद्य महीपते ।।' आदिपर्वणि-१५४.२८-२९.

**त्रिंशच्छतं परमकाः सुरदुर्लभाश्च**
**दुर्वाससो हि मनवोऽद्य मया गृहीताः ।**
**अन्यत्र ते प्रविहिता न हि वीर्यवन्तः**
**स्युर्भीम इत्यहममून् न नियोजयामि ॥१६॥**

**मधुसूदनीया—** त्रिंशच्छतं त्रिंशदुत्तरशतम् । त्रिसहस्रमिति वा ॥ १६ ॥

**वरदराजीया—** 'मन्त्रबलतः' इत्येतद्विवृणोति— **त्रिंशदिति** ॥ त्रिंशच्छतं त्रिसहस्रमिति यावत्[१] । त्रिंशदधिकं शतमित्यपि सम्भवति । मनवो मन्त्राः दुर्वाससः सकाशात् । ते मन्त्राः अन्यत्र प्रविहिताः नियोजिताः विनियोजिताः भीमे वीर्यवन्तः कार्यसिद्धिकराः न स्युरिति हेतोः अमून् मन्त्रान् अन्यत्र अद्य अहं न नियोजयामि ॥१६॥

**अनन्तभट्टीया—** त्रिंशच्छतं त्रिंशदधिकं शतम् । केचित्तु- 'सहस्रत्रयम्' इत्याचक्षते । प्रविहिताश्चेत्, तर्हीति शेषः ॥ १६ ॥

**लघ्वनन्तभट्टीया—** त्रिंशच्छतं त्रिंशदधिकशतम् । त्रिसहस्रं वा ॥१६॥

**जनार्दनीया—** त्रिंशदधिकं शतं त्रिंशच्छतम् । 'केचित् सहस्रत्रयम्' इति व्याचक्षते । परमका उत्तमाः । अत एव सुदुर्लभाः । मनवो मन्त्राः । अन्यत्र प्रविहिताः नियोजिताः भीमे चार्थवन्तः कार्यकराः न स्युरिति हेतोः अमून् मन्त्रान् अन्यत्र न नियोजयामि । यद्वा हि यस्मात् ते अन्यत्र प्रविहिताः अत एव वीर्यवन्तः स्युरिति हेतोः अहं अमून् भीमे नियोजयामि । भीमादन्यत्र न नियोजयामि ॥ १६ ॥

**ताम्रपर्णी—** त्रिंशच्छताः त्रिंशदधिकशताः । त्रिसहस्रं वा ॥ १६-२५ ॥

**भारतश्री—** त्रिंशच्छतं सहस्रत्रयम् । 'त्रिंशदधिकशतम्' इति केचित् । मनवो मन्त्राः । प्रविहिताः प्रयोजिताः भीमे वीर्यवन्तो न स्युः । इत्यहं अमून् न नियोजयामीति सम्बन्धः ॥ १६ ॥

**चट्टि—** त्रिंशदधिकं शतं त्रिंशच्छतं त्रिसहस्रमिति वा । परमिका उत्तमाः । अत एव सुरदुर्लभाः । मनवो मन्त्राः दुर्वाससः सकाशात् मया गृहीताः । ते मन्त्राः अन्यत्र प्रविहिताः नियोजिताः भीमे वीर्यवन्तः कार्यवन्तः न स्युरिति हेतोः अमून् मन्त्रानन्यत्र अद्य न नियोजयामि ॥१६॥

**ते वीर्यदा विजयदा अपि वारिवह्नि-**
**स्तम्भादिदाः सकलदेवनिकायरोधाः ।**

---

१. 'त्रिंशत्सहस्रमिति यावत् ।' इति क्वचित्पाठः । तत्तु लिपिकृत्प्रमादः ।

**वृष्ट्याद्यभीप्सितसमस्तकरा अमूभि-**
**र्जेष्यामि भीमममुमेकमयातयामैः[१]** ।।१७।।

**व्यासतीर्थीया—** अयातयामैरगतवीर्यैः ।। १७ ।।

**वेदाङ्गतीर्थीया—** अयातयामैः अगतसारैः ।। १७ ।।

**वादिराजतीर्थीया—** 'अयातयामैः' इत्यत्र यातः जपतर्पणादिकं विना वृथा गतः यामो येषां ते तथोक्ताः नेति ।। १७ ।।

**मधुसूदनीया—** ।। **अयातयामैरिति** ।। अयातयामैः सारवद्भिः । 'गतसारं यातयामं यामः सारमिहोच्यते' (भा.ता.३.२३.३५) इति नारदीयवचनात् ।। १७ ।।

**वरदराजीया—** ते मनवो वीर्यदाः वीर्यवृद्धिकराः, वारिवह्निस्तम्भादिदाः जलस्तम्भाग्निस्तम्भादिदाः स्तम्भप्रदा इत्यर्थः । सकलदेवनिकायस्य रोधः एभ्यो भवतीति समस्तदेवनिकायरोधकाः । वृष्ट्याद्यभीप्सितं समस्तं कुर्वन्तीति प्रयच्छन्तीति तथा । अमूभिः मनुभिः अयातयामैः अनपगतवीर्यैरित्यर्थः ।।१७।।

**अनन्तभट्टीया—** अयातयामैः अगतसारैः ।। १७ ।।

**लघ्वनन्तभट्टीया—** अयातयामैः मन्त्रगतरसैः ।।१७-४८।।

**जनार्दनीया—** ते मनवः वारिवह्निस्तम्भादिदाः वारिवह्निस्तम्भः आदिः यस्यासौ तथोक्तः, तं ददातीति तथोक्ताः । आदिशब्देन मृतसञ्जीवनादिकं ग्राह्यम् । निकायः समूहः । वृष्ट्याद्यभीप्सितसमस्तकराः वृष्ट्यादिवाञ्छितसकलपदार्थप्रदान् कुर्वन्ति प्रयच्छन्ति ते तथा । अयातयामैः अगतसारैः अमूभिः ।

---

१. उद्योगपर्वणि-६१. 'मयाऽभिमन्त्रतः शश्वज्जातवेदाः प्रशाम्यति । दिधक्षुः सकलाँल्लोकान् परिक्षिप्य समन्ततः ।।९।। यद्वा परमकं तेजो येन युक्ता दिवौकसः । ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ।। विदार्यमाणां वसुधां गिरीणां शिखराणि च । लोकस्य पश्यतो राजन् स्थापयाम्यभिमन्त्रणात् ।। चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च । विनाशाय समुत्पन्नमहं घोरं महास्वनम् ।। अश्मवर्षं च वायुं च शमयामीह नित्यशः । जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ।। स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः । देवासुराणां भावानामहमेकः प्रवर्तिता ।। अक्षौहिणीभिर्यान् देशान् यामि कार्येण केनचित् । तत्रापो मे प्रवर्तन्ते यत्र यत्राभिकामये ।। भयानकानि विषये व्यालादीनि न सन्ति मे । मन्त्रगुप्तानि भूतानि न हिंसन्ति भयङ्कराः ।। निकामवर्षी पर्जन्यो राजन् विषयवासिनाम् । धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे ।। अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा । धर्मश्चैव मया द्विष्टान्नोत्सहन्तेऽभिरक्षितुम् ।। ..नैव देवा न गन्धर्वा नासुरा न च राक्षसाः। शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते ।। यदभिध्याम्यहं शश्वच्छुभं वा यदि वाऽशुभम् । नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ।। भविष्यतीदमिति वा यद्ब्रवीमि परन्तप । नान्यथा भूतपूर्वं च सत्यवागिति मां विदुः ।। लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् । आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप' ।। २३ ।।

छान्दसत्वात् बहुलम् । 'अक्षयाविषुधी दिव्ये' (ता.नि-२.१७६) इतिवत् । मनुशब्दस्योभयलिङ्गता-सूचनार्थं 'अमूभिः अयातयामैः' इत्युक्तम् । अत एव स्त्रीपुल्लिङ्गशेषे 'मुनिर्वराटकः स्वातिर्वर्णको झाटलिर्मनुः' इत्यमरः । अमूभिः मन्त्रैः अमुमेकं भीमं जेष्यामि ।। १७ ।।

**भारतश्री–** अयातयामैः अगतरसैः । 'अक्षयाविषुधी दिव्ये' इतिवत् मनुशब्दस्योभयलिङ्गतासूचनार्थम् ।।१७-२४।।

**चट्टि–** ते मनवः । वीर्यदाः विजयदाः अपि विजयदाश्च वारिवह्निस्तम्भादिदाः आदिशब्देन मृत-सञ्जीवनादिकं ग्राह्यम् । सकलदेवनिकायरोधाः सकलदेवसमूहस्य निषेधकाः । वृष्ट्याद्यभीप्सितसमस्तकराः वृष्ट्यादिवाञ्छितसकलपदार्थान् प्रदान् कुर्वन्ति प्रयच्छन्ति इति ते तथा । अयातयामैः अगतसारैः अमूभिः । छान्दसत्वात् बहुलम् । अमूभिः मन्त्रैः । अमुमेकं भीमं जेष्यामि ।। १७ ।।

**सौहार्दमेषु यदि वाऽतितरां[१] करोषि**
**तत्रापि नैव हि मया क्रियते विरोधः ।**
**वत्स्यन्तु वारणवते भवतु स्म राष्ट्रं**
**तेषां तदेव मम नागपुरं त्वदर्थे ।।१८।।**

**व्यासतीर्थीया–** विकरणभेदात् वत्स्यन्त्विति । अपरथा वसन्त्विति स्यात् ।। १८ ।।

**वेदाङ्गतीर्थीया–** त्वदर्थे त्वद्वचनकरणेन तव प्रियार्थे ।। १८-२१ ।।

**वादिराजतीर्थीया–** 'वत्स्यन्तु वारणवते' इत्यत्र 'व्यत्ययो बहुलम्' इति वचनात् लोट्यपि ष्यच्प्रयोगः ।। १८ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'सौहार्दमेषु यदि वा नितराम्..' इति श्लोके 'तत्रापि' इत्यस्य तर्हि अपीत्यर्थः । एतेन यदीत्युक्तत्वात् तर्हीति वक्तव्यम् । तदभावात् न्यूनतेति शङ्कानवकाशः । तत्रेत्यस्य तर्हीत्यर्थ इत्यङ्गीकारात् ।। १८ ।।

**मधुसूदनीया–** ननु त्वयैव वारणावतं प्रति गन्तव्यमित्यत आह– **मम नागपुरं त्वदर्थ इति** ।। त्वदर्थे भवन्निमित्तं मम नागपुरं पितरं त्यक्त्वा पुत्रस्यान्यत्र अयुक्तत्वात् त्वदर्थमेव मया नागपुरमपेक्ष्यत इति भावः ।। १८-३० ।।

**वरदराजीया–** एषु पाण्डवेषु सौहार्दं स्नेहं तत्रापि सौहार्दकरणेऽपि वारणावते पुरे तेषां पाण्डवानां तदेव वारणावतमेव राष्ट्रं राज्यं भवतु । मम नागपुरं हस्तिनपुरं राष्ट्रं अस्तु । इदमपि त्वदर्थे मयोक्तम् । वस्तुतस्तु इदमपि मम न रोचत इति भावः ।।१८।।

---

१. 'यदि वा नितराम्' इति सत्याभिनवतीर्थीयपाठः ।

**अनन्तभट्टीया–** वत्स्यन्तु वसन्तु । त्वदर्थे इदं सर्वं त्वदनुसरणार्थं उक्तमित्यर्थः । अथवा ते किमिति वारणावते वत्स्यन्तीत्यत उक्तम्– **त्वदर्थमिति** ।। त्वदाज्ञां कर्तुमित्यर्थः ।। १८ ।।

**जनार्दनीया–** एषु पार्थेषु सौहार्दं स्नेहम् । तत्र स्नेहकरणे । वारणवते नगरे वत्स्यन्तु वासं कुर्वन्तु । तेषां तदेव वारणावतमेव राष्ट्रं राज्यं भवतु । त्वदर्थे त्वद्वचनकरणेन तव प्रियार्थे मम नागपुरं भवतु।।१८।।

**चट्टि–** एषु पाण्डवेषु अतितरां अत्यन्तं सौहार्दं स्नेहं यदि करोषि तत्र स्नेहकरणेऽपि मया विरोधो न क्रियते । ते पाण्डवाः वारणवते नगरे वत्स्यन्तु वासं कुर्वन्तु । तेषां तदेव वारणावतमेव राष्ट्रं राज्यं भवतु । त्वदर्थे त्वद्वचनकरणेन तव प्रियार्थे मम नागपुरं भवतु । पितरं त्यक्त्वा पुत्रस्य अन्यत्र स्थातुमयुक्तत्वात् त्वदर्थमेव मया नागपुरमपेक्ष्यते इति भावः ।। १८ ।।

**एवं स्वपुत्रपरिपालनतो यशस्ते**
**भूयाद् विनश्यति परप्रसवातिपुष्टौ ।**
**जाते बले तव विरोधकृतश्च ते स्युः**
**स्वार्थं हि तावदनुयान्त्यपि केवलं त्वाम्** ।।१९।।

**व्यासतीर्थीया–** भेदाख्यनीतिं निरूपयन्नाह– **जाते बल इति** ।।१९।।

**वादिराजतीर्थीया–** 'परप्रसवातिपुष्टौ' इत्यत्र परेषां प्रसवः सन्तानः तस्यातिपुष्टौ परप्रसवातिपुष्टौ ।।१९।।

**वरदराजीया–** एवमुक्तरीत्या तव यशः कीर्तिः भूयात् । परैः प्रसव उत्पत्तिर्येषां ते तथा । अतिपुष्टौ परिपालने क्रियमाणे सति तव यशो विनश्यतीत्यर्थः । ते पाण्डवाः बले जाते अभिवृद्धे तव विरोधकृतोऽपि स्युः । केवलं स्वार्थमेव तावत् बलवृद्धिपर्यन्तं त्वां अनुयान्ति आनुकूल्येन वर्तन्ते ।।१९।।

**अनन्तभट्टीया–** भेदं जनयन्नाह– **जातेति** ।। केवलं स्वार्थं न तु भक्त्या इत्याशयः ।। १९ ।।

**जनार्दनीया–** परप्रसवातिपुष्टौ परेभ्यो अन्येभ्यो प्रसवो येषां ते तथोक्ताः, तेषां पुष्टौ वृद्धौ । ते पाण्डवाः बले जाते अभिवृद्धे तव विरोधकृतश्च स्युः । केवलं स्वार्थमेव स्वप्रयोजनमेव । तावत् त्वां अनुयान्ति अनुकूलत्वेन वर्तन्ते ।। १९ ।।

**चट्टि–** एवं स्वपुत्राणां परिपालनतस्ते यशः कीर्तिः भूयात् । परप्रसवातिपुष्टौ परेभ्यो अन्येभ्यो प्रसवो येषां ते तथा तेषाम् अतिपुष्टौ अतिवृद्धौ सत्यां ते कीर्तिर्यशो विनश्यति । ते पाण्डवाः बले जाते अभिवृद्धे सति तव विरोधकृतश्च स्युः । केवलं स्वार्थमेव स्वप्रयोजनार्थमेव तावद् बलाभिवृद्धिपर्यन्तं त्वां अनुयान्ति अनुकूलत्वेन वर्तन्ते ।। १९ ।।

[1]क्षत्तैक एव सततं परिपोषकोऽलं
तेषां मम द्विडथ मन्त्रबलादमुष्य ।
पौराश्च [2]जानपदकाः सततं द्विषन्ति
मां तेष्वतीव दृढसौहृदचेतसश्च ॥२०॥

**व्यासतीर्थीया–** क्षत्ता तद्वशो वर्तत अतः गुह्यं सर्वे मद्वशतां नीता इत्यत आह– **क्षत्तैक एवेति** ॥२०॥

**वादिराजतीर्थीया–** 'अथ मन्त्रबलादमुष्य' इत्यत्र अथ अथोऽप्येक एवेत्यर्थः ॥ २० ॥

**वरदराजीया–** तेषां पाण्डवानां अलं अत्यन्तं परिपोषको अभिवृद्धिकर्ता क्षत्ता विदुरः एक एव । यतः अतः मम द्विट् द्वेषी । अथ तस्मात् अमुष्य विदुरस्य मन्त्रबलात् प्रेरणाख्यमन्त्रबलात् पौराः पुरस्थाः जानपदिकाः देशस्थाश्च मां द्विषन्ति । तेषु पाण्डवेषु अतीवात्यन्तं दृढसौहृदाः दृढस्नेहाश्च जाताश्च सन्तीत्यर्थः ॥२०॥

**अनन्तभट्टीया–** तेषां पाण्डवानां अलं पोषकः । अमुष्य विदुरस्य मन्त्रबलात् जनाः मां द्विषन्ति । तेषु पाण्डुवेषु ते पौरादयः ॥ २० ॥

**जनार्दनीया–** क्षत्तैक एव विदुरः एक एव तेषां पाण्डवानां अलं परिपोषकः वृद्धिकरः यतः मम द्विट् द्वेषी । अमुष्य विदुरस्य मन्त्रबलात् विचारबलात् पौराद्याः मां द्विषन्ति । तेषु पाण्डवेषु अतीव दृढसौहृदचेतसः अचलस्नेहयुक्तान्तःकरणाः ॥ २० ॥

**चट्टि–** क्षत्तैक विदुरः एक एव तेषां पाण्डवानां सन्ततं अलं अत्यन्तं परिपोषकः अभिवृद्धिकरः यतः मम द्विट् द्वेषी । अथ तस्मात् अमुष्य विदुरस्य मन्त्रबलात् विचारबलात् पौराः जानपदिकाश्च सततं मां द्विषन्ति । तेषु पाण्डवेषु अतीव दृढसौहृदचेतसः अचलस्नेहयुक्तान्तःकरणाश्च ॥ २० ॥

एतेषु[3] दूरगमितेषु निराश्रयत्वात्
मामेव दुर्बलतया परितः श्रयन्ते ।
भीष्मादयश्च न हि तन्निकटे विरोधं
कुर्युर्विनश्यति गतेषु हि सौहृदं तत् ॥२१॥

---

१. 'क्षत्ता तु बन्धुरस्माकं प्रच्छन्नस्तु ततः परैः । न चैकः स समर्थोऽस्मान् पाण्डवार्थे प्रबाधितुम् ॥' इत्यादिपर्वणि-१५२.३१.

२. 'जानपदिकाः' इति चट्टीपाठः ।

३. 'तं तेषु' इति वरदराजीयपाठः ।

**व्यासतीर्थीया–** ननु भीष्मादयस्तदनुसारिणोऽपि वर्तन्ते । कथं भीष्मादयो मद्वशतां नीता इत्युक्तिरित्यत आह– **भीष्मादय इति** ।। २१ ।।

**वादिराजतीर्थीया–** 'नहि तन्निकटे विरोधम्' इत्यत्र विरोधं तान् प्रति विरोधम् ।। २१ ।।

**वरदराजीया–** ते पौराद्याः तेषु पाण्डवेषु गमितेषु सत्सु निराश्रयत्वेन दुर्वलतया परितः सर्वप्रकारेण मामेवाश्रयन्ते आश्रिताः स्युः । तन्निकटे तेषां पाण्डवानां निकटे सन्निधाने विरोधं न कुर्युः । तेषु दूरं गतेषु तत्सौहृदं इदानीं विद्यमानस्नेहः विनश्यति ।।२१।।

**अनन्तभट्टीया–** निकटे सन्निधौ सति विरोधम्, पाण्डवैरिति शेषः ।। २१ ।।

**जनार्दनीया–** एतेषु पाण्डवेषु दूरगमितेषु दूरं प्रापितेषु सत्सु निराश्रयत्वात् आश्रयरहितत्वात् दुर्वलतया दुर्वलत्वेन परितः सर्वप्रकारेण मामेव श्रयन्ते आश्रयं कुर्युरित्यर्थः । तन्निकटे पाण्डवसन्निधाने । तत्सौहृदं सौहार्दं इदानीं विद्यमाना प्रीतिः विनश्यति ।। २१ ।।

**भावविवृतिः–** 'भीष्मादयश्च न हि तन्निकटे विरोधं कुर्युर्विनश्यति गतेषु हि सौहृदं तत्' इत्यत्र भीष्मादयः, पाण्डवेष्विति शेषः । निकटे स्थितेषु सत्सु विरोधं न कुर्युः । हितश्च कुर्युः । अन्यत्र गतेषु सत्सु तेषु सौहृदं सुहृद्भावं विनश्यति । हि यस्मात्तस्मादन्यत्र यापनीया इति भावः ।। २१-८७ ।।

**चट्टि–** एतेषु पाण्डवेषु दूरगमितेषु दूरं प्रापितेषु सत्सु निराश्रयत्वाद् दुर्वलतया दुर्वलत्वेन परितः सर्वप्रकारेण मामेव आश्रयन्ते आश्रयं कुर्युरित्यर्थः । भीष्मादयश्च तन्निकटे तेषां पाण्डवानां निकटे सन्निधाने विरोधं न कुर्युः । तेषु पाण्डवेषु गतेषु सत्सु तत्सौहृदं इदानीं विद्यमाना प्रीतिः विनश्यति ।।२१।।

**भेदः कुलस्य भविता कुलनाशहेतु-**
**रस्माभिरेषु सहितेषु पुरे वसत्सु ।**
**[1]तस्मादुपायबलतः प्रतियापनीयास्ते**
**वारणावतमितो विहितोऽप्युपायः ।।२२।।**

**व्यासतीर्थीया–** भेदो विरोधः ।। २२-२३ ।।

**वेदाङ्गतीर्थीया–** भेदः द्वैधीभावः ।। २२ ।।

**वादिराजतीर्थीया–** 'विहितोऽप्युपायः' इत्यत्र अयमुपायः विहितोऽपि अस्मन्नगरसमाननगरदानात् इत्यर्थः ।। २२ ।।

---

१. 'सुविस्रब्धान् पाण्डुसुतान् सह मात्रा विवासय । वारणावतमद्यैव नात्र दोषो भविष्यति ।।' इत्यादिपर्वणि-१५२.३२.

**वरदराजीया–** अस्माभिः सहितेषु पाण्डवेषु पुरे नागपुरे वसत्सु वासं कुर्वत्सु कुलस्य भेदः विरोधो भविता । स च स्वकुलस्य नाशहेतुः स्यात् । यस्मात् तस्मात् इतः नागपुरात् उपायबलतो ननु बाहुबलतः । वारणावतं प्रति यापनीयाः प्रापणीयाः । 'उपायबलतः' इत्युक्तम्, तत्र क उपाय इत्यत उक्तम्– **विहितोऽप्युपाय इति** ।।२२।।

**अनन्तभट्टीया–** भेदो विरोधः । इतः नागपुरात् ।। **उपाय इति** ।। नियोग इति शेषः ।। २२ ।।

**जनार्दनीया–** भेदः द्वैधीभावः, विरोध इत्यर्थः । भविता स्यात् । स च कुलनाशहेतुः । यत् यस्मात् तस्मात् इतो नागपुरात् यापनीयाः प्रेषणीयाः । उपायो विहितः निर्मितः ।। २२ ।।

**चट्टि–** अस्माभिः सहितेषु एषु पाण्डवेषु पुरे नागपुरे वसत्सु सत्सु वासं कुर्वत्सु सत्सु कुलस्य भेदः द्वैधीभावः, विरोध इत्यर्थः । भविता स्यात् । स च कुलनाशहेतुः स्यात् यस्मात् तस्मात् इतो नागपुरतः उपायवलतः ते पाण्डवाः वारणावतं प्रति यापनीयाः प्रेषणीयाः । प्रेषणे उपायो विहितः निर्मितः ।।२२।।

**विष्णुर्जयन्त इति शम्भुसहाय आस्ते**
**देवोत्सवश्च सुमहान् भविताऽत्र सुष्ठु ।**
**भक्ताश्च ते हि नितरामरिशङ्खपाणौ**
**त्वच्चोदिताः समुपयान्ति तमुत्सवं द्राक् ।।२३।।**

**वेदाङ्गतीर्थीया–** अत्र वाराणावते ।। २३ ।।

**वादिराजतीर्थीया–** 'विष्णुर्जयन्त इति शम्भुसहाय आस्ते' इत्यत्र अत्र वारणावते शम्भुसहायः जयन्तनामकः विष्णुरास्ते । विष्णोर्देवालयः शम्भोर्देवालयश्चास्तीत्यर्थः ।। २३ ।।

**वरदराजीया–** तमुपायं दर्शयति– **विष्णुरित्यादिना** ।। जयन्त इति मूर्त्या शम्भुसहाय शम्भुप्रतिमा-सहायः । देवोत्सवः देवपूजोत्सवश्च सुष्ठु भविता सम्यक् भवति ।। **अरीति** ।। चक्रशङ्खधरे हरौ ते पाण्डवाः नितरां भक्ताः हि यस्मात् तस्मात् त्वयोदिताः सन्तः प्रेरिताः समस्तमुत्सवं दैवतोत्सवं प्रति द्राक् शीघ्रं द्रष्टुं समुपयान्ति यास्यन्ति ।।२३।।

**अनन्तभट्टीया–** तत्र वारणावते । विष्णुर्जयन्त इत्यास्ते । जयन्तनामिका विष्णुप्रतिमा विद्यत इत्यर्थः । शम्भुसहायः इत्यनेन शिवप्रतिमापि । द्राक् शीघ्रम् । उत्सवं प्रति ।। २३ ।।

**जनार्दनीया–** तमुपायं दर्शयति– **विष्णुरिति** ।। अत्र वारणावते जयन्त इति मूर्त्या । शम्भुसहायः शिवप्रतिमासहायो यस्य स तथोक्तः । विष्णुरास्ते विष्णुस्तिष्ठति । भविता भविष्यति । ते पाण्डवाः त्वच्चोदिताः त्वया प्रेरिताः तं उत्सवं द्राक् शीघ्रं समुपयान्ति सम्यक् भक्त्या उपयान्ति यास्यन्ति ।।२३।।

**भारतश्री–** विष्णुः विष्णुप्रतिमा । जयन्तो नाम्ना । शम्भुः शिवप्रतिमा सहायो यस्य स तथा । देवोत्सवः विष्णोरुत्सवः ।। २३-२४ ।।

**चट्टि–** तमुपायं दर्शयति– **विष्णुरिति** ।। अत्र वारणावते जयन्त इति मूर्त्या शम्भुः सहायः शिवप्रतिमासहायः विष्णुरास्ते तिष्ठति । सुमहान् देवोत्सवश्च सुष्ठु भविता भविष्यति । ते पाण्डवाः अरिशङ्खपाणौ चक्रशङ्खधरे हरौ नितरां भक्ताश्च हि यस्मात् त्वच्चोदिताः त्वया प्रेरिताः तं उत्सवं द्राक् शीघ्रं समुपयान्ति सम्यक् भक्त्या उपयान्ति यास्यन्ति । [१]'जयन्तं हस्तिनपुरे सेवे कौरववैरिणम्' इति स्कान्दे ।।२३।।

**[२]अज्ञाप्य मत्पुरुषतां पुरुषैर्मदीयैर्मध्यस्थवद् बहुगुणा उदिताश्च तत्र ।**
**तेषां पुरोऽत्र गमनाभिरुचिश्च जाता द्रष्टुं पुरं बहुगुणं ननु पाण्डवानाम्।।२४।।**

**व्यासतीर्थीया–** पुरः पूर्वमारभ्य ।। २४ ।।

**वेदाङ्गतीर्थीया–** तेषां पुरस्तेषामग्रे तत्र वारणावते बहुगुणा उदिताः । अथ तेषां गमनाभिरुचिश्च जाता । तद्गुणान् श्रुत्वेति भावः ।। २४ ।।

**वादिराजतीर्थीया–** 'अज्ञाप्य मत्पुरुषताम्' इत्यत्र मत्पुरुषतां मम पुरुषतां अज्ञाप्य पाण्डवान् प्रत्यज्ञापयित्वा तेषां पाण्डवानां पुरः पुरतः ।। २४ ।।

**वरदराजीया–** मत्पुरुषतां मत्सम्बन्धिपुरुषतां एते दुर्योधनसम्बन्धिपुरुषा इत्यज्ञाप्य ते यथा न जानन्ति तथा कृत्वेति यावत् । मदीयैः पुरुषैः मध्यस्थवत् मध्यस्थैर्यथा तथा तत्र वारणावते बहवो गुणाः उक्ताः । मदीयैः भृत्यैः मदीयत्वमाच्छाद्य मध्यस्थत्वं सम्पाद्य पाण्डवानां तत्र रुच्युत्पादनार्थं वारणावतप्रशंसां बहुधा कारिता इति भावः । अत एव ते पुरः पूर्वमेव त्वदाज्ञाप्रदानात् पूर्वमेव तत्र वारणावतं प्रति गमने रुचिराकाङ्क्षा बहुगुणं पुरं द्रष्टुं जातास्तीत्यर्थः ।।२४।।

**अनन्तभट्टीया–** मत्पुरुषतामज्ञाप्य इमे दुर्योधनसम्बन्धिन इति यथा न जानन्ति तथा उपायं कृत्वेत्यर्थः । तत्पुरः पूर्वमारभ्य तेषां अत्र गमनाय वारणावते बहुगुणा उदिताः । तेषां पाण्डवानां पुरं द्रष्टुं रुचिश्च जाता इत्यन्वयः ।। २४ ।।

---

१. मूले वाराणावते इत्युक्तम् । चट्टीटिप्पण्याम् हस्तिनपुरे इति विरोधो दृश्यते ।

२. 'युयुत्सुमुपनीयैकं धार्तराष्ट्रं सहोदरम् । धृतराष्ट्रप्रयुक्तास्तु केचित्कुशलमन्त्रिणः ।। कथयाञ्चक्रिरे रम्यं नगरं वारणावतम् ।। अयं समाजः सुमहान् रमणीयतमो भुवि । उपस्थितः पशुपतेर्नगरे वारणावते ।। सर्वरत्नसमाकीर्णे पुण्यदेशे मनोरमे । इत्येवं धृतराष्ट्रस्य वचनाच्चक्रिरे कथाः ।। कथ्यमाने तथा रम्ये नगरे वारणावते । गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप ।।' इत्यादिपर्वणि १५५.२-५.

**जनार्दनीया–** अज्ञाप्य अनिशम्य । ते यथा न जानन्ति तथा कृत्वेति यावत् । मदीयैः पुरुषैः मध्यस्थवत् मध्यस्थैः यथा तथा । अत्र सभायां तेषां पुरः पाण्डवाग्रे तत्र वारणावतस्य बहुगुणा उदिताः । तेषां गमनाभिरुचिराकाङ्क्षा पुरं द्रष्टुं जाता । बहुगुणान् श्रुत्वेति भावः ।। २४ ।।

**चट्टि–** मत्पुरुषतां मत्सम्बन्धिपुरुषतां एते दुर्योधनसम्बन्धिनः पुरुषा इति अज्ञाप्य ते यथा न जानन्ति तथा कृत्वेति यावत् । मदीयैः पुरुषैः मध्यस्थवत् मध्यस्थैः यथा तथा । अत्र सभायां तेषां पुरः पाण्डवाग्रे तत्र वारणावते बहुगुणा उदिताः उक्ताश्च । तेषां पाण्डवानां बहुगुणं पुरं द्रष्टुं गमनाभिरुचिः गमनेऽभिरुचिः आकाङ्क्षा च जाता । बहुगुणान् श्रुत्वेति भावः ।। २४ ।।

**इत्युक्तवत्यथ सुते स तथेत्युवाच**
**प्राप्तेषु पाण्डुतनयेषु तथैव चोचे ।**
**ज्ञात्वैव तेऽपि 'नृपतेर्हृदयं समस्तं**
**जग्मुः पितेति पृथया सह नीतिहेतोः ।।२५।।**

**वेदाङ्गतीर्थीया–** पितेति पितृव्यवचनमनुवर्तनीयमिति नीतिहेतोः न्यायार्थम् ।।२५।।

**वादिराजतीर्थीया–** नीतिहेतोः पितृव्यवचनं कर्तव्यमिति नीतिहेतोः ।।२५।।

**वरदराजीया–** सुते दुर्योधने इत्युक्तवति सति सः धृतराष्ट्रः तथेत्युवाच । सः धृतराष्ट्रः प्राप्तेषु स्वसमीपं तेन वचनेन हृदयं अभिप्रायं अयमस्माकं पिता इति गौरवादित्यर्थः । नीतिहेतोः गुरुवचनं कर्तव्यमिति नीतिपरिपालनार्थम् ।।२५।।

**अनन्तभट्टीया–** नीतिहेतोः पितृव्यवचनं कर्तव्यमिति नीतिमनुसर्तुमित्यर्थः ।।२५।।

**जनार्दनीया–** हृदयं अस्मद्गमनं नृपतेरिष्टमिति ज्ञात्वा, पितेति पितृवचनं कर्तव्यमिति नीतिहेतोः न्यायार्थम् ।। २५ ।।

**भारतश्री–** पितृवचनं कर्तव्यमिति नीतिहेतोः ।। २५ ।।

**चट्टि–** सुते दुर्योधने इत्युक्तवति अथ अनन्तरं सः धृतराष्ट्रः तथेत्युवाच । पाण्डुतनयेषु प्राप्तेषु, स्वसमीपमिति शेषः । तथैव ऊचे उवाच च । तेऽपि पाण्डवाश्च नृपतेः धृतराष्ट्रस्य समस्तं हृदयं अस्मद्गमनं नृपतेरिष्टमिति ज्ञात्वैव पितेति पितृवचनं कर्तव्यमिति नीतिहेतोः नीतिपरिपालनार्थं पृथया कुन्त्या सह जग्मुः ।। २५ ।।

[१]भीमस्तदा ह भविताऽत्र हि भैक्षचार
इत्येव सम्यगनुविद्य निजं न कर्म ।
त्याज्यं त्विति प्रतिजगाद निजाग्रजाय
यामो वयं न तु गृहात् स हि नः स्वधर्मः ॥२६॥

**व्यासतीर्थीया–** नीतिहेतोरन्यार्थे निजकर्म न त्याज्यं इति चानुविद्य अग्रजाय जगाद । [२]स्वगृहे स्वस्थानं स्वधर्म स्वस्थानं स्वधर्मश्चेत् अत्रानुमितिः । कार्यानुगतिश्चेत्कार्या । तर्हि वृथा स्वधर्मो न स्वकपोलः ॥२६॥

**वेदाङ्गतीर्थीया–** तदा भीमः अत्र गमने सति भैक्षचारः भविता । क्षत्रियायोग्यो भैक्षचारः भविष्यति । निजं कर्म न त्याज्यं तु इति सम्यगनुविद्यैव ज्ञात्वैव निजाग्रजाय प्रतिजगाद ह । कथम्? वयं गृहात् नतु यामः । सः स्वधर्मो नहीति ॥ २६-२७ ॥

**वादिराजतीर्थीया–** अत्र वारणावते । भैक्षचार एव भैक्षमन्नं तदर्थं चारः चरणं भिक्षाटनमित्यर्थः । निजं क्षत्रिययोग्यं कर्म परान्नानुपजीवनं न त्याज्यमिति सम्यगनुविद्य निजाग्रजाय तदा प्रतिजगाद हेति सम्बन्धः ॥ २६-२७ ॥

**वरदराजीया–** तदा ह तदानीं भीमो निजाग्रजाय प्रतिजगादेति सम्बन्धः । गृहात् न याम इति वदतो भीमस्याभिप्रायमाह– **भविताऽत्र हीत्यादिना** ॥ अत्र वारणावतगमने सति भैक्षचारो भिक्षाचरणं भविता भविष्यतीति सम्यगनुविद्य ज्ञात्वा भिक्षाचारो निजं स्वकीयं कर्म न भवति । अतः त्याज्यमित्यभिप्रायेण जगादेत्यर्थः । यद्वा गृहे विद्यमानेन मया दुष्टनिधनं निजं कर्म न त्याज्यमित्यभिप्रायेणेत्यर्थः । तदेवाह– **न याम इति** ॥ गृहात् स्वगृहात् न यामो न गच्छामः । स हि स्वगृहे एव निवासो नोऽस्माकं स्वधर्म इत्यर्थः ॥२६॥

**अनन्तभट्टीया–** तदाह तदानीमाहेत्यर्थः । निजं कर्म भिक्षाऽनयनाय चरणलक्षणं गृहान्निर्गमनं वा त्याज्यमिति मनसि निधाय । सः गृहादिनिर्गमनम् ॥ २६-२७ ॥

**जनार्दनीया–** तदा तदानीं भीमः अत्र गमने सति भैक्षचारः भिक्षाचरणं भविता भविष्यति । क्षत्रायोग्यो भैक्षचार इत्यर्थः । निजं कर्म न त्याज्यम् तु इति सम्यगनुविद्यैव ज्ञात्वैव निजाग्रजाय इति प्रतिजगाद ह । वयं गृहान्न तु यामः । सः नः स्वधर्मो न हि ॥ २६ ॥

**ताम्रपर्णी–** 'भीमस्तदाह' इत्यत्र हेति भिन्नं पदम् ॥ २६-२७ ॥

---

१. 'भीमस्तदेव' इति पाठान्तरमिति अतिविशदटिप्पणीकाराः । अन्यैः टिप्पणीकारैः 'भीमस्तदाऽऽह' 'भीमस्तदा ह' इति द्विविधतया पदविभागः अङ्गीकृतोऽस्ति ।

२. अनन्वितमिदं वाक्यम् ।

**अतिविशद–** 'भीमस्तदा ह भवितात्र च भैक्षचारः' इत्येकः पाठः । 'भीमस्तदैव भवितात्र च' इत्यपरः इति पाठद्वयम् । द्वयोरपि कोशेषु दर्शनात् व्याकरणादिविरोधाभावाच्च । आद्ये 'तदाह' इत्यत्र आहेति न पदच्छेदः । 'प्रतिजगाद' इत्यनेन पौनरुक्त्यात् । किन्तु ह इत्येव । अथवा आद्यपाठेऽप्याहेत्येवं पदच्छेदः । न च पौनरुक्त्यम् । भिन्नवाक्यत्वात् । तत्र पूर्ववाक्यं कण्ठतोऽनुकूलं अर्थतः प्रतिकूलम् । अपरं कण्ठतोऽपि प्रतिकूलं त्याज्यं त्वितीति मध्यस्थ इतिशब्द एव पृथग्वाक्यद्वयहेतुः । तस्य समर्थत्वात् । प्रकारार्थत्वे इत्यूचिवांसमित्यनेन पौनरुक्त्यात् । देहलीदीपन्यायेन उभयवाक्यपरिसमाप्तौ मध्यस्थ इतिशब्दः । अथवा भीमस्तदाऽत्र वारणावते भैक्षचारो भविता इत्यनेन... सम्यगनुविद्य निजं कर्म न त्याज्यं त्विति आह । न केवलं अन्यान् प्रति उक्त्वा तूष्णीमास किन्तु निजाग्रजाय प्रतिजगाद च कथमेतदित्युत्तरवाक्यम् । सर्वं च शब्दबललभ्यम् । यस्मिन् कोशे चशब्दाभावः तत्र हिशब्दश्चशब्दार्थः । न हीत्थं राज्ञामाज्ञा इत्यादि तु भीमस्तदाह इत्येवमेव पाठ इत्यत्रापि समानम् ।। २६-३० ।।

**भारतश्री–** 'भीमस्तदाह भविता' इत्यत्र 'तदा ह' इति पदच्छेदः । जगाद हेत्यन्वयः । तदा तदानीं भीमः अत्र गमने सति भैक्षाचरणं भविता भविष्यति । तच्चास्माकमयोग्यः । निजं तु कर्म न त्याज्यम् । तुशब्दः एवार्थको वा । न त्याज्यमेवेत्यन्वयः । इति सम्यगनुविद्यैव ज्ञात्वैव निजाग्रजाय इति जगाद ह । अतो वयं न याम इति च जगाद इत्यनुवर्तते । अथवा वयं गृहान्न याम इति जगादेति सम्बन्धः ।।२६-२७।।

**चट्टि–** तदा तदानीं भीमः अत्र गमने सति भैक्षचारः भिक्षाचरणं भविता भविष्यति । क्षत्रियायोग्यः भैक्षचार इत्यर्थः । निजं कर्म तु न त्याज्यमिति सम्यगनुविद्य ज्ञात्वैव निजाग्रजाय इति प्रतिजगाद ह । वयं गृहान्न यामः । न सः स्वधर्मो हि ।। २६ ।।

**[1]निष्कालयन्ति यदि नो निजधर्मसंस्थान्**
**योत्स्यामहेऽत्र न हि दस्युवधोऽप्यधर्मः ।**
**इत्यूचिवांसममुमाह च धर्मसूनुः**
**कीर्तिर्विनश्यति हि नो गुरुभिर्विरोधे ।।२७।।**

**वरदराजीया–** नोऽस्मान् निष्कालयन्ति वलान्निस्सारयन्ति यदि तर्हि अत्रैव योत्स्यामहे युद्धं करिष्यामः । दस्युवधोऽपि अरिवधोऽपि क्षत्रियाणां अधर्मो न भवति किन्तु धर्म एव इत्यर्थः । इत्यूचिवांसं पूर्वोक्तप्रकारेण उक्तवन्तममुं भीमं गुरुभिः द्रोणादिभिः विरोधे सति ।।२७।।

---

१. 'यावत्सोढव्यमस्माभिस्तावत्सोढास्मि यत्नतः ।। यदा न शक्ष्यतेऽस्माभिस्तदा पश्याम नो हितम् । किं द्रष्टव्यमिहास्माभिः विगृह्य तरसा वलात् ।। सान्त्ववादेन दानेन भेदेनापि यतामहे । अर्धराज्यस्य सम्प्राप्त्यै ततो दण्डः प्रशस्यते । तस्मात्स्महैव वस्तव्यं तन्मनोऽर्पितशल्यवत् । दर्शयित्वा पृथक्क्वापि न गन्तव्यं सुभीतवत्।।' इत्यादिपर्वणि-१५८.३४-३७.

**जनार्दनीया–** नोऽस्मान् निष्कालयन्ति वलान्निःसारयिष्यन्ति । यदि तर्हि अत्रैव योत्स्यामहे । अमुं भीमम् । विरोधे सति ।। २७ ।।

**चट्टि–** निजधर्मसंस्थान् नो अस्मान् यदि निष्कालयन्ति वलान्निःसारयिष्यन्ति तर्हि अत्रैव योत्स्यामहे युद्धं करिष्यामः । दस्युवधोऽपि क्षत्रियाणां अधर्मो न भवति । किन्तु धर्म एवेत्यर्थः । इत्यूचिवांसं उक्तवन्तं अमुं भीमं च धर्मसुनुराह । किमिति ? गुरुभिः द्रोणादिभिः विरोधे सति नः कीर्तिः विनश्यतीति ।।२७।।

**इत्युक्तवाक्यममुमग्रजमन्वगात् स**
**भीमः प्रदर्श्य निजधर्ममथानुवृत्त्यै ।**
**दोषो भवेदुभयतो यत एव तेन**
**वाच्यः स्वधर्म उत न स्थितिरत्र कार्या ।।२८।।**

**व्यासतीर्थीया–** किमर्थं धर्मो निरूपितोऽनुगति स वाच्य इत्यत आह– **दोष इति** ।। उभयतो जानता स्वधर्मादित रूपेणे ज्यायसि व्रजत्यनुगत्यकरणे दोषो भवेदेव तेन...इत्यादि योज्यम् [१]।। २८ ।।

**वेदाङ्गतीर्थीया–** स भीमः निजधर्मं प्रदर्श्य अथ इत्युक्तवाक्यं[२] अमुं अग्रजं अनुवृत्त्यै ज्येष्ठानुवृत्त्यै अन्वगात् । स्वधर्मनिरूपणं च ज्येष्ठानुवृत्तिं च उभयं किमर्थमकरोदित्यत आह– **दोष इति** ।। उभयतः ज्ञात्वा स्वधर्मानिरूपणात् ज्येष्ठाननुवृत्तेश्च इति उभयतः, दोषो भवेदेव यतस्तेन तस्मात् ज्ञात्वा उक्तदोषपरिहारार्थं स्वधर्मो वाच्यः, ज्येष्ठाननुवृत्तेर्दोषसद्भावात् अत्र स्थितिरुत न कार्या ।। २८ ।।

**वादिराजतीर्थीया–** 'दोषो भवेदुभयतः' इत्यत्र उभयतः ज्ञातधर्मस्याकथनात् अग्रजवाक्योल्लङ्घनाच्च दोषो भवेदित्यर्थः ।।२८।।

**वरदराजीया–** इत्युक्तवन्तं इति उक्तं वाक्यं येन स तथा । तममुं अग्रजं ज्येष्ठं अन्वगात् । कुतः? अनुवृत्त्यै ज्येष्ठानुवृत्तिहेतोः । आदौ तेन नेति किमर्थमुक्तं इत्यत आह– **निजधर्मं प्रदर्श्येति** ।। तदेव विवृणोति– **दोष इति** ।। यतः कारणात् उभयथा स्वधर्मपरित्यागे ज्येष्ठानुवृत्तिपरित्यागे चेत्यर्थः । अनेन प्रकारेण स्वधर्मो वाच्यः । अत्र नागपुरे स्थितिरपि न कार्यः । ज्येष्ठानुवृत्त्यर्थमित्यर्थः ।।२८।।

**अनन्तभट्टीया–** अनुवृत्त्यै अनुसरणाय अन्वगात् अनुवृत्तिश्चेत् क्रियते । तर्हि किमिति स्वधर्मो निरूपित इत्यत आह– **दोष इति** ।। उभयतः धर्मजवचने अनुवृत्तौ च इत्यर्थः । स्थितिः कार्या न ।।२८।।

---

१. व्यासतीर्थीया– किमर्थं धर्मो निरूपितोऽनुगतिश्चेत्यत आह– दोष इति ।। उभयतो जानता स्वधर्मानिरूपणे ज्यायसि व्रजत्यनुगत्यकरणे दोषो भवेदेव. तेन (तस्मात् सः वाच्यः अत्र स्थितिरुत न कार्या) इत्यादियोज्यम् ।।२८।। इति सम्भावितः पाठः ।

२. 'इत्यूचिवांसं' इति क्वचित् । 'इत्यूचिवांसं. इत्युक्तवाक्यं' इत्युभयथा वरदराजीयपाठः ।

**जनार्दनीया–** अथ इत्यूचिवांसं अमुं अग्रजं अनुवृत्त्यैव ज्येष्ठानुवृत्त्यैव अन्वगात् । स्वधर्मनिरूपणं च ज्येष्ठानुवृत्तिं चेत्युभयं किमर्थमकरोदित्यत आह– **दोष इति** ।। उभयतः ज्ञात्वा स्वधर्मानिरूपणात् ज्येष्ठाननुवृत्तेश्चेत्युभयतो दोषो भवेदेव, यतः तेन तस्मात् ज्ञातस्वधर्मानुक्तिदोषपरिहारार्थं स्वधर्मो वाच्यः । ज्येष्ठाननुवृत्तिदोषसद्भावात् अत्र स्थितिः उत न कार्या ।।२८।।

**ताम्रपर्णी–** ।। **उभयत इति** ।। स्वधर्मानुक्तौ स्वधर्महानिः पुर एवावस्थाने अग्रजानुवृत्त्यभावदोषः इत्युभयतो दोषो भवेदित्यर्थः । अत्र परे नन्वग्रजानुवृत्त्यर्थमन्वगात् इति । कुतः? धर्मजोक्तकीर्तिनाश-भयादेवेति किं न स्यादिति चेत् । केवलं कीर्त्यर्थं गमने निजधर्महानिप्राप्तिः अग्रजवचनाद्गमने अधर्माकीर्तिलक्षणदोषद्वयपरिहारात् ।। २८ ।।

**भारतश्री–** अनुवृत्त्यै अग्रजानुवृत्त्यै । उभयतः ज्येष्ठानुवृत्तिज्ञातस्वधर्मानिरूपणाभ्याम् ।।२८।।

**चट्टि–** सः भीमः निजधर्मं प्रदर्श्य अथ इत्युक्तवाक्यममुं अग्रजमनुवृत्त्यै अन्वगात् । स्वधर्मनिरूपणं च ज्येष्ठानुवृत्तिं चेत्युभयमपि किमर्थमकरोदित्यत आह– **दोष इति** ।। उभयतः ज्ञात्वा स्वधर्मानिरूपणात् ज्येष्ठाननुवृत्तेश्चेत्युभयतो दोषो भवेदेव, यतः तेन तस्मात् ज्ञातस्वधर्मानुक्तिदोषपरिहारार्थं स्वधर्मो वाच्यः । ज्येष्ठाननुवृत्तिदोषपरिहारार्थं अत्र स्थितिः उत न कार्या ।। २८ ।।

**कीर्त्यर्थमेव निजधर्मपरिप्रहाणे**
**प्राप्तेऽग्रजस्य वचनात् [1]प्रविहातुमेव ।**
**भीमस्य दोषमुभयं प्रतिहन्तुमीशो**
**ज्येष्ठं चकार हरिरत्र सुतं वृषस्य ।।२९।।**

**व्यासतीर्थीया–** तर्हि अनुगत्या स्वधर्मत्यागेन यतो दोषः प्राप्त इत्यत आह– **अग्रजस्येति** ।। **कीर्त्यर्थमिति** ।। आज्ञालङ्घने कीर्तिनाशः गमने स्वधर्मनाश इत्युभयं वृषसुतस्य ज्येष्ठकरणेन कथं दोषद्वयं परिहृतवान् अस्यैव ज्येष्ठत्वकरणे वा को दोषः प्राप्त इत्यतः क्रमेणोत्तरमाह– **अग्रजस्येति** ।। [2]कीर्तीति प्रतिज्ञातुं स्वधर्मः स्वधर्मा किमिने अग्रजानुवृत्तिः कारणमुक्तम् ।। २९ ।।

**वेदाङ्गतीर्थीया–** तर्हि ज्येष्ठानुवृत्त्या स्वधर्मत्यागदोषः प्राप्त इत्यत आह– **कीर्त्यर्थमिति** ।।२९।।

**वादिराजतीर्थीया–** ईशो हरिः अत्रास्मिन् लोके निजधर्मपरिप्रहाणे प्राप्ते सति भीमस्य कीर्त्यर्थं अग्रजस्य वचनादेव प्रतिहातुं निजधर्मं प्रतिहातुं अत एव भीमस्योभयं दोषं धर्मातिक्रमदोषं अग्रजातिक्रमदोषं च प्रतिहन्तुं वृषस्य धर्मस्य सुतं ज्येष्ठमेव चकार ।। २९ ।।

---

१. 'प्रतिहातुम्' इति वादिराजीयपाठः । 'प्रविहन्तुम्' इति ताम्रपर्णीयपाठः ।

२. अनन्वितमिदं वाक्यम् ।

**वरदराजीया–** तर्हि पुरतो गमने स्वधर्मपरित्यागदोषः स्यादित्यत आह– **कीर्त्यर्थमिति** ।। गुर्वाज्ञाकारित्वादिकीर्त्यर्थम् । निजधर्मपरिग्रहाणे प्राप्ते सति अग्रजस्य वचनात् प्रविहातुमेव । एवञ्च धर्मजानुगत्या ज्येष्ठानुवृत्तित्यागाख्यदोषपरिहारः, अग्रजवचनात् निजधर्मपरित्यागे च स्वतः परित्यागाभावात् धर्मपरित्यागदोषपरिहारोऽपि जात इत्यभिप्रायः । उभयदोषं उक्तं दोषद्वयं प्रतिहन्तुं परिहर्तुं ईशो समर्थः हरिः अत्र जन्मनि वृषस्य यमस्य सुतं युधिष्ठिरं ज्येष्ठं चकार । भीमे ज्येष्ठे सति स्वधर्मपरित्यागाख्यदोषः स्यात् । स्वधर्मपरित्यागाभावे गुर्वाज्ञालङ्घनेन अपकीर्तिः स्यात् । युधिष्ठिरस्य ज्येष्ठत्वे तु उक्तदोषद्वयं तद्वचनेन कीर्त्यर्थं धर्मपरित्यागेऽपि भीमस्य न दोषः स्यादित्यतो युधिष्ठिरं ज्येष्ठं चकारेति भावः ।।२९।।

**अनन्तभट्टीया–** तर्हि अनुवृत्त्या स्वधर्मत्यागतो दोषः प्राप्त इत्यत आह– **कीर्त्यर्थमिति** ।। कीर्त्यर्थं निजधर्मपरिग्रहाणे प्राप्ते स्वधर्मं प्रविहातुमेव वृषस्य सुतं ज्येष्ठं चकारेत्यन्वयः । भीमे ज्येष्ठे सति कीर्त्यर्थं निजधर्मपरित्यागे दोषः, अपरित्यागे अपकीर्तिः स्यात् । धर्मजे ज्येष्ठे सति कीर्त्यर्थं भीमेन स्वधर्मत्यागे अग्रजस्य वचनात् कृते सति तस्य न दोष इति भावः । प्रकृतमनुसृत्याह– **भीमस्येति** ।। भीमश्चोभयस्थितौ पितृव्याज्ञोल्लङ्घने कीर्तिनाशः गमने स्वधर्माणां निवृत्तिरिति उभयविधं दोषं प्रतिहन्तुं धर्मजं श्रेष्ठं चकारेति योज्यम् ।। २९ ।।

**जनार्दनीया–** तर्हि गृहत्यागरूपस्वधर्मत्यागदोषः प्राप्तः इत्यत आह– **कीर्त्यर्थमिति** ।। कीर्त्यर्थमेव पितृव्याज्ञापरिपालनरूपकीर्त्यर्थमेव निजधर्मपरिग्रहाणे प्राप्ते सति, अग्रजस्य वचनात् प्रविहातुमेव, स्वधर्ममिति शेषः । भीमस्य उभयदोषस्थितौ पितृव्योल्लङ्घनेन कीर्तिनाशः गमने स्वधर्मत्यागः इत्युभयं दोषं प्रतिहन्तुं अन्यथा नाशयितुम् ईशः समर्थो हरिः वृषस्य यमस्य सुतं ज्येष्ठं चकारेत्यन्वयः ।। २९ ।।

**ताम्रपर्णी–** एवं भीमस्य दोषद्वयं परिहर्तुमेव हरिणा स्वरूपोत्तमं भीमं विहाय युधिष्ठिरस्या-ग्रजत्वेनावतारितत्वात् इत्याह– **कीर्त्यर्थमिति** ।। केवलं कीर्तिपरिरक्षणार्थनिजधर्मपरिग्रहाणे प्राप्तेऽग्रजस्य वचनात् स्वधर्मं प्रविहन्तुं ततश्च भीमस्याकीर्त्यधर्मलक्षणदोषद्वयं परिहर्तुं वृषस्य यमस्य सुतं ज्येष्ठं चकारेत्यर्थः ।। २९ ।।

**भारतश्री–** तर्हि 'यामो वयं न तु गृहात् स हि न स्वधर्मः' इत्युक्तः स्वधर्मत्यागरूपदोषः स्यादित्यत आह– **कीर्त्यर्थमिति** ।। भीमस्य उभयदोषस्थितौ पितृव्यातिक्रमणेन कीर्तिनाशः गमने स्वधर्मत्याग इति पाक्षिकमुभयं दोषं प्रतिहन्तुमीशः प्रतिहातुं समर्थो भगवान् पितृव्याज्ञापालनरूपकीर्त्यर्थमेव निजधर्म-परिग्रहाणे प्राप्तेरिति अग्रजस्य वचनात् प्रतिहातुमेव, स्वधर्ममिति शेषः । वृषस्य सुतं ज्येष्ठं चकारेत्यन्वयः ।। २९ ।।

**चट्टि–** तर्हि गृहत्यागरूपस्वधर्मत्यागदोषः प्राप्तः इत्यत आह– **कीर्त्यर्थमिति** ।। पितृव्याज्ञापरिपालन-रूपकीर्त्यर्थमेव । निजधर्मपरिग्रहाणे प्राप्ते सति अग्रजस्य वचनात् प्रविहातुमेव, स्वधर्ममिति शेषः ।

भीमस्य उभयं दोषं स्थितौ पितृव्योल्लङ्घनेन कीर्तिनाशः गमने स्वधर्मत्यागः इत्युभयं दोषं प्रतिहन्तुं अन्यथा नाशयितुम् ईशः समर्थो हरिः श्रीकृष्णः वृषस्य यमस्य सुतं ज्येष्ठं चकारेत्यन्वयः । यद्वा पाण्डवानां कीर्त्यर्थमेव पितृव्यमनुसरन्तीत्यादिकीर्तिसम्पादनार्थमेव निजधर्मपरिग्रहाणे कर्तव्यत्वेन प्राप्ते सति वस्तुतस्तु न स्वधर्मसंरक्षणार्थं पितृव्यातिक्रमणे दोषः । तस्य पापानुगतत्वात् । 'पापं च पापानुगतं च' (ता.नि-२८.९४) इत्याद्युक्तेरित्येवकारार्थः । अग्रजस्य वचनादेव स्वधर्मप्रविहातुं वृषस्य सुतं ज्येष्ठं चकारेत्यन्वयः । तेन भीमस्य किं साधितं भवतीत्यत आह– **भीमस्येति** ।। भीमस्यैव ज्येष्ठत्वे स्वधर्मसंरक्षणार्थं गृहादनिर्गमने पितृव्यातिक्रमणजन्यापकीर्तिः प्राप्नोति । तदनुसरणे स्वधर्महानिरित्युभयं दोषं परिहर्तुमित्यर्थः । एतेन ननु भीमस्यैव ज्येष्ठत्वेऽपि न विरोधः । अग्रजानुसरणेनेव पितृव्यधृतराष्ट्रा-नुसरणेनापि उक्तदोषपरिहारसम्भवादिति चोद्यं निरस्तम् । धृतराष्ट्रस्य पापानुगतत्वेन तदतिक्रमणे दोषाभावस्योक्तत्वेन कीर्तिनाशापत्तेः । न च धर्मजस्यापि पापानुगतधृतराष्ट्रानुगतत्वात् तदतिक्रमणेऽपि न दोष इति वाच्यम् । साक्षात् परम्परयेति विशेषात् । यद्वा निजधर्मपरित्यागे प्रस्तुते कीर्त्यर्थमग्रजस्य वचनादेव प्रविहातुमित्यन्वयः । ननु भीमस्यैव ज्येष्ठत्वसम्पादनेन कीर्त्यर्थं स्वधर्मत्याजने किं बाधकमित्यत आह– **भीमस्येति** ।। यद्यपि भीमस्यैव ज्येष्ठत्वेऽपि पामरलोकाभिमतकीर्तिविरोधेन स्वधर्मसंरक्षणे न दोषः । तथापि उभयविधदोषपरिहारोपाये सम्भवति तथा कृतमिति भावः ।। २९ ।।

**हन्तव्यतामुपगतेषु सुयोधनादि-**
**ष्वन्यो वधान्न हि भवेन्निजधर्म एव ।**
**पूर्वं वधे न हि समस्तश एव दोषा-**
**स्तेषां प्रयान्ति विवृतिं च तदर्थतोऽपि ।।३०।।**

**व्यासतीर्थीया–** कारणान्तरमाह । सङ्गिरलादि[१] हन्तव्यतामिति नैवेत्येव सम्बन्धः । तदर्थतोऽपि, अन्वगादिति शेषः ।।३०।।

**वेदाङ्गतीर्थीया–** वृषसुतं ज्येष्ठवत्कर्तुः अभिप्रायान्तरमप्याह– **हन्तव्यतामिति** ।। वधयोग्यापराधिषु सुयोधनादिषु तदैव हन्तव्यतामुपगतेषु वधादन्यः वधाभावः निजधर्मो नैव भवेत् । निजधर्मार्थं वध्यतामिति चेत् तच्च न युक्तम् । कुतः? पूर्वं वधे प्रथमापराधेनैव वधे तेषां समस्तशो दोषाः करिष्यमाणदोषाः विवृतिं लोकप्रसिद्धतां न यान्ति । अतः पूर्वं न हन्तव्याः । वधयोग्यानां वधस्य स्वधर्मत्वात् तदकरणे स्वधर्महानिः स्यात् । अग्रजवचनात् वधाभावे न स्वधर्महानिः स्यादिति तदर्थतोऽपि हरिः ज्येष्ठं चकारेति सम्बन्धः ।। ३०-३१ ।।

---

१. 'मंगरलादिप्रयोगादिना' इति स्यात् ।

**वादिराजतीर्थीया–** सुयोधनादिषु हन्तव्यतामुपगतेषु सत्सु तेषां वधादन्यः निजधर्मो न भवेदेव हि । तथाऽपि पूर्वमिदानीं अस्मदुच्चाटनाख्यापराधसमये तेषां दुर्योधनादीनां वधे सति तेषां समस्तशः दोषाः उपरि करिष्यमाणाः अस्मद्वधार्थं लाक्षागृहनिर्माणद्रौपदीकचग्रहणकृष्णबन्धनोद्योगादिविष्णुवैष्णवद्रोहाख्य- दोषाः विवृतिं लोके प्रसिद्धिं न प्रयान्ति । तदर्थतोऽप्यन्वगादिति पूर्वेणान्वयः ।।३०।।

**वरदराजीया–** युधिष्ठिरस्य ज्येष्ठत्वकरणे अन्योऽपि धर्मो भीमस्य परिपालितो भवतीत्याह– **हन्तव्यतामिति** ।। स्वस्य विषदानादिना हन्तव्यत्वं प्राप्तेषु दुर्योधनादिषु । तेषां दुर्योधनादीनां वधादन्यो धर्मो नैव भवेत् । तर्हि तदैव हन्तव्या इत्यत उक्तम्– **पूर्वमिति** ।। पूर्वं वधे क्रियमाणे सति समस्तशः सर्वेऽपि दोषाः अपराधाः विवृतिं न प्रयान्ति । अतो अग्रजवचनात् हननान्निवृत्तौ सतः स्वधर्म- परित्यागाख्यदोषो न स्यादित्येतत्तदर्थतोऽपि ज्येष्ठं चकारेति भावः ।।३०।।

**अनन्तभट्टीया–** स्वगृहान्निर्गमने अग्रजानुवृत्तिः कारणमुक्तम् । कारणान्तरञ्चाह– **हन्तव्यतामिति**।। विषप्रयोगादिना हन्तव्यतां नैवेत्येवकारेण सम्बन्धः । एवं बुद्ध्या इदानीं वधेऽपि विवृतिं (न) प्रयान्ति तदर्थतोऽपि, अनुगत इति शेषः ।।३०।।

**जनार्दनीया–** वृषसुतस्य ज्येष्ठकरणे प्रयोजनान्तरमप्याह– **हन्तव्यतामिति** ।। वधाय योग्यापराधिषु सुयोधनादिषु तदैव हन्तव्यतामुपगतेषु सत्सु । वधादन्यो वधाभावः निजधर्मो नैव भवेत् । निजधर्मार्थं वध्यतामिति चेत् तच्च न युक्तम् । कुतः? पूर्वं वधे विषदानप्रथमापराधेनैव वधे, तेषां समस्तशो दोषाः करिष्यमाणाः दोषाः विवृतिं लोकप्रसिद्धिं न यान्ति । अतः पूर्वं न हन्तव्याः । वधयोग्यानां च वधस्य स्वधर्मत्वात् तदकरणे स्वधर्महानिः स्यात् । अग्रजवचनात् वधाभावे न स्वधर्महानिः स्यादिति तदर्थतोऽपि हरिः ज्येष्ठं चकारेति सम्बन्धः ।। ३० ।।

**ताम्रपर्णी–** ननु नारायणद्विट्तदनुबन्धिनिग्रहस्य परमधर्मत्वात् तद्विरुद्धस्याग्रजवाक्यकरणस्यापि अधर्मत्वात् कथमग्रजानुवृत्तिमकरोदित्यत आह– **हन्तव्यतामिति** ।। अन्यः अग्रजवाक्यकरणलक्षणः । तदर्थतोऽपि, अग्रजमन्वगादिति वर्तते । यद्वा गृहान्निर्गमेऽग्रजानुवृत्तिः कारणमुक्तम् । कारणान्तरमाह– **हन्तव्यतामिति** ।। अन्यः कीर्तिलक्षणः । तदर्थतोऽपि पुरं हित्वा अन्वगादिति सम्बन्धः । यद्वा वृषसुतस्याग्रजत्वकरणे हेत्वन्तरमाह– **हन्तव्यतामिति** ।। गरलव्यालजलानलादिदानेन तदैव हन्तव्यतामुपगतेषु सुयोधनादिषु वधादन्यो सहनं न धर्मः । पूर्वं वधे प्रथमापराधेनैव वधे सर्वेषां दोषा न व्यज्यन्ते तस्माद्वधो न कार्यः । न च धर्महानिदोषः । अग्रजवाक्येन तद्दोषपरिहारोपपत्तेः । अतस्तदर्थतोऽपि वृषसुतं ज्येष्ठं चकारेति योजना ।।३०-३४।।

**भारतश्री–** ज्येष्ठकरणस्य प्रयोजनान्तरमाह– **हन्तव्यतेति** ।। अत्रापि दोषद्वयम्, हन्तव्यत्वयोग्य- दुर्योधनाद्यहननम्, हनने तेषां दोषानाविष्करणं च इत्युभयम् । अत्र दुर्योधनादिदोषाविष्करणार्थं हन्तुं

भीमस्य उभयं दोषं स्थितौ पितृव्योल्लङ्घनेन कीर्तिनाशः गमने स्वधर्मत्यागः इत्युभयं दोषं प्रतिहन्तुं अन्यथा नाशयितुम् ईशः समर्थो हरिः श्रीकृष्णः वृषस्य यमस्य सुतं ज्येष्ठं चकारेत्यन्वयः । यद्वा पाण्डवानां कीर्त्यर्थमेव पितृव्यमनुसरन्तीत्यादिकीर्तिसम्पादनार्थमेव निजधर्मपरिग्रहाणे कर्तव्यत्वेन प्राप्ते सति वस्तुतस्तु न स्वधर्मसंरक्षणार्थं पितृव्यातिक्रमणे दोषः । तस्य पापानुगतत्वात् । 'पापं च पापानुगतं च' (ता.नि-२८.९४) इत्याद्युक्तेरित्येवकारार्थः । अग्रजस्य वचनादेव स्वधर्मप्रविहातुं वृषस्य सुतं ज्येष्ठं चकारेत्यन्वयः । तेन भीमस्य किं साधितं भवतीत्यत आह– **भीमस्येति** ।। भीमस्यैव ज्येष्ठत्वे स्वधर्मसंरक्षणार्थं गृहादनिर्गमने पितृव्यातिक्रमणजन्यापकीर्तिः प्राप्नोति । तदनुसरणे स्वधर्महानिरित्युभयं दोषं परिहर्तुमित्यर्थः । एतेन ननु भीमस्यैव ज्येष्ठत्वेऽपि न विरोधः । अग्रजानुसरणेनेव पितृव्यधृतराष्ट्रानुसरणेनापि उक्तदोषपरिहारसम्भवादिति चोद्यं निरस्तम् । धृतराष्ट्रस्य पापानुगतत्वेन तदतिक्रमणे दोषाभावस्योक्तत्वेन कीर्तिनाशापत्तेः । न च धर्मजस्यापि पापानुगतधृतराष्ट्रानुगतत्वात् तदतिक्रमणेऽपि न दोष इति वाच्यम् । साक्षात् परम्परयेति विशेषात् । यद्वा निजधर्मपरित्यागे प्रस्तुते कीर्त्यर्थमग्रजस्य वचनादेव प्रविहातुमित्यन्वयः । ननु भीमस्यैव ज्येष्ठत्वसम्पादनेन कीर्त्यर्थं स्वधर्मत्याजने किं बाधकमित्यत आह– **भीमस्येति** ।। यद्यपि भीमस्यैव ज्येष्ठत्वेऽपि पामरलोकाभिमतकीर्तिविरोधेन स्वधर्मसंरक्षणे न दोषः । तथापि उभयविधदोषपरिहारोपाये सम्भवति तथा कृतमिति भावः ।। २९ ।।

**हन्तव्यतामुपगतेषु सुयोधनादि-**
**ष्वन्यो वधान्न हि भवेन्निजधर्म एव ।**
**पूर्वं वधे न हि समस्तश एव दोषा-**
**स्तेषां प्रयान्ति विवृतिं च तदर्थतोऽपि ।।३०।।**

**व्यासतीर्थीया–** कारणान्तरमाह । सङ्गिरलादि[१] हन्तव्यतामिति नैवेत्येव सम्बन्धः । तदर्थतोऽपि, अन्वयादिति शेषः ।।३०।।

**वेदाङ्गतीर्थीया–** वृषसुतं ज्येष्ठवत्कर्तुः अभिप्रायान्तरमप्याह– **हन्तव्यतामिति** ।। वधयोग्यापराधिषु सुयोधनादिषु तदैव हन्तव्यतामुपगतेषु वधादन्यः वधाभावः निजधर्मो नैव भवेत् । निजधर्मार्थं वध्यतामिति चेत् तच्च न युक्तम् । कुतः? पूर्वं वधे प्रथमापराधेनैव वधे तेषां समस्तशो दोषाः करिष्यमाणदोषाः विवृतिं लोकप्रसिद्धतां न यान्ति । अतः पूर्वं न हन्तव्याः । वधयोग्यानां वधस्य स्वधर्मत्वात् तदकरणं स्वधर्महानिः स्यात् । अग्रजवचनात् वधाभावे न स्वधर्महानिः स्यादिति तदर्थतोऽपि हरिः ज्येष्ठं चकारेति सम्बन्धः ।। ३०-३१ ।।

१. 'मंगल्यादिप्रयोगादिना' इति स्यात् ।

**वादिराजतीर्थीया–** सुयोधनादिषु हन्तव्यतामुपगतेषु सत्सु तेषां वधादन्यः निजधर्मो न भवेदेव हि । तथाऽपि पूर्वमिदानीं अस्मदुच्चाटनाख्यापराधसमये तेषां दुर्योधनादीनां वधे सति तेषां समस्तशः दोषाः उपरि करिष्यमाणाः अस्मद्वधार्थं लाक्षागृहनिर्माणद्रौपदीकचग्रहणकृष्णबन्धनोद्योगादिविष्णुवैष्णवद्रोहाख्य-दोषाः विवृतिं लोके प्रसिद्धिं न प्रयान्ति । तदर्थतोऽप्यन्वगादिति पूर्वेणान्वयः ।।३०।।

**वरदराजीया–** युधिष्ठिरस्य ज्येष्ठत्वकरणे अन्योऽपि धर्मो भीमस्य परिपालितो भवतीत्याह– **हन्तव्यतामिति** ।। स्वस्य विषदानादिना हन्तव्यत्वं प्राप्तेषु दुर्योधनादिषु । तेषां दुर्योधनादीनां वधादन्यो धर्मो नैव भवेत् । तर्हि तदैव हन्तव्या इत्यत उक्तम्– **पूर्वमिति** ।। पूर्वं वधे क्रियमाणे सति समस्तशः सर्वेऽपि दोषाः अपराधाः विवृतिं न प्रयान्ति । अतो अग्रजवचनात् हननान्निवृत्तौ सतः स्वधर्म-परित्यागाख्यदोषो न स्यादित्येतत्तदर्थतोऽपि ज्येष्ठं चकारेति भावः ।।३०।।

**अनन्तभट्टीया–** स्वगृहान्निर्गमने अग्रजानुवृत्तिः कारणमुक्तम् । कारणान्तरश्चाह– **हन्तव्यतामिति**।। विषप्रयोगादिना हन्तव्यतां नैवेत्येवकारेण सम्बन्धः । एवं बुद्ध्या इदानीं वधेऽपि विवृतिं (न) प्रयान्ति तदर्थतोऽपि, अनुगत इति शेषः ।।३०।।

**जनार्दनीया–** वृषसुतस्य ज्येष्ठकरणे प्रयोजनान्तरमप्याह– **हन्तव्यतामिति** ।। वधाय योग्यापराधिषु सुयोधनादिषु तदैव हन्तव्यतामुपगतेषु सत्सु । वधादन्यो वधाभावः निजधर्मो नैव भवेत् । निजधर्मार्थं वध्यतामिति चेत् तच्च न युक्तम् । कुतः? पूर्वं वधे विषदानप्रथमापराधेनैव वधे, तेषां समस्तशो दोषाः करिष्यमाणाः दोषाः विवृतिं लोकप्रसिद्धिं न यान्ति । अतः पूर्वं न हन्तव्याः । वधयोग्यानां च वधस्य स्वधर्मत्वात् तदकरणे स्वधर्महानिः स्यात् । अग्रजवचनात् वधाभावे न स्वधर्महानिः स्यादिति तदर्थतोऽपि हरिः ज्येष्ठं चकारेति सम्बन्धः ।। ३० ।।

**ताम्रपर्णी–** ननु नारायणद्विट्तदनुबन्धिनिग्रहस्य परमधर्मत्वात् तद्विरुद्धस्याग्रजवाक्यकरणस्यापि अधर्मत्वात् कथमग्रजानुवृत्तिमकरोदित्यत आह– **हन्तव्यतामिति** ।। अन्यः अग्रजवाक्यकरणलक्षणः । तदर्थतोऽपि, अग्रजमन्वगादिति वर्तते । यद्वा गृहान्निर्गमेऽग्रजानुवृत्तिः कारणमुक्तम् । कारणान्तरमाह– **हन्तव्यतामिति** ।। अन्यः कीर्तिलक्षणः । तदर्थतोऽपि पुरं हित्वा अन्वगादिति सम्बन्धः । यद्वा वृषसुतस्याग्रजत्वकरणे हेत्वन्तरमाह– **हन्तव्यतामिति** ।। गरलव्यालजलानलादिदानेन तदैव हन्तव्यतामुपगतेषु सुयोधनादिषु वधादन्यो सहनं न धर्मः । पूर्वं वधे प्रथमापराधेनैव वधे सर्वेषां दोषा न व्यज्यन्ते तस्माद्वधो न कार्यः । न च धर्महानिदोषः । अग्रजवाक्येन तद्दोषपरिहारोपपत्तेः । अतस्तदर्थतोऽपि वृषसुतं ज्येष्ठं चकारेति योजना ।।३०-३४।।

**भारतश्री–** ज्येष्ठकरणस्य प्रयोजनान्तरमाह– **हन्तव्यतेति** ।। अत्रापि दोषद्वयम्, हन्तव्यत्वयोग्य-दुर्योधनाद्यहननम्, हनने तेषां दोषानाविष्करणं च इत्युभयम् । अत्र दुर्योधनादिदोषाविष्करणार्थं हन्तुं

योग्यं दुर्योधनादिहननलक्षणनिजधर्मप्रहाणे प्राप्ते अग्रजस्य वचनात् निजधर्मं प्रविहातुमेव अग्रजं चकारेति ।। ३०-३१ ।।

**चट्टि–** वृषसुतस्य ज्येष्ठत्वकरणे प्रयोजनान्तरमप्याह– **हन्तव्यतामिति** ।। वधयोग्यापराधिषु सुयोधनादिषु तदैव हन्तव्यतामुपगतेषु सत्सु वधादन्यो निजधर्मो नैव भवेत् । हि तर्हि तदैव हन्तव्या इत्यत उक्तम्– **पूर्वमिति** ।। पूर्वं प्रथमापराधसमय एव वधे सति तेषां समस्तशो दोषाः करिष्यमाणाः दोषाः विवृतिं लोकप्रसिद्धिं न प्रयान्ति । अतः पूर्वं न हन्तव्याः । वधयोग्यानां वधस्य स्वधर्मत्वात् तदकरणे स्वधर्महानिः स्यात् । अग्रजवचनाभावे सति स्वधर्महानिः स्यादिति तदर्थतोऽपि हरिः ज्येष्ठं चकारेति सम्बन्धः ।। ३० ।।

**क्षत्ताऽथ चाऽह सुवचोऽन्त्यजभाषयैव[१]**
**धर्मात्मजं [२]विषहुताशभयात् प्रतीताः ।**
**आध्वं त्विति स्म स तथेति वचोऽप्युदीर्य**
**प्रायाच्च वारणवतं पृथयाऽनुजैश्च ।।३१।।**

---

१. 'प्रच्छन्नं विदुरेणोक्तं प्रियं यन्म्लेच्छभाषया । त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ।।' इत्यादिपर्वणि युधिष्ठिरं प्रति खनकवचनम् १५९.३.

२. 'अलोहं निशितं शस्त्रं शरीरपरिकर्तनम् । यो वेत्ति न तु तं घ्नन्ति प्रतिघातविदं द्विषः ।। कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः । न दहेदिति चात्मानं यो रक्षति स जीवति ।। नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः । नाधृतिर्भूतिमाप्नोति बुध्यस्वैवं प्रबोधितः ।। अनाप्तैर्दत्तमादत्ते नरः शस्त्रमलोहजम् । श्वाविच्छरणमासाद्य प्रमुच्येत हुताशनात् ।। चरन् मार्गान्विजानाति नक्षत्रैर्विन्दते दिशः । आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते ।।' इति विदुरवचांसि आदिपर्वणि १५७. २१-२५ । व्याख्यानम्- ।। **अलोहमिति** ।। अलोहमग्निमयं शस्त्रमिव शस्त्रं घातकं तस्य प्रतिघातविदं द्विषो न घ्नन्ति । अग्निकृते भये ज्ञातेऽपि कथं प्रतीकारस्तत्राह– **कक्षघ्न इति** ।। कक्षः तृणेन्धनं हन्तीति तथा । शिशिरं शीतं हन्तीति तथाविधोऽपि अग्निः महाकक्षे अरण्ये दह्यमानेऽपि बिलौकसो मूषकादीन्न दहति इत्थमात्मानं यो रक्षति स जीवति । तथा बिलेष्वाविश्य आगाराद्रक्षणीय इत्यर्थः । ततश्च बिलनिर्गमनानन्तरं अरण्यगमनप्रकारमुपदिशति– **नाचक्षुरिति** ।। अचक्षुः पूर्वं वर्त्मदर्शनविहीनः पन्थानं रात्रौ न वेत्ति । तथा अचक्षुः विज्ञानहीनः दिशो न विन्दते न प्रत्यभिजानाति। अतः पूर्वमेव वर्त्मदिशौ द्रष्टव्ये इति भावः । कथमस्माकं बिलप्रवेशनिर्गमाविति चेत्तत्राह– **नाधृतिरिति** ।। दुःखे धैर्यरहितो भूतिमैश्वर्यं जीवनं वा न विन्दति । विपदि धैर्यमेव कार्यमित्यर्थः । किञ्च यत्पुरोचनादिभिः कर्तव्यं तत्स्वयमेव कार्यमित्याह– **अनाप्तैरिति** ।। अनाप्तैः पुरोचनादिभिः दत्तं दातुमारब्धं यदलोहजं शस्त्रं तत्स्वयमादत्ते स्वीकरोति । तान् हत्वा आत्मानं रक्षति । पुरोचनादिषु जीवत्सु अनुसारादिशङ्का स्यादिति भावः । श्वाविदिति गूढदृष्टान्तः । श्वाविद्वत् कर्तव्यमिति भावः । शरणं सुरङ्गम् । आत्मना सह पञ्चेन्द्रियाणि। आहाराद्यभावेन पीडयन् अनु पश्चात् न पीड्यते, भवानिति शेषः । यद्वा 'नाचक्षुः' इत्युक्तस्यैव विवरणम्– **चरन् मार्गानिति** ।। विश्वासार्थं षड् दग्धव्या इत्याह– **आत्मनेति** ।। लुप्तोपममेतत् । त्वत्सदृशेन सह आत्मनः तव सदृशान् पञ्च नानुपीड्यते, भवानिति शेषः ।' इति ।

**व्यासतीर्थीया–** सुवच एव । अन्त्यजभाषया किमर्थमाह– **विषेति** ।।३१-३३।।

**वादिराजतीर्थीया–** विषहुताशभयान्निमित्तात् प्रतीताः प्रतीतिमन्तः लाक्षागृहे विषहुताशभयं भविष्यतीति जानानाः आध्वं लाक्षागृहे उपविशध्वम् । 'आस उपवेशने' इति धातोः लोट्यात्मनेपदे मध्यमपुरुषवहुवचनम् । इति क्षत्ता विदुरः अन्त्यजभाषया म्लेच्छभाषया आहेत्यन्वयः ।। ३१ ।।

**मधुसूदनीया–** ।। **अन्त्यजभाषयेति** ।। म्लेच्छभाषयेत्यर्थः । 'प्रच्छन्नं विदुरेणोक्तं पाण्डवं म्लेच्छभाषया' इत्यादिपर्ववचनात् (१५९.३)। वरदराजाचार्यास्तु- 'अन्त्यजभाषया अन्यैरपरिचित-कृत्रिमभाषया' इति व्याचक्षते । तच्चिन्त्यम् । अप्रामाणिकत्वात् ।। ३१-३४ ।।

**वरदराजीया–** क्षत्ता विदुरः सुवचः अत्यन्तं हितवाक्यं अन्त्यजभाषया दर्शनादिभाषासु अन्ते जाता अन्त्यजा गुह्यभाषा तया । अन्यैरपरिचितकृत्रिमभाषा इत्यर्थः । यत्तु भारते 'हितार्थं म्लेच्छभाषया' इति (आदिपर्वणि-२.१०४) तत्र 'म्लेच्छ अव्यक्ते शब्दे' इति धातोः अव्यक्तभाषया इत्यर्थः ।। **विषेति** ।। विषभयात् हुताशनभयाच्च प्रतीताः सावधानाः आध्वं तु भवत इत्याह स्मेति सम्बन्धः । स तु युधिष्ठिरोऽपि अनुजैश्च पृथया सह ।।३१।।

**अनन्तभट्टीया–** प्रतीताः सावधानाः । आध्वं भवत ।। ३१ ।।

**जनार्दनीया–** क्षत्ता विदुरः सुवचः हितवाक्यं अन्त्यजभाषया म्लेच्छभाषया । तदुक्तमादिपर्वणि- 'हितोपदेशश्च पथि धर्मराजस्य धीमतः । विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया ।।' इति । अवदत्, पाण्डवानामिति शेषः । दर्शनादिभाषासु अन्ते जाता अन्त्यजा अन्तिमा गुह्यभाषा, तया । 'गुह्यभाषान्यथा भवेत्' इत्युक्तेः आपाततः प्रतीतवाक्यार्थान्यार्थयुक्ता गुह्यभाषा । न तु म्लेच्छभाषा । न हि 'कक्षघ्नः शिशिरघ्नश्च' (आदिपर्वणि-१५७.२२) इत्यादि म्लेच्छभाषा । यत्तु भारते 'हितार्थं म्लेच्छभाषया' इति, तत्र 'म्लेच्छ अव्यक्ते शब्दे' इति धातुव्याख्यानात्, अर्थतोऽव्यक्तम्लेच्छभाषयेति ज्ञेयम् । प्रतीताः सावधानाः । आध्वं भवतेत्याह– **स इति** ।।३१।।

**अतिविशद–** 'क्षत्ताऽथ चाह सुवचोऽन्त्यजभाषयैव' इत्यत्र अन्त्यजानां अनामिकम्लेच्छानां भाषया वचनेनेति प्रायशो वदन्ति । 'हितार्थं म्लेच्छभाषया' इति भारतवाक्यात् । केचित्तु गुह्यभाषयेति । एवं वदन्तो प्रष्टव्याः । योगेन रूढ्या वा इति । अत्र गुह्यभाषाया अन्त्यजत्वं कथम् । न तावदन्त्यजन्यत्वेन । 'मृत्तिकेत्येव सत्यम्' (छां.उ-६) इत्यादिना संस्कृतभाषाया नित्यत्वात् । नान्ते अभिव्यक्तत्वेन दर्शनसमाधिभाषयोरादावभिव्यक्तत्वे सिद्धे गुह्यभाषयाः अन्ते अभिव्यक्तत्वसिद्धिः । गुह्यभाषाया अन्ते अभिव्यक्तत्वसिद्धे दर्शनसमाधिभाषयोरादावभिव्यक्तत्वसिद्धिरित्यन्योन्याश्रयता च । किञ्च अन्त्यभाषया इत्यनेन चरितार्थत्वात् जशब्दो व्यर्थः । नापि रूढ्या । अन्त्यजशब्दस्य गुह्यभाषासु रूढेरभावात् । न हि लोके अन्त्यजभाषया गुह्यभाषां प्रति अयं गुह्यभाषाप्रतिपादक इत्यभिप्रेत्य...* । केचित्तु- 'हितार्थं

म्लेच्छभाषया' इति भारतं 'म्लेच्छ अव्यक्ते शब्दे' इति धातोः अव्यक्तार्थकं व्याख्याय न हि 'कक्षघ्नः शिशिरघ्नः' इत्यादिकं म्लेच्छभाषेति वाधकमभिधाय अन्त्यजभाषयेत्यर्थ इत्याहुः । तेषां लक्षणादोषः । गुह्यभाषायां अर्थस्यैवानभिव्यक्तत्वेन शब्दस्यातथात्वात् ।। ३१ ।।

**भावचन्द्रिका–** ।। क्षत्तेति ।। अथ पुरान्निर्गमनानन्तरम् । पौराणां पुरान्निर्गमनान्तरम् । 'पौरुषेषु निवृत्तेषु विदुरस्सर्वधर्मवित् । अन्वगच्छत् स कौन्तेयं बोधयंश्चेदमब्रवीत् ।।' इति भारते (आदिपर्वणि-१५७.१९)।। ३१ ।।

**गूढकर्तृक–** 'क्षत्ताऽथ चाह सुवचोऽन्त्यजभाषयैव' इत्यत्र 'अन्त्यजानां अनामिकम्लेच्छानां भाषया वचनेन' इति प्रायशो वदन्ति । 'हितार्थं म्लेच्छभाषया' इति भारतवाक्यात् । केचित्तु- 'गुह्यभाषया' इति वदन्तः प्रष्टव्याः । योगेन रूढ्या वा इति । तत्र गुह्यभाषाया अन्त्यजत्वकथनं अन्त्यजन्यत्वेन 'मृत्तिकेत्येव सत्यम्' इत्यादिना संस्कृतभाषायाः अन्तेऽभिव्यक्तत्वे सिद्धिः । गुह्यभाषाया अन्ते अभिव्यक्तत्वे दर्शनसमाधिभाषयोः आदौ अभिव्यक्तिसिद्धिरित्यन्योन्याश्रयता च । किञ्च अन्त्यभाषया इत्यनेन चरितार्थत्वात् अन्त्यजशब्दो व्यर्थः । नापि रूढ्या । अन्त्यजशब्दस्य गुह्यभाषायां रूढेरभावात् । नहि लोके अन्त्यजभाषया गुह्यभाषां प्रतियन्ति । केचित्तु- 'हितार्थं म्लेच्छभाषया' इति भारते । 'म्लेच्छ अव्यक्ते शब्दे' इति धातोः, अव्यक्तार्थकत्वं व्याख्याय अन्त्यजभाषया इत्यर्थः' इत्याहुः । केचित्तु- 'अन्त्यजाः शूद्राः तद्भाषया' इति वा ।। ३१-४३ ।।

**चट्टि–** अथ क्षत्ता विदुरः । सुवचः हितवाक्यम् । अन्त्यजभाषया म्लेच्छभाषयैव । तदुक्तमादिपर्वणि- 'हितोपदेशश्च पथि धर्मराजस्य धीमतः । विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया ।।' इति । 'प्रच्छन्नं विदुरेणोक्तं पाण्डवं म्लेच्छभाषया' इत्यादि च । धर्मात्मजं प्रति विषहुताशभयात् प्रतीताः सावधानाः आध्वं भवतेत्याह– **स इति** ।। सः धर्मात्मजोऽपि तथेति वचः उदीर्य पृथया अनुजैश्च सह वारणवतं प्रायाच्च ।। ३१ ।।

> **तान् हन्तुमेव च तदा धृतराष्ट्रसूनु-**
> **र्लाक्षागृहं सपदि काञ्चनरत्नगूढम् ।**
> **कृत्वाऽभ्ययातयदमुत्र हि[1] विष्णुपद्या[2]**
> **स्वामात्यमेव च पुरोचननामधेयम्[3]** ।।३२।।

---

१. 'अमुत्र च' इति वादिराजतीर्थीय-भावचन्द्रिकाकाराणां पाठः ।

२. 'विष्णुपद्याम्' इति सत्याभिनवतीर्थीय-वरदराजीय-अनन्तभट्टीय-चट्टीपाठः ।

३. भारते पुरोचनेनैव लाक्षागृहं कारयामास इत्युच्यते । तथाहि- 'स पुरोचनमेकान्तमानीय भरतर्षभ । गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत्' ।। ३ ।। '..स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना । वारणावतमद्यैव यथा यासि

**वेदाङ्गतीर्थीया–** अमुत्र वारणावते । विष्णुपद्या गङ्गाजलमार्गेण ।।३२।।

**वादिराजतीर्थीया–** 'अमुत्र च विष्णुपद्या' इत्यत्र लाक्षागृहं कृत्वा अमुत्र लाक्षागृहे यदपेक्षितं वस्तु धनधान्यादिकं वस्तु तदपि कृत्वा पूरितं कृत्वा विष्णुपद्या गङ्गया नौकाद्वारा गङ्गामार्गेण अभ्ययातयत् गच्छतेति कारुभिः सहितं पुरोचननामधेयं स्वामात्यं प्रेषयामासेति योग्यक्रियाध्याहारेण योजना ।।३२।।

**सत्याभिनवतीर्थीया–** तत्रैव 'तान् हन्तुमेव च तदा..' इति श्लोकः । तस्यार्थः- धृतराष्ट्रसूनुः तदा तान् पाण्डवान् हन्तुमेव काञ्चनरत्नगूढं लाक्षागृहं कृत्वा विष्णुपद्यां स्थापितायां नावि स्थापयित्वा च अमुत्र अमुं वारणावतं प्रति लाक्षागृहं पुरोचननामधेयं स्वामात्यं च सपद्येव तत्काल एव अभ्ययातयत् इत्येतत् हि प्रसिद्धमिति । एतेन विष्णुपद्याम् इत्येतत् अनन्वितमिति दूषणं पराकृतम् । स्थापितायामित्यादेः शेषेणान्वयस्योक्तत्वात् ।।३२।।

**वरदराजीया–** तान् पाण्डवान् सपदि तस्मिन्नेव क्षणे लाक्षागृहं लाक्षामयं गृहं काञ्चनरत्नैः गूढं आच्छादितम् । अमुत्र वारणावतं प्रति अभ्ययातयत् प्रेषयामास । कथम्? विष्णुपद्याम्, तत्प्रवाहेणेति शेषः । स्वामात्यं स्वस्य मन्त्रिणं च तेन सहाभ्ययातयत् ।।३२।।

**अनन्तभट्टीया–** गूढं आच्छादितम् । विष्णुपद्यां भागीरथीप्रवाहतोऽगात् इत्यर्थः । अमुत्र वारणावतं प्रतीत्यर्थः ।। ३२ ।।

**जनार्दनीया–** गूढं आच्छादितम् । अमुत्र वारणावतं प्रति । विष्णुपद्या गङ्गाप्रवाहेणेत्यर्थः ।।३२।।

**भावचन्द्रिका–** धृतराष्ट्रसुनुः अमुत्र च वारणवते । सपदि शीघ्रम् । काञ्चनरत्नगूढं गृहं कृत्वा तान् हन्तुं तदाऽयम् । 'निर्यातं सद्बिलम्' इति भारतोक्तं ज्ञेयम् ।। ३२-४० ।।

**भारतश्री–** अमुत्र वारणावतं प्रति विष्णुपद्यां कृत्वेति आवर्तते । गङ्गा(मार्गेण)इत्यर्थः ।।३२-३३।।

**चट्टि–** तदा धृतराष्ट्रसुनुः तान् पाण्डवान् हन्तुमेव सपदि तस्मिन्नेव क्षणे काञ्चनरत्नैः गूढं आच्छादितं लाक्षागृहं कृत्वा । अमुत्र वारणावतं प्रति । विष्णुपद्यां नौकाद्वारा गङ्गामार्गेणेत्यर्थः । अभ्ययातयत् ।।३२।।

**पूर्वं प्रहस्त इति यस्त्वभवत् सुपापः**
**सोऽभ्येत्य पाण्डुतनयानभवच्च मन्त्री ।**

---

तथा कुरु । तत्र गत्वा चतुःशालं गृहं परमसंवृतम् । नगरोपान्तमाश्रित्य कारयेथा महाधनम् । शणसर्जरसादीनि यानि द्रव्याणि कानिचित् । आग्नेयान्युत सन्तीह तानि तत्र प्रदापय । वल्वजेन च संमिश्रं मधूच्छिष्टेन चैव हि । सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया । मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापय। शणं तैलं घृतं चैव जतु दारूणि चैव हि । तस्मिन्वेश्मनि सर्वाणि निक्षिपेथाः समन्ततः । लाक्षाशणमधूच्छिष्टवेष्टितानि मृदापि च ।। लेपयित्वा गुरूण्याशु दारुयन्त्राणि दापय ।।' इत्यादिपर्वणि १५६. ८-१३.

**दुर्योधनं प्रति विहाय भवत्सकाश-**
**मायात इत्यवददेषु स कूटवाक्यम्** ।।३३।।

**वेदाङ्गतीर्थीया–** पूर्वं यः सुपापः प्रहस्त इति प्रहस्तनामा राक्षसः अभवत् । तमेवात्र पुरोचननामधेयं स्वामात्यं चाभ्ययातयत् इति सम्वन्धः । भवत्सकाशं प्रति आयातः । कूटवाक्यं छन्नवाक्यं व्याजवचनम् ।।३३-३४।।

**वादिराजतीर्थीया–** 'स कूटवाक्यम्' इत्यत्र कूटवाक्यं छन्नवाक्यम् । 'कैतवं कपटं कूटम्' इति हलः ।।३३।।

**सत्याभिनवतीर्थीया–** तदनन्तरमेव 'पूर्वं प्रहस्त इति यस्त्वभवत्..' इति श्लोके दुर्योधनं प्रति विहाय इत्यस्य प्रतिभवत्प्रतिकूलं दुर्योधनं विहायेत्यर्थः । एतेन दुर्योधनं विहायेत्यनेन पूर्णत्वात् प्रतीत्येतत् व्यर्थमिति दूषणं परिहृतम् । प्रतिशब्दः प्रतिकूलवाची, भवदिति योग्यतया सम्वध्यते इत्यङ्गीकृत्य प्रतीत्यनेन भवत्प्रतिकूलमित्यर्थ उच्यते इति स्वीकरणात् ।।३३।।

**वरदराजीया–** पुरोचनः पूर्वजन्मनि प्रहस्त इति नाम्ना प्रसिद्धः सुपापो राक्षसो सः पुरोचनो मन्त्री पाण्डवान् प्रति दुर्योधनं प्रतिविहाय त्यक्त्वा भवतां युष्माकं सकाशं समीपं आगत इति । सः पुरोचनः । कूटं छन्नरूपं वाक्यम् ।।३३।।

**अनन्तभट्टीया–** मन्त्री, पाण्डवानामिति शेषः ।। ३३ ।।

**जनार्दनीया–** पूर्वं यः सुपापः प्रहस्त इति प्रहस्तनामराक्षसो अभवत् । तमेवात्र पुरोचननामधेयं स्वामात्यं अभ्ययातयत् अयातयदिति सम्वन्धः । स मन्त्री अभवत्, पाण्डवानामिति शेषः । भवत्सकाशं युष्मत्समीपं प्रति आयातः आगतः । एषु पाण्डवेषु कूटवाक्यं कपटवाक्यम् ।।३३।।

**चट्टि–** पूर्वं श्रीरामावतारे यः सुपापः प्रहस्त इति प्रहस्तनामा राक्षसो अभवत् । तमेवात्र पुरोचननामधेयं स्वामात्यं अभ्ययातयत् इति सम्वन्धः । स पाण्डुतनयान् अभ्येत्य मन्त्री च अभवत् । दुर्योधनं प्रतिविहाय त्यक्त्वा भवत्सकाशं युष्मत्समीपं प्रति आयातः आगतः इति सः पुरोचनः एषु पाण्डवेषु कूटवाक्यं कपटवाक्यं अवदत् ।। ३३ ।।

**दिव्यं गृहं च भवतां हि मयोपनीतं**
**प्रीत्यैव पापमनुयातुमहं न शक्तः ।**
**युष्मासु धर्मधृतिमत्सु सदा निवत्स्य**
**इत्यूचिवांसममुमाहुरहो सुभद्रम्** ।।३४।।

**व्यासतीर्थीया–** कुतः कारणात् दुर्योधनं विहाय गत इत्युक्तम्– **पापमिति** ।। ३४ ।।

**वादिराजतीर्थीया–** 'अमुमाहुरथो सुभद्रम्' इत्यत्र सुभद्रमित्याहुः ।। ३४ ।।

**वरदराजीया–** भवतामर्थे भवत्प्रीत्यैव । पापं दुर्योधनं अनुयातुं आनुकूल्येन प्रवर्तितुम् । धर्मधृतिमत्सु धैर्ययुक्तेषु निवत्स्ये स्थास्यामि । सुभद्रं अत्यन्तं समीचीनम् । अहो आश्चर्यम् । त्वदागमनमिति भावः ।।३४।।

**अनन्तभट्टीया–** प्रीत्या उपनीतम् ।। ३४-३६ ।।

**जनार्दनीया–** भवतां अर्थे । अनुयातुं अनुकूल्येन वर्तितुम् । धृतिः स्थैर्यम् । निवत्स्ये स्थास्यामि । सुभद्रं अतिमङ्गलम् । अहो भवदागमनमाश्चर्यम् ।।३४।।

**भारतश्री–** अनुयातुं आनुकूल्येन प्रवर्तितुम् । अहो भवदागमनमाश्चर्यम् ।। ३४ ।।

**चट्टि–** दिव्यं गृहं च भवतां अर्थे मया प्रीत्यैव उपनीतम् । पापं दुर्योधनं अनुयातुं अनुकूल्येन प्रवर्तितुं अहं न शक्तः । धृतिः धैर्यं धर्मधृतिमत्सु युष्मासु सदा निवत्स्ये स्थास्यामि । इत्यूचिवांसं अमुं पुरोचनं सुभद्रं अतिमङ्गलम् । अहो भवदागमनं आश्चर्यमिति पाण्डवाः आहुः ।। ३४ ।।

**दृष्ट्वैव जातुषगृहं वसया समेतं**
**तद्गन्धतो वृषसुतः पवमानजातम् ।**
**तं चातिपापमवदत्[१] सुमुखैष पापो**
**हन्तुं न इच्छति सदा भव च प्रतीतः ।।३५।।**

**व्यासतीर्थीया–** दृष्ट्वा ज्ञात्वा । तद्धितप्रत्यये 'त्रपुजतुषोः षुक्' (सि.कौ-१५१८) इति षुगागमे कृते जातुषमिति भवति । तच्च पुरोचनमतिपापं ज्ञात्वा ।। **सुमुखेति** ।। सुमुख विकाररहित ।।३५-३८।।

**वेदाङ्गतीर्थीया–** वृषसुतः तद्गन्धतः तद्गृहगतलाक्षावसागन्धतः, वसया समेतं जातुषगृहं दृष्ट्वा ज्ञात्वा तं चातिपापं ज्ञात्वा पवमानजातमवदत् ।। ३५ ।।

**वादिराजतीर्थीया–** वसया मत्स्योदरस्थघृतेन समेतं जतु लाक्षा तद्विकाररूपं गृहं जातुषगृहम्। 'जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु' इत्यमरः । तद्गन्धत एव दृष्ट्वा पवमानजातं प्रति तं

---

१. 'तच्चागारमभिप्रेक्ष्य सर्वधर्मभृतां वरः । उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः ।। जिघ्राणोऽस्य वसागन्धं सर्पिर्जतुविमिश्रितम् । कृतं हि व्यक्तमाग्नेयमिदं वेश्म परन्तप ।। शणसर्जरसं व्यक्तमानीय गृहकर्मणि । मुञ्जवल्वजवंशादिद्रव्यं सर्वं घृतोक्षितम् । तृणवल्वजकार्पासवंशदारुकटान्यपि । आग्नेयान्यत्र क्षिप्तानि परितो वेश्मनस्तथा ।। शिल्पिभिः सुकृतं ह्याप्तैर्विनीतैर्वेश्मकर्मणि । विश्वस्तं मामयं पापो दग्धुकामः पुरोचनः ।। तथाहि वर्तते मन्दः सुयोधनवशे स्थितः ।।' आदिपर्वणि-१५८.१३-१८.

पुरोचनमतिपापमवदत् । हे सुमुख! एषः पापः नः अस्मान् हन्तुमिच्छति इति चावादीत् । त्वं च प्रतीतः ज्ञानवान् भव सावधानो भवेति चावददित्यर्थः ।। ३५ ।।

**मधुसूदनीया–** वसया मीनमेदसा ।। ३५-४० ।।

**वरदराजीया–** जातुषगृहं जातुषा लक्षया निर्मितं गृहं वसया समेतं मेदसा सहितमपिनद्धं दृष्ट्वा ज्ञात्वा । कथं ज्ञानं तस्य? लाक्षादेः गन्धतः । वृषस्य यमस्य सुतो युधिष्ठिरः । तं पुरोचनं अतिपापञ्च दृष्ट्वेति सम्बन्धः । पवमानजातं भीममवदत् । हे सुमुख! भीम! एषः पुरोचनो नः अस्मान् हन्तुमिच्छति अतः प्रतीतः सावधानो भव ।।३५।।

**जनार्दनीया–** वृषसुतो धर्मः तद्गन्धतो लाक्षावसागन्धतः वसया मेदसा समेतं जातुषगृहं जातुषा लाक्षया निर्मितं गृहं दृष्ट्वा तं च पुरोचनं अतिपापं दृष्ट्वा ज्ञात्वा, पवमानजातमवदत् । हे सुमुख! भीम! एषः पुरोचनः नो अस्मान् । प्रतीतः सावधानो भव ।। ३५ ।।

**ताम्रपर्णी–** वसया आच्छादनेन समेतम् । जातुषगृहं जतुर्लाक्षा तद्विकाररूपं गृहम् । 'जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु' इत्यमरः । तं पुरोचनं चातिपापं दृष्ट्वा ज्ञात्वेत्यन्वयः ।। ३५-३६ ।।

**भारतश्री–** वसया मेदसा । प्रतीतो भव सावधानो भव ।। ३५ ।।

**चट्टि–** वृषसुतो धर्मः वसया मत्स्योदरघृतेन समेतं जतुलाक्षातद्विकाररूपं गृहं जातुषगृहं 'जतुत्रपुविकारे तु जातुषं त्रापुषं त्रिषु' इत्यमरः। तद्गन्धत एव दृष्ट्वा ज्ञात्वा तं च पुरोचनं अतिपापं च दृष्ट्वा ज्ञात्वा, पवमानजातं भीममवदत् । किमिति? हे सुमुख! भीम! एषः पुरोचनः नो अस्मान् हन्तुमिच्छति । सदा प्रतीतः सावधानश्च भव इत्यवददिति पूर्वेण सम्बन्धः ।। ३५ ।।

**क्षत्ताऽथ नीतिबलतोऽखिललोकवृत्तं**
**जानन् स्वचारमुखतः [1]खनकाय चोचे ।**
**[2]उक्त्वैव धर्मतनयाय मदीयवाक्यं**
**पूर्वोक्तमाशु कुरु तत्र बिलं सुदूरम् ।।३६।।**

**वेदाङ्गतीर्थीया–** नीतिवलतः अखिललोकवृत्तं ज्ञात्वा स्थातव्यमिति शास्त्रबलात् । स्वचारमुखतः अखिललोकवृत्तं जानन् । त्वदीयवचने विश्वासमुत्पादयितुं पूर्वोक्तं मदीयं वाक्यमुक्त्वैव ।। ३६ ।।

१. 'खननाय' इति जनार्दनीयपाठः । चट्टिटिप्पण्यां पाठान्तरञ्च ।

२. 'विदुरस्य सुहृत्कश्चित् खनकः कुशलः क्वचित् । विविक्ते पाण्डवान् राजन्निदं वचनमब्रवीत् । प्रहितो विदुरेणास्मि खनकः कुशलो ह्यहम् । पाण्डवानां प्रियं कार्यमिति किं करवाणि वः ।।' इत्यादिपर्वणि-१५९.१-२.

**वादिराजतीर्थीया–** 'उक्त्वैव धर्मतनयाय' इत्यत्र विश्वासजननाय धर्मतनयं प्रति पूर्वोक्तं मदीयं वाक्यं त्वमपि धर्मतनयाय उक्त्वैव विलं कुर्विति सम्बन्धः ।। ३६ ।।

**वरदराजीया–** अखिललोकस्य वृत्तं प्रवृत्तं स्वचारस्य स्वभृत्यस्य मुखतः मुखद्वारा खनकाय गृहनिर्माणकर्त्रे ऊचे । किमिति? मदीयवाक्यं पूर्वोक्तं 'विषहुताशभयात् प्रतीता आध्वम्' इति पूर्वमुक्तं उक्त्वा स्मारयित्वा अत्र लाक्षागृहे सुदूरं विलं कुर्विति चोचे ।।३६।।

**जनार्दनीया–** क्षत्ता अखिललोकस्य वृत्तं प्रवृत्तिं नीतिबलतः स्वचारमुखतः स्वभृत्यमुखतश्च जानन् सन् 'विषहुताशभयात् प्रतीताः आध्वम्' इति पूर्वोक्तं मदीयं वाक्यं उक्त्वा स्मारयित्वा सुदूरं विलं कुर्विति खननाय ऊचे, खनकमिति शेषः ।। ३६ ।।

**भारतश्री–** उक्त्वा स्मारयित्वा । वर्त्म चक्रे इति सम्बन्धः ।। ३६-३८ ।।

**चट्टि–** अथ क्षत्ता विदुरः अखिललोकस्य वृत्तं प्रवृत्तिं नीतिबलतः स्वचारमुखतः स्वभृत्यमुखतश्च । जानन् 'विषहुताशभयात् प्रतीताः आध्वम्' इति पूर्वोक्तं मदीयं वाक्यं धर्मतनयायोक्त्वा स्मारयित्वा आशु तत्र गृहे सुदूरं विलं कुर्विति खनकाय ऊचे । 'खननाय' इति क्वचित् पाठः । तथा खनकमिति शेषः ।। ३६ ।।

**[1]चक्रे स चैवमथ वर्त्म वृतिच्छलेन**
**द्वारं च तस्य स पिधाय ययौ गृहं स्वम् ।**
**भीमः [2]पुरोचन उभावपि तौ वधाय**
**च्छिद्रार्थिनौ मिथ उतोषतुरब्दकार्धम् ।।३७।।**

**वेदाङ्गतीर्थीया–** सः खनकः एवं विदुरोक्तप्रकारेणोक्त्वा, वृतिच्छलेन प्राकारं करोमीति व्याजेन सुदूरं वर्त्म विलमार्गं चक्रे ।।३७।।

**वादिराजतीर्थीया–** 'वर्त्म वृतिच्छलेन' इत्यत्र वृतिः आवरणं ग्रामस्य प्रान्ततः प्राकारः तं करोमीति व्याजेन ।।३७-३८।।

**वरदराजीया–** स च खनकः विदुरोक्तरीत्या वर्त्म मार्गं चक्रे । कथम्? वृतिच्छलेन विस्तृतिकरण-व्याजेन । स च द्वारं पिधाय स्वगृहं ययौ । भीमः पुरोचनश्च इत्युभौ मिथः परस्परं छिद्रार्थिनौ अन्तरं अन्वेषमाणौ अब्दकार्धं मासषट्कं ऊषतुः स्थितौ ।।३७।।

---

१. 'स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः । परिखामुत्किरन्नाम चकार च महाबिलम् ।। चक्रे च वेश्मनस्तस्य मध्ये नातिमहद्बिलम् । कपाटयुक्तमज्ञातं समं भूम्याश्च भारत ।।' इत्यादिपर्वणि १५९.१५-१६.

२. 'तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् । विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ।। स तु सञ्चिन्तयामास प्रहृष्टेनान्तरात्मना । प्राप्तकालमिदं मन्ये पाण्डवानां विनाशने ।।' इत्यादिपर्वणि-१६०.१-२.

**अनन्तभट्टीया–** वृतिच्छलेन प्राकारनिर्माणव्याजेन । वर्त्म चक्रे ।। ३७ ।।

**जनार्दनीया–** स च खनकः एवं विदुरोक्तप्रकारेण उक्त्वा, वृतिच्छलेन प्राकारनिर्माणव्याजेन सुदूरं वर्त्म बिलमार्गं चक्रे । छिद्रार्थिनौ अन्तरं अन्वेषिणौ ।। ३७ ।।

**ताम्रपर्णी–** वृतिच्छलेन विवृतिव्याजेन रथ्यां जलगमनोपयुक्तविवरव्याजेन वर्त्म चक्रे ।।३७-४३।।

**अतिविशद–** 'वर्त्म वृतिच्छलेन' इत्यस्य प्राकारनिर्माणव्याजेनेति वदन्ति । वर्त्मवृतिच्छलेन मार्गनिर्माणव्याजेनेति वा ।

**भारतश्री–** वृतिच्छलेन प्राकारनिर्माणव्याजेन । तस्य वर्त्मनः ।। ३७ ।।

**चट्टि–** स च खनकः एवं विदुरोक्तप्रकारेण वर्त्म बिलमार्गं वृतिच्छलेन प्राकारनिर्माणव्याजेन चक्रे । 'प्राकारो वरुणः सालः प्राचीनं प्रान्ततो वृतिः' इत्यभिधानम् । स च खनकः तस्य वर्त्मनः द्वारं पिधाय स्वं गृहं ययौ । भीमः पुरोचनश्चेति उभौ मिथः परस्परं वधाय छिद्रार्थिनौ अवसरं अन्वेषमाणौ सन्तौ उत अनन्तरं अब्दकार्धं मासषट्कं ऊषतुः ।। ३७ ।।

**[1]तस्याग्रजा च सहिता सुतपञ्चकेन**
**तत्रागमत् तदनु मारुतिरेष कालः ।**
**इत्थं विचिन्त्य स निशाम्य च तान् प्रसुप्तान्**
**[2]भ्रातृंश्च मातरमथाशु बिले न्यधात् प्राक् ।।३८।।**

**वेदाङ्गतीर्थीया–** प्राक् गृहदाहात् प्राक् ।।३८।।

**वरदराजीया–** तस्य पुरोचनस्याग्रजा ज्येष्ठा भगिनी । तदनु तस्य आगमनानन्तरम् । एषः तेषां वधकालः अवसर इदमिति इत्थं विचिन्त्य विचार्य सुप्तान् तान् पुरोचनादीन् निशाम्य दृष्ट्वा प्राक् तेषां वधात् पूर्वं भ्रात्रादीन् बिले न्यधात् स्थापयामास ।।३८।।

**अनन्तभट्टीया–** इत्थमितीत्यर्थः । तान् पुरोचनादीन् । भ्रातॄन् बिले न्यधात् ।।३८।।

---

१. 'पुरोचनप्रणिहिता पृथां या सेवते सदा । निषादी दुष्टहृदया नित्यमन्तरचारिणी ।। निषादी पञ्चपुत्रा सा तस्मिन् भोज्ये यदृच्छया ।। ...अन्नार्थिनी समभ्यागात् सपुत्रा कालचोदिता । सुपापा पञ्चपुत्रा च सा पृथायाः सखी मता ।। सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला । सह सर्वैः सुतै राजन् तस्मिन्नेव निवेशने ।। सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ।।' इत्यादिपर्वणि-१६०.९-१३.

२. 'पूर्वमेव गृहं शोध्य भीमसेनो महामतिः । पाण्डवैः सहितां कुन्तीं प्रावेशयत तद्बिलम् ।। दत्वाग्निं सहसा भीमो गृहे तत्परितः सुधीः ।।' इत्यादिपर्वणि-१६०.१७-१६.

**जनार्दनीया–** तस्याग्रजा पुरोचनस्य ज्येष्ठस्वसा । इत्थं विचिन्त्य विचार्य । प्रसुप्तान् तान् पुरोचनादीन् । निशाम्य दृष्ट्वा प्राक् गृहदाहात् पूर्वम् ।। ३८ ।।

**चट्टि–** तस्य पुरोचनस्य अग्रजा ज्येष्ठा भगिनी च सुतपञ्चकेन सहिता सती तत्रागमत् । तदनु तस्याः आगमनानन्तरं सः मारुतिः भीमः एषः तेषां वधकालः इत्थं विचिन्त्य विचार्य तान् सर्वान् प्रसुप्तान् निशाम्य दृष्ट्वा अथ भ्रातॄन् मातरं च प्राक् गृहदाहात् पूर्वं आशु विले न्यधात् ।। ३८ ।।

**[1]तं भागिनेयसहितं भगिनीं च तस्य**
**[2]पापां ददाह सगृहां पवमानसूनुः ।**
**साऽप्यागता हि गरलेन निहन्तुमेतान्**
**भीमस्य पूर्वभुजितो न शशाक चैतत् ।।३९।।**

**व्यासतीर्थीया–** प्रतीत्यत आह– **पापामिति** ।। तद्विवृणोति– **सापीति** ।।३९।।

**वेदाङ्गतीर्थीया–** एतान् गरलेन निहन्तुमागता सा । भीमस्य पूर्वभुजितः भ्रातृभोजनात् पूर्वं विषमिश्रसर्वान्नभोजनात्, भीमस्य जीर्णत्वात् एतत् विषेण हननं कर्तुं न शशाक हि ।। ३९-४० ।।

**वादिराजतीर्थीया–** 'भीमस्य पूर्वभुजितः' इत्यत्र भीमस्य पूर्वं भुजितः विषमिश्रभक्ष्यभक्षणान्निमित्तात् एतद् विषं एतान्निहन्तुं न शशाकेति पूर्वपदावृत्त्या योजना । भीमः स्वयं भुक्त्वा विषमस्तीति जानन् अन्येषां न ददौ । भीमस्य जीर्णत्वात् अन्येषां भक्षणस्यैवाभावात् तद्दत्तविषेण कोऽपि न हत इति भावः ।। ३९ ।।

**वरदराजीया–** तं पुरोचनं भागिनेयैः भगिनीपुत्रैः सहितं भगिनीश्च सुप्तान् सगृहान् लाक्षागृहसहितान् ददाह भस्मीचकार । साऽपि पुरोचनाग्रजा एतान् पाण्डवान् गरलेन विषेण हन्तुं आगता । भीमस्य पूर्वभुजितः तयाऽऽनीतस्य गरलमयस्य वस्तुनो युधिष्ठरादिभोजनापेक्षया पूर्वमेव भीमेन भुक्तत्वात् एतत्कार्यं कर्तुं न शशाकेत्यर्थः ।।३९।।

**अनन्तभट्टीया–** ।। **भीमस्येति** ।। तयाऽऽनीतस्य गरलमयस्य वस्तुनः भीमेन भुक्तं पूर्वं धर्मजभोजनात् प्रागेव भुक्तत्वादित्यर्थः । एतत् गरलेन हन्तुं न शशाक ।। ३९ ।।

**जनार्दनीया–** भागिनेयसहितं भगिनीपुत्रसहितम् । एतान् पाण्डवान् गरलेन विषेण निहन्तुमागतापि सा पुरोचनभगिनी । पूर्वभुजितः भ्रातृभोजनात् पूर्वं विषमिश्रखाद्यभोजनात् भीमस्य च जीर्णत्वात् एतद्धननं कर्तुं न शशाक हि, विषेणेति शेषः ।। ३९ ।।

---

१. 'अथ प्रवाते तुमुले निशि सुप्ते जने तदा । तदुपादीपयद्भीमः शेते यत्र पुरोचनः । ततो जातुगृहद्वारं दीपयामास पाण्डवः ।।' इत्यादिपर्वणि-१६०.१३-१४.

२. 'सुप्तान् ददाह सगृहान्' इति वरदराजीयपाठः स्यात् । 'पापान् ददाह सगृहान्' इति चट्टीपाठः ।

**भारतश्री—** पूर्वभुजितः भ्रातृभोजनात् पूर्वं विषमिश्रपायसभोजनात् भीमस्य च जीर्णत्वात् पाण्डवहननं कर्तुं न शशाक । भीमसेनः तयाऽऽनीतं पायसं विषसम्पृक्तं इति ज्ञात्वा भ्रातॄन् निवार्य अधिकं मम क्षुदिति तत्सर्वं खादितवान् । अयं विशेषो भारतादवगन्तव्यः ।। ३९-४० ।।

**चट्टि—** पवमानसूनुः भीमः भागिनेयैः भगिनीपुत्रैः सहितं तं पुरोचनं तस्य भगिनीं चेति पापान् सगृहान् लाक्षागृहसहितान् ददाह भस्मीचकार । एतान् पाण्डवान् गरलेन विषेण निहन्तुमागतापि सा पुरोचनभगिनी भीमस्य पूर्वभुजितः सतः एतद्धननम्, कर्तुमिति शेषः । न शशाक । तयाऽऽनीतस्य गरलरूपवस्तुनः भ्रातृभोजनापेक्षया पूर्वमेव भीमेन भुक्तत्वात् तस्य जीर्णत्वादेतत्कर्तुं न शशाकेति भावः ।। ३९ ।।

**तप्तं तया ससुतया च[1] तपो नितान्तं**
**स्यां सूनुभिः सह बलाददितिस्तथाऽब्दात् ।**
**तस्या अदाच्च गिरिशो यदि पुत्रकैस्त्वं**
**युक्ता न यासि मृतिमेष वरस्तवेति ।।४०।।**

**व्यासतीर्थीया—** सपुत्रायास्तस्या हनने निमित्तान्तरमाह— **तप्तमिति** ।।४०।।

**वादिराजतीर्थीया—** 'स्यां सूनुभिः सह वलाददितिः' इत्यत्र वलात् तपोवलात् सूनुभिः सह अदितिः स्यामिति सम्वन्धः । सूनवस्तत्रापि मत्सुताः सन्तः देवाः भवेयुः । अहमदितिः स्यामिति भावः ।।४०।।

**वरदराजीया—** सूनुभिः सुतैः सह बलात्कारेण अदितिः स्याम् । सुतानां देवत्वं स्वस्य अदितित्वमिति यावत् । तया पुरोचनाग्रजया नितान्तं तपः तप्तं हीति सम्बन्धः । गिरिशश्च अब्दात् संवत्सरानन्तरं प्रसन्नः तस्याः तस्यै वरं अदाच्च । तथेत्युक्तं विवृणोति— **यदीति** ।। सुतैर्युक्ता त्वं मृतिं न यासि तर्हि तव एषः वरः स्यादित्यवादीदिति सम्बन्धः ।।४०।।

**अनन्तभट्टीया—** अव्दात् अव्दस्यानन्तरम् । तथा अदात् ।। ४०-४२ ।।

**जनार्दनीया—** सपुत्रायाः तस्याः हनने कारणमाह— **तप्तमिति** ।। वलात् वलात्कारेण । सूनुभिः सुतैः सह अदितिः स्यां भविष्य इति । सुतानां देवत्वं स्यादिति यावत् । गिरिशः अव्दात् अव्दमतिक्रम्य संवत्सरानन्तरं प्रसन्नः तस्यै अदात् ।।४०।।

**चट्टि—** ससुतायाः तस्याः हनने कारणमाह— **तप्तमिति** ।। सूनुभिः सुतैः सह वलात् तपोवलात् अदितिः स्यामिति । सुतानां देवत्वं स्वस्य अदितित्वमिति यावत् । ससुतया तया पुरोचनाग्रजया नितान्तं तपस्तप्तम् । गिरिशः अव्दात् अव्दमतिक्रम्य संवत्सरानन्तरं तस्यै तथा अदात् च, वरमिति शेषः । किमिति? यदि त्वं पुत्रकैः युक्ता सती मृतिं मरणं न यासि तर्हि एषः वरस्तव स्यादिति ।।४०।।

---

१. 'ससुतया हि' इति वरदराजीयपाठः ।

**जानन्निदं सकलमेव स[१] भीमसेनो**
**हत्वा सुतैः सह कुबुद्धिमिमां हि तं च ।**
**भ्रातॄंश्च मातरमुदूह्य ययौ बिलात् स**
**निर्गत्य भीतिवशतोऽबलतां प्रयातान् ॥४१॥**

**व्यासतीर्थीया–** केन कारणेन भ्रातॄनुवाहेत्यत उक्तम्– **भीतिवशत इति** ॥४१॥

**वेदाङ्गतीर्थीया–** स भीमसेनः सपुत्रायास्तस्या हननकारणं इदं सकलं जानन्नेव सुतैः सह कुबुद्धिमिमां तं पुरोचनं च जघान इति योज्यम् । स हत्वा इत्याद्युत्तरवाक्ययोजना ॥ ४१ ॥

**वादिराजतीर्थीया–** 'भीतिवशतोऽवलताम्' इत्यत्र भीतिवशतः अवलतां बलरहितताम् ॥४१-४३॥

**मधुसूदनीया–** ॥ **भ्रातॄन् स्वमातरमुदूह्येति** ॥ 'आर्यामङ्केन वामेन राजानं दक्षिणेन च । अंसयोर्यमजौ कृत्वा पृष्ठे वीभत्सुमेव च ॥' इत्यादिपर्वोक्तप्रकारेण (१६०.२७-२८) उदूह्येत्यर्थः ॥४१-४३॥

**वरदराजीया–** इदं सकलं पूर्वोक्तं जानन्नेव । कुत्सिता बुद्धिर्यस्याः सा तथा ताम् । इमां पुरोचनाग्रजां तं च पुरोचनं हत्वा भ्रात्रादीन् उदूह्य स्वस्कन्धेषु आरोपयित्वा बिलान्निर्गत्य ययौ । भ्रात्रादेः उदूहननिमित्तमाह– **भीतीति** ॥ अवलतां अशक्तत्वं प्रयातान् प्राप्तान् ॥४१॥

**जनार्दनीया–** स भीमसेनः इदं सकलं पूर्वोक्तं जानन्नेव सुतैः सह कुबुद्धिं इमां तं पुरोचनं च हत्वा, अवलतां प्रयातान् अशक्तत्वं प्राप्तान् भ्रातॄन् मातरमुदूह्य च स्कन्धे आरोप्य ॥ ४१ ॥

**भावचन्द्रिका–** 'जानन्निदं सकलमेव च' इत्यस्य पूर्वेण उत्तरेण चान्वयः ॥ **भ्रातॄंश्चेति** ॥ 'स्कन्धमारोप्य जननीं यमावङ्के निवेश्य च । पार्थोऽगच्छत पाणिभ्यां भ्रातरौ स महाबलः ॥' इति भारते ॥ ४१-४२ ॥

**भारतश्री–** अबलतां दुर्बलताम् ॥ ४१-४२ ॥

**चट्टि–** स भीमसेनः इदं सकलं पूर्वोक्तं जानन्नेव सुतैः सह वर्तमानां कुत्सिता बुद्धिः यस्याः सा ताम् । इमां पुरोचनाग्रजां तं पुरोचनं च हत्वा, भीतिवशतः अवलतां अशक्तत्वं प्रयातान् प्राप्तान् भ्रातॄन् मातरं च उदूह्य च स्कन्धे आरोप्य बिलान्निर्गत्य ययौ । तदुक्तम्- 'आर्यामङ्केन वामेन राजानं दक्षिणेन च । अंसयोर्यमजौ कृत्वा पृष्ठे वीभत्सुमेव च ॥' इत्यादिपर्वणि ॥ ४१ ॥

**ज्ञात्वा पुरोचनवधं यदि भीष्ममुख्यै-**
**र्वैचित्र्यवीर्यतनया अभियोधयेयुः ।**

---

१. 'सकलमेव च' इति भावचन्द्रिकाकाराणां पाठः ।

**किं नो भवेदिति भयं सुमहद् विवेश**
**भीमं त्वृते च तनयान् सकलान् पृथायाः ॥४२॥**

**व्यासतीर्थीया–** भीतत्वप्रकारं दर्शयन्नाह– **ज्ञात्वेति** ॥४२॥

**वेदाङ्गतीर्थीया–** कुतस्तेषां भीतिरित्यत आह– **ज्ञात्वेति** ॥ ४२ ॥

**वरदराजीया–** भीतिवशत इत्युक्तं विवृणोति– **ज्ञात्वेति** ॥ भीष्ममुखैः सहिताः अभियोधयेयुः युद्धं कुर्युः । तर्हि नः अस्माकं किं भवेदिति सुमहद्भयं पृथायाः कुन्त्याः तनयान् भीममृते भीमं विना अन्यान् सकलान् युधिष्ठिरादीन् आविवेश, प्राप्तमिति भावः ॥४२॥

**जनार्दनीया–** कुतस्तेषां भीतिरित्यत आह– **ज्ञात्वेति** ॥ यदि अभियोधयेयुः युद्धं कुर्युरित्यर्थः । तर्हि नो अस्माकं किं भवेदिति सुमहद्भयं भीमं ऋते विना पृथायास्तनयान् युधिष्ठिरादिचतुरो विवेश ॥४२॥

**चट्टि–** कुतस्तेषां भीतिरित्यत आह– **ज्ञात्वेति** ॥ वैचित्रवीर्यतनयाः दुर्योधनादयः पुरोचनवधं ज्ञात्वा भीष्ममुख्यैः सहिता यदि अभियोधयेयुः युद्धं कुर्युः । तर्हि नो अस्माकं किं भवेदिति सुमहद्भयं भीमं ऋते पृथायाः सकलान् तनयान् युधिष्ठिरादिचतुरो विवेश ॥ ४२ ॥

**भीमोऽभयोऽपि गुरुभिः स्वमुखेन युद्धं**
**अप्रीयमाण उत धर्मजवाक्यहेतोः ।**
**[१]ऊह्यैव तानपि ययौ द्युनदीं च तीर्त्वा**
**[२]क्षत्राऽतिसृष्टमधिरुह्य[३] जलप्रयाणम् ॥४३॥**

**व्यासतीर्थीया–** भीमस्य भयाभावे किमर्थं ययावित्यत आह– **भीम इति** ॥४३॥

**वेदाङ्गतीर्थीया–** जलप्रयाणं नावम् ॥ ४३ ॥

**सत्याभिनवतीर्थीया–** तत्रैव 'भीमोऽभयोऽपि गुरुभिः..' इति श्लोके 'गुरुभिः स्वमुखेन युद्धमप्रीयमाणः' इत्यस्य गुरुभिः स्वमुखेन स्वमुखं स्वप्रधानकं युद्धमप्रीयमाण इत्यर्थः । एतेन गुरुभिः स्वप्रधानकं युद्धमप्रीयमाण इति वक्तव्यम् । गुरुभिः स्वमुखेन युद्धमप्रीयमाण इति कथनमनुपपन्नमिति दूषणं पराकृतम् । स्वमुखेन इत्यत्र बहुव्रीहिः मुखशब्दः प्रधानवाची मुखेनेति द्वितीयार्थ इति चाङ्गीकृत्य स्वमुखेन इत्यस्य स्वप्रधानकमित्यर्थस्योक्तत्वात् ॥४३॥

---

१. 'ऊह्यैव तानुरु ययौ' इति जनार्दनीयपाठः ।

२. 'क्षत्ता निसृष्टमधिरुह्य' इति जनार्दनीयपाठः । उत्तरश्लोके तथा व्याख्यातत्वात् ।

३. 'विदुरः प्रेषयामास तद्वनं पुरुषं शुचिम् । आत्मनः पाण्डवानाञ्च विश्वास्यं ज्ञातपूर्वकम् । गङ्गासन्तरणार्थाय ज्ञाताभिज्ञानवाचिकम् । स गत्वा तु यथोद्देशं पाण्डवान् ददृशे वने । जनन्या सह कौरव्यान् अनयज्जाह्नवीतटम् ।' आदिपर्वणि-१६१.१-३.

**वरदराजीया–** अभयोऽपि भीमो ययौ । कुतः? कुरुभिः भीष्मादिभिः स्वमुखेन युद्धं साक्षात् स्वद्वारा युद्धमप्रीयमाणः असन्तुष्यन् उत धर्मजवाक्यात् युद्धं न कर्तव्यमित्येवंरूपात् हेतोः कारणादपि तान् युधिष्ठिरादीन् उदूह्य ययाविति सम्बन्धः । युनदीं भागीरथीं क्षत्रा विदुरेण अतिसृष्टं स्थापितं जलप्रयाणं नावं अधिरुह्य युनदीं तीर्त्वा इति सम्बन्धः ।। ४३ ।।

**अनन्तभट्टीया–** ।। **धर्मजेति** ।। धर्मजवाक्येन निमित्तेनेत्यर्थः ।।४३।।

**लघ्वनन्तभट्टीया–** ।। **धर्मजेति** ।। धर्मजवाक्यानि श्रुत्वेत्यर्थः ।।४३।।

**जनार्दनीया–** ननु पाण्डवानां पक्षे बलाढ्ये भीमे सहाये सति कथं तान् भयं विवेशेत्यत आह– **भीम इति** ।। अभयोऽपि भीमः गुरुभिः भीष्मद्रोणादिभिः स्वमुखेन साक्षात् स्वयं युद्धमप्रीयमाणः नेच्छति यतः अतः किन्नो भवेदिति भयं पार्थान् विवेशेति पूर्वेणान्वयः । उत धर्मजवाक्यहेतोः चलनादिप्रवृत्तौ अशक्तान् इतो दूरं नयेति युधिष्ठिरवाक्यनिमित्तात् तान् उरु उत्कृष्टं ऊह्यैव स्कन्धमारोप्यैव ययावित्यर्थः ।। ४३ ।।

**भावचन्द्रिका–** ।। **भीम इति** ।। विष्णुतदनुबन्धिनो यदि गुरवः तर्हि निग्रहः कार्यः । नहि स्वमुखेनैव । इदानीञ्च ते भीता इति भावः । पुनरपि जलप्रयाणाविश्वासेन जलप्रयाणेऽपि भीमपृष्ठमधिरुह्येत्यर्थः ।। ४३-४६ ।।

**भारतश्री–** स्वमुखेन साक्षात् स्वद्वारा ।। ४३-४५ ।।

**चट्टि–** ननु बलाढ्ये भीमे सहाये सति कथं तान् भयं विवेशेत्यत आह– **भीम इति** ।। भीमः अभयोऽपि गुरुभिः भीष्मादिभिः स्वमुखेन साक्षात् स्वद्वारा युद्धमप्रीयमाणः असन्तुष्यन् सन्, नेच्छतीति शेषः । यतः अतः भयं विवेशेति पूर्वेणान्वयः । उत अनन्तरं धर्मजवाक्यहेतोः चलनादिप्रवृत्तौ अशक्तान् इतो दूरं नयेति युधिष्ठिरवाक्यनिमित्तात् तान् ऊह्यैव स्कन्धमारोप्यैव ययावित्यर्थः ।। ४३ ।।

**[1]विश्वासिता विदुरपूर्ववचोभिरेव**
**दाशोदिताभिरधिरुह्य च भीमपृष्ठम्[2] ।**
**सर्वे ययुर्वनमथाभ्युदिते च सूर्ये**
**दृष्ट्वैव सप्त मृतकानरुदंश्च[3] पौराः ।।४४।।**

**व्यासतीर्थीया–**दाशोदितैः इति वक्तुं शक्यत्वेऽपि दाशोदिताभिः इति लिङ्गव्यत्यासो वैदिकत्वज्ञापनाय ।।

---

१. 'निषादस्तत्र कौन्तेयानभिज्ञानं न्यवेदयत् । विदुरस्य महाबुद्धेर्म्लेच्छभाषादि यत्तदा ।।' इत्यादिपर्वणि१६१.१३.

२. 'शीघ्रमस्मानुपादाय तथैव व्रज भारत । ..इत्युक्तो धर्मराजेन भीमसेनो महाबलः ।। आदाय कुन्तीं भ्रातॄंश्च जगामाशु स पावनिः ।।' इत्यादिपर्वणि १६१.२७-२८.

३. 'मृतकान् रुरुदुश्च' इति चट्टीपाठः ।

**वेदाङ्गतीर्थीया–** दाशोदिताभिः दाशोदितैः ।। ४४ ।।

**वादिराजतीर्थीया–** दाशोदिताभिः विदुरपूर्ववचोभिः विश्वासिताः जलप्रयाणमधिरुह्य युनदीं तीर्त्वा अथ नद्युत्तरणानन्तरं भीमपृष्ठमधिरुह्येति सम्बन्धः ।। ४४-४८ ।।

**मधुसूदनीया–** ।। **सर्वे ययुरिति** ।। 'रात्र्यामेव गतास्तत्र चतुर्विंशतियोजनम्' इत्यादिपर्वणि-(१६३.१२) ।। ४४-५४ ।।

**वरदराजीया–** दाशैः नाविकैः उदिताभिः वाग्भिः विज्ञातैः विदुरस्य पूर्ववचोभिः 'पाण्डवार्थे इदं जलप्रयाणं संस्थाप्यते' इत्येवं रूपैः विश्वासिताः विश्वासं प्रापिताः । पूर्ववाग्भिः विज्ञापितैः इत्यध्याहारेण योजनायां 'दाशोदिताभिः विदुरपूर्ववचोभिः' इति स्त्रीनपुंसकलिङ्गयोः कथं सामानाधिकरण्यं इति शङ्का निरस्ता भवति । वैय्यधिकरण्येनैव योजितत्वादिति द्रष्टव्यम् । भीमपृष्ठमारुह्य वनं हिडिम्बवनम् । सूर्येऽभ्युदिते सति सप्त पुरोचनादीन् मृतकान् मृतान् दृष्ट्वा अरुदन् रोदनं कृतवन्तः, पाण्डवान् ज्ञात्वेति शेषः ।।४४।।

**अनन्तभट्टीया–** ।। **विदुरेति** ।। विदुरेण पूर्वमुक्तवचोभिः दाशोदिताभिरिति लिङ्गव्यत्ययः ।।४४-४५।।

**जनार्दनीया–** सर्वे धर्मादयः । दाशोदिताभिः दाशैः नाविकैः उदिताभिः उदितैरिति लिङ्गव्यत्यासः । विदुरपूर्ववचोभिः विदुरेण पाण्डवान् प्रति 'विषहुताशभयात् प्रतीता आध्वम्' इति पूर्वमुक्तं तदादिवचोभिः । विश्वासिताः विश्वासं प्रापिताः सन्तः । क्षत्रा विदुरेण निसृष्टं निर्मितं जलप्रयाणं नावम् अधिरुह्य, युनदीं च तीर्त्वा, भीमपृष्ठमधिरुह्य, वनं प्रति ययुरित्यन्वयः । केचित्तु- ''तर्हि किन्नो भवेदिति भयं धर्मादिचतुरो विवेश । अभयोऽपि भीमो गुरुभिः स्वमुखेन युद्धमप्रीयमाणः उत अद्य धर्मजवाक्यहेतोः 'कीर्तिर्विनश्यति नो गुरुभिर्विरोधे यतः अतो गुरुभिर्युद्धं न कर्तव्यम्' इति धर्मजवाक्यनिमित्तात् युद्धमप्रीयमाणः तानूह्य ययौ । जलप्रयाणं अधिरुह्य युनदीं तीर्त्वेति सम्बन्धः । दाशोदिताभिर्वाग्भिः विज्ञापितैः विदुरपूर्ववचोभिः 'पार्थार्थे इदं जलप्रयाणं स्थाप्यते' इत्येवं रूपैर्विश्वासिताः । एवं वाग्भिर्विज्ञापितैरित्यध्याहारेण योजनीयम् । दाशोदिताभिर्विदुरपूर्ववचोभिरिति स्त्रीनपुंसकलिङ्गयोः कथं सामानाधिकरण्यमिति शङ्का निरस्ता भवति । वैय्यधिकरण्येन योजितत्वात्'' इत्याहुः । सूर्ये अभ्युदिते सति पौराः पुरवासिनः सप्तमृतकान् मृतान् दृष्ट्वा, अरुदन् रोदनं चक्रुः ।। ४४ ।।

**ताम्रपर्णी–** विदुरपूर्ववचोभिर्दाशोदिताभिरिति लिङ्गव्यत्ययः स्वस्य परमवैदिकत्वज्ञापनार्थः ।।४४-४७।।

**अतिविशद–** 'विश्वासिता विदुरपूर्ववचोभिरेव दाशोदिताभिरधिरुह्य च भीमपृष्ठम्' इत्यत्र विदुरपूर्ववचोभिः दाशोदिताभिः विश्वासिता इत्युक्ते उदिताभिः इत्यस्य स्त्रीलिङ्गत्वात् वचोभिः इत्यस्य नपुंसकत्वात् कथं विशेष्यविशेषणभाव इत्याशङ्कायां दाशोदिताभिर्विज्ञापितैः विदुरपूर्ववचोभिरिति

वदन्ति । तत्पक्षे शेषः । केचित्तु- 'विदुरस्य पूर्ववचोभिरेव न विश्वासिताः किन्तु दाशोदिताभिश्च तेषां पक्षे चशब्दः साधकः । केचित्तु- 'विदुरस्य पूर्ववचांसि येषां तानि विदुपूर्ववचांसि तैः विदुरपूर्ववचोभिः । उदितशब्दस्य नपुंसकत्वात् । अत्रापि दाशानां उदितानि यासु ता इति बहुव्रीहिरेवेति । अत्र उदिताभिरिति स्त्रीलिङ्गानुपपत्तेः ।। ४४-६१ ।।

**गूढकर्तृक–** 'विश्वासिता विदुरपूर्ववचोभिरेव दाशोदिताभिः' इत्यत्र विश्वासिताः इत्युक्तेः उदिताभिरित्यस्य स्त्रीलिङ्गत्वात् वचोभिः इत्यस्य नपुंसकत्वात् कथं विशेषणविशेष्यभाव इत्याशङ्कायां दाशोदिताभिः विज्ञापितैः विदुरपूर्ववचोभिरिति वर्णयन्ति । तत्पक्षे शेषः । केचित्तु- 'विदुरपूर्ववचोभिरेव न विश्वासिताः किन्तु दाशोदिताभिश्च' इति वदन्ति । तत्पक्षे चशब्दः साधकः ।। ४४-६१ ।।

**चट्टि–** दाशोदितैः इति वक्तुं शक्यत्वेऽपि दाशोदिताभिः इति लिङ्गव्यत्यासो वैदिकत्वज्ञापनाय । सर्वे धर्मादयः दाशोदिताभिः दाशैः नाविकैः उदिताभिः उदितैः विदुरपूर्ववचोभिः विदुरेण पाण्डवान् प्रति 'विषहुताशभयात् प्रतीता आध्वम्' इति पूर्वमुक्तं तद्वचोभिः विश्वासिताः विश्वासं प्रापिताः सन्तः एव क्षत्रा विदुरेण अतिसृष्टं निर्मितं जलप्रयाणं नावं अधिरुह्य युनदीं च तीर्त्वा भीमपृष्ठमधिरुह्य च वनं प्रति ययुरित्यन्वयः । तदुक्तम्- 'रात्र्यामेव गतास्तत्र चतुर्विंशतियोजनम्' इत्यादिपर्वणि । अथ सूर्ये अभ्युदिते च सति पौराः पुरवासिनश्च सप्त मृतकान् मृतान् दृष्ट्वा, रुरुदुः रोदनं चक्रुः ।।४४।।

> [1]हा पाण्डवानदहदेष हि धार्तराष्ट्रो
> धर्मस्थितान् कुमतिरेव पुरोचनेन ।
> सोऽप्येष दग्ध इह दैववशात् सुपापः
> को नाम सत्सु विषमः प्रभवेत् सुखाय ।।४५।।

**व्यासतीर्थीया–** [2]ते पञ्च एतेषदूथमहहादित्यतः पुष्करस्य गतिं निरूपयभिक्तम्– **सोऽपीति** ।। स कथं दग्ध इत्यत उक्तम्– **दैवादिति** ।। सम्भावितं तैरित्युक्तम्– **क इति** ।। ४५ ।।

**वेदाङ्गतीर्थीया–** एषः धार्तराष्ट्रः पुरोचनेन पाण्डवानदहत् । हा कष्टमभूत् । एषः धार्तराष्ट्रः कुमतिरिति सम्बन्धः । विषमः प्रतिकूलः ।। ४५ ।।

**वरदराजीया–** हा कष्टम् । धार्तराष्ट्र एव पाण्डवान् पुरोचनेन मात्रा सह अदहत् । सोऽपि पुरोचनोऽपि सत्सु विषमः प्रतिकूलः सुखाय को नाम प्रभवेत् भूयात् । न कोऽपि इत्यर्थः ।।४५।।

---

१. 'जातुषं तद्गृहं दग्धममात्यश्च पुरोचनम् । नूनं दुर्योधनेनेदं विहितं पापकर्मणा ।। पाण्डवानां विनाशायेत्येवं ते चुक्रुशुर्जनाः ।।' इत्यादिपर्वणि-१६२. २-३.

२ अनन्वितमिदं वाक्यम् ।

**जनार्दनीया–** रोदनं विशदयति– **हेति** ।। एषः धार्तराष्ट्रः पुरोचनेन पाण्डवानदहत् । हा कष्टमभूत् । अत एव कुमतिः । स एषोऽपि पुरोचनः । विषमः प्रतिकूलः ।।४५।।

**चट्टि–** रोदनं विशदयति– **हेति** ।। कुमतिः एषः धार्तराष्ट्रः पुरोचनेन धर्मस्थितान् पाण्डवानदहत् । हा कष्टमभूत् । अत एव सुपापः स एषः पुरोचनोऽपि दैववशादिहैव दग्धः । सत्सु जनेषु विषमः प्रतिकूलः को नाम सुखाय प्रभवेत् भूयात् । न कोऽपीत्यर्थः ।। ४५ ।।

**पौरेभ्य एव निखिलेन च भीष्ममुख्या वैचित्रवीर्यसहितास्तु निशम्य हेति ।
ऊचुः सुदुःखितधियोऽथ सुयोधनाद्याः क्षत्ता मृषैव रुरुदुर्युयुजुश्च कर्म ।।४६।।**

**व्यासतीर्थीया–** निखिलेन कार्त्स्न्येन ।। ४६ ।।

**वरदराजीया–** पौरेभ्यः जनेभ्यः निखिलं सामस्त्येन तत् श्रुत्वा हा कष्टमित्यूचुः । सुयोधनाद्याः मृषैव दुःखं विना छद्मनैव रुरुदुः । क्षत्ता विदुरश्च मृषैव पाण्डवसद्भावं जानन्नेव प्रतारणेनैव रुरोदेत्यर्थः । कर्म उदकदानादिक्रियाः युयुजुः कृतवन्तः ।।४६।।

**अनन्तभट्टीया–** युयुजुः चक्रुः ।। ४६ ।।

**जनार्दनीया–** निखिलेन सर्वेण प्रकारेण । भीष्ममुख्याः हेति कष्टमिति ऊचुः । वैचित्रवीर्यसहिताः सुयोधनाद्याः मृषैव दुःखं विना रुरुदुः । क्षत्ता मृषैव पार्थजीवनं ज्ञात्वापि दुर्योधनादीन् वञ्चयितुं रुरोदेत्यर्थः । अथ मृतिश्रवणानन्तरं कर्म स्नानतिलाञ्जल्यादिक्रियां चक्रुः ।।४६।।

**भारतश्री–** निखिलेन सर्वेण प्रकारेण ।। ४६-४७ ।।

**चट्टि–** वैचित्रवीर्यसहिताः धृतराष्ट्रसहिताः भीष्ममुख्यास्तु पौरेभ्यः एव निखिलेन समस्तेन प्रकारेण निशम्य, तन्मृतिमिति शेषः । दुःखितधियः सन्तः हेति कष्टमिति ऊचुः । अथ सुयोधनाद्याः मृषैव दुःखं विनैवेत्यर्थः । रुरुदुः । क्षत्ता विदुरः मृषैव पार्थजीवनं ज्ञात्वापि दुर्योधनादीन् वञ्चयितुं रुरोदेत्यर्थः । कर्म स्नानतिलाञ्जलिदानादिक्रियां च युयुजुः चक्रुः ।। ४६ ।।

**भीमोऽप्युदूह्य वनमाप हिडिम्बकस्य भ्रातॄन् पृथां च तृषितैरभियाचितश्च ।
[1]पानीयमुत्तरपटेऽम्बुजपत्रनद्धं दूरादुदूह्य ददृशे स्वपतोऽथ तांश्च ।।४७।।**

**वेदाङ्गतीर्थीया–** पानीयं उदूह्य, आनयदिति शेषः । स्वपतः तांश्च दूराद् ददृशे । हिडिम्बवने स्थितान् तान् हिडिम्बो बाधते किं वेत्यभिप्रायवानिति भावः ।। ४७ ।।

---

१. 'तेषामर्थे च जग्राह भ्रातॄणां भ्रातृवत्सलः । उत्तरीयेण पानीयमानयामास भारत ।। पङ्कजानामनेकैश्च पत्रैर्बध्वा पृथक् पृथक् ।। गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति । ...स सुप्तां मातरं भ्रातॄन्निद्राविद्रावितौजसः ।।' इत्यादिपर्वणि १६३. २४-२६.

**वरदराजीया—** भ्रात्रादीन् उदूह्य, तृषितैः भ्रात्रादिभिः याचितः, उदकमिति शेषः । उत्तरपटे उत्तरीयपटे स्थापिते अम्बुजपत्रे पद्मपलाशे नद्धं स्थापितं पानीयमुदकमुदूह्य स्थापयित्वा तान् भ्रात्रादीन् स्वपतः सुप्तान् दूरात् किञ्चिद्दूरे स्थित्वा ददृशे ।।४७।।

**अनन्तभट्टीया—** याचितः, उदकमिति शेषः ।। ४७ ।।

**जनार्दनीया—** अम्बुजपत्रनद्धं कमलपत्रे स्थापितं पानीयं उदूह्य, आनयदिति शेषः । स्वपतः सुप्तान् स्वान् भ्रातॄन् दूराद्ददृशे ।।४७।।

**भावचन्द्रिका—** दूरात् गव्यूतिमात्रात् ।। ४७-५१ ।।

**चट्टि—** भीमः भ्रातॄन् पृथां चोदूह्य हिडिम्बकस्य हिडिम्बराक्षसस्य वनमाप । तृषितैश्च तैः भ्रात्रादिभिः पानीयमभियाचितः सन् उत्तरपटे उत्तरीयवस्त्रे स्थापिते अम्बुजपत्रे नद्धं स्थापितं पानीयं उदकं उदूह्य, आयदिति शेषः । अथ स्वपतः सुप्तान् तान् भ्रातॄन् दूराद्ददृशे च ।। ४७ ।।

**[1]रक्षार्थमेव परिजाग्रति भीमसेने**
**रक्षः स्वसारमभियापयते हिडिम्बीम् ।**
**[2]सा रूपमेत्य शुभमेव ददर्श भीमं**
**साक्षात् समस्तशुभलक्षणसारभूतम् ।।४८।।**

**वेदाङ्गतीर्थीया—** अभियापयते अभ्ययापयत् ।। ४८ ।।

**वरदराजीया—** एवं तेषां रक्षार्थं भीमसेन एव परिजाग्रति सति रक्षः राक्षसो हिडिम्बः स्वसारं भगिनीं हिडिम्बीं तदाख्यां अभियापयते तान् प्रति प्रेषयामास । सा हिडिम्बी शुभं सुन्दरं रूपं एत्य धृत्वा साक्षात् मुख्यतया समस्तशुभलक्षणानां सारभूतं स्वरूपभूतम् ।।४८।।

**अनन्तभट्टीया—** रक्षः हिडिम्बः । यापयते प्रेषयामास ।। ४८ ।।

**जनार्दनीया—** अभियापयते अभ्ययापयत् । सा हिडिम्बी । शुभं रूपं सुन्दररूपम् । एत्य, साक्षात् मुख्यतया शुभलक्षणानां सारं स्वरूपम् ।।४८।।

**ताम्रपर्णी—** सा हिडिम्बी साक्षाद्ददर्शेत्यन्वयः । यद्वा साक्षान्मुख्यतः समस्तशुभलक्षणैः द्वात्रिंशल्लक्षणैः घनीभूतमित्यर्थः ।। ४८ ।।

**भारतश्री—** अभियापयते अभ्ययापयत् ।। ४८ ।।

---

१. 'नातिदूरेण नगरं वनादस्माद्धि लक्षये । जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहं स्वयम् ।।' इत्यादिपर्वणि १६३.५३.
२. 'दृष्ट्वैव भीमसेनं सा सालस्कन्धमिवोद्यतम् । राक्षसी कामयामास रूपेणाप्रतिमं भुवि ।।' इत्यादिपर्वणि १६४.२०.

**चट्टि–** एवं तेषां रक्षार्थं भीमसेन एव परिजाग्रति सति रक्षः राक्षसो हिडिम्बः स्वसारं भगिनीं हिडिम्बीमभियापयते अभ्यययापयत् । सा हिडिम्बी शुभं रूपं सुन्दरं रूपमेव एत्य, साक्षात् मुख्यतया समस्तशुभलक्षणानां सारभूतं सारस्वरूपं भीमं ददर्श ।। ४८ ।।

**सा राक्षसीतनुमवाप सुरेन्द्रलोक-**
**श्रीरेव शक्रदयिता त्वपरैव शच्याः ।**
**शापात् स्पृधा पतिमवाप्य च [१]मारुतिं सा**
**प्राप्तुं निजां तनुमयाचत भीमसेनम् ।।४९।।**

**व्यासतीर्थीया–** [२]स राग ऊत्यागच्छत् । सा मारुतिं पतिमाप्य निजां तनुं प्राप्तुं भीमसेनमयाचत ।।४९।।

**वेदाङ्गतीर्थीया–** सा पूर्वं शच्याः अपरा शक्रदयितैव सुरेन्द्रलोकालङ्कारभूतैव सती, स्पृधा शचीस्पर्धया, पतिं शक्रमवाप्य शच्याः शापात् राक्षसीतनुमवाप । सा एवं राक्षसीभूता सा भीमसेनं मारुतं मरुदवतारं अवगम्य निजां तनुं प्राप्तुं अयाचत त्वदङ्गसङ्गं देहीत्ययाचत ।।४९-५०।।

**वादिराजतीर्थीया–** 'सा राक्षसीतनुमवाप्य' इत्यत्र सा हिडिम्बी सुरेन्द्रलोकश्रीः अमरावतीसम्पत् अमरावतीसम्पदभिमानिनी काचन श्रीनामिका अप्सरास्त्री । न तु साक्षाल्लक्ष्मीः । अपरैव शक्रदयिता शक्रस्य भार्या सती, स्पृधा शच्या सह स्पर्धया कारणेन शच्याः शापात् राक्षसीतनुं राक्षस्यास्तनुमवाप । सा मारुतिं पतिमवाप्य निजां तनुं प्राप्तुं भीमसेनमयाचतेति योजना ।। ४९ ।।

**वरदराजीया–** सुरेन्द्रलोकस्य स्वर्गस्य श्रीः सम्पत्त्यभिमानिनी अपरा शक्रस्य दयिता भार्या शच्याः शापात् राक्षसीं तनुं राक्षसीशरीरं अवाप । शापे निमित्तमुक्तम्– **स्पृधेति** ।। शच्या साकं स्पृधेत्यर्थः । मारुतिं पतिं अवाप्य तत्प्रसादान्निजां तनुं स्वस्वरूपं प्राप्तुं भीमसेनमयाचत मे पतिर्भव इति प्रार्थितवती इत्यर्थः ।।४९।।

**अनन्तभट्टीया–** अपरा परा । शच्याः शापात् । 'स्पृधा' इति शापे निमित्तोक्तिः । सा मारुतिं पतिमवाप्य निजां तनुं प्राप्तुं भीमसेनमयाचत ।। ४९ ।।

**लघ्वनन्तभट्टीया–** सुरेन्द्रलोकश्रीः सुरेन्द्रलोकसम्पदभिमानिनी । पतिमवाप्य स्पृधा शच्याः शापादित्यन्वयः । मारुतं पतिमवाप्य निजां तनुमाप्तुमिति वा ।।४९-५९।।

---

१. 'मारुतम्' इति जनार्दनीय-भारतश्रीपाठः ।

२. 'सा राक्षसी रागात् उत्पत्यागच्छत् ।' इति सम्भावितः पाठः स्यात् ।

**जनार्दनीया–** सा पूर्वं शच्याः अपरा शक्रदयितैव सुरेन्द्रलोकश्रीरेव इन्द्रलोकालङ्कारभूतैव सती स्पर्धया पतिं शक्रमवाप । शच्याः शापात् राक्षसीं तनुं अवाप । एवं राक्षसीभूता सा भीमसेनं मारुतं मरुद्देवावतारं अवगम्य, निजां तनुं प्राप्तुं अयाचत त्वदङ्गसङ्गं मे देहीत्ययाचत ।।४९।।

**ताम्रपर्णी–** ।। **सुरेन्द्रलोकश्रीः** ।। सुरेन्द्रलोकसम्पदभिमानिनी । पतिमवाप्य स्पृधा शच्याः शापादित्यन्वयः । मारुतिं पतिमवाप्य निजां तनुं प्राप्तुमिति वा ।। ४९-५५ ।।

**भारतश्री–** शच्या अपरा शक्रदयितैव । भारते तस्याः श्रीरिति नाम श्रूयते तदभिप्रायमाह– **सुरेन्द्रेति** ।। मारुतं मारुतावतारम् ।। ४९-५७ ।।

**चट्टि–** सा पूर्वं शच्याः अपरा शक्रदयितैव सुरेन्द्रलोकश्रीरेव इन्द्रलोकालङ्कारभूतैव सती स्पृधा शच्या साकं स्पर्धया शच्याः शापात् राक्षसीं तनुं अवाप । एवं राक्षसीभूता सा मारुतिं मरुदवतारं भीमसेनं पतिं अवाप्य निजां तनुं प्राप्तुं अयाचत त्वदङ्गसङ्गं मे देहीत्ययाचत ।। ४९ ।।

**[1]तां भीम आह कमनीयतनुं न पूर्वं**
**ज्येष्ठादुपैमि वनितां न हि धर्म एषः ।**
**सा चाऽह कामवशगा पुनरेतदेव**
**स्वावेशयुग्घि मरुदग्र्यपरिग्रहस्य ।।५०।।**

**व्यासतीर्थीया–** मरुतो देवस्य अत्यन्तायोग्याङ्गसङ्गकामः कथं जातः इत्यत उक्तम्– **सेति** ।। तेन कारणेन मरुदग्र्यपरिग्रहस्य आवेशयुगिति सम्बन्धः ।। ५० ।।

**वादिराजतीर्थीया–** 'मरुदग्र्यपरिग्रहस्य' इत्यत्र मरुदग्र्यः मुख्यप्राणः तस्य परिग्रहः भारती तस्याः स्वावेशयुक् सुष्ठ्वावेशयुक् । सा पुनः एतदेव पूर्वोक्तमेव आह हीत्यन्वयः । हिशब्देन भारत्यावेशात् अस्या भीमप्रार्थना युक्तैवेति प्रसिद्धिं सूचयति । 'पत्नीस्वीकारशपथमौल्येष्वपि परिग्रहः' इत्यभिधानम् ।।

**वरदराजीया–** कमनीया मनोहरा तनुर्यस्याः सा तथा तां आह । किमिति? ज्येष्ठात् पूर्वं ज्येष्ठभ्रातुः पूर्वं वनितां भार्यां नोपैमि न प्राप्नुयाम् । एषः कनिष्ठस्यादौ विवाहो धर्मो न भवति । सा हिडिम्बी पुनरपि एतदेव मे पतिभर्वेत्येतदेव आह । यतः कामवशगेत्यर्थः । मरुदग्र्यस्य श्रीमुख्यप्राणस्य परिग्रहो भार्या तस्याः स्वावेशयुक् सम्यगावेशयुक्ता हि ।।५०।।

**अनन्तभट्टीया–** ।। **मरुदिति** ।। भारत्या इत्यर्थः ।। ५० ।।

---

१. भीमसेन उवाच- 'एष ज्येष्ठो मम भ्राता मान्यः परमको गुरुः । अनिविष्टो हि तत्राहं परिविद्यां कथञ्चन ।।' इत्यादिपर्वणि १६४.४२.

**जनार्दनीया–** भीमः कमनीयतनुं कमनीया मनोहरा तनुर्यस्याः सा तथा ताम् । नोपैमि न प्राप्नुयामित्याह । सा पुनरेव देवप्रार्थनारूपं वाक्यमेवाह । अत एव कामवशगा कामवशं प्राप्ता । मरुद्वयपरिग्रहस्य मरुद्वयस्य मुख्यप्राणस्य, परिग्रहो भार्या भारती, तस्याः स्वावेशयुक् सम्यगावेशयुक्ता हि ।। ५० ।।

**चट्टि–** भीमः कमनीयतनुं कमनीया मनोहरा तनुर्यस्याः सा तथा तामाह । किमिति? ज्येष्ठात् ज्येष्ठभ्रातुः पूर्वं वनितां स्त्रियं नोपैमि न प्राप्नुयाम् । एषः कनिष्ठस्यादौ विवाहो धर्मः नहीत्याह इति पूर्वेणान्वयः । सा पुनरेव देवप्रार्थनारूपं वाक्यमेवाह । अत एव कामवशगा कामवशं प्राप्ता । मरुद्वयपरिग्रहस्य मरुद्वयस्य श्रीमुख्यप्राणस्य, परिग्रहो भार्या भारती, तस्याः स्वावेशयुक् सम्यगावेशयुक्ता हि ।। ५० ।।

**सा भारती वरमिमं प्रददावमुष्यै**
**स्वावेशमात्मदयितस्य च सङ्गमेन ।**
**शापाद् विमुक्तिमतितीव्रतपःप्रसन्ना**
**तेनाऽप[1] सा निजतनुं पवमानसूनोः ।।५१।।**

**वेदाङ्गतीर्थीया–** तेन भारत्यावेशयुक्तत्वेन मरुदङ्गसङ्गाच्छापमोक्षस्य च भावित्वेन सा पवमानसूनोः भीमस्य निजां तनुं स्वस्वरूपं आह । पवमानसूनोः सकाशात् निजतनुं आप्तुं आह । पतिर्भवेत्याहेति वा ।। ५१-५७ ।।

**वादिराजतीर्थीया–** 'निजतनुं पवमानसूनोः' इत्यत्र तेन शापविमोचनाख्यकारणेन पवमानसूनोः सकाशात् निजतनुं प्राप्तुं इत्यध्याहारेण पुनराहेति सम्बन्धः । पूर्वं कामवशत्वादेवाऽऽह । इदानीं शापविमोचनार्थमेवाऽऽहेति विवेकः ।। ५१-५२ ।।

**वरदराजीया–** सा मुख्यप्राणभार्या भारती अमुष्यै राक्षस्यै इमं वरं वक्ष्यमाणं ददौ । वरमेव दर्शयति– **स्वावेशमिति** ।। तस्याः स्वावेशं आत्मदयितस्य मुख्यप्राणस्य सङ्गमेन अङ्गसङ्गेन शापाद् विमुक्तिं विमोक्षम्, वरमिति पूर्वेणान्वयः । तेन कारणेन सा हिडिम्बी पवमानस्य सूनोः भीमस्य, अङ्गसङ्गात् इति शेषः । निजां तनुं मूलरूपमापेत्यर्थः ।।५१।।

**अनन्तभट्टीया–** पवमानसूनोः, अङ्गसङ्गादिति शेषः । निजतनुं मूलरूपं प्राप्तुम् ।। ५१-५२ ।।

**जनार्दनीया–** सा भारती अमुष्यै हिडिम्ब्यै स्वावेशं, आत्मदयितस्य वायोः सङ्गमेन अङ्गसङ्गेन शापाद् विमुक्तिं वरं अदात् । तेन कारणेन सा पवमानसूनोः सकाशात् निजां तनुं स्वस्वरूपं आप ।।५१।।

---

१. 'तेनाह' इति वेदाङ्गतीर्थीय-वादिराजतीर्थानां पाठः ।

**चट्टि–** अतितीव्रतपःप्रसन्ना सा भारती अमुष्यै हिडिम्ब्यै स्वावेशं आत्मदयितस्य वायोः सङ्गमेन अङ्गसङ्गेन शापाद् विमुक्तिं चेति इमं वरं प्रददौ । तेन कारणेन सा पवमानसूनोः सकाशात् निजां तनुं स्वरूपं आप ।। ५१ ।।

**[१]ज्ञानं च नैजमभिदर्शयितुं पुनश्च**
**प्राहेश्वरोऽखिलजगद्गुरुरिन्दिरेशः ।**
**व्यासस्वरूप इह चेत्य परश्च एव**
**मां ते प्रदास्यति तदा प्रकरोषि मेऽर्थ्यम् ।।५२।।**

**व्यासतीर्थीया–** तस्या ज्ञानमेव दर्शयतोक्तम्– **ईश्वर इत्यादि** ।। ५२ ।।

**वरदराजीया–** नैजं स्वकीयं ज्ञानमभिदर्शयितुं ज्ञापयितुं पुनरपि प्राह । किमिति? व्यासस्वरूपः ईश्वरः इह एत्य मां ते तुभ्यं प्रदास्याति यदा तदा मे अर्थ्यं आकाङ्क्षितं प्रकरोषि करिष्यसि ।।५२।।

**जनार्दनीया–** नैजं स्वकीयम् । ज्ञानं अभिदर्शयितुं ज्ञापयितुम् । ते तुभ्यम् । अर्थ्यं वाञ्छितम् । प्रकरोषि करिष्यसि ।।५२।।

**भावचन्द्रिका–** गुरुलङ्घने दोषः स्यादित्याह– **जगद्गुरुरिति** ।। अघटितघटकश्चेत्याह– **ईश्वर इति** ।। तर्हि स्वयमेवाकाङ्क्षदित्यत आह– **इन्दिरेश इति** ।। ५२-६१ ।।

**चट्टि–** सा नैजं स्वकीयं ज्ञानं अभिदर्शयितुं ज्ञापयितुं पुनश्च प्रोवाच । किमिति? अखिलजगतां गुरुः इन्दिरेशः श्रीव्यासस्वरूपः ईश्वरः परश्च एव इहैत्य मां ते तुभ्यं प्रदास्यति । तदा मे अर्थ्यं वाञ्छितं प्रकरोषि करिष्यसि इति प्राहेति पूर्वेण सम्बन्धः ।। ५२ ।।

**काले तदैव कुपितः प्रययौ हिडिम्बो**
**भीमं निहन्तुमपि तां च निजस्वसारम् ।**
**भक्षार्थमेव हि पुरा स तु तां न्ययुङ्क्त**
**नेतुं च तानथ समासददाशु भीमम् ।।५३।।**

**व्यासतीर्थीया–** स्वसृहननोद्यमो किमर्थं जात इत्यत आह– **भक्षार्थमिति** ।।५३।।

**वादिराजतीर्थीया–** पुरा भक्षार्थं भक्षणार्थम् । तान् पाण्डवान् नेतुं आनेतुमेव तां हिडिम्बीं न्ययुङ्क्त । अथ समासदत् ।। ५३-६१ ।।

---

१. 'दिव्यज्ञानेन जानामि व्यतीतानागतानहम् । तस्माद् वक्ष्यामि वः श्रेय आसन्नं सर उत्तमम् । अद्यासाद्य सरःस्नात्वा विश्रम्य च वनस्पतौ । श्वः प्रभाते महद्भूतं प्रादुर्भूतं जगत्पतिम् । व्यासं कमलपत्राक्षं दृष्ट्वा शोकं विहास्यथ ।।' इत्यादिपर्वणि- १६७.२७-२९

**वरदराजीया–** तदैव तस्मिन्नेव काले । निजस्वसारं हन्तुं भक्षार्थं भक्षणार्थं तान् पाण्डवान् नेतुं हिडिम्बीं न्ययुङ्क्त प्रेषितवान् । तेन स्वसारमपि हन्तुं प्रययाविति भावः ।।५३।।

**अनन्तभट्टीया–** तामपि हन्तुम् । तान् नेतुमानेतुं तां न्ययुङ्क्त । अतः स्वसारमपि हन्तुं ऐच्छदिति भावः ।। ५३ ।।

**जनार्दनीया–** न्ययुङ्क्त प्रेषयामास । स हिडिम्बः । हिडिम्बीं स्वभक्षणार्थं पाण्डवान् नेतुं न्ययुङ्क्त । सा च समीचीनं रूपं वेषं कृत्वा, पाण्डवान् प्रति गता । ततः कोपात् तामपि हन्तुं भीमं प्रति हिडिम्बः समासदत् ।। ५३ ।।

**चट्टि–** तदैव काले तस्मिन्नेव काले । हिडिम्बः कुपितः सन् भीममपि तां निजस्वसारं च निहन्तुं प्रययौ । सः हिडिम्बः पुरा तां हिडिम्बीं स्वभक्षणार्थं तान् पाण्डवान् नेतुं न्ययुङ्क्त प्रेषयामास । सा तु समीचीनवेषं कृत्वा पाण्डवान् प्रति गता । अथ तस्मात् कोपात् तामपि हन्तुं भीमं प्रति हिडिम्बः आशु समासदत् ।। ५३ ।।

**सा भीममेव शरणं प्रजगाम तां च**
**भ्रातॄंश्च मातरमथावितुमभ्ययात् तम् ।**
**[1]भीमः सुदूरमपकृष्य [2]सहोदराणां**
**निद्राप्रभङ्गभयतो युयुधेऽमुना च ।।५४।।**

**वरदराजीया–** सा हिडिम्बी अवितुं रक्षितुम् । निद्राप्रभङ्गस्य भयतः सुदूरं अपकृष्य नीत्वा । अमुना हिडिम्बेन ।।५४।।

**जनार्दनीया–** सा तु भीमं शरणं जगामेत्यर्थः । अवितुं रक्षितुम् । अपकृष्य नीत्वा ।।५४।।

**चट्टि–** सा तु भीममेव शरणं जगाम । सः भीमः तां च भ्रातॄंश्च मातरं च अवितुं रक्षितुं तं हिडिम्बं अभ्ययात् । अथ भीमः सोदराणां निद्राप्रभङ्गभयतः तं सुदूरं अपकृष्य नीत्वा अमुना युयुधे ।।५४।।

**तौ मुष्टिभिस्तरुभिरश्मभिरद्रिभिश्च**
**युध्वा [3]नितान्तरवतः प्रतिबोधितांस्तान् ।**
**सश्चक्रतुस्तदनु सोदरसम्भ्रमं तं**
**दृष्ट्वैव मारुतिरहन्नुरसि स्म रक्षः ।।५५।।**

---

१. 'गर्जन्तमेवं विजने भीमसेनोऽभिवीक्ष्य तम् । रक्षन्प्रबोधं भ्रातॄणां मातुश्च परवीरहा ।।' इत्यादिपर्वणि-१६५.२३.

२. 'निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह । तस्माद्देशात् धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ।' इत्यादिपर्वणि-१६५.४३.

३. 'तयोः शब्देन महता विबुद्धास्ते नरर्षभाः। सह मात्रा च ददृशुः हिडिम्बामग्रतः स्थिताम् ।'इत्यादिपर्वणि-१६५.६२.

**मधुसूदनीया–** ।। **सोदरसम्भ्रममिति** ।। सोदराणां सम्भ्रमं भयम् ।। ५५-५६ ।।

**वरदराजीया–** अश्मभिः पाषाणैः । नितान्तं रवतः उच्चध्वनितः तान् युधिष्ठिरादीन् प्रतिबोधितान् सुप्तप्रतिबुद्धान् चक्रतुः । सोदराणां सम्भ्रमं भयम् । रक्षो राक्षसं उरसि अहन् ।।५५।।

**जनार्दनीया–** अश्मभिः पाषाणैः । नितान्तरवतः उच्चध्वनितः प्रतिबोधितान् प्रतिबुद्धांश्चक्रतुः । तदनु प्रतिबोधानन्तरं तं सोदरसम्भ्रमं भ्रातृभयम् । 'सम्भ्रमश्चादरे भये' इत्यमरः । रक्षः राक्षसं उरसि वक्षसि अहन् जघान ।। ५५ ।।

**चट्टि–** तौ भीमहिडिम्बौ मुष्टिभिः तरुभिः वृक्षैः अद्रिभिः पर्वतैः अश्मभिः पाषणैश्च युध्वा नितान्तरवतः उच्चध्वनितः तान् प्रतिबोधितान् प्रतिबुद्धान् सञ्चक्रतुः । तदनु अनन्तरं मारुतिः भीमः तं सोदरसम्भ्रमं भ्रातृभयम् । 'सम्भ्रमस्त्वादरे भये' इत्यभिधानम् । रक्षः राक्षसं उरसि अहन् जघान ।। ५५ ।।

**तद् भीमबाहुबलताडितमीशवाक्यात्**
**सर्वैरजेयमपि भूमितले पपात ।**
**वक्त्रस्रवद्बहुलशोणितमाप मृत्युं**
**प्रायात् तमोऽन्धमपि नित्यमथ क्रमेण ।।५६।।**

**वरदराजीया–** तद् रक्षः । वक्त्रेण स्रवद्बहुलं शोणितं रक्तं यस्य तत् । नित्यं तमोऽन्धं क्रमेण प्रायात् ।।५६।।

**अनन्तभट्टीया–** तद् रक्षः ।।५६।।

**जनार्दनीया–** तद्रक्षः वक्त्रस्रवद्बहुलशोणितं मुखात् स्रवत् बहु रक्तं यस्य तत्तथा । रक्षः मृत्युं आप ।।५६।।

**ताम्रपर्णी–** अथ मरणानन्तरं अनित्यनरकेषु स्थित्वा कालक्रमेण ऊर्ध्वमध्याधरक्रमेण वा नित्यमनावृत्ति अन्धंतमः प्रायादित्यर्थः ।। ५६-५७ ।।

**चट्टि–** ईशवाक्यात् रुद्रवरात् सर्वैरजेयमपि तद्रक्षः भीमवलताडितं सत् वक्त्रस्रवद्बहुलशोणितं बहुरक्तं यस्य तत्तथाभूतं सत् भूमितले पपात । मृत्युं आप । अथ क्रमेण नित्यं अन्धं तमोऽपि प्रायात् ।। ५६ ।।

**हत्वैव शर्ववररक्षितराक्षसं तं सर्वैरवध्यमपि सोदरमातृयुक्तः ।**
**[1]भीमो ययौ तमनु सा प्रययौ हिडिम्बी कुन्ती युधिष्ठिरमथास्य कृते ययाचे ।।**

---

१. 'ततः सर्वे तथेत्युक्त्वा मात्रा सह महारथाः । प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ।।' इत्यादिपर्वणि १६६. ४०.

**मधुसूदनीया–** तं प्रसिद्धं शर्ववररक्षितराक्षसं हिडिम्वं क्रमेण हत्वा स्वमूलरूपगतं वलं किञ्चिदादाय हत्वेत्यर्थः । 'अर्जुनेनैवमुक्तस्तु भीमो रोषाज्ज्वलन्निव । वलमाहारयामास यद्वायोर्जगतः क्षये ।।' इति च (आदिपर्वणि-१६६.३०)।। ५७-६१ ।।

**वरदराजीया–** शर्वस्य वरेण रक्षितं राक्षसम् । तं भीममनु सा हिडिम्वा । अस्य कृते भीमेन स्वपरिग्रहार्थं ययाचे भीमो यथा मां प्रतिगृह्णीयात् तथा कर्तव्यमिति ययाचे ।।५७।।

**अनन्तभट्टीया–** अस्य कृते भीमपरिग्रहणार्थमित्यर्थः ।। ५७ ।।

**जनार्दनीया–** अस्य कृते भीमेन स्वपरिग्रहणार्थमित्यर्थः ।। ५७ ।।

**चट्टि–** भीमः सर्वैः अवध्यमपि तं प्रसिद्धं शर्ववररक्षितं राक्षसं क्रमेण हत्वा पूर्वश्लोकस्थक्रमपदमावृत्य योज्यम् । स्वमूलरूपगतवलं किञ्चिदादाय हत्वेत्यर्थः । 'अर्जुनेनैवमुक्तस्तु भीमो रोषाज्ज्वलन्निव । वलमाहारयामास यद्वायोर्जगतः क्षये ।।' इत्यादिपर्वणि । अथ सोदरमातृयुक्तः सन् ययौ । सा हिडिम्वी भीमं अनु प्रययौ । अथ कुन्ती युधिष्ठिरं चास्य कृते भीमेन परिग्रहणार्थं ययाचे । भीमो यथा मां परिगृह्णीयात् तथा कर्तव्यमिति ययाचे ।। ५७ ।।

**[1]ताभ्यामनूक्तमपि यत्र करोति भीमः**
**प्रादुर्बभूव निखिलोरुगुणाभिपूर्णः ।**
**व्यासात्मको हरिरनन्तसुखाम्बुराशिः[2]**
**विद्यामरीचिविततः सकलोत्तमोऽलम् ।।५८।।**

**व्यासतीर्थीया–** अनूक्तमपि । स्वपौत्रापदर्शनेऽपि न लौकिकवद्दुःखी जात इत्यत उक्तम्– **अनन्तसुखाब्धिरिति** ।। विपिनगतान् कथं व्यजानात् इत्यत उक्तम्– **विद्येति** ।। विद्यावत्त्वं कुतः सिद्धमित्यत उक्तम्– **सकलेति** ।। सकलोत्तमत्वञ्च कुतः सिद्धमित्यतो 'मय्यनन्तगुणेऽनन्त' इत्येतदनुसन्धेयमिति भावः ।। ५८-६२ ।।

**वेदाङ्गतीर्थीया–** अनूक्तं अन्वनूक्तमपि । यत् यदा ।। ५८-६२ ।।

**वरदराजीया–** ताभ्यां कुन्तीयुधिष्ठिराभ्यां अनूक्तं पुनःपुनरुक्तमपि यदा भीमो न करोति तदा व्यासात्मको हरिः प्रादुर्वभूवेति सम्वन्धः । तस्य हरेः निखिलेत्यादि विशेषणचतुष्टयम् । विद्याख्यमरीचिभिः किरणैः विततः । अलं सामर्थ्येन सकलोत्तमो न तु कतिपयैः गुणैरित्यर्थः ।।५८।।

---

१. कुन्त्यैवोक्तः भीमः हिडिम्वीं जग्राह इति भारते ।

२. 'अनन्तसुखाब्धिराशिः' इति व्यासतीर्थीयपाठः ।

**अनन्तभट्टीया–** अन्वनु पुनःपुनरित्यर्थः ।। ५८-६२ ।।

**जनार्दनीया–** अनूक्तं अन्वनु पुनःपुनः उक्तमपि यदा न करोति तदा हरिः प्रादुर्बभूवेति सम्बन्धः ।।५८।।

**ताम्रपर्णी–** व्यासस्य हरित्वं कुत इत्यतस्तल्लक्षणलक्षितत्वादित्याशयेनाह– **निखिलेति** ।। आगमने न स्वप्रयोजनमित्युक्तम्– **अनन्तसुखेति** ।। कथमत्रत्यानन्वजानादित्यत उक्तम्– **विद्येति** ।। भीमेन हिडिम्बीग्रहणे सामर्थ्यमस्तीति सूचयितुं 'अलं सकलोत्तमः' इत्युक्तम् ।। ५८-६२ ।।

**भारतश्री–** अनूक्तं पुनः पुनरुक्तम् । तावन्मात्रेण तत्परिग्रहे मातृज्येष्ठाभ्यां स्नेहादुक्ते कामेन ज्येष्ठात् पूर्वं स्त्रियं जगामेति लोकाः वदन्तीति तद्वाक्येन हिडिम्बापरिग्रहमकृतवान् ।। ५८-६८ ।।

**चट्टि–** ताभ्यां कुन्तीयुधिष्ठिराभ्यां अनूक्तं पुनःपुनः उक्तमपि । यत् यदा भीमः न करोति तदा निखिलोरुगुणैरभिपूर्णः अनन्तसुखाम्बुराशिः विद्याख्यमरीचिभिः किरणैः विततः अलं सामस्त्येन सकलोत्तमः न तु कतिपयैः गुणैः इत्यर्थः । श्रीव्यासात्मकः हरिः प्रादुर्बभूव ।। ५८ ।।

**दृष्ट्वैव तं परममोदिन आशु पार्था**
**मात्रा सहैव परिपूज्य गुरुं विरिञ्चेः ।**
**[१]सल्लालिताश्च हरिणा परमातिहार्द-**
**प्रोत्फुल्लपद्मनयनेन सदोपविष्टाः ।।५९।।**

**वरदराजीया–** परममोदिनो भूत्वा । विरिञ्चेः चतुर्मुखस्य गुरुं परमादरेण अत्यन्तसौहार्देन स्नेहेन प्रोत्फुल्लपद्मवत् स्थिते नयने यस्य स तथा तेन । हरिणा उल्लालिताः सन्तः उपविष्टाः ।।५९।।

**जनार्दनीया–** परमातिहार्दप्रोत्फुल्लपद्मनयनेन परमेण अतिहार्देन अतिस्नेहेन, प्रोत्फुल्लपद्मवत् विकसितकमलवत् स्थिते नयने नेत्रे यस्य स तथोक्तः तेन । हरिणा सल्लालिताः सन्तः उपविष्टाः ।।५९।।

**चट्टि–** विरिञ्चेः गुरुं श्रीव्यासं दृष्ट्वैव परममोदिनः पार्थाः मात्रा सहैव आशु तं परिपूज्य परमातिहार्दप्रोत्फुल्लपद्मनयनेन परमेण अतिहार्देन अतिस्नेहेन प्रोत्फुल्लपद्मे इव विकसितकमले इव स्थिते नयने यस्य तथा तेन । हरिणा उल्लालिताश्च सन्तः तदा उपविष्टाः । 'सल्लालिताः' इति वा पाठः ।।५९।।

**तान् भक्तिनम्रशिरसः समुदीक्ष्य कृष्णो**
**भीमं जगाद नत आशु हिडिम्बया च ।**

---

१. 'उल्लालिताश्च' इति वरदराजीयपाठः । चट्टिटिप्पण्याम् 'उल्लालिताश्च' 'सल्लालिताश्च' इत्युभयतः पाठः आदृतः ।

**एतां गृहाण युवतीं [1]सुरसद्मशोभां**
**जाते सुते सहसुता प्रतियातु चैषा ॥६०॥**

**वरदराजीया–** तान् भक्तिनम्रशिरसः भक्त्या नतकन्धरान् हिडिम्बया नतः प्रणतः आशु भीमं जगाद । किमिति? एतां सुरसद्मशोभां स्वर्गलोकश्रियं युवतीं युवतित्वेन गृहाणेत्यर्थः । एतस्यां सुते जाते सति अनन्तरं एषा प्रतियातु गच्छतु ॥६०॥

**लघ्वनन्तभट्टीया–** सुरसद्मशोभां तदभिमानिनीम् ॥ ६०-६६ ॥

**जनार्दनीया–** नतः प्रणतः । सुरसद्मशोभां स्वर्लोकालङ्कारभूताम् । एषा सुते जाते सति, सहसुता सुतेन सहिता प्रतियातु गच्छतु ॥ ६० ॥

**चट्टि–** श्रीकृष्णः व्यासः भक्तिनम्रशिरसः भक्त्या नतकन्धरान् तान् पाण्डवान् समुदीक्ष्य हिडिम्बया चाशु नतः प्रणतः सन् भीमं जगाद । किमिति? सुरसद्मशोभां स्वर्गलोकालङ्कारभूतां एतां युवतीं गृहाण । सुते जाते सति एषा सहसुता सुतेन सहिता सती प्रतियातु गच्छतु ॥ ६० ॥

**एवं ब्रुवत्यगणितोरुगुणे रमेश**
**ओमित्युदीर्य कृतवांश्च तथैव भीमः ।**
**[2]स्कन्धेन चोह्य विबुधाचरितप्रदेशान्**
**भीमं प्रयात्युदय एव रवेर्हिडिम्बी ॥६१॥**

**वरदराजीया–** ओमित्युदीर्य तथास्त्वित्युक्त्वा तथैव चकार । तां परिगृहीतवानित्यर्थः । हिडिम्वी भीमं स्कन्धे उद्धृ रवेः उदये सत्येव सूर्योदयानन्तरमित्यर्थः । तेन विबुधाचरितान् युक्तान् नन्दनवनादीन् प्रति प्रयाति, सम्भोगार्थमिति शेषः ॥६१॥

**जनार्दनीया–** ओमित्युदीर्य तथास्त्वित्युक्त्वा, तथैव चकार । तां परिगृहीतवानित्यर्थः । ऊह्य विबुधाचरितप्रदेशान् देवसञ्चारयुक्तप्रदेशान् । देवोद्यानवनानीत्यर्थः ॥ ६१ ॥

**चट्टि–** अगणितोरुगुणे रमेशे श्रीव्यासे एवं ब्रुवति सति भीमः ओमित्युदीर्य तथास्त्वित्युक्त्वा तथैव कृतवान् । तां परिगृहीतवानित्यर्थः । हिडिम्वी भीमं स्कन्देन ऊह्य रवेरुदये सत्येव विबुधाचरितप्रदेशान् देवसञ्चारयोग्यप्रदेशान् । देवोद्यानवनानीत्यर्थः । प्रयाति च ॥ ६१ ॥

---

१. 'स्नुषा कमलपत्राक्षी नाम्ना कमलपालिका । वशवर्तिनी तु भीमस्य पुत्रमेषा जनिष्यति ॥ तेन पुत्रेण कृच्छ्रेषु भविष्यथ च तारिताः ॥' इत्यादिपर्वणि-१६८.४०..

२. 'सा कदाचिद्विहारार्थं हिडिम्बा कामरूपिणी । भीमसेनमुपादाय ऊर्ध्वमाचक्रमे तदा ॥ शैलशृङ्गेषु रम्येषु देवतायतनेषु च । मृगपक्षिविघुष्टेषु रमणीयेषु सर्वदा । कृत्वा सा परमं रूपं सर्वाभरणभूषिता ॥ सञ्जल्पन्ती सुमधुरं रमयामास पाण्डवम ॥' इत्यादि भारते १.१६८.१०.-२२.

**सा नन्दनादिषु वनेषु विहृत्य तेन**
**[1]सायं प्रयाति पृथया सहितांश्च पार्थान् ।**
**एवं ययावपि तयोरिह [2]वत्सरार्द्धो**
**जातश्च [3]सूनुरतिवीर्यबलोपपन्नः ॥६२॥**

**वादिराजतीर्थीया–** 'एवं ययावपि' इत्यत्र वत्सरार्धोऽप्येवं ययाविति सम्बन्धः ॥ ६२-७० ॥

**मधुसूदनीया–** ॥ जातश्च सूनुरिति ॥ 'सद्योपलब्धिर्गर्भस्य प्रसूतिस्सद्य एव च' इति (७.४.३१) रामायणोक्तेः । 'सद्यो हि गर्भो राक्षस्यो लभन्ते प्रसवन्ति च' इत्यादिपर्वोक्तेश्च (१६९.११) सद्य एव हिडिम्ब्याः गर्भधारणप्रसवयोरुपपत्तेरिति भावः ॥ ६२ ॥

**वरदराजीया–** तेन भीमेन साकं विहृत्य क्रीडां कृत्वा सायङ्काले पुनः पार्थान् प्रति प्रयातीत्यर्थः । एवं क्रीडतोस्तयोः भीमहिडिम्ब्योः वत्सरार्धः षण्मासात्मकः कालः अतीतः गतोऽभूत् । सूनुश्च पुत्रोऽपि जातः ॥६२॥

**जनार्दनीया–** सा हिडिम्बी नन्दनादिषु नन्दनाख्यं इन्द्रस्य वनं, तदादिवनेषु तेन भीमेन साकं विहृत्य क्रीडित्वा सायं सायङ्काले । इह वने । एवं क्रीडतोस्तयोः हिडिम्बीभीमयोः वत्सरार्धः षण्मास-परिमितः कालो ययौ । सूनुः जातः ॥६२॥

**अतिविशद–** सा नन्दनादिषु वनेषु विहृत्य तेनेत्यनेन दिवारमणं भीमस्योच्यते । तत्तु 'ये दिवा रत्या संयुज्यन्ते' (ष.प्र.१.९) इत्यादिश्रुत्या निषिद्धं भीमस्य कथमुपपन्नं भवेत् । तस्य परशुक्ल-त्रयान्तर्गतत्वात् इत्याशङ्का ब्रह्मवाय्वोः हरेराज्ञां विना कार्यमात्राकरणत्वात् निरस्ता ज्ञातव्या । केचित्तु- 'ये दिवा रत्या संयुज्यन्ते' इति श्रुतिवाक्येन दिवारमणस्य पापहेतुत्वाद् भूमौ रमणे पापसम्बन्धभीत्या नन्दनादिषु विहार' इति वर्णयन्ति । तेषां तत्र पापादिचरणं न दोष इत्यभिप्रायश्चेत्? 'पूर्वं शचीरमणमिच्छत एष विघ्नं शक्रस्य तद्दर्शनोपगतो हि चक्रे । तेनैव मानुषमवाप रतिस्थ एव पञ्चत्वमाप रतिविघ्नमपुत्रताञ्च ॥' (ता.नि-१४.४६) इत्यादिना तत्रस्थानामपि पापश्रवणात् कथं तत्रत्यानां पापसम्बन्धाभाव इति ते प्रष्टव्याः । तस्योत्तमत्वमित्यभिप्रायश्चेत् 'श्रुतिस्मृती हरेराज्ञे' इत्युक्तत्वात् श्रुत्यादिनिषिद्धं दिवारमणं कथं स्वोत्तमद्रोहो न स्यात् ॥ ६२-६८ ॥

---

१. 'अहस्सु विहरानेन यथाकामं मनोजवा । अयं त्वानयितव्यस्ते भीमसेनः सदा निशि ॥ प्राक् सन्ध्यातो विमोक्तव्यो रक्षितव्यश्च नित्यशः' इति हिडिम्बीं प्रति युधिष्ठिरवचनम् । आदिपर्वणि-१६७.३९-४०.

२. 'गते भगवति व्यासे पाण्डवा विगतज्वराः । ऊषुस्तत्र च षण्मासान् वटवृक्षे यथासुखम् ॥' इति आदिपर्वणि-१६९.१

३. 'सर्वर्तुफलपुष्पेषु मानसेषु सरस्सु च । बिभ्रती परमं रूपं रमयामास पाण्डवम् ॥६॥ महेश्वासं महावीर्यं महासत्वं महाजवम् । महाकायं महाकालं महाग्रीवं महाभुजम् ॥८॥ बालोऽपि विक्रमं प्राप्तो मानुषेषु विशाम्पते । सर्वास्त्रेषु वरो वीरः प्रकाममभवद् बली ॥१०॥' इति आदिपर्वणि-१६९.

**भावचन्द्रिका–** 'तयोरिह' इत्यत्र हिडिम्बवनसमीपे शालिहोत्रसरसि जातश्च । 'सद्यो हि गर्भं राक्षस्यां लभन्ते प्रसवन्ति च' इति वचनात् ।। ६२ ।।

**गूढकर्तृक–** 'नन्दनादिषु वनेषु विहृत्य तेन' इत्यनेन दिवारमणं भीमस्योच्यते । तत्तु 'ये दिवा रत्या संयुज्यन्ते' इत्यादि श्रुत्या निषिद्धं भीमस्य कथमुपपन्नं भवेत् । तस्य परशुक्लत्रयान्तर्गतत्वात् इत्याशङ्का ब्रह्मवाय्वोः हरेराज्ञां विना कार्यमात्राकरणात् इत्यनेन निरस्ता ज्ञातव्या । केचित्तु- 'ये दिवा रत्या सयुज्यन्ते' इति श्रुतिवाक्येन दिवारमणस्य पापहेतुत्वात् भूमौ रमणे पापसम्बन्धभीत्या नन्दनादिषु विहार' इति वर्णयन्ति । तेषां तत्र पापाचरणं न दोष इत्यभिप्रायश्चेत्? 'पूर्वं शचीरमणमिच्छत एष विघ्नं शक्रस्य तद्दर्शनोपगतो हि चक्रे । तेनैव मानुषमवाप रतिस्थ एव पश्चत्वमाप रतिविघ्नमपुत्रताञ्च ।।' इत्यादिना तत्रस्थानामपि पापश्रवणात् कथं तत्रत्यानां पापसम्बन्धाभाव इति प्रष्टव्याः । तस्योत्तमत्व-मभिप्रेत्योक्तिश्चेत् 'श्रुतिस्मृती हरेराज्ञे' इत्युक्तत्वात् श्रुत्यादिनिषिद्धदिवारमणं कथं स्वोत्तमद्रोहो न स्यात् ।। ६२-६८ ।।

**चट्टि–** सा हिडिम्बी नन्दनादिषु नन्दनाख्यं इन्द्रस्य वनम्, तदादिषु । तेन भीमसेनेन साकं विहृत्य सायं सायङ्काले पृथया सहितान् पार्थान् प्रयाति च । इह वने एवं क्रीडतोस्तयोः हिडिम्बीभीमयोरपि वत्सरार्धः षण्मासपरिमितः कालो ययौ । अतिवीर्यबलोपपन्नः सूनुश्च जातः । 'सद्योपलब्धिर्गर्भस्य प्रसूतिः सद्य एव च' इति रामायणोक्तेः । 'सद्यो हि गर्भं राक्षस्यो लभन्ते प्रसवन्ति च' इत्यादिपर्वोक्तेश्च सद्य एव हिडिम्ब्याः गर्भधारणप्रसवयोरुपपत्तेरिति भावः ।।६२।।

**देवोऽपि राक्षसतनुर्निर्ऋतिः पुरा य**
**आवेशयुक् च गिरिशस्य घटोत्कचाख्यः ।**
**[1]पूर्वं घटोपमममुष्य शिरो बभूव**
**केशा निमेषत उदासुरतो हि नाम ।।६३।।**

**व्यासतीर्थीया–** घटश्च घटः पूर्वं केशरहितत्वात् पश्चादुद्गताः केशाः यस्यासावुत्कचः घटश्चासौ उत्कचश्चेति तथोक्त इत्यर्थः ।। ६३ ।।

**वेदाङ्गतीर्थीया–** यः पुरा देवोऽपि राक्षसतनुः निर्ऋतिः घटोत्कचाख्यः अस्य सूनुः जातः । तस्मिन् घटोत्कचशब्दप्रवृत्तिनिमित्तमाह– **पूर्वमिति** ।। पूर्वमुत्पत्तिसमये एव । अतो हि अत एव नाम घटोत्कच इति नाम तस्य ।।६३-६५ ।।

---

१. 'घटो हास्योत्कच इति माता तं प्रत्यभाषत । अभवत्तेन नामास्य घटोत्कच इति स्म ह ।।' आदिपर्वणि-१६०..१३. 'घटोऽहं घटवद्भितर्क्यं आस्यं तदुपलक्षितं शिरः यस्य स घटोऽहास्यः सचासावुत्कचश्च घटोहास्योत्कचः' इति व्याख्यानम् ।

**मधुसूदनीया–** ।। **राक्षसतनुरिति** ।। सृष्टिकाले उदकरक्षकत्वं राक्षसपदप्रवृत्तिनिमित्तम् । तथाच उक्तम्– 'रक्षामेति च यैरुक्तं राक्षसास्ते भवन्ति च' इति रामायणे (७.४.१३)।। ६३-६९ ।।

**वरदराजीया–** पुरा यो निर्ऋतिः देवोऽपि राक्षसः तद्रूपः अत्रापि अस्मिन् जन्मन्यपि मातृजात्या राक्षसतनुर्जात इति सम्बन्धः । घटोत्कचाख्यं निर्वक्ति– **पूर्वमिति** ।। घटोपमं घटाकारं शिरो बभूव । निमेषतो निमेषमात्रेण केशाः उदासुः उद्भूताः यतोऽतः घटश्चासौ उत्कचश्च इति घटोत्कच इति नाम प्रसिद्धः ।।६३।।

**अनन्तभट्टीया–** यत् यदा घटोत्कचेति नाम ।। ६३।।

**जनार्दनीया–** स क इत्यत आह– **देव इति** ।। पुरा देवोऽपि राक्षसतनुर्निर्ऋतिः स घटोत्कचाख्यः सूनुर्जात इति सम्बन्धः । घटोत्कचशब्दप्रवृत्तिनिमित्तमाह– **पूर्वमिति** ।। पूर्वं उत्पत्तिसमये एव अमुष्य सूनोः घटोपमं घटसदृशं शिरो बभूव । निमेषतः निमेषपरिमितकालेन केशा उदासुः उद्भूताः यतोऽतः घटश्चासौ उत्कचश्चेति घटोत्कचः इति नाम बभूव ।।६३।।

**ताम्रपर्णी–** पूर्वं घटवद्विद्यमानं पश्चात् उद्गतकचं शिरो यस्य स घटोत्कचः इति विग्रहो द्रष्टव्यः ।।६३-६४।।

**भावचन्द्रिका–** ।। **देव इति** ।। अर्जुनार्थे निहतशस्त्रे त्वयि पातिते सति अर्जुनो जीवेदतः त्वं भूमौ भवेति निर्ऋतिं प्रति इन्द्रेणाज्ञप्तमिति भारतकथा ।। ६३-७३ ।।

**चट्टि–** स सूनुः क इत्यत आह– **देव इति** ।। पुरा देवोऽपि राक्षसतनुर्निर्ऋतिः स गिरिशस्यावेशयुक्च घटोत्कचाख्यः सूनुर्जात इति सम्बन्धः । घटोत्कचशब्दप्रवृत्तिनिमित्तमाह– **पूर्वमिति** ।। पूर्वं उत्पत्तिसमये अमुष्य सूनोः शिरो घटोपमं घटसदृशं बभूव । निमेषतः निमेषमात्रेण केशा उदासुः उद्भूताः, यतोऽतः घटश्चासौ उत्कचश्चेति घटोत्कचः इति नाम । सृष्टिकाले उदकरक्षकत्वं राक्षसपदप्रवृत्तेः निमित्तम् । तथा चोक्तम्- 'रक्षामेति च यैरुक्तं राक्षसास्ते भवन्तु वः' इति रामायणे ।। ६३ ।।

**जाते सुते समयतो भगवत्कृतात् स**
**भीमो जगाद ससुतां गमनाय तां च ।**
**[1]स्मृत्याऽभियान उभयोरपि सा प्रतिज्ञां**
**तेषां विधाय च ययौ सुरलोकमेव ।।६४।।**

---

१. 'यदा मां संस्मरः कान्त रिरंसू रहसि प्रभो । तदा तव वशं भूय आगन्तास्म्याशु भारत ।। इत्युक्त्वा सा जगामाशु भावमासज्य पाण्डवे । हिडिम्बा समयं स्मृत्वा स्वां गतिं प्रत्यपद्यत ।।' इत्यादिपर्वणि १६९.२२-२३.

**व्यासतीर्थीया–** सा तेषां स्मृत्या उभयोरप्यागमने प्रतिज्ञां विधाय ययौ ।।६४।।

**वरदराजीया–** भगवत्कृतात् व्यासकृतात् समयतः कालनियमात् गमनाय गन्तुं स्मृत्या स्मरणमात्रेण उभयोः मातृसुतयोः अभिगमने विषये प्रतिज्ञां तेषां पाण्डवानां पुरस्तात् विधाय 'यदा भवद्भिः स्मर्यते आगन्तव्यम् इति, तदा अहं ससुता आगमिष्यामि' इति प्रतिज्ञां कृत्वेति भावः ।।६४।।

**अनन्तभट्टीया–** ।। **स्मृत्येत्यादि** ।। यदा अस्मदागमनार्थं भवद्भिः स्मर्यते तदा ससुता आगमिष्यामीति प्रतिजज्ञे इत्यर्थः ।।६४।।

**लघ्वनन्तभट्टीया–** *....आगमिष्यामीति प्रतिज्ञामित्यर्थः ।। ६४ ।।

**जनार्दनीया–** भगवत्कृतात् व्यासकृतात् । समयतः कालनियमात् । स्मृत्या स्मरणेन । उभयोः मातृपुत्रयोः अभियाने आगमनविषये ।। ६४ ।।

**चट्टि–** सः भीमः सुते जाते सति भगवत्कृतात् श्रीवेदव्यासकृतात् समयतः कालनियमात् ससुतां च तां गमनाय गन्तुं जगाद । सा हिडिम्बी स्मृत्या स्मरणेन उभयोः मातृपुत्रयोः अपि अभियाने आगमनविषये तेषां पाण्डवानां पुरतः प्रतिज्ञां विधाय च 'यदा भवद्भिः आगन्तव्यमिति स्मर्यते, तदा अहं ससुता आगमिष्यामि' इति प्रतिज्ञां कृत्वा इति भावः । सुरलोकमेव ययौ ।। ६४ ।।

**व्यासोऽपि पाण्डुतनयैः सहितो बकस्य**
**[१]रौद्राद् वराज्जयवधापगतस्य नित्यम् ।**
**यातो वधाय परमागणितोरुधामा**
**पूर्णाक्षयोरुसुख आशु तदैकचक्राम् ।।६५।।**

**व्यासतीर्थीया–** व्यासो 'भीमो वकं हनिष्यति' इति कुतो व्यजानात्? येन एकचक्रां तद्वधाय यात इत्यत उक्तम्– **परमेति** ।। धाम तेजो ज्ञानम् । पूर्वं बकाद् स्वस्य दुःखजातम्, अत एव तद्वधागमने प्राप्त इत्यत उक्तम्– **पूर्णेति** ।।६५।।

**वरदराजीया–** व्यासोऽपि तदा एकचक्रां नगरीं प्रति पाण्डवैः सहितः सन् ययाविति सम्बन्धः । किं कर्तुम्? वकस्य वधाय । कथम्भूतस्य? रौद्रात् रुद्राद् दत्तात् वरात् नित्यं जयवधाभ्यां पराभवमृतिभ्याम् अपगतस्य रहितस्य । परमेत्यादिविशेषणद्वयं व्यासस्य । परमं उत्तमं असङ्ख्यातं उरु उत्कृष्टं धाम तेजः सामर्थ्यं वा स्वरूपं वा यस्य स तथा । पूर्णं परिपूर्णमक्षयं नित्यं उरु उत्कृष्टं सुखं यस्य स तथा ।।६५।।

---

१. 'एकचक्रपुराद् कश्चित् वको नाम महासुरः । आगत्य तपसा लेभे वरमत्यन्तदुर्लभम् ।।' इति स्कन्दपुराणान्तर्गत सह्याद्रिखण्डस्थमञ्जुलक्षेत्रमाहात्म्ये अ-४.श्लो-११। तथा 'यो रावणसमो युद्धे तथा च वकराक्षसः' (आदिपर्वणि-२२४.१८) इति वकासुरस्य महाबलवत्त्वं चाह ।

**अनन्तभट्टीया—** एकचक्रां नगरीम् ।।६५-६६।।

**जनार्दनीया—** एकचक्रां एकचक्रनगरं प्रति । यातः गतः ।।६५।।

**ताम्रपर्णी—** व्यासो वकसंहारशक्तिं भीमे कथं व्यजानादित्यत उक्तम्— **परमेति** ।। धाम तेजः ज्ञानमित्यर्थः । किं वकप्राप्तं स्वदुःखं मार्ष्टुं तत्संहाराय तान् तत्रानयदित्यत उक्तम्— **पूर्णेति** ।। तर्हि किमर्थमयं प्रयत्न इत्यत आनन्दोद्रेकादेवेत्यप्युक्तम्— **पूर्णेति** ।। ६५ ।।

**चट्टि—** परमागणितोरुधामा परमुत्तमं अगणितमसंख्यातं उरु उत्कृष्टं धाम तेजः सामर्थ्यं वा स्वरूपं वा यस्य स तथा । पूर्णं परिपूर्णं अक्षयं नित्यं उरूत्कृष्टं सुखं यस्य स तथा । श्रीव्यासोऽपि तदा पाण्डुतनयैः सहितः सन् रौद्रात् रुद्रदत्तात् वरात् नित्यं जयवधाभ्यां पराजयमृतिभ्यां अपगतस्य रहितस्य वकासुरस्य वधाय आशु एकचक्रनगरीं प्रति यातः गतः ।। ६५ ।।

> **तान् ब्राह्मणस्य च गृहे प्रणिधाय कृष्णः**
> **शिष्या ममैत इति विप्रकुमाररूपान् ।**
> **आयामि काल इतिताननुशास्य चायात्**
> **ते तत्र वासमथ चक्रुरनूच्य वेदान्** ।।६६।।

**व्यासतीर्थीया—** अपेक्षितकाले आयामि । अनूच्य वासमित्यनयोः पूर्वोत्तरभावो मन्तव्यः ।।६६-७०।।

**वेदाङ्गतीर्थीया—** काले इतो निर्गमनकाले ।। ६६ ।।

**वरदराजीया—** तांश्च ब्राह्मणस्य कस्यचित् 'एते मम शिष्याः' इति निरूप्य, शिष्यत्वसम्भावनार्थं 'विप्रकुमाररूपान्' इत्युक्तम् । काले कार्यकाले आयामि आयास्यामि इति पाण्डवान् अनुशास्य ज्ञाप्य अयात् गतवान् । पाण्डवाः तत्र ब्राह्मणगृहे वेदान् अनूच्याधीत्य निवासं चक्रुः ।।६६।।

**जनार्दनीया—** काले निर्गमनकाले । अनुशास्य आज्ञाप्य अनूच्य, अधीयानाः । अत्र वासाध्ययनयोः पूर्वकालीनत्वं अविवक्षितम् । 'मुखं व्यादाय स्वपिति' इतिवत् ।।६६।।

**ताम्रपर्णी—** ते पार्थाः वेदाननूच्य अभ्यस्य तत्र वासं चक्रुः । प्रागधीतवेदानावर्तयन्तोऽवसन्निति भावः । अन्ये तु— 'वेदाननूच्याध्यापयित्वा काले अपेक्षितकाले आयामि' इति सम्बन्धमाहुः ।।६६।।

**चट्टि—** श्रीकृष्णः वेदव्यासः विप्रकुमाररूपान् तान् पाण्डवान् 'एते मम शिष्याः' इति ब्राह्मणस्य गृहे प्रणिधाय च काले कार्यकाले आयाम्यायास्यामि इति तान् पाण्डवान् अनुशास्य आज्ञाप्य अयात् गतवान् । अथ ते पाण्डवाः तत्र ब्राह्मणगृहे वेदान् अनूच्य अधीयानाः वासं चक्रुः ।।६६।।

**भिक्षामटत्सु सततं प्रतिहुंकृतेन**
**भीमे विशां सदन एव गृहप्रमाणम् ।**
**भाण्डं कुलालविहितं प्रतिगृह्य गच्छ-**
**त्याशङ्कयाऽवगमनस्य तमाह धर्मः ॥६७॥**

**वेदाङ्गतीर्थीया–** अवगमनस्य भीम इति ज्ञानस्य आशङ्कया ॥ ६७ ॥

**वरदराजीया–** पाण्डवेषु भिक्षामटत्सु याचमानेषु सत्सु भीमे विशां वैश्यानां सदन एव करवत् ग्रहीतुमिति भावः । प्रतिहुंकृतेन प्रतिसद्म हुंकारेण कुलालेन विहितं निर्मितं गृहप्रमाणं गृहप्रमाणमिव प्रमाणं यस्य तत् । भाण्डं भिक्षापात्रं प्रगृह्य हस्ते गृहीत्वा भिक्षार्थं गच्छति सति अवगमनस्य दुर्योधनादीनां स्वपरिज्ञानस्य शङ्कया अनेन लिङ्गेन दुर्योधनाद्याः अस्मान् ज्ञास्यन्तीति शङ्कयेत्यर्थः । धर्मः धर्मजः तं भीममाह ॥६७॥

**अनन्तभट्टीया–** पाण्डवेषु भिक्षामटत्सु भीमे प्रतिहुंकृतेन विहितं दत्तम् । अवगमनस्याशङ्कया एते पाण्डवा इति ज्ञास्यन्तीति शङ्कयेत्यर्थः । धर्मः धर्मजः ॥ ६७ ॥

**लघ्वनन्तभट्टीया–** अवगमनस्य पाण्डवा इति ज्ञानस्य ॥ ६७-७० ॥

**जनार्दनीया–** भिक्षामटत्सु याचमानेषु सत्सु । प्रतिहुंकृतेन प्रतिगृहं हुंकारेण । विहितः निर्मितम् । अवगमनस्य भीम इति ज्ञानस्य, आशङ्कया ॥६७॥

**ताम्रपर्णी–** अवगमनस्य पाण्डवा इति ज्ञानस्य ॥६७-७०॥

**चट्टि–** पाण्डवेषु सततं भिक्षामटत्सु याचमानेषु सत्सु भीमे विशां वैश्यानां सदन एव करवद् गृहीतुमिति भावः । प्रतिहुंकृतेन प्रतिगृहं हुंकारेण कुलालेन विहितं निर्मितं गृहस्य प्रमाणमिव प्रमाणं यस्य तत् भाण्डं भिक्षापात्रं प्रगृह्य हस्तेन गृहीत्वा भिक्षार्थं गच्छति सति । अवगमनस्य 'अयं भीमः' इति ज्ञानस्य, आशङ्कया अनेन लिङ्गेन दुर्योधनाद्याः 'अयं भीमः' इति ज्ञास्यन्तीति शङ्कयेत्यर्थः । धर्मः धर्मजस्तं भीममाह ॥ ६७ ॥

**स्थूलं हि सद्म पृथिवीसहितं त्वरक्ष उद्धृत्य वह्निमुखतस्तदु चैकदोष्णा[1] ।**
**[2]भाण्डं तदर्थमुरु कुम्भकरेण दत्तं भिक्षां च तेन चरसि प्रतिहुंकृतेन ॥६८॥**

---

१. 'तदुतैकदोष्णा' इति वरदराजीय-चट्टीपाठः ।

२. 'भीमोऽपि क्रीडयित्वाथ मिथो ब्राह्मणबन्धुषु । कुम्भकारेण सम्बन्धात् लेभे पात्रं महत्तरम् ॥ कुम्भकारोऽददात्पात्रं महत्कृत्वातिमात्रकम् । प्रहसन् भीमसेनाय विस्मितस्तस्य कर्मणा ॥' इत्यादिपर्वणि १७१.१८-१९.

**वेदाङ्गतीर्थीया—** पृथिवीसहितं यथा भवति तथा सद्म उद्धृत्य । तद् उद्धरणमपि एकदोष्णा । उरु भाण्डम् । प्रतिहुंकृतेन प्रतिमन्दिरं हुङ्कारेण हेतुना । भिक्षां देहीति वचनरहितः ।। ६८-७० ।।

**वरदराजीया—** किमिति? स्थूलं सद्म गृहं पृथिवीसहितं गृहाश्रयपृथिवीप्रदेशेन युक्तं उद्धृत्य अग्नि-मुखतः अग्निज्वालायाः सकाशात् अरक्षः रक्षितवानसि । तदुत तदपि एकदोष्णा उद्धृत्य अरक्षः । कुम्भकारगृहसमीपस्थेषु दह्यमानेषु तज्ज्वालया कुम्भकारगृहदाहेऽपि प्राप्ते भीमः आगत्य तद्गृहं भूप्रदेशसहितमेव ततः उद्धृत्य रक्षितवानिति भारतीयकथा अनुसन्धेया । स्वगृहरक्षणात् सन्तुष्टेन कुम्भकारेण तदर्थं उरुभाण्डं भिक्षापात्रं कृत्वा दत्तम् । तेन भाण्डेन भिक्षां चरसि ।।६८।।

**अनन्तभट्टीया—** कुम्भकारस्य सद्मनि अग्निना दह्यमाने भीमेन तत्रतः भूमिदाह (प्रदेशसहितं गृहं) उद्धृतमिति कथा अनुसन्धेया ।। ६८ ।।

**जनार्दनीया—** एकदोष्णा एककरेण यतः । अतः कुम्भकरेण कुलालेन । भाण्डं पात्रम् । 'वणिङ्मूलधने पात्रे भाण्डं भूषाश्वभूषयोः' इति विश्वः ।।६८।।

**चट्टि—** किमिति? स्थूलं सद्म गृहं पृथिवीसहितं गृहाश्रयपृथिवीप्रदेशयुक्तमुद्धृत्य वह्निमुखतः अग्निज्वालायाः सकाशात् अरक्षः रक्षितवानसि । तदुत तदेकेन दोष्णा उद्धृत्य अरक्षः । कुम्भकारगृह-समीपस्थेषु गृहेषु दह्यमानेषु तज्ज्वालया कुम्भकारगृहदाहेऽपि प्राप्ते भीम आगत्य तद्गृहभूप्रदेशसहितमेव गृहं तत उद्धृत्य रक्षितवानिति भारतकथाप्यनुसन्धेया । कुम्भकरेण तदर्थं उरु भाण्डं भिक्षापात्रं दत्तम् । तेन पात्रेण प्रतिहुंकृतेन भिक्षां चरसि ।। ६८ ।।

**धर्मस्य ते सुनियतेर्बलतश्च बोधो**
**भूयात् सुयोधनजनस्य ततो भयं मे ।**
**मात्रा सहैव वस फल्गुनपूर्वकैस्त्व-**
**मानीतमेव परिभुङ्क्ष्व न तु व्रजेथाः ।।६९।।**

**वरदराजीया—** ततः किमित्यत आह— **धर्मस्येति** ।। ते तव धर्मस्य सुनियतेः नियतत्वात् बलतश्च सद्मोद्धारणमहाभाण्डधारणादिना ज्ञायमानात् बलाच्च सुयोधनजनस्य दुर्योधनसम्बन्धिचारजनस्य बोधः अस्माभिरत्र स्थीयते इति परिज्ञानं भूयात् स्यात् । ततः कारणात् मे भयं भवतीत्यर्थः । मात्रा कुन्त्या सहैव वस । गृहे एव स्थितो भव । फल्गुनादिभिरानीतं भैक्ष्यं परिभुङ्क्ष्व । परन्तु भिक्षाटनार्थं न व्रजेथाः न गच्छेथाः ।।६९।।

**अनन्तभट्टीया—** बोधः 'भीमोऽयम्' इति ज्ञानम् ।।६९।।

**जनार्दनीया–** ते धर्मस्य सुनियतेः अतिनियतत्वात् । बलतश्च बोधः पाण्डवाः एकचक्रनगर्यां तिष्ठन्तीति परिज्ञानं भूयात् । ततो बोधात् । वस तिष्ठ । न तु व्रजेथाः मा गच्छ ।।६९।।

**अतिविशद–** 'मात्रा सहैव वस फल्गुनपूर्वकैस्त्वमानीतमेव परिभुङ्क्ष्व न तु व्रजेथाः' इत्यत्र फल्गुनपूर्वकैः नकुलादिभिरानीतं भुङ्क्ष्वेति धर्मात्मजेन भीमं प्रत्युच्यते । नकुलसहदेवयोरेव फल्गुनपूर्वकत्वेन फल्गुनपूर्वकाभ्यामिति वक्तव्यं फल्गुनपूर्वकैरिति कथमुक्तमिति चेत् । अत्र केचित्तु- 'पूर्वौ ययोस्ताविति समासेन फल्गुनस्यापि लाभात् बहुवचनोपपत्तिः' इति । केचित्तु- 'फल्गुनः पूर्वौ ययोस्तौ फल्गुनपूर्वौ इति विगृह्य नन्तरं फल्गुनश्च फल्गुनपूर्वकौ चेति इतरेतरद्वन्द्वं विधाय तैः फल्गुनपूर्वकैः' इति वदन्ति । वस्तुतस्तु नात्र पूर्वशब्दः पूर्वोत्पन्नवाचकः किन्तु प्राधान्यवाचकः । प्राधान्यं तु अर्जुनस्य धर्माद्यपेक्षया अस्तीति फल्गुनपूर्वकैरिति बहुवचनोपपत्तिरिति ।। ६९-७२ ।।

**भारतश्री–** सुनियतेः अतिनियतत्वात् ।। ६९-७१ ।।

**गूढकर्तृक–** 'मात्रा सहैव वस फल्गुनपूर्वकैस्त्वमानीतमेव परिभुङ्क्ष्व न तु व्रजेथाः' इत्यत्र फल्गुनपूर्वकैः नकुलादिभिरानीतं भुङ्क्ष्वेति धर्मात्मजेन भीमं प्रत्युच्यते । नकुलसहदेवयोरेव फल्गुनपूर्वकत्वेन फल्गुनपूर्वकाभ्यामिति वक्तव्यं फल्गुनपूर्वकैरिति कथमुक्तमिति चेत् । अत्र केचित्- 'फल्गुनः पूर्वौ ययोस्तौ इति समासेन फल्गुनस्यापि लाभात् बहुवचनोपपत्तिः' इति । केचित्तु- 'फल्गुनः पूर्वौ ययोस्तौ फल्गुनपूर्वौ इति विगृह्य फल्गुनश्च फल्गुनपूर्वकौ च इति इतरेतरयोगद्वन्द्वं च विधाय तैः फल्गुनपूर्वकैः' इति वदन्ति । वस्तुतस्तु नात्र पूर्वशब्दः पूर्वोत्पन्नवाचकः किन्तु प्रधानवाचकः । प्राधान्यं तु अर्जुनस्य धर्माद्यपेक्षया अस्तीति फल्गुनपूर्वकैरिति बहुवचनोपपत्तिरिति ।। ६९-७२ ।।

**चट्टि–** ततः किमित्यत आह– **धर्मस्य इति** ।। ते तव धर्मस्य सुनियतेः अतिनियतत्वात् बलतश्च सद्मोद्धरणमहाभाण्डधारणादिना ज्ञायमानात् बलाच्च सुयोधनजनस्य बोधः पाण्डवाः एकचक्रनगर्यां तिष्ठन्तीति परिज्ञानं भूयात् । ततः कारणात् मे भयं भविष्यतीत्यर्थः । मात्रा कुन्त्या सहैव वस, गृहे इति शेषः । त्वं फल्गुनपूर्वकैरानीतमेव अन्नं परिभुङ्क्ष्व, न तु व्रजेथाः मा गच्छ ।। ६९ ।।

**इत्युक्त आशु स चकार तथैव भीम-**
**स्तेऽपि स्वधर्मपरिरक्षणहेतुमौनाः[१] ।**
**भिक्षां चरन्त्यथ चतुर्ष्वपि तेषु याते-**
**ष्वेकत्र मातृसहितः स कदाचिदास्ते ।।७०।।**

**मधुसूदनीया–** ।। इत्युक्त आशु स चकारेति ।। 'अर्धं तु भुञ्जते पञ्च सह मात्रा परन्तप । अर्धं भैक्षं च सर्वस्य भीमो भुङ्क्ते महाबलः ।।' इत्यादिपर्ववचनात् (१७१.१४) भिक्षार्धं भीमो भुञ्जत इति ज्ञेयम् ।।७०-७२।।

**वरदराजीया–** तथैव चकार मात्रा सह गृहे स्थितः । तेऽपि धर्माद्याः स्वधर्मस्य परिरक्षणे हेतुभूतं मौनं येषां ते तथा । भिक्षां देहीत्यनुक्त्वैव भिक्षां चरन्तीति भावः । तेषु युधिष्ठिरादिचतुर्ष्वपि भिक्षार्थं यातेषु कदाचित् सः भीमो मातृसहितः आस्ते आसीत् ।।७०।।

**अनन्तभट्टीया–** स्वधर्मस्य अयाचनस्य परिरक्षणहेतुभूतमौनं येषामिति विग्रहः ।। ७० ।।

**जनार्दनीया–** स्वधर्मपरिरक्षणहेतुमौनाः अयाचनं स्वधर्मः, तद्रक्षणहेतुतः भिक्षां देहीति वचसा रहिताः । एकत्र एकस्थले । आस्ते आसीत् ।। ७० ।।

**चट्टि–** सः भीमः इत्युक्तस्सन्, धर्मजेनेति शेषः । आशु तथैव चकार । तेऽपि चत्वारः स्वधर्मपरिरक्षणहेतुमौनाः अयाचनं स्वधर्मः तद्रक्षणहेतुतः भिक्षां देहीति वचनरहिताः सन्तः भिक्षां चरन्ति । अथ कदाचित् तेषु चतुर्ष्वपि यातेषु सत्सु भीमः मातृसहितः सन् एकत्र एकस्थले आस्ते आसीत् । 'अर्धं तु भुञ्जते पञ्च सह मात्रा परन्तप । अर्धं भैक्षं च सर्वस्य भीमो भुङ्क्ते महाबलः ।।' इत्यादिपर्ववचनात् भिक्षितान्नार्धं भीमो भुङ्क्ते इति ज्ञेयम् ।। ७० ।।

**तत्काल एव रुदितं निजवासहेतो-**
**र्विप्रस्य दारसहितस्य निशम्य भीमः ।**
**स्त्रीबालसंयुतगृहे [1]शिशुलालनादौ**
**लज्जेदिति स्म जननीमवदत्र चागात् ।।७१।।**

**व्यासतीर्थीया–** शिशुपालनादौ क्रियमाणे सति अन्यपुरुषागमने लज्जेदिति ।। ७१ ।।

**वेदाङ्गतीर्थीया–** निशम्य जननीमित्यवदत् । स्त्रीबालसंयुतगृहे स्थातुं शिशुलालनादौ प्रवर्तितुं च लज्जेत् । अत्र च भीमे गते शिशुलालनादि न भवेत् । तच्चायुक्तम् । इति स्म इत्यभिप्रायवान् स्वयं नागात् ।। ७१-७२ ।।

**वादिराजतीर्थीया–** 'निजवासहेतोर्विप्रस्य' इत्यत्र निजः यो वासः तस्य हेतोः कारणभूतस्य विप्रस्येति सम्बन्धः । स्त्रीबालसंयुतगृहे सुतलालनादौ सुतस्य लालनं आदिपदेन सुतस्य क्षीरदानार्थं स्तनपानादिकं गृह्यते । तस्मिन् लज्जेदिति सम्बन्धः ।। ७१-७२ ।।

---

१. 'शिशुपालनादौ' इति व्यासतीर्थीयपाठः । 'सुतलालनादौ' इति वादिराजतीर्थीयपाठः ।

**सत्याभिनवतीर्थीया–** तत्रैव 'तत्काल एव रुदितं..' इति श्लोके शिशुलालनादौ इत्यस्य शिशुपरामर्शादावित्यर्थः । एतेन रोदनवेलायां शिशुलालनस्य बाधितत्वात् शिशुलालनादौ इति कथनमयुक्तमिति दूषणं निरस्तम् । लालनशब्देन प्रसिद्धलालनस्याग्रहणात् ।।७१।।

**वरदराजीया–** तत्काले तस्मिन्नेव काले विप्रस्य रुदितं निशम्येति सम्बन्धः । कस्य विप्रस्य इति निजवासहेतोः स्ववासहेतुभूतस्य आत्मगृहे स्वस्थापकस्येत्यर्थः । दारैः स्त्रिया सहितस्य बालसंयुतगृहे शिशुलालनादौ कर्तव्ये अन्यपुरुषसन्दर्शनेन स्त्री लज्जेत् लज्जां कुर्यादिति हेतोः स्वयं नागात् । जननीं कुन्तीमेव गमनार्थमवदत् ।।७१।।

**अनन्तभट्टीया–** शिशुलालनादौ क्रियमाणे अन्यपुरुषागमनेन स्त्री लज्जेत् इति ।। ७१-७२ ।।

**जनार्दनीया–** निजवासहेतोः स्ववासस्य कारणभूतस्य विप्रस्य । स्त्रीबालसंयुतगृहे शिशुलालनादौ प्रवर्तितुं अन्यपुरुषसन्दर्शनेन स्त्री लज्जेत् लज्जासहिता भविष्यतीति हेतोः जननीमवदत्, गच्छेति शेषः । स्वयं न चागात् ।।७१।।

**ताम्रपर्णी–** स्त्री लज्जेदित्यन्वयः ।। ७१-७५ ।।

**चट्टि–** तस्मिन् एव काले निजवासहेतोः स्ववासस्य कारणभूतस्य दारसहितस्य विप्रस्य रुदितं रोदनं निशम्य भीमः स्त्रीबालसंयुतगृहे शिशुलालनादौ प्रवर्तितुं अन्यपुरुषसन्दर्शनेन लज्जेत् लज्जया सहिता भविष्यतीति जननीमवदत्, गच्छेति शेषः । स्वयं च नागात् ।। ७१ ।।

**[1]जानीहि विप्ररुदितं कुत इत्यतश्च**
**योग्यं विधास्य इति सा प्रययौ च शीघ्रम् ।**
**सा संवृतैव सकलं वचनं गृहेऽस्य**
**शुश्राव विप्रवर आह तदा प्रियां सः ।।७२।।**

**वरदराजीया–** विप्रस्य रुदितं रोदनं कुतः कारणाज्जातमिति जानीहि । अहं तत्परिज्ञानाच्च योग्यं प्रतीकारं विधास्ये करिष्यामि । सा कुन्ती संवृता लीना अस्य विप्रस्य गृहे विप्रादिभिरुच्यमानं सकलं वचनं वाक्यं शुश्राव । सकलं वचनं दर्शयति– **विप्रवर इत्यादिना** ।। स विप्रवरः प्रियां भार्यामित्याह ।।७२।।

**लघ्वनन्तभट्टीया–** संवृतैव आच्छादितैव ।। ७२-७५ ।।

---

१. 'ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम् । विदित्वा व्यवसिष्यामि यद्यपि स्यात्सुदुष्करम् ।।' इत्यादिपर्वणि-१७१.३१

**जनार्दनीया—** कुतः कस्माद्धेतोः विप्ररुदितं विप्ररोदनं किमिति जानीहि । अतः अस्य रोदनस्य योग्यं प्रतीकारं विधास्ये करोमीत्यवददिति सम्बन्धः । संवृता लीना अस्य विप्रस्य गृहे उक्तं वचनं शुश्राव ।।७२।।

**चट्टि—** कुतः कस्माद्धेतोः विप्ररुदितं विप्ररोदनं इति जानीहि । अतः अस्य रोदनस्य योग्यं प्रतीकारं च विधास्ये करोमीत्यवददिति सम्बन्धः । सा च कुन्ती शीघ्रं प्रययौ । सा कुन्ती संवृता लीनैव अस्य विप्रस्य गृहे सकलं वचनं उक्तं वचनं शुश्राव । सः विप्रवरः तदा प्रियामाह ।। ७२ ।।

**दातव्य एव हि करोऽत्र च राक्षसस्य**
**साक्षाद् बकस्य गिरिसन्निभभक्ष्यभोज्यः[१] ।**
**पुंसाऽनसा च सहितानडुहा पुमांस्तु**
**नैवास्ति नोऽप्रददतां[२] च समस्तनाशः ।।७३।।**

**व्यासतीर्थीया—** सहितः अनड्वाहो येन तेन सहितानडुहः ।। ७३-७५ ।।

**वेदाङ्गतीर्थीया—** साक्षात् गिरिसन्निभभक्ष्यभोज्यः अनुपचरितपर्वतसमानभक्ष्यभोज्योपेतः । पुंसा सहितानुडुहा अनुडुभ्यां सहितेन अनसा शकटेन च युक्तः ।। ७३ ।।

**वादिराजतीर्थीया—** 'गिरिसन्निभभक्ष्यभोज्यः' इत्यत्र साक्षाद्गिरिसन्निभं भक्ष्यं भोज्यं अन्नं यस्मिन्निति विग्रहः । सहितौ अनड्वाहौ यस्य तेन अनसा पुंसा च सहितः ।। ७३-७४ ।।

**मधुसूदनीया—** ।। **दातव्य एव हीति** ।। हिशब्देन 'वेतनं तस्य विहितं शालिप्रस्थस्य भोजनम् । महिषौ पुरुषश्चैको यस्तमादाय गच्छति ।।'(BORI-148.6) इत्यादिपर्ववचनं सूचयति । अनो वहतीत्यनडुहः महिषस्तेनेत्यर्थः । जात्यभिप्रायेणैकवचनम् ।। ७३ ।।

**वरदराजीया—** किमिति? अत्र अस्य रक्षसो बकस्य साक्षात् मुख्यतः करो देयः । कीदृशः करः? गिरिसन्निभे भक्ष्यभोज्ये यत्र स तथा पर्वतोपमभक्ष्यभोज्यादिकं इत्यर्थः । सोऽपि पुंसा पुरुषेण सहितः तथा अनडुहा बलीवर्देन सहितेन अनसा शकटेन च सह दातव्यः । भक्ष्यभोज्यादिसम्पादनं कर्तुं शक्यते । पुमांस्तु दातुं नास्ति । अप्रददतां पुमांसं अप्रयच्छतां नोऽस्माकं समस्तनाशः स्यात् । सर्वान् भक्षयिष्यतीत्यर्थः ।।७३।।

**अनन्तभट्टीया—** अनसा शकटेन सह अनडुहतो यस्य तत् सहितानुडुहः तेन सह । अप्रददतां भयात् ।। ७३-७४ ।।

---

१. 'गिरिसन्निभभक्षभोज्यः' इति जनार्दनीय-चट्टीपाठः ।

२. चट्टीटिप्पण्यां 'नो प्रददताम्' इत्यपि पदविभागः ।

**जनार्दनीया–** साक्षाद्गिरिसन्निभभक्षभोज्यः अनुपचरितपर्वतसमानभक्षभोज्यः । पुंसा पुरुषेण । सहितानडुहा अनडुभ्यां सहितेन अनसा शकटेन च युक्तः करः दातव्यः । नोऽस्माकं तु विशेषेण पुमानेव नास्ति । अन्नादिकं तिष्ठतीति भावः । अप्रददतां पुरुषमप्रयच्छतां नः समस्तनाशः स्यात्, स्त्रीपुत्रादीन् भक्षयिष्यतीत्यर्थः ।।७३।।

**अतिविशद–** 'दातव्यमेव च करोऽय च राक्षसस्य साक्षाद्बकस्य गिरिसन्निभभक्ष्यभोज्यः' इत्यत्र जनाः अतिभक्षणशीलं दृष्ट्वा 'अयं बकः' इति वदन्ति । तथा नायमिति सूचनार्थं 'साक्षात्' इत्युक्तम् । साक्षात् मुख्य इति वा । अद्य एतस्मिन्नेव काले नतु अद्यैव । तथात्वे 'भीमः परेद्युः'(श्लो-८७) इत्युत्तरवाक्येन विरोधात् ।। ७३-७८ ।।

**भारतश्री–** बकस्य साक्षात् दातव्यः । न तु व्यवधानेनान्यमुखतः । अतः समग्रं दातव्यमिति भावः ।। ७३-७४ ।।

**गूढकर्तृक–** 'दातव्यमेव हि करो..भक्ष्यभोज्यम्' इत्यत्र जनाः अतिभक्षणशीलं दृष्ट्वा 'अयं बकः' इति व्यवहरन्ति तथा नायमिति सूचनार्थं 'साक्षात्' इत्युक्तम् ।। ७३-१४५ ।।

**चट्टि–** किमिति? साक्षात् अनुपचारतः गिरिसन्निभभक्षभोज्यः पर्वतसमानभक्षभोज्यः पुंसा पुरुषेण सहितानडुहा अनो वहत इति अनडुहौ महिषौ ताभ्यां सहितेन अनसा शकटेन च युक्तः करः अद्य बकस्य राक्षसस्य दातव्य एव हि । नोऽस्माकं तु विशेषेण पुमानेव नास्ति । अप्रददतां पुरुषमप्रयच्छताम् । नः समस्तनाशः स्यात् । स्त्रीपुत्रादीन् भक्षयिष्यतीत्यर्थः । 'प्रददताम्' इति पदविभागे सति करं प्रयच्छतां निर्धनानां नः समस्तनाशः गृहे विद्यमानसमस्तवस्तूनां नाशः स्यादित्यर्थः । हिशब्देन 'वेतनं तस्य विहितं शालिग्रासस्य भोजनम् । महिषौ पुरुषश्चैव यस्तमादाय गच्छति ।।' इत्यादिपर्ववचनं सूचयति ।।७३।।

[1]अन्यत्र याम इति पूर्वमुदाहृतं मे
नैतत् प्रिये तव मनोगतमास तेन ।
यास्यामि राक्षसमुखं स्वयमेव मर्तुं
भार्यैनमाह न भवानहमत्र यामि ।।७४।।

**वेदाङ्गतीर्थीया–** भवान् न यातु ।। ७४ ।।

**मधुसूदनीया–** ।। **नैतत्प्रिये तव मनोगतमासेति** ।। अन्यत्र याम इत्यभिहितेऽपि अत्र पितृगृहस्य सत्वात् त्वया न गतमिति भावः । तथाचोक्तम्- 'इह जाता विवृद्धाऽस्मि पिता माता ममेति वै । उक्तवत्यसि दुर्मेधे याच्यमाना मयाऽसकृत् ।।' इत्यादिपर्वणि (१७१.४४)।। ७४ ।।

---

१. 'यतितं वै मया पूर्वं वेत्थ ब्राह्मणि तत्तथा । क्षेमं यतस्ततो गन्तुं त्वया तु मम न श्रुतम् ।।' इत्यादिपर्वणि-१७१.४३.

**वरदराजीया–** एतद्भयादेव अन्यत्र देशान्तरं प्रतियामो गच्छामः इति मे मया पूर्वमेव उदाहृतम् । हे प्रिये! एतत् मयोक्तं ते मनोगतं अङ्गीकृतं नास न बभूव । तेन कारणेन दातव्यपुरुषान्तराभावादित्यर्थः । स्वयमेवाहं मर्तुं राक्षसमुखं यास्यामि इति । भार्या एनं विप्रमाह । न भवान् गच्छतु किन्तु अहमेव यामि गच्छामि ।।७४।।

**अनन्तभट्टीया–** (भवान्) न गच्छतु ।।७४।।

**जनार्दनीया–** अन्यत्र स्वग्रामादन्यत्र । मनोगतं मनसाङ्गीकृतम् । तेन कारणेन । न भवान् तं गच्छेत्यर्थः ।।७४।।

**भावचन्द्रिका–** ।। **नैतदिति** ।। इह माता पिता चास्ते जन्मभूमिश्च मम इत्यादिप्रकारेण।।७४-७८।।

**चट्टि–** हे प्रिये! अन्यत्र स्वग्रामादन्यत्र याम इति पूर्वं मे मयोदाहृतं एतद्वाक्यं तव मनोगतं नास । तेन कारणेन मर्तुं राक्षसमुखं स्वयमेव यास्यामि इति विप्रः, भार्यामाहेति शेषः । भार्या एनं विप्रमाह । अहमत्र यामीति । अन्यत्र याम इत्यभिहितेऽपि तत्र पितृगृहस्य सत्वात् तया न गतमिति भावः । तथाचोक्तम्- 'इह जाता विवृद्धा च पिता माता ममेति च । उक्तवत्यसि दुर्मेधे याच्यमाना मयाऽसकृत् ।।' इत्यादिपर्वणि ।। ७४ ।।

**[1]अर्थे तवाद्य तनुसन्त्यजनादहं स्यां**
**लोके सतीप्रचरिते[2] तदृते त्वधश्च ।**
**[3]कन्याऽह [4]चैनमहमेव न कन्ययाऽर्थ**
**इत्युक्त आह धिगिति स्म स विप्रवर्यः ।।७५।।**

**वेदाङ्गतीर्थीया–** सतीप्रचरिते पतिव्रताभिः प्राप्ये लोके । अहमेव यामि ।। ७५ ।।

**वादिराजतीर्थीया–** 'लोके सतीप्रचरिते' इत्यत्र लोके प्रकृष्टचरिते सती विद्यमाना स्यां अहमपि तन्मध्ये पठ्यमाना स्यामिति सम्बन्धः । यद्वा सतीप्रचरिते सत्या पतिव्रतया प्रकर्षेण चरिते गते । 'चर गतिभक्षणयोः' इति धातोः । लोके स्वर्गलोके स्यामिति सम्बन्धः ।। ७५ ।।

---

१. 'भार्या पुत्रोऽथ दुहिता सर्वमात्मार्थमिष्यते । व्यथां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र च ।। एतद्धि परमं नार्याः कार्यं लोके सनातनम् । प्राणानपि परित्यज्य यद्भर्तुर्हितमाचरेत् ।।' इत्यादिपर्वणि-१७२.३-४.

२. 'सती प्रचलिते' इति अनन्तभट्टीयपाठः ।

३. 'आत्मा पुत्रः सखी भार्या कृच्छ्रं तु दुहिता किल । स कृच्छ्रान्मोचयात्मानं मां च धर्मे नियोजय ।।' इत्यादिपर्वणि-१७३.११.

४. 'चैनमहमेमि' इति चट्टीपाठः ।

**मधुसूदनीया–** ।। **लोके सतीप्रचरितेति** ।। 'पतिव्रतानां लोकं च व्रजन्ते सोऽन्वपश्यत' इति (५१.४१) गदापर्ववचनात् पातिव्रत्येन महान् लोकोऽस्तीति भावः ।। ७५-७८ ।।

**वरदराजीया–** तवार्थे त्वदर्थे तनुसन्त्यजनात् देहत्यागेन सतीभिः पतिव्रताभिः प्रचरिते सञ्चरिते लोके अहं स्याम्, स्थितेति शेषः । तदृते पत्यर्थं तनुसन्त्यजनादृते अधश्च अधोगता स्यामित्यर्थः । कन्या विप्रस्य, अहं राक्षसं प्रत्येमि । यतः कन्यया अर्थः प्रयोजनं नास्तीत्युक्तः स विप्रवरो मां धिगित्याह स्म ।।७५।।

**अनन्तभट्टीया–** तवार्थे । सतीप्रचलिते पतिव्रतासेविते स्यां तिष्ठेयम् इति स्वयं तत् सन्त्यजन् अधः नरके स्याम् ।। ७५।।

**लघ्वनन्तभट्टीया–** तवार्थे । सतीप्रचलिते पतिव्रतासेविते स्यां तिष्ठेयम् । तव तनुं सन्त्यज्य अधः नरके स्याम् ।। ७५ ।।

**जनार्दनीया–** तवार्थे त्वदर्थे । सतीप्रचरिते सतीभिः पतिव्रताभिः, प्रचरिते प्राप्ते लोके अहं स्यां भूयासम् । तदृते त्वदर्थं देहत्यागाभावात् अधश्च अधोलोके स्यामित्यर्थः । अर्थः प्रयोजनम् ।।७५।।

**भावचन्द्रिका–** 'न कन्यया' इत्यस्य आदावस्या दानस्यापि परित्यागादिति भावः ।। ७५ ।।

**भारतश्री–** न कन्यायार्थः लौकिकः । प्रत्युत पितृधनं परिगृह्य पतिगेहं गच्छति ।। ७५-७८ ।।

**चट्टि–** तवार्थे त्वदर्थं अद्य तनुसन्त्यजनात् देहत्यागात् अहं सतीप्रचरिते सतीभिः पतिव्रताभिः प्रचरिते प्राप्ते लोके स्यां भूयासम् । तदृते त्वदर्थं देहत्यागाभावे अधः अधोलोकश्च स्यादित्यर्थः । 'पतिव्रतानां लोकं च व्रज तं सान्त्वपयत' इति गदापर्ववचनात् । पातिव्रत्ये महान् लोको अस्तीति भावः । अथ कन्या चैनं विप्रमाह । किमिति? अहमेमि कन्यया अर्थः प्रयोजनं नास्ति इति कन्ययोक्तः सः विप्रवर्यः धिगित्याह, स्वस्य जन्मेति शेषः ।। ७५ ।।

**कन्योदिता बत कुलद्वयतारिणीति**
**जाया सखेति वचनं श्रुतिगं सुतश्च ।**
**आत्मैव तेन न तु जीवनहेतुतोऽहं**
**धीपूर्वकं [1]व्रशनके प्रतिपादयामि ।।७६।।**

**व्यासतीर्थीया–** न कन्ययार्थ इत्यस्योत्तरार्थमाह– **कन्येति** ।। 'तवार्थे यामि' इत्यस्योत्तरमाह– **जायेति** ।। सख्युर्मरणानुज्ञा न सुखायेति भावः । आत्मनो हिताय यथा यतते तथा सुतोऽप्यसौ मर्तुमनुज्ञातव्यः ।। ७६-७८ ।।

---

१. 'नृशनके' अनन्तभट्टीयपाठः ।

**वेदाङ्गतीर्थीया–** 'सखा ह जाया' (ऐ.ब्रा-७.१३.८) इति श्रुत्यनुवादेन जाया सखेति वचनम् इत्युक्तम् । न्रशन एव न्रशनकः । स्वार्थे कप्रत्ययः ।। ७६-७७ ।।

**वादिराजतीर्थीया–** 'जाया सखेति वचनं श्रुतिगम्' इत्यनेन 'सखा ह जाया कृपणं ह दुहिता ज्योतिर्हि पुत्र' इति श्रुतिं गृह्णाति । दुहिता कृपणं दुहिता पुत्री स्वकुलस्य भर्तृकुलस्य च तारकत्वात् कृपापात्रमित्यर्थः । अत एव वतेत्यनुकम्पावाचकं पदं प्रयुक्तम् । 'सुतश्च आत्मैव' इत्यनेन 'आत्मा वै पुत्रनामासि सञ्जीव शरदः शतम्' (शत.ब्रा.१४खं.९अ.४ब्रा.२६) इति श्रुतिं गृह्णाति । मध्यमपुरुषप्रयोगात् सः त्वं जीवेत्यर्थः । ना अशनं यस्य सः न्रशनः न्रशन एव न्रशनकः । स्वार्थे कप्रत्ययः । ना एव अशनं न्रशनं तेन कं सुखं यस्येति वा । प्रतिपादयामि एतत्त्रितयं च न दिशानीत्यर्थः ।। ७६ ।।

**वरदराजीया–** वतेति खेदे । कुलद्वयस्य मातापितृकुलद्वयस्य तारिणी नरकात् सन्तारिणी उदिता आगमेषु ।। **जाया सखेति** ।। 'सखा ह जाया कृपणं ह दुहिता' इति श्रुतिगं वेदगतं वचनमस्ति । 'सुतश्च आत्मैव' इत्यपि वचनं 'आत्मा वै पुत्रनामासि' इत्येवं रूपं अस्ति । अतो जीवनहेतुतः स्वप्राणरक्षणार्थं धीपूर्वकं बुद्धिपूर्वकम् । ना अशनं भक्ष्यं यस्यासौ तथा तस्मिन् न्रशनके । राक्षसे तदर्थं न प्रतिपादयामि । कन्यां वा पुत्रं वा भार्यां वा न प्रयच्छामीत्यर्थः ।।७६।।

**अनन्तभट्टीया–** जीवनहेतुतः आत्मरक्षणार्थम् । ना अशनं यस्यासौ नृशनकः राक्षस इत्यर्थः ।।७६।।

**लघ्वनन्तभट्टीया–** कुलद्वयतारिणीत्युदिता ।। ७६-७७ ।।

**जनार्दनीया–** कुलद्वयस्य मातापितृकुलद्वयस्य तारिणी नरकात् तारिणी उदिता । 'जाया सखा' इति 'सुतश्च आत्मैव' इत्यर्थप्रतिपादकं 'सखा ह जाया' इति, 'आत्मा वै पुत्रनामासि' इति श्रुतिगं वचनमस्ति । 'सखा ह जाया' इति श्रुत्यनुवादेन, जाया सखेति वचनं श्रुतिगम् इत्युक्त्वा, 'सुतश्च आत्मैव' 'आत्मा वै पुत्रनामासि' इति श्रुत्यनुवादः, तेन कारणेन जीवनहेतुतः स्वप्राणरक्षणार्थं धीपूर्वकं बुद्धिपूर्वकं न्रशनके ना मनुष्यः अशनं भक्ष्यं यस्यासौ न्रशनः । स्वार्थे कप्रत्ययः । तस्मिन् न्रशनके राक्षसे न प्रतिपादयामि भार्यकन्यासुतान् न प्रयच्छामि ।।७६।।

**ताम्रपर्णी–** ।। **जाया सखेति वचनं श्रुतिगमिति** ।। 'सखा हि जाया कृपणं दुहिता ज्योतिर्हि पुत्र' इति श्रुतिरनेन गृहीतेति ज्ञेयम् । 'सुतश्चात्मा' इत्यनेन 'आत्मा वै पुत्रनामासि' इति श्रुतिरुपात्ता ।। ७६-७८ ।।

**अतिविशद–** 'कन्योदिता वत कुलद्वयतारिणीति' इति कुलद्वयमुच्यते । तत्तु अयुक्तम् । 'पितृणां तु चतुर्विंशो मातृणां विंशतिस्तथा । षोडशैव भगिन्यास्तु दुहितुर्द्वादशस्तथा ।। एकादशस्तु श्वशुरे पितृष्वस्त्रयार्दशैव तु । अष्टौ च मातृभगिनी कुलमेकोत्तरं शतम् ।।' इति कुलानां एकोत्तरशतत्वात् कुलद्वयतारिणीति कथमुक्तमिति चेन्न । कुलद्वय एव अन्तर्भावमभिप्रेत्य तथोक्तिरित्यदोषः । यद्वा-

'मातृमुख्यास्तु यास्तिस्रः मातामह्यादिभिस्त्रयः । आत्मगोत्रेण संयुक्तं सप्तगोत्रं प्रकीर्तितम् ।। आत्मगोत्रं समारभ्य एकैकस्य चतुर्दश । मित्रस्वामिगुरूणाश्च कुलमेकोत्तरं शतम् ।।' इति ।। ७६-७८ ।।

**चट्टि–** कन्या कुलद्वयतारिणी इत्युभयकुलतारिणीत्युदिता । 'जाया सखा' इति श्रुतिगं वचनमस्ति सुतश्च आत्मैव 'आत्मा वै पुत्रनामासि' इति श्रुत्यनुवादः तेन कारणेन अहं जीवनहेतुतः स्वप्राणरक्षणार्थं धीपूर्वकं बुद्धिपूर्वकं न्रशनके ना मनुष्यः अशनं भक्ष्यं यस्यासौ न्रशनः । स्वार्थे कप्रत्ययः । तस्मिन् न्रशनके राक्षसे न प्रतिपादयामि भार्याकन्यासुतान् न प्रयच्छामि इत्याहेति पूर्वेण सम्बन्धः ।।७६।।

**एवं रुदत्सु सहितेषु [1]कुमारकोऽस्य**
**प्राह स्वहस्तगतृणं प्रतिदर्श्य चैषाम् ।**
**एतेन राक्षसमहं निहनिष्य एवे-**
**त्युक्ते सुवाक्यमनु सा प्रविवेश कुन्ती ।।७७।।**

**वादिराजतीर्थीया–** 'सुवाक्यमनु सा प्रविवेश' इत्यत्र 'सुवाक्यम्' इत्यनेन तृणेन हन्मीति बालकवाक्यस्य शोभनवाक्यतया शकुनरूपत्वात् भीमोऽपि वकं तृणीकृत्य हन्तीति निश्चित्य प्रविवेशेति सूचयति ।। ७७ ।।

**वरदराजीया–** एवं सहितेषु मिलितेषु अस्य विप्रस्य कुमारको बालः एषां पित्रादीनां स्वहस्तगतं स्वहस्ते धृतं तृणं प्रतिदर्श्य दर्शयित्वा 'एतेन तृणेनाहं हनिष्ये' इत्युक्ते सति, कुमारकेणेति शेषः । सुवाक्यमनु शकुनरूपं वाक्यं श्रुत्वैव कुन्ती विप्रगृहं प्रविवेशेत्यर्थः ।।७७।।

**जनार्दनीया–** सहितेषु मिलितेषु । अस्य विप्रस्य । एषां पित्रादीनाम् । एतेन तृणेन । सुवाक्यमनु शुभवाक्यमनु शकुनरूपवाक्यं श्रुत्वैव, कुन्ती विप्रगृहं प्रविवेशेत्यर्थः ।। ७७ ।।

**चट्टि–** सहितेषु मिलितेषु एवं रुदत्सु सत्सु अस्य विप्रस्य कुमारकः स्वहस्तगतृणं एषां पित्रादीनां प्रतिदर्श्य दर्शयित्वा प्राह । किमिति? 'एतेन तृणेनैव राक्षसमहं निहनिष्ये' इत्युक्ते सति सुवाक्यमनु शुभवाक्यमनु सा कुन्ती प्रविवेश, गृहमिति शेषः ।।७७।।

**[2]पृष्टस्तयाऽऽह स तु विप्रवरो बकस्य वीर्यं बलं च दितिजारिभिरप्यसह्यम् ।**
**संवत्सरत्रययुते दशके करं च प्रातिस्विकं दशमुखस्य च मातुलस्य ।।७८।।**

---

१. 'ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् । अनेनाहं हनिष्यामि राक्षसं पुरुषादकम् ।। ...अयं काल इति ज्ञात्वा कुन्ती समुपसृज्य तान् । गतासूनमृतेनेव जीवयन्तीदमब्रवीत् ।।' इत्यादिपर्वणि-१७३.२४-२६.

२. 'समीपे नगरस्यास्य बको वसति राक्षसः । इतो गव्यूतिमात्रेऽस्ति यमुनागह्वरे गुहा ।। तस्यां घोरः स वसति जिघांसुः पुरुषादकः । बकाभिधानो दुष्टात्मा राक्षसानां कुलाधमः ।। ...प्रबलः कामरूपी च राक्षसस्तु महाबलः । तेनोपसृष्टा नगरी वर्षमद्य त्रयोदशम् ।।' इत्यादिपर्वणि- १७४.४-७.

**वेदाङ्गतीर्थीया–** दशके अतीते । प्रातिस्विकं प्रतिप्रति दातव्यं करं चाऽह ।। ७८ ।।

**वादिराजतीर्थीया–** 'वीर्यं बलं च' इत्यत्र वीर्यं बलं च प्रातिस्विकं गृहं गृहं प्रति दीयमानं करञ्च तया पृष्टः आह चेति चशब्दसम्बन्धः । तुशब्देन बकीयसकलकथायाः विशिष्य कथनं सूचयति ।।७८-७९।।

**वरदराजीया–** तया कुन्त्या पृष्टः सः विप्रवरः दशमुखस्य मातुलस्येति व्यधिकरणे षष्ठी । दशमुखस्य यो मातुलः तस्य बकस्य दितिजारिभिः देववैरैरप्यसह्यं वीर्यं बलं चाह । तथा संवत्सरत्रययुते दशके त्रयोदशवर्षे प्रातिस्विकं प्रतिस्विदीयमानं करं च आह ।।७८।।

**अनन्तभट्टीया–** दशमुखस्य मातुलस्य । देयं करञ्च शशंस ।। ७८ ।।

**जनार्दनीया–** 'पृष्टस्तयाह' इत्यत्र तया आहेति पदच्छेदः । दितिजारिभिः दितिजाः दैत्यास्तेषां अरयः शत्रवो देवास्तैरपि असह्यं सोढुमशक्यम् । संवत्सरत्रययुते दशके अतीते सति प्रातिस्विकं प्रतिदातव्यं करं चाह । त्रयोदशवर्षानन्तरं एकैकेन गृहस्वामिना एकैकस्मिन् दिवसे अन्नात्मकं करं दातव्यमित्याहेत्यर्थः ।।७८।।

**चट्टि–** सः विप्रवरः तया कुन्त्या पृष्टः सन् दशमुखस्य रावणस्य मातुलस्य बकस्य वीर्यं दितिजारिभिः दितिजाः दैत्यास्तेषां अरयः शत्रवो देवास्तैरपि असह्यं सोढुमशक्यं बलं च संवत्सरत्रययुते दशके अतीते सति प्रातिस्विकं प्रति प्रति गृहस्वामिना दातव्यं करं चाह । त्रयोदशवर्षानन्तरं एकैकेन गृहस्वामिना एकैकस्मिन् दिवसे अन्नात्मकं करं दातव्यमित्याहेत्यर्थः ।। ७८ ।।

**श्रुत्वा तमुग्रबलमत्युरुवीर्यमेव रामायणे रघुवरोरुशरातिभीतम् ।**
**विष्टं बिलेष्वथ नृपान् वशमाशु कृत्वा भीत्यैव तैस्तदनु दत्तकरं ननन्द ।।७९।।**

**व्यासतीर्थीया–** रामायणे रामविक्रान्तौ ।। ७९ ।।

**वेदाङ्गतीर्थीया–** रामायणे श्रीरामविक्रान्तिकाले । अथ रामतिरोधानानन्तरम् । श्रुत्वा ननन्देति सम्बन्धः ।। ७९ ।।

**मधुसूदनीया–** रामायणे रामराज्यपालनकाले । विष्टं बिलेष्विति पूर्वेणान्वयः । इदानीमेकचक्रायाः क्रोशद्वयव्यवहितबिले तिष्ठन्तमित्यर्थः । 'इतो गव्यूतिमात्रेऽस्ति यमुनागह्वरे गुहा । ईशो जनपदस्याऽस्य पुरस्य च महाबलः ।।' इत्यादिपर्वणि (१७४.४-६)।। ७९-९७ ।।

**वरदराजीया–** कुन्ती तं बकं श्रुत्वा ननन्द जहर्षेति सम्बन्धः । कथम्भूतमित्याकाङ्क्षायां उग्रबलमित्यादि सम्बन्धनीयम् । रामायणे रामविक्रान्तौ रघुवरस्य श्रीरामस्य उरुशरैः अतिभीतमत एव बिलेषु गुहासु विष्टम्, अथ रामावतारानन्तरं नृपान् वशं स्वाधीनान् कृत्वा तिष्ठन्तं तै नृपैः भीत्यैव बकस्य भयात् । तदनु काले दत्तः करः यस्य तम् ।।७९।।

**अनन्तभट्टीया–** रामायणे रामवृत्तान्ते । रामे विद्यमान इत्यर्थः । कुन्ती श्रुत्वा ननन्द इति हेतोः ननन्द ।। ७९-८० ।।

**लघ्वनन्तभट्टीया–** कुन्ती श्रुत्वा यास्याम इति । रामायणे रामविक्रान्तिकाले ।।७९-९१।।

**जनार्दनीया–** कुन्ती रामायणे श्रीरामविक्रान्तिकाले । रामे भुवि तिष्ठतीत्यर्थः । रघुवरोरुशरातिभीतं रघुवरस्य रघुनाथस्य उरुशरैरुत्तमबाणैः अतिभीतं अत्यन्तं भीतियुक्तम्, अत एव बिलेषु विष्टं प्रविष्टम् । लीनमित्यर्थः । अथ रामावतारानन्तरं नृपान् वशमाशु कृत्वा, तैर्नृपैर्भीत्यैव राक्षसभयादेव तदनु दत्तकरं तस्य राक्षसस्य अनुकूलत्वेन दत्तकरं तं बकं श्रुत्वा, ननन्देत्यन्वयः ।।७९।।

**ताम्रपर्णी–** रामायणे रामविक्रान्तौ ।। ७९ ।।

**अतिविशद–** 'श्रुत्वा तमुग्रबलमत्युरुवीर्यमेव रामायणे रघुवरोरुशरातिभीतम्' इत्यस्मिन् श्लोके 'ब्राह्मणवचनं श्रुत्वा कुन्ती ननन्द' इति केचित् । तत् रक्षः रामायणे रामः अयनं आश्रयो यस्य कालादेः तत् रामायणं तस्मिन् कालादौ इत्यर्थः । रामायणरूपशास्त्रे वा । तं रामं श्रुत्वा । कथम्भूतम्– उग्रबलम् ।। पुनः कीदृशम्– **अत्युरुवीर्यं रघुवरोरुशरातिभीतम्** ।। अथ नृपान् वशे कृत्वा भीत्यैव तदनु दत्तकरं ननन्देति । 'कुन्ती ननन्द' इति पक्षे 'तदनु' इत्येकं पदम् । अस्मिन् पक्षे 'तत्' 'अनु' इति पदद्वयम् ।। ७९-११४ ।।

**भावचन्द्रिका–** रामायणे रामस्यायनमाश्रयः कालः रामायणं तस्मिन् रामाश्रयकाले, रामेऽपि विद्यमाने इति यावत् । रामे सति "तच्छरीरतान्तम् । अथ रामतिरोधानन्तरं नृपैर्दत्तकरं श्रुत्वा, कुन्ती नन्दनं अश्रावयद्वा, कथामिति शेषः । इदानीन्तनविप्रस्य (कथं) बहुयुगान्तरितज्ञानमित्यतः "रामे सतीत्याद्युक्तप्रकारेण रामायणे कथितं श्रुत्वा ननन्द । विप्रो रामायणे श्रुतमाह । तेन साऽपि ततः श्रुत्वेति ।। ७९-८५ ।।

**भारतश्री–** रामायणे श्रीरामविक्रमणकाले ।। ७९ ।।

**चट्टि–** कुन्ती उग्रबलमपि उरुवीर्यं च रामायणे श्रीरामेण राज्यपरिपालनकाले रघुवरोरुशरातिभीतं रघुवरस्य श्रीरामस्य उरुशरैरुत्तमबाणैः अतिभीतं अत्यन्तं भीतियुक्तं अत एव बिलेषु विष्टं प्रविष्टं लीनमित्यर्थः । अथ इदानीं एकचक्रायाः क्रोशद्वयव्यवहिते बिले तिष्ठन्तमित्यर्थः । 'इतो गव्यूतिमात्रेऽस्ति यमुनागह्वरे गुहा । ईशो जनपदस्यास्य पुरस्य च महाबलः ।।' इत्यादिपर्वणि । नृपान् आशु वशं कृत्वा, तैर्नृपैर्भीत्यैव भयादेव तदनु दत्तकरं तस्य राक्षसस्य अनुकूलत्वेन दत्तकरं तं बकं श्रुत्वा ननन्देत्यन्वयः ।।७९।।

> **एवं बलाढ्यममुमाशु निहत्य भीमः**
> **कीर्तिं च धर्ममधिकं प्रतियास्यतीह[१] ।**

---

१. 'अर्थौ द्वावपि निष्पन्नौ युधिष्ठिर भविष्यतः । प्रतीकारश्च वासस्य धर्मस्य चरितो महान् ।। आदिपर्वणि-१७६.२७.

**सर्वे वयं च तमनु [१]प्रगृहीतधर्मा**
**यास्याम इत्यवददाशु धरासुरं तम् ॥८०॥**

**व्यासतीर्थीया–** तं श्रुत्वा कुतो ननन्देत्यत आह– **एवमित्यादि** ॥ इति हेतोर्ननन्देति सम्वन्धः ॥८०-८१॥

**वेदाङ्गतीर्थीया–** किमिति ननन्देत्यत आह– **एवमिति** ॥ यास्यामः कीर्तिं च इति मत्वा ननन्द ॥८०-८२॥

**वादिराजतीर्थीया–** 'यास्याम इत्यवदत्' इत्यत्र इत्यालोच्येति योग्यपदाध्याहारो ज्ञेयः ॥८०-८१॥

**सत्याभिनवतीर्थीया–** तत्रैव 'एवं वलाढ्यममुमाशु..' इति श्लोकः । तस्यार्थः- भीमः प्र विष्णोः प्रसादात् एवं वलाढ्यममुं इह अस्यां भवमहापदवस्थायां आशु निहत्य अधिकं धर्मं प्रति सम्यक् कीर्तिं च यास्यति । सर्वे वयं तमनु भीममनु गृहीतधर्माः प्राप्तधर्माः सन्तः कीर्तिं यास्याम इति कुन्ती तं धरासुरं आशु अवददिति । एतेन यास्यतीत्यनेन पूर्णत्वात् प्रतीत्येतत् व्यर्थमिति दूषणं निरस्तम् । प्रतीत्यस्य यास्यतीत्यनेन अन्वयो न किन्तु कीर्तिमित्यनेनान्वय इत्यभ्युपगमात् । एतेनैव तमनु गृहीतधर्मा इत्येव वक्तव्यम् । तमनु प्रगृहीतधर्मा इति कथनमनुपपन्नमिति चोद्यं प्रत्युक्तम् । प्र इत्यस्य गृहीतेत्यनेन अन्वयमनङ्गीकृत्य विष्णुवाचकत्वं षष्ठ्यन्तत्वं प्रसादात् इत्यध्याहृतेनान्वयः इति चाङ्गीकारात् ॥८०॥

**वरदराजीया–** कुन्ती कस्मान्ननन्देत्यत आह– **एवमिति** ॥ एवमुक्तरीत्या भीमः वलाढ्यं अमुं बकं हत्वा कीर्तिं अधिकं धर्मं यास्यति । इह लोके वयं सर्वे कीर्तिं अधिकं धर्मं च यास्यामः । यतः तमनु भीममनु प्रगृहीतधर्माः अङ्गीकृतधर्माः इत्यर्थः । इति हेतोर्ननन्देति पूर्वेण सम्वन्धः । आशु तं धरासुतं विप्रमाह ॥८०॥

**जनार्दनीया–** कुन्ती किमर्थं ननन्देत्यत आह– **एवमिति** ॥ एवमुक्तप्रकारेण । इह पुर्याम् । तमनु भीममनु प्रगृहीतधर्मा वयं कीर्तिं धर्मं च यास्यामः इति मत्वा, ननन्देति पूर्वेणान्वयः । धरासुरं विप्रम् ॥८०॥

**ताम्रपर्णी–** कुन्तीं श्रुत्वा प्रगृहीतधर्मा वयं कीर्तिं यास्याम इति ननन्देत्यन्वयः ॥ ८०-८१ ॥

**भारतश्री–** यास्यामः शुभां गतिमिति (ननन्द इति) अन्वयः ॥ ८० ॥

**चट्टि–** कुन्ती किमर्थं ननन्देत्यत आह– **एवमिति** ॥ एवमुक्तप्रकारेण वलाढ्यं अमुं वकासुरं भीमः आशु निहत्य कीर्तिं अधिकं धर्मं चेह पुर्यां प्रतियास्यति । वयं सर्वे च तमनु भीममनु प्रगृहीतधर्मा प्राप्तधर्माः सन्तः कीर्तिं धर्मं च यास्यामः इति मत्वा, ननन्देति पूर्वेणान्वयः । अथ धरासुरं विप्रवरं आश्ववदत् ॥ ८० ॥

---

१. सत्याभिनवतीर्थीये 'प्र गृहीतधर्मा' इत्यसंहिततया पठ्यते ।

**[1]सन्ति स्म विप्रवर पञ्च सुता ममाद्य**
**तेष्वेक एव नरवैरिमुखाय यातु ।**
**इत्युक्त [2]आह स न ते सुतवध्ययाऽहं**
**पापो भवानि[3] तव हन्त मनोऽतिधीरम् ॥८१॥**

**वरदराजीया–** हे विप्रवर! अद्य मम पञ्च सुताः सन्ति । तेषु पञ्चसु एक एव नरवैरिमुखाय राक्षसमुखाय यातु गच्छतु । स विप्रः आह । किमिति? ते सुतस्य वध्यया हिंसया अहं पापो न भवामीति[4] । तव मनः अतिधीरमतिकठिनं हन्त ॥८१॥

**अनन्तभट्टीया–** अतिधीरं अतिकठिनम् ॥ ८१ ॥

**जनार्दनीया–** अद्य नरवैरिमुखाय राक्षसमुखाय यातु गच्छतु । वध्यया वधेन । तव मनः । अतिधीरं अत्यन्तधैर्ययुक्तं इत्यर्थः । हन्त आश्चर्यम् ॥ ८१ ॥

**चट्टि–** किमिति? हे विप्रवर! मम पञ्चसुताः सन्ति । तेषु सुतेष्वेक एव अद्य नरवैरिमुखाय राक्षसमुखाय यातु गच्छतु इति तयोक्तः सः विप्रवरः ते सुतस्य वध्यया वधेन अहं पापः न भवानि । तव मनः अतिधीरं अत्यन्तधैर्ययुक्तं इत्यर्थः । हन्त आश्चर्यमित्याह ॥ ८१ ॥

**[5]उक्त्वैवमाह च पृथा तनये मदीये**
**विद्याऽस्ति दिक्पतिभिरप्यविषह्यरूपा ।**
**[6]उक्तोऽपि नो गुरुभिरेष नियुङ्क्त एतां**
**वध्यस्तथाऽपि न सुरासुरपालकैश्च ॥८२॥**

**व्यासतीर्थीया–** तव तनयो यदि विद्यावान् तर्हि कथं भिक्षुस्तिष्ठतीत्यत आह– **उक्त इति** ॥ विद्योपजीवनं न धर्म इत्येष एतां विद्यां नो नियुङ्क्ते । गुरुभिरपि कुतो विद्यानुपलम्भवाधः । विद्याऽप्रयोगे वध्यः स्यादित्यत उक्तम्– **वध्य इति** ॥ ८२-८६ ॥

---

१. 'मम पञ्चसुता ब्रह्मन् तेषामेको गमिष्यति । त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ॥' इत्यादिपर्वणि- १७५.३.
२. 'नाहमेतत्करिष्यामि जीवितार्थी कथञ्चन' ॥४॥'ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते' ॥७॥ इत्यादिपर्वणि-१७५.
३. 'भवामि तव' इति वरदराजीयपाठः ।
४. किं न भवानि इत्याक्षेपः ।
५. 'न चासौ राक्षसः शक्तो मम पुत्रविनाशने । वीर्यवान मन्त्रसिद्धश्च तेजस्वी च सुतो मम ॥' इत्यादिपर्वणि-१७५.१४.
६. 'गुरुणा चाननुज्ञातो ग्राहयेद्यः सुतो मम । न स कुर्यात् तथा कार्यं विद्येयति सतां मतम् ॥' इत्यादिपर्वणि-१७५.१८.

**वादिराजतीर्थीया–** 'उक्तोऽपि नो गुरुभिः' इत्यत्र गुरुभिरुक्तोऽपि एषः भीमः एतां विद्यां न नियुङ्क्ते महासङ्कटे प्राप्तेऽपि न नियुङ्क्ते । विद्योपजीवी न भवतीति भावः । तथाऽपि विद्योपजीवनाभावेऽपि वध्यो न वज्रकायत्वात् स्वभावत एव वधयोग्यो न । अतोऽस्य नराशनमुखे दानेऽपि न भीतिरिति भावः ।।८२।।

**वरदराजीया–** एवमुक्ता पृथा आह । किमिति? दिक्पतिभिः इन्द्रादिभिः अविषह्या सोढुमशक्या विद्या मदीये तनयेऽस्ति । तथापि विद्योपजीवनेन किमपि कार्यं न साधयति । किं तर्हि स्वबाहुबलेनैवेत्याह– **उक्त इति** ।। गुरुभिः अस्माभिरुक्तोऽपि प्रेरितोऽपि एतां स्वस्मिन् विद्यमानां विद्यां नो नियुङ्क्ते न प्रयोजयति । विद्योपजीवनस्य शुद्धक्षत्रियधर्मत्वाभावादिति भावः । तथापि विद्यायाः अप्रयोगेऽपि स्वबाहुबलेनैव सुरासुरपालकैः सुरपालकैः असुरपालकैः दैत्येन्द्रैरपि वध्यो न भवतीत्यर्थः ।।८२।।

**अनन्तभट्टीया–** विद्यास्ति चेत् किमिति तां नोपयुङ्क्त इत्यत आह– **उक्तोऽपीति** ।। विद्योपजीवनं न धर्म इति नो नियुङ्क्ते । गुरुभिरिति यथोक्तः । अतो न विद्यानुपलम्भबाध इति भावः । तर्हि विद्यायाः अप्रयोगे वध्यः स्यादित्यत आह– **तथापीति** ।। ८२ ।।

**जनार्दनीया–** दिक्पतिभिः इन्द्रादिलोकपालैः अविषह्यरूपा सोढुमशक्यरूपा । गुरुभिरुक्तोऽपि प्रेरितोऽपि एतां विद्यां नो नियुङ्क्ते न प्रयोजयति । तथापि अप्रयोगेऽपि स्वबाहुबलेनापि सुरासुरपालकैः देवश्रेष्ठैः ।।८२।।

**ताम्रपर्णी–** तव तनयो यदि विद्यावान् तर्हि कथं भिक्षुस्तिष्ठतीत्यत आह– **उक्त इति** ।। अपि तथापि विद्योपजीवनं न धर्म इति गुरुभिर्यत उक्तोऽत एतां विद्यां नो नियुङ्क्त इत्यर्थः । विद्याया अप्रयोगे वध्यः स्यादित्यत आह– **तथापीति** ।। स्वरूपसती विद्या प्रयोजिका न प्रयोगोऽपेक्षित इति भावः ।।८२-९१।।

**भारतश्री–** गुरुभिरस्माभिः उक्तोऽपि नो नियुङ्क्ते न प्रयोजयति । तथापि अप्रयोगेऽपि ।। ८२ ।।

**चट्टि–** पृथा कुन्ती तेनैवमुक्ता सती एनं विप्रमाह च । किमिति? मदीये तनये दिक्पतिभिः इन्द्रादिलोकपालैरप्यविषह्यरूपा विद्याऽस्ति । गुरुभिरुक्तोऽपि प्रेरितोऽपि । एषः भीमः एतां विद्यां नो नियुङ्क्ते न प्रयोजयति । तथापि अप्रयोगेऽपि सुरासुरपालकैः देवदैत्यश्रेष्ठैश्च वध्यो न भवति इत्यर्थः ।।८२।।

**उक्तैवमेत्य निखिलं च जगाद भीम**
**उद्धर्ष आस स निशम्य महास्वधर्मम् ।**
**[1]प्राप्तं विलोक्य तमतीव विघूर्णनेत्रं**
**दृष्ट्वा जगाद यमसूनुरुपेत्य चान्यैः ।।८३।।**

---

१. 'आजग्मुस्ते ततः सर्वे भैक्षमादाय पाण्डवाः । भीमसेनं ततो दृष्ट्वा आपूर्णवदनं तथा ।। बुबोध धर्मराजस्तु हर्षितं भीममच्युतम् ।।' इत्यादिपर्वणि-१७६.१-२.

**[1]सन्ति स्म विप्रवर पञ्च सुता ममाद्य**
**तेष्वेक एव नरवैरिमुखाय यातु ।**
**इत्युक्त [2]आह स न ते सुतवध्ययाऽहं**
**पापो भवानि[3] तव हन्त मनोऽतिधीरम् ॥८१॥**

**वरदराजीया–** हे विप्रवर! अद्य मम पञ्च सुताः सन्ति । तेषु पञ्चसु एक एव नरवैरिमुखाय राक्षसमुखाय यातु गच्छतु । स विप्रः आह । किमिति? ते सुतस्य वध्यया हिंसया अहं पापो न भवामीति[4] । तव मनः अतिधीरमतिकठिनं हन्त ॥८१॥

**अनन्तभट्टीया–** अतिधीरं अतिकठिनम् ॥ ८१ ॥

**जनार्दनीया–** अद्य नरवैरिमुखाय राक्षसमुखाय यातु गच्छतु । वध्यया वधेन । तव मनः । अतिधीरं अत्यन्तधैर्ययुक्तं इत्यर्थः । हन्त आश्चर्यम् ॥ ८१ ॥

**चट्टि–** किमिति? हे विप्रवर! मम पञ्चसुताः सन्ति । तेषु सुतेष्वेक एव अद्य नरवैरिमुखाय राक्षसमुखाय यातु गच्छतु इति तयोक्तः सः विप्रवरः ते सुतस्य वध्यया वधेन अहं पापः न भवानि । तव मनः अतिधीरं अत्यन्तधैर्ययुक्तं इत्यर्थः । हन्त आश्चर्यमित्याह ॥ ८१ ॥

**[5]उक्तैवमाह च पृथा तनये मदीये**
**विद्याऽस्ति दिक्पतिभिरप्यविषह्यरूपा ।**
**[6]उक्तोऽपि नो गुरुभिरेष नियुङ्क्त एतां**
**वध्यस्तथाऽपि न सुरासुरपालकैश्च ॥८२॥**

**व्यासतीर्थीया–** तव तनयो यदि विद्यावान् तर्हि कथं भिक्षुस्तिष्ठतीत्यत आह– **उक्त इति** ॥ विद्योपजीवनं न धर्म इत्येष एतां विद्यां नो नियुङ्क्ते । गुरुभिरपि कुतो विद्यानुपलम्भबाधः । विद्याऽप्रयोगे वध्यः स्यादित्यत उक्तम्– **वध्य इति** ॥ ८२-८६ ॥

---

१. 'मम पञ्चसुता ब्रह्मन् तेषामेको गमिष्यति । त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ॥' इत्यादिपर्वणि- १७५.३.
२. 'नाहमेतत्करिष्यामि जीवितार्थी कथञ्चन' ॥४॥ 'ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते' ॥७॥ इत्यादिपर्वणि- १७५.
३. 'भवामि तव' इति वरदराजीयपाठः ।
४. किं न भवानि इत्याक्षेपः ।
५. 'न चासौ राक्षसः शक्तो मम पुत्रविनाशने । वीर्यवान् मन्त्रसिद्धश्च तेजस्वी च सुतो मम ॥' इत्यादिपर्वणि- १७५.१४.
६. 'गुरुणा चाननुज्ञातो ग्राहयेद्यः सुतो मम । न स कुर्यात् तथा कार्यं विद्ययेति सतां मतम् ॥' इत्यादिपर्वणि- १७५.१८.

**वादिराजतीर्थीया–** 'उक्तोऽपि नो गुरुभिः' इत्यत्र गुरुभिरुक्तोऽपि एषः भीमः एतां विद्यां न नियुङ्क्ते महासङ्कटे प्राप्तेऽपि न नियुङ्क्ते । विद्योपजीवी न भवतीति भावः । तथाऽपि विद्योपजीवनाभावेऽपि वध्यो न वज्रकायत्वात् स्वभावत एव वधयोग्यो न । अतोऽस्य नराशनमुखे दानेऽपि न भीतिरिति भावः ।।८२।।

**वरदराजीया–** एवमुक्ता पृथा आह । किमिति[1] दिक्पतिभिः इन्द्रादिभिः अविषह्या सोढुमशक्या विद्या मदीये तनयेऽस्ति । तथापि विद्योपजीवनेन किमपि कार्यं न साधयति । किं तर्हि स्वबाहुबलेनैवेत्याह– **उक्त इति** ।। गुरुभिः अस्माभिरुक्तोऽपि प्रेरितोऽपि एतां स्वस्मिन् विद्यमानां विद्यां नो नियुङ्क्ते न प्रयोजयति । विद्योपजीवनस्य शुद्धक्षत्रियधर्मत्वाभावादिति भावः । तथापि विद्यायाः अप्रयोगेऽपि स्वबाहुबलेनैव सुरासुरपालकैः सुरपालकैः असुरपालकैः दैत्येन्द्रैरपि वध्यो न भवतीत्यर्थः ।।८२।।

**अनन्तभट्टीया–** विद्यास्ति चेत् किमिति तां नोपयुङ्क्त इत्यत आह– **उक्तोऽपीति** ।। विद्योपजीवनं न धर्म इति नो नियुङ्क्ते । गुरुभिरिति यथोक्तः । अतो न विद्यानुपलम्भबाध इति भावः । तर्हि विद्यायाः अप्रयोगे वध्यः स्यादित्यत आह– **तथापीति** ।। ८२ ।।

**जनार्दनीया–** दिक्पतिभिः इन्द्रादिलोकपालैः अविषह्यरूपा सोढुमशक्यरूपा । गुरुभिरुक्तोऽपि प्रेरितोऽपि एतां विद्यां नो नियुङ्क्ते न प्रयोजयति । तथापि अप्रयोगेऽपि स्वबाहुबलेनापि सुरासुरपालकैः देवश्रेष्ठैः ।।८२।।

**ताम्रपर्णी–** तव तनयो यदि विद्यावान् तर्हि कथं भिक्षुस्तिष्ठतीत्यत आह– **उक्त इति** ।। अपि तथापि विद्योपजीवनं न धर्म इति गुरुभिर्यत उक्तोऽत एतां विद्यां नो नियुङ्क्त इत्यर्थः । विद्याया अप्रयोगे वध्यः स्यादित्यत आह– **तथापीति** ।। स्वरूपसती विद्या प्रयोजिका न प्रयोगोऽपेक्षित इति भावः ।।८२-९१।।

**भारतश्री–** गुरुभिरस्माभिः उक्तोऽपि नो नियुङ्क्ते न प्रयोजयति । तथापि अप्रयोगेऽपि ।। ८२ ।।

**चट्टि–** पृथा कुन्ती तेनैवमुक्ता सती एनं विप्रमाह च । किमिति? मदीये तनये दिक्पतिभिः इन्द्रादिलोकपालैरप्यविषह्यरूपा विद्याऽस्ति । गुरुभिरुक्तोऽपि प्रेरितोऽपि । एषः भीमः एतां विद्यां नो नियुङ्क्ते न प्रयोजयति । तथापि अप्रयोगेऽपि सुरासुरपालकैः देवदैत्यश्रेष्ठैश्च वध्यो न भवति इत्यर्थः ।।८२।।

> **उक्तैवमेत्य निखिलं च जगाद भीम**
> **उद्धर्ष आस स निशम्य महास्वधर्मम् ।**
> **'प्राप्तं विलोक्य तमतीव विघूर्णनेत्रं**
> **दृष्ट्वा जगाद यमसूनुरुपेत्य चान्यैः ।।८३।।**

---

१. 'आजग्मुस्ते ततः सर्वे भैक्षमादाय पाण्डवाः । भीमसेनं ततो दृष्ट्वा आपूर्णवदनं तथा ।। बुबोध धर्मराजस्तु हृषितं भीममच्युतम् ।।' इत्यादिपर्वणि-१७६.१-२.

**वेदाङ्गतीर्थीया**– एत्य निखिलं च भीमे जगाद । सः निशम्य महास्वधर्मं महान्तं नारायणशत्रुनिग्रहरूपं स्वधर्मं प्राप्तं विलोक्य उद्धर्ष आस । विघूर्णनेत्रं हर्षात् विकसितनेत्रम् । अन्यैः सह ।। ८३ ।।

**वादिराजतीर्थीया**– स भीमः निशम्य मातुर्वचनं निशम्य महास्वधर्मं प्राप्तं विलोक्य विचार्य उद्धर्ष आस इत्येकोऽन्वयः । अन्यैरर्जुनादिभिश्च सहोपेत्य भीमं विघूर्णनेत्रं दृष्ट्वा जगाद । मातरं प्रति यमसूनुः जगादेत्यपरोऽन्वयः । तेन ल्यबन्ताव्ययपदस्य क्त्वाप्रत्ययान्तस्य च न वैयर्थ्यमिति ज्ञेयम् ।।८३-८६।।

**वरदराजीया**– एवमुक्त्वा भीममेत्य भीमे भीमाय निखिलं वृत्तान्तं जगाद । स भीमो निशम्य मात्रोक्तं श्रुत्वा उद्धर्षः उत्कृष्टसन्तोषः आस । उद्धर्षत्वे हेतुः– **महास्वधर्ममिति** ।। महान्तं स्वधर्मं भगवद्द्वेषिवधरूपं प्राप्तं प्रसङ्गं विलोक्य आलोच्य । तं भीमं अतीव अत्यन्तं विघूर्णनेत्रं उदितलोचनं अन्यैरर्जुनादिभिः उपेत्य युक्तः सन् जगाद ।। ८३ ।।

**अनन्तभट्टीया**– सः कुन्त्युक्तं निशम्य स्वधर्मं दुष्टवधलक्षणप्राप्तं विलोक्य उद्धर्ष आस ।।८३-८४।।

**जनार्दनीया**– भीमे भीमाय । निशम्य श्रुत्वा, मात्रोक्तमिति शेषः । उद्धर्षः उत्कृष्टसन्तोषः । कुत इत्यत आह– **प्राप्तमिति** ।। प्राप्तं महास्वधर्मं दुष्टवधरूपं विलोक्य विचार्य । यमसूनुरन्यैरर्जुनादिभिः उपेत्य, स्ववासगृहमिति शेषः । अतीव अत्यन्तं विघूर्णं नेत्रं हर्षाद्विकसितनेत्रं दृष्ट्वा जगाद ।। ८३ ।।

**भारतश्री**– महास्वधर्मं दुष्टवधलक्षणम् ।। ८३ ।।

**चट्टि**– एवमुक्त्वा कुन्ती भीममेत्य भीमे भीमाय निखिलं वृत्तान्तं जगाद । सः भीमः निशम्य, मात्रोक्तमिति शेषः । प्राप्तं महास्वधर्मं दुष्टवधरूपं विलोक्य विचार्य उद्धर्षः उत्कृष्टसन्तोषः आस । यमसूनुरन्यैश्चार्जुनादिभिः सह उपेत्य, स्ववासगृहमिति शेषः । अतीव अत्यन्तं विघूर्णनेत्रं हर्षाद्विकसितनेत्रं भीमं दृष्ट्वा जगाद ।। ८३ ।।

**[1]मातः किमेष [2]मुदितोऽतितरामिति स्म**
**तस्मै च सा निखिलमाह स चाब्रवीत् ताम् ।**
**कष्टं त्वया कृतमहो बलमेव यस्य**
**[3]सर्वे श्रिता वयममुं च [4]विहंसि भीमम् ।।८४।।**

---

१. 'रहः समुपविश्यैकस्ततः पप्रच्छ मातरम् । किं चिकीर्षत्ययं कर्म भीमो भीमपराक्रमः ।। भवत्यनुमते कच्चित् स्वयं वा कर्तुमिच्छति ।।' आदिपर्वणि-१७६.४-७.

२. 'मुदितो नितरां' इति चट्टिपाठः ।

३. 'किमिदं साहसं तीक्ष्णं भवत्या दुष्करं कृतम् । ...यस्य बाहू समाश्रित्य सुखं सर्वे शयामहे । राज्यं चापहृतं क्षुद्रैराजिहीर्षामहे पुनः ।। यस्य दुर्योधनो वीर्यं चिन्तयन्नमितौजसः । न शेते रजनीः सर्वा दुःखाच्छकुनिना सह ।। यस्य वीर्यं समाश्रित्य वसुपूर्णां वसुन्धराम् । इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान् ।।' इत्यादिपर्वणि-१७६.८-१३.

४. 'निहंसि' इति वेदाङ्गतीर्थीय-वरदराजीय-भारतश्रीपाठः ।

**वेदाङ्गतीर्थीया–** अमुं च एतादृशं च भीमं निहंसि ।। ८४-८५ ।।

**वरदराजीया–** किमिति? हे मातः! एषः भीमोऽतितरां किं किमर्थं मुदितः सन्तुष्टोऽस्तीति । सा कुन्ती तस्मै धर्मजाय । स च धर्मजः तां कुन्तीं त्वया कष्टं क्लेशयुतं कर्म कृतम् । अहो आश्चर्यम् । यस्य भीमस्य वलं सर्वे वयं श्रिताः आश्रिताः । अमुं तं भीमं निहंसि ।।८४।।

**जनार्दनीया–** अमुं च एतादृशं भीमम् । विहंसि हन्तुमिच्छसि ।।८४।।

**भारतश्री–** निहंसि हन्तुमिच्छसि ।। ८४-९१ ।।

**चट्टि–** किमिति? हे मातः! एषः भीमः किमर्थं नितरामत्यन्तं मुदितः सन्तुष्टोऽस्तीति । सा कुन्ती तस्मै धर्मराजाय च निखिलमाह । स च धर्मजस्तां कुन्तीं अब्रवीत् । त्वया कष्टं क्लेशयुक्तं कर्म कृतं अहो आश्चर्यम् । यस्य भीमस्य वलमेव सर्वे वयं श्रिताः आश्रिताः अमुं च एतादृशं भीमं विहंसि ।। ८४ ।।

**यद्बाहुवीर्यपरमाश्रयतो हि राज्य-**
**मिच्छाम एव निखिलारिवधं स्वधर्मम् ।**
**सोऽयं त्वयाऽद्य [१]निशिचारिमुखाय मातः**
**प्रस्थाप्यते वद ममाऽऽशु कयैव बुद्ध्या[२] ।।८५।।**

**वरदराजीया–** 'यस्य वलं श्रिताः' इत्येतद्विवृणोति– **यदिति** ।। यस्य भीमस्य वाहुवीर्यस्य वाहुपराक्रमस्य परमाश्रयतः उत्तमाश्रयतः स्वधर्मं निखिलारिवधमिच्छामः । सोऽयं भीमः निशिचारस्य राक्षसस्य मुखाय मुखं प्रति कया वुद्ध्या प्रस्थाप्यते प्रेष्यते इति वद ।।८५।।

**अनन्तभट्टीया–** आश्रयतः आश्रयणादिति वा ।। ८५-८६ ।।

**जनार्दनीया–** यद्बाहुवीर्यपरमाश्रयतः यस्य भीमस्य वाहुपराक्रमस्य परमाश्रयतः मुख्याश्रयत्वात् । कया वुद्ध्या प्रस्थाप्यते प्रेष्यते ।।८५।।

**चट्टि–** यद्बाहुवीर्यपरमाश्रयतः यस्य भीमस्य वाहुपराक्रमस्य परमाश्रयतः मुख्याश्रयादेव राज्यं निखिलारिवधं वधस्वरूपं स्वधर्मं च इच्छामः । हे मातः! सोऽयं भीमस्त्वया अद्य निशिचारिमुखायैव राक्षसमुखं प्रत्येव कया बुद्ध्या प्रस्थाप्यते प्रेष्यते । ममाशु वद इत्यब्रवीत् इति पूर्वेण सम्बन्धः ।।८५।।

**इत्युक्तवन्तममुमाह सुधीरबुद्धिः**
**कुन्ती न पुत्रक निहन्तुमयं हि शक्यः ।**

---

१. 'निशिचारमुखाय' इति वरदराजीयपाठः ।

२. 'तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया । कच्चिन्नु दुःखैर्बुद्धिस्ते विलुप्ता गतचेतसः ।।' इत्यादिपर्वणि-१७६.१४.

[1]सर्वैः सुरैरसुरयोनिभिरप्यनेन
चूर्णीकृतो हि शतशृङ्गगिरिः प्रसूत्याम् ॥८६॥

**वेदाङ्गतीर्थीया–** प्रसूत्यां प्रसूतिसमये ॥ ८६ ॥

**वरदराजीया–** इत्युक्तवन्तं अमुं धर्मजं सुधीरा बुद्धिर्यस्याः सा । कुन्ती हे पुत्रक! अयं भीमः सर्वैः सुरासुरयोनिभिः सुरैः असुरैश्च निहन्तुं न शक्यो हि यस्मात् प्रसूत्यां जननसमये शतशृङ्गाख्यो गिरिः स्वभारेण चूर्णीकृतः शतधा कृतः ॥८६॥

**जनार्दनीया–** सुधीरबुद्धिः अतिधैर्ययुक्तस्वभावा कुन्ती । अयं भीमः असुरयोनिभिरसुरैः । प्रसूत्यां प्रसूतिसमये ॥८६॥

**भावचन्द्रिका–** पुत्रकं पुत्रं युधिष्ठिरं भीमस्वरूपाज्ञानात् कुत्सयामास ॥ ८६-९२ ॥

**चट्टि–** सुधीरबुद्धिः अतिधैर्ययुक्तस्वभावा कुन्ती इत्युक्तवन्तं अमुं धर्मजमाह । किमिति? हे पुत्रक! अयं भीमः सर्वैः सुरैः असुरयोनिभिरसुरैश्च निहन्तुं न शक्यो हि । हि यस्मात् प्रसूत्यां जननसमये अनेन शतशृङ्गाख्यो शतशृङ्गनामा गिरिः स्वभारेण चूर्णीकृतः शतधा कृतः ॥ ८६ ॥

एषः स्वयं हि मरुदेव नरात्मकोऽभूत्
को नाम हन्तुमिममाप्तबलो जगत्सु ।
इत्येवमस्त्विति स तामवदत् परेद्यु-
र्भीमो जगाम शकटेन कृतोरुभोगः ॥८७॥

**व्यासतीर्थीया–** आप्तः सम्पूर्णबलः ॥ ८७-९२ ॥

**वेदाङ्गतीर्थीया–** मरुत्स्वयमेव नरात्मकः एषोऽभूद्धि । आप्तबलः प्राप्तबलपूर्णः, समर्थ इति यावत् । कृतोरुभोगः शकटेन जगाम ॥ ८७-९१ ॥

**वादिराजतीर्थीया–** 'इत्येवमस्त्विति स तामवदत्' इत्यत्र इतीत्यस्य च कुन्ती आहेति पूर्वेणान्वयः ॥

**सत्याभिनवतीर्थीया–** तत्रैव 'एषः स्वयं हि मरुदेव..' इति श्लोके नरात्मकः इत्यस्य नरदेहवानित्यर्थः । एतेन नर इत्यनेन पूर्णत्वात् आत्मपदं व्यर्थमिति दूषणं निराकृतम् । देहस्यैव नरत्वं न तु चैतन्यस्येति ज्ञापयितुमात्मपदं प्रत्युक्तमिति स्वीकरणात् ॥ ८७ ॥

---

१. 'वृकोदरेण सदृशो बलेनान्यो न विद्यते । यो व्यतीयाद्युधि श्रेष्ठमपि वज्रधरं स्वयम् ॥ जातमात्रः पुरा चैव ममाङ्कात् पतितो गिरौ । शरीरगौरवादस्य शिला गात्रैर्विचूर्णिता ॥ तदहं प्रज्ञया ज्ञात्वा बलं भीमस्य पाण्डव। प्रतिकार्ये च विप्रस्य ततः कृतवती मतिम् ॥' इत्यादिपर्वणि- १७६.२१-२३.

**वरदराजीया—** एषः भीमः स्वयं साक्षात् मरुदेव वायुरेव नरात्मको मनुष्यावतारोऽभूत् । जगत्सु लोकेषु आप्तवलः पूर्णवलोऽपि इमं भीमं हन्तुं को नाम समर्थः । न कोऽपीत्यर्थः । इति चेदेवमस्तु तथास्तु इति सः धर्मराजः तां कुन्तीमवदत् । परेद्युः परदिवसे शकटेनान्नपूर्णेन सः कृतोरुभोगः कृताभ्यङ्गस्रक्चन्दनादिभोगः ।।८७।।

**अनन्तभट्टीया—** आप्तवलः पूर्णवलः । कृतोरुभोगः अस्य अभ्यङ्गादिः येन स तथोक्तः ।। ८७ ।।

**जनार्दनीया—** मरुत् स्वयमेव नरात्मकः एषो मनुष्यावतारोऽभूद्धि । आप्तवलः प्राप्तपूर्णवलः इमं हन्तुं को नाम समर्थः । न कोऽपीत्यर्थः । इति चेत् एवमस्त्विति तामवदत् । कृतोरुभोगः कृतः अभ्यङ्गमालाविलेपनादिभिः उरुभोगो येन सः । शकटेन जगाम ।। ८७ ।।

**चट्टि—** मरुत् स्वयमेव नरात्मकः मनुष्यावतारः एषः भीमोऽभूत् । जगत्सु लोकेषु आप्तवलः प्राप्तवलपूर्णः इमं हन्तुं को नाम समर्थः । न कोऽपीत्यर्थः । इति चेत् एवमस्त्विति सः धर्मजः तां कुन्तीमवदत् । परेद्युः परदिवसे भीमः कृतोरुभोगः कृतः अभ्यङ्गमाल्यविलेपनादिभिः उरुभोगो यस्य सः तथाभूतस्सन् । अन्नपूर्णेन शकटेन सह जगाम ।। ८७ ।।

**गत्वा त्वरन् बकवनाय सकाशमाशु**
**भीमः सपायससुभक्ष्यपयोघटाद्यैः ।**
**युक्तं च शैलनिभमुत्तममन्नराशिं**
**स्पर्शात् पुरैव नरभक्षितुरत्तुमैच्छत् ।।८८।।**

**वरदराजीया—** सः भीमः त्वरन् वेगं कुर्वन् अत एवाशु गत्वा पायसैः सुभक्षैः पयसा जलेन पूर्णैः घटाद्यैः युक्तं शैलनिभं पर्वतोपमं उत्तमं श्रेष्ठं अन्नराशिं नरभक्षितुः राक्षसस्य भक्षसंस्पर्शात् पुरा पूर्वमेव अत्तुं भोक्तुं ऐच्छत् । दुष्टस्पृष्टस्यान्नस्य भोक्तव्यत्वाभावादिति भावः ।।८८।।

**अनन्तभट्टीया—** नरभक्षितुरिति कर्मणि षष्ठी ।। ८८ ।।

**जनार्दनीया—** सपायसं सुभक्ष्यपयोघटाद्यैः पायसेन, सुभक्षैः, पयो घटैः दुग्धपूर्णघटैः, सहिता सपायससुभक्ष्यपयोघटास्त एव आद्या एषां दधिमधुघृतपूर्णघटानां ते सपायससुभक्ष्यपयोघटाद्याः तैः तथोक्तैः । युक्तं अन्नराशिं नरभक्षितुः राक्षसस्य स्पर्शात् पुरैव पूर्वं अत्तुं अन्नं भोक्तुं ऐच्छत् ।।८८।।

**भावविवृतिः—** नरभक्षितुः नराशनस्य कृप्तमन्नराशिं वकेन स्पर्शात् पुरैव चशब्दात् तेन वीक्षणात् पुरैवेति वक्तव्यम् । स्पर्शवद्वीक्षणस्यापि निषिद्धत्वात् ।। ८८-९४ ।।

**भावचन्द्रिका—** स्पर्शात् स्वस्य परमपवित्रदेहत्वेन वकस्पर्शसम्भवेऽपि न अन्नस्य अपवित्रवक-स्पर्शयोग्यत्वम् । अतः अन्नस्पर्शात् । भोजनकाले स्पर्शस्य भारतोक्तेः । 'तथा वलवता भीमः पाणिभ्यां

भृशमाहनत् । नैवावलोकयामास राक्षसं भुङ्क्त एव सः ।। ततः स भूयः सङ्क्रुद्धो वृक्षमादाय राक्षसः । ताडयिष्यँस्तदा भीमं पुनरभ्यद्रवद्बली ।। क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान् । सव्येन पाणिना भीमो दक्षिणेनाप्यभुङ्क्त ह ।।' (आदिपर्वणि-१७७.३८-४०) इति ।। ८८ ।।

**चट्टि–** सः भीमः त्वरन् वेगं कुर्वन् आशु वकवनस्य सकाशं गत्वा सपायससुभक्ष्यपयोघटाद्यैः सुपायसैः सुभक्षैः पयसा क्षीरेण जलेन वा पूर्णैः घटाद्यैश्च युक्तं शैलनिभं पर्वतोपमं उत्तमं अन्नराशिं नरभक्षितुः राक्षसस्य स्पर्शात् पुरा पूर्वमेव अत्तुं अन्नं भोक्तुं ऐच्छत् । दुष्टस्पृष्टस्य अभोक्तव्यत्वादिति भावः ।। ८८ ।।

**तेनैव चान्नसमितौ परिभुज्यमान**
**उत्पाट्य वृक्षममुमाद्रवदाशु रक्षः ।**
**वामेन मारुतिरपोह्य तदा प्रहारान्**
**हस्तेन भोज्यमखिलं सहभक्ष्यमादत् ।।८९।।**

**वादिराजतीर्थीया–** 'तेनैव चान्नसमितौ' इत्यत्र चशब्देन भक्ष्यपरमान्नपयोघृतादिराशौ च परिभुज्यमाने सतीत्यर्थः सूचितः । अथवा अन्नस्य समितिः समुदायो यस्य भक्ष्यादेस्तस्मिन्नित्यर्थः ।।८९-९०।।

**वरदराजीया–** तेन भीमेनैवान्नस्य समितौ राशौ । रक्षो राक्षसः अमुं भीमं आद्रवत् । एवमेव हस्तेन प्रहारान् बककृतान् अपोह्य परिहृत्य सहभक्ष्यं भक्ष्यैः सहितं भोज्यमखिलं आदत् भुक्तवान् ।।८९।।

**अनन्तभट्टीया–** समितिं राशिम् ।। ८९-९० ।।

**जनार्दनीया–** समितौ समूहे परिभुज्यमाने परितः भुक्तवति उत्पाट्य उन्मूल्य अमुं भीमं प्रति आद्रवत् अभ्यधावत् । वामेन हस्तेन प्रहारान् अपोह्य परिहृत्य । सहभक्ष्यं भक्ष्यैः सहितं भोज्यं आदत् बुभुजे ।। ८९ ।।

**चट्टि–** तेन भीमेनैवान्नस्य समितौ समूहे परिभुज्यमाने परितः भुक्तवति सति रक्षः राक्षसः वृक्षमुत्पाट्य उन्मूल्य अमुं भीमं प्रत्याशु आद्रवत् अभ्यधावत् च । तदा मारुतिः भीमः वामेन हस्तेन प्रहारान् बककृतान् अपोह्य परिहृत्य सहभक्ष्यं भक्ष्यैः सहितं भोज्यं आदत् बुभुजे ।।८९।।

**[1]पीत्वा पयोऽत्वरित [2]एनमवेक्षमाण**
**आचम्य तेन युयुधे गुरुवृक्षशैलैः ।**

---

१. 'पीत्वा दधिघटान् पूर्णान् घृतकुम्भान् शतं शतम् । वार्युपस्पृश्य संहृष्टस्तस्थौ गिरिरिवापरः ।।' इत्यादिपर्वणि-१७७.४२-४३.

२. 'अवेक्ष्यमाणः' इति वरदराजीय-जनार्दनीयपाठः ।

**तेनाऽहतोऽथ बहुभिर्गिरिभिर्बलेन**
**जग्राह चैनमथ भूमितले पिपेष ॥९०॥**

**वरदराजीया–** पयः पीत्वा अत्वरितो वेगमकुर्वन् । अनेन भयाभावं सूचयति । एनं वकं अवेक्ष्यमाणो अनवलोकयन् । भोजनसमये दुष्टस्य अनवलोक्यत्वादिति भावः । आचम्य हस्तमुखप्रक्षालनस्योपलक्षण-मेतत् । तेन वकेन गुरुभिः स्थूलैः वृक्षैः पर्वतैश्च बहुभिः आहतो भीमः बलेन स्वबाहुबलेन एनं जग्राह । अथानन्तरं भूमितले पिपेष मर्दयामास ॥९०॥

**जनार्दनीया–** अत्वरितः वेगरहितः, भयरहित इति भावः । 'ततो भीमः शनैर्भुक्त्वा तदन्नं पुरुषर्षभः' (BORI- आदिपर्व-१५१.१३) इति भारते । आचम्य हस्तमुखप्रक्षालनस्योपलक्षणमेतत् । तेन वकेन । एनं राक्षसमवेक्ष्यमाणः अपश्यन् । गुरुवृक्षशैलैः गुरवः स्थूलाः तैः । बलेन बाहुबलेन । पिपेष मर्दयामास ॥९०॥

**चट्टि–** सः भीमः पयः उदकं पीत्वा अत्वरितः वेगरहितः सन्, भयरहित इति भावः । एनं वकं अवेक्षमाणः[1] अनवलोकयन् । भोजनसमये दुष्टस्यानवलोक्यत्वादिति भावः । आचम्य हस्तमुखप्रक्षालनम्, कृत्वेति शेषः । तेन वकेन गुरुभिः स्थूलैः वृक्षैः शैलैश्च युयुधे । अथ अनन्तरं तेन राक्षसेन बहुभिः गिरिभिः आहतस्सन् एनं राक्षसं बलेन जग्राह । अथ भूमितले पिपेष मर्दयामास च ॥ ९० ॥

**आक्रम्य पादमपि पादतलेन तस्य**
**दोर्भ्यां प्रगृह्य च परं विददार भीमः ।**
**मृत्वा स चोरुतम एव जगाम पापो**
**विष्णुद्विडेव हि शनैरनिवृत्ति चोग्रम् ॥९१॥**

**वादिराजतीर्थीया–** 'विददार भीमः' इत्यत्र विददार आकण्ठं विददार । 'विष्णुद्विडेव' इत्यत्र एवशब्देन कंसादिवज्जीवद्वयवान्न इति सूचितम् । अत एव 'तम एव' इत्युक्तम् । हिशब्देन प्रमाणप्रसिद्धिं सूचयति ॥ ९१-९३ ॥

**वरदराजीया–** तस्य बकस्य पादं पादतलेन स्वपादतलेन आक्रम्य परं अपरं च पादं दोर्भ्यां हस्ताभ्यां प्रगृह्य विददार विदारितवान् । स च वको मृत्वा मरणं प्राप्य अनिवृत्तिः पुनरावृत्तिरहितं उग्रमुल्बणं उरुतम एव शनैः क्रमेण जगाम । हि यस्मात् पापो विष्णुद्विडेवेत्यर्थः ॥९१॥

**अनन्तभट्टीया–** परं अपरपादम् । (उग्रम्) अतिदृढम् । अनिवृत्ति उरुतमः ॥ ९१ ॥

**जनार्दनीया–** तस्य वकस्य पादम् । पादतलेन आक्रम्य, परं अपरं पादम् । हि यस्मात् । विष्णुद्विट् तस्माच्छनैः क्रमेण । अनिवृत्तिः पुनरावृत्तिरहितम् ॥ ९१ ॥

---

१. 'अन्वीक्षमाणः' इति क्वचित् कोशेषु ।

**चट्टि–** भीमः तस्य बकस्य पादमपि पादतलेन स्वपादतलेन आक्रम्य, परं अपरं च पादं दोर्भ्यां हस्ताभ्यां प्रगृह्य विददार विदारितवान् । पापः स च बकः मृत्वा मरणं प्राप्य हि यस्मात् विष्णुद्विट् एव तस्माच्छनैः क्रमेण अनिवृत्तिः पुनरावृत्तिरहितं उग्रं क्रूरं उरुतम एव जगाम ।। ९१ ।।

**हत्वा तमक्षतबलो जगदन्तकं स**
**यो राक्षसो न वश आस जरासुतस्य ।**
**भौमस्य पूर्वमपि नो भरतस्य राज्ञो**
**भीमो न्यधापयदमुष्य शरीरमग्रे ।।९२।।**

**वेदाङ्गतीर्थीया–** अग्रे पुरस्याग्रे । न्यधापयत् न्यदधात् । स्वार्थे णिच् ।। ९२ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'हत्वा तमक्षतवलो जगदन्तकं..' इति श्लोके पूर्वमित्यस्य बकमरणात् पूर्वं ये ये शूरा अभूवन् तेषां मध्ये कस्यापि वशे अयं नासेत्यर्थः । एतेन पूर्वमित्येतत् व्यर्थमिति दूषणं परास्तम् । बकमरणादित्यादीनां शेषेणार्थस्योक्तत्वात् ।। ९२ ।।

**वरदराजीया–** जगदन्तकं लोकमृत्युं तं बकं अक्षतबल एव हत्वा अमुष्य शरीरमग्रे शकटस्य पुरस्ताद्भागे न्यपातयत् स्थापितवानित्यर्थः । कथम्भूतं तम्? यो बको राक्षसः जरासुतस्य जरासन्धस्य वशो धृष्यो नास न बभूव । भौमस्य नरकासुरस्यापि वशे नास । पूर्वं रामावतारे भरतस्य श्रीरामानुजस्य राज्ञोऽपि वशो नास इति सम्बन्धः ।।९२।।

**अनन्तभट्टीया–** अग्रे शकटाग्रे ।। ९२ ।।

**लघ्वनन्तभट्टीया–** भरतस्य दौष्यन्तिभरतस्य । रामावतारे भरतस्येति केचिदाहुः । अग्रे शकटाग्रे । 'पुरस्याग्रे' इति केचिदाहुः ।।९२।।

**जनार्दनीया–** जगदन्तकं जगद्विनाशकम् । भौमस्य नरकासुरस्यापि वशे नास । पूर्वं रामावतारे भरतस्य श्रीरामानुजस्य राज्ञोऽपि वशे नास । अग्रे न्यधापयत् स्थापयामास, शकटस्येति शेषः ।।९२।।

**ताम्रपर्णी–** भरतस्य दौष्यन्तभरतस्य ।।९२।।

**भारतश्री–** अग्रे पुरः, शकटस्येति शेषः ।। ९२-१०० ।।

**चट्टि–** यः राक्षसः पूर्वमपि जरासुतस्य जरासन्धस्य वशः नास । भौमस्य नरकासुरस्य वशः नास । भरतस्य राज्ञः वशः नो नास । तं जगदन्तकं लोकमृत्युं बकं अक्षतबलः सः भीमः हत्वा अमुष्य बकस्य शरीरं अग्रे न्यधापयत् स्थापयामास, शकटस्येति शेषः ।। ९२ ।।

> [1]द्वार्येव तत् प्रतिनिधाय पुरस्स भीमः
> स्नात्वा जगाम निजसोदरपार्श्वमेव ।
> [2]श्रुत्वाऽस्य कर्म परमं तुतुषुः समेता
> मात्रा च ते [3]तदनु भीतियुताः पुरस्थाः ॥९३॥

**व्यासतीर्थीया–** पूर्वं भीतियुता मात्रा सहितास्ते तदनु तदागमनानन्तरम् । अस्य परमं कर्म च श्रुत्वा तुतुषुः । 'पुरस्थाः' इत्येतद् दृष्ट्वैवेत्यनेन सम्बध्यते ॥ ९३-९४ ॥

**वेदाङ्गतीर्थीया–** पूर्वं भीतियुतास्ते भ्रातरः तदनु तदागमनानन्तरं अस्य परमं कर्म श्रुत्वा मात्रा समेताः तुतुषुः ॥९३-९४॥

**वरदराजीया–** तदमुष्य शरीरं पुरः पुर्याः द्वार्येव महाद्वारे प्रतिनिधाय स्थापयित्वा पुनः स्नात्वा निजसोदराणां पार्श्वं समीपं जगाम । अस्य भीमस्य परमं कर्म श्रुत्वा मात्रा समेताः ते धर्मजाद्याः तुतुषुः । तदनु बकवधानन्तरं भीमे भीतियुक्ताश्च जाता इत्यर्थः ॥ ९३ ॥

**अनन्तभट्टीया–** पुरः नगरस्य द्वारि । पूर्वं भीतियुताः । परमं कर्म श्रुत्वा तुतुषुः । 'पुरस्थाः' इत्यस्योत्तरत्रान्वयः ॥ ९३ ॥

**लघ्वनन्तभट्टीया–** भीतास्तदनु गमनानन्तरं कर्म श्रुत्वा तुतुषुः । बकासुरभीतियुताः तस्य देहं दृष्ट्वा अत्यन्तं भीता इति वा । 'तदनु ते पार्थाः भीमे भीतियुता बभूवुः' इति केचित् ॥९३॥

**जनार्दनीया–** पुरः पुर्याः द्वार्येव द्वारे । पार्श्वं समीपम् । भीतियुताः ते भ्रातरः धर्मादयः तदनु भीमस्यागमनानन्तरं अस्य परमं कर्म श्रुत्वा, मात्रा समेतास्तुतुषुः । 'पुरस्थाः' इत्यस्योत्तरश्लोकेनान्वयः ॥९३॥

**ताम्रपर्णी–** 'अग्रे शकटाग्रे, तच्छकटं द्वारि प्रतिनिधाय' इति केचित् । वस्तुतस्तु अग्रे पुराग्रे तद्विवरणपूर्वमाह– **द्वारीति** ॥ यद्वा शरीरं शकटाग्रे न्यधाय तच्छकटस्थं शरीरं द्वारि प्रतिनिधायेत्यर्थः । तदुक्तं भारते- 'ततो भीमस्तमादाय गतासुं पुरुषादकम् ।' 'नगरद्वारमासाद्य व्यससर्ज महाबलः । द्वारदेशे विनिक्षिप्य नगरस्य जगाम तम्[4] ।' 'ततस्स भीमस्तं हत्वा गत्वा ब्राह्मणवेश्म तत् । बलीवर्दौ च शकटं ब्राह्मणाय न्यवेदयत्' इत्यादिपर्वणि (१७८.८-११)। पूर्वं भीतियुता मात्रा सहितास्ते तदनु तदागमनानन्तरं अस्य परमं कर्म श्रुत्वा तुतुषुरित्यन्वयः ॥ ९३ ॥

---

१. 'द्वारदेशे विनिक्षिप्य पुरमागात् स मारुतिः' इत्यादिपर्वणि-१७८.९.

२. 'मातृभ्रातृसमक्षं च गत्वा शयनमेव च । आचचक्षेऽथ तत्सर्वं रात्रौ युद्धमभूद्यथा ॥' इत्यादिपर्वणि-१७८.१२.

३. 'तदनु भीतियुताश्च जाताः' इति वरदराजीयपाठः ।

४. 'पुरमागात् स मारुतिः' इति उपलभ्यमानः पाठः ।

**भावचन्द्रिका–** प्रतिनिधाय रात्रौ ।। ९३ ।।

**चट्टि–** सः भीमः तद् बकशरीरं पुरः पुर्याः द्वार्येव महाद्वारे निधाय स्थापयित्वा स्नात्वा निजसोदराणां स्वभ्रातॄणां पार्श्वं समीपमेवाजगाम । भीतियुताः ते भ्रातरः तदनु भीमस्यागमनानन्तरं अस्य भीमस्य परमं कर्म श्रुत्वा, मात्रा च समेतास्तुतुषुः । 'पुरस्थाः' इत्यस्योत्तरश्लोकेनान्वयः ।।९३।।

**दृष्ट्वैव राक्षसशरीरमुरु प्रभीता**
**ज्ञात्वैव हेतुभिरथ क्रमशो मृतं च ।**
**विप्रस्य तस्य वचनादपि भीमसेन-**
**भग्नं निशम्य परमं तुतुषुश्च तस्मै ।।९४।।**

**वादिराजतीर्थीया–** 'ज्ञात्वैव हेतुभिः' इत्यत्र हेतुभिः अङ्गचलनश्वासाभावादिभिः हेतुभिः ।।९४।।

**वरदराजीया–** पुरस्थाश्च राक्षसशरीरं दृष्ट्वा उरुभीताः अत्यन्तभययुक्ताः जाताः, सः राक्षसो जीवतीति शङ्कयेति शेषः । अथानन्तरं हेतुभिः पाषाणप्रक्षेपणादिकरणैः क्रमेणैव मृतं ज्ञात्वा निश्चित्य तस्य विप्रस्य वचनात् 'अनेन अयं हतः' इत्येवं रूपात् भीमसेनेन भग्नं हतं निशम्य तस्मै तुतुषुश्च ।।९४।।

**अनन्तभट्टीया–** उरु शरीरम् । हेतुभिः [1]पाषाणप्रहरणादिभिः क्रमशः परीक्ष्य मृतं ज्ञात्वा ।।९४।।

**लघ्वनन्तभट्टीया–** तस्मै भीमाय ।। ९४ ।।

**जनार्दनीया–** उरु स्थूलं राक्षसशरीरम् । हेतुभिः पाषाणक्षेपणादिभिः । क्रमशः परीक्ष्य, मृतं च ज्ञात्वा, तस्य विप्रस्य भीमसेनस्थितगृहस्वामिनो वचनादपि भग्नं हतं निशम्य श्रुत्वा तुतुषुः । 'तस्मै' इत्यस्योत्तरेणान्वयः ।।९४।।

**ताम्रपर्णी–** बकासुरभीतियुताः पुरस्थाः तस्य देहं दृष्ट्वा अत्यन्तभीता इति वा । तदनु बकवधानन्तरं पुरस्थाः भीमे भीतियुताः । 'ते पार्थाः भीमे भीतियुता बभूवुः' इत्यन्ये ।।९४।।

**भावचन्द्रिका–** दृष्ट्वा प्रभाते ।। ९४-१०६ ।।

**चट्टि–** पुरस्थाः राक्षसशरीरं दृष्ट्वैव उरु प्रभीताः अत्यन्तभययुक्ताः सन्तः अथ अनन्तरं हेतुभिः पाषाणक्षेपणादिभिः क्रमशः परीक्ष्य मृतं च ज्ञात्वैव तस्य विप्रस्य भीमसेननिवासस्वामिनो वचनादपि भीमसेनभग्नं भीमसेनहतं निशम्य श्रुत्वा परमं तुतुषुः । 'तस्मै' इत्यस्योत्तरेणान्वयः ।। ९४ ।।

---

१. 'पाषाणप्रक्षेपणादिभिः' इति क्वचित् ।

[1]अन्नात्मकं करममुष्य च सम्प्रचक्रुः
[2]सोऽप्येनमाशु नरसिंहवपुर्धरस्य ।
चक्रे हरेस्तदनु सत्यवतीसुतस्य
विष्णोर्हि [3]वाक्प्रमुदिताः प्रययुस्ततश्च ॥९५॥

**व्यासतीर्थीया–** अमुष्य वकस्यान्नात्मकं करमस्मै भीमाय सम्प्रचक्रुश्च । तस्य पुरस्थितस्य हरेः ॥९५॥

**वेदाङ्गतीर्थीया–** वाक्प्रचुदिताः तत्रागतस्य विष्णोः वाचा प्रेरिताः । केवलेनान्तर्यामिणा विष्णुना प्रेरिता इति भावः ॥ ९५-९६ ॥

**वादिराजतीर्थीया–** 'सोऽप्येतमाशु' इत्यत्र सः भीमसेनोऽपि एतं ब्राह्मणदत्तकरं नरसिंहवपुर्धरस्य तद्ग्रामस्थस्य हरेः नरसिंहस्य चक्रे पूजार्थं कट्टलिकां चक्रे । 'विष्णोर्हि वाक्प्रचुदिताः' इत्यत्र 'चुद प्रेरणे' इति धातोः वाक्यप्रेरिता इत्यर्थः ॥ ९५ ॥

**वरदराजीया–** अमुष्य वकस्य दीयमानं अन्नात्मकं परमं करं अस्मै भीमसेनाय प्रचक्रुः ददुरित्यर्थः । सोऽपि एनं करं सिंहवपुर्धरस्य नरसिंहावतारस्य हरेः स्वस्मिन् स्थितस्य, नगरे स्थितस्येति वा । पूजार्थं चक्रे । तदनु तदनन्तरं सत्यवतीसुतस्य विष्णोः व्यासस्य वाक्येन मुदिताः सन्तः ते एकचक्रात् प्रययुः ॥९५॥

**अनन्तभट्टीया–** अमुष्य बकस्य । हरेस्तत्र स्थितस्य पूजार्थं चक्रे ॥ ९५ ॥

**लघ्वनन्तभट्टीया–** अमुष्य वकस्य । करं सञ्चक्रुः ॥ ९५-९९ ॥

**जनार्दनीया–** अमुष्य वकस्य अन्नात्मकं करं तस्मै भीमाय सम्प्रचक्रुः ददुरित्यर्थः । सोऽपि नरसिंहवपुर्धरस्य श्रीनृसिंहस्वरूपिणो हरेः एनं करं पूजार्थं चक्रे ददावित्यर्थः । विष्णोर्व्यासस्य वाक्प्रमुदिताः वाचा सन्तोषिताः । ततः एकचक्रतः ॥९५॥

**भावविवृतिः–** अस्मै वकाय दीयमानं अन्नात्मकं करं अमुष्य भीमस्य सम्प्रचक्रुः । भीमाय दास्याम इति सङ्कल्पितवन्तः । भीमस्तदन्नं तद्ग्रामस्थदेवालये प्रतिष्ठितनृसिंहरूपिणो हरेः पूजार्थं चकारेति भावः ॥ ९५-९७ ॥

**ताम्रपर्णी–** तस्मै भीमाय । अमुष्य वकस्य करं सम्प्रचक्रुः ॥९५-९८॥

---

१. 'पशुमद्दधिमच्चास्य वारं भक्तमुपाहरन् ।' इत्यादिपर्वणि-१७८.२८.

२. 'सोऽप्येतं' इति वादिराजतीर्थानां पाठः ।

३. 'वाक्प्रचुदिताः' इति वेदाङ्गतीर्थीय-वादिराजीयपाठः ।

**चट्टि–** अमुष्य बकस्य अन्नात्मकं करं तस्मै भीमाय सम्प्रचक्रुः ददुरित्यर्थः । पुरस्था इति शेषः । सः भीमोऽपि तं करं नरसिंहवपुर्धरस्य नृसिंहरूपिणो स्वस्मिन् स्थितस्य हरेः पूजार्थं चक्रे ददावित्यर्थः । तदनु तदनन्तरं सत्यवतीसुतस्य विष्णोः वाक्येन मुदिताः सन्तोषं प्रापिताः पाण्डवाः ततः एकचक्रनगरतः प्रययुश्च ।।९५।।

**उत्पत्तिपूर्वककथां द्रुपदात्मजाया**
**[1]व्यासो ह्यनूच्य जगतां गुरुरीश्वरेशः[2] ।**
**यातेत्यचोदयदथाप्यपरे द्विजाग्र्या-**
**स्तान् ब्राह्मणा इति भुजिर्भवितेति[3] चोचुः ।।९६।।**

**व्यासतीर्थीया–** व्यासो द्रुपदात्मजाया उत्पत्तिपूर्वककथां स्वयं कथं वेद इत्यत आह– **जगतां गुरुरिति** ।। जगद्गुरुत्वोपपादनाय 'ईश्वरेशः' इत्युक्तम् । कन्यार्थिनां तेषां गमनवेलायां नरपिङ्गलौ च जातेत्यत आह– **अथापर इति** ।।९६ ।।

**वादिराजतीर्थीया–** अथाप्यपरे द्विजाग्र्याः अथापि व्यासोक्त्यैव पार्थानां गमने सत्यपि अपरे द्विजाग्र्याश्च तान् ब्राह्मणा इति हेतोः 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यनुशासनम् । भुजिः भोजनं भवितेत्यूचुः । 'श्वो भाविन्यलुट्' इत्यनुशासनात् श्वो भोजनं भविष्यतीत्यूचुरिति भावः ।। ९६ ।।

**वरदराजीया–** विष्णोर्वाक्येन मुदिता इत्युक्तं विवृणोति– **उत्पत्तीति** ।। व्यासात् द्रुपदात्मजायाः द्रौपद्याः उत्पत्तिपूर्वककथां उत्पत्त्यादिवार्तां कथां अनूच्य प्रोच्य यूयं यात गच्छतेति, पाञ्चालनगरीं प्रतीति शेषः । अचोदयत् आज्ञापयामास । अथापरे द्विजाग्र्याः स्वयंवरं गच्छतस्तान् पाण्डवान् ब्राह्मणा इति मत्वा भुजिर्भविता द्रुपदगेहे ब्राह्मणेभ्यो भोजनं भवतीत्यूचुश्च ।।९६।।

**अनन्तभट्टीया–** यात, द्रुपदनगरमिति शेषः । तान् पाण्डवान् ब्राह्मणा इति मत्वा भुजिर्भोजनं भवति भविष्यति इति ।। ९६ ।।

**जनार्दनीया–** अनूच्य उक्त्वा । अचोदयत् प्रेरयामास । अथ अपरे द्विजाग्र्याः तान् पाण्डवान् ब्राह्मणा इति ज्ञात्वा, भुजिर्भोजनं भविता भविष्यति इत्यूचुः, द्रुपदगृहे इति शेषः ।।९६।।

---

१. भारते द्रौपद्याः उत्पत्तिपूर्वककथां [१७०] अध्याये कश्चन ब्राह्मणः अवोचत् इत्युच्यते । भगवान् वेदव्यासस्तु उत्तरत्र [१८४] अध्याये सङ्क्षेपेण द्रौपदीवृत्तान्तमाह । पुनः स्वयंवरपर्वणि [२००] अध्याये पाञ्चालनगरगमनकाले पथि द्रौपदीकथामुक्त्वा तन्नगरं गन्तुं आज्ञापयति ।

२. 'गुरुरीश्वरश्च' इति चट्टीपाठः ।

३. 'भुजिर्भवतीति' इति अनन्तभट्टीयपाठः ।

**चट्टि–** विष्णोर्वाक्यमुदिता इत्युक्तं विवृणोति– **उत्पत्तीति** ।। जगतां गुरुरीश्वरेशः श्रीव्यासोऽपि द्रुपदात्मजायाः द्रौपद्याः उत्पत्तिपूर्वककथामुत्पत्त्यादिवार्तां अनूच्य उक्त्वा यात गच्छत, पाञ्चालपुरमिति शेषः । अचोदयत् प्रेरयामास । कन्यार्थिनां तेषां पाण्डवानां गमनवेलायां नरपिङ्गलौ च जातेत्यत आह– **अथापर इति** ।। अथ अपरे द्विजाग्र्याः तान् पाण्डवान् ब्राह्मणा इति मत्वा भुजिर्भोजनं भविता भविष्यति इत्यूचुः, द्रुपदगृहे इति शेषः ।। ९६ ।।

**[1]पूर्वं हि पार्षत इमान् जतुगेहदग्धान्**
**श्रुत्वाऽतिदुःखितमनाः पुनरेव[2] मन्त्रः ।**
**याजोपयाजमुखनिस्सृत एवमेष**
**नासत्यतार्ह इति जीवनमेषु मेने ।।९७।।**

**व्यासतीर्थीया–** ननु द्रुपदः फल्गुनार्थं कन्याया उत्पादितत्वात् कथं स्वयंवरघोषं चक्र इत्यत आह– **पूर्वं हीति** ।। दुःखितमना स्वयंवरघोषं चक्रे ।। ९७ ।।

**वेदाङ्गतीर्थीया–** द्रौपदीस्वयंवरं वक्ष्यन् तत्कर्तुः द्रुपदस्याभिप्रायमाह– **पूर्वमित्यादिना** ।। श्रुत्वा अतिदुःखितमनाः सन् पुनः एवं 'पार्थाय दातुं कन्या भूयात्' इत्यभिप्रायेण याजोपयाजमुखनिस्सृत एष मन्त्रः असत्यतार्हः नेति निरूप्य एषु जीवनं मेने ।। ९७ ।।

**वादिराजतीर्थीया–** 'पुनरेष मन्त्रः' इत्यत्र पूर्वं दुःखितमनाः सन् पुनः याजोपयाजमुखनिस्सृत एषः मन्त्रः पार्थाय दातुं कन्या भूयादिति मन्त्रः एवं जतुगृहमरणेन असत्यतार्हो नैवेति हेतोः एषु जीवनं मेने इत्यन्वयः ।। ९७-९८ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'पूर्वं हि पार्षत इमान्..' इति श्लोकः । तस्यार्थः- पार्षतः इमान् पाण्डवान् जतुगेहदग्धान् श्रुत्वा, पूर्वं प्रथमतः पुनःपुनः अतिदुःखितमनाः सन् एवं 'पार्थाय दातुं कन्या भूयात्' इत्यभिप्रायेण, याजोपयाजमुखनिस्सृतः एषः मन्त्रः असत्यतार्हः नैव भवतीति विचार्य, एषु पाण्डवेषु जीवनं मेने इति । एतेन पुनः इत्येतत् व्यर्थमिति चोद्यस्यानवकाशः । पुनः इत्यस्य आवृत्तिमङ्गीकृत्य पुनःपुनः अतिदुःखितमनाः इत्यर्थस्योक्तत्वात् ।।९७।।

**वरदराजीया–** ननु पाण्डवान् जातुषगृहदग्धान् श्रुत्वापि द्रुपदः कथं अर्जुनार्थं स्वयंवरमघोषयदित्यतः तस्याभिप्रायमाह– **पूर्वं हीत्यादिना** ।। पूर्वं पार्षतः द्रुपदः इमान् जतुगेहदग्धान् श्रुत्वा, अतिदुःखितमनाः पुनरेव याजोपयाजयोः मुखाभ्यां निस्सृतः एषः मन्त्र एव नासत्यतार्हः असत्यत्वं नार्हतीति हेतोः एषु पाण्डवेषु जीवनं मेने ।।९७।।

---

१. 'श्रुत्वा तु वचनं तेषां यज्ञसेनो महामतिः । तथाऽतप्यत वै राजा पाण्डवानां विनाशने ।।' आदिपर्वणि-१८२.१०-११.

२. 'पुनरेष मन्त्रः' इति वादिराजतीर्थीयपाठः ।

**अनन्तभट्टीया–** एषः मन्त्रः । असत्यतां प्राप्तुमनर्हस्तथोक्तः ।। ९७ ।।

**जनार्दनीया–** द्रौपदीस्वयंवरं वक्ष्यन् तत्कर्तृद्रुपदस्याभिप्रायमाह– **पूर्वमित्यादिना** ।। जतुगेहदग्धान् लाक्षागृहे मृतान् इमान् पार्थान् श्रुत्वा, अतिदुःखितमनाः सन् पुनरेव 'पार्थाय दातुं कन्या द्रुपदस्य भूयात्' इत्यभिप्रायेण याजोपयाजमुखनिस्सृतः याजोपयाजयोः मुखाभ्यां निस्सृतः निर्गतः एषः मन्त्रः असत्यतार्हो व्यर्थत्वं नार्हति इति निश्चित्य, एषु जीवनं मेने ।। ९७ ।।

**चट्टि–** द्रौपदीस्वयंवरं वक्ष्यन् तत्कर्तृद्रुपदस्याभिप्रायमाह– **पूर्वमित्यादिना** ।। पूर्वं पार्षतः इमान् पाण्डवान् जतुगेहदग्धान् लाक्षागृहे मृतान् श्रुत्वा अतिदुःखितमनाः सन् पुनरेव 'पार्थाय दातुं कन्या द्रुपदस्य भूयात्' इत्यभिप्रायेण याजोपयाजमुखनिस्सृतः याजोपयाजयोः मुखाभ्यां निस्सृतः निर्गतः एषः मन्त्रः असत्यतार्हो व्यर्थत्वं नार्हति एवं इति निश्चित्य एषु पाण्डवेषु जीवनं मेने ।। ९७ ।।

**[1]यत्र क्वचित् प्रतिवसन्ति निलीनरूपाः**
**पार्था इति स्म स तु फल्गुनकारणेन ।**
**[2]चक्रे स्वयंवरविघोषणमाशु राजा**
**स्वन्यैरधार्यधनुरीशवराच्च चक्रे ।।९८।।**

**व्यासतीर्थीया–** ननु कथं विवेकी द्रुपदोऽपि तथा अधात्...* ।।९८।।

**वेदाङ्गतीर्थीया–** स राजा ईशवरादन्यैः, पार्थादिति शेषः । 'सु' इति पृथक्पदं अधार्यम् इत्यनेन योज्यम् ।। **अधार्यमिति** ।। अनारोप्यमिति भावः । शिशुपालादिभिर्धृतत्वात् । सर्वथा सुतरां अनारोप्यं धनुः चक्रे सम्पादयामास ।। ९८ ।।

**मधुसूदनीया–** ।। **यत्र क्वचित्प्रतिवसन्तीति** ।। तुशब्देनोपश्रुतिबलाच्चेति विशेषं सूचयति । 'उपश्रुतिर्महाराज पाण्डवाऽर्थे मया श्रुता । यत्र वा तत्र जीवन्ति पाण्डवास्ते न संशयः ।। मया दृष्टानि लिङ्गानि इहैवेष्यन्ति पाण्डवाः ।।' इत्यादिपर्ववचनात् (१८२.२३-२४) ।। ९८-९९ ।।

**वरदराजीया–** 'जीवनं मेने' इत्युक्तं स्पष्टयति– **यत्रेति** ।। निलीनरूपाः गुप्तवेषा इति स्म हेतोः फल्गुनकारणेनार्जुनार्थं ईशस्य रुद्रस्य वरात् स्वन्यैरधार्यं समीचीनं अन्यैरधार्यं धनुः यस्य सः । राजा द्रुपदः स्वयंवरविघोषणं स्वयंवरप्रसिद्धिं चक्रे ।।९८।।

---

१. 'सोऽन्वेषमाणः कौन्तेयान् पाञ्चालो जनमेजय । दृढं धनुरथानम्यं कारयामास भारत ।। तद्धनुः किन्धुरं नाम देवदत्तमुपानयत् । आयसी तस्य च ज्याऽऽसीत् प्रतिबद्धा महाबला । न तु ज्यां प्रसहेदन्यस्तद्धनुप्रवरं महत् । शङ्करेण वरं दत्तं प्रीतेन च महात्मना ।। तन्निष्फलं स्यान्न तु मे इति प्रामाण्यमागतः ।।' इत्यादिपर्वणि-२००.१०-१०.

२. 'स्वयंवरस्तु नगरे घुष्यतां राजसत्तम । यत्र वा निवसन्तस्ते पाण्डवाः पृथया सह ।। दूरस्था वा समीपस्था स्वर्गस्था वाऽपि पाण्डवाः ।।' इत्यादिपर्वणि-१८२.२६-२७.

**अनन्तभट्टीया–** चक्रे सम्पादितवान् ।। ९८-९९ ।।

**जनार्दनीया–** निलीनरूपाः गुप्तवेषाः । इति स्म अस्मात् कारणात् । फल्गुनकारणेन अर्जुनार्थं कृतप्रतिज्ञाकारणेन । स राजा । ईशवरात् अन्यैरधार्यं अनारोपितमिति भावः । पार्थादिति शेषः । चक्रे सम्पादयामास ।।९८।।

**भावविवृतिः–** अर्जुनाय दातुमुद्यतायाः स्वयंवरघोषः कथमित्यत आह– **फल्गुनकारणेनेति** ।। फल्गुनागमनार्थं क्षत्रियधर्मरक्षणार्थं चेति सूचनाय तुशब्दः । ईशवरादन्यैः पार्थादन्यैः अनारोप्यमाणं धनुः प्राप्य स्थापयामासेत्यर्थः ।।९८।।

**चट्टि–** 'जीवनं मेने' इत्युक्तं स्पष्टयति– **यत्रेति** ।। यत्र कचित् पार्थाः निलीनरूपाः गुप्तवेषाः सन्तः प्रतिवसन्ति इति स्म अस्मात् कारणात् फल्गुनकारणेन अर्जुनार्थं कृतप्रतिज्ञाकारणेन स द्रुपदः स्वयंवरविघोषणं आशु चक्रे । राजा द्रुपदः ईशवरात् अन्यैरधार्यं धर्तुमशक्यं धनुश्चक्रे सम्पादयामास । तुशब्देन उपश्रुतिवलाच्चेति विशेषं सूचयति । 'उपश्रुतिर्महाराजन् पाण्डवार्थे मया श्रुता । यत्र वा तत्र जीवन्ति पाण्डवास्ते न संशयः । मया दृष्टानि लिङ्गानि इहैवैष्यन्ति पाण्डवाः ।।' इत्यादिपर्ववचनात् ।।९८।।

**[1]तत्काल एव वसुदेवसुतोऽपि कृष्णः**
**सम्पूर्णनैजपरिबोधत एव सर्वम् ।**
**जानन्नपि स्म हलिना सहितो जगाम**
**पार्थान् निशम्य च मृतानथ कुल्यहेतोः ।।९९।।**

**व्यासतीर्थीया–** कुल्यं कर्म तदर्थतः ।। ९९ ।।

**वेदाङ्गतीर्थीया–** कृष्णः पार्थान् मृतान् निशम्य । सर्वं पार्थानां जीवनादिकं जानन्नपि । अथ कतिपयकालानन्तरमेव स्वयंवरविघोषणकाल एव कुल्यहेतोः जगाम स्म, हस्तिनपुरमिति शेषः । मृतस्य बन्धूनां सान्त्वनं कुल्यम् ।। ९९ ।।

**वादिराजतीर्थीया–** 'मृतानथ कुल्यहेतोः' इत्यत्र कुल्यहेतोः बन्धुषु मृतेषु सत्सु गत्वा विचारणं कार्यमिति कुलोचितकर्मकरणार्थमित्यर्थः ।।९९।।

**वरदराजीया–** तत्काल एव तस्मिन्नेव काले सम्पूर्णात् नैजात् स्वाभाविकात् परिबोधात् स्वरूपज्ञानात् सर्वं जानन्नपि कृष्णः पार्थान् मृतान् निशम्य हलिना सह कुल्यस्य इदं कर्म कुल्यं मृतसम्भाषणादिरूपं तत्कर्तुमित्यर्थः । जगाम, हस्तिनापुरमिति शेषः ।।९९।।

---

१. 'विज्ञातार्थोऽपि गोविन्दो दग्धानाकर्ण्य पाण्डवान् । कुन्तीश्च कुल्यकरणे सह रामो ययौ कुरून् ।।' इति भागवते-१०.६१.१.

**जनार्दनीया–** कृष्णः पार्थान् मृतान् निशम्य, पार्थजीवनादिकं सम्पूर्णनैजपरिबोधतः परिपूर्ण-स्वाभाविकज्ञानात् जानन्नपि, अथ कतिपयकालानन्तरमेव तत्काले स्वयंवरविघोषणकाले कुल्यहेतोः जगाम स्म, हस्तिनपुरमिति शेषः । मृतस्य पुंसः बन्धूनां सान्त्वनं कुल्यम् ।।९९।।

**भावविवृतिः–** कुल्यहेतोः मृतसम्बन्धिनो बन्धुभिः समाधानं कार्यमिति कुले यो धर्मः तस्य हेतोः ।।९९-१०१।।

**ताम्रपर्णी–** कुल्यहेतोः कुलधर्महेतोः ।। ९९ ।।

**चट्टि–** तत्काले तस्मिन् काले सम्पूर्णनैजपरिबोधतः परिपूर्णस्वाभाविकज्ञानादेव सर्वं जानन्नपि वसुदेवसुतः श्रीकृष्णः पार्थान् मृतांश्च निशम्य, अथ कुल्यहेतोः कुलस्येदं कुल्यं मृतसम्बन्धिसम्भाषणादि-रूपम् । तत्कर्तुमित्यर्थः । हलिना सहितः जगाम, हस्तिनपुरमिति शेषः ।। ९९ ।।

**[१]स प्राप्य हस्तिनपुरं धृतराष्ट्रपुत्रान्**
**संवश्वयंस्तदनुसारिकथाश्च [२]कृत्वा ।**
**भीष्मादिभिः [३]परिगतोऽप्रियवज्जगाम**
**द्वारावतीमुदितपूर्णसुनित्यसौख्यः ।।१००।।**

**व्यासतीर्थीया–** भीष्मादिभिश्च तदनुसारिकथाः श्रुत्वा । परिगतं प्राप्तमप्रियं यस्यासौ परिगताप्रियः तद्वत् । प्राप्तदुःखी किं न स्यादित्यत उक्तम्– **उदितेति** ।। सुखमेव सौख्यम् ।। १०० ।।

**वेदाङ्गतीर्थीया–** हस्तिनपुरं प्राप्य भीष्मादिभिः परिगतः । धृतराष्ट्रपुत्रान् संवश्वयन् । अप्रियवत् प्रियं सुखम्, सुदुःखित इवेति भावः ।। १०० ।।

**वादिराजतीर्थीया–** 'तदनुसारिकथाश्च कृत्वा' इत्यत्र 'भीष्मादिभिः परिवृतः सन् संवश्वयन्' इति वचनात् अप्रियवत् पाण्डवानामप्रियवत् तदनुसरिकथाः तत्कालानुसारिकथाः, दैवहीनाः पाण्डवा मृताः इत्यादिकथाः इति यावत् । कृत्वा द्वारावतीं जगामेत्यन्वयः । यद्वा अर्शवानितिवत् अप्रियवत् पाण्डवानां अप्रियवानिव जगामेति योजना ।। १००-१०१ ।।

---

१. 'सम्प्राप्य' इति चट्टीपाठः ।

२. 'श्रुत्वा' इति जनार्दनीयपाठः ।

३. 'परिगताप्रियवत्' इति व्यासतीर्थीये तथा अनन्तभट्टीये । 'परिगतोऽप्रियवत्' इति पाठान्तरमिति जनार्दनीये । 'परिवृतोऽप्रियवत्' इति वादिराजतीर्थानां तथा मधुसूदनीयपाठः स्यात् । ताम्रपर्णीये त्रिविधा अपि पाठाः व्याख्याताः ।

**मधुसूदनीया–** ।। **परिवृतोऽप्रियवज्जगामेति** ।। कुल्यनिष्पत्तेः प्रागेव सत्यभामामुखात् सत्राजिद्वधं श्रुत्वा द्वारकां प्रति जगामेत्यर्थः । 'कुल्यार्थे चापि पाण्डूनां न्ययोजयत सात्यकिम्' इत्यादि हरिवंशोक्तेः (१.३९.८) ।। १००-१०३ ।।

**वरदराजीया–** धृतराष्ट्रपूर्वान् संवश्वयन् प्रतारयन् । भीष्मादिभिः साकं तदनुसारिकथाश्च वञ्चनानुकूलकथाः कृत्वा, भीष्मादिभिः परिगतः किञ्चिद्दूरं अनुगतः अप्रियवत् अप्रियमाण इव जगाम । यतः उदितं नित्याभिव्यक्तं पूर्णं सुनित्यं सौख्यं यस्य स तथा ।।१००।।

**अनन्तभट्टीया–** कुलस्येदं कुल्यं कर्म तदर्थम् । तैर्भीष्मादिभिः तदनुसारिकथाः कृत्वा परिगतं प्राप्तं अप्रियं यस्य सः परिगताप्रियः । तद्वद् वस्तुतो दुःखं नास्तीति भावः ।। १०० ।।

**लघ्वनन्तभट्टीया–** परिगतं प्राप्तं अप्रियं यस्य तत् । 'परिगतः' इति पाठे दूरं भीष्मादिभिः परिगत इत्यर्थः । 'परिवृतः' इति क्वचित् पाठः ।।१००-११५।।

**जनार्दनीया–** धृतराष्ट्रपुत्रान् संवश्वयन्, भीष्मादिभिः सह तदनुसारिकथाश्च श्रुत्वा, भवतां कष्टमभूदित्याद्युक्त्वेति भावः । भीष्मादिभिः परिगतः किञ्चिद्दूरं अनुगतः । अप्रियवत् दुःखित इव जगाम । 'परिगताप्रियवत्' इति पाठे भीष्मादिभिः सह प्राप्ताप्रियवदित्यर्थः । दुःखाभावे को हेतुरित्यत आह– **उदितेति** ।।१००।।

**भावविवृतिः–** भीष्मादिभिः परिगतोऽप्रियवज्जगामेत्यर्थः । परिगतः किञ्चिद्दूरं अनुगतः अप्रियमाण इव जगामेत्यर्थः । *...द्रौपदीविषये इतरैरपेक्षितत्वात् ।। १००-१०१ ।।

**ताम्रपर्णी–** 'भीष्मादिभिः परिवृतः' इति पाठे भीष्मादिभिः परिवृतोऽपि अप्रियवत् 'पाण्डवा एतैरुपेक्षिताः' इति तेष्वीषदप्रीतियुक्तः द्वारावतीं जगामेत्यर्थः । 'भीष्मादिभिः परिगताप्रियवज्जगाम' इत्यपि क्वचित् पाठः । तदा भीष्मादिभिश्च तदनुसारिकथाश्च कृत्वा परिगतं प्राप्तमप्रियं दुःखं यस्य परिगताप्रियः तद्वज्जगाम । दुःखी किं न स्यादित्यत आह– **उदितेति** ।। 'भीष्मादिभिः परिगतः' इत्यपि क्वचित् पाठः । दूरं भीष्मादिभिः परिगतोऽप्यप्रियवज्जगामेत्यर्थः ।। १०० ।।

**चट्टि–** उदितपूर्णसुनित्यसौख्यः उदितं नित्याभिव्यक्तं पूर्णं सुनित्यं सौख्यं यस्यः सः । श्रीकृष्णः हस्तिनपुरं सम्प्राप्य धृतराष्ट्रपुत्रान् संवश्वयन् सन् भीष्मादिभिः सह तदनुसारिकथाश्च कृत्वा, भवतां कष्टमभूदित्याद्युक्त्वेति भावः । भीष्मादिभिः परिगतः किञ्चिद्दूरं अनुगतः अप्रियवद् दुःखितवत् द्वारवतीं प्रति जगाम ।। १००।।

**[1]तस्यान्तरे हृदिकसूनुरनन्तरं स्वं**
**श्वाफल्किबुद्धिबलमाश्रित इत्युवाच ।**
**सत्राजिदेष हि पुरा प्रतिजज्ञ एना-**
**मस्मत्कृते स्वतनयां मणिना सहैव ॥१०१॥**

**व्यासतीर्थीया—** हृदिकसूनुः कृतवर्मा ॥ १०१ ॥

**वेदाङ्गतीर्थीया—** तस्य हस्तिनानगरद्वारवत्योः गमनस्याऽगमनस्य च अन्तरे मध्ये ॥ १०१ ॥

**वरदराजीया—** तस्य वृत्तान्तस्यान्तरे मध्ये कृष्णे हस्तिनपुरं गते सतीत्यर्थः । हृदिकसूनुः कृतवर्मा स्वं स्वकीयं अनन्तरं अनुजं शतधन्वानं श्वाफल्किनो अक्रूरस्य बुद्धिबलं आश्रितः सन् इति वक्ष्यमाणरीत्या आह । एषः सत्राजित् एनां सत्यभामां प्रतिजज्ञे दातुं प्रतिज्ञातवान् प्रतिज्ञां कृतवानित्यर्थः । मणिना स्यमन्तकेन ॥१०१॥

**अनन्तभट्टीया—** अनन्तरं कनिष्ठभ्रातरं शतधन्वानम् । हृदिकात्मजः कृतवर्मा ॥ १०१ ॥

**जनार्दनीया—** तस्य हस्तिनपुरद्वारवत्योर्गमनस्य च । अन्तरे मध्ये । हृदिकसूनुः कृतवर्मा । स्वं स्वकीयम् । अनन्तरं अनुजं शतधन्वानं श्वाफल्किः अक्रूरः तस्य बुद्धिबलं आश्रितः इति उवाच । किमिति? एषः सत्राजित् सत्राजिद्राजा पुरा आदौ एनां सत्यभामां अस्मत्कृते अस्मदर्थे प्रतिजज्ञे प्रतिज्ञामकरोदित्यर्थः । दातुमिति शेषः ॥१०१॥

**भारतश्री—** अनन्तरं अनुजम् ॥ १०१-११३ ॥

**चट्टि—** तस्य वृत्तान्तस्यान्तरे मध्ये श्रीकृष्णे हस्तिनपुरं गते सति इत्यर्थः । हृदिकसूनुः कृतवर्मा स्वं स्वकीयं अनन्तरं अनुजं शतधन्वानं श्वाफल्केः अक्रूरस्य बुद्धिबलं आश्रितः सन् इति वक्ष्यमाणरीत्या उवाच । किमिति? एषः सत्राजिद्राजा पुरा आदौ एनां स्वतनयां सत्यभामां मणिना सहैव अस्मत्कृते अस्मदर्थे प्रतिजज्ञे प्रतिज्ञामकरोत्, दातुमिति शेषः ॥१०१॥

**सर्वांश्च नः पुनरसाववमत्य कृष्णा-**
**यादात् सुतां जहि च तं निशि पापबुद्धिम् ।**
**आदाय रत्नमुपयाहि च नौ विरोधे**
**कृष्णस्य दानपतिना सह साह्यमेमि ॥१०२॥**

---

[1] 'लब्ध्वैतदन्तरं राजन् शतधन्वानमूचतुः । अक्रूरकृतवर्माणौ मणिः कस्मान्न गृह्यते ॥ योऽस्मभ्यं सम्प्रतिश्रुत्य कन्यारत्नं विगर्ह्य नः । कृष्णायादात् स सत्राजित् तस्मात् भ्रातरमन्वियात् ॥' इति भागवते-१०.६१.३-४.

**व्यासतीर्थीया–** दानपतिः अक्रूरः । सहभावः सहायं साह्यमित्यर्थः ।। १०२ ।।

**वेदाङ्गतीर्थीया–** सह भावः साह्यम्, साहाय्यमित्यर्थः ।। १०२ ।।

**वादिराजतीर्थीया–** 'नौ विरोधे' इत्यत्र नौ तवानुजः मम श्वशुरं हत्वा रत्नं नीतवानिति नौ आवाभ्यां कृष्णस्य विरोधे सति दानपतिना अक्रूरेण सह साह्यं सहेत्यस्य भावः साह्यं साहाय्यमित्यर्थः ।। १०२ ।।

**वरदराजीया–** नोऽस्मान् अवमत्य अनादृत्य । अतः तं निशि जहि । रत्नं स्यमन्तकं आदाय नौ आवां प्रति उपयाहि । कृष्णस्य कृष्णेन साकं विरोधे प्राप्ते सति दानपतिना अक्रूरेण सह साह्यं सहायमेमि आगच्छामि ।।१०२।।

**अनन्तभट्टीया–** नौ उपयाहि । कृष्णस्य विरोधे कृष्णेन विरोधे । साह्यं सहायत्वम् ।।१०२।।

**जनार्दनीया–** नोऽस्मान् अवमत्य तिरस्कृत्य । नौ आवाम् उपयाहि । कृष्णस्य विरोधे दानपतिना अक्रूरेण सह साह्यं साहाय्यमित्यर्थः । एमि ।।१०२।।

**भावविवृतिः–** साह्यं सहायवत्वं एमि गच्छामि ।।१०२।।

**ताम्रपर्णी–** सह भावः साह्यम्, साहाय्यमिति यावत् ।।१०२।।

**चट्टि–** असौ सत्राजित् पुनः सर्वांश्च पुनः नोऽस्मान् अवमत्य तिरस्कृत्य श्रीकृष्णाय सुतामदाच्च । पापबुद्धिं तं सत्राजितं निशि जहि । रत्नं स्यमन्तकमणिं चादाय नौ आवां उपयाहि । श्रीकृष्णस्य विरोधे सति दानपतिना अक्रूरेण सह साह्यं साहाय्यमित्यर्थः । एमि गच्छामि ।।१०२।।

**[1]इत्युक्त आशु कुमतिः [2]स तु पूर्वदेहे**
**दैत्यो यतस्तदकरोदथ सत्यभामा ।**
**आनन्दसंविदपि लोकविडम्बनाय**
**तद्देहमस्य तिलजे पतिमभ्युपागात् ।।१०३।।**

**व्यासतीर्थीया–** पतिगमने प्राप्तदुःखं वारयितुमुक्तम्– **आनन्देति** ।। १०३-१०४ ।।

**वेदाङ्गतीर्थीया–** तिलजे तैले । अस्य निक्षिप्य ।। १०३-१०५ ।।

**वादिराजतीर्थीया–** 'तद्देहमस्य तिलजे' इत्यत्र तिलजे तैलमञ्जूषास्थिततैले अस्य 'असु निरसने' इति धातोः, प्रक्षिप्य । पतिमभ्युपागादित्यन्वयः ।। १०३-१०४ ।।

---

१. 'एवं भिन्नमतिस्ताभ्यां सत्राजितमसत्तमः । शयानमवधील्लोभात् स पापः क्षीणजीवितः ।।' इति भागवते- १०.६१.५

२. 'स हि' इति चट्टीपाठः ।

**वरदराजीया–** यतः पूर्वदेहे पूर्वजन्मनि दैत्यः अतश्च कुमतिः शतधन्वा तत्कार्यमकरोत् । सः सत्राजितं हतवानित्यर्थः । आनन्दसंविदपि पूर्णानन्दज्ञानात्मकदेहोऽपि लोकविडम्बनाय लोकं विडम्बयितुं तस्य पितुः देहं तिलजे तैले अस्य न्यस्य, प्रक्षिप्येत्यर्थः । पतिं कृष्णम् ।।१०३।।

**अनन्तभट्टीया–** कथमेतादृशं जुगुप्सितं कृतवानित्यत उक्तम्– **पूर्वदेह इति** ।। तिलजे अस्य प्रक्षिप्य ।। १०३-१०४ ।।

**जनार्दनीया–** शतधन्वनः निन्द्यकर्मणि कथं प्रवृत्तिरभूदित्यत आह– **स त्विति** ।। स तु पूर्वदेहे यतो दैत्यः अतः तत् निन्द्यकर्म अकरोत् । अथ सत्राजिद्वधानन्तरं आनन्दसंविदपि सुखज्ञानवत्यपि सत्यभामा तद्देहं स चासौ देहश्च तद्देहः तं मृतशरीरं, पितुरिति शेषः । तिलजे तिलतैले अस्य निक्षिप्य ।।१०३।।

**भावविवृतिः–** तिलजे तैले । अस्य निक्षिप्य ।। १०३-११५ ।।

**ताम्रपर्णी–** अस्य प्रक्षिप्य । 'असु क्षेपणे' ।।१०३-११४।।

**भारतश्री–** तिलजे तैले । अस्य निक्षिप्य ।। १०३ ।।

**चट्टि–** शतधन्वनः निन्द्यकर्मणि कथं प्रवृत्तिरभूदित्यत आह– **स हीति** ।। कुमतिः सः पूर्वदेहे दैत्यः यतो इत्युक्तः सन् । तत् निन्द्यकर्म अकरोत् । अथ सत्राजिद्वधानन्तरं आनन्दसंविदपि सुखज्ञानवत्यपि सत्यभामा लोकविडम्बनाय तद्देहं तस्य पितुः देहं शरीरं तिलजे तिलतैले अस्य निक्षिप्य पतिं श्रीकृष्णं अभ्युपागात् आजगाम ।।१०३।।

**श्रुत्वा तदीयवचनं भगवान् पुरीं स्वा-**
**मायात एव तु निशम्य महोत्सवं तम् ।**
**पाञ्चालराजपुरुषोदितमाशु वृष्णि-**
**वर्यैरगान्मुसलिना सह तत्पुरीं च ।।१०४।।**

**मधुसूदनीया–** श्रुत्वा तदीयवचनं सत्यभामावचनं श्रुत्वा स्वां पुरीं द्वारकां आयात एव प्राप्त एव सन् पाञ्चालराजपुरुषोदितं महोत्सवं द्रौपदीस्वयंवराख्यं निशम्य श्रुत्वा वृष्णिवर्यैः मुसलिना च सह तत्पुरीं द्रुपदपुरीं जगाम । तथाचोक्तम्–

'तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् । कृष्णाय विदितार्थाय तप्ताऽचख्यौ पितुर्वधम् ।।
तदाकर्ण्येश्वरौ राजन् अनुसृत्य नृलोकताम् । अहो नः परमं कष्टं इत्यास्राक्षौ विलेपतुः ।।
आगम्य भगवांस्तस्मात् भार्यया साग्रजः पुरम् । शतधन्वानमारेभे हन्तुं हर्तुं च तन्मणिम् ।।
ततः पाञ्चालनगराद् याज्ञसेन्याः स्वयंवरम् । घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः ।।
आहूतस्तेन गोविन्दो गत्वा पाञ्चालके पुरे ।।' इत्यादि भागवते (१०.६१.८-१२)।।१०४-१११।।

**वरदराजीया–** तदीयं तस्याः सत्यभामायाः सम्बन्धिवचनम् । अयात एव आगमनक्षण एव इति भावः । तत्पुरीं द्रुपदपुरीम् ।।१०४।।

**जनार्दनीया–** स्वां पुरीमायाते आगच्छति सति । तु एतस्मिन्नेव क्षणे । तं महोत्सवं निशम्य, तत्पुरीं पाञ्चालपुरीमगात् ।।१०४।।

**चट्टि–** भगवान् श्रीकृष्णः तदीयवचनं सत्यभामासम्बन्धिवचनं श्रुत्वा स्वां पुरीं द्वारकामायात एव सन् पाञ्चालराजपुरुषोदितं तं महोत्सवं द्रौपदीस्वयंवराख्यं निशम्य श्रुत्वा वृष्णिवर्यैः मुसलिना बलभद्रेण च सह तत्पुरीं द्रुपदपुरीमगात् । तथा चोक्तम्–

'तैलद्रोण्यां मृतं प्रास्य जगाम गजसाह्वयम् । कृष्णाय विदितार्थाय तप्ताऽचख्यौ पितुर्वधम् ।।
तदाकर्ण्येश्वरो राजन्ननुसृत्य नृलोकताम् । अहो नः परमं कष्टमित्यस्राक्षौ विलेपतुः ।।
आगम्य भगवांस्तस्माद् भार्यया साग्रजः पुरम् । शतधन्वानमारेभे हन्तुं हर्तुं च तन्मणिम् ।।
ततः पाञ्चालनगराद् याज्ञसेन्याः स्वयंवरम् । घुष्यता यज्ञसेनेन प्रेषितो दूत आगतः ।।
आहूतस्तेन गोविन्दो गत्वा पाञ्चालके पुरे ।।' इत्यादि भागवते ।। १०४ ।।

**भीमोऽपि रुद्रवररक्षितराक्षसं तं**
**हत्वा तृणोपमतया हरिभक्तवन्द्यः ।**
**उष्याथ तत्र कतिचिद्दिनमच्युतस्य**
**[1]व्यासात्मनो वचनतः प्रययौ निजैश्च ।।१०५।।**

**व्यासतीर्थीया–** उष्येति वैदिकत्वात् । अन्यथा प्रोष्येति स्यात् । सोपवर्गो ल्यप् स्यात् ।।१०५-१०६।।

**वादिराजतीर्थीया–** 'प्रययुस्ततश्च' (श्लो-९५) इति सामान्येन पाण्डवयात्राया उक्तत्वेऽपि रुद्रवररक्षितबकस्य शिक्षणेन भीमस्यातिशयितप्रतापं बकवधानन्तरमपि कतिपयदिनेषु तत्रैव निवासं व्यासस्य भीमेऽतिशयितकृपां अर्जुनादीनामपि भीमानुयायित्वं च दर्शयितुं पुनस्तत्प्रयाणमाह– **भीमोऽपि रुद्रवररक्षितराक्षसमिति** ।। १०५ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'भीमोऽपि रुद्रवररक्षितराक्षसं तं..' इति श्लोके तृणोपमतया इत्यस्य स्वस्य तृणोपमतया युक्तमित्यर्थः । एतेन स्वस्य तृणोपममिति वक्तव्यम् । तृणोपमतयेति कथनमनु-

---

१. 'व्यास उवाच- द्रुपदस्य कुले जज्ञे सा कन्या देवरूपिणी । निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ।। पाञ्चालनगरं तस्मान्निवसध्वं महाबलाः । सुखिनस्तामनुप्राप्य भविष्यथ न संशयः ।।' इति आदिपर्वणि- १८४.१४-१५.

पपन्नमिति दूषणं पराकृतम् । स्वस्येति योग्यतया सम्बध्यते । युक्तमित्यध्याह्रियते ततश्च स्वस्य तृणोपममित्यर्थो लभ्यते इत्यभ्युपगमात् ॥१०५॥

**वरदराजीया–** एवं कृष्णकथामुक्त्वा उर्वरितां पाण्डवकथां वक्तुं अनुवादं करोति– **भीमेत्यादिना** ॥ तृणोपमतया तृणीकृत्य । तत्र एकचक्रायां उष्य स्थित्वा । निजैः भ्रात्रादिभिः ॥१०५॥

**अनन्तभट्टीया–** राक्षसं वकम् । उष्य स्थित्वा ॥ १०५-११२ ॥

**जनार्दनीया–** तं वकम् । तत्र उष्य स्थित्वा ॥१०५॥

**चट्टि–** एवं श्रीकृष्णकथामुक्त्वा उर्वरितपाण्डवकथां वक्तुं वृत्तानुवादं करोति– **भीमोऽपीत्यादिना** ॥ भीमोऽपि तं रुद्रवररक्षितराक्षसं वकं तृणोपमतया तृणसादृश्येन तृणीकृत्येत्यर्थः । हत्वा हरिभक्तैः वन्द्यः सन् तत्र एकचक्रायां कतिचिद् दिनानि उष्य स्थित्वा अथ श्रीव्यासात्मनो अच्युतस्य वचनतः वाक्यात् निजैः मात्रादिभिश्च सह प्रययौ ॥१०५॥

**माङ्गल्यमेतदतुलं[1] प्रतियात शीघ्रं**
**पाञ्चालकान् परमभोजनमत्र सिद्ध्येत् ।**
**विप्रैरितस्तत इतीरितवाक्यमेते**
**शृण्वन्त एव परिचक्रमुरुत्तराशाम्[2] ॥१०६॥**

**वेदाङ्गतीर्थीया–** एतन्मङ्गल्यमतुलम् । सिद्ध्येत् सिद्ध्यति । परिचक्रमुः जग्मुः । 'शृण्वन्त एव परिचक्रमुः' इत्यवधारणेन 'एतन्मङ्गल्यमतुलम्' 'पाञ्चालकान् प्रति शीघ्रं यात' 'परमभोजनमत्र सिद्ध्येत्' इत्युपश्रुतिरूपं वाक्यत्रयं श्रुत्वा हृष्टा अविलम्बितं जग्मुरित्युक्तं भवति ॥ १०६ ॥

**वादिराजतीर्थीया–** 'माङ्गल्यमेतदतुलम्' इत्यत्र माङ्गल्यं भविष्यति अतः प्रतियातेति योग्यपदाध्याहारः । तद्ग्रामीणजनानां वचनस्य 'भुजिर्भविता' इति प्रागेवोक्तत्वात् 'इतस्ततो विप्रैरुदीरिताम्' इत्युक्तम् । मध्ये मार्गमुभयत आगत्य मिलितैर्विप्रैरित्यर्थः ॥ १०६-१०८ ॥

**वरदराजीया–** एतत् द्रौपदीस्वयंवरात्मकं माङ्गल्यं शोभनं भवति । अतः प्रति यात । अत्र माङ्गल्ये परममुत्तमं भोजनं सिद्ध्येत् प्राप्स्येत इति इतस्ततो गच्छद्भिः विप्रैः ईरितं शृण्वन्त एव सन्तः उत्तराशां उत्तरदिशं प्रति परिचक्रमुः गतवन्तः ॥१०६॥

**अनन्तभट्टीया–** अतुलं माङ्गल्यम् । पाञ्चालकान् प्रति यात ॥ १०६-११२ ॥

---

१. 'एते सार्धं प्रयाताः स्मो वयमप्यत्र गामिनः । तत्राप्यद्भुतसङ्काश उत्सवो भविता महान् ॥६॥ ...ते तत्र विविधं दानं विजयार्थं नरेश्वराः । प्रदास्यन्ति धनं गाश्च भक्ष्यभोज्यानि सर्वशः' ॥१५॥ इत्यादिपर्वणि-१८५.

२. 'ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः । समैरुदङ्मुखैर्मार्गैः यथोद्दिष्टं च भारत ॥' इत्यादिपर्वणि-१८६.१.

**जनार्दनीया–** एतन्माङ्गल्यमुत्सवः अतुलं भवति । पाञ्चालकान् पाञ्चालविषयान् प्रति यात गच्छध्वम् । अत्र परमं भोजनं सिद्ध्येत् प्राप्स्यते । इतस्ततः विप्रैरीरितं वाक्यं शृण्वन्त एव ते पार्थाः परिचक्रमुः जग्मुः ।। १०६ ।।

**चट्टि–** एतन्माङ्गल्यमुत्सवः अतुलं भवति । अतः शीघ्रं पाञ्चालकान् पाञ्चालदेशान् प्रति यात गच्छध्वम् । अत्र उत्सवे परमं उत्तमं भोजनं सिद्ध्येत् प्राप्स्यते । इतीतस्ततः विप्रैरीरितं वाक्यं शृण्वन्त एव एते पार्थाः उत्तराशां उदीचीं दिशं प्रति परिचक्रमुः जग्मुः ।।१०६।।

**षण्णां च मध्यगमुदीर्णभुजं विशाल-**
**वक्षस्थलं बहुलपौरुषलक्षणं च ।**
**[1]दृष्ट्वैव मारुतिमसावुपलप्स्यतीह**
**कृष्णामिति स्म च वचः प्रवदन्ति विप्राः ।।१०७।।**

**व्यासतीर्थीया–** इति च वचः प्रवदन्ति स्म ।। १०७ ।।

**वेदाङ्गतीर्थीया–** इह स्वयंवरे ।। १०७-१०८ ।।

**वरदराजीया–** षण्णां कुन्त्यादीनां मध्यगं मध्ये स्थितमुदीर्णभुजं उन्नतभुजम् । बहुलं पूर्णं पौरुषं पुरुषलक्षणं यस्य स तथा तम् । मारुतिं भीमं असौ मध्यगः कृष्णां द्रौपदीं उपलप्स्यति प्राप्स्यति ।।१०७।।

**जनार्दनीया–** असौ भीमः । कृष्णां उपलप्स्यति प्राप्स्यति ।।१०७।।

**भावचन्द्रिका–** कुन्तीसाहित्येन षण्णां मध्ये मध्यमः कुन्तीपुत्रेषु । विप्रैः पृष्टा कुन्ती स्वसुतास्त्रयः सपत्नीसुतौ द्वावित्युक्ताविति भावः । मध्यमगमनात् मध्यमः । भीमस्य पश्चाद्गमनोक्तेः ।।१०७-११४।।

**चट्टि–** षण्णां कुन्त्यादीनां मद्यगं मध्ये स्थितं उदीर्णभुजं उन्नतभुजं च विशालवक्षस्थलं बहुलं पूर्णं पौरुषं लक्षणं च यस्य स तथा । तं मारुतिं दृष्ट्वैव असौ इह उत्सवे कृष्णां द्रौपदीं उपलप्स्यते प्राप्स्यते इति वचश्च विप्राः प्रवदन्ति स्म ।।१०७।।

**[2]रात्रौ दिवा च सततं पथि गच्छमानाः**
**प्रापुः कदाचिदथ विष्णुपदीं निशायाम् ।**

---

१. 'अयमेकश्च वो भ्राता दर्शनीयो महाभुजः । नियुध्यमानो विजयेत् सङ्गत्य द्रविणं महत् ।।' इत्यादिपर्वणि-१८५.२०.

२. 'अहोरात्रेणाभ्यगच्छन् पाञ्चालनगरं प्रति । अभ्याजग्मुर्लोकनदीं गङ्गां भागीरथीं प्रति ।। चन्द्रास्तमयवेलायां अर्धरात्रसमागमे ।।' इत्यादिपर्वणि-१८६.२-३.

**[1]सर्वस्य रक्षितुमगादिह पृष्ठतस्तु**
**भीमोऽग्र एव शतमन्युसुतोऽन्तरेऽन्ये ॥१०८॥**

**व्यासतीर्थीया–** गच्छमाना इति शानच्प्रत्ययान्त अनुमागमः ॥ १०८ ॥

**वरदराजीया–** दिवारात्रौ च गच्छमानाः । अत एव निशायां विष्णुपदीं गङ्गां प्रापुः । इह विष्णुपद्यां भीमः सर्वान् रक्षितुं पृष्ठतोऽगात् । शतमन्युसुतो अर्जुनोऽग्रे पुरतोऽगात् । अन्ये धर्माद्याः अनन्तरं मध्ये जग्मुश्च ॥१०८॥

**जनार्दनीया–** इह गङ्गायाम् । शतमन्युसुतः इन्द्रपुत्रः । अन्ये धर्माद्याः । अन्तरे मध्ये जग्मुः॥१०८॥

**चट्टि–** ते पाण्डवाः दिवारात्रं च सततं पथि गच्छमानाः सन्तः अथ कदाचित् निशायां विष्णुपदीं गङ्गां प्रापुः । इह मार्गे सर्वांश्च रक्षितुं भीमः पृष्ठतोऽगात् । शतमन्युसुतः इन्द्रपुत्रः अर्जुनः अग्रे पुरतः अगात् । अन्ये धर्माद्याः अन्तरे मध्ये जग्मुः ॥१०८॥

**प्राप्ते तदोल्मुकधरेऽर्जुन एव गङ्गां**
**गन्धर्वराज इह [2]चित्ररथोऽर्धरात्रे ।**
**दृष्ट्वैव [3]विप्ररहितानुदकान्तरस्थः**
**क्षत्रात्मजा इति हि धर्षयितुं स चाऽगात् ॥१०९॥**

**व्यासतीर्थीया–** [4]चित्ररथ इतीतिशब्दो नामद्योतकः ॥ १०९-११२ ॥

**वेदाङ्गतीर्थीया–** अर्धरात्रे अर्जुने गङ्गां प्राप्ते सत्येव । सः गन्धर्वराजः क्षत्रात्मजा इति ज्ञात्वा विप्ररहितान् दृष्ट्वा धर्षयितुमगात् हि । 'विप्ररहितान् दृष्ट्वा' इत्यनेन विप्रेषु सत्सु गन्धर्वयक्षादीनां बाधनसामर्थ्याभाव उक्तः ॥१०९-१११॥

**वादिराजतीर्थीया–** सहागतानां विप्राणामन्धकारवशात् किञ्चिद्दूरस्थत्वात् तथा निद्रावशात् कचिन्निद्रितत्वाद्वा 'विप्ररहितान्' इत्युक्तम् ॥ १०९-१११ ॥

---

१. 'उल्मुकं तु समुद्यम्य तेषामग्रे धनञ्जयः । प्रकाशार्थं ययौ तत्र रक्षार्थं च महारथः ॥' इत्यादिपर्वणि-१८६.४.

२. 'अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः । सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवम् ॥' इत्यादिपर्वणि-१८६.४०.

३. 'अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः । यूयं ततो धर्षिता स्थ मया वै पाण्डुनन्दनाः ॥' इत्युत्तरत्र १८६.६०. 'अनग्नयो दारहीनत्वात् । अनाहुतयः समावृतत्वात् । आश्रमविशेषहीनो ब्राह्मणो धर्षणीय इत्यर्थः ।' इति व्याख्यानम् ।

४. मातृकायाम् 'शक्यन्त शक्त्या गच्छन्त इत्यर्थः ।' इति 'चित्ररथ' इति वाक्यात्पूर्वं वाक्यमस्ति । तदस्पष्टम् ।

**वरदराजीया–** उल्मुकधरे ज्वलत्काष्ठधरे अर्जुने गङ्गां प्रति प्राप्ते एवं सति चित्ररथाख्यो गन्धर्वराजः स्वयमुदकान्तरस्थः एते क्षत्रात्मजाः क्षत्रियकुमारा इति बुद्ध्या धर्षयितुम् । विप्ररहितत्वं क्षत्रियत्वज्ञापकमुक्तम् ।।१०९।।

**जनार्दनीया–** उल्मुकधरे ज्वलत्काष्ठधरे । अर्जुने अर्धरात्रे गङ्गां प्राप्ते सत्येव । इह गङ्गायाम् । गन्धर्वराजः चित्ररथः क्षत्रात्मजा इति ज्ञात्वा, विप्ररहितान् दृष्ट्वा, धर्षयितुमगात् । 'विप्ररहितान् दृष्ट्वा' इत्यनेन विप्रेषु सत्सु गन्धर्वयक्षादीनां बाधसामर्थ्याभाव उक्तः ।।१०९।।

**चट्टि–** उल्मुकधरे ज्वलत्काष्ठधरे । अर्जुने अर्धरात्रे गङ्गां प्राप्ते सत्येव तदा इह गङ्गायां उदकान्तरस्थः चित्ररथाख्यः स गन्धर्वराजः विप्ररहितान् दृष्ट्वैव क्षत्रात्मजा इति ज्ञात्वा धर्षयितुमगात् च । 'विप्ररहितान्' इत्यनेन विप्रेषु सत्सु गन्धर्वयक्षादीनां बाधसामर्थ्याभाव उक्तः ।। १०९ ।।

**हन्ताऽस्मि वो ह्युपगतानुदकान्तमस्या**
**नद्याश्च [1]मर्त्यचरणाय निषिद्धकाले ।**
**इत्थं वदन्तममुमाह सुरेन्द्रसूनु-**
**र्गन्धर्व नास्त्रविदुषां भयमस्ति तेऽद्य ।।११०।।**

**वरदराजीया–** अस्या नद्याः गङ्गायाः उदकान्तमुपगतान् वो युष्मान् हन्ताऽस्मि हन्तुं प्राप्तोऽस्मि । मर्त्यचरणाय मनुष्यसञ्चरणाय निषिद्धकाले अर्धरात्रौ उपगतानिति सम्बन्धः । अमुं चित्ररथम् । हे गन्धर्व! ते सकाशात् अस्त्रविदुषां अस्त्रज्ञानिनां अस्माकं भयं नास्ति ।।११०।।

**जनार्दनीया–** मर्त्यसञ्चरणाय मनुष्यसञ्चरणाय । वः युष्मान् । हन्ता अस्मि । हन्तुं प्राप्त इत्यर्थः । ते सकाशात् । अस्त्रविदुषां अस्त्रज्ञानामस्माकं भयं नास्ति ।।११०।।

**चट्टि–** मर्त्यचरणाय मनुष्यसञ्चरणाय निषिद्धकाले अस्याः नद्याः उदकान्तमुदकमध्यं च उपगतान् हन्तास्मि । हन्तुं प्राप्त इत्यर्थः । इत्थं वदन्तं अमुं गन्धर्वं हे गन्धर्व! ते सकाशात् अस्त्रविदुषां अस्त्रज्ञानामस्माकं अद्य भयं नास्ति इति सुरेन्द्रसूनुरर्जुनः आह ।। ११० ।।

---

१. 'सन्ध्या संरज्यते घोरा पूर्वरात्रागमेषु या । अशीतिभिर्लवैर्हीनं तन्मुहूर्तं प्रचक्षते ।। विहितं कामचाराणां यक्षगन्धर्वरक्षसाम् । शेषमन्यन्मनुष्याणां कर्मचारेषु वै स्मृतम् ।। लोभात्प्रचारं चरतः तासु वेलासु वै नरान् । उपक्रान्ता निगृह्णीमो राक्षसैः सह बालिशान् ।।' इत्यादिपर्वणि- १८६.८-१०। 'पूर्वरात्रागमेषु पश्चिमायां दिशि अर्धास्तमितार्कमण्डलरूपा या सन्ध्या संरज्यते रक्ता भवति तस्यां मुहूर्तं प्रस्थानकालं अशीतिभिर्लवैः निमेषार्धैर्हीनं प्रचक्षते ।।८।। तदेव मुहूर्तं यक्षादीनां कर्मचारेषु विहितम्, अन्यन्मनुष्याणां कर्मचारेषु स्मृतमित्यन्वयः । सन्ध्यायामशीतिलवोपरि रात्रौ यक्षादीनामेव सञ्चारकालः अन्यदहर्मनुष्याणामित्यर्थः ।' इति व्याख्यानम् ।।

[1]सर्वं हि फेनवदिदं बहुलं बलं ते
नार्थप्रदं भवति चास्त्रविदि प्रयुक्तम् ।
इत्युक्तवन्तममुमुत्तमयानसंस्थो
बाणान् क्षिपन्नभिससार सुरेशभृत्यः ॥१११॥

**वरदराजीया–** बहुलमपि इदं ते बलं अस्त्रविदि अस्त्रज्ञे अस्मदादौ प्रयुक्तं फेनवत् नार्थप्रदम्, व्यर्थमित्यर्थः । अमुं अर्जुनं सुरेन्द्रभृत्यः चित्ररथः । अर्जुनस्यैव भृत्य इति हृदयम् ॥१११॥

**जनार्दनीया–** ते बलम् । अस्त्रविदि अस्त्रज्ञे प्रयुक्तम् । फेनवत् नार्थप्रदं व्यर्थं भवतीत्यर्थः ॥१११॥

**चट्टि–** बहुलं इदं सर्वं हि ते बलं अस्त्रविदि अस्त्रज्ञे अस्मादादौ प्रयुक्तं सत् फेनवत् नार्थप्रदं व्यर्थं भवतीत्यर्थः । इत्युक्तवन्तममुं अर्जुनं उत्तमयानसंस्थः सुरेन्द्रभृत्यः बाणान् क्षिपन् सन् अभिससार च ॥१११॥

[2]आग्नेयमस्त्रमभिमन्त्र्य तदोल्मुके स
चिक्षेप शक्रतनयोऽस्य रथश्च दग्धः ।
[3]तं चाग्निना परिगृहीतमभिप्रगृह्य
केशेषु सञ्चकर्षाऽशु सुरेन्द्रसूनुः ॥११२॥

**वेदाङ्गतीर्थीया–** अस्य रथः दग्धः । चशब्दात् स्वयं च दग्ध इत्याह । अग्निना परिगृहीतं तप्ततनुमेव चकर्ष । रथस्तु दग्ध एवेति भावः ॥ ११२-११३ ॥

**वादिराजतीर्थीया–** 'सञ्चकर्षाशु सुरेन्द्रसूनुः' इत्यत्र कर्षणं धर्षणं च अधिकं नेति सूचनाय उभयत्रापि विश्लिष्योच्चारणम् ॥ ११२-११३ ॥

**मधुसूदनीया–** ॥ **तं चाऽग्निना परिगृहीतमिति** ॥ चित्ररथपत्न्या कुम्भीनस्या प्रार्थित इति भावः । उक्तञ्च- 'त्रायस्व मां महाभाग पतिं चैव प्रमुञ्च मे । धनञ्जयं महाबाहुमूचे शत्रुनिषूदनम् ॥' इत्यादिपर्वणि (१८६.३५)॥ ११२-१२३ ॥

१. 'विभीपिका वै गन्धर्व नास्त्रज्ञेषु प्रयुज्यते । अस्त्रज्ञेषु प्रयुक्तेयं फेनवत्प्रविलीयते॥' इत्यादिपर्वणि-१८६.२७.

२. रात्रौ प्रकाशार्थं स्वहस्तधृतोल्मुकेन चित्ररथनिर्मुक्तान् बाणान् व्यपोह्य ततः उल्मुके आग्नेयमस्त्रं अभिमन्त्र्य मुमोच इत्यर्थः । 'उल्मुकं भ्रामयंस्तूर्णं पाण्डवश्चर्म चोत्तरम् । व्यपोहत शरांस्तस्य सर्वानेव धनञ्जयः ॥' इत्यादिपर्वणि-१८६.२६ । 'इत्युक्त्वा पाण्डवः क्रुद्धो गन्धर्वाय मुमोच ह । प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथं तु तत् ॥' इत्यादिपर्वणि- १८६.३१. इति च ।

३. 'अस्त्रतेजःप्रमूढं च प्रपतन्तमवाङ्मुखम् । शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः ॥ भ्रातॄन् प्रति चकर्षाथ सोऽस्त्रपातादचेतसम् ॥' इत्यादिपर्वणि- १८६.३२-३३.

**वरदराजीया–** उल्मुके स्वहस्ते विद्यमाने आग्नेयमस्त्रं अग्निदेवताकं मन्त्रं अभिमन्त्र्य योजयित्वा । अस्य चित्ररथस्य । परिगृहीतं वेष्टितं तं गन्धर्वं केशेषु प्रगृह्य आशु सञ्चकर्ष ।।११२।।

**जनार्दनीया–** अस्य रथो दग्धः । चशब्दात् स्वयं च दग्ध इत्यर्थः । अग्निना परिगृहीतं परिवेष्टितम् । तमेव सञ्चकर्ष । रथस्तु दग्ध एवेति भावः ।।११२।।

**चट्टि–** सः शक्रसूनुः अर्जुनः तदा उल्मुके आग्नेयमग्निदेवताकमस्त्रं मन्त्रमभिमन्त्र्य योजयित्वा चिक्षेप । अस्य चित्ररथस्य रथश्च दग्धः । सुरेन्द्रसूनुः अर्जुनः अग्निना परिगृहीतं वेष्टितं तं च तमेव गन्धर्वं केशेष्वभिप्रगृह्य आशु सञ्चकर्ष । चित्ररथपत्न्या प्रार्थितत्वादिति भावः । उक्तञ्च- 'त्राहि मां त्वं महाराज पतिं चैव प्रमुञ्च मे । धनञ्जयं महाबाहुमूचे शत्रुनिषूदनम् ।।' इत्यादिपर्वणि ।। ११२ ।।

**पार्थेन सन्धर्षितः शरणं जगाम**
**धर्मात्मजं तमपि सोऽथ निजास्त्रमुग्रम् ।**
**सञ्जह्र एव तत आस च [1]नामतोऽसा-**
**वङ्गारवर्ण इति वर्णविपर्ययेण ।।११३।।**

**व्यासतीर्थीया–** तमप्यर्जुनम् ।। ११३-११४ ।।

**वरदराजीया–** सन्धर्षितः स च धर्मराजं शरणं जगाम । तमपि अर्जुनमपि शरणं जगाम । सोऽर्जुनः अस्त्रं सञ्जह्रे उपसंहृतवान् । ततः अग्निना वेष्टितत्वात् वर्णविपर्ययेण पूर्ववर्णनाशेन वर्णान्तरप्राप्तिनिमित्तेन नामतो नाम्ना अङ्गारवर्ण इत्यभूत् ।।११३।।

**अनन्तभट्टीया–** तमपि अर्जुनमपि शरणं जगाम ।। ११३ ।।

**जनार्दनीया–** तमपि अर्जुनमपि । सोऽर्जुनः सञ्जह्रे संहरणं चक्रे । असौ गन्धर्वः, ततः अग्न्यस्त्रप्रतापात् जातेन वर्णविपर्येण पूर्ववर्णवैपरीत्येन नाम्ना अङ्गारवर्ण इत्यभवत् ।।११३।।

**चट्टि–** पार्थेन सन्धर्षितः गन्धर्वः धर्मात्मजं शरणं जगाम । तमपि अर्जुनमपि शरणं जगाम । अथ सोऽर्जुनः सञ्जह्रे उपसंहरणं चक्रे । असौ गन्धर्वः, ततः अग्निना वेष्टितत्वात् जातेन वर्णविपर्ययेण वर्णवैपरीत्येन नामतो अङ्गारवर्ण इत्यास ।।११३।।

---

१. 'चित्ररथगन्धर्वस्य अङ्गारपर्ण इति नामान्तरम् । 'अङ्गारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम् ।।'(१८६.१३) इत्यादिपर्ववचनात् । अस्त्राग्निना गन्धर्वस्य वाहनाख्यरथस्य देहाख्यरथस्य इत्युभयोरपि विकारोऽभवत् । अत एव तस्य नाम्न्यपि विकारोऽभवदित्यर्थः । तदाह- 'जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् । यशोहीनं न च श्लाघ्यं स्वं नाम जनसंसदि ।।' इत्यादिपर्वणि-१८६.३८. 'अङ्गारवद्भास्वरं दुस्पर्शं च पर्णं वाहनं रथो यस्य सोऽङ्गारपर्णस्तस्य भावस्तत्ताम्' इति व्याख्यानम् ।

**गन्धर्व उल्बणसुरक्ततनुः स भूत्वा**
**स्वर्णावदात उत पूर्वमुपेत्य सख्यम् ।**
**'पार्थेन दुर्लभमहास्त्रमिदं ययाचे**
**जानन्नपि स्म न हि तादृशमेष वेद ॥११४॥**

**वेदाङ्गतीर्थीया–** तदा अर्जुनं जानन्नपि ॥ ११४ ॥

**वादिराजतीर्थीया–** 'स्वर्णावदातः' इत्यत्र पूर्वं स्वर्णावदातः उत स्वर्णवत् स्वच्छवर्णश्च सः गन्धर्वः इदानीमुल्बणसुरक्ततनुर्भूत्वा पार्थेन सख्यमुपेत्येति योजना ॥ ११४ ॥

**वरदराजीया–** पूर्वं स्वर्णावदातोऽपीत्यर्थः । उल्बणा सुरक्ता तनुः यस्य सः तथा । पार्थेन सख्यमुपेत्य तत् आग्नेयमस्त्रं ययाचे । एषः गन्धर्वो जानन्नपि तादृशं यादृशं अर्जुनेन ज्ञातं तादृशं न वेद ॥११४॥

**अनन्तभट्टीया–** पूर्वं स्वर्णावदातः ॥११४॥

**जनार्दनीया–** पूर्ववर्णवैपरीत्यमेवोपपादयति– **गन्धर्व इति** ॥ पूर्वं स्वर्णावदातोऽपि सुवर्णवत् शुद्धोऽपि । गौरवर्ण इत्यर्थः । उल्बणसुरक्ततनुर्भूत्वा, इदमग्र्यस्त्रम् । गन्धर्वः जानन्नपि, अग्र्यस्त्रमिति शेषः । तादृशं न हि वेद । अर्जुनेन यथा ज्ञातं तं तथा न वेदेत्यर्थः । यद्वा वर्णविपर्ययेण अङ्गारपर्णेति पूर्वनाम्नः पररूपवर्णस्य वकाररूपवर्णविपर्ययेण अङ्गारवर्ण इति नामत आस । वर्णविपर्ययेण नामभवने निमित्तमाह– **गन्धर्वेति** ॥ तस्य चित्ररथ इति अङ्गारवर्ण इति पूर्वं नामद्वयं इति ज्ञेयम् । भारते तथा अभिधानात् ॥११४॥

**भारतश्री–** पूर्वं स्वर्णावदातोऽपि । जानन्नपि, आग्नेयमस्त्रमिति शेषः ॥ ११४ ॥

**चट्टि–** पूर्वं सः स्वर्णावदातः स्वर्णवत् शुद्धोऽपि । गौरवर्ण इत्यर्थः । सः गन्धर्वः उल्बणसुरक्ततनुः उल्बणसुरक्ता तनुः यस्य स तथाविधः भूत्वा उतानन्तरं पार्थेन अर्जुनेन सख्यं उपेत्य इदं दुर्लभं महास्त्रमाग्नेयास्त्रं ययाचे । एषः गन्धर्वः आग्नेयास्त्रं जानन्नपि तादृशं यादृशं अर्जुनेन ज्ञातं तादृशमित्यर्थः न वेद ॥ ११४ ॥

**विद्या सुशिक्षिततमा हि सुरेन्द्रसूनौ**
**तामस्य चावददसावपि कालतोऽस्मै ।**
**गन्धर्वगामवददन्वगदृश्यविद्यां**
**पश्चादिति स्म पुरुहूतसुतस्य वाक्यात् ॥११५॥**

---

१. 'त्वत्तोऽप्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम् । तथैव योग्यं बीभत्सो चिराय भरतर्षभ ॥' इत्यादिपर्वणि- १८६.७७.

**व्यासतीर्थीया–** कालान्तरे विद्यां कस्मादवददित्यत उक्तम्– **पश्चादिति** ।।११५।।

**वेदाङ्गतीर्थीया–** असौ अर्जुनः । तां स्वविद्यां अस्य गन्धर्वस्य अवदत् । असावपि गन्धर्वोऽपि गन्धर्वगां अदृश्यविद्याम्, अस्मै अर्जुनाय कालतः कालान्तरे अन्वक् अनुकूलतया अर्जुनेच्छानुसारेणेत्यर्थः, अवदत् । तदानीमेव कस्मात् न अवददित्यत आह-- **पश्चादिति** ।। ११५ ।।

**वादिराजतीर्थीया–** 'असावपि कालतोऽस्मै' इत्यत्र पश्चात् कालान्तरे भविष्यतीति पुरुहूतसुतस्य वाक्यात् असौ गन्धर्वोऽपि कालतः किञ्चित्कालात् अन्वक् अनन्तरं गन्धर्वगां अदृश्यविद्यां अस्मै अर्जुनाय अवददिति योजना ।। ११५ ।।

**वरदराजीया–** तादृशमित्येतत् विवृणोति– **विद्येति** ।। हि यस्मात् विद्या आग्नेयविद्या सुशिक्षिततमा अतिशयेन सुशिक्षिता । गन्धर्वस्य तादृशी शिक्षा नाभूदिति भावः । अर्जुनो अस्य चित्ररथस्य तां विद्यामवदत् । इदानीमेव दत्तवानिति भावः । असौ गन्धर्वोऽप्यसौ अस्मै अर्जुनाय कालतः कालान्तरे गन्धर्वगां गन्धर्वेषु विद्यमानां अन्वक् तत्क्षणमेव अदृश्यविद्यां क्षणमात्रेणादृश्यत्वप्रापकविद्यां अवदत् । गन्धर्वः स्वकीयविद्यां कालान्तरे अर्जुनाय दत्तवानिति भावः । तत्र हेतुमाह– **पश्चादिति** ।। त्वदीयां गन्धर्वविद्यां कालान्तरे अहं ग्रहीष्यामीति पुरुहूतसुतस्य अर्जुनस्य वाक्यात् पश्चादेव दत्तवानिति भावः।।

**अनन्तभट्टीया–** उत्तरकाले विद्यां गृहाणेति गन्धर्वेणोक्ते पश्चादिति अन्यस्मिन् काले भविष्यतीति पुरुहूतसुतस्य वाक्यात् कालान्तरे अवददिति[1] भावः ।। ११५ ।।

**जनार्दनीया–** तदेव विवृणोति– **विद्येति** ।। हि यस्मात् । सुरेन्द्रसूनौ विद्या आग्नेयास्त्रविद्या । सुशिक्षिततमा अतिशयेन सुशिक्षिता । अतः असौ अर्जुनः तां विद्यां अस्य गन्धर्वस्य अवदत् । असावपि गन्धर्वोऽपि गन्धर्वगां अदृश्यविद्यां अस्मै अर्जुनाय कालतः कालान्तरे अन्वगनुकूलतया अर्जुनानुसारेणेत्यर्थः । अवदत् । तदनीमेव कस्मात् नाववददित्यत आह– **पश्चादिति** ।। पश्चात् कालान्तरे ग्रहीष्यमीति पुरुहूतसुतस्य वाक्यात् कालान्तरे ददाविति भावः ।।११५।।

**ताम्रपर्णी–** ।। **तामस्येति** ।। सोऽर्जुनः चित्ररथस्य विद्यामवदत् । असौ गन्धर्वोऽपि पश्चादुपदिशाति पुरुहूतसुतवाक्यात् कालान्तरे गन्धर्वगामदृश्यविद्यां अन्वक् सम्यक् अर्जुनेच्छानुसारेण वाऽवददित्यर्थः।।

**अतिविशद–** 'गन्धर्वगामवददन्वगदृश्यविद्याम्' इत्यत्र अन्वक् तत्क्षण एव अदृश्यविद्या पुरुषाणां क्षणमात्रेण अदृश्यत्वप्राप्तिरूपकां विद्यामिति वदन्ति । केचित्तु- 'पश्चादिति स्म पुरुहूतसुतस्य वाक्यात्' इत्यस्मादेव अन्वक् अनन्तरं अदृश्यविद्यामवदत् इति । अपरे तु- 'अन्वक् अनुसश्चारिणः । तेषामदृश्यत्व-प्रापकां विद्याम्' इति वदन्ति । 'अन्वगन्वक्षमनुगेऽनुपदं क्लीवमव्ययम्' इत्यमरः ।। ११५-१४५ ।।

---

१. 'अग्रहीदिति' इति क्वचित् कोशेषु ।

**भावचन्द्रिका–** अदृश्यं वेदयतीत्यदृश्यविद्या । 'चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः । यच्चक्षुषा द्रष्टुमिच्छेत् त्रिषु लोकेषु किञ्चन ।। तत्पश्येद्यादृशं चेच्छेत् तादृशं द्रष्टुमर्हति ।।' इति भारतकथा (आदिपर्वणि-१८६.४३-४५) ।। ११५-११६ ।।

**भारतश्री–** कालतः कालान्तरे । अन्वक् अनुकूलतया । अर्जुनानुसारेणेत्यर्थः ।। ११५ ।।

**चट्टि–** तदेव विवृणोति– **विद्येति** ।। हि यस्मात् सुरेन्द्रसूनौ अर्जुने विद्या आग्नेयास्त्रविद्या सुशिक्षिततमा अतिशयेन शिक्षिता अतः असौ अर्जुनः तां विद्यां चास्य गन्धर्वस्य अवदत् । असावपि गन्धर्वोऽपि गन्धर्वगां अदृश्यविद्याम् अस्मै अर्जुनाय कालतः कालान्तरे अन्वगनुकूलतया अर्जुनानुसारेणेत्यर्थः । अवदत् । तदनीमेव कस्मात् नावददित्यत आह– **पश्चादिति** ।। पश्चात् कालान्तरे ग्रहीष्यामीति पुरुहूतसुतस्य अर्जुनस्य वाक्यात् कालान्तरे ददाविति भावः ।।११५।।

**आधिक्यतः स्वगतसंविद एव साम्ये**
**नैवेच्छति स्म निमयं स धनञ्जयोऽत्र ।**
**[1]धर्मार्थमेव स तु तां परिदाय तस्मै**
**कालेन संविदममुष्य च धर्मतोऽयात् ।।११६।।**

**व्यासतीर्थीया–** अर्जुनोऽपि पश्चाद्विद्यां वदेति किमर्थमवददित्यत आह– **आधिक्यत इति** ।। धनञ्जयो स्वगतसंविद आधिक्यत एव निमयं नैवेच्छति स्म । विद्याया आधिक्येऽपि अस्मान्निमयमं (किं) नैवेच्छदित्यत उक्तम्– **साम्येति** ।। दीयमानयोः साम्ये हि विनिमयो स्यादित्यर्थः ।।११६-११७।।

**वेदाङ्गतीर्थीया–** कुतो अवददित्यत आह– **आधिक्यत इति** ।। स्वगतसंविदः स्वगतविद्यायाः आधिक्यत एव । गान्धर्वस्वविद्ययोः साम्ये निमयं दानादानरूपव्यत्यासं नैवेच्छति स्म । स्वविद्यां दत्वा तदानीमेव गन्धर्वविद्यापरिग्रहे उभयविद्ययोः साम्यं स्यात् । तच्च न युक्तम् । स्वविद्यायाः आधिक्यात् । तस्मात् तदानीमेव गन्धर्वविद्यां नाग्रहीदिति भावः । अमुष्य गन्धर्वस्य संविदम् ।। ११६-११७ ।।

**वादिराजतीर्थीया–** तत्र निमित्तमाह– **आधिक्यत इति** ।। सः धनञ्जयः स्वगतसंविदः आधिक्यतः आधिक्याद्धेतोः । साम्य एव निमयं कर्तुं योग्यम् । विनिमयं स्वकीयं दत्वा परकीयग्रहणमित्यर्थः । नैवेच्छति स्म । सः अर्जुनः अत्र अस्मिन् समये धर्मार्थमेव प्रत्युपकारं विना दानेन स्वस्य पुण्यसिद्ध्यर्थमेव तां अग्निविद्यां तस्मै परिदाय, अमुष्य गन्धर्वस्य धर्मतः पुण्याय यतेर्भिक्षादातृगृहस्थस्येव स्वस्यास्त्रदानेन

---

१. (आदिपर्वणि-१९०..३-६)'ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि । गन्धर्वाय स च प्रीतो वचनं चेदमब्रवीत्। मयि सन्ति हयश्रेष्ठास्तव दास्यामि वै सखे । उपकारकृतं मित्रं प्रतिकारेण योजये ।। गृह्णीष्व चाक्षुषीं विद्यामिमां भरतसत्तम । एवमुक्तोऽर्जुनः प्रीतो वचनं चेदमब्रवीत् ।। त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम । कार्यकाले ग्रहीष्यामः स्वस्ति तेऽस्त्विति चाब्रवीत्' इत्यादिवाक्याभिप्रायमाह– अधिक्यतः स्वगतसंविद इति ।।

तस्यैव पुण्यदानायेति यावत् । कालेन कालान्तरेण संविदं अस्त्रं दिशामीति गन्धर्ववाचं अयात् प्राप । विनिमयो हि साम्ये सत्येव स्यात् । तच्च गन्धर्वादुत्तमस्यार्जुनस्य नास्ति । एकं तस्मै दत्वा तस्मादेकस्य ग्रहणे वणिज इव पुण्यश्च नास्ति । अतो हेतुद्वयेनापि विनिमयं नैच्छदिति भावः ।। ११६ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'आधिक्यतः स्वगतसंविद एव..' इत्यस्ति । तस्यार्थः- साम्ये सत्येव विनिमयः कर्तव्यः । सः धनञ्जयः अत्र अस्या दीयमानायाः स्वगतसंविदः स्वगतविद्यायाः आधिक्यतः आधिक्यात् निमयं विनिमयं नैवेच्छति स्मेत्यर्थः । एतेन अत्र इत्येतत् व्यर्थमिति दूषणं पराकृतम् । अर्जुनगतविद्यामात्रस्य आधिक्यमिति प्रतीतिनिरासार्थं अत्र इत्यनेन दीयमानविद्याया आधिक्यमुच्यत इति स्वीकरणात् । एतेनैव साम्ये इत्यस्य स्वगतसंविद एवेत्येवकारस्य च वैयर्थ्यमिति दूषणं निरस्तम् । एवकारस्य साम्य इत्यनेनान्वयं निमय इत्यस्य विनिमयं इत्यर्थवशात् विभक्तिविपरिणामं च कर्तव्य इत्यध्याहारं च अभ्युपेत्य अर्थस्योक्तत्वात् ।।११६।।

**वरदराजीया–** ननु अर्जुनेनापि तथा किमर्थमुक्तमित्यत आह– **आधिक्यत इति** ।। स्वगतसंविदः स्वस्मिन् विद्यमानायाः विद्यायाः आधिक्यतः उत्तमत्वात्, साम्येन विद्ययोः साम्येन निमयं विनिमयं सः धनञ्जयः नेच्छति स्म । स्वविद्यां दत्वा तत्प्रतिनिधित्वेन तद्विद्याग्रहणे विनिमयेन विद्ययोः साम्यमेव स्यात् । स्वविद्यायाश्च आधिक्येन साम्यं मा भूदित्येतदर्थं धर्मार्थमेव मत्वा, स तु अर्जुनस्तस्मै गन्धर्वाय तां स्वकीयां परिदाय दत्वा, कालेन कालान्तरेण अमुष्य गन्धर्वस्य संविदं विद्यां धर्मतः धर्मार्थमेव अयात् प्रापेत्यर्थः ।।११६।।

**अनन्तभट्टीया–** किमर्थं तथा अवादीदित्यत आह– **आधिक्यत इति** ।। संविदः विद्यायाः निमयं विनिमयम् ।। ११६-११७ ।।

**लघ्वनन्तभट्टीया–** साम्येन कर्तुमुचितं विनिमयम् ।। ११६-१३० ।।

**जनार्दनीया–** अर्जुनः पश्चादिति किमर्थमवददित्यत आह– **आधिक्यत इति** ।। संविदः विद्यायाः आधिक्यत एवोत्तमत्वादेव । अत्र गन्धर्वस्वविद्ययोः विनिमयं दानादानरूपं व्यत्यासं नैवेच्छति स्म । कुतः? यतः उभे विद्ये साम्ये समे स्याताम् । स्वविद्यां दत्वा, तदानीमेव गन्धर्वविद्यापरिग्रहणे उभयोः विद्ययोः साम्यमेव स्यात् । तच्च न । स्वविद्याया आधिक्यात् तस्मात् तदानीमेव गन्धर्वविद्यां नाग्रहीदिति भावः । सोऽर्जुनः तस्मै गन्धर्वाय तां स्वविद्यां धर्मार्थमेव परिदाय दत्वा, कालेन कालान्तरे अमुष्य गन्धर्वस्य संविदं विद्यां धर्मतो धर्मार्थतः अयात् प्राप ।।११६।।

**भावविवृतिः–** निमयं विनिमयम् ।। ११६ ।।

**ताम्रपर्णी–** धनञ्जयः पश्चादिति कुतोऽवददित्यत आह– **आधिक्यत इति** ।। अत्र गन्धर्वस्वगतविद्ययोः मध्ये स्वगतसंविद आधिक्यतः साम्य एव भाव्यं विनिमयं नैवेच्छतीत्यर्थः ।।११६-११७।।

**भारतश्री–** अर्जुनः पश्चादिति किमर्थमवददिति तत्राह– **आधिक्यत इति** ।। तदानीमेव गन्धर्वविद्याग्रहणे उभे विद्ये साम्ये समे, स्यातामिति शेषः । अतो विनिमयं विद्याविनिमयं नैच्छदिति । समयोरेव विनिमयः इति नियमात् । अतः स्वविद्यां धर्मतः प्रदाय तद्विद्यां कालान्तरे जग्राहेति भावः ।। ११६-११९ ।।

**चट्टि–** सः धनञ्जयः साम्ये सति कर्तव्यं निमयं विनिमयं अत्रानयोः विद्ययोः नैवेच्छति स्म । कुत इत्यत आह– **स्वेति** ।। स्वगतसंविदः स्वनिष्ठविद्यायाः आधिक्यत एव नैच्छत् । यत्र देयादेयवस्तुनोः साम्यं तत्र विनिमयः कर्तव्यः । प्रकृते न तथेति नैच्छत् इति भावः । सोऽर्जुनः तस्मै गन्धर्वाय तां स्वविद्यां धर्मार्थमेव परिदाय दत्वा, कालेन कालान्तरेण अमुष्य गन्धर्वस्य संविदं विद्यां च धर्मतो धर्मार्थं अयात् प्राप ।। ११६ ।।

**पार्थेन सोऽपि बहुलाश्च कथाः कथित्वा**
**धौम्यस्य सङ्ग्रहणमाह पुरोहितत्वे ।**
**दास्यामि [१]दिव्यतुरगानिति सोऽर्जुनाय**
**वाचं निगद्य दिवमारुहदप्यगुस्ते ।।११७।।**

**वादिराजतीर्थीया–** 'बहुलाश्च कथाः कथित्वा' इत्यत्र कथाः पुरोहितसङ्ग्रहाय संवरणाख्यनृपस्य कथा इत्यर्थः ।। ११७ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'पार्थेन सोऽपि बहुलाश्च कथाः..' इति श्लोके 'धौम्यस्य सङ्ग्रहणमाह पुरोहितत्वे' इत्यस्य पुरोहितत्वे पुरोहितत्वार्थं धौम्यस्य सङ्ग्रहणमाहेत्यर्थः । एतेन पुरोहितत्वे इत्येतदनन्वितमिति दूषणं परास्तम् । पुरोहितत्वे इति सप्तमी तादर्थ्ये इत्यङ्गीकृत्य । पुरोहितत्वे इत्यस्य पुरोहितत्वार्थमित्यर्थः । धौम्यस्य भवत्पुरोहितत्वलाभार्थमिति तात्पर्यार्थ इत्यभ्युपगमात् ।।११७।।

**वरदराजीया–** सोऽपि गन्धर्वः पार्थेन सह बहुलाः बह्वीः कथाः कथित्वा पुरोहितत्वे विषये धौम्यस्य आचार्यस्य सङ्ग्रहणं परिग्रहणं परिग्रहमाह । धौम्यः पुरोहितत्वेन सङ्ग्राह्यः इत्युक्तमिति भावः । स गन्धर्वः ते तुभ्यं दिव्यतुरगान् स्वर्गस्थतुरङ्गमान् दास्यामीति निगद्योक्त्वा दिवं स्वर्गमारुहत् । ते पाण्डवा अपि अगुः गतवन्तः ।।११७।।

---

१. 'गन्धर्वजानामश्वानामहं पुरुषसत्तम । भ्रातृभ्यस्तव तुभ्यं च पृथक् दाता शतंशतम् ।। देवगन्धर्ववाहास्ते दिव्यवर्णा मनोजवाः । क्षीणाक्षीणा भवन्त्येते न हीयन्ते च रंहसः ।।' आदिपर्वणि- १८६.४८-४९. । 'अर्जुन उवाच- अस्माकमनुरूपो वै यः स्याद् गन्धर्ववेदवित् । पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव ।।' 'गन्धर्व उवाच- यवीयान् देवलस्यैष वने भ्राता तपस्यति । धौम्य उत्कोचके तीर्थे तं वृणुध्वं यदीच्छथ ।।' आदिपर्वणि-१९०..१-२.

**जनार्दनीया–** स गन्धर्वः पुरोहितत्वे विषये धौम्यस्य धौम्याचार्यस्य ग्रहणं अङ्गीकारमाह । निगद्य उक्त्वा, दिवमन्तरिक्षं आरुहत् आरुरोह । तेऽपि पार्था अपि अगुः ययुः ॥११७॥

**भावविवृतिः–** पुरोहितत्वे पौरोहित्ये विषये । धौम्यस्य सङ्ग्रहणं करिष्यथ इत्याहेत्यर्थः । सखिवरणवत्पुरोहितवरणमपि होमपूर्वकं कर्तव्यमिति सूचनाय सम् इत्युपसर्गः । 'सख्यं चकार हुतभुक्प्रमुखे च तस्य' (ता.नि-६.२) इत्युक्तत्वात् ॥ ११७ ॥

**भावचन्द्रिका–** पुरोहितग्रहणेन युक्ताः । वसिष्ठेन...* संवरणो नाम राजा आस । स सूर्यपुत्रीं तपतीं उपयेमे । तेनैव कल्माषपादस्य राक्षसत्वविमोकः । तस्मादिष्टप्राप्त्यादिकम् । [1]पुरोहितो देवेत्यादि संग्रहणमिति । पुण्याहवाचनपूर्वकं पुरोहितं ववृण इति प्रकारेण ॥ ११७ ॥

**चट्टि–** सोऽपि गन्धर्वः पार्थेनार्जुनेन बहुलाः वह्वीः कथाः कथित्वा, पुरोहितसङ्ग्रहाय संवरणाख्यनृपस्य कथा इत्यर्थः । पुरोहितत्वे विषये धौम्यस्य धौम्याचार्यस्य सङ्ग्रहणं परिग्रहणमाह । सः गन्धर्वः अर्जुनाय दिव्यतुरगान् दास्यामीति वाचं निगद्य उक्त्वा दिवं स्वर्गं आरुहत् । ते पार्था अपि अगुः ययुः ॥ ११७ ॥

**ते धौम्यमाप्य च [2]पुरोधसमुत्तमज्ञं**
**विप्रात्मजोपमतया विविशुः पुरं च ।**
**पाञ्चालकस्य निखिलां ददृशुश्च तत्र**
**मूर्धाभिषिक्तसमितिं समलंकृतां च ॥११८॥**

**व्यासतीर्थीया–** उत्तमश्चासौ ज्ञश्चेत्युत्तमज्ञः तम् । राजन्यो मूर्धाभिषिक्तः ॥ ११८-११९ ॥

**वेदाङ्गतीर्थीया–** पाञ्चालकस्य पुरं विविशुः । मूर्धाभिषिक्तसमितिं राजन्यमण्डलम् ॥ ११८ ॥

**वादिराजतीर्थीया–**मूर्धाभिषिक्तसमितिं राजसभाम् । 'मूर्धाभिषिक्तो राजन्यः' इत्यनुशासनम् ॥११८॥

**वरदराजीया–** ते पाण्डवाः उत्तमश्चासौ ज्ञश्च तम् । धौम्यं पुरोधसं पुरोहितं आप्य प्राप्य विप्रात्मजोपमतया ब्राह्मणकुमारवेषेण पाञ्चालकस्य द्रुपदस्य पुरं विविशुः प्रविष्टाः । तत्र पुरे मूर्धाभिषिक्तानां राज्ञां निखिलां समितिं समूहं ददृशुः ॥११८॥

**अनन्तभट्टीया–** उत्तमश्चासौ ज्ञश्चेति ॥ विप्रात्मजेति ॥ विप्रवेषेणेत्यर्थः ॥ ११८-१२० ॥

---

१ अनन्वितमिदं वाक्यम् ।

२. 'स हि वेदार्थतत्त्वज्ञः तेषां गुरुरुदारधीः । वेदविच्चैव वाग्मी च धौम्यः श्रीमान् द्विजोत्तमः ॥ तेजसा चैव बुद्ध्या च रूपेण यशसा श्रिया । मन्त्रैश्च विविधैर्धौम्यस्तुल्य आसीद् बृहस्पतेः' इत्यादिपर्वणि-१९९.१२-१३.

**जनार्दनीया—** उत्तमज्ञं उत्तमश्चासौ ज्ञश्चेति तम् । धौम्यं पुरोहितमाप्य, विप्रात्मजोपमतया विप्रकुमाराणां सादृश्येन । विप्रवेषेणेत्यर्थः । पाञ्चालकस्य पुरं विविशुः । तत्र द्रुपदस्य सभायाम् । मूर्धाभिषिक्तसमितिं राज्ञां समितिं मण्डलम् ।।११८।।

**भावविवृतिः—** 'ते धौम्यं प्राप्य' इत्यत्र होमपूर्वकं पुरोधसमाप्येति सूचनाय चशब्दः ।।११८-१२७।।

**ताम्रपर्णी—** उत्तमश्चासौ ज्ञश्च उत्तमज्ञः तम् ।। ११८-१२६ ।।

**चट्टि—** ते पाण्डवाः उत्तमज्ञं उत्तमश्चासौ ज्ञश्च तम्, उत्तमं परमात्मानं जानातीति वा उत्तमज्ञः तं धौम्यं पुरोधसं पुरोहितं चाप्य, विप्रात्मजोपमतया विप्रकुमाराणां सादृश्येन । विप्रवेषेणेत्यर्थः । पाञ्चालकस्य पुरं च विविशुः । तत्र द्रुपदस्य सभायां समलंकृतां निखिलां च मूर्धाभिषिक्तानां राज्ञां समितिं समूहं ददृशुः ।। ११८ ।।

**राजन्यमण्डलमुदीक्ष्य सुपूर्णमत्र**
**[1]कृष्णां प्रगृह्य सहजः प्रगृहीतमालाम् ।**
**तेषां च मध्यमगमत् कुलवीर्यसम्प-**
**युक्तां विभूतिमथ चाऽह समस्तराज्ञाम् ।।११९।।**

**वेदाङ्गतीर्थीया—** समस्तराज्ञां विभूतिम् । कृष्णां प्रति ।। ११९ ।।

**वादिराजतीर्थीया—** 'प्रगृहीतमालाम्' इत्यत्र प्रगृहीतरुद्रदत्ताम्लाननवकञ्जमालामित्यर्थः ।। ११९ ।।

**सत्याभिनवतीर्थीया—** तत्रैव 'राजन्यमण्डलमुदीक्ष्य सुपूर्णमत्र..' इति श्लोके 'कुलवीर्यसम्पयुक्तां विभूतिम्' इत्यस्य कुलं च वीर्यं धनादिसम्पच्च ताभिः युक्तां विभूतिं गजतुरगाद्यैश्वर्यमित्यर्थः । एतेन सम्पच्छब्देन विभूतेरुक्तत्वात् विभूतिमित्येतत् पुनरुक्तमिति दूषणस्यानवकाशः । सम्पद्विभूतिशब्दयोः अर्थभेदस्योक्तत्वात् ।। ११९ ।।

**वरदराजीया—** सुपूर्णं सम्पूर्णम् । राजन्यानां मण्डलं समूहम् । सहजः धृष्टद्युम्नः प्रगृहीता माला यस्या सा तथा ताम् । कृष्णां द्रौपदीं प्रगृह्य हस्ते गृहीत्वा तेषां समस्तराज्ञां मध्यं मध्यप्रदेशे अगमत् । कुलवीर्यसम्पत्तिभिः युक्तां समस्तराज्ञां विभूतिमैश्वर्यं चाह, द्रौपद्यै इति शेषः ।।११९।।

**जनार्दनीया—** सहजो धृष्टद्युम्नः सुपूर्णं सम्पूर्णं राजन्यमण्डलं राजसमूहं उदीक्ष्य, कृष्णां प्रगृह्य, तेषां राज्ञां मध्यमगमत् प्राप । समस्तराज्ञां कुलवीर्यसम्पयुक्तां विभूतिमैश्वर्यं आह, द्रौपद्यै इति शेषः ।।११९।।

---

१. 'निःशब्दे तु कृते तस्मिन् धृष्टद्युम्नो विशाम्पते । कृष्णामादाय विधिवत् मेघदुन्दुभिनिःस्वनः ।। रङ्गमध्यं गतस्तत्र मेघगम्भीरया गिरा । वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ।।' इत्यादिपर्वणि- २००.७८-७९.

**चट्टि–** सहजो धृष्टद्युम्नः अत्र सभायां सुपूर्णं सम्पूर्णं राजन्यमण्डलं राजसमूहं उदीक्ष्य, प्रगृहीतमालां कृष्णां च प्रगृह्य, तेषां राज्ञां मध्यमगमत् प्राप । समस्तराज्ञां कुलवीर्यसम्पयुक्तां विभूतिमैश्वर्यं चाह, द्रौपद्यै इति शेषः ।। ११९ ।।

**तांश्च प्रदर्श्य सकलान्[1] स हुताशनांश-**
**श्चापं च तत् प्रतिनिधाय सपञ्चबाणम् ।**
**आहाभिभाष्य सकलान् नृपतीनथोच्चै-**
**र्दीप्यद्धुताशनवपुर्घनतुल्यघोषः ।।१२०।।**

**व्यासतीर्थीया–** तांश्च तस्यै प्रदर्श्य ।। १२०-१२१ ।।

**वेदाङ्गतीर्थीया–** तान् पाण्डवांश्च प्रदर्श्य कृष्णायै ।। १२० ।।

**वादिराजतीर्थीया–** 'आहाभिभाष्य' इत्यत्र अभिभाष्य अभितः स्वभाषणश्रवणानुकूलान् कृत्वेत्यर्थः ।।१२०-१२३।।

**वरदराजीया–** हुताशनांशो अग्न्यवताररूपः सः धृष्टद्युम्नः तान् सकलान् नृपान् द्रौपद्यै प्रदर्श्य पञ्चभिर्बाणैः सहितं तच्चापं च प्रतिनिधाय स्थापयित्वा नृपतीन् अभिभाष्य अभिमुखीकृत्य उच्चैः आह । दीप्यद्धुताशनवत् वपुः यस्यासौ तथा । घनेन मेघेन तुल्यो गम्भीरघोषः ध्वनिः यस्य स तथा ।।१२०।।

**जनार्दनीया–** स हुताशनांशः अग्न्यवतारो धृष्टद्युम्नः तान् नृपतीन् प्रदर्श्य, कृष्णायै इति शेषः । निधाय स्थापयित्वा, सभायामिति शेषः । दीप्यद्धुताशनवपुः दीप्यमानाग्निवत् वपुर्यस्य स तथोक्तः । घनतुल्यघोषः मेघेन तुल्यो गम्भीरो घोषो ध्वनिर्यस्य स तथोक्तः । नृपतीनाभाष्य स्वस्याभिमुखीकृत्वा उच्चैराह ।।१२०।।

**भारतश्री–** निखिलान् दुर्योधनादीन् ।।१२०-१२६ ।।

**चट्टि–** हुताशनांशः अग्न्यवतारः स धृष्टद्युम्नः तान् सकलान् नृपांश्च प्रदर्श्य, कृष्णायै इति शेषः । पञ्चभिः बाणैः सहितं तच्चापं च प्रतिनिधाय स्थापयित्वा, सभायामिति शेषः । सकालन् नृपतीन् अभिभाष्य अभिमुखीकृत्य दीप्यद्धुताशनवपुः दीप्यमानाग्निवत् वपुर्यस्य स तथोक्तः । घनेन मेघेन तुल्यः घोषः ध्वनिर्यस्य स तथाभूतः सन् उच्चैराह ।। १२० ।।

**[2]एतेन कार्मुकवरेण तरूपरिस्थ-**
**मत्स्यावभासमुदके प्रतिवीक्ष्य येन ।**

---

१. 'निखिलान्' इति भारतश्रीपाठः ।

२. 'इदं धनुर्लक्ष्यमिमे च बाणाः शृण्वन्तु मे भूपतयः समेताः । छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शितैर्व्योमचरैर्दशार्धैः ।।' आदिपर्वणि-२००.६०.

**एतैः शरैः प्रतिहतो भवतीह मत्स्यः**
**कृष्णाऽनुयास्यति तमद्य नरेन्द्रवीराः ॥१२१॥**

**वेदाङ्गतीर्थीया–** तरूपरिस्थमत्स्यावभासं वृक्षोपरि तिष्ठतः मत्स्यस्य प्रतिबिम्बम् ॥१२१-१२३॥

**सत्याभिनवतीर्थीया–** तत्रैव 'एतेन कार्मुकवरेण तरूपरिस्थं..' इति श्लोके इह इत्यस्य अस्मिन् राजयुक्तस्थाने इत्यर्थः । एतेन इह इत्येतत् व्यर्थमिति दूषणं परास्तम् । राज्ञां पुरतः एषः लक्ष्यभेदः कर्तव्यः । न तु एकान्ते इत्याशयेन अस्मिन् राजयुक्तस्थाने इति वक्तुं इह इत्युक्तमित्यभ्युपगमात् ॥१२१॥

**वरदराजीया–** तरूपरिस्थितस्य वृक्षस्योपरि स्थितस्य मत्स्यावभासं प्रतिबिम्बं उदके स्थितं प्रतीक्ष्य येन पुरुषेण शरैः पञ्चभिः मत्स्यः प्रतिहतः घातितो भवति भवेत्, तं पुरुषं कृष्णा द्रौपदी अनुयास्यति प्राप्स्यति हे नरेन्द्रवीराः! ॥१२१॥

**अनन्तभट्टीया–** अवभासं प्रतिबिम्बम् ॥ १२१-१२३ ॥

**जनार्दनीया–** हे नरेन्द्रवीराः! तरूपरिस्थमत्स्यावभासं वृक्षोपरिस्थितमत्स्यस्य प्रतिबिम्बम् । येन पुरुषेण । अनुयास्यति प्राप्स्यति ॥ १२१ ॥

**चट्टि–** हे नरेन्द्रवीराः! तरूपरिस्थमत्स्यावभासं तरोः वृक्षस्य उपरिस्थस्य उपरिस्थितस्य मत्स्यस्य अवभासं प्रतिबिम्बं उदके प्रतिवीक्ष्य येन पुरुषेण एतेन कार्मुकवरेणैतैः पञ्चभिः शरैः मत्स्यः प्रतिहतः घातितो भवति, तं पुरुषं अद्य कृष्णा द्रौपदी अनुयास्यति प्राप्स्यति ॥ १२१ ॥

**[1]इत्यस्य वाक्यमनु सर्वनरेन्द्रपुत्रा**
**उत्तस्थुरुद्धतमदाश्चलकुण्डलास्याः ।**
**अस्त्रं बलं च बहु नैजमभीक्षमाणाः**
**स्पर्धन्त एव च मिथः समलंकृताङ्गाः ॥१२२॥**

**व्यासतीर्थीया–** चलत्कुण्डलास्या इति भ्रमणं द्योतयति ॥ १२२-१२६ ॥

**वरदराजीया–** इति उक्तरीत्या अस्य धृष्टद्युम्नस्य वाक्यं अनु वाक्यं श्रुत्वैव चलकुण्डलास्याः चलकुण्डलयुतमुखाः, उद्धतः उत्कृष्टः मदो गर्वो येषां ते तथा । उत्तस्थुः उत्थिताः । नैजं स्वकीयं बाहुवलं च अभिवीक्ष्यमाणाः अभिमन्यमानाः मिथः स्पर्धन्तः अहं पूर्वमहं पूर्वमिति स्पर्धां कुर्वन्तः ॥१२२॥

---

१. 'तेऽलंकृताः कुण्डलिनो युवानः परस्परं स्पर्धमाना नरेन्द्राः। अस्त्रं बलं चात्मनि मन्यमाना सर्वे समुत्पेतुरुदायुधास्ते। रूपेण वीर्येण कुलेन चैव शीलेन वित्तेन च यौवनेन । समिद्धदर्पा मदवेगभिन्ना मत्ता यथा हैमवता गजेन्द्राः।' इत्यादिपर्वणि- २०२.१-२.

**जनार्दनीया—** उद्धतमदा उत्कृष्टगर्वाः नैजं स्वकीयं अस्त्रं वलं वाहुवलं बहु उत्कृष्टमिति अभीक्षमाणाः अभिमन्यमानाः मिथः स्पर्धन्तः अहं पूर्वमहं पूर्वमिति स्पर्धां कुर्वन्तः उत्तस्थुरुत्थिताः ।।१२२।।

**चट्टि—** समलंकृतानि अङ्गानि येषां ते तथा । सर्वनरेन्द्रपुत्राः इति पूर्वोक्तमस्य धृष्टद्युम्नस्य वाक्यमनु वाक्यं श्रुत्वैव उद्धतमदा उत्कृष्टगर्वाः सन्तः चलकुण्डलास्याः सन्तः नैजं स्वकीयं अस्त्रवलं वाहुवलं च बहु उत्कृष्टमिति अभीक्षमाणाः अभिमन्यमानाः मिथः स्पर्धन्तः अहं पूर्वमहं पूर्वमिति स्पर्धां कुर्वन्तः एव उत्तस्थुरुत्थिताश्च ।।१२२।।

**[1]केचिन्निरीक्ष्य धनुरेत्य न मे सुशक्य-**
**मित्येव चापययुरन्य उत प्रचाल्य ।**
**तत्राऽससाद शिशुपाल उरुप्रतापः**
**सङ्गृह्य तत् [2]समधिरोपणयत्न आसीत् ।।१२३।।**

**वरदराजीया—** केचित् नृपात्मजाः धनुः प्रति एत्य प्राप्य तन्निरीक्ष्य च न मे सुशक्यं मम न शक्यं इदं कार्यं इति मत्वैव अपययुः परावृत्य गताः । अन्ये उत अन्ये तु प्रचाल्य धनुः चालयित्वा अपययुः । तत्र तेषु मध्ये उरुप्रतापः उत्कृष्टपराक्रमः । तद्धनुः संगृह्य समनुरोपणे प्रयत्नो यस्य स तथा । धनुरारोपणार्थं प्रयत्नं कृतवानिति भावः ।।१२३।।

**जनार्दनीया—** अपययुः परावृत्य ययुः । तत्र तेषु मध्ये तद्धनुः संगृह्य, सम्यगधिरोपणे यत्नः प्रयत्नो यस्य स तथा आसीत् ।।१२३।।

**चट्टि—** केचिन्नृपात्मजाः धनुः एत्य प्राप्य तन्निरीक्ष्यैव इदं कार्यं सुशक्यं न भवतीत्येव मत्वा अपययुः परावृत्य ययुः । उतानन्तरं अन्ये प्रचाल्य धनुश्चालयित्वा अपययुः । तत्र तेषु मध्ये उरुप्रतापः उत्कृष्टपराक्रमः शिशुपालः आससाद । तद्धनुः संगृह्य, समनुरोपणे धनुरारोपणे यत्नः प्रयत्नो यस्य स तथा । आसीत् ।। १२३ ।।

---

१. 'तत्कार्मुकं संहननोपपन्नं सज्यं न शेकुर्मनसापि कर्तुम् । ते विक्रमन्तः स्फुरता दृढेन विक्षिप्यमाणा धनुषा नरेन्द्राः ।। विचेष्टमाना धरणीतलस्था यथाबलं शैक्ष्यगुणक्रमाश्च । गतौजसः स्रस्तकिरीटहाराः विनिश्वसन्तः शमयाम्बभूवुः ।। हाहाकृतं तद्धनुषा दृढेन विस्रस्तहाराङ्गदचक्रवालम् । कृष्णानिमित्तं विनिवृत्तकामं राज्ञां तदा मण्डलमार्तमासीत् ।।' इत्यादिपर्वणि- २०२.१८-२१

२. 'समनुरोपणयत्न' इति वरदराजीय-चट्टीपाठः ।

[1]माषान्तराय स चकर्ष यदैव कोट्या
उन्नम्य तत् प्रतिजघान तमेव चाऽशु ।
अन्यत्र फल्गुनत एतदशक्यमेवे-
त्यञ्जो गिरीशवरतः स ययौ च भग्नः ॥१२४॥

**वेदाङ्गतीर्थीया–** कोट्याः माषान्तराय ॥ १२४ ॥

**वादिराजतीर्थीया–** 'तत्प्रतिजघान' इत्यत्र तद् धनुरित्यर्थः ॥ १२४-१२६ ॥

**सत्याभिनवतीर्थीया–** तत्रैव 'माषान्तराय स चकर्ष यदैव..' इत्यस्ति । तस्यार्थः- सः शिशुपालः कोट्याः माषान्तराय माषपरिमाणव्यवहितज्याप्रवेशार्थं यदा धनुः चकर्ष, तदा धनुः तमेव आशु प्रतिजघान सम्यक् जघानेति । एतेन माषान्तरज्याप्रवेशाय इति वक्तव्यम् । माषान्तराय इति कथनमनुपपन्नमिति दूषणं पराकृतम् । माषान्तरशब्दे लक्षणया माषान्तरज्याप्रवेशस्यैव गृहीतत्वात् । एतेनैव 'तमेव चाऽशु' इति चकारो व्यर्थ इति दूषणं परिहृतम् । न केवलं शिशुपालः तत्समधिरोपणयत्न आसीत् किं तु धनुः चकर्ष चेति समुच्चयार्थे चकार इत्यभ्युपगमात् ॥१२४॥

**मधुसूदनीया–** ॥ **अन्यत्र फल्गुन इति** ॥ एतद्ग्रन्थकारवचनम् । न शिशुपालवचनम् । अन्यथा अन्यैरागत्य धनुरारोपणाद्ययोगादिति ज्ञेयम् ॥ १२४-१३३ ॥

**वरदराजीया–** कोट्या धनुष्कोट्या माषान्तराय माषपरिमाणावशिष्टत्वाय यदा चकर्ष तदा तद्धनुः उन्नम्य दीर्घीभूय तं शिशुपालमेव प्रतिजघान तताड इत्यर्थः । फल्गुनतः अर्जुनादन्यत्र अन्यस्य अशक्यमेव । कुतः? गिरिशस्य वरतो वरात् अञ्जसा भग्नः सन् प्रययौ ॥ १२४ ॥

**अनन्तभट्टीया–** तद्धनुः । उन्नम्य शीघ्रीभूय । अञ्ज इति क्रियाविशेषणम् ॥१२४-१२६॥

**जनार्दनीया–** कोट्याः धनुषः कोट्याः । माषान्तराय माषपरिमितव्यवधानप्रदेशाय । कर्मणि चतुर्थी । यदा चकर्ष तदा तद्धनुः उन्नम्य दीर्घीभूय । एतद्धनुः फल्गुनतोऽन्यत्र अन्यस्य अशक्यमेवेति गिरीशवरतः शिशुपालः अञ्जः सम्यक् भग्नः सन् ययौ ॥१२४॥

**चट्टि–** सः शिशुपालः कोट्याः धनुषः कोट्याः । माषान्तराय माषपरिमितव्यवधानप्रदेशाय । कर्मणि चतुर्थी । यदा चकर्ष तदा तद्धनुः उन्नम्य दीर्घीभूय शिशुपालमेवाशु प्रतिजघान तताडेत्यर्थः । सः शिशुपालः अञ्जः अञ्जसा भग्नः सन् ययौ । गिरीशवरतः एतद्धनुः फल्गुनतोऽन्यत्र अन्यस्य अशक्यमेवेत्येतत्

---

१. 'चेदीनामधिपो वीरो बलवानन्तकोपमः । दमघोषात्मजो धीमान् शिशुपालो महाद्युतिः ॥ धनुषोऽभ्याशमागम्य तस्थौ राज्ञां समक्षतः । तदप्यारोप्यमाणं तु माषमात्रेऽभ्यताडयत ॥ धनुषा पीड्यमानस्तु जानुभ्यामगमन्महीम्। आदिपर्वणि- २०२.२१-२३.

ग्रन्थकारवचनम् । न शिशुपालवचनम् । अन्यथा अन्यैरागत्य धनुरारोपणोद्योगायोगादिति ज्ञेयम् ।।१२४।।

**[1]मद्रेश एत्य चकृषे स्थविरोऽपि वीर्या-**
**चेदीशतोऽप्यधिकमेव स मुद्गमात्रे ।**
**शिष्येऽमुना प्रतिहतः स ययावशक्यं**
**मत्वाऽऽत्मनस्तदनु भूपतयो विषण्णाः ।।१२५।।**

**वेदाङ्गतीर्थीया–** मद्रेशः चेदीशतोऽप्यधिकमेव वीर्यात् चकृषे, चापमिति शेषः ।।१२५।।

**वरदराजीया–** स्थविरो वृद्धो मद्रेशः शल्यो वीर्याद् बलात् चेदीशतः शिशुपालादप्यधिकं चकर्ष । अत एव मुद्गमात्रे कोट्याः प्रदेशे शिष्टे अवशिष्टे सति अमुना चापेन प्रतिहतः आत्मनः स्वस्याशक्यमिति मत्वा स शल्यो ययौ । तदनु शिशुपालमद्रेशभङ्गानन्तरं विषण्णाः विषादं प्राप्ताः ।।१२५।।

**जनार्दनीया–** स्थविरोऽपि वृद्धोऽपि मद्रेशः शल्यः चेदीशतोऽपि अधिकमेव वीर्याच्चकृषे । तदनु तयोः गमनानन्तरम् । विषण्णाः विषादं प्राप्ताः ।। १२५ ।।

**चट्टि–** स्थविरो वृद्धोऽपि मद्रेशः शल्यः एत्य आगत्य, वीर्याद् बलात् चेदीशतो शिशुपालादपि अधिकमेव चकृषे । मुद्गमात्रे शिष्टे सति, कोट्याः प्रदेश इति शेषः । अमुना चापेन प्रतिहतः सः शल्यः आत्मनः अशक्यं मत्वा प्रययौ । तदनु तयोर्गमनानन्तरं भूपतयो विषण्णाः विषादं प्राप्ताः ।। १२५ ।।

**सन्नेषु भूपतिषु मागध आससाद**
**सोऽवज्ञयैव बलवीर्यमदेन दृप्तः ।**
**चापं चकर्ष चलपादतलो बलेन**
**शिष्टे स [2]सर्षपमितेऽभिहतोऽमुनैव ।।१२६।।**

**वेदाङ्गतीर्थीया–** सर्षपमिते अवकाशे ।।१२६।।

**सत्याभिनवतीर्थीया–** तत्रैव 'सन्नेषु भूपतिषु मागध..' इति श्लोके अवज्ञयैव इत्यस्य अवज्ञया युक्त इत्यर्थः । अवज्ञां कुर्वन्निति तात्पर्यार्थः । चलपादतलः इत्यस्य भूतलवियुक्तपादतल इत्यर्थः । एतेन

---

१. 'ततः शल्यो महावीर्यो मद्रराजो महाबलः । धनुरारोप्यमाणं तु मुद्गमात्रेऽभ्यताडयत् ।। तदैवागात्स्वयं राज्यं पश्चादनवलोकयन् ।।' इत्यादिपर्वणि- २०२.२७-२८.

२. 'तत उत्थाय राजा स स्वराष्ट्राण्यभिजग्मिवान् । ततो राजा जरासन्धो महावीर्यो महाबलः । कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः । मत्तवारणताम्राक्षो मत्तवारणवेगवान् । धनुषोऽभ्याशमागत्य तस्थौ गिरिरिवाचलः। धनुरारोप्यमाणं तु सर्षमात्रेऽभ्यताडयत् ।।' आदिपर्वणि- २०२.२४-२६.

अवज्ञया इत्येतत् अनन्वितमिति दूषणं निरस्तम् । युक्तः इत्यध्याहृतेनान्वयस्योक्तत्वात् । एतेनैव पादचलनं विना पादतलमात्रस्य चलनायोगात् चलपाद इति वक्तव्यम् । चलपादतल इति विशिष्य पादतलस्यैव चलनाभिधानमनुपपन्नमिति चोद्यं प्रत्युक्तम् । चलपादतल इत्यनेन पादतलस्य चलनमात्रं नोच्यते, किन्तु भूतलवियुक्तत्वरूपं चलनमुच्यते इति स्वीकरणात् ।।१२६।।

**वरदराजीया–** सः मागधो अवज्ञया हेलयैव बलेन चकर्ष । चले चञ्चले पादतले यस्य स तथा । तथाभूतस्सन् सर्षपमिते सर्षपपरिमिते धनुःकोटिप्रदेशे शिष्टे सति (चापस्य) तदुपरिनयनाशक्तः अमुना चापेनैवाभिहतः ।।१२६।।

**जनार्दनीया–** सन्नेषु श्रान्तेषु । अवज्ञया तिरस्कारेण । चलपादतलः चले चञ्चले पादतले यस्य स तथा । बलेन दर्पेण चकर्ष । सर्षपमिते सर्षपपरिमिते अवकाशे ।। १२६ ।।

**चट्टि–** भूपतिषु सन्नेषु श्रान्तेषु सत्सु मागधः जरासन्धः आससाद । बलवीर्यमदेन दृप्तः मागधः अवज्ञया तिरस्कारेणैव चलपादतलः चले चञ्चले पादतले यस्य स तथाभूतः सन् । बलेन दर्पेण चापं चकर्ष । सर्षपमिते सर्षपपरिमिते धनुःकोटिप्रदेशे शिष्टे सति सः मागधः अमुनैव धनुषा अभिहतः ।।१२६।।

**जानुन्यमुष्य धरणीं ययतुस्तदैव**
**दर्पेण चास्थिरपदस्थितिमात्रहेतोः[1] ।**
**रौद्राद्वरात् स जडतां गमितोऽथ राजा**
**राज्ञां मुखान्यनभिवीक्ष्य ययौ स्वराष्ट्रम् ।।१२७।।**

**व्यासतीर्थीया–** इदानीं प्रगृह्यत्वे 'मणीवादीनां प्रतिषेधो वक्तव्यः' इति अनुशासनात् जानुन्यमुष्येति प्रगृह्यत्वाभावो न दोषाय । स्वयमपततो अमुष्य कुतो जानुनी धरणीं ययतुरित्यत उक्तम्– **दर्पेणेति** ।। अस्थिरे पदे स्थितिमात्रहेतू यस्य स तथोक्तः । पदयोरस्थिरत्वाज्जानुनी धरणीं ययतुः । तयोः स्थितिमात्रहेतुत्वात् न पपातेत्यर्थः । दर्पेण अस्थिरपदः कुतो जात इत्यतः कारणं वदन् वरकथामाह– **रौद्रादिति** ।।१२७।।

**वेदाङ्गतीर्थीया–** अस्थिरपदस्थितिमात्रहेतोः अस्थिराभ्यां पदाभ्यां स्थितिरवस्थानं तावन्मात्रादेव निमित्तात् अमुष्य जानुनी धरणीं ययतुः । स स्वयं निपपातेति भावः ।।१२७।।

**वादिराजतीर्थीया–** 'जानुन्यमुष्य' इत्यत्र अमुनैव धनुषा यदा जरासन्धो निहतः तदा अस्थिरपदः अमुष्य जरासन्धस्य जानुनी स्थितिमात्रहेतोः केवलं स्वस्यावस्थानाय धरणीं ययतुरिति योजना । पदा स्थातुमशक्तः सन् जानुभ्यां धरणीं प्रापेति भावः । वरात् 'अस्याश्च भर्ता भवसि त्वामेवैषा वरिष्यति' (ता.नि-१८.१२७) इति रुद्रदत्तवरात् ।।१२७-१३०।।

---

१. 'अस्थिरपदः स्थितिमात्रहेतोः' इति वादिराजीय-वरदराजीय-भारतश्री-चट्टीपाठः ।

**वरदराजीया—** अस्थिरे पादौ यस्यासौ अस्थिरपात् तस्य । अमुष्य मागधस्य स्थितिमात्रहेतोः यथाकथञ्चित् स्थित्यर्थं पतनाभावसम्पादनार्थं जानुनी धरणीं ययतुः । पादाभ्यां स्थातुमशक्यात् दर्पेण जानुनी भूमौ निधाय यथाकथञ्चित् स्थित इति भावः । सः मागधो रौद्रात् रुद्रदत्तात् द्रुपदराजस्य वरात् जडतां अशक्ततां गमितः प्रापितः । अथ अनन्तरं राजा जरासन्धो राज्ञां मुखानि अनभिवीक्ष्य अनवलोक्य अवाग्वदनो भूत्वा स्वराष्ट्रं ययौ ।।१२७।।

**अनन्तभट्टीया—** अमुष्य जानुनी । अस्थिरपदे स्थितमात्रहेतुः यस्य स तथोक्तः । स्थितिमात्रहेतुभूत-पादाभ्यां स्थितत्वादित्यर्थः ।। १२७-१३९ ।।

**जनार्दनीया—** अस्थिरपदस्थितिमात्रहेतोः अस्थिराभ्यां पदाभ्यां स्थितिः अवस्थानं तावन्मात्रादेव निमित्तात् । अमुष्य जानुनी धरणीं ययतुः । न त्वयं पपातेति भावः । जडतां निश्चलतां भ्रान्तत्व-मित्यर्थः ।।१२७।।

**ताम्रपर्णी—** ।। **अस्थिरपदस्थितिमात्रहेतोरिति** ।। अस्थिरपदे स्थितिमात्रहेतू यस्य स तथोक्तः । पदयोश्चञ्चलत्वाज्जानुनी धरणीं ययतुः । तयोः स्थितिमात्रहेतुत्वान्न पपातेति भावः । यद्वा अस्थिराभ्यां पदाभ्यां स्थितिमात्रादेव निमित्तात् जानुनी धरणीं ययतुरित्यर्थः ।। १२७-१२९ ।।

**भारतश्री—** दर्पेण गतो, यत इति शेषः । अथ तस्मात् ययावित्यन्वयः । अस्थिरपदः चञ्चलपादस्यामुष्य स्थितिमात्रहेतोः तदन्यव्यापारं कर्तुं असमर्थ इत्यर्थः । जानुनी धरणीं ययतुरित्यन्वयः । रौद्रात् वरात् अयं अन्यवत्र पपातेति । अनभिवीक्ष्य, लज्जयेति शेषः ।। १२७ ।।

**चट्टि—** दर्पेण गर्वेणैव न तु दौर्बल्येन अनास्थया प्रणिहितत्वादस्थिरे पदे यस्य स तथा तस्य अमुष्य जरासन्धस्य जानुनी धरणीं तदा धरणीं च ययतुः । किमर्थमित्यत आह— **स्थितिमात्रहेतोः अवस्थानमात्रार्थमिति** ।। अस्थिरपदत्वात् प्रपतन्नपि जानुभ्यां धरणीमालम्ब्य पपातेति भावः । अथ सः राजा जरासन्धः रौद्रात् रुद्रसम्बन्धिनो वरात् द्रुपदस्य दत्तवरात् जडतां निश्चलतां भ्रान्तत्वमित्यर्थः । गमितः प्रापितः सन् राज्ञां मुखाननभिवीक्ष्य अनवलोक्य स्वराष्ट्रं ययौ ।।१२७।।

**प्रायो गतास्तमनु[1] भूपतयोऽथ कर्णो**
**दुर्योधनार्थमनुगृह्य धनुश्चकर्ष ।**
**रामादुपात्तशुभशिक्षितमात्रतोऽसौ**
**[2]रोमावशिष्टमकरोद् धनुषोऽन्तमाशु ।।१२८।।**

---

१. 'गतास्तदनु' इति सत्याभिनवतीर्थीयपाठः ।

२. 'ततो वैकर्तनो कर्णो वृषा वै सूतनन्दनः । धनुरभ्याशमागम्य तोलयामास तद्धनुः । तं चाप्यरोप्यमाणं तद्रोममात्रेऽप्यताडयत् । त्रैलोक्यविजयी कर्णः सत्वे त्रैलोक्यविश्रुतः । धनुषा सोऽपि निर्धूत इति सर्वे भयाकुलाः ।।'

**व्यासतीर्थीया–** रोमवदवकाशः अवशिष्टं यस्य स तथोक्तः ।।१२८-१२९।।

**वेदाङ्गतीर्थीया–** दुर्योधनार्थं न तु स्वार्थम् । स्वस्य सूतत्वात् । अन्तं अग्रकोटिम् ।।१२८।।

**सत्याभिनवतीर्थीया–** तत्रैव 'प्रायो गतास्तदनु भूपतयो..' इति श्लोके रोमावशिष्टम् इत्यस्य रोमपरिमितदेशः अवशिष्टः यस्य सः तं रोमावशिष्टमकरोत् धनुषं तमित्यर्थः । एतेन रोमपरिमितदेशावशिष्टं इति वक्तव्यम् । रोमावशिष्टमिति कथनमनुपपन्नमिति दूषणं पराकृतम् । रोमशब्देन रोमपरिमितदेशस्य लक्षणया ग्रहणात् ।। १२८-१३५ ।।

**वरदराजीया–** प्रायः प्रायशो बहवः भूपाः तमनु भग्नं जरासन्धं अनु गताः । अथ कर्णो दुर्योधनार्थं दुर्योधनाय द्रौपदीं साधयितुं तत्प्रतिनिधितयेत्यर्थः । रामादुपात्तं प्राप्तं शुभं समीचीनं शिक्षा तन्मात्रेण धनुषः चापस्य अन्तं कोटिप्रदेशं रोमावशिष्टं केशपरिमितदेशावशिष्टं अकरोत् ।।१२८।।

**जनार्दनीया–** प्रायः बाहुल्येन । 'प्रायो बाहुल्यशब्दयोः' इति यादवः । दुर्योधनार्थं स्वस्य सूतत्वात् । रामात् परशुरामात् उपात्तशुभशिक्षितमात्रतः प्राप्तं समीचीनं शिक्षितं शिक्षा तन्मात्रेण । अन्तं अग्रम् ।।१२८।।

**भावविवृतिः–** 'अथ कर्णो दुर्योधनार्थं अनुगृह्य धनुश्चकर्ष' इत्यत्र दुर्योधनस्यार्थे, स्वार्थे स्वोत्कर्षविषये इति यावत् । योऽभिलाषस्तदनुसारेण इत्यर्थः । 'तदर्थं नीतिमतुलां चक्रतुस्तावुभावपि । तथोत्कर्षे फल्गुनस्य यशसे विजयाय च ।। उद्योग आसीद्भीमस्य धार्तराष्ट्रस्य चान्यथा ।।' (ता.नि-१८.४८-४९) इत्युक्तेः । दुर्योधनेन सदा कर्णोत्कर्षस्यैवाभिलषितत्वात् दुर्योधनस्य स्वसामर्थ्यप्रदर्शनार्थमिति । अनु दुर्योधनाभिप्रायानुसारेण धनुश्चकर्षेति भावः । रामवरादजेयस्य कथं तत्र पराजयः इत्यत आह– **रामादुपात्तशुभशिक्षितमात्रतोऽसौ इति** ।। असौ कर्णः शिक्षितं शिक्षामात्रतः रामादुपात्तशुभशिक्षामात्रतः रोमावशिष्टमकरोदित्यन्वयः । 'शिक्षामात्रतः' इत्युक्त्या गुरुदेवतावन्दनादिकं तदानीं अकृतवानिति ज्ञायते । अतः पराजयः सम्भवतीति भावः । नच वाच्यं स्पर्धया पराजय इति । तस्या अर्जुनातिरिक्ते स्पर्धाभावात् । अर्जुनविषयकस्पर्धायाश्च तदा करणाभावात् ।।१२८-१३८ ।।

**भारतश्री–** ।। **दुर्योधनार्थमिति** ।। स्वस्यान्यसेवकत्वेनागतत्वात् । विद्धेऽपि लक्ष्ये फलं स्वामिनं व्रजति । तदपि स्वस्येष्टं मन्वानो स्वाम्यर्थमुद्योगं चकारेति । केचित्तु- 'स्वस्य सूतत्वात्' इति व्याचक्षते । तन्मन्दम् । 'एतेन कार्मुकवरेण तरूपरिस्थमत्स्यावभासमुदके प्रतिवीक्ष्य येन । एतैः शरैः प्रतिहतो भवतीह मत्स्यः कृष्णाऽनुयास्यति तमद्य नरेन्द्रवीराः ।।'(ता.नि-१९..१२१) इति इह धृष्टद्युम्नेनोक्तम् । न तत्र क्षत्रियादिवर्णविचारः । तथा उत्तरत्र 'स प्राह मन्दहसितः किमिहाद्य राजन् पूर्वं हि वर्णविषये न

---

आदिपर्वणि-२०२.३४-३६. एतेन 'दृष्ट्वैव तं द्रौपदी वाक्यमुच्चैर्जगाद नाहं वरयामि सूतम्' इत्यौत्तरपाठे द्रौपदीवचनं प्रक्षिप्तमिति स्फुटम् ।

विशेष उक्तः । पुत्रीकृते तव सुतेन तु लक्ष्यवेध उक्तो नरेन्द्रसमितौ स कृतोऽप्यनेनेन ।।'(ता.नि-१९.१४९) इति । तस्मादस्मदुक्त एवार्थः सुरसः ।। १२८-१३० ।।

**चट्टि–** प्रायः बाहुल्येन । भूपतयः तं जरासन्धमनुगताः अथ कर्णः दुर्योधनार्थं धनुरनुगृह्य गृहीत्वा चकर्ष । रामादुपात्तं शुभं शिक्षितं शिक्षा तन्मात्रेण, असौ कर्णः धनुषः अन्तं अग्रं केशपरिमितप्रदेशावशिष्टं अकरोत् ।।१२८।।

> **तस्मिंश्च तेन [1]विहते प्रतिसन्निवृत्ते**
> **[2]भीमार्जुनौ द्विजसदस्युपसन्निविष्टौ ।**
> **उत्तस्थतू रविशशिप्रतिमानरूपौ**
> **विप्रेषु तत्र च [3]भिया विनिवारयत्सु ।।१२९।।**

**वेदाङ्गतीर्थीया–** भिया धनुरारोपणाशक्तौ मानहानिभिया ।।१२९।।

**वरदराजीया–** तेन चापेन तस्मिन् कर्णे विहते प्रतिहते अत एव सन्निवृत्ते परावृत्ते सति द्विजसदसि ब्राह्मणसभायां रविशशिप्रतिमानरूपौ सूर्यचन्द्रसदृशरूपौ । तत्र सभायां भिया नितान्तं भयेन विप्रेषु विनिवारयत्सु नोत्थातव्यमिति निवारणं कुर्वत्सु सत्स्वपि उत्तस्थतुः उत्थितौ बभूवतुः ।।१२९।।

**जनार्दनीया–** विहते प्रतिहते । तस्मिन् कर्णे । निवृत्ते परावृत्ते सति । प्रतिमानं सदृशम् । तत्र सदसि धनुरारोपणाशक्तौ मानहानिभिया भयेन विनिवारयत्सु सत्सु, नोत्थातव्यमितीति शेषः ।।१२९।।

**चट्टि–** तस्मिन् कर्णे तेन धनुषा निहते प्रतिहते प्रतिसन्निवृत्ते परावृत्ते सति द्विजसदसि ब्राह्मणसभायां उपसन्निविष्टौ रविशशिनोः प्रतिमानं सदृशं रूपं ययोः तौ रविशशिप्रतिमानरूपौ भीमार्जुनौ च तत्र सदसि धनुरारोपणाशक्तौ मानहानिः स्यादिति भिया भयेन विप्रेषु विनिवारयत्सु सत्सु नोत्थातव्यमितीति निवारणं कुर्वत्सु सत्स्वपि उत्तस्थतुः उत्थितौ ।।१२९।।

> **विप्राश्च केचिदतियुक्तमिमौ हि वीरौ**
> **देवोपमाविति वचो जगदुस्ततस्तौ ।**
> **दृष्ट्वैव कृष्णमुखपङ्कजमाशु चाप-**
> **सान्निध्यमाययतुरुत्तमवीर्यसारौ ।।१३०।।**

---

१. 'निहते' इति चट्टीपाठः ।

२. भारतं सज्यं कर्तुं अर्जुन एक एव उदतिष्ठदित्युच्यते । आदिपर्वणि- २०२.३९, २०३.१.

३. 'यद्येष दर्पाद्धर्षाद्वाप्यथ ब्राह्मणचापलात् । प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ।।' आदिपर्वणि-२०३.७. इति 'केचिदाहुर्युवा श्रीमान्नागराजकरोपमः । पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव । ..शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् । ..आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः ।।' इत्यादिपर्वणि- २०३.९-१६.

**व्यासतीर्थीया–** एतयोरुत्थानमतियुक्तम् । 'कृष्णमुखपङ्कजं दृष्ट्वा' इति तदनुज्ञादानं सूचयति ।।१३०।।

**वेदाङ्गतीर्थीया–** अतियुक्तम्, एतयोरुत्थानमिति शेषः ।। १३० ।।

**वरदराजीया–** केचित् विप्राश्च अतियुक्तं एतयोरुत्थानमतीव युक्तं, हि यस्मात् इमौ देवोपमौ अत एव वीरौ इति वचो वाक्यं जगदुरित्यर्थः । तौ भीमार्जुनौ चापस्य सान्निध्यं समीपम् । उत्तमवीर्यस्य सारौ सारभूतौ ।।१३०।।

**जनार्दनीया–** अतियुक्तम्, एतयोरुत्थानमिति शेषः । यस्मात् देवोपमौ । जगदुः ऊचुः । ततो द्विजोक्त्यनन्तरं तौ भीमार्जुनौ चापसान्निध्यं कार्मुकसमीपं आययतुः प्राप्तौ ।।१३०।।

**ताम्रपर्णी–** 'कृष्णमुखपङ्कजं दृष्ट्वा' इति तदनुज्ञां सूचयति ।। १३० ।।

**चट्टि–** हि यस्मात् इमौ देवोपमौ वीरौ च अतः अतियुक्तम्, एतयोरुत्थानमिति शेषः । इति केचित् विप्राश्च वचो जगदुः ऊचुः । ततो द्विजोक्त्यनन्तरं उत्तमवीर्यसारौ भीमार्जुनौ श्रीकृष्णमुखपङ्कजं दृष्ट्वैव आशु चापसान्निध्यं आययतुः प्राप्तौ ।। १३० ।।

**तत्रार्जुनः पवनजात् प्रियतोऽप्यनुज्ञा-**
**मादाय[1] [2]केशवमजं मनसा प्रणम्य ।**
**कृत्वा गुणान्वितमदो[3] धनुरश्रमेण[4]**
**यन्त्रान्तरेण स शरैरधुनोच्च लक्ष्यम् ।।१३१।।**

**व्यासतीर्थीया–** प्रियत एवानुज्ञामादाय न तूपचारेणेत्यवधारणे अपिः ।। १३१ ।।

**वेदाङ्गतीर्थीया–** अधुनोत् विव्याध ।।१३१-१३४।।

**वादिराजतीर्थीया–** 'यन्त्रान्तरेण स शरैः' इत्यत्र मत्स्यादधोभागस्थितदारुयन्त्रच्छिद्रेणेत्यर्थो ज्ञेयः ।। १३१-१३३ ।।

**वरदराजीया–** प्रियतः प्रियात् पवनजात् अभ्यनुज्ञामादाय, अदः तद्धनुः गुणान्वितं सज्यं अश्रमेण अनायासेन कृत्वा, यन्त्रान्तरेण यन्त्रच्छिद्रेण यन्त्रोपरिस्थितयन्त्रच्छिद्रेण लक्ष्यं च जले अवलोक्येत्यर्थः । सोऽर्जुनो लक्ष्यं मत्स्यस्वरूपं शरैः पञ्चभिरपि बाणैः अधुनोत् तं कम्पयामास ।।१३१।।

---

१. 'अभ्यनुज्ञामादाय' इति वादिराजीयपाठः ।

२. 'कृष्णं च मनसा कृत्वा जगृहे चार्जुनो धनुः ।' इत्यादिपर्वणि- २०३.२२.

३. 'गुणान्वितमथो' इति चट्टीपाठः ।

४. 'यत्पार्थिवै रुक्मसुनीथवक्रै राधेयदुर्योधनशल्यसाल्वैः। तदा धनुर्वेदपरैर्नृसिंहैः कृतं न सज्यं महतोऽपि यत्नात् । तदर्जुनो वीर्यवतां सदर्पस्तदैन्द्रिरिन्द्रावरजप्रभावः । सज्यं च चक्रे निमिषान्तरेण शरांश्च जग्राह दशार्धसङ्ख्यान्। विव्याध लक्ष्यं निपपात तच्च छिद्रेण भूमौ सहसातिविद्धम् ।।' इत्यादिपर्वणि-२०३.२३-२५.

**अनन्तभट्टीया**— यन्त्रान्तरेण यन्त्रस्य उपरिस्थितस्य अन्तरेण छिद्रेण लक्ष्यं तस्मादुपरिस्थितम् ।।१३१-१३३।।

**लघ्वनन्तभट्टीया**— यन्त्रान्तरेण यन्त्रच्छिद्रेण ।। १३१-१४५ ।।

**जनार्दनीया**— अर्जुनस्तत्र लक्ष्यहननविषये । प्रियतः प्रियात् । पवनजात् भीमात् । अदः धनुः । गुणान्वितं ज्यासहितं कृत्वा, अश्रमेण अप्रयासेन । यन्त्रान्तरे यन्त्रस्य अन्तरेण छिद्रेण । जलयन्त्रोपरिस्थितच्छिद्रेणेत्यर्थः । लक्ष्यं तदुपरिस्थितमत्स्यावभासं जले प्रतिवीक्ष्य, शरैः पञ्चबाणैः लक्ष्यञ्च मत्स्यरूपं अधुनोत् विव्याध ।।१३१।।

**ताम्रपर्णी**— यन्त्रान्तरेण मत्स्याधोभागस्थितदारुयन्त्रच्छिद्रेण ।। १३१-१३२ ।।

**भावचन्द्रिका**— भीमात्प्रीत्या 'तमेवैषा वरिष्यति' इति वचनाच्च । प्रियतः कृष्णादपीति वा ।। १३१-१५५ ।।

**भारतश्री**— प्रियतः प्रीतिपूर्वमित्यर्थः ।। १३१ ।।

**चट्टि**— तत्र तयोर्मध्ये सः अर्जुनः प्रियतः प्रियात् पवनजात् भीमात् अप्यनुज्ञामादाय, अमुं केशवं श्रीकृष्णं मनसा प्रणम्य, अथ अनन्तरं धनुः गुणान्वितं ज्यासहितं कृत्वा, अश्रमेण अप्रयासेन यन्त्रान्तरेण यन्त्रस्य अन्तरेण छिद्रेण, जलयन्त्रोपरिस्थितच्छिद्रेणेत्यर्थः । लक्ष्यं तदुपरिस्थितमत्स्यावभासं जले प्रतिवीक्ष्य शरैः पञ्चबाणैः लक्ष्यं च मत्स्यरूपं अधुनोत् विव्याध ।।१३१।।

**[१]कृष्णा तदाऽस्य विदधे नवकञ्जमालां**
**मध्ये च तां [२]प्रतिविधाय नरेन्द्रपुत्रौ ।**
**भीमार्जुनौ ययतुरच्युतमाभिनम्य**
**क्षुब्धस्तदा नृपवराब्धिरिमावधावत् ।।१३२।।**

**व्यासतीर्थीया**— क्षुभ सञ्चलने ।। १३२ ।।

**वरदराजीया**— कृष्णा द्रौपदी च अस्य अर्जुनस्य नवकञ्जमालां नूतनपद्मैः निर्मितां मालां विदधे समर्पितवती । अच्युतं कृष्णं आभिनम्य नत्वा ययतुः स्वस्थानगमनाभिमुखौ जातौ । नृपवराब्धिः नृपवराख्यसमुद्रः क्षुब्धः क्षोभं प्राप्तः सन् इमौ भीमार्जुनौ प्रति अन्वधावत् ।।१३२।।

---

१. 'विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा पार्थं च शक्रप्रतिमं निरीक्ष्य ।। ३१ ।। ...क्षिप्त्वा स्रजं पार्थिववीरमध्ये वराय वव्रे द्विजसङ्घमध्ये ।।' इत्यादिपर्वणि २०३.३३.

२. 'प्रतिनिधाय' इति चट्टीपाठः ।

**जनार्दनीया–** अस्यार्जुनस्य । विदधे न्यधात्, अंसे इति शेषः । क्षुब्धः क्षोभं प्राप्त इत्यर्थः । नृपवराब्धिः नृपाख्यमहासमुद्रः । राज्ञां बहुत्वात् महासमुद्र इति भावः । इमौ भीमार्जुनौ । अधावत् अभ्यधावत् ।। १३२ ।।

**चट्टि–** कृष्णा द्रौपदी तदा अस्यार्जुनस्य, अंसे इति शेषः । नवकञ्जमालां नूतनपद्मैर्निर्मितां मालां विदधे न्यधात् । नरेन्द्रपुत्रौ राजपुत्रौ भीमार्जुनौ तां द्रौपदीं मध्ये उभयोर्मध्ये प्रतिनिधाय अच्युतं श्रीकृष्णं आभिनम्य सम्यक् प्रणम्य ययतुश्च स्वस्थानाभिमुखौ जातौ । तदा नृपवराब्धिः नृपाख्यमहासमुद्रः क्षुब्धः क्षोभं प्राप्तः सन् इमौ भीमार्जुनौ प्रत्यधावत् अभ्यधावत् ।।१३२।।

**[१]द्रष्टुं हि केवलगतिर्न तु कन्यकाया**
**अर्थे न चापमिह वृष्णिवराः स्पृशन्तु ।**
**इत्याज्ञयैव वरचक्रधरस्य लिप्सा-**
**मन्यत्र चक्रुरिह नैव यदुप्रवीराः ।।१३३।।**

**व्यासतीर्थीया–** यादवाः कस्माच्चापं न जगृहुरित्यत आह– **द्रष्टुमिति** ।। केवला प्रयोजनरहिता च सा गतिश्चेति तथोक्ताः । गतेः समासे प्रविष्टत्वाद्बुद्ध्या पृथक्कृत्य अनूद्यत्वं द्रष्टव्यम् । ननु कथं प्रेक्षावतां गतिः प्रयोजनरहिता इत्यत उक्तम्– **द्रष्टुमिति** ।। दर्शनं चेत् प्रयोजनमस्ति तर्हि केवला गतिः इत्यत उक्तम्– **नत्विति** ।। १३३ ।।

**वरदराजीया–** ननु यदुप्रवीराः किमर्थं तूष्णीमासन्नित्यत आह– **द्रष्टुमित्यादिना** ।। केवलं द्रष्टुमेवास्माकं गतिः । न तु कन्यकार्थे कन्याप्राप्त्यर्थे नोऽस्माकं गमनम् । अतो हेतोः वृष्णिवराः चापमपि इह स्वयंवरे 'न स्पृशन्तु' इति वरचक्रधरस्य कृष्णस्य आज्ञयैव अत्र धनुश्चालनादौ लिप्सामपि लब्धुमपि यदुप्रवीरा न चक्रुः । ततस्तेषां भङ्गशङ्का न कार्येति भावः ।।१३३।।

**जनार्दनीया–** हे वृष्णिवराः! अस्माकं गतिः गमनं केवलं द्रष्टुं न तु कन्यकाया अर्थे हि यस्मात् तस्मात् इह स्वयंवरे 'चापं न स्पृशन्तु' इति वरचक्रधरस्य श्रीकृष्णस्य आज्ञयैव यदुप्रवीराः इह स्वयंवरे अत्र अधुना धनुरारोपणे लिप्सामपि इच्छामपि नैव चक्रुरित्यन्वयः ।। १३३ ।।

**ताम्रपर्णी–** केवला प्रयोजनरहिता च सा गतिश्च केवलगतिः । ननु कथं प्रज्ञावतां प्रयोजनरहितगमनम् इत्यत उक्तम्– **द्रष्टुमिति** ।। तर्हि कथं गमनस्य केवलत्वमित्यत उक्तम्– **नत्विति** ।। वुद्ध्या विवेकेन केवलं द्रष्टुं गतिरिति वा ।। १३३ ।।

---

१. 'हलायुधस्तत्र जनार्दनश्च वृष्ण्यन्धकाश्चैव यथाप्रधानम् । प्रेक्षां स्म चक्रुर्यदुपुङ्गवास्ते स्थिताश्च कृष्णस्य मतं महान्तः ।।' आदिपर्वणि-२०२.८.

**चट्टि–** यादवास्तु कस्माच्चापं न जगृहुरित्यत आह– **द्रष्टुमिति** ।। अस्माकं गतिः गमनं केवलं द्रष्टुं न तु कन्यकाया अर्थे हि यस्मात् तस्मादिह स्वयंवरे वृष्णिवराः यादवश्रेष्ठाः 'चापं न स्पृशन्तु' इति वरचक्रधरस्य श्रीकृष्णस्य आज्ञयैव यदुप्रवीराः इह स्वयंवरे अत्र धनुरारोपणे लिप्सामपि इच्छामपि नैव चक्रुरित्यन्वयः । अतस्तेषां भङ्गशङ्का न कार्येति भावः ।। १३३ ।।

**भीमस्तु राजसमितिं प्रतिसम्प्रयातां**
**दृष्ट्वैव [1]योजनदशोच्छ्रयमाशु वृक्षम् ।**
**[2]आरुज्य[3] सर्वनृपतीनभितोऽप्यतिष्ठद्[4]**
**दृष्ट्वा पलायनपराश्च बभूवुरेते ।।१३४।।**

**व्यासतीर्थीया–** रुजो भङ्गे । 'सर्वनृपतीन्' इत्यभियोगे द्वितीया ।। १३४-१३६ ।।

**वादिराजतीर्थीया–** 'वृक्षमारुज्य' इत्यत्र 'रुजो भङ्ग' इति धातोः । आरुज्य भंक्त्वेत्यर्थः।।१३४-१३६।।

**मधुसूदनीया–** ।। **दृष्ट्वैव योजनदशेति** ।। आरुज्य अपहस्तेन भंक्त्वेत्यर्थः । 'आगृह्य' इति पाठे स्वीकृत्येत्यर्थः । 'उत्पाट्य' इत्यपपाठः । मूलपुस्तकेषु काप्यदर्शनात् ।।१३४-१३५।।

**वरदराजीया–** राज्ञां समितिं समूहं स्वात्मानं प्रति सम्प्रयातां प्राप्तां दृष्ट्वा भीमस्तु योजनदशोच्छ्रयं दशयोजनोच्छ्रितं वृक्षं आरुज्य भंक्त्वा सर्वनृपतीन् अभि अभिगतः अतिष्ठत् । तं दृष्ट्वा एते च नृपाः पलायनपराः पलयाने तात्पर्यवन्तो बभूवुः ।।१३४।।

**अनन्तभट्टीया–** आरु(ज्य) शत्रुविनाशम्..* ।।१३४।।

**जनार्दनीया–** समितिं समूहं आरुज्य भंक्त्वा सर्वनृपतीन् अभितोऽभिमुखेऽतिष्ठत् ।। १३४ ।।

**ताम्रपर्णी–** वृक्षमारुज्येति । 'रुजो भङ्ग' इति धातोः । वृक्षं भंक्त्वेत्यर्थः ।। १३४-१३८ ।।

**चट्टि–** भीमस्तु प्रतिसम्प्रयातां स्वात्मानं प्रति सम्प्रयातां राज्ञां समितिं समूहं दृष्ट्वैव आशु योजनदशोच्छ्रयं दशयोजनोन्नतं वृक्षं आरुज्य अपहस्तेन भंक्त्वेत्यर्थः । 'आगृह्य' इति पाठे स्वीकृत्येत्यर्थः । 'उत्पाट्य' इति पाठः मूलपुस्तकेषु काप्यदृष्टः । सर्वनृपतीन् अभितोऽभिमुखः सन् अतिष्ठत् हि । एते नृपाः तं भीमं दृष्ट्वा पलायनपराश्च बभूवुः ।।१३४।।

---

१. 'योजनदशोच्छ्रयम्' इति मधुसूदनभिक्षवः । तथा वरदराजीयपाठः । चट्टीपाठोऽपि तथैव । 'योजनशतोच्छ्रयम्' इत्यपि क्वचित् पाठः । तत्र प्रमाणमन्वेषणीयम् ।

२. 'आगृह्य' इति पाठान्तरमिति मधुसूदनभिक्षवः। तथा ताम्रपर्णीयेऽपि । 'उत्पाट्य' इत्यपपाठः इति मधुसूनभिक्षवः।

३. 'ततस्तु भीमोऽद्भुतभीमकर्मा महाबलो वज्रसमानसारः । उत्पाट्य दोर्भ्यां द्रुममेकवीरो निष्पत्रयामास यथा गजेन्द्रः ।।' आदिपर्वणि-२०४.१८.

४. 'सर्वनृपतीनभितो ह्यतिष्ठत्' इति चट्टीपाठः ।

**[1]भीमोऽयमेष पुरुहूतसुतोऽन्य एते**
**पार्था इति स्म हलिने हरिरभ्यवोचत् ।**
**दृष्ट्वैव सोऽपि मुदमाप शिनेश्च पौत्रः**
**खड्गं प्रगृह्य हर्षात् परिपुप्लुवेऽत्र ॥१३५॥**

**वेदाङ्गतीर्थीया–** एते त्रयः अन्ये पार्थाः । शिनेः पौत्रश्च मुदमाप ॥ १३५-१३६ ॥

**वरदराजीया–** अयं भीमः, एषः पुरुहूतसुतः अर्जुनः, एते च अन्ये युधिष्ठिराद्याः त्रयः सर्वे पार्था इति हलिने बलभद्राय कृष्णोऽभ्यवोचत् । सः बलभद्रोऽपि दृष्ट्वैव पाण्डवान् दृष्ट्वैव मुदमाप । शिनेः यादवस्य पौत्रः सात्यकिश्च अत्र अवसरे खड्गं प्रगृह्य हर्षात् परिपुप्लुवे ननर्त इति भावः ॥१३५॥

**जनार्दनीया–** अयं भीमः । एषः पुरुहूतसुतोऽर्जुनः । अन्ये अवशिष्टाः । एते त्रयः पार्थाः । अभ्यचोदयत् उवाच । सोऽपि बलोऽपि मुदमाप । शिनेः पौत्रश्च सात्यकिः मुदमाप । खड्गं प्रगृह्य, हर्षात् अत्र कृष्णसन्निधौ परिपुप्लुवे ननर्तेति भावः ॥ १३५ ॥

**चट्टि–** अयं भीमः । एषः पुरुहूतसुतोऽर्जुनः । एतेऽन्ये अवशिष्टाः त्रयः पार्थाः इति हलिने बलभद्राय हरिः श्रीकृष्णः अभ्यवोचत् उवाच । सोऽपि बलभद्रोऽपि दृष्ट्वैव, पाण्डवानिति शेषः । मुदं सन्तोषमाप। शिनेः पौत्रश्च सात्यकिः मुदमाप । खड्गं प्रगृह्य, हर्षात् अत्र श्रीकृष्णसन्निधौ परिपुप्लुवे ननर्तेति भावः ॥

**प्रीतेषु सर्वयदुषु प्रपलायितेषु**
**दुर्योधनादिनृपतिष्वखिलेषु भीमात् ।**
**[2]कर्णोऽभ्ययाद्धरिहयात्मजमाशु [3]मद्र-**
**राजो जगाम पवनात्मजमेव वीरः ॥१३६॥**

**सत्याभिनवतीर्थीया–** तत्रैव 'प्रीतेषु सर्वयदुषु प्रपलायितेषु..' इति श्लोके 'हरिहयात्मजम्' इत्यस्य हरयः हरिनामकाः हयाः अश्वाः यस्य सः इन्द्रः तस्य आत्मजं अर्जुनमित्यर्थः । इन्द्रस्य हरिनामकाश्वत्वे इन्द्र आयाहि (१.३.६) इति ऋग्भाष्यटीकावाक्येन सिद्धम् ॥१३६॥

**मधुसूदनीया–** हरिहयात्मजं हरिहयः श्वेताश्वः इन्द्रः तस्य पुत्रमित्यर्थः । 'शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम् । युक्तं प्रगृह्य भगवान् वासवोऽप्याजगाम तम् ॥' (२.१०४) इत्यनुशासनपर्वणि इन्द्रस्य श्वेताश्वत्वप्रसिद्धेः ॥ १३६-१५१ ॥

---

१. वृक्षं प्रगृह्य राज्ञः अभि भीमसेनः प्रवृत्तः इति महाभारते कृष्णः बलराममवर्णयत् । तथाहि आदिपर्वणि-२०४.२१-२६.
२. 'ततः कर्णो महातेजा जिष्णुं प्रति ययौ रणे ।' इत्यादिपर्वणि- २०५.७.
३. 'भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ।' इत्यादिपर्वणि- २०५.८.

**वरदराजीया—** यदुषु प्रीतेषु सत्सु, दुर्योधनाद्यखिलेषु भीमात् भीमेन पलायितेषु विद्रावितेषु सत्सु, हरिहयात्मजं इन्द्रसूनुं कर्णोऽभ्ययात् । मद्रराजः पवनात्मजं प्रति जगाम ।।१३६।।

**जनार्दनीया—** हरिहयात्मजं हरिहयः इन्द्रः तस्यात्मजं पुत्रम् ।। १३६ ।।

**चट्टि—** सर्वयदुषु प्रीतेषु सत्सु, अखिलेषु दुर्योधनादिनृपतिषु भीमात् प्रपलायितेषु सत्सु, कर्णः हरिहयात्मजं आशु अभ्ययात् । हरिहयः श्वेताश्वः इन्द्रः तस्य पुत्रं, अर्जुनमित्यर्थः । 'हरिणः पाण्डुरः पाण्डुः' इत्यभिधानम् । 'शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम् । युक्तं प्रगृह्य भगवान् वासवोऽप्याजगाम तम् ।।' इत्यनुशासने इन्द्रस्य श्वेताश्वत्वप्रसिद्धेः । वीरः मद्रराजः शल्यः पवनात्मजं भीममेव जगाम ।।१३६।।

[1]विप्रेषु दण्डपटदर्भमहाजिनानि
कोपात् क्षिपत्सु न विनाशनमत्र भूयात् ।
क्षत्रस्य वैरत इति द्रुपदे च कृष्णं
विप्रांश्च याचति स मारुतिरार शल्यम् ।।१३७।।

**व्यासतीर्थीया—** अत्र मङ्गलकर्मणि विप्राख्यवैरतः क्षत्रस्य विनाशनं न भूयादिति ।।१३७-१३८।।

**वेदाङ्गतीर्थीया—** अत्र मङ्गल्यकर्मणि वैरतः विप्रवैरतः क्षत्रस्य विनाशनं न भूयात् ।।१३७-१३८।।

**वादिराजतीर्थीया—** ब्रह्मचारिणामप्यागतत्वात् 'दण्डपटदर्भमहाजिनानि' इत्यत्र दण्डपटयोर्ग्रहणम् ।।१३७।।

**सत्याभिनवतीर्थीया—** तदनन्तरमेव 'विप्रेषु दण्डपटदर्भमहाजिनानि..' इति श्लोकः । तस्यार्थः-विप्रेषु वैरतः द्वेषतः कोपात् दण्डपटदर्भमहाजिनानि क्षिपत्सु सत्सु अत्र अस्मिन् विवाहमहोत्सवे क्षत्रस्य विनाशनं भवेत्, तन्न भूयादिति विचार्य द्रुपदे कृष्णं विप्रांश्च याचति सति विप्राः समाहिता बभूवुः । तदैव स मारुतिः शल्यं आर प्रापेति । एतेन दण्डादिक्षेपस्य क्षत्रविनाशाभावं प्रति कारणत्वाभावात् दण्डादीन् क्षिपत्सु सत्सु विनाशनं न भूयादिति दण्डादिक्षेपस्य विनाशाभावं प्रति कारणत्वाभिधानमयुक्तमिति दूषणं परास्तम् । दण्डादीन् क्षिपत्सु इत्यस्य विनाशनं न भूयादित्यनेनान्वयो न, किन्तु विनाशनम् इत्यस्य आवृत्तिं भूयादित्यस्य अर्थवशात् भवेदिति विपरिणामं चाङ्गीकृत्य, विनाशनं भवेदित्यनेनान्वय इत्यभ्युपगमात् । एतेनैव कृष्णविप्रयाचनस्य मारुतिकर्तृकशल्यप्राप्तिहेतुत्वाभावात् कृष्णं विप्रांश्च याचति सति मारुतिः शल्यं आरेति कथनमनुपपन्नमिति दूषणं निरस्तम् । कृष्णं विप्रांश्च याचति इत्यस्य मारुतिः

---

१. 'अजिनानि विधुन्वन्तः करकाश्च द्विजर्षभाः । ऊचुस्ते भीर्न कर्तव्या वयं योत्स्यामहे परान् ।। तानेवं वदतो विप्रानर्जुनः प्रहसन्निव । उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः ।।' इत्यादिपर्वणि-२०५.१-२.

शल्यमार इत्यनेनान्वयमनङ्गीकृत्य विप्रान् इत्यस्य अर्थवशाद् विप्राः इति विपरिणामं समाहिताः बभूवुः इत्यध्याहारं च स्वीकृत्य विप्राः समाहिता बभूवुः इत्यनेनान्वय इत्यभ्युपगमात् । एतेनैव मारुतिः शल्यमार इत्यस्य विप्राः समाहिता बभूवुः इत्यनेन सङ्गतिसिद्ध्यर्थं तदैवेति वक्तव्यम् । तदभावात् न्यूनतेति शङ्कानवकाशः । तदैवेत्यस्य शेष इत्यभ्युपगमात् ।।१३७-१४३।।

**वरदराजीया–** वैरतः ब्राह्मणनिमित्तवैरतः क्षत्रस्य क्षत्रजातस्य विनाशनं अत्र युद्धे न भूयादिति बुद्ध्या कोपात् कोपेन दण्डादीन् क्षिपत्सु भूमौ क्षिपत्सु सत्सु द्रुपदराज्ञि च कृष्णं विप्रांश्च याचति युद्धं मास्त्विति प्रार्थयति सति मारुतिः भीमः शल्यं प्रति आर प्रापेत्यर्थः ।।१३७।।

**अनन्तभट्टीया–** वैरतः ब्राह्मण्यवैरतः ।। १३७ ।।

**जनार्दनीया–** विप्रेषु दण्डादीनि कोपात् क्षिपत्सु सत्सु, अत्र माङ्गल्यकर्मणि वैरतो विप्रवैरतः क्षत्रस्य क्षत्रियजातेः विनाशनं नाशः न भूयात् । कृष्णं यादवेशं आर प्राप ।। १३७ ।।

**चट्टि–** विप्रेषु दण्डपटदर्भमहाजिनानि कोपात् क्षिपत्सु सत्सु, अत्र माङ्गल्यकर्मणि वैरतो विप्रवैरतः क्षत्रस्य क्षत्रियजातेः विनाशनं नाशः न भूयात् इति बुद्ध्या द्रुपदे कृष्णं विप्रांश्च याचति सति सः मारुतिः भीमश्च शल्यं आर प्राप ।। १३७ ।।

**वृक्षं त्वसौ प्रतिनिधाय च [1]मद्रराजं**
**दोर्भ्यां प्रगृह्य जवतो गगने निधाय ।**
**बन्धुत्वतो भुवि शनैरदधात्स तस्य**
**विज्ञाय वीर्यमगमन्निजराजधानीम् ।।१३८।।**

**वरदराजीया–** वृक्षं पूर्वमुत्पाटितं प्रतिनिधाय भूमौ स्थापयित्वा । जवतो वेगेन गगने निधाय आकाशं प्रत्युन्नीय बन्धुत्वतः शरीरसम्बन्धित्वात् भीमः मरिष्यतीति बुद्ध्या भुवि शनैः लाघवेन अधात् स्थापयामास । शल्यः तस्य भीमस्य वीर्यं पराक्रमम् । निजां स्वीयपुरीम् ।।१३८।।

**जनार्दनीया–** असौ भीमः वृक्षं प्रतिनिधाय, भुवीति शेषः । गगने निधाय उत्तीर्य, बन्धुत्वतः मातुलत्वात् भुवि शनैः लाघवेन अदधात् स्थापयामास । सः शल्यः । तस्य भीमस्य ।। १३८ ।।

**चट्टि–** असौ भीमः वृक्षं पूर्वमुत्पाटितं प्रतिनिधाय भूमौ स्थापयित्वा मद्रराजं शल्यं च दोर्भ्यां हस्ताभ्यां प्रगृह्य जवतः वेगेन गगने निधाय आकाशं प्रत्युन्नीय बन्धुत्वतः मातुलत्वात् मरिष्यतीति

---

१. 'ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे । अपातयत्कुरुश्रेष्ठो ब्राह्मणा जहसुस्तदा ।। तत्राश्चर्यं भीमसेनश्चकार पुरुषर्षभः । यच्छल्यं पातितं भूमौ नावधीद्बलिनं बली ।। पातिते भीमसेनेन शल्ये कर्णे च शङ्किते । विस्मयः परमो जज्ञे सर्वेषां पश्यतां नृणाम् ।।' इत्यादिपर्वणि- २०५.३४-३६.

वृद्ध्या भुवि शनैः लाघवेन अदधात् स्थापयामास । सः शल्यः तस्य भीमस्य वीर्यं पराक्रमं विज्ञाय निजराजधानीं स्वीयं पुरीं प्रत्यगमत् ।।१३८।।

**[1]पार्थोऽपि [2]तेन धनुषा युयुधे स्म कर्णं**
**सोऽप्यत्र बाहुबलमाविरमुत्र चक्रे ।**
**तौ धन्विनामनुपमौ चिरमस्यतां च**
**सूर्यात्मजोऽत्र वचनं व्यथितो बभाषे ।।१३९।।**

**व्यासतीर्थीया–** सोऽर्जुनो अमुत्र कर्मणि अस्त्रबाहुबलमाविश्चक्रे ।। १३९-१४४ ।।

**वेदाङ्गतीर्थीया–** तेन धनुषा, स्वयंवरे स्वयमारोपितेन धनुषा । अस्यतां बाणानाक्षिपताम् ।।१३९।।

**वादिराजतीर्थीया–** 'आविरमुत्र चक्रे' इत्यत्र अमुत्र अर्जुन आविश्चक्र इति सम्बन्धः । अस्यतां अन्योन्यशरविक्षेपमकुरुताम् ।। १३९ ।।

**वरदराजीया–** तेन धनुषा यत् द्रुपदेन स्थापितं येन मत्स्योऽपि विद्धः तेनेत्यर्थः । कर्णं प्रति अर्जुनेनेति यावत् । स कर्णोऽपि अत्र युद्धे स्वबाहुबलमाविश्चक्रे प्रकटीचकार । धन्विनां धनुर्धराणां मध्ये अनुपमौ असदृशौ चिरं अस्यतां सङ्घटितवन्तौ । अत्र युद्धे व्यथितः व्यथां प्राप्तः सूर्यात्मजः कर्णः बभाषे ।।१३९।।

**अनन्तभट्टीया–** आविश्चक्रे । अस्यतामिति क्रियापदम् ।।१३९।।

**जनार्दनीया–** तेन धनुषा स्वयंवरे आत्मनाऽऽरोपितधनुषा । सोऽपि कर्णोऽपि अत्र युद्धे अमुत्र अर्जुने बाहुबलं आविश्चकार प्रकटीचकार । अनुपमौ असदृशौ । चिरम्, अस्यतामिति क्रियापदम् । बाणानक्षिपतामित्यर्थः । 'असु क्षेपणे' इति धातुः ।।१३९।।

**भावविवृतिः–** तेन धनुषा स्वारोपितधनुषा । कर्णं कर्णेन, 'षट्सु द्वितीया' इति सूत्रात् । 'बाहुबलमाविरमुत्र चक्रे' इत्यनेन शिक्षासामर्थ्यं प्रदर्शितवान् तदा युद्धं न कृतवानिति ज्ञायतेऽतः पराजित इति । अयमर्जुन इत्यजानानः स्पर्धाया अयोगात् ।।१३९-१४२।।

**ताम्रपर्णी–** अस्यतां शरक्षेपमकुरुताम् ।। १३९ ।।

---

१. 'कर्णं वैकर्तनं श्रीमान् विकृष्य बलवद्धनुः । तेषां शराणां वेगेन शितानां तिग्मतेजसाम् । विमुह्यमानो राधेयो यत्नात् तमनुधावति। तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ । अयुध्येतां सुसंरब्धौ अन्योन्यविजिगीषिणौ ।' इत्यादिपर्वणि-२०५.१०-१२.

२. येन धनुषा लक्ष्यवेधमकरोत् तेनैव धनुषा कर्णादिभिर्युयुध इति भावः । तथा हि भारते- 'इति तद्धनुरानम्य शुल्कावाप्तं महाबलः । भ्रात्रा भीमेन सहितः तस्थौ गिरिरिवाचलः ।।' इत्यादिपर्वणि-२०५.४.

**चट्टि—** पार्थः अर्जुनोऽपि तेन धनुषा स्वयंवरे आत्मना यदारोपितं तेनेत्यर्थः । कर्णं युयुधे स्म । सः कर्णोऽपि अत्र युद्धे अमुत्रार्जुने स्वबाहुबलं आविश्चक्रे प्रकटीचकार । धन्विनां धनुर्धराणां मध्ये अनुपमौ असदृशौ तौ कर्णार्जुनौ चिरं अस्यतां बाणानक्षिपतामित्यर्थः । 'असु क्षेपणे' इति धातुः । सूर्यात्मजः कर्णश्च व्यथितः व्यथां प्राप्तः सन् वचनं बभाषे ।।१३९।।

> [1]त्वं फल्गुनो हरिहयो [2]द्विजसत्तमो वा
> [3]मूर्तं न मे प्रमुखतः स्थितिमन्य ईष्टे ।
> [4]यो वाऽस्मि कोऽपि यदि ते क्षममद्य बाणान्
> मुञ्चान्यथैहि[5] रणतस्त्विति पार्थ आह ।।१४०।।

**वेदाङ्गतीर्थीया—** यो वा कोऽपि त्वदुक्तेषु यो वा कश्चन अस्मि । क्षमं शक्यम् । अन्यथा अक्षमं चेत् रणतः इहि गच्छ ।।१४०-१४१।।

**वादिराजतीर्थीया—** 'द्विजसत्तपो वा मूर्तम्' इत्यत्र मूर्तं मूर्तिमत् द्विजसत्तपो वेति सम्बन्धः । यो वा कोऽप्यस्मीति पदसम्बन्धः ।। १४०-१४३ ।।

**वरदराजीया—** त्वं फल्गुनः किम्? अथवा हरिहयः इन्द्रो वा? द्विजानां सत्तप एव मूर्तिमद्वा? अन्यः फल्गुनादिभ्यः अन्यः पुरुषः मे प्रमुखतः मत्पुरतो युद्धार्थं स्थितिं कर्तुं स्थातुं न ईष्टे न समर्थः । तस्मात् त्वं कः इति प्रश्नाभिप्रायः । यः कोऽप्यहमस्मि ते यदि क्षमं युद्धं तर्हि बाणान् मुञ्च । अन्यथा युद्धाक्षमत्वे रणतो युद्धात् एहि अपयाहि इति पार्थोऽर्जुनः आह ।।१४०।।

**अनन्तभट्टीया—** मूर्तं घनीभूतम् । द्विजसत्तपो वा स्थितिं कर्तुं स्थातुमित्यर्थः ।।१४०।।

**लघ्वनन्तभट्टीया—** उपेहि अपयाहि[6] ।।१४०-१४२।।

---

१. 'किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम । अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः । आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः । विप्ररूपं विधायेदं मन्ये मां प्रतियुध्यसे । न हि मामाहवे क्रुद्धमन्यः साक्षाच्छचीपतेः । पुमान्योधयितुं शक्तः पाण्डवाद्वा किरीटिनः' इत्यादिपर्वणि- २०५.१७-१९.

२. 'द्विजसत्तपो वा' इति वादिराजतीर्थानां पाठः । वरदराजीय-अनन्तभट्टीयपाठोऽपि तथैव ।

३. 'मर्त्यः' इति जनार्दनीये पाठान्तरम् ।

४. '..फल्गुनः प्रत्यभाषत । नास्मि कर्ण धनुर्वेदो नास्मि रामः प्रतापवान् । ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः । ..स्थितोऽस्म्यद्य रणे जेतुं त्वां वै वीर स्थिरो भव । निर्जितोऽस्मीति वा ब्रूहि ततो व्रज यथासुखम् ।' इत्यादिपर्वणि- २०५.२१-२३.

५. 'मुञ्चान्यथेहि' इति वेदाङ्गतीर्थीयपाठः ।

६. 'उपेहि' इति पाठः प्रामादिकः । 'उपैहि' इति स्यात ।

**जनार्दनीया–** किं बभाष इत्यत आह– **त्वमित्यादिना** ।। त्वं पूर्वं फल्गुनः किम्? अथवा हरिहयः इन्द्रो वा? द्विजानां सत्तमो वा? मूर्तं देहधर्मात् । फल्गुनाद्यन्यतमो भविष्यसि । 'मर्त्यः' इति पाठे मनुष्यः अन्य उक्तेभ्योऽन्य पुमान् । मे प्रमुखतः मदग्रे स्थितिं नेष्टे स्थातुं न समर्थः । यो वा कोऽपि त्वदुक्तेषु यो वा कश्चनास्मि । यदि ते क्षमं योद्धुं शक्तिश्चेत् । 'क्षितिक्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु' इत्यमरः । तर्हि अथ बाणान् मुञ्च । अन्यथा सामर्थ्याभावे रणतः एहि गच्छ इति पार्थ आह ।।१४०।।

**ताम्रपर्णी–** मूर्तं मूर्तिमत् ।। १४०-१४६ ।।

**भारतश्री–** मूर्तं देहधारी, धनुर्वेदो वा इति शेषः । भारते तथोक्तेः ।।१४०।।

**चट्टि–** किं बभाष इत्यत आह– **त्वमित्यादिना** ।। त्वं फल्गुनः किम्? अथवा हरिहयः इन्द्रो वा? मूर्तं मूर्तिमत् द्विजानां सत्तमो वा? अन्यः फल्गुनादिभ्योऽन्यः पुरुषः मे प्रमुखतः मत्पुरतः स्थितिं युद्धार्थं स्थितिं नेष्टे स्थातुं न समर्थः । यो वा कोऽपि त्वदुक्तेषु यो वा कश्चनास्मि यदि ते क्षमं योद्धुं सामर्थ्यं चेत् तर्हि बाणान् मुञ्च । अन्यथा सामर्थ्याभावे रणतः युद्धात् एहि गच्छ इति पार्थ आह ।। १४० ।।

> [1]**कार्यं न मे द्विजवरैः प्रतियोधनेने-**
> **त्युक्त्वा ययौ रविसुतः स सुयोधनाद्यैः ।**
> **नागाह्वयं पुरमथ द्रुपदात्मजां ता-**
> **मादाय चार्जुनयुतः प्रययौ स भीमः**[2] ।।१४१।।

**वरदराजीया–** द्विजवरैः सह प्रतियोधनेन युद्धेन मया कार्यं प्रयोजनं नास्तीत्युक्त्वा सः रविसुतः कर्णः सुयोधनाद्यैः सह नागाह्वयं पुरं ययौ । अर्जुनेन युतो भीमः ।।१४१।।

**जनार्दनीया–** प्रतियोधनेन युद्धेन कार्यं न प्रयोजनं नेत्यर्थः । नागाह्वयं पुरं ययौ । न तु प्राप । 'अथो विविशुः'(१७०) इति उत्तरत्र वक्ष्यमाणत्वात् ।। १४१ ।।

**भारतश्री–** नागाह्वयं पुरं प्रति । न तु पुरं प्राप्ताः । भारते अर्धमार्गादेव पुनर्युद्धायागता इत्युक्तेः । 'अथो विविशुः' इत्युत्तरत्र पुरप्रवेशोक्तेश्च ।। १४१ ।।

---

१. 'ज्ञात्वा सर्वान् शरान् घोरान् कर्णोऽधावद् द्रुतं वहिः ।। ब्राह्मं तेजस्तदाऽजय्यं मन्यमानो महारथः ।' इत्यादिपर्वणि-२०५.२८ इति । 'निवर्तन्तां भवन्तो वै कुतो विप्रेषु क्रूरता । दुर्बला ब्राह्मणाश्चेमे भवन्तो वै महाबलाः ।। द्वावत्र ब्राह्मणौ क्रूरौ वाय्विन्द्रसदृशौ बले । ये वा के वा नमस्तेभ्यो गच्छामः स्वपुरं वयम् ।। एवं सम्भाषमाणास्ते न्यवर्तन्ताथ कौरवाः ।।' इत्यादिपर्वणि २०५.४७-४९ इति च ।

२. 'तौ पार्थिवानां मिषतां नरेन्द्र कृष्णामुपादाय गतौ नराग्र्यौ । विक्षोभ्य विद्राव्य च पार्थिवांस्तान् स्वतेजसा दुष्प्रतिवीक्ष्यरूपौ ।। विभ्राजमानाविव चन्द्रसूर्यौ बाह्यां पुरात् भार्गवकर्मशालाम् ।।' इत्यादिपर्वणि-२०८.७.

**चट्टि–** द्विजवरैः सह प्रतियोधनेन युद्धेन मे कार्यं न प्रयोजनं न नास्तीत्युक्त्वा रविसुतः कर्णश्च सुयोधनाद्यैः सह नागाह्वयं पुरं ययौ । अथ अर्जुनेन युतः सः भीमः तां द्रुपदात्मजां द्रौपदीं चादाय प्रययौ ।।१४१।।

**अग्रेऽश्विपुत्रसहितः स तु धर्मसूनुः**
**प्रायात् कुलालगृहमन्वपि भीमपार्थौ ।**
**[1]भिक्षेति तैरभिहिते प्रजगाद कुन्ती**
**भुङ्ध्वं समस्तश इति प्रददर्श कन्याम् ।।१४२।।**

**वेदाङ्गतीर्थीया–** भीमपार्थावपि अनुययतुः ।।१४२-१४४।।

**वरदराजीया–** अग्रे भीमार्जुनयोः पुरतः अश्विपुत्राभ्यां नकुलसहदेवाभ्यां सहितो धर्मसूनुः कुलालगृहं स्वावासस्थानं अनु धर्मसूनुगमनानन्तरं भीमपार्थावपि प्रययतुः । तैः धर्मराजादिभिः भिक्षेति भिक्षा आनीता इति अभिहिते सति कुन्ती जगाद । किमिति? समस्तशः सर्वेऽपि भिक्षां भुङ्ध्वमिति । अनन्तरं कन्यां ददर्श ।।१४२।।

**जनार्दनीया–** भीमपार्थावपि अनुययतुः । तैः पार्थैः भिक्षेति अस्माभिर्भिक्षा प्राप्ता इत्यभिहिते उक्ते सति कुन्ती समस्तशः भुङ्ध्वं इति जगाद । कन्यां ददर्श, कुन्तीति शेषः ।। १४२ ।।

**चट्टि–** अग्रे भीमार्जुनयोः पुरतः अश्विपुत्राभ्यां नकुलसहदेवाभ्यां सहितः सः धर्मसूनुः कुलालगृहं प्रतिययौ । भीमपार्थावपि अनुययतुः । तैः पार्थैः भिक्षेति अस्माभिर्भिक्षा प्राप्ता इत्यभिहिते ब्रुवति सति कुन्ती समस्तशः भुङ्ध्वं इति प्रजगाद । अनन्तरं कन्यां प्रददर्श ।। १४२ ।।

**[2]प्रामादिकं च वचनं न मृषा तयोक्तं**
**प्रायो हि तेन कथमेतदिति स्म चिन्ता ।**
**तेषां बभूव वसुदेवसुतो [3]हरिश्च**
**तत्राऽजगाम परमेण हि सौहृदेन ।।१४३।।**

---

१. 'तां याज्ञसेनीं परमप्रतीतौ भिक्षेत्यथावेदयतां नराग्र्यौ ।। कुटीगता सा त्वनवेक्ष्य पुत्रौ प्रोवाच भुङ्क्तेति समेत्य सर्वे ।।' इत्यादिपर्वणि- २०६.१-२.

२. भारते कुन्त्यैव अयमभिप्रायः प्रकटितः । आदिपर्वणि-२०६.४-५.

३. 'वृष्णिप्रवीरस्तु कुरुप्रवीरानाशंसमानः सह रौहिणेयः । जगाम तां भार्गवकर्मशालां यत्रासते ते पुरुषप्रवीराः ।।' इत्यादिपर्वणि-२०६.२२.

**वरदराजीया–** तया कुन्त्या उक्तं प्रामादिकं अबुद्धिपूर्वकं वचनमपि प्रायः न मृषा न अनृतं सत्यमेव भविष्यति । तेन कारणेन एतत् पञ्चभिरेकस्त्रीपरिग्रहणं कथम्? स्यादिति शेषः । तेषां पाण्डवानां चिन्ता बभूव स्म । हरिः तत्र कुलालगृहं प्रति आजगाम । सौहृदेन सौहार्देन निमित्तेन ।।१४३।।

**अनन्तभट्टीया–** प्रायो मृषा असत्यं न वदेदित्यर्थः ।।१४३।।

**जनार्दनीया–** तयोक्तं प्रामादिकं च अज्ञानपूर्वकमपि वचनं प्रायो मृषा असत्यं न भवतीत्यर्थः । हि यतः तेन कारणेन एतत् समस्तैः अस्माभिरेकजायापरिग्रहणं कथं भवेदिति तेषां चिन्ता बभूव स्म । तत्र कुलालगृहं प्रति । सौहृदेन स्नेहेन ।।१४३।।

**भावविवृतिः–** 'प्रामादिकञ्च वचनं न मृषा तयोक्तम् । ...तेषां बभूव' इत्यत्र प्रायः इत्येतदवधारणार्थकम् । स्म इत्येतन्निषेधार्थकम् । तथा च तया कुन्त्या उक्तं प्रामादिकं प्रमादपूर्वं वचनमपि मृषा नैव भवेत् । एतत् शास्त्रतो निषिद्धं नैव भवेत् । हि यस्मात् तेन कारणेनैव तत्कथं स्यादिति चिन्ता तेषां पाण्डवानां बभूवेत्यर्थः । तदुक्तम्- 'प्राय इत्यवधारणार्थः । प्रायःपदं स्यात्प्राचुर्ये चाक्षेपात्माऽवधारणे । अर्थतोऽवधृतिः क्षेपो मुखाक्षेपोऽवधारणे ।।' (भा.ता-४.२१.२९) इति । 'स्मृते वृत्तौ निषेधे स्म' इत्यभिधानात् ।। १४३-१५३ ।।

**चट्टि–** तया कुन्त्या उक्तं प्रामादिकं अबुद्धिपूर्वकमपि वचनं प्रायो मृषा असत्यं न भवति । हि यतः तेन कारणेन एतत् पञ्चभिरेकस्त्रीपरिग्रहणं कथं भवेदिति तेषां पाण्डवानां चिन्ता बभूव स्म । वसुदेवसुतः हरिः श्रीकृष्णश्च परमेण सौहृदेन स्नेहेन निमित्तेन तत्र कुलालगृहं प्रति आजगाम ।। १४३ ।।

**सम्भाष्य तैः स भगवानमितात्मशक्तिः**
**प्रायान्निजां पुरममा यदुभिः समस्तैः ।**
**ज्ञातुं च तान् निशि स तु [1]द्रुपदः स्वपुत्रं**
**प्रस्थापयत् [2]स च [3]विलीन इमानपश्यत् ।।१४४।।**

**वादिराजतीर्थीया–** 'स तु द्रुपदः' इत्यत्र तुशब्देन सामान्यतः याजोपयाजयोर्वचनेन ज्ञातत्वात् विशेषेण ज्ञातुमित्यर्थोऽभिहितः ।। १४४ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'सम्भाष्य तैः स भगवान्..' इत्यस्ति । तस्यार्थः- भगवान् अमितात्मशक्तिरपि स्वेच्छयैव तैः पाण्डवैः सम्भाष्य समस्तैः यदुभिः अमा सह निजां पुरीं अयादिति । एतेन पाण्डवैः सह सम्भाषणस्य असाध्यत्वाभावात् अमितात्मशक्तिः इति विशेषणं व्यर्थमिति दूषणमपहस्तितम् ।

---

१. भारते धृष्टद्युम्नः स्वयमेव जगाम इत्युच्यते १.२०७.१.

२. 'सोऽज्ञायमानः पुरुषानवधाय समन्ततः । स्वयमारान्निलीनोऽभूत् भार्गवस्य निवेशने ।।' इत्यादिपर्वणि-२०७.२.

३. 'निलीनः इमामपश्यत्' इति चट्टीपाठः ।

अपिशब्दस्याध्याहारेण अमितात्मशक्तित्वात् सम्भाषणं विना पाण्डवान् रक्षितुं समर्थोऽपि स्वेच्छयैव सम्भाषणं चकारेति वक्तुं अमितात्मशक्तिः इत्युक्तमिति स्वीकरणात् ।। १४४-१४७ ।।

**वरदराजीया–** तैः कुन्त्यादिभिः सम्भाष्य कथां कृत्वा यदुभिः अमा सह तान् पाण्डवान् ज्ञातुं स्वपुत्रं धृष्टद्युम्नं निशि प्रस्थापयत् प्रस्थापयामास । स च धृष्टद्युम्नो विलीन एव सन् ।।१४४।।

**अनन्तभट्टीया–** अमा सहेत्यर्थः ।। १४४ ।।

**जनार्दनीया–** सम्भाष्य सम्भाषणं कृत्वा । अमा सह ।। १४४ ।।

**चट्टि–** स च धृष्टद्युम्नः निलीनस्सन् । अमितात्मशक्तिः सः भगवान् तैः सह सम्भाष्य सम्भाषणं कृत्वा समस्तैः यदुभिः अमा सह निजपुरं प्रायात् । सः द्रुपदः तान् पाण्डवान् ज्ञातुं निशि स्वपुत्रं धृष्टद्युम्नं प्रस्थापयत् प्रस्थापयामास ।।१४४।।

**भिक्षान्नभोजिन [1]उतो भगिनीं निजां च**
**[2]तत्रातितृप्तहृदयामथ [3]युद्धवार्ताम् ।**
**तेषां निशम्य नदतां घनवद् गभीरं**
**[4]क्षत्रोत्तमा इति मतिं स चकार वीरः ।।१४५।।**

**व्यासतीर्थीया–** घननिनदवत् ।। १४५ ।।

**वेदाङ्गतीर्थीया–** उत अनन्तरम् ।। १४५ ।।

**वादिराजतीर्थीया–** भिक्षान्नभोजिनः इत्यादि द्वितीयायाः पूर्वश्लोकेनान्वयः । भिक्षान्नभोजिन इमानुतो भगनीं चेति सम्बन्धः ।। १४५ ।।

**वरदराजीया–** भिक्षान्नभोजिनः भिक्षाप्राप्तान्नभोक्तॄन् इमां अतितृप्तहृदयां अतिप्रसन्नमनस्कां निजां भगिनीं द्रौपदीं च अपश्यत् । घनवद् गम्भीरं यथा भवति तथा नदतां ध्वनिं कुर्वतां तेषां पाण्डवानां युद्धवार्ता श्रुत्वा स वीरो धृष्टद्युम्नः एते क्षत्रोत्तमा इति मतिं निश्चयं चकार ।।१४५।।

---

१. 'इमां भगिनीम्' इति वरदराजीयपाठः ।

२. 'न तत्र दुःखं मनसापि तस्या न चावमेने कुरुपुङ्गवास्तान्' इत्यादिपर्वणि- २०७.१०.

३. 'ते तत्र शूराः कथयाम्बभूवुः कथा विचित्राः पृतनाधिकाराः । अस्त्राणि दिव्यानि रथांश्च नागान् खड्गान् गदांश्चापि परश्वधांश्च ।। तेषां कथास्ताः परिकीर्त्यमानाः पाञ्चालराजस्य सुतस्तदानीम् । शुश्राव...।।' इत्यादिपर्वणि- २०७.११-१२.

४. 'ते नर्दमाना इव कालमेघाः कथा विचित्राः कथयाम्बभूवुः । न वैश्यशूद्रौपयिकीः कथास्ता न च द्विजानां कथयन्ति वीराः । निस्संशयं क्षत्रियपुङ्गवास्ते यथा हि युद्धं कथयन्ति राजन् ।' इत्यादिपर्वणि-२०८.१२-१३.

**अनन्तभट्टीया–** भिक्षान्नभोजिनः अमून् ।। १४५ ।।

**जनार्दनीया–** स धृष्टद्युम्नः । भिक्षान्नभोजिन इमान् पार्थान् । उतो तत्र पार्थसमीपे अतितृप्तहृदयां अतितृप्तं अत्यन्तं प्रसन्नं मनो यस्याः सा तथा ताम् । भगिनीमपश्यत् । गभीरं गम्भीरम् ।।१४५।।

**चट्टि–** भिक्षान्नभोजिन इमान् पार्थान् । उतोऽनन्तरं तत्र पार्थसमीपे । अतितृप्तहृदयां निजां भगिनीं द्रौपदीं च अपश्यत् । अथ घनवत् मेघवत् गभीरं नदतां तेषां पाण्डवानां युद्धवार्तां निशम्य वीरः सः धृष्टद्युम्नः एते क्षत्रोत्तमा इति मतिं चकार ।।१४५।।

**[1]प्रातस्तु तस्य जनितुर्वचसा पुरोधा-**
**स्तान् प्राप्य मन्त्रविधिना मरुदात्मजेन ।**
**[2]सम्पूजितोऽतिविदुषा प्रतिगृह्य तांश्च**
**प्रावेशयन्नृपतिगेहममैव मात्रा ।।१४६।।**

**व्यासतीर्थीया–** 'जनिता मन्त्रे' (सि.कौ.३५४०) इत्यनुशासनात् जनितुरिति वैदिकम् । अन्यथा जनयितुरिति स्यात् ।। १४६-१४७ ।।

**वेदाङ्गतीर्थीया–** जनितुः जनयितुः ।। १४६ ।।

**वादिराजतीर्थीया–** तस्य धृष्टद्युम्नस्य जनितुः जनकस्य द्रुपदस्य । 'जनिता मन्त्रे' इत्यनुशासनम् ।।

**वरदराजीया–** तस्य जनितुः पितुः द्रुपदस्य वचसा तत्र गच्छेति वाक्येन पुरोधाः पुरोहितः तान् पाण्डवान् प्राप्य अतिविदुषा मरुदात्मजेन भीमसेनेन मन्त्रविधिना वेदोक्तमन्त्रविधिना सम्पूजितः मात्रा अमैव सहैव तान् नृपतिगेहं प्रावेशयत् ।।१४६।।

**अनन्तभट्टीया–** जनितुः पितुः ।। १४६-१४८ ।।

**लघ्वनन्तभट्टीया–** तस्य धृष्टद्युम्नस्य जनितुः । एषः ।।१४६-१४९ ।।

**जनार्दनीया–** तस्य धृष्टद्युम्नस्य । जनितुर्जनयितुः ।।१४६।।

**अतिविशद–** 'प्रातस्तु तस्य जनितुर्वचसा पुरोधास्तान् प्राप्य मन्त्रविधिना मरुदात्मजेन । सम्पूजितः' इत्यत्र भीमेन द्रुपदपुरोधाः सम्पूजित इत्युच्यते । तदनुपपन्नम् । युधिष्ठिरे सति भीमस्य पूजनाधिकाराभावात् । तथा तेन काप्यकृतत्वाच्च । तस्मात्कथमेतदिति चेन्न । समित्युपसर्गेणैवान्य-पूजितत्वलाभात् । यथा 'अस्मिन् गृहे सम्यक् वयं स्थिताः' इत्युक्ते 'अन्यस्मिन्न तथा' इति सिद्ध्यति ।

१. 'ततः स राजा द्रुपदः प्रहृष्टः पुरोहितं प्रेषयामास तेषाम् ।' इत्यादिपर्वणि- २०८.१५.

२. 'भीमस्ततस्तत्कृतवान्नरेन्द्र तां चैव पूजां प्रतिगृह्य हर्षात् ।' इत्यादिपर्वणि- २०८.२३.

तथा 'मरुदात्मजेन सम्पूजितः' इत्युक्ते 'अन्येन धर्मराजादिना तथा न पूजितः' इति सिद्धमेव । ननु सर्वात्मना अपूजित इति । अथवा धर्मराजाज्ञया मरुदात्मजेन सम्पूजितः इति । तथाहि सम्पूजित इत्यत्र समित्युपसर्गः । पूजायाः अङ्गसाकल्यमाह । तत्र गुरोराज्ञया करणमेव एकाङ्गम्, भक्तिः द्वितीयाङ्गम्, श्रद्धा तृतीयाङ्गम्, चतुर्थाङ्गं मन्त्रविधिः, तथा देशकालशुध्यादीनि । तत्रैकाङ्गराहित्ये न साङ्गत्वम् । पूजायाः सर्वाङ्गसाकल्यमस्तीति सूचनार्थं 'सम्' इत्युक्तम् । तत्र हेतुः– **अतिविदुषेति** ।। 'यज्ञोरुदान-नरदेववन्द्यताप्रश्रर्षिपूजासु युधिष्ठिरोऽभूत्' (ता.नि-२०.१) इत्युत्तराध्याये युधिष्ठिरस्याधिकारसूचके अस्मिन् श्लोके उरुशब्दः यज्ञादौ सर्वत्रान्वेति । तथाच उरु यज्ञोरु दानोरु ऋषिपूजासु युधिष्ठिरस्या...* इत्युक्तं भवति । प्रकृते एकपूजात्वेन उरुत्वाभावात् मरुदात्मजेन सम्पूजितः इति वा ।। १४६-१५२ ।।

**गूढकर्तृक–** 'प्रातस्तु तस्य जनितुर्वचसा पुरोधाः... सम्पूजितः' इति भीमेन द्रुपदपुरोधाः सम्पूजित इत्युच्यते । तदनुपपन्नम् । युधिष्ठिरे सति भीमस्य पूजाधिकाराभावात् । तथा तेन काप्यकृतत्वाच्च । तस्मात्कथमेतदिति चेन्न । समित्युपसर्गेणैव अन्यपूजितत्वलाभात् । यथा 'अस्मिन् गृहे सम्यक् स्थिताः' इत्युक्ते 'अन्यस्मिन्न तथा' इति सिद्ध्यति । 'मरुदात्मजेन सम्पूजितः' इत्युक्ते 'धर्मराजादिना न तथा सम्पूजितः' इति सिद्धमेव । ननु सर्वात्मना अपूजित इति । अथवा धर्मराजाज्ञया मरुदात्मजेन सम्पूजित इति । तथाहि सम्पूजित इत्यत्र (सं इत्युपसर्गः)। पूजाया अङ्गसाकल्यमाह । तत्र गुरोराज्ञया करणं एकाङ्गम्, भक्तिर्द्वितीयाङ्गम्, श्रद्धा तृतीयाङ्गम्, चतुर्थो मन्त्रविधिरित्यादि ।।१४६-१५२।।

**चट्टि–** प्रातस्तस्य धृष्टद्युम्नस्य जनितुर्जनयितुः द्रुपदस्य वचसा पुरोधाः पुरोहितस्तान् पाण्डवान् प्राप्य अतिविदुषा मरुदात्मजेन भीमेन मन्त्रविधिना वेदोक्तविधिना पूजितः सन् मात्रा अमा सहैव तांश्च प्रतिगृह्य नृपतेः द्रुपदस्य गेहं गृहं प्रावेशयत् ।। १४६ ।।

**तानागतान् समभिपूज्य निजात्मजां च**
**[1]विप्रादियोग्यपृथगुक्तपदार्थजातैः ।**
**पूर्णान् गृहांश्चतुर एव दिदेश राजा**
**[2]तत्राऽयुधादिपरिपूर्णगृहं च तेऽगुः ।।१४७।।**

१. 'जिज्ञासयैवाथ कुरुत्तमानां द्रव्याण्यनेकान्युपसञ्जहार ।। फलानि माल्यानि च संस्कृतानि वर्माणि चर्माणि तथाऽसनानि । गाश्चैव राजन्नथ चैव रज्जूर्बीजानि चान्यानि कृषीनिमित्तम् ।। अन्येषु शिल्पेषु च यान्यपि स्युः सर्वाणि कृत्यान्यखिलेन तत्र । क्रीडानिमित्तान्यपि यानि तत्र सर्वाणि तत्रोपजहार राजा ।। वर्माणि चर्माणि च भानुमन्ति खड्गा महान्तोऽश्वरथाश्च चित्राः । धनूंषि चाग्र्याणि शराश्च चित्राः शक्त्यृष्टयः काञ्चनभूषणाश्च ।। प्रासा भुशुण्ड्यश्च परश्वधाश्च साङ्ग्रामिकं चैव तथैव सर्वम् । शय्यासनान्युत्तमवस्तुवन्ति तथैव वासो विविधश्च तत्र ।।' इत्यादिपर्वणि- २०१.७-११. २. 'ते तत्र भुक्त्वा पुरुषप्रवीरा यथात्मकामं सुभृशं प्रतीताः । उत्क्रम्य सर्वाणि वसूनि राजन् साङ्ग्रामिकं ते विविशुर्नृवीराः ।।' इत्यादिपर्वणि- २०१.१७.

**वेदाङ्गतीर्थीया**– विप्रादियोग्यपृथगुक्तपदार्थजातैः विप्रादयः ब्राह्मणाद्याः चत्वारो वर्णाः । तेषां योग्याः तत्कर्माङ्गभूताः, पृथगुक्ता एते ब्राह्मणस्य एते क्षत्रियस्येत्यादिपृथगुदिताः, ये पदार्थाः तेषां समूहैः । आयुधादिभिः परिपूर्णगृहं क्षत्रिययोग्यमिति यावत् ।। १४७ ।।

**वादिराजतीर्थीया**– 'विप्रादियोग्यपृथगुक्तपदार्थजातैः' इत्यत्र विप्रो ब्राह्मणः । आदिपदेन क्षत्रिय-वैश्यशूद्रा गृह्यन्ते । तेषां योग्यानि पृथगुक्तानि स्वभावशोधनाय द्रुपदेन पृथक्पृथगुक्तानि पदार्थजातानि तैः अन्नभक्षाद्यैरेकत्र, आयुधैरपरत्र, वस्तुफलाद्यैरन्यत्र, लगुडलाङ्गलाद्यैश्चैकत्र पूर्णान् गृहानित्यर्थः ।।१४७।।

**वरदराजीया**– आगतान् पाण्डवान् निजात्मजां च समभिपूज्य विप्रादीनां ब्राह्मणक्षत्रियवैश्यशूद्राणां योग्यता स्मृत्या पृथगुक्तानां यथाक्रमं दर्भपुस्तकादीनां आयुधादीनां लाङ्गलादीनां पदार्थानां जातैः समूहैः पूर्णान् चतुरः चतुस्सङ्ख्याकान् गृहान् राजा तेभ्यो दिदेश । तत्परीक्षार्थमिति भावः । तत्र गृहेषु मध्ये ते पाण्डवाः आयुधादिपरिपूर्णं गृहं अगुः प्रापुः ।।१४७।।

**जनार्दनीया**– विप्रादियोग्यपृथगुक्तपदार्थजातैः विप्रादयो ब्राह्मणाद्याः चत्वारो वर्णाः, तेषां योग्याः तत्कर्माङ्गभूताः । दर्भादि ब्राह्मणवर्णयोग्यम् । शस्त्रकवचादि क्षत्रिययोग्यम् । धनादि वैश्ययोग्यम् । लाङ्गलादिकं शूद्रस्येति पृथगुक्ताः । एते ब्राह्मणस्य योग्याः, एते क्षत्रियस्य योग्या इत्यादि पृथगुक्ता ये पदार्थाः, तेषां जातैः समूहैः पूर्णान् गृहान् तेभ्यः दिदेश । तत्र तेषु मध्ये आयुधादिपूर्णगृहम् । आदिशब्देन कवचादयः । क्षत्रिययोग्यमिति यावत् ।।१४७।।

**ताम्रपर्णी**– ।। **विप्रादियोग्येति** ।। विप्रादियोग्यानि पृथक्पृथक्स्वभावशोधनाय स्वोक्तानि शास्त्रोक्तानि वा यानि पदार्थजातानि तैरित्यर्थः । नन्वेतेषां ब्राह्मणसभानिविष्टत्वादत एव विप्रैर्जातिपक्षपातेन दण्डपट-दर्भादिक्षेपपूर्वं कुपितत्वात्कथं वर्णसन्देह इति चेन्न वीर्यादिदर्शनेन क्षत्रियत्वसन्देहे द्विजवेषप्रच्छन्नत्वसन्देहे च वैश्यशूद्रत्वसन्देहस्यापि प्राप्तेरिति ज्ञेयम् ।। १४७ ।।

**भारतश्री**– चतुरः नीतिकुशलः । चतुरो गृहानिति वा ।। १४७ ।।

**चट्टि**– राजा द्रुपदः आगतान् पाण्डवान् निजात्मजां च समभिपूज्य विप्रादियोग्यपृथगुक्तपदार्थजातैः विप्रादयो ब्राह्मणाद्याश्चत्वारो वर्णाः, तेषां योग्यास्तत्तत्कर्माङ्गभूताः, पृथगुक्ताः एते ब्राह्मणस्य योग्याः, एते क्षत्रियस्य योग्या इति पृथगुक्ताः ये पदार्थाः पुस्तकायुधादयः तेषां जातैः समूहैः । पूर्णान् चतुरः चतुस्सङ्ख्याकान् गृहान् दिदेश । तत्र तेषु मध्ये आयुधादिपरिपरिपूर्णगृहम् । आदिशब्देन कवचादयः गृह्यन्ते । आयुधादिभिः परिपूर्णगृहमेव ते पाण्डवाश्च अगुः प्रापुः ।। १४७ ।।

[1]चेष्टास्वराकृतिविवक्षितवीर्यशौर्य-
प्रागल्भ्यपूर्वकगुणैः क्षितिभर्तृपुत्रान् ।
[2]विज्ञाय तान् द्रुपद एत्य च धर्मसूनुं
पप्रच्छ कोऽसि नरवर्य [3]वदस्व सत्यम् ॥१४८॥

**व्यासतीर्थीया–** वीर्यशौर्ये सामर्थ्यपराभवशक्ती । ब्राह्मणाद्या अपि वीर्यशौर्ययुक्ता भवन्त्यतो विवक्षिते इति । क्षत्रियासाधारणे विशेषिते अस्त्रशस्त्रादिरूपे इति । प्रागल्भ्यं प्रौढत्वम् ।। १४८-१५१ ।।

**वेदाङ्गतीर्थीया–** चेष्टा क्षत्रिययोग्यव्यापारविशेषः । स्वरः गम्भीरत्वादिविशेषयुक्तः । आकृतिः क्षत्रियत्वज्ञापकविशेषयुक्ता । विवक्षितं वक्तुमिष्टं वचनम्, अभिप्रायविशेषः । वीर्यशौर्ये । प्रागल्भ्यं प्रौढभावः । एतत्पूर्वकगुणैः धर्मसूनुमेत्य ।।१४८-१४९।।

**वादिराजतीर्थीया–** 'विवक्षितवीर्यशौर्य..' इत्यत्र विवक्षितं वक्तुमभीष्टं वचनम् ।। १४८ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'चेष्टा स्वराऽऽकृतिविवक्षितवीर्य..' इति श्लोके 'तेषां स्वराऽऽकृति-विवक्षितवीर्यशौर्यप्रागल्भ्यपूर्वकगुणैः' इत्यत्र विवक्षितेत्येतत् वीर्यादिशब्दैः चेष्टादिशब्दैश्च सम्बध्यते । एतेन ब्राह्मणादियोग्यवीर्यादिव्यावृत्त्यर्थं यथा वीर्यादीनां विवक्षितत्वं वक्तव्यम् । तथा ब्राह्मणादियोग्य-चेष्टादिव्यावृत्त्यर्थं चेष्टादीनां विवक्षितत्वं वक्तव्यम् । तत् नोक्तमिति कारणात् न्यूनतेति शङ्कानवकाशः । विवक्षितेत्येतत् देहलीदीपन्यायेन उभयत्र सम्बध्यत इत्यभ्युपगमात् ।। १४८-१५२ ।।

**वरदराजीया–** चेष्टाभिर्व्यापारैः ध्वनिभिः आकृतिभिः आकारैः तथा विवक्षितैः वीर्यादिगुणैश्च क्षितिभर्तृपुत्रान् क्षत्रियकुमारानित्यर्थः । तत्र धर्मसूनुं एत्य द्रुपदः पप्रच्छ ।।१४८।।

**जनार्दनीया–** चेष्टा क्षत्रिययोग्यगतिव्यापारविशेषः । स्वरः गम्भीरत्वादिविशेषयुक्तः । आकृतिः क्षत्रियत्वज्ञापकविशेषयुक्ता । विवक्षितं वक्तुमिष्टं वचनाभिप्रायविशेषः । वीर्यशौर्ययोः प्रागल्भ्यं प्रौढता । एतत्पूर्वकगुणैः क्षितिभर्तृपुत्रान् राजपुत्रान् धर्मसूनुमेत्य सत्यं वदस्वेति पप्रच्छ ।।१४८।।

**ताम्रपर्णी–** विवक्षितत्वं नाम क्षत्रियेष्वेव वक्तुमुचितत्वम् । एतच्च वीर्यादिविशेषणम् । शौर्यमभीरुत्वम् । प्रागल्भ्यं प्रौढत्वम् ।। १४८-१४९ ।।

---

१. 'तल्लक्षयित्वा द्रुपदस्य पुत्रा राजा च सर्वैः सह मन्त्रिमुख्यैः । समर्थयामासुरुपेत्य हृष्टाः कुन्तीसुतान् पार्थिवराजपुत्रान् ।।' इत्यादिपर्वणि- २००.१८.

२. 'कथं जानीम भवतः क्षत्रियान् ब्राह्मणानुत । वैश्यान् वा गुणसम्पन्नान् अथवा शूद्रयोनिजान् ।। मायामास्थाय वा सिद्धान् चरतः सर्वतो दिशम् ।। ..ब्रवीतु नो भवान् सत्यं सन्देहो ह्यत्र नो महान् ।' इत्यादिपर्वणि- २१०.२-४

३. 'वदस्व मह्यम्' इति चर्च्रीपाठः ।

**भारतश्री–** विवक्षितवीर्यं वक्तुमिष्टं वीर्यम् ।। १४८-१५३ ।।

**चट्टि–** चेष्टा क्षत्रिययोग्यव्यापारविशेषाः । स्वराः गम्भीरवादित्वविशेषयुक्ताः । आकृतिः क्षत्रियत्व-ज्ञापकविशेषयुक्ता । विवक्षितं वक्तुमिष्टं वचनाभिप्रायविशेषः । वीर्यशौर्ययोः प्रागल्भ्यं प्रौढता । एतत्पूर्वकगुणैः तान् क्षितिभर्तृपुत्रान् क्षत्रियकुमारान् । विज्ञाय द्रुपदः धर्मसूनुमेत्य हे नरवर्य! त्वं कः असि? मह्यं वदस्वेति पप्रच्छ ।। १४८ ।।

**[1]स प्राह मन्दहसितः किमिहाद्य राजन्**
**पूर्वं हि वर्णविषये न विशेष उक्तः ।**
**पुत्रीकृते तव सुतेन तु [2]लक्ष्यवेध**
**उक्तो नरेन्द्रसमितौ स कृतोऽप्यनेन ।।१४९।।**

**वादिराजतीर्थीया–** 'किमिहाद्य राजन्' इत्यत्र हे राजन्! पुत्रीकृते तव पुत्र्यर्थम् । अद्य इदानीं वर्णविषये विप्रक्षत्रियादिवर्णविषये विशेषः किं किमर्थं पृच्छसीति योजना ।। १४९ ।।

**वरदराजीया–** ।। **मन्देति** ।। किञ्चिद्धसितवदन इत्यर्थः । हे राजन्! अद्य इदानीं त्वया कोऽसीति प्रश्ने किं क्षत्रियो न भवसि चेत् कन्यां न दास्यामीति बुद्ध्या प्रश्न इति चेत् तत्राह– **पूर्वमिति** ।। तव सुतेन धृष्टद्युम्नेन पूर्वं लक्षवेध एव उक्तो न तु क्षत्रियेणैव कर्तव्य इति विशेषेण उक्तः । (किन्तु) नरेन्द्रसमितौ राजसभायां पुत्रीकृते द्रौपद्यर्थं लक्षवेध उक्तः । सः लक्षवेधो अनेन अर्जुनेन कृतोऽपि । तस्मात् किं इदानीं प्रश्नेनेति भावः ।।१४९।।

**अनन्तभट्टीया–** पूर्वं उद्घोषसमये ।। १४९ ।।

**जनार्दनीया–** मन्दहसितः ईषद्धास्यमुख इत्यर्थः । स युधिष्ठिरः प्राह । किमिति? हे राजन्! मे अद्य इह कोऽसीति प्रश्नकरणे किम् किं प्रयोजनमित्यर्थः । अथ अक्षत्रियाय दातुं नेच्छसि चेत्तत्राह– **पूर्वमिति** ।। पूर्वं उद्घोषणकाले वर्णविषये विशेषो नोक्तः । इदानीं वर्णविषयप्रश्नस्ते अयुक्त इति भावः । तव पुत्रीकृते त्वत्सुतेन नरेन्द्रसमितौ राजसन्निधावित्यर्थः । लक्ष्यवेधस्तूक्तः । सः लक्ष्यवेधः अनेन मम भ्रात्रा कृत इति योजना । तस्मात् प्रश्नकरणं अयुक्तमिति भावः ।।१४९।।

---

१. भारते अयमभिप्रायः युधिष्ठिरेण द्रुपदपुरोहितपुरतः प्रकटितः । 'सुखोपविष्टं तु पुरोहितं तदा युधिष्ठिरो ब्राह्मणमित्युवाच ।। न तत्र वर्णेषु कृता विवक्षा न चापि शीले न कुले न गोत्रे । कृतेन सज्येन हि कार्मुकेण विद्धेन लक्ष्येण हि सा विसृष्टा ।।' इत्यादिपर्वणि-२०८.२३-२५.

२. 'लक्षवेधः' इति वरदराजीयपाठः ।

**चट्टि—** सः धर्मसूनुः मन्दहसितः ईषद्धासयुक्तमुख इत्यर्थः । प्राह । किमिति? हे राजन्! अद्य इह कोऽसीति प्रश्नकरणे किम् किं प्रयोजनमित्यर्थः । अक्षत्रियाय दातुं नेच्छामि इति चेत्तत्राह– **पूर्वमिति** ।। पूर्वं तव सुतेन वर्णविषये विशेषो नोक्तः हि । इदानीं वर्णविषयप्रश्नस्ते अयुक्त इति भावः । त्वत्पुत्रीकृते तव सुतेन नरेन्द्रसमितौ राजसभायां लक्ष्यवेधस्तूक्तः । सः लक्ष्यवेधः अनेन मम भ्रात्रा कृत इति योजना। तस्मात् प्रश्नकरणं अयुक्तमिति भावः ।।१४९।।

**एवं ब्रुवाणमथ तं पृथया सहैव**
**राजा वदेति पुनरेव ययाच एषः ।**
**'सर्वं पृथाऽप्यवदतां स च तेन तुष्टो**
**वाचं जगाद कृतकृत्य इहाऽसमद्य ।।१५०।।**

**वेदाङ्गतीर्थीया—** एषः युधिष्ठिरः पृथाऽपि सर्वमवदताम् । पृथया सह तं वदेति ययाचे । (अतोऽवदतां) इति भावः ।।१५०।।

**वादिराजतीर्थीया—** 'अवदतां स च' इत्यत्र पृथाऽपि पृथा च स राजा च सर्वमवदतामिति सम्बन्धः ।।

**वरदराजीया—** तं युधिष्ठिरं पृथया सहैव कुन्त्या सहितमेव पुनरपि वदेति उभाभ्यां वक्तव्यमिति ययाचे प्रार्थयामास । पृथा च उभौ सर्वं वृत्तान्तं अवदतां उक्तवन्तौ । स द्रुपदः तेन श्रुतेन तुष्टः इह जन्मनि अद्य इदानीं कृतकृत्यः आसं जातोऽस्मि ।।१५०।।

**अनन्तभट्टीया—** पृथया सह वद । उभाभ्यां वक्तव्यमिति ययाच इत्यर्थः । एषः धर्मजः । पृथाप्यवदताम् ।।१५०-१५१।।

**जनार्दनीया—** राजा पृथया सहितं तं युधिष्ठिरं पुनर्वदेति ययाचे । एषः धर्मः । पृथाऽपि सर्वमवदताम् । स राजा तेन वयं पार्था इति वाक्येन तुष्टः सन्, इह कन्यादानविषये कृतकृत्य आसं जातोऽस्मीति जगाद ।। १५० ।।

**ताम्रपर्णी—** एषः युधिष्ठिरः पृथा च सर्वमवदतामित्यन्वयः ।। १५०-१५२ ।।

**चट्टि—** पृथया सहैव एवं ब्रुवाणं तं धर्मसूनुं अथ राजा द्रुपदः वदेति पुनरेव ययाचे । एषः धर्मसूनुः । पृथाऽपि सर्वमवदतां ऊचतुः । स राजा तेन वयं पार्था इति वाक्येन तुष्टः सन्तुष्टः सन्, इह कन्याप्रदानविषये अद्य कृतकृत्य आसं जातोऽस्मीति वाचं जगाद ।। १५० ।।

**[1]पार्थार्थमेव हि मयैष कृतः प्रयत्नः**
**त्वं फल्गुनोऽन्य उत वाऽद्य करं सुतायाः ।**
**गृह्णात्वितीरित इमं स तु [2]धर्मसूनु-**
**राह स्म सर्व इति मे मनसि प्ररूढम् ॥१५१॥**

**वेदाङ्गतीर्थीया–** एषः प्रयत्नः । त्वं वा गृहाण फल्गुनो वा गृह्णातु । सर्वे गृह्णीम इति ॥१५१॥

**वादिराजतीर्थीया–** त्वं वा गृहाण फल्गुनो वा अन्यो वा गृह्णात्विति योग्यविभक्त्यध्याहारेण सम्बन्धः । सर्वे गृह्णीम इति मे मनसि प्ररूढमङ्कुरितं इति धर्मसूनुरिमं द्रुपदमाहेति योग्यविभक्त्यध्याहारेण योजना ॥ १५१ ॥

**वरदराजीया–** पार्थार्थं अर्जुनार्थम् । त्वं फल्गुनो वा अन्यः भीमादिर्वा अद्य मम सुतायाः करं हस्तं गृह्णातु । इमं द्रुपदम् । सर्वे करं गृह्णीमः इति मे मनसि प्ररूढमित्यर्थः ॥१५१॥

**अनन्तभट्टीया–** सर्वे गृह्णीमः ॥ १५१ ॥

**जनार्दनीया–** पार्थार्थमेव अर्जुनार्थमेव एषः प्रयत्नः । त्वं वा गृहाण फल्गुनो वा गृह्णातु । अन्यो वा भीमादिषु मध्ये एको वेत्यर्थः । सुतायाः करं गृह्णातु । इमं द्रुपदम् । सर्वे गृह्णीम इति मे मनसि प्ररूढं निश्चितमित्यर्थः ॥१५१॥

**चट्टि–** पार्थार्थं अर्जुनार्थमेव मया एषः प्रयत्नः कृतः । त्वं वा गृहाण । फल्गुनो वा गृह्णातु । अन्यो भीमादिषु मध्ये एको वा अद्य मे सुतायाः करं गृह्णातु इति द्रुपदेनेरितः धर्मसूनुः इमं द्रुपदं सर्वे गृह्णीम इति मे मनसि प्ररूढं निश्चितम् ॥ १५१ ॥

**नात्र प्रमा मम हृदि प्रतिभात्यथापि**
**धर्माचला मम मतिर्हि तदेव मानम् ।**
**इत्युक्तवत्यपि सहैव सुतेन राजा**
**नैवैच्छदत्र [3]भगवानगमच्च कृष्णः ॥१५२॥**

**व्यासतीर्थीया–** नन्वेकस्याः पञ्चपतित्वे किं मानमित्यत आह– **नात्रेति** ॥ अप्रामाणिकं करिष्यथेत्यनेन च सर्वात्मनाप्रामाणिकमित्यत आह– **अथापीति** ॥१५२ ॥

---

१. 'गृह्णातु विधिवत्पाणिमद्यायं कुरुनन्दनः । पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ ...भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम । यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥' इत्यादिपर्वणि- २१०.२०,२२

२. 'सर्वेषां महिषी राजन् द्रौपदी नो भविष्यति ।' इति भारते-१.२१०.२३.

३. 'अथ द्वैपायनो राजन् अभ्यागच्छद्यदृच्छया ।' इत्यादिपर्वणि- २१०.३३.

**चट्टि–** सः धर्मसूनुः मन्दहसितः ईषद्धासयुक्तमुख इत्यर्थः । प्राह । किमिति? हे राजन्! अद्य इह कोऽसीति प्रश्नकरणे किम् किं प्रयोजनमित्यर्थः । अक्षत्रियाय दातुं नेच्छामि इति चेत्तत्राह– **पूर्वमिति** ।। पूर्वं तव सुतेन वर्णविषये विशेषो नोक्तः हि । इदानीं वर्णविषयप्रश्नस्ते अयुक्त इति भावः । त्वत्पुत्रीकृते तव सुतेन नरेन्द्रसमितौ राजसभायां लक्ष्यवेधस्तूक्तः । सः लक्ष्यवेधः अनेन मम भ्रात्रा कृत इति योजना। तस्मात् प्रश्नकरणं अयुक्तमिति भावः ।।१४९।।

> **एवं ब्रुवाणमथ तं पृथया सहैव**
> **राजा वदेति पुनरेव ययाच एषः ।**
> **'सर्वं पृथाऽप्यवदतां स च तेन तुष्टो**
> **वाचं जगाद कृतकृत्य इहाऽसमद्य ।।१५०।।**

**वेदाङ्गतीर्थीया–** एषः युधिष्ठिरः पृथाऽपि सर्वमवदताम् । पृथया सह तं वदेति ययाचे । (अतोऽवदतां) इति भावः ।।१५०।।

**वादिराजतीर्थीया–** 'अवदतां स च' इत्यत्र पृथाऽपि पृथा च स राजा च सर्वमवदतामिति सम्बन्धः ।।

**वरदराजीया–** तं युधिष्ठिरं पृथया सहैव कुन्त्या सहितमेव पुनरपि वदेति उभाभ्यां वक्तव्यमिति ययाचे प्रार्थयामास । पृथा च उभौ सर्वं वृत्तान्तं अवदतां उक्तवन्तौ । स द्रुपदः तेन श्रुतेन तुष्टः इह जन्मनि अद्य इदानीं कृतकृत्यः आसं जातोऽस्मि ।।१५०।।

**अनन्तभट्टीया–** पृथया सह वद । उभाभ्यां वक्तव्यमिति ययाच इत्यर्थः । एषः धर्मजः । पृथाप्यवदताम् ।।१५०-१५१।।

**जनार्दनीया–** राजा पृथया सहितं तं युधिष्ठिरं पुनर्वदेति ययाचे । एषः धर्मः । पृथाऽपि सर्वमवदताम् । स राजा तेन वयं पार्था इति वाक्येन तुष्टः सन्, इह कन्यादानविषये कृतकृत्य आसं जातोऽस्मीति जगाद ।। १५० ।।

**ताम्रपर्णी–** एषः युधिष्ठिरः पृथा च सर्वमवदतामित्यन्वयः ।। १५०-१५२ ।।

**चट्टि–** पृथया सहैव एवं ब्रुवाणं तं धर्मसूनुं अथ राजा द्रुपदः वदेति पुनरेव ययाचे । एषः धर्मसूनुः । पृथाऽपि सर्वमवदतां ऊचतुः । स राजा तेन वयं पार्था इति वाक्येन तुष्टः सन्तुष्टः सन्, इह कन्याप्रदानविषये अद्य कृतकृत्य आसं जातोऽस्मीति वाचं जगाद ।। १५० ।।

[1]पार्थार्थमेव हि मयैष कृतः प्रयत्नः
त्वं फल्गुनोऽन्य उत वाऽद्य करं सुतायाः ।
गृह्णात्विवतीरित इमं स तु [2]धर्मसूनु-
राह स्म सर्व इति मे मनसि प्ररूढम् ॥१५१॥

**वेदाङ्गतीर्थीया–** एषः प्रयत्नः । त्वं वा गृहाण फल्गुनो वा गृह्णातु । सर्वे गृह्णीम इति ॥१५१॥

**वादिराजतीर्थीया–** त्वं वा गृहाण फल्गुनो वा अन्यो वा गृह्णात्विति योग्यविभक्त्यध्याहारेण सम्बन्धः । सर्वे गृह्णीम इति मे मनसि प्ररूढमङ्कुरितं इति धर्मसूनुरिमं द्रुपदमाहेति योग्यविभक्त्यध्याहारेण योजना ॥ १५१ ॥

**वरदराजीया–** पार्थार्थं अर्जुनार्थम् । त्वं फल्गुनो वा अन्यः भीमादिर्वा अद्य मम सुतायाः करं हस्तं गृह्णातु । इमं द्रुपदम् । सर्वे करं गृह्णीमः इति मे मनसि प्ररूढमित्यर्थः ॥१५१॥

**अनन्तभट्टीया–** सर्वे गृह्णीमः ॥ १५१ ॥

**जनार्दनीया–** पार्थार्थमेव अर्जुनार्थमेव एषः प्रयत्नः । त्वं वा गृहाण फल्गुनो वा गृह्णातु । अन्यो वा भीमादिषु मध्ये एको वेत्यर्थः । सुतायाः करं गृह्णातु । इमं द्रुपदम् । सर्वे गृह्णीम इति मे मनसि प्ररूढं निश्चितमित्यर्थः ॥१५१॥

**चट्टि–** पार्थार्थं अर्जुनार्थमेव मया एषः प्रयत्नः कृतः । त्वं वा गृहाण । फल्गुनो वा गृह्णातु । अन्यो भीमादिषु मध्ये एको वा अद्य मे सुतायाः करं गृह्णातु इति द्रुपदेनेरितः धर्मसूनुः इमं द्रुपदं सर्वे गृह्णीम इति मे मनसि प्ररूढं निश्चितम् ॥ १५१ ॥

नात्र प्रमा मम हृदि प्रतिभात्यथापि
धर्माचला मम मतिर्हि तदेव मानम् ।
इत्युक्तवत्यपि सहैव सुतेन राजा
नैवैच्छदत्र [3]भगवानगमच्च कृष्णः ॥१५२॥

**व्यासतीर्थीया–** नन्वेकस्याः पञ्चपतित्वे किं मानमित्यत आह– **नात्रेति** ॥ अप्रामाणिकं करिष्यथेत्यनेन च सर्वात्मनाप्रामाणिकमित्यत आह– **अथापीति** ॥१५२ ॥

---

१. 'गृह्णातु विधिवत्पाणिमद्यायं कुरुनन्दनः । पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ ...भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम । यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥' इत्यादिपर्वणि- २१०.२०,२२

२. 'सर्वेषां महिषी राजन् द्रौपदी नो भविष्यति ।' इति भारते-१.२१०.२३.

३. 'अथ द्वैपायनो राजन् अभ्यागच्छद्यदृच्छया ।' इत्यादिपर्वणि- २१०.३३.

**वेदाङ्गतीर्थीया–** सर्वैर्ग्रहणे प्रमाणं नोपलभ्यते । तथापि प्रमाणाभावेऽपि मम हृदि मनसि प्रतिभाति। सर्वे गृह्णीम इति मनसि प्रतीतोऽप्यधर्मः किं न स्यादित्यत आह– **धर्माचलेति** ।। मम मतिः धर्माचला हि यस्मात् तस्मात् तदेव मम प्रतिभानमेव मानम् । नैतद्विघायकागम इति भावः ।।१५२।।

**वादिराजतीर्थीया–** 'नात्र प्रमा' इत्यत्र अत्र पञ्चभिरेकस्याः पाणिग्रहणे प्रमा प्रमाणं मम हृदि न प्रतिभाति । अथापि तथाऽपि मम मतिः धर्माचला हि धर्मात् न चलतीति धर्माचला । धर्म एव दृढेत्यर्थः । हि इत्यनेन स्वस्य धर्मराजत्वप्रसिद्धिं सूचयति । तदेव मम मते धर्माचलत्वमेव मानं प्रमाणं इति युधिष्ठिरेणोक्तवत्यपीति योजना । अगमत् आगमत् ।। १५२ ।।

**मधुसूदनीया–** ननु पञ्चभिः करग्रहणं कर्तव्यमित्यत्र किं मानमित्यत आह– **नात्र प्रमेति** ।। अत्र पञ्चभिः करग्रहणं कर्तव्यमित्यत्र यद्यपि प्रमाणं नास्ति । तथाऽपि मम हृदि प्रतिभाति, कर्तव्यमितीति शेषः । ननु प्रतीतिमात्रेणापि किमर्थं कर्तव्यमित्यत आह– **धर्माचलेति** ।। हिशब्देन 'वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । आचारश्चैव साधूनां आत्मनस्तुष्टिरेव च ।।' (२.६) इति मनुस्मृति-प्रसिद्धिं दर्शयति ।।१५२-१५७।।

**वरदराजीया–** अत्र सर्वैः करग्रहणे मम हृदि प्रमाणं वेदोदितं न प्रतिभाति । तथापि अर्थापत्तिरेव प्रमाणमित्याह– **अथापीति** ।। मम मतिः धर्माचला धर्मान्न चलति । तदेव धर्माचलत्वमेव अन्यथा-नुपपत्त्याख्यं मानं प्रमाणमित्यर्थः । इत्युक्तवति सत्यपि सुतेन सहैव सर्वेभ्यो दातुं नैवेच्छत् । अत्र द्रुपदं प्रति भगवान् कृष्णः वेदव्यासोऽगमच्च ।।१५२।।

**अनन्तभट्टीया–** प्रमाणं धर्मजे इत्युक्तवति । सुतेन धृष्टद्युम्नेन सह ।।१५२।।

**जनार्दनीया–** अत्र सर्वग्रहणे प्रमा प्रमाणं नोपलभ्यते । प्रमाणाभावेऽपि मे हृदि मनसि सर्वे गृह्णीम इति प्रतिभाति । तव मनसि प्रतीतोऽप्यधर्मः किं न स्यादित्यत आह– **धर्माचलेति** ।। मम मतिः धर्माचला । हि यस्मात् तस्मात् मम प्रतिभातमेव मानं प्रमाणम् । सुतेन धृष्टद्युम्नेन सह नैवैच्छत्, पञ्चभ्यो दातुमिति शेषः । अत्र पाञ्चालनगरं प्रति ।। १५२ ।।

**चट्टि–** अत्र सर्वग्रहणे प्रमा प्रमाणं नोपलभ्यते । अथापि प्रमाणाभावेऽपि मम हृदि मनसि सर्वे गृह्णीम इति प्रतिभाति । मनसि प्रतीतोऽप्यधर्मः किं न स्यादित्यत आह– **धर्माचलेति** ।। मम मतिः धर्माचला । हि यस्मात् तस्मात् तदेव मम प्रतिभातमेव मानं प्रमाणम् । इत्युक्तवति सत्यपि सुतेन धृष्टद्युम्नेन सहैव राजा द्रुपदः नैवैच्छत्, दातुमिति शेषः । भगवान् श्रीकृष्णः व्यासः अत्र पाञ्चालनगरं प्रति अगमच्च ।। १५२ ।।

**व्यासं तमीक्ष्य [१]भगवन्तमगण्यपूर्ण-**
**नित्याव्ययात्मगुणमाशु समस्त[२] एव ।**
**[३]नत्वाऽभिपूज्य वरपीठगतस्य चाऽज्ञा-**
**मादाय चोपविविशुः सहितास्तदन्ते ।।१५३।।**

**व्यासतीर्थीया–** द्रुपदपार्थानामिमं विवादं स्वयं कथं विवेद येनागमनं स्यादित्यत उक्तम्– **अगण्येति** ।। समस्त एवेति वैदिकः । सर्वनामस्वपाठात् । लौकिके समस्ता इति ।। १५३ ।।

**वेदाङ्गतीर्थीया–** समस्तः सर्वे ।।१५३।।

**वादिराजतीर्थीया–** 'नित्याव्यया' इत्यत्र नित्याः नाशरहिताः अव्ययाः ह्रासरहिताः । 'सर्वादीनि सर्वनामानि' इत्यत्र आदिपदेन सर्वपदसमानार्थकसमस्तपदस्यापि ग्रहणात् समस्ते सर्वे । समस्ते जगति भगवन्तं पूज्यमिति वा । 'अत्रभवान् भगवानिति शब्दो वृद्धैः प्रयुज्यते पूज्य' इति हलः ।। १५३ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'व्यासं तमीक्ष्य भगवन्तमगण्यपूर्ण..' इति श्लोकः । तस्यार्थः- समस्तः द्रुपदादिसमस्तलोकः च पाण्डवाश्च भगवन्तं अगण्यपूर्णनित्याव्ययात्मगुणं व्यासं ईक्ष्य आशु नत्वा अभिपूज्य च वरपीठगतस्य तस्य व्यासस्य आज्ञामादायैव सहिताः सन्तः तदन्ते व्यासस्यान्ते उपविविशु-रिति । एतेन समस्त इत्येतस्य एकवचनान्तत्वात् सहिताः उपविविशुः इति बहुवचनान्तशब्दद्वयमनन्वित-मिति दूषणं परास्तम् । समस्त इत्यनेन द्रुपदादिसमस्तलोकग्रहणम् । अनुक्तसमुच्चायकेन चशब्देन पाण्डवानां ग्रहणमित्यभिप्रेत्य सहिता उपविविशुः इति बहुवचनान्तशब्दद्वयान्वयस्योक्तत्वात् १५३-१६०

**वरदराजीया–** अगम्याः पूर्णाः नित्याः अव्ययाः नाशरहिताः आत्मभूताः गुणाः यस्य सः तम् । समस्ते एव सर्वे सर्वशब्दपर्यायत्वेन विश्वशब्दवत् सर्वनामसञ्ज्ञा प्रौढ्या अङ्गीकृत्य समस्ते इति बहुवचनान्तं पदं प्रयुक्तवान् भगवानाचार्यः । वरपीठगतस्य सिंहासने उपविष्टस्य । तदन्ते तस्य पुरतः उपविविशुः उपविष्टाः ।।१५३।।

**अनन्तभट्टीया–** समस्ते प्रथमाबहुवचनश्चैतत् । सर्व इत्यर्थः ।। १५३ ।।

**लघ्वनन्तभट्टीया–** समस्त एव । जसः शीभावश्छान्दसः ।।१५३।।

---

१. 'भगवन्तमगम्यपूर्ण-' इति वरदराजीयपाठः ।

२. 'समः ते' इति जनार्दनीये पदविभागः । अतिविशदकारा अपि तथैव पदविभागं कुर्वन्ति ।

३. 'प्रत्युत्थाय महात्मानं कृष्णं सर्वेऽभ्यवादयन् ।। ..आसने काञ्चने शुद्धे निषसाद महामनाः ।। अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा । आसनेषु महार्हेषु निषेदुर्द्रुपदां वराः ।।' इत्यादिपर्वणि- २११.१-३.

**जनार्दनीया–** समः विषमत्वरहितः । 'सम् अवैक्लव्ये' इति धातोर्विच्प्रत्यये सम इति रूपम् । ते पाण्डवाद्याः सज्जनाः । यद्वा समस्त इत्येकवचनान्तमपि सहिताः मिलिताः इत्यस्य विशेषणम् । वेदाः प्रमाणम् इतिवत् । अगण्यपूर्णनित्याव्ययात्मगुणं अगण्याः पूर्णाः नित्याः अव्ययाः आत्मानः स्वरूपभूताः गुणाः यस्य स तथा तम् । समस्ते छान्दसत्वात् प्रथमा वहुवचनमेतत् । सर्वे बहुसज्जना इत्यर्थः । वरपीठगतस्य सिंहासने उपविष्टस्य आज्ञामादायाङ्गीकृत्य, तदन्ते व्याससमीपे उपविविशुः उपविष्टा इत्यर्थः ।। १५३ ।।

**ताम्रपर्णी–** समस्त एव । जसः शीभावः । केचित्तु- ''सर्वादीनि सर्वनामानि' इत्यत्र आदिपदेन समस्तपदस्यापि ग्रहणान्नानुपपत्तिः'' इत्याहुः । 'समस्ते जगति भगवन्तं पूज्यमित्यन्वयः' इत्येके ।।१५३।।

**अतिविशद–** 'व्यासं समीक्ष्य भगवन्तमगण्यपूर्णनित्याव्ययात्मगुणमाशु समस्त एव' इत्यत्र 'समस्ते' इति पदं वा 'समस्तः' इति पदं वा । नाद्यः । 'सर्वे' इति बहुवचनपदवत् 'समस्ते' इति बहुवचनपदस्य कुत्राप्यदृष्टत्वात् । न द्वितीयः । समस्त इत्यस्यैकवचनत्वात् । प्रकृते बहुवचनस्या-पेक्षितत्वात् । 'उपविविशुः' इत्यस्य बहुवचनत्वात् । तस्मात्कथमेतदिति चेन्न । समः ते एवेति पदत्रयम् । समः समीचीना इत्यर्थः । अयं समशब्दः 'समं भेदे समीचीने सुष्ठु पूजासुखेषु च' इति यादवः । अथवा यत्तदोर्नित्यसम्बन्धात् यः समः तं व्यासमीक्ष्येति मूलरूपादिना गुणादौ समान इत्यर्थः । सा सारस्वरूपा मा ज्ञानं रमा वा तया सहितः सम इति वा । अथवा समः अविक्रियः । 'सम् अवैक्लव्ये' इति धातोः ।। १५३-१७० ।।

**गूढकर्तृक–** 'व्यासं तमीक्ष्य...तदन्ते' इत्यस्मिन् श्लोके 'समस्ते' इति पदं वा 'समस्तः' इति पदं वा । नाद्यः । 'सर्वे' इति बहुवचनवत् 'समस्ते' इति बहुवचनस्य कुत्राप्यदृष्टत्वात् । न द्वितीयः । 'समस्त' इत्यस्य एकवचनत्वात् प्रकृते बहुवचनस्यापेक्षितत्वात् । उपविविशुरित्यस्य बहुवचनत्वात् तस्मात्कथमेतदिति चेन्न । समः ते एव समः समीचीना इत्यर्थे अयं समशब्दः । 'समं भेदे समीचीने सुष्ठु पूजासुखेषु च' इति यादवः । अथवा यः समः तं व्यासं समीक्ष्येति । मूलरूपादिना गुणादौ समान इत्यर्थः । सा सारस्वरूपा मा ज्ञानं समा वा यस्य सः सम इति वा ।। १५३-२२३ ।।

।। इति गूढकर्तृके एकोनविंशोऽध्यायः ।।

**चट्टि–** अगण्यपूर्णनित्याव्ययात्मगुणं अगण्याः पूर्णाः नित्याः अव्ययाः नाशरहिताः आत्मानः स्वरूपभूताः गुणाः यस्य स तम्, भगवन्तं श्रीव्यासमीक्ष्य आशु समस्ते सर्वे एव नत्वा अभिपूज्य वरपीठगतस्य उत्तमसिंहासने उपविष्टस्य आज्ञां चादायाङ्गीकृत्य, तदन्ते श्रीव्याससमीपे सहिताः उपविविशुः उपविष्टाश्च । समस्त एवेति वैदिकः । सर्वनामस्वपाठात् । लौकिके समस्ता इति ।। १५३ ।।

**कृष्णस्तदाऽऽह नृपतिं प्रति देहि कन्यां**
**सर्वेभ्य एव [1]वृषवायुपुरन्दरा हि ।**
**नासत्यदस्रसहिता इम एव इन्द्राः**
**पूर्वे च [2]सम्प्रतितनश्च हरेर्हि पश्चात् ॥१५४॥**

**व्यासतीर्थीया–** ननु कथं पञ्चभ्यो मनुष्येभ्य एकां देहीति ब्रवीषीत्यतो नैते मनुष्याः किन्तु देवाः । अतो अनेकेभ्यो देवेभ्यः एकस्याः दानं न दोष इति भावेनोक्तम्– **वृषेति** ।। हरेः पश्चादनन्तरं ये पूर्वेन्द्रादयः यश्च सम्प्रतितन इन्द्रः । त एव नासत्यदस्रसहिता वृषवायुपुरन्दरा इमे हीति योजना ।।१५४।।

**वेदाङ्गतीर्थीया–** तव सुतायाः पञ्चदेव्यात्मकत्वात् तत्पतिभूतेभ्यो पञ्चभ्यः दानं नाधर्म इति वक्तुं युधिष्ठिरादीनां स्वरूपमाह– **वृषेत्यादिना** ।। हरेः पश्चात् यज्ञनाम्नः हरेरनन्तरं ते नासत्यदस्रसहिताः वृषवायुपुरन्दराः पूर्वेन्द्राः यश्च सम्प्रतितनश्च इन्द्रः त एव इमे हि पाण्डवाः ।। १५४ ।।

**वादिराजतीर्थीया–** 'सम्प्रतितनश्च हरेः' इत्यत्र हरेः यज्ञनामप्राथमिकेन्द्रात् पश्चात् नासत्यदस्रसहिताः वृषवायुपुरन्दराद्याः एतदाख्या इत्यर्थः । ये पूर्वेन्द्राः यो हि सम्प्रतितनः इदानीन्तन इन्द्रश्च इम एव पञ्चपाण्डवाः हीति सम्बन्धः । पुरन्दरपदेनातीतेन्द्रः कथ्यते । तस्यैवेदानीं ऐन्द्रपदप्राप्तेः 'सम्प्रतितनश्च' इत्युक्तम् । एवं सङ्ख्यया षडिन्द्राः अपि द्वयोरेकत्वात् पञ्चेन्द्रा एव । आकारवैरूप्यमात्रसूचनाय 'इम एव इन्द्राः' इति विसन्धिप्रकरणम् । अथवा 'तेऽवर्धन्त स्वतवसो महित्वना' (ऋ.सं-१.८५.७) इति छन्दःप्रसिद्धिं सूचयितुं छान्दसः प्रयोगः । अन्यथा इम एव चेन्द्रा इति स्पष्टं वक्तुं शक्यत्वेऽपि कुतो नावक्ष्यत् । मूलरूपाणामवताररूपाणां च प्रत्येकं भारतादिषु प्रसिद्धिं सूचयितुं उभयत्रापि हिशब्दः ।। १५४-१५५ ।।

**वरदराजीया–** तदा सर्वेभ्य एव कन्यां देहीत्याह । सर्वेभ्य एव कन्याप्रदानं उपपादयति– **वृषवाय्वित्यादिना** ।। यमवाय्विन्द्राः अश्विभ्यां सहिताः पञ्च इमे यथाक्रमं युधिष्ठिराद्य एव हरेः पश्चात् यज्ञनाम्नो हरेरिन्द्रपदप्राप्त्यनन्तरं द्वितीयादित्वेन पूर्वेन्द्राः अतीतेन्द्राः । सम्प्रतितनः इदानीं वैवस्वतमन्वन्तरे इन्द्रोऽपि सप्तमः पुरन्दर एव । तथा च यमादिषु पञ्चसु चत्वारः एकैकवारमेवेन्द्रत्वं प्राप्ताः । पुरन्दरस्तु द्विवारं इन्द्रत्वं प्राप्त इति पञ्चापि यज्ञनामकेन्द्रानन्तरं पूर्वेन्द्रा एव इति भावः ।।१५४।।

**अनन्तभट्टीया–** हरेः पश्चात् लब्धेन्द्रपदस्य हरेरनन्तरं ये पूर्वे पूर्वेन्द्राः प्राक्तन इन्द्राः लब्धेन्द्रपदाः । सम्प्रतितनश्चेन्द्रः पुरन्दरेन्द्रः नासत्यदस्रसहिताः वृषवायुपुरन्दरा एतन्नामकाः त एव इमे धर्मजादयो हीति योजना ।। १५४-१५६ ।।

---

१. 'इहैव ते पाण्डवा वीर्यवन्तः शक्रस्यांशः पाण्डवः सव्यसाची ॥३४॥ एवमेते पाण्डवाः सम्बभूवुर्ये ते राजन् पूर्वमिन्द्रा बभूवुः । लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा भार्या यैषा द्रौपदी दिव्यरूपा ॥३५॥ इत्यादिपर्वणि- २१४.

२. 'सम्प्रतितनाश्च' इति भावविवृतिकाराणां पाठः । ताम्रपर्णीवं तथा पाठान्तरञ्च ।

**लघ्वनन्तभट्टीया–** हरेः पश्चात्पूर्वे सम्प्रतितनश्च इन्द्रा इम एव । सम्प्रतितनो हरेः पश्चात् पूर्वे च इन्द्रा इति च ।।१५४-१५५।।

**जनार्दनीया–** सर्वेभ्य एव पार्थेभ्य एवेत्यर्थः । प्रति देहीत्याह । तव सुतायाः पञ्चदेव्यात्मकत्वात् पतिभूतेभ्यो दानं नाधर्म इति वक्तुं युधिष्ठिरादीनां स्वरूपमाह– **वृषेत्यादिना** ।। हरेः यज्ञनाम्नो हरेः पश्चादनन्तरं ये नासत्यदस्रसहिताः अश्विभ्यां सहिताः वृषवायुपुरन्दराः यमवाय्विन्द्राः पूर्वेन्द्राः अतीतेन्द्राः । पश्चात् सम्प्रतितनः इदानीं वैवस्वतमन्वन्तरे इन्द्रः । सप्तमः पुरन्दरः स एव । षष्ठः सप्तमश्च एक एव । ते इमे पाण्डवा हि ।। १५४ ।।

**ताम्रपर्णी–** नासत्यदस्रसहिता वृषवायुपुरन्दरा इम एव युधिष्ठिरादय एव । हरेः पश्चाद्यज्ञनाम्नो हरेः पश्चात् तस्येन्द्रपदप्राप्त्यनन्तरं द्वितीयादित्वेन । पूर्वेन्द्राः अतीतेन्द्राः । सम्प्रतितनश्च शक्रस्य द्विवारमिन्द्र-पदभावादतीतेन्द्रत्वं सम्प्रतितनत्वं च युज्यते । 'सम्प्रतितनाः' इति पाठे छत्रिन्यायेन सर्वेषां सम्प्रतितनत्वं ज्ञेयम् । यद्वा वासुदेवप्रसादतः द्विवारमिन्द्रतामाप पूर्वतनश्च नासत्यदस्रसहिता वृषादयो इम एव । तदुक्तम्- 'इन्द्रो हि प्रथमो विष्णुर्यज्ञनामा जगत्पतिः । तत्प्रसादादथेन्द्रत्वं द्वादशान्ये प्रपेदिरे । पुरन्दरस्त्वेक एव वासुदेवप्रसादतः । द्विवारमिन्द्रतामाप तस्माद् द्वादश ते परे ।।' इति महैतरेयभाष्ये द्वितीयप्रश्ने द्वितीयाध्याये षष्ठब्राह्मणे ।।१५४-१५५।।

**भावविवृतिः–** 'कृष्णस्तदाह..हरेर्हि पश्चात्' इत्यत्र इमे पाण्डवाः, पूर्वेति प्रथमाबहुवचनम् । पूर्वमन्वन्तरीयाः सम्प्रतितनाश्च वैवस्वतमन्वन्तरीयाश्च । स्वायम्भुवमन्वन्तरे यज्ञनामकहरेरेव इन्द्रत्वात् द्वितीयादिमन्वन्तरीया इति वक्तुम्– **हरेः पश्चादिति** ।। द्वितीयादीन्द्राणां अंशभाव एव इत्येवकारसम्बन्धः। इन्द्राणां स्वरूपाणि कानीत्यत आह– **वृषेत्यादिना** ।। वाय्वंशभवो द्वितीयो रोचनः तदंशभवो भीमः, यमांशभवस्तृतीयेन्द्रः सत्यजित् तदंशभवो युधिष्ठिरः, अश्विनोरंशभवौ चतुर्थपञ्चमेन्द्रौ त्रिशिख-विभुनामकौ तदंशसम्भवौ नकुलसहदेवौ, षष्ठो मन्द्रद्युम्नः सप्तमः पुरन्दरश्च इत्येक एव अधिदैवतस्य एकस्यैकेन्द्रस्यांशसम्भवौ । तयोर्मध्ये पुरन्दरांशसम्भवोऽर्जुनः द्वितीयादीन्द्राः अंशसम्भवा एव इत्येवकारसम्बन्धः । नतु सामस्त्येन । हि यस्मात् सर्वेभ्य एव पञ्चभ्य एव कन्यां देहीत्याहेत्यर्थः । द्वितीयो हिशब्दः द्वितीयादीन्द्राः दिनप्रलयपर्यन्तं स्वमूलरूपैक्यं विना स्वर्गादौ निवसन्तीति विशेषद्योतकः । अन्यथा तेषां पूर्वेन्द्रांशसम्भवत्वकथनायोगात् । उक्तश्च तेषां पूर्वेन्द्रांशसम्भवत्वम् । 'अतीतेन्द्रा एव ते विष्णुषष्ठाः पूर्वेन्द्रोऽसौ यज्ञनामा रमेशः । स वै कृष्णो वायुरथ द्वितीयः स भीमसेनो धर्म आसीत् तृतीयः ।। युधिष्ठिरोऽसावथ नासत्यदस्रौ क्रमात्तावेतौ माद्रवतीसुतौ च । पुरन्दरः षष्ठ उतात्र सप्तमः स एवैकः फल्गुनो ह्येत इन्द्राः ।।' (ता.नि-१२.१३४-१३५) 'पूर्वेन्द्रान् मारुतवृषना-सत्यांश्चतुरस्थितान् । देवानामवतारार्थं मन्त्रं रहसि कुर्वतः ।।' (ता.नि-१८.१२९) इति च । ननु 'मन्वन्तरायुषः स्वर्ग्याः महर्लोके तु काल्पिकाः । आब्रह्मणो जनाद्यास्तु महर्लोकेऽपि ये वराः ।।'

(भा.ता-२.२.२८) इति द्वितीयतात्पर्योक्त्या मन्वन्तरादिप्रलये इन्द्रादीनां देहनाशः अंशप्राप्तिश्च वक्तव्येति न वाच्यम् । तदा..* कर्मजन्यावरप्रसादात् चरमशरीरं त्यक्त्वा स्वर्गं प्राप्तानां श्रवणादिजन्यमध्यमप्रसादात् महरादिलोकं प्राप्तानां मन्वन्तरकालपर्यन्तं तत्र वास इति कथनार्थं प्रवृत्तत्वात् । उक्तश्च काठकभाष्ये- 'अग्नौ विष्णुं सदा ध्यायँस्त्रिशोऽग्निं नाचिकेतकम् । यश्चयीत स तु प्राप्य स्वर्गं तत्र भयातिगः ।। उष्य मन्वन्तरं कालं अमृतत्वं व्रजेत् क्रमात् ।।'(१.१.१)इति ।। १५४ ।।

**भारतश्री–** हरेर्यज्ञनाम्नः । पश्चात् पूर्वेन्द्राः । सम्प्रतितनश्च इदानीं वैवस्वतमन्वन्तरेन्द्रः सप्तमः स एव षष्ठः । षष्ठः सप्तमश्च एक एव । त इमे पाण्डवा हि ।।१५४-१५७।।

**चट्टि–** तदा श्रीकृष्णः व्यासः नृपतिं प्रति सर्वेभ्य एव कन्यां देहीत्याह । तव सुतायाः पञ्चदेव्यात्मकत्वात् पतिभूतेभ्यो पञ्चभ्यो दानं नाधर्म इति वक्तुं युधिष्ठिरादीनां स्वरूपमाह– **वृषेत्यादिना** ।। हरेः यज्ञनाम्नो हरेः पश्चादनन्तरं ये नासत्यदस्रसहिताः अश्विभ्यां सहिताः । वृषवायुपुरन्दराः यमवाय्विन्द्राः पूर्वेन्द्राश्च अतीतेन्द्राः, सम्प्रतितनः इदानीं वैवस्वतमन्वन्तरे इन्द्रः सप्तमः पुरन्दरः स एव षष्ठः सप्तमश्चेति एक एव । ते इमे पाण्डवा हि ।। १५४ ।।

**एषां स्त्रियश्च निखिला अपि चैकदेहाः**
**पुत्री तवैव न ततोऽत्र विरुद्धता हि ।**
**इत्युक्तवत्यपि यदा द्रुपदश्चकार**
**संवादिनीं न धियमेनमथाऽह कृष्णः ।।१५५।।**

**व्यासतीर्थीया–** अस्याः पञ्चात्मकत्वाच्च पञ्चभ्यो दानं नायुक्तमित्याह– **एषामिति** ।। एते देवाः, एषा पञ्चात्मिकेति च कुत इत्यत आह– **अथाहेति** ।। १५५ ।।

**वेदाङ्गतीर्थीया–** अत्र पञ्चभ्यो दाने । विरुद्धता धर्मविरुद्धता नहि । एते देवाः, एषा पञ्चदेव्यात्मिका इत्येत् कथमहं जानीयामिति द्रुपदशङ्कां परिहर्तुं कृष्णः किमाहेत्यत आह– **इत्युक्तवतीत्यादिना** ।।१५५।।

**वरदराजीया–** एषां यमादीनां स्त्रियः श्यामलायाः निखिलाः सर्वाः अपि एकदेहा एकस्मिन् देहे विद्यामानाः तव पुत्रीत्वेन आविर्भूता हि यस्मात् कारणात् अतः अत्र स्त्रीणां तेभ्यो दानेन विरुद्धता विरोधो नास्त्येवेत्यर्थः । संवादिनीं सम्मतियुक्तां धियं बुद्धिं न चकार । एनं द्रुपदम् ।।१५५।।

**जनार्दनीया–** अत्र पञ्चभ्यो दाने विरुद्धता धर्मविरुद्धता न । संवादिनीं सम्मतयुक्तां धियं वुद्धिं न चकार ।।१५५।।

**भावविवृतिः–** 'एषां स्त्रियश्च निखिला अपि चैकदेहा पुत्री तवैव' इत्यत्र एषां वायुयमाश्विपुरन्दरांशैः उत्पन्नानां रोचनसत्यजित्त्रिशिखविभुपुरन्दरनाम्नां इन्द्राणामित्यर्थः । स्त्रियश्च भारतीश्यामलोषाशच्यः

स्वस्वमूलरूपात् अंशेन इन्द्राणां पत्नीत्वं प्राप्ताः इत्यर्थसूचनाय आद्यश्चशब्दः । द्वितीयः पार्वती च इत्यर्थसङ्ग्राहकः । ब्रह्मशापनिमित्तात् इत्यर्थसूचनाय हिशब्दः । निखिलाः पार्वतीसहिताश्चत्वारः इन्द्रपत्न्यः । अपिशब्दो अंशान्तरेणोत्पत्तिसूचकः । 'अपिः सम्भावनाप्रश्नसर्गगर्हासमुच्चये' (सि.कौ-५८७) इति सूत्रात् । 'न देवानां न देवीनां सामस्त्येन जनिर्भुवि । अंशांशेनैव जायन्ते सर्वे त्वाजानजादयः ।।' (भा.ता-१.१२.१५) इति सामस्त्येन भूमौ जननाभावेन अंशेनैव जननस्य वक्तव्यत्वात् । तथाचायमर्थः- एषां वाय्वाद्यंशभूतानां रोचनादीन्द्राणां स्त्रियश्च भारत्याद्यंशसम्भवा इन्द्रपत्न्यः निखिलाश्चतस्रः पार्वती च हि ब्रह्मशापादपि अंशान्तरेण एकदेहास्सत्यः तव पुत्रीत्वेन जाता यतस्तस्मादत्र त्वत्पुत्र्या पञ्चभर्तृत्वविषये विरुद्धता विरोधो नैवेत्यर्थः ।।१५५।।

**चट्टि–** एषां यमादीनां स्त्रियः श्यामलाद्याश्च निखिलाः सर्वा अपि एकदेहाः एकस्मिन् देहे स्थिताः सत्यः तव पुत्री पुत्रीत्वेन आविर्भूता हि यस्मात् ततः तस्मात् कारणात् अत्र पञ्चभ्यो दाने विरुद्धता धर्मविरोधो नास्ति । इत्युक्तवत्यपि, श्रीव्यास इति शेषः । यदा द्रुपदः धियं बुद्धिं संवादिनीं सम्मतियुक्तां न चकार । अथ अनन्तरमेनं द्रुपदं श्रीकृष्णः वेदव्यास आह ।।१५५।।

**[1]दिव्यं हि दर्शनमिदं तव दत्तमद्य**
**पश्याऽशु पाण्डुतनयान् दिवि संस्थिताँस्त्वम् ।**
**एतां च ते दुहितरं सह तैः पृथक्स्थां**
**तल्लक्षणैः सह ततः कुरु ते यथेष्टम्[2] ।।१५६।।**

**व्यासतीर्थीया–** तत अनन्तरम् ।। १५६ ।।

**वेदाङ्गतीर्थीया–** दिव्यं दर्शनं दिव्यदृष्टिः । अद्य तव दत्तं हि यस्मात् तस्मात् (एतां) ते दुहितरश्च तल्लक्षणैः भारत्यादीनां लक्षणैः सह, तदुक्तलक्षणवत्तयेति भावः । तैर्मरुदादिरूपैः पाण्डुतनयैः सह पृथक्स्थां पञ्चरूपां पश्य ।।१५६।।

---

१. '...दिव्यं चक्षुः पश्य कुन्तीसुतांस्त्वं पुण्यैर्दिव्यैः पूर्वदेहैरुपेतान् । ततो व्यासः परमोदारकर्मा शुचिर्विप्रस्तपसा तस्य राज्ञः । चक्षुर्दिव्यं प्रददौ तांश्च सर्वान् राजाऽपश्यत् पूर्वदेहैर्यथावत् ।। ...तान् पूर्वेन्द्रानभिवीक्ष्याभिरूपान् शक्रात्मजं चेन्द्ररूपं निशम्य । प्रीतो राजा द्रुपदो विस्मितश्च दिव्यां मायां तामवेक्ष्याप्रमेयाम् ।। तां चैवाग्र्यां स्त्रियमतिरूपयुक्तां दिव्यां साक्षात्सोमवह्निप्रकाशाम् । योग्यां तेषां रूपतेजोयशोभिः पत्नीं मत्वा हृष्टवान् पार्थिवेन्द्रः ।। स तद्दृष्ट्वा महदाश्चर्यरूपं जग्राह पादौ सत्यवत्याः सुतस्य । नैतच्चित्रं परमर्षे त्वयीति प्रसन्नचेताः स उवाच चैनम् ।।' इत्यादिपर्वणि- २१४.३७-४३.

२. 'सृष्टा स्वयं देवपत्नी स्वयम्भुवा श्रुत्वा राजन् द्रुपदेष्टं कुरुष्व ।' इत्यादिपर्वणि- २१४.६७.

**वादिराजतीर्थीया–** तैः पाण्डवैः पृथक्स्थां तल्लक्षणैः तासां भारतीश्यामलाशच्युषसां लक्षणैः सह पृथक्स्थाम् इति सम्वन्धः ।। १५६ ।।

**वरदराजीया–** दर्शनं दृष्टिम् । एतानेव दिवि स्वर्गे मूलरूपेण स्थितान् । तव दुहितरं पृथक्स्थां भारत्यादिरूपेण सहैव पृथक् स्थितां तल्लक्षणैः तासां लक्षणैश्च सह । ततः अनन्तरं यथा ते इष्टं तथा कुरु ।।१५६।।

**लघ्वनन्तभट्टीया–** तल्लक्षणैः वृषादिलक्षणैः सह स्थितान् पाण्डुतनयानेतान् दिवि स्थितान् । तल्लक्षणैर्वृषादिलक्षणैः सह यस्येति वा । तल्लक्षणैरपरोक्षतोऽनुवादः धर्मजादिलक्षणैस्सह यस्येति वा । तादृशान् यमादिसदृशान् एतान् पाण्डवान् निशाम्य दृष्ट्वेति । तादृशान् धर्मभीमादिसदृशान् एतान् यमादीन् वा इति केचिदाहुः ।।१५६।।

**जनार्दनीया–** दिव्यं दर्शनं दिव्यदृष्टिः । अद्य तव दत्तं हि यस्मात् तस्मात् दिवि स्वर्गे संस्थितान् मूलरूपेणेत्यर्थः । पाण्डुतनयान् आशु अविलम्बेन पश्य । एतां ते दुहितरं च तल्लक्षणैः सह शच्यादिलक्षणवत्तयेति भावः । तैः मरुदिन्द्रादिरूपैः सह पृथक्स्थां भारत्यादिपश्चरूपां पश्य । ततः दर्शनानन्तरम् । ते यथा इष्टं तथा कुर्विति योजना ।।१५६।।

**भावविवृतिः–** 'दिव्यं हि दर्शनमिदं तव दत्तमद्य पश्याशु पाण्डुतनयान् दिवि संस्थितांस्त्वम् । एताश्च ते दुहितरं सह तैः पृथक्स्थां तल्लक्षणैः सह ततः कुरु ते यथेष्टम्' इत्यत्र तल्लक्षणैरिन्द्रत्वावस्थायां यानि लक्षणानि तदनीमप्येषां ते तथा तैः । रोचनादीन्द्रपुरुषैः सह दिवि स्वर्गे संस्थितान् पाण्डवान् पश्य तैस्सह रूपान्तरेण स्वर्गस्थपाण्डवैस्सह पृथक्स्थां भूमिष्ठद्रौपदीरूपापेक्षया रूपान्तरेण स्वर्गस्थां ते तव दुहितरं एतां द्रौपदीश्च पश्येत्याहेत्यन्वयः । भूमिष्ठानां पाण्डवानां द्रौपद्याश्च तदनीं स्वर्गस्थत्वमास । इच्छया रूपान्तरेणेति सूचनाय हिशब्दः । व्यासः स्वेच्छया भूमिष्ठान् पाण्डवान् द्रौपदीश्च दिविष्ठान् कृत्वा तदानीं राज्ञे दर्शयामासेति वा । ततस्तेषां दर्शनानन्तरं ते तव यथेष्टं अभीष्टं तथा कुर्वित्युक्तवानित्यर्थः ।।१५६।।

**ताम्रपर्णी–** एतानेव पाण्डुतनयानुभयत्र संवन्धः ।।१५६-१८३।।

**भावचन्द्रिका–** ।। **दिव्यं हीति** ।। 'देहस्य लक्षणं नैव भूमावप्यन्यथा भवेत्' (भा.ता-३.१७.२१) इति वचनात् लक्षणसाम्यसत्वेन मूलरूपेण देवाः तत्स्त्रियः दृष्ट्वा तेषां लक्षणं तेषु तासां निश्चयं कुर्वित्याह । 'चक्षुर्दिव्यं प्रददौ येन सर्वान् राजाऽपश्यत् पूर्वदेहे यथावत्' (आदिपर्वणि-२१४.३८) इति ज्ञापकादपि भारतीदेह एवायं शच्यादीनां आवेश इत्युक्तम् । तथापि शच्यादीनामावेशसद्भावात् यल्लक्षणं सम्भावितं तल्लक्षणश्च दृष्ट्वा शच्यादींश्च दृष्ट्वा विस्मित इति वोध्यम् ।। १५६ ।।

**चट्टि–** किमिति? इदं दिव्यं दर्शनं दिव्यदृष्टिः अद्य तव दत्तं हि यस्मात् तस्मात् दिवि स्वर्गे संस्थितान् मूलरूपेणेत्यर्थः । पाण्डुतनयान् त्वमाशु अविलम्बेन पश्य । एतां ते दुहितरं च तल्लक्षणैः तासां भारत्यादीनां लक्षणैः सह तैः मरुदिन्द्रादिरूपैः पाण्डुतनयैः सह पृथक्स्थां भारत्यादिपञ्चरूपां पश्य । ततः दर्शनानन्तरं ते यथेष्टं तथा कुर्विति योजना ।। १५६ ।।

**इत्युक्तवाक्यमनु तान् स ददर्श राजा**
**कृष्णप्रसादबलतो दिवि तादृशांश्च ।**
**एतान् निशाम्य चरणौ जगदीशितुश्च**
**भीतो जगाम शरणं तदनादरेण ।।१५७।।**

**व्यासतीर्थीया–** यादृशा अत्र दृष्टास्तादृशानेव ।। १५७ ।।

**वेदाङ्गतीर्थीया–** तदुक्तं (वाक्यमनु) । तदनादरेण तद्वाक्याविश्वासेन भीतः ।।१५७।।

**वादिराजतीर्थीया–** तदनादरेण पूर्वं व्यासवाक्यानादरेण भीत इति सम्बन्धः ।। १५७-१६५ ।।

**वरदराजीया–** इत्युक्तवाक्यमनुश्रुत्वैव तादृशान् युधिष्ठिरादिसदृशान् यमादीन् निशाम्य दृष्ट्वा जगदीशितुः व्यासस्य अनादरेण भीतः चरणौ शरणं जगाम ।।१५७।।

**अनन्तभट्टीया–** तदनादरेण प्राक्तनेन भीतः ।।१५७।।

**जनार्दनीया–** तादृशान् व्यासोक्तलक्षणवतः निशाम्य दृष्ट्वा । तदनादरेण व्यासवाक्याविश्वासेन भीतः ।।१५७।।

**भावविवृतिः–** 'इत्युक्तवाक्यमनु तान् स ददर्श राजा कृष्णप्रसादबलतो दिवि तादृशांश्च । एतान् निशाम्य चरणौ जगदीशितुश्च भीतो जगाम शरणं तदनादरेण' इत्यत्र स राजा द्रुपदः इत्युक्तप्रकारेण उक्तवाक्यमनु आस्ते । उक्तवाक्यानन्तरं कृष्णप्रसादबलतो व्यासानुग्रहाद् दिवि स्वर्गे तादृशान् स्वस्वेन्द्रलक्षणसहितान् ददर्श । तादृशांश्च पाण्डवांश्च एतांश्च द्रौपदीश्च । जगदीशितुर्व्यासस्य चरणौ, गृहीत्वेति शेषः । तदनादरेण दिव्यदर्शनात्पूर्वं तद्वाक्याकरणेन भीतस्तं शरणं जगामेत्यर्थः । यद्वा दिवि तादृशान् इन्द्रादिलक्षणसहितान् रोचनादीन् तांश्च पाण्डवांश्च ददर्श । भूमावेतान् पाण्डवानपि निशाम्य भीतः शरणं जगामेति ।। १५७ ।।

**चट्टि–** इत्युक्तवाक्यं अनु सः राजा द्रुपदः श्रीकृष्णप्रसादबलतः दिवि तादृशान् श्रीव्यासोक्तलक्षणवतः तान् युधिष्ठिरादिसदृशान् यमादीन् ददर्श । एतां दुहितरं च तैः सह स्थितां, तामिति शेषः । निशाम्य दृष्ट्वा तदनादरेण व्यासवाक्याविश्वासेन भीतः सन् जगदीशितुः श्रीव्यासस्य चरणौ शरणं च जगाम ।।१५७।।

**दत्वाऽभयं स भगवान् द्रुपदस्य कार्ये**
**तेनोमिति स्म कथिते [1]स्वयमेव सर्वाम् ।**
**वैवाहिकीं कृतिमथ[2] व्यदधाच्च धौम्य-**
**युक्तः क्रमेण जगृहुर्निखिलाश्च पाणिम् ॥१५८॥**

**वेदाङ्गतीर्थीया–** स भगवान् द्रुपदस्य अभयं दत्वा तेन कार्ये स्वोक्तकार्ये ओमिति कुर्यामिति कथिते सति ॥ १५८ ॥

**मधुसूदनीया–** ॥ **क्रमेण जगृहुरिति** ॥ क्रमेण अहन्यहनि ज्येष्ठक्रमेण चेत्यर्थः । नन्वथापि धर्मेण प्रथमतो द्रौपद्याः पाणिग्रहणे कृते तदनन्तरं भीमादीनां कथं तत्पाणिग्रहणं युज्यते । तस्याः कन्यात्वाभावात् इत्यतस्तदानीं व्यासदत्तवरमहिम्ना कन्यात्वसद्भावात् तदुपपत्तिरिति विशेषार्थो द्वितीयश्चकारः । 'क्रमेण चान्ये च नराधिपात्मजा वरस्त्रियस्ते जगृहुः करं तदा । अहन्यहन्युत्तमरूपधारिणो महारथाः कौरववंशवर्धनाः ॥' इति । 'इदं च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीतमानुषम् । महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि ॥' इत्यादिपर्ववचनात् (२१९.२२-२४) ॥ १५८-१६२ ॥

**वरदराजीया–** द्रुपदस्याभयं दत्वा तेन द्रुपदेन कार्ये विषये ओमिति कथिते सति व्यासः स्वयमेव सर्वां वैवाहिकीं विवाहसम्बन्धिनीं कृतिं क्रियां धौम्येन युक्तः सन् व्यधात् चकार । निखिलाः पाण्डवाः ज्येष्ठक्रमेण पाणिं द्रौपद्याः हस्तं जगृहुः गृहीतवन्तः ॥१५८॥

**अनन्तभट्टीया–** कार्ये ओमिति कथिते ॥१५८॥

**जनार्दनीया–** भगवान् द्रुपदस्याभयं दत्वा, तेन द्रुपदेन कार्ये ओमिति कुर्यामिति कथिते सति उक्ते सति वैवाहिकीं विवाहसम्बन्धीनीं कृतिं क्रियां व्यदधादकरोत् । निखिलाः पाण्डवा इत्यर्थः । क्रमेण युधिष्ठिरादिक्रमेण पाणिं जगृहुः, द्रौपद्या इति शेषः ॥१५८॥

**भावविवृतिः–** 'वैवाहिकीं विधिं व्यदधाच्च धौम्ययुक्तः क्रमेण जगृहुर्निखिलाश्च पाणिम्' इत्यत्र एकवैवाहिकक्रियापूर्त्यनन्तरं अन्यस्य वैवाहिकक्रियारम्भः तत्पूर्त्यनन्तरं अन्यस्येति सूचनाय अथशब्दः । क्रमेण ज्येष्ठक्रमेण । ननु ज्येष्ठेन विवाहिताया द्रौपद्या अन्यैर्विवाहः कथमित्यतो देहस्यैकत्वेऽपि अभिमानिभेदात् प्रतिदिनं जननं सम्भवतीति सा प्रतिदिनं कन्यैव भवत्विति व्यासदत्तवरसूचनाय चशब्दः । उक्तप्रमाणसद्भावसूचनाय अन्यश्चशब्दः । तदेतदुक्तं आदिपर्वणि- 'क्रमेण चानेन नराधिपात्मजाः

---

१. 'ततोऽब्रवीद्भगवान् धर्मराजमद्यैव पुण्येऽहनि पाण्डवेय । पुण्ये पुष्ये योगमुपैति चन्द्रमाः पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम् ॥ एवमुक्त्वा धर्मराजं भीमादीनप्यभाषत । क्रमेण पुरुषव्याघ्रा पाणिं गृह्णन्तु पाणिभिः ॥ एवमेव मया सर्वं दृष्टमेतत्पुराऽनघाः ॥' इत्यादिपर्वणि- २१९.८-१०.

२. 'वैवाहिकीं विधिमथ' इति भावविवृतिकाराणां पाठः ।

वरस्त्रियस्ते जगृहुस्तदा करम् । अहन्यहन्युत्तमरूपधारिणो महारथाः कौरववंशवर्धनाः ।। इदश्च तत्राद्भुतरूपमुत्तमं जगाद विप्रर्षिरतीव मानुषम् । महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि ।।' ।।१५८-२२३।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ एकोनत्रिंशोऽध्यायः ।।

**भावचन्द्रिका–** 'क्रमेण चान्ये च नराधिपात्मजा वरस्त्रियास्ते जगृहुः करं तदा । अहन्यहन्युत्तमरूपधारिणो महारथाः कौरववंशवर्धनाः ।।' इति भारते । नच विवाहितायाः विवाहे दोषः । 'महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि' इति सोपपत्तिवाक्यात् प्रतिदिनं गान्धर्वविवाहोपपत्तेः । क्षत्रियाणां गान्धर्वोऽप्युक्तः शाकुन्तलोपाख्याने ।। १५८-१७० ।।

**भारतश्री–** कार्ये इति विषयसप्तमी ।। १५८ ।।

**चट्टि–** सः भगवान् श्रीव्यासः द्रुपदस्याभयं दत्वा, तेन द्रुपदेन कार्ये विषये ओमिति कुर्यामिति कथिते सति उक्ते सति । अथ श्रीव्यासः स्वयमेव सर्वां वैवाहिकीं विवाहसम्बन्धीनीं कृतिं क्रियां धौम्येन युक्तस्सन् व्यदधादकरोत् च । निखिलाः पञ्च पाण्डवा इत्यर्थः । क्रमेण अह्नि अह्नि युधिष्ठिरादिक्रमेण चेत्यर्थः । पाणिं द्रौपद्याः हस्तं जगृहुश्च । 'क्रमेण चानेन नराधिपात्मजा वरस्त्रियस्ते जगृहुस्तथा करम् । अहन्यहन्युत्तमरूपधारिणो महारथाः कौरववंशवर्धनाः ।। इदं च तत्राद्भुतरूपमुत्तमं जगाम विप्रर्षिरतीव-मानुषम् । महानुभावा किल सा सुमध्यमा बभूव कन्यैव गते गतेऽहनि ।।' इत्यादिपर्ववचनात् ।।१५८।।

**पाञ्चालकेषु च महोत्सव आस राजा**
**तुष्टोऽभवत् सह [१]सुतैः स्वजनैश्च सर्वैः ।**
**पौरैश्च जानपदिकैश्च यथैव रामे**
**दत्वा सुतां जनक आप मुदं ततोऽनु ।।१५९।।**

**व्यासतीर्थीया–** 'यथैव रामे' इत्युक्त्या जनकद्रुपदयोः सन्तोषसाम्यप्रतीतिं निवारयितुमुक्तम्– तत इति ।। ततोऽनु जनकानन्तरं अयं द्रुपदो मुदमापेति ।। १५९-१६० ।।

**वेदाङ्गतीर्थीया–** 'यथैव' इत्युक्त्या जनकद्रुपदयोरन्योन्यसाम्यं प्रतीतं निवारयति– **ततोऽनु इति** ।। ततः जनकात् अनु ।। १५९-१६० ।।

**वरदराजीया–** पाञ्चालकेषु जनेषु महोत्सवः आस । पौरैः सुतैः स्वजनैः सह सन्तुष्टः अभवत् । रामे श्रीरामाय सुतां जानकीं दत्वा यथा मुदमाप, तथैव ततो जनकादनु द्रुपदोऽपि मुमोदेत्यर्थः ।।१५९।।

१. 'सुतैश्च निजैश्च सर्वैः' इति चट्टीपाठः स्यात् ।

**अनन्तभट्टीया**— ततोऽनु जनकानन्तरमित्यर्थः । अनेन जनकसुखादस्य सुखं हीनमित्युक्तं भवति ।।

**जनार्दनीया**— 'यथैव' इत्युक्त्या जनकद्रुपदयोः सन्तोषसाम्यप्रतीतिं निवारयति— **ततोऽन्विति** ।। ततः जनकादनु ।। १५९ ।।

**भारतश्री**— जनकद्रुपदयोः सन्तोषसाम्यप्रतीतिं निवारयति— **ततोऽन्विति** ।। जनकादनु।।१५९-६५।।

**चट्टि**— पाञ्चालकेषु महोत्सवश्चास । राजा द्रुपदश्च निजैः स्वकीयैः सर्वैः सुतैश्च पौरैश्च जानपदिकैश्च सह तुष्टोऽभवत् । रामे श्रीरामाय सुतां जानकीं दत्वा जनकः यथा मुदमाप, तथैव ततः जनकादनु द्रुपदोऽपि मुदमाप ।। १५९ ।।

**उद्वाह्य तत्र निवसत्सु च पाण्डवेषु**
**श्रुत्वैव रामसहितः सह यादवैश्च ।**
**[1]आदाय पारिबर्हं बहुलं स [2]कृष्ण**
**आयान्मुदैव पृथया सहितांश्च पार्थान् ।।१६०।।**

**वरदराजीया**— उद्वाह्य विवाह्य तत्र नगरे । पारिबर्हं विवाहसम्बन्धिभ्यो दीयमानं आभरणानि ।।१६०।।

**अनन्तभट्टीया**— विवाहोद्वाहसमये देयं पारिबर्हं आभरणादि ।।१६०-१६५।।

**जनार्दनीया**— पारिबर्हं उत्सवकाले स्वकीयानां दातुं योग्यवस्तु ।।१६०।।

**चट्टि**— पाण्डवेषु उद्वाह्य च तत्र नगरे निवसत्सु सत्सु श्रुत्वैव सः श्रीकृष्णः रामसहितः सन् यादवैश्च सह बहुलं पारिबर्हं उत्सवकाले स्वकीयानां दातुं योग्यं वस्तु आदाय मुदैव पृथया सहितान् पार्थान् प्रत्यायाच्च ।।१६०।।

---

१. अत्र कृष्णः विवाहोत्तरकाल एव एकवारं पारिबर्हं प्रेषयति । ततः पाण्डवाः धार्तराष्ट्रैः पाञ्चालनगरनिरोधात् पूर्वं अश्वसादिनः द्वारकां प्रेषयित्वा विवाहादि सर्वं वृत्तान्तं ज्ञापयामासुः । ततः पाण्डवैः कर्णदुर्योधनादि-पराजयानन्तरं कृष्णः यादवैः सह पाञ्चालनगरं आगत इति भारतकथा । आदिपर्वणि-२१८.६६-७५.
'ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः । वैदूर्यमणिचित्राणि हैमान्याभरणानि च ।।१३।। ...कोटिशश्च सुवर्णञ्च तेषामकृतकं तथा । वीर्थीकृतममेयात्मा प्राहिणोन्मधुसूदनः। तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः । मुदा परमया युक्तो गोविन्दप्रियकाम्यया ।।' इत्यादिपर्वणि-२१६.१३.१८-१९.

२. 'तत उद्योजयामास माधवश्चतुरङ्गिणीम् । सेनामुपानयत्तूर्णं पाञ्चालनगरीं प्रति ।। ततः सङ्कर्षणश्चैव केशवश्च महाबलः । यादवैः सह सर्वैश्च पाण्डवानभिजग्मतुः ।। पितृष्वसारं सम्पूज्य नत्वा चैव तु यादवीम् । द्रौपदीं भूषणैः शुभ्रैः भूषयित्वा यथाविधि ।। पाण्डवान् हर्षयित्वा तु पूजयामासतुश्च तान् । न्यायतः पूजितौ राज्ञा द्रुपदेन महात्मना । यादवाः पूजिताः सर्वे पाण्डवैश्च महात्मभिः । रेमिरे पाण्डवैः सार्धं ते पाञ्चालपुरे तदा ।।' इत्यादिपर्वणि-२१८.७१-७५.

**दृष्ट्वैव तं मुमुदुराशु कुरुप्रवीरा**
**आश्लिष्य कृष्णमथ नेमुरसौ च कृष्णाम् ।**
**दृष्ट्वा प्रदाय गृहयोग्यसमस्तभाण्डं**
**सौवर्णमेभ्य उरु भूषणमच्युतोऽदात् ॥१६१॥**

**व्यासतीर्थीया–** 'आशु मुमुदुः' इति कृष्णदर्शनमेव मोदकारणमिति सूचयति ।। १६१-१६३ ।।

**वेदाङ्गतीर्थीया–** सौवर्णं गृहयोग्यसमस्तभाण्डं प्रदाय कृष्णायै, एभ्यः कृष्णायै च उरुभूषणमदात् ॥१६१॥

**सत्याभिनवतीर्थीया–** तत्रैव 'दृष्ट्वैव तं मुमुदुराशु कुरुप्रवीरा..' इति श्लोके 'दृष्ट्वैव तं मुमुदुराशु कुरुप्रवीरा आश्लिष्य कृष्णमथ नेमुः' इत्यस्य कुरुप्रवीराः तं कृष्णं दृष्ट्वैव मुमुदुः । कृष्णं आशु आश्लिष्य अथ मङ्गलार्थं नेमुरित्यर्थः । एतेन दृष्ट्वैव मुमुदुः इत्यनेन आशु मुमुदुरित्यर्थस्य लाभात् आशु इत्येतत् व्यर्थमिति चोद्यस्यानवकाशः । आशु इत्यस्य मुमुदुरित्यनेनान्वयमनङ्गीकृत्य आश्लिष्य इत्यनेनान्वय इत्यभ्युपगमात् । एतेनैव आश्लिष्येति ल्यपैव नमनस्य आश्लेषानन्तर्यस्य प्राप्तत्वात् अथ इत्येतत् व्यर्थमिति दूषणं निरस्तम् । अत्र अथ इत्यस्य अनन्तरमिति नार्थः किन्तु मङ्गलार्थमित्यर्थ इत्यभ्युपगमात् ॥१६१॥

**वरदराजीया–** कुरुप्रवीराः पाण्डवाः । असौ कृष्णः । गृहयोग्यं सौवर्णं सुवर्णमयमेव समस्तभाण्डं पात्रं प्रदाय दत्वा । एभ्यः पाण्डवेभ्यः ॥१६१॥

**जनार्दनीया–** असावच्युतः कृष्णां दृष्ट्वा, सौवर्णं गृहयोग्यं समस्तभाण्डं जलधान्यस्थापनादिपात्रं कृष्णायै प्रदाय, एभ्यः कृष्णायै च उरुभूषणं अदात् ॥१६१॥

**चट्टि–** कुरुप्रवीराः पाण्डवाः आशु तं श्रीकृष्णं दृष्ट्वैव मुमुदुः । अथ श्रीकृष्णमाश्लिष्य नेमुः । असावच्युतश्च कृष्णां द्रौपदीं दृष्ट्वा सौवर्णं गृहयोग्यं समस्तभाण्डं कृष्णायै प्रदाय, एभ्यः पाण्डवेभ्यः कृष्णायै च उरुभूषणं अदात् ।। १६१ ।।

**देवाङ्गयोग्यशुभकुण्डलहारमौलि-**
**केयूरवस्त्रसहितान्युरुभूषणानि ।**
**षण्णां पृथक्पृथगदात् पृथगेव योग्या-**
**न्यन्यद् ददावथ पितृष्वसुरात्मयोग्यम् ॥१६२॥**

**वेदाङ्गतीर्थीया–** तदेव विवृणोति– देवेत्यादिना ।। पृथगेव योग्यानि, प्रत्येकं योग्यान्येव भूषणानि, तदङ्गपरिमाणतयेति भावः । अथ पितृष्वसुः कुन्त्याः आत्मयोग्यं मृतभर्तृकायास्तस्या योग्यं अन्यद् भूषणं ददौ ।। १६२ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'देवाङ्गयोग्यशुभकुण्डलहार..' इति श्लोके 'अन्यद्ददावथ पितृष्वसुरात्मयोग्यम्' इत्यस्य अन्यदथ उक्तवक्ष्यमाणात् अन्यद् दर्पणादिवस्तुजातं च षड्भ्यः अदात् । पितृष्वसुः आत्मयोग्यं देहयोग्यं भूषणादिकं ददौ इत्यर्थः । एतेन पितृष्वसुः योग्यं भूषणादिकं ददौ इत्यनेन पूर्णत्वात् अन्यत् इत्येतत् व्यर्थमिति दूषणं परस्तम् । अन्यदित्येतत् पितृष्वसुः योग्यमित्यस्य विशेष्यमित्यनङ्गीकारात् । एतेनैव अथशब्दो व्यर्थ इति दूषणं पराकृतम् । अथशब्दः समुच्चयार्थ इत्यङ्गीकारात् । एतेनैव पितृष्वसुः योग्यम् इत्यनेनैव पूर्णत्वात् आत्मपदं व्यर्थमिति चोद्यस्यानवकाशः । देहपरिणामाद्यनुकूलभूषणादिकं दत्तमिति वक्तुं आत्मपदं प्रयुक्तमित्यभ्युपगमात् ।। १६२-१८२ ।।

**वरदराजीया–** उरुभूषणं विवेचयति– **देवाङ्गेति** ।। देवानां अङ्गे शरीरे धर्तुं योग्यानि शुभकुण्डलादीनि उरुभूषणानि । षण्णां द्रौपद्यादीनां पृथग् योग्यान्येव स्त्रीपुरुषयोग्यानि पृथगेव अदात् । अथ पितृष्वसुः कुन्त्याः आत्मयोग्यं अभर्तृकस्त्रीयोग्यभूषणमदात् ।।१६२।।

**जनार्दनीया–** तदेव विवृणोति– **देवाङ्गेत्यादिना** ।। पृथगेव योग्यानि प्रत्येकयोग्यान्येव भूषणानि षण्णां द्रौपद्यादिषण्णां अदात् । तत्तदङ्गपरिमाणसंमिततयेति भावः । अथ पितृष्वसुः कुन्त्याः आत्मयोग्यं मृतभर्तृकायास्तस्याः योग्यं अन्यद्भूषणं ददौ ।।१६२।।

**चट्टि–** तदेव विवृणोति– **देवाङ्गेत्यादिना** ।। देवानामङ्गे शरीरे धर्तुं योग्यानि शुभकुण्डलहारमौलिकेयूरवस्त्रसहितानि पृथगेव देवयोग्यानि प्रत्येकं योग्यान्येव । उरुभूषणानि षण्णां द्रौपद्यादीनां पृथक् पृथगदात् । अथ पितृष्वसुः कुन्त्याः आत्मयोग्यं अभर्तृकायास्तस्याः योग्यमन्यद्भूषणं ददौ ।।१६२।।

**रत्नानि गोगजतुरङ्गरथान् सुवर्ण-**
**भारान् बहूनपि ददावथ चाऽशिषोऽग्र्याः ।**
**व्यासोऽप्यदादिह [1]परत्र च पार्षतोऽपि**
**भूषारथाश्वगजरत्नसुकाञ्चनानि ।।१६३।।**

**वेदाङ्गतीर्थीया–** सुवर्णभारान् । विंशतितुलापरिमितं भार इत्युच्यते । 'भारस्तु विंशतितुलः' इत्यभिधानात् । अच्युतो ददौ । व्यासोऽपि इह परत्र च अग्र्याः आशिषः अदात् । पार्षतोऽपि भूषणादीनि अदात् ।।१६३।।

**मधुसूदनीया–** ।। **सुवर्णभारानिति** ।। विंशतितुलाभारान् इत्यर्थः । तुला नाम पलशतमित्यर्थः । 'तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः' इत्यमरः ।। १६३-१६५ ।।

**वरदराजीया–** रत्नानि माणिक्यादीनि, गाः धेनूः, बहुसुवर्णभारान् अग्र्याः आशिषश्च व्यासोऽदात् ।।

---

१. 'परत्र स' इति जनार्दनीयपाठः ।

**जनार्दनीया–** सुवर्णभारान् । विंशतितुलापरिमितं सुवर्णं भारमित्युच्यते । 'भारः स्याद्विंशतिस्तुलाः' इत्यमरः । स कृष्णो ददौ । व्यासोऽपि इह परत्र चाग्र्याः आशिषः अदात् । पार्षतोऽपि भूषणादीनि अदात् ।।१६३।।

**चट्टि–** रत्नानि माणिक्यादीनि गोगजतुरङ्गरथान् बहून् सुवर्णभारान् अपि पाण्डवानां श्रीकृष्णः ददौ । विंशतितुला भारः इत्यर्थः । तुला नाम पलशतमितम् । 'तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुलाः' इत्यमरः । अथ श्रीव्यासोऽपि इह परत्र च अग्र्याः आशिषः अदात् । पार्षतः द्रुपदोऽपि भूषारथाश्वगज-रत्नसुकाञ्चनानि अदात् ।।१६३।।

**दासीश्च दाससहिताः शुभरूपवेषाः**
**साहस्रशो ददतुरत्र हरिर्नृपश्च ।**
**तासां विचित्रवसनान्युरुरत्नमालाः**
**प्रत्येकशो ददतुरप्युरुभूषणानाम् ।।१६४।।**

**व्यासतीर्थीया–** वेषो नाम वस्त्रादिना सहितं सौन्दर्यम् । सहस्रमेव साहस्रं साहस्रशो बहूनि सहस्राणीत्यर्थः ।। १६४ ।।

**वेदाङ्गतीर्थीया–** वेषो नाम वस्त्राद्यैः सम्पन्नं सौन्दर्यम् । पूर्वमप्युरुभूषणानाम् । तासां दासीनाम् ।।

**वरदराजीया–** शुभरूपवेषाः दासीश्च हरिः कृष्णो द्रुपदश्चोभौ ददतुः । आदित एव । उरुभूषणानां तासां दासीनामिति सम्बन्धः ।।१६४।।

**जनार्दनीया–** शुभरूपवेषाः वस्त्रालङ्काराद्यैः मण्डनवेषाः दासीः अत्रोत्सवे हरिः कृष्णः नृपश्च ददतुः । उरुभूषणानां तासामपि दासीनामपि । विचित्रवसनानि उरुरत्नमालाः प्रत्येकशः प्रत्येकम् । उभौ ददतुः ।।१६४।।

**चट्टि–** वस्त्रालङ्काराद्यैः मण्डनं वेषः शुभरूपवेषाः दाससहिताः साहस्रशः सहस्रसङ्ख्याकाः दासीश्च अत्रोत्सवे हरिः श्रीकृष्णः नृपः द्रुपदश्च इत्युभौ ददतुः । तासां दासीनामपि विचित्रवसनानि उरुरत्नमालाः उरुभूषणानि च प्रत्येकशः प्रत्येकं ददतुः ।। १६४ ।।

**मासान् बहूनिह विहृत्य सहैव पार्थैः**
**कृष्णो ययौ यदुपुरीं सहितोऽग्रजेन ।**
**अन्तर्हिते भगवति प्रततोरुशक्तौ**
**व्यासे च [1]वत्सरमिहोषुरिमे च पार्थाः ।।१६५।।**

---

१. 'ते तत्र द्रौपदीं लब्ध्वा परिसंवत्सरोषिताः । विदिता हस्तिनपुरं प्रत्याजग्मुररिन्दमाः ।' इत्यादिपर्वणि-६१.३२.

**वेदाङ्गतीर्थीया–** इह पाश्चालनगरे विहृत्य । पार्थाश्च वत्सरमिह पाश्चालनगरे ऊषुः ।।१६५।।

**वरदराजीया–** वहून् मासान् । व्यासे च अन्तर्हिते सति । इह नगरे ।।१६५।।

**जनार्दनीया–** कृष्णः पार्थैः विहृत्य, पाश्चालनगर इति शेषः । पार्थाश्च वत्सरमिह पाश्चालनगरे ऊषुः ।।१६५।।

**चट्टि–** श्रीकृष्णः पार्थैः सहैव वहून् मासान् विहृत्य, पाश्चालनगर इति शेषः । अग्रजेन सहितः सन् यदुपुरीं ययौ । प्रततोरुशक्तौ भगवति व्यासे चान्तर्हिते सति इमे पार्थाश्च वत्सरमिह पाश्चालनगरे वत्सरं ऊषुः ।। १६५ ।।

**[1]वैचित्रवीर्यतनयाः सह सौबलेन**
**कर्णेन सिन्धुपतिना रथहस्तियोधैः ।**
**भूरिश्रवःप्रभृतिभिश्च सहैव हन्तुं**
**पाश्चालराजमगुरेत्य पुरीं पुनस्ते ।।१६६।।**

**व्यासतीर्थीया–** स्वां पुरीमेत्य पुनरगुः ।। १६६ ।।

**वेदाङ्गतीर्थीया–** सिन्धुपतिः सैन्धवः । योधाः पदातयः । तैः सह ते स्वयंवरात् स्वपुरीमेत्य पाश्चालराजं हन्तुं पुनरगुः ।।१६६।।

**वादिराजतीर्थीया–** 'पाश्चालराजमगुरेत्य' इत्यत्र वैचित्रवीर्यतनयाः एत्य स्वपुरीमेत्य पाश्चालराजं हन्तुं पुनः पुरीं द्रुपदपुरीं अगुरिति सम्बन्धः ।। १६६ ।।

**मधुसूदनीया–** पुरीं हस्तिनपुरं एत्य प्राप्य तत्समीपं गत्वेत्यर्थः । तत्र ते पाण्डवा वर्तन्त इति श्रुत्वा हस्तिनपुरसमीपात् पुनरागता इति भावः ।।१६६-१७०।।

**वरदराजीया–** सिन्धुपतिना सैन्धवेन । पाश्चालराजं हन्तुम् । पुरीं हस्तिनपुरीं एत्य प्राप्य पुनरगुः प्रापुः । धनुषा भीमेन च भग्नाः स्वपुरं प्राप्य पाण्डवाः तत्र वर्तन्त इति ज्ञात्वा पुनः युद्धार्थमागता इति भावः ।।१६६।।

**अनन्तभट्टीया–** पुरीं स्वपुरीमेत्य पुनरगुः ।। १६६ ।।

**जनार्दनीया–** कृष्णागमनात् पूर्वं प्रवृत्तं युद्धमाह– **वैचित्रेति** ।। सिन्धुपतिः सैन्धवः । योधाः पदातयः, तैः सह । ते स्वयंवरात् स्वपुरीमेत्य, ते नागपुरमार्गात् पुरीं द्रुपदपुरीं नगरं एत्य, पुनरेव

१. 'वैकर्तनपुरोवातः सैन्धवोर्मिमहास्वनः । दुःशासनमहामत्स्यो दुर्योधनमहाग्रहः ।। स राजसागरो भीमो भीमघोष-प्रदर्शनः । अभिदुद्राव वेगेन पुरं तदपसव्यतः ।।' इत्यादिपर्वणि- २१८.१५-१६.

पाञ्चालराजं हन्तुं, अगुः ययुः । स्वयंवरगमनापेक्षया 'पुनः' इत्युक्तम् । न तु हन्तुं पुनरगुरिति । हननार्थं द्विवारमागमनाभावात् ।।१६६।।

**भारतश्री–** कृष्णागमनात् प्राक् प्रवृत्तं युद्धमाह– **वैचित्रेति** ।। मार्गमध्ये ते पाण्डवा इति चारमुखतः सम्यक् ज्ञात्वा पुनः युद्धाय पाञ्चालपुरीमापुः ।। १६६-१७४ ।।

**चट्टि–** वैचित्रवीर्यतनयाः दुर्योधनादयः सौबलेन शकुनिना सह कर्णेन सिन्धुपतिना सैन्धवेन योधाः पदातयः रथहस्तियोधैश्च भूरिश्रवःप्रभृतिभिश्च सहैव स्वयंवरात् स्वपुरीमेत्य पाञ्चालराजं हन्तुं पुनः अगुः प्रापुः ।। १६६ ।।

**तैरर्दिते स्वपुर आशु स सोमकानां**
**राजा सुतैः सह ससैनिक उद्गतोऽभूत् ।**
**तेषां च तस्य च बभूव महान् विमर्दः**
**पुत्रौ च तस्य निहतौ विधुताश्च सेनाः ।।१६७।।**

**व्यासतीर्थीया–** योजनादुद्गतोऽभूत् । रविवरे विद्यमानेऽपि योजनादुद्गतत्वात् पराजितो द्रुपदः ।। १६७-१७४ ।।

**वेदाङ्गतीर्थीया–** विमर्दः सङ्गरः ।।१६७-१६८।।

**वादिराजतीर्थीया–** 'विधुताश्च सेनाः' इत्यत्र 'धूञ् परिकम्पने' इति धातोः । औणादिके डुतच् प्रत्यये कृते विधुता इति पदं भवति । पलायिता इत्यर्थः ।। १६७-१७० ।।

**वरदराजीया–** तैः दुर्योधनादिभिः । स्वपुरे अर्दिते पीडिते सोमकानां राजा द्रुपदः । विमर्दः युद्धम् । तस्य द्रुपदस्य । विधुताः विद्राविताः ।।१६७।।

**जनार्दनीया–** तैः सुयोधनाद्यैः । स्वपुरे आत्मनगरे । अर्दिते पीडिते सति । विमर्दः सङ्ग्रामः । तस्य द्रुपदस्य पुत्रौ चित्रचित्रकेतुनामानौ निहतौ । सेनाः विधुताः विद्राविताः ।।१६७।।

**चट्टि–** तैः सुयोधनाद्यैः स्वपुरे आत्मनगरे अर्दिते पीडिते सति सः सोमकानां राजा द्रुपदः सुतैः सह ससैनिकः सन् आशु उद्गतः अभूत् । तस्य द्रुपदस्य तेषां च महान् विमर्दः सङ्ग्रामः बभूव । तस्य द्रुपदस्य पुत्रौ च निहतौ सेनाश्च विधुताः विद्राविताः ।। १६७ ।।

**[१]चित्रे हते समर आशु सचित्रकेतौ**
**धावत्सु सैनिकवरेषु च पार्षतस्य ।**

---

१. अत्र वर्णितयुद्धप्रकारस्य भारतोक्तयुद्धप्रकारस्य महद्वैलक्षण्यं वर्तते । आदिपर्वणि-२१८.२०-६५.

**पार्था रथैरभिययुर्धृतचापबाणा**
**वैचित्रवीर्यतनयान् रविसूनुयुक्तान्** ॥१६८॥

**वरदराजीया–** हतौ पुत्रौ कावित्यत आह– **चित्र इति** ।। चित्रकेतुना सहिते चित्रे हते सति । पार्षतस्य सैनिकवरेषु ।।१६८।।

**जनार्दनीया–** सचित्रकेतौ चित्रे समरे युद्धे हते सति । धावत्सु पलायितेषु ।। १६८ ।।

**चट्टि–** सचित्रकेतौ चित्रे समरे युद्धे हते सति पार्षतस्य सैनिकवरेषु आशु धावत्सु पलायितेषु सत्सु पार्थाः धृतचापबाणाः रथैः रविसूनुना कर्णेन युक्तान् वैचित्रवीर्यतनयान् अभिययुः ।। १६८ ।।

**तैस्तेषु पञ्चसु समं प्रतियोधयत्सु**
**भूरिश्रवाः सरविजो विरथं चकार ।**
**शक्रात्मजं तदनु पर्वतसन्निकाशं**
**दोर्भ्यां तु मारुतिरुरुं तरुमुद्ववर्ह** ॥१६९॥

**वेदाङ्गतीर्थीया–** तैः दुर्योधनादिभिः समं सह तेषु पाण्डवेषु ।।१६९-७०।।

**वरदराजीया–** पञ्चसु तैः समं प्रतियोधयत्सु युद्धं कुर्वत्सु सरविजो भूरिश्रवाः शक्रात्मजं अर्जुनं विरथं चकार । तदनु तदनन्तरं उत्कृष्टं पर्वतसन्निकाशं गिरिसन्निभं तरुं वृक्षं दोर्भ्यां उद्ववर्ह उत्पाटितवान् ।।१६९।।

**जनार्दनीया–** तैर्दुर्योधनादिभिः । समं सहितेषु पञ्चसु पार्थेषु । उरुं उच्चं तरुं उद्ववर्ह उत्पाटयामास ।।

**चट्टि–** पञ्चसु तैः दुर्योधनादिभिः समं प्रतियोधयत्सु युद्धं कुर्वत्सु सत्सु सरविजः भूरिश्रवाः शक्रात्मजमर्जुनं विरथं चकार । तदनु तदनन्तरं मारुतिः भीमः उरुं उच्चं पर्वतसन्निकाशं गिरिनिभं तरुं वृक्षं दोर्भ्यां उद्ववर्ह उत्पाटयामास ।। १६९ ।।

**[1]आयान्तमीक्ष्य तरुहस्तमिमं समीर-**
**सूनुं सुयोधनमुखा निखिलाः सकर्णाः ।**
**भूरिश्रवाः शकुनिभूरिजयद्रथाश्च**
**सर्वेऽपि दुद्रुवुरथो विविशुः पुरं स्वम्** ॥१७०॥

**वरदराजीया–** हस्ते तरुः यस्यासौ तथा तम् । समीरसूनुं वायुपुत्रम् । पुरं हस्तिनपुरम् ।।१७०।।

---

१. 'ततः सङ्ग्रामशिरसि ददर्श विपुलद्रुमम् । आयामभूतं तिष्ठन्तं स्कन्धपञ्चाशदुत्तमम् । महास्कन्धं महोत्सेधं शक्रध्वजमिवोच्छ्रितम् । तमुत्पाट्य च पाणिभ्यामुद्यम्य चरणावपि । अभिपेदे परान्संख्ये वज्रपाणिरिवासुरान्। भीमसेनभयार्तानि फल्गुनाभिहतानि च । न शेकुस्तान्यनीकानि धार्तराष्ट्राण्युदीक्षितुम् । तानि सम्भ्रान्तयोधानि श्रान्तवाजिगजानि च । दिशः प्राकालवर्द्धीमो दिवीवाभ्राणि मारुतः ।' इत्यादिपर्वणि- २१८.५५-५९.

**जनार्दनीया–** जयद्रथः सैन्धवः ।। १७० ।।

**चट्टि–** तरुः हस्ते यस्य असौ तथा तमिमं समीरसूनुं भीमं आयान्तं ईक्ष्य, सकर्णाः निखिलाः सुयोधनमुखाः भूरिश्रवाः शकुनिभूरिजयद्रथाश्च । जयद्रथः सैन्धवः । सर्वेऽपि दुद्रुवुः । अथ अनन्तरं स्वं पुरं हस्तिनपुरं विविशुः ।।१७०।।

**[1]ज्ञात्वा समस्तमपि तद् विदुरोऽग्रजं स्वं**
**वर्धन्त एव तनया भवतो नरेन्द्र ।**
**इत्याह सोऽपि मुदितः स्वसुतेन कृष्णा**
**प्राप्तेति भूषणवराण्यदिशच्च वासः ।।१७१।।**

**वेदाङ्गतीर्थीया–** स्वसुतेन कृष्णा प्राप्तेति मुदितः ।।१७१।।

**वादिराजतीर्थीया–** भ्रातृतनयानामपि तनयत्वाभिप्रायेण तव तनया वर्धन्त इति विदुरेणोक्तम् । स्वतनया एवेति भ्रान्त्या सोऽपि मुदित इत्याद्युक्तम् ।। १७१ ।।

**मधुसूदनीया–** ।। **ज्ञात्वा समस्तमपीति** ।। चारमुखत इति शेषः । 'विदुरश्चारतः श्रुत्वा द्रौपदीं पाण्डवैर्वृतान् । व्रीडितान् धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ।।' इत्यादिपर्ववचनात्(२१९.१४)।। **स्वसुतेन कृष्णेति** ।। कृष्णायै दुर्योधनाय च भूषणवराणि वासश्च अदिशत् आज्ञापयामासेत्यर्थः । 'अथ चाज्ञापयामास द्रौपद्या भूषणं बहु । आनीयतां वै कृष्णेति पुत्रो दुर्योधनस्तथा ।। (२१९.१८) इत्यादिपर्ववचनात् । एतेन 'विदुरायेति शेषः' इत्यनन्तभट्टीयवरदराजीयव्याख्यानं निरस्तम् । अप्रामाणिकत्वात् विदुरापेक्षया, तयोरेव अभ्यर्हितत्वात् प्रमाणविरुद्धत्वाच्च ।।१७१-१७२।।

**वरदराजीया–** 'स्वयंवरार्थं निगर्तानां स्वयंवरसमये कृतयुद्धानां दुर्योधनादीनां पुरप्रवेशात् प्राक् प्रवृत्तां कथामाह– **ज्ञात्वेति** ।।' इति टिप्पणीकाराः । यद्वा द्विवारं भवनं प्राप्य दुर्योधनादीनां पुरप्रवेशानन्तरं प्रवृत्तां कथामाह इति अवतारः कर्तव्यः । तत् लक्ष्यवेधादिसमस्तं स्वचारमुखतो ज्ञात्वा विदुरो अग्रजं धृतराष्ट्रं प्रत्युवाच । किमिति? हे नरेन्द्र! भवतः तनयाः वर्धन्त एवेत्याह । सोऽपि धृतराष्ट्रो भवतः तनयाः इत्युक्त्या दुर्योधनाद्याः अनेन उच्यन्ते इति भ्रान्त्या मुदितः । सुतेन दुर्योधनेन कृष्णा द्रौपदी प्राप्ता लब्धा इति भ्रान्त्या च भूषणवराणि वासश्च वस्त्राणि आदिशत् आज्ञापयामास, विदुराय इति शेषः ।।१७१।।

---

१. 'विदुरस्त्वथ तान् श्रुत्वा द्रौपद्या पाण्डवान् वृतान् । व्रीडितान् धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ।। ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशाम्पते । उवाच दिष्ट्या कुरवो वर्धन्त इति विस्मितः ।। वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् । अब्रवीत् परमप्रीतो दिष्ट्या दिष्ट्येति भारत ।। मन्यते स वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया । दुर्योधनमविज्ञानात् प्रज्ञाचक्षुर्नरेश्वरः ।। अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु । आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा ।।' इत्यादिपर्वणि- २१०..१४-२१.

**अनन्तभट्टीया–** स्वयवरार्थं निर्गतानां द्रौपदीविवाहसमये कृतयुद्धानां दुर्योधनादीनां हस्तिनपुर-प्रवेशात्प्राक् प्रवृत्तां कथामाह– **ज्ञात्वेति** ।। समस्तं लक्ष्यवेधादि ज्ञात्वा । प्रतिभावलतः चारमुखतो वा ज्ञात्वा । अदिशत्, विदुरायेति शेषः ।। १७१ ।।

**जनार्दनीया–** दुर्योधनादीनां स्वपुरप्राप्तेः प्राक्प्रवृत्तां कथामाह । विदुरः तत्समस्तं लक्ष्यवेधादिकं दुर्योधनादीनां पराभवं च स्वचारमुखतः प्रतिभावलेन च ज्ञात्वा स्वमग्रजं धृतराष्ट्रमाह । किमिति? हे नरेन्द्र! भवतस्तनयाः वर्धन्त एव । सोऽपि धृतराष्ट्रः । इति पार्था इति विदुराभिप्रायमजानन्, स्वसुतेन दुर्योधनेन कृष्णा प्राप्तेति ज्ञात्वा, मुदितः सन्, भूषणवराणि वासश्चादिशत्, विदुरायेति शेषः । कृष्णाया इति शेषः । 'अथ चाज्ञापयामास द्रौपद्या भूषणं बहु ।' इति आदिपर्वणि ।।१७१।।

**अतिविशद–** 'स्वसुतेन कृष्णा प्राप्तेति भूषवराण्यदिशच्च वासः' इत्यत्र कृष्णायै भूषणाम्बराणि वासश्चादिशदिति । केचित्तु- 'विदुराय' इति । तन्न । तथा सति 'द्रौपद्या भूषणं बहु' इति आदिपर्वविरोधात् ।। १७१-२२३ ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ एकोनविंशोऽध्यायः ।।

**भावचन्द्रिका–** ।। **ज्ञात्वेति** ।। अदिशत्, कृष्णायै इति शेषः । 'अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु' इति भारते ।।१७१।।

**चट्टि–** तेषां दुर्योधनादीनां स्वपुरे प्रवेशनात् प्राक्प्रवृत्तां कथामाह– **ज्ञात्वेति** ।। विदुरः तत्समस्तमपि लक्ष्यवेधादिकम्, स्वचारमुखतः इति शेषः । 'विदुरश्चारतः श्रुत्वा द्रौपदीं पाण्डवैर्वृताम् । व्रीडितान् धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ।।' इत्यादिपर्वणि । ज्ञात्वा स्वमग्रजं धृतराष्ट्रमाह । किमिति? हे नरेन्द्र! भवतस्ते तनयाः वर्धन्त एवेति । सः धृतराष्ट्रोऽपि विदुराभिप्रायमजानन्, स्वसुतेन दुर्योधनेन कृष्णा प्राप्ता इति ज्ञात्वा मुदितः सन् कृष्णायै दुर्योधनाय च भूषणवराणि वासश्चादिशत् आज्ञापयामास । तदुक्तम्- 'अथ चाज्ञापयामास द्रौपद्याः भूषणं बहु । आनीयतां वै कृष्णेति पुत्रो दुर्योधनस्तथा ।।' इति आदिपर्वणि ।। १७१ ।।

**[1]पार्था इति स्म विदुरोऽवददाशु सोऽपि**
**स्वाकारगूहनपरो यदि तर्ह्यतीव ।**

---

१. 'अथ स्म पश्चाद्विदुर आचख्यावम्बिकात्मजम् । कौरव्या इति सामान्यात् न मन्येथास्तवात्मजान् ।। वर्धन्त इति मद्वाक्यात् वर्धिताः पाण्डुनन्दनाः । कृष्णया संवृता पार्था विमुक्ता राजसङ्गरात् ।। दिष्ट्या कुशलिनो राजन् पूजिता द्रुपदेन च ।। वैशम्पायन उवाच- एतच्छ्रुत्वा तु वचनं विदुरस्य नराधिपः । आकाराच्छादनार्थाय दिष्ट्या दिष्ट्येति चाब्रवीत् ।।' इत्यादिपर्वणि- २१९.१९-२२.

**भद्रं मृता न हि पृथासहिताः स्म पार्थाः**
**तेषां प्रवृत्तिमपि मे वद सर्वशस्त्वम् ॥१७२॥**

**वेदाङ्गतीर्थीया—** तनया वर्धन्त इत्युक्त्या दुर्योधनादयो वर्धमाना उच्यन्त इत्यभिप्रायेण मुदितमग्रजं प्रति विदुरः पार्था इत्यवदत् । सोऽपि स्वाकारगूहनपरः दुर्योधनादयो वर्धन्त कृष्णां लब्ध्वेत्यभिप्रायेण हृष्टः सन् पार्था इति श्रुत्वा स्वाभिप्रायगूहनपरः यदि पृथासहिताः पार्थाः न मृतास्तर्ह्यतीव भद्रं मङ्गलं इत्याह ॥१७२॥

**वादिराजतीर्थीया—** पुनः पार्था इति विदुरेणोक्ते स्वाकारगूहनपरः स्वस्यान्तर्हृदि असन्तुष्टाकारगूहनपरः धृतराष्ट्रः यदि तर्ह्यतीव भद्रमित्याहेति योजना । मध्ये विदुरस्य द्रव्यप्राप्तिः पाण्डवपक्षपातित्वादिति ज्ञेयम् ॥ १७२-१७५ ॥

**वरदराजीया—** विदुरस्तस्य अन्यथाप्रतीतिं ज्ञात्वा भवतस्तनया इति मया दुर्योधनाद्याः नोक्ताः किन्तु पार्था उक्ता इत्यवदत् । सोऽपि धृतराष्ट्रोऽपि स्वाकारगूहनपरः पाण्डवद्वेषित्वाकारमाच्छादयत् । यदि पाण्डवाः जीवन्ति तैरेव च कृष्णा प्राप्ता च तर्हि अतीव भद्रं अतिमङ्गलम् । पृथया सहिताः पार्थाः यदि न नष्टाः तर्हि तेषां प्रवृत्तिं सर्वशः सर्वमेव मह्यं वद ॥१७२॥

**अनन्तभट्टीया—** सर्वशः सर्वेषाम् ॥ १७२-१७५ ॥

**जनार्दनीया—** विदुरः मुदितमग्रजं प्रति पार्था इत्यवदत् । सोऽपि स्वाकारगूहनपरः दुर्योधनेन कृष्णा लब्धा इत्यभिप्रायेण हृष्टः सन् पार्था इति श्रुत्वा स्वाभिप्रायगूहनपरः । यदि यर्हि पृथासहिताः पार्थाः न मृताः तर्हि अतीव भद्रं मङ्गलम् । तेषां पाण्डवानां प्रवृत्तिं प्रवर्तनम् ॥१७२॥

**चट्टि—** विदुरः मुदितमग्रजं प्रति पार्था इत्यवदत् । सः धृतराष्ट्रः आशु स्वाकारगूहनपरः पाण्डव-द्वेषित्वाकारगूहनपरः सन् यदि पार्थाः तर्हि अतीव भद्रं परममङ्गलम् । पृथया सहिताः पार्था यदि न मृताः तर्हि तेषां पाण्डवानां प्रवृत्तिं प्रवर्तनमपि सर्वशः त्वं मे मह्यं वदेत्युक्तः, धृतराष्ट्रेणेति शेषः ॥ १७२ ॥

**इत्युक्त आह विदुरः स हिडिम्बवध्या-**
**पूर्वां प्रवृत्तिमखिलामपि [1]लक्ष्यवेधम् ।**
**उद्वाहमप्यथ नदीजमुखाश्च सर्वे**
**तुष्टा बभूवुरपि वत्सरमूषुरेवम् ॥१७३॥**

**वेदाङ्गतीर्थीया—** हिडिम्बवध्यापूर्वां हिडिम्बवधपूर्वाम् । नदीजमुखाः, एवमपि पाण्डवाः सन्तीति ज्ञात्वापि, पाण्डवानविचार्येति भावः ॥१७३॥

---

१. 'लक्ष्वेधम्' इति वरदराजीयपाठः ।

**मधुसूदनीया–** ।। वत्सरमूषुरेवमिति ।। १७३-१८० ।।

**वरदराजीया–** सः विदुरः हिडिम्बवध्यापूर्वां हिडिम्बवधपूर्विकां प्रवृत्तिम् । पूर्वशब्देन वकवधादिकं गृह्यते । लक्षवेधं उद्वाहं विवाहमपि आह । नदीजमुखाश्च भीष्मप्रमुखाश्च तुष्टाः वभूवुः । दुर्योधनादीनां गमनानन्तरं वत्सरपर्यन्तं पाण्डवाः ऊषुः तत्रैव स्थिता इति भावः ।।१७३।।

**जनार्दनीया–** हिडिम्बवध्यापूर्वां हिडिम्बवधपूर्वां प्रवृत्तिं वर्तनं लक्ष्यवेधमुद्वाहं चाह । नदीजमुखास्तुष्टा वभूवुरपि एवं वत्सरमूषुः स्थिताः । पाण्डवाः सन्तीति ज्ञात्वा, तानविचार्य स्थिता इति भावः ।।१७३।।

**चट्टि–** सः विदुरः हिडिम्बवध्यापूर्वां हिडिम्बवधपूर्विकामखिलामपि प्रवृत्तिम् । पूर्वपदेन वकवधादिकं गृह्यते । लक्ष्यवेधमुद्वाहमपि आह । अथ नदीजमुखा अपि सर्वे तुष्टाः वभूवुः । एवं वत्सरमूषुः स्थिताः । पाण्डवाः सन्तीति ज्ञात्वा, तानविचार्य स्थिता इति भावः ।।१७३।।

**श्रुत्वाऽथ कृष्णमुपयातमुरु प्रदाय**
**रत्नं च पाण्डुतनयेषु गतं पुनश्च ।**
**तातप्यमानहृदयास्तु सुयोधनाद्या**
**मन्त्रं प्रचक्रुरथ कर्णमुखा ययुश्च ।।१७४।।**

**वेदाङ्गतीर्थीया–** उरु भूषणं प्रदाय ।।१७४-५।।

**वरदराजीया–** अथानन्तरं कृष्णं पाण्डवान् प्रति उपयातं पाण्डुतनयेषु रत्नादि वहु प्रदाय पुनः स्वपुरीं प्रति गतं च श्रुत्वा, तातप्यमानं सन्तप्यमानं हृदयं येषां ते तथा । मन्त्रं विचारं युद्धाय युद्धं कर्तुं ययुः ।।१७४।।

**जनार्दनीया–** अथ वत्सरानन्तरम् । उरु वहु । भूषणरत्नं च रत्नानि । जात्येकवचनम् । प्रदाय, मन्त्रं विचारम् । ययुः, पाण्डवान् प्रति योद्धुमिति शेषः ।।१७४।।

**चट्टि–** अथ वत्सरानन्तरं श्रीकृष्णं पाण्डवान् प्रति उपयातं पाण्डुतनयेषु उरु वहु भूषणं रत्नं च रत्नानि । जात्येकवचनम् । प्रदाय, पुनः स्वपुरीं प्रति गतं च श्रुत्वा तातप्यमानहृदयाः सुयोधनाद्याः कर्णमुखाश्च मन्त्रं विचारं प्रचक्रुः । अथ युद्धाय ययुश्च ।। १७४ ।।

**युद्धाय तेषु पुनरेव रथैः प्रयाते-**
**ष्वाहाग्रजं स [1]विदुरोऽपि नदीजमुख्यान् ।**

१. 'दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः । अधर्मयुक्ता दुष्प्रज्ञा वाला नैषां वचः कृथाः ।। उक्तमेतत्पुरा राजन् मया गुणवतस्तव । दुर्योधनापराधेन प्रजेयं वै विनङ्क्ष्यति ।।' इत्यादिपर्वणि- २२४.३१-३२.

**एते हि पापतमचेतस एत्य पार्थान्**
**युद्धाय मृत्युमुपयान्ति न संशयोऽत्र ॥१७५॥**

**व्यासतीर्थीया–** नदीजमुख्यानपि ॥ १७५ ॥

**वरदराजीया–** रथैः साकं प्रयातेषु गच्छत्सु अग्रजं धृतराष्ट्रं नदीजमुख्यानपि भीष्मादिकानप्याह । किमिति? युद्धाय पार्थानेत्य प्राप्य मृत्युं मरणं उपयान्ति ॥१७५॥

**जनार्दनीया–** तेषु दुर्योधनादिषु पुनः रथैः युद्धाय प्रयातेषु सत्सु विदुरः प्राह । एते दुर्योधनादयः पार्थान् युद्धाय एत्य, मृत्युमुपयान्ति प्राप्स्यन्ति । अत्र मृत्युप्राप्तिविषये न संशयः ॥१७५॥

**भारतश्री–** अपि दुर्योधनादीन् गर्हयित्वा ॥ १७५-१७६ ॥

**चट्टि–** तेषु दुर्योदनादिषु । पुनरेव रथैः युद्धाय प्रयातेषु सत्सु सः विदुरः अग्रजं नदीजमुख्यान् प्राह । किमिति? पापतमचेतसः एते दुर्योधनादयः युद्धाय पार्थानेत्य मृत्युमुपयान्ति प्राप्स्यन्ति । अत्र संशयो नास्ति ॥ १७५ ॥

**भीमार्जुनौ विषहितुं न हि कश्चनास्ति**
**सामर्थ्ययुक् सुरवरेष्वपि वर्धितास्ते ।**
**ज्ञात्वैव वत्सरत एव महानधर्मः**
**तेषामुपेक्षणकृतस्तदलं नियुङ्क्ष ॥१७६॥**

**व्यासतीर्थीया–** अश्वादिभिर्वर्धिताः समृद्धाः । वत्सरत एव वत्सरमात्रत एव । तदुपेक्षणमलं स्वपुत्रनिवृत्त्यर्थं दूतं नियुङ्क्ष ॥ १७६ ॥

**वेदाङ्गतीर्थीया–** विषहितुं सोढुम् । ते वर्धिताः बलेनाभिवृद्धाः । ज्ञात्वैव वत्सरतः वत्सरमारभ्य तेषामुपेक्षणकृतः उदासीनकर्तुस्तव महानधर्मो जातः । तत् उपेक्षणं अलम् । आनीतये नियुङ्क्ष प्रेषय ॥१७६॥

**वादिराजतीर्थीया–** 'तदलं नियुङ्क्ष' इत्यत्र दूतमिति योग्यपदाध्याहारः ॥ १७६ ॥

**वरदराजीया–** विषहितुं पराभवितुं सामर्थ्ययुक् समर्थः सुरवरेष्वपि मध्ये कश्चन नास्ति । ते पाण्डवाः इदानीं वर्धिताः अभिवृद्धिं प्राप्ताः । वत्सरमारभ्य ते वर्धन्त इति ज्ञात्वैव उपेक्षणकृतः तदुपेक्षां कुर्वतः ते महानधर्मः । तत् तस्मादलं नियुङ्क्ष स्वपुत्रान् सम्यक् नियुङ्क्ष, नियमात् दुर्योधनादिनिवारणार्थं दूतं नियोजय इति वा ॥१७६॥

---

विदुरः भीष्मादिमतेन धृतराष्ट्रं प्रति जगादेति । भारतकथा २२४-अध्याय । अत्र तु विदुर एक एव नदीजमुख्यान् धृतराष्ट्रं च जगादेति ।

**अनन्तभट्टीया–** वत्सरतः वत्सरमारभ्य एतादृशमुपेक्षालक्षणमलं नियुङ्क्ष्व, स्वपुत्रनिवर्तनाय दूतमिति शेषः ।।१७६।।

**लघ्वनन्तभट्टीया–** नियुङ्क्ष्व दुर्योधनादियुद्धं निवर्तय ।। १७६-१८२ ।।

**जनार्दनीया–** भीमार्जुनौ । विषहितुं सोढुम् । सामर्थ्ययुक् प्रभावयुक् । ते च वर्धिताः बलादिनाभिवृद्धाः । ज्ञात्वैव, तेषां प्रवृत्तिमिति शेषः । वत्सरतः वत्सरमारभ्य । तेषां उपेक्षणकृतः उदासीनकर्तुः तव महानधर्मो जातः । तत् तस्मात् । उपेक्षालक्षणं अलम् । आनीतये इति अत्राप्याकृष्यते । आनयनाय नियुङ्क्ष्व प्रेषयेत्यर्थः । पार्थानामिति शेषः ।। १७६ ।।

**चट्टि–** भीमार्जुनौ विषहितुं सोढुं सामर्थ्ययुक् प्रभावयुक्तः सुरवरेष्वपि कश्चन नास्ति । ते पाण्डवाः इदानीं वर्धिताः बलादिनाभिवृद्धाः । ज्ञात्वैव, तेषां प्रवृत्तिमिति शेषः । वत्सरतः वत्सरमारभ्य । तेषां पाण्डवानां उपेक्षणकृतः उदासीनकर्तुः तवैव महानधर्मो जातः । तत् तस्मात् उपेक्षालक्षणं अलं आनीतये तेषां आनयनाय नियुङ्क्ष्व प्रेषयेत्यर्थः । दूतमिति शेषः ।। १७६ ।।

**आनीतये च विनियुज्य सुसान्त्वपूर्व-**
**मानीय योजय [१]नृपेषु तथाऽर्धराज्यम् ।**
**[२]एवं कृते तव भवेत् कुलवृद्धये हि**
**धर्माय चोभयविनाशकरोऽन्यथा स्याः ।।१७७।।**

**व्यासतीर्थीया–** पाण्डवानामानीतये च दूतं विनियुज्य पूर्वकृतानादरादिना अनागन्तुकामाश्चेत् तर्हि सुसान्त्वपूर्वमानीय तेषु राज्यार्धं नियोजय ।। १७७-१७८ ।।

**वेदाङ्गतीर्थीया–** किं कार्यमित्यत आह– **आनीतये च विनियुज्येति** ।। एवं कृते अकृते वा किं फलमित्यत आह– **एवमिति** ।।१७७-१८०।।

**वादिराजतीर्थीया–** 'आनीतये च विनियुज्य' इत्यत्र सान्त्वपूर्वमानीतये पाण्डवानामानयनाय विनियुज्य दूतं सम्प्रेष्य आनीय च । नृपेषु, निर्धारणे सप्तमी । नृणां मध्ये यथा भवति तथा योजयेत्यन्वयः ।।१७७-१७८।।

**मधुसूदनीया–** हे नृप! एषु पाण्डवेषु ।।१७७।।

**वरदराजीया–** आनीतये पाण्डवानयनार्थं दूतं विनियुज्य सुसान्त्वपूर्वकं मृदुवचनपूर्वकं आनीय, हे नृप! एषु पाण्डवेषु अर्धराज्यं च योजय स्थापयेत्यर्थः । एवं कृतं कार्यं तव कुलवृद्धये धर्माय च भवेत् । अन्यथा एवं न करोषि चेत् त्वं उभयकुलस्य वृद्धेः धर्मस्य च विनाशकरः स्याः भविष्यसि ।।१७७।।

---

१. 'नृपेषु' इति वादिराजतीर्थानां पाठः ।

२. 'एवं कृतं' इति वरदराजीय-चट्टीपाठः ।

**अनन्तभट्टीया–** आनीतये पाण्डवानयनाय दूतं विनियुज्य । एवं कृते कुर्वतस्तव । स्याः, त्वमिति शेषः ।। १७७-१७८ ।।

**जनार्दनीया–** आनीतये पार्थानयनार्थं विनियुज्य आज्ञाप्येत्यर्थः । दूतमिति शेषः । सुसान्त्वपूर्वं समाधानपूर्वं यथा भवति तथा । आनीय, हे नृप! एषु पार्थेषु तथा स्वपुत्रवत् प्रीतिपूर्वं अर्धराज्यं योजय देहीत्यर्थः । एवं कृते अकृते वा किं फलमित्यत आह– **एवमित्यादिना** ।। एवं कृते कुर्वति तव कुलवृद्धये धर्माय च भवेत् । अन्यथाकरणेन उभयविनाशकरः कुलस्य धर्मस्य विनाशकः स्याः भविष्यसि, त्वमिति शेषः ।।१७७।।

**भारतश्री–** आनीतये पार्थानयनार्थं एकं दूतं विनियुज्य । नृप एषु इति विभागः ।। १७७-१८२ ।।

**चट्टि–** आनीतये पार्थानयनार्थं च, दूतमिति शेषः । विनियुज्य आज्ञाप्येत्यर्थः । सुसान्त्वपूर्वं मधुर-वचनपूर्वकमानीय हे नृप! एषु पार्थेषु यथा भागार्हः तथा अर्धराज्यं योजय देहीत्यर्थः । एवं करणाकरणयोः किं फलमित्यत आह– **एवमित्यादिना** ।। एवं कृतं कार्यं तव कुलवृद्धये धर्माय च भवेत् । अन्यथा अकरणेन उभयविनाशकरः कुलवृद्धिधर्मयोः विनाशकरः स्याः भविष्यसि, त्वमिति शेषः ।।१७७।।

**इत्युक्तवत्यनु तथेत्यवदन्नदीजो**
**द्रोणः कृपश्च विदुरं स नृपोऽप्युवाच ।**
**[1]याह्यानयेति स च वेगवता रथेन**
**[2]तत्रागमत् तदनु तैरभिपूजितश्च** ।।१७८।।

**वरदराजीया–** इत्युक्तवति सति अथानन्तरं याहि आनय, पाण्डवानिति शेषः ।।१७८।।

**जनार्दनीया–** इत्युक्तवति सति, विदुर इति शेषः । विदुरमनु आनय, पाण्डवानिति शेषः । तत्र पाञ्चालनगरम् । तैः पार्थैः ।। १७८ ।।

**चट्टि–** इत्युक्तवति सति, विदुर इति शेषः । अथ अनन्तरं नदीजो भीष्मस्तथेत्यवदत् । द्रोणः कृपश्च तथा अवदताम् । सः नृपः धृतराष्ट्रोऽपि याहि आनय, पाण्डवानिति शेषः । इत्युवाच । सः विदुरश्च वेगवता रथेन तत्र पाञ्चालनगरं अगमत् । तदनु तैः पाण्डवैः अभिपूजितश्च ।।१७८।।

---

१. 'त्वमेव गत्वा विदुर तानिहानय मा चिरम् ।' इति १.२२५.७.

२. 'ददर्श पाण्डवांस्तत्र वासुदेवञ्च भारत । स्नेहात्परिष्वज्य स तान्पप्रच्छानामयं ततः ।। तैश्चाप्यमितबुद्धिः स पूजितो हि यथाक्रमम् ।।' इत्यादिपर्वणि- २२५.१२-१३.

**तत्काल एव वसुदेवसुतश्च कृष्णो**
**[1]व्यासश्च तानुपसमेत्य दुरन्तशक्ती ।**
**[2]आदाय कुन्तिसहितान् विदुरेण युक्तौ**
**नागाह्वयं पुरमितां सह भार्ययैव ॥१७९॥**

**व्यासतीर्थीया–** 'दुरन्तशक्ती' इति न कोऽपि तयोराज्ञालङ्घने शक्त इति प्रसङ्गोचितं विशेषणम् ॥१७९-१८२॥

**वादिराजतीर्थीया–** 'नागाह्वयं पुरम्' इत्यत्र दुरन्तशक्ती व्यासकृष्णौ इतां प्राप्तवन्तौ । 'इण् गतौ' इति धातोः, लोटि प्रथमपुरुषद्विवचनम् ॥ १७९ ॥

**वरदराजीया–** तान् पार्थान् उपसमेत्य कुन्तीसहितान् पार्थान् आदाय द्रौपद्या सहितान् । दुरन्तशक्ती व्यासो कृष्णश्च । तत्काले पुरमितां प्राप्तौ । भार्यया द्रौपद्या सह ॥१७९॥

**अनन्तभट्टीया–** इतां प्राप्तौ ॥ १७९ ॥

**जनार्दनीया–** भार्यया सह द्रौपद्या सहितान् आदय गृहीत्वा, पार्थानिति शेषः । इतां प्राप्तौ ॥१७९॥

**चट्टि–** तत्काले एव वसुदेवसुतः श्रीकृष्णश्च श्रीव्यासश्च अतिदुरन्तशक्ती उभौ तान् पार्थान् उपसमेत्य विदुरेण युक्तौ सन्तौ कुन्त्या सहितान् भार्यया द्रौपद्या सहैव वर्तमानान् पार्थान् आदय गृहीत्वा नागाह्वयं पुरं हस्तिनपुरं इतां प्राप्तौ ॥१७९॥

**तेष्वागतेषु सुमहानभवत् प्रहर्षः**
**पौरस्य जानपदिकस्य जनस्य चोच्चैः ।**
**भीष्मादिकाश्च मुदिताः प्रतिपूज्य गेह-**
**मावेशयन् सह नृपेण महोत्सवेन ॥१८०॥**

**वादिराजतीर्थीया–** 'गेहमावेशयन्' इत्यत्र गेहं धृतराष्ट्रगेहम् ॥ १८०-१८३ ॥

**वरदराजीया–** तेषु पार्थेष्वागतेषु पौरस्य पुरस्थितस्य जनस्य तथा जानपदिकस्य देशस्थस्य च । उच्चैरत्यन्तं मुदिताः । नृपेण धृतराष्ट्रेण सह । गेहं धृतराष्ट्रगेहम् ॥१८०॥

**अनन्तभट्टीया–** नृपेण धृतराष्ट्रेण ॥ १८० ॥

---

१. भारते व्यासागमनं नोपलभ्यते ।

२. 'पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः । आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ॥' इति १.२२६.१८.

**जनार्दनीया–** उच्चैरत्यन्तं मुदिताः । गेहं धृतराष्ट्रगेहम् ॥१८०॥

**चट्टि–** तेषु पार्थेषु आगतेषु सत्सु पौरस्य पुरे स्थितस्य जानपदिकस्य देशस्थस्य च महान् प्रहर्षः अभवत् । भीष्मादिकाश्च उच्चैरधिकं मुदिताः । नृपेण धृतराष्ट्रेण सह प्रतिपूज्य महोत्सवेन गेहं धृतराष्ट्रगेहं आवेशयन् प्रवेशयामासुः ॥१८०॥

**कृष्णामपूजयदतीव च सौबली सा**
**दुर्योधनस्य दयितासहिताऽत्र तेऽपि ।**
**ऊषुस्ततश्च निजपुत्रकदुर्विनीत्या**
**कृष्णानिमित्तमुरुभीतित[1] आह भीमात् ॥१८१॥**

**वेदाङ्गतीर्थीया–** (भीमात्) कृष्णासौन्दर्येण मोहितं मत्सुतं भीमो हन्यादिति उरुभीतित इति भावः ॥१८१॥

**मधुसूदनीया–** दुर्योधनस्य दयितासहिता सौबली कृष्णामपूजयत् ॥ १८१॥

**वरदराजीया–** सौबली सुबलस्य पुत्री गान्धारी कृष्णां द्रौपदीं अतीव अपूजयत् । दुर्योधनस्य दयितया सहिता सौबलीति सम्बन्धः । अत्र नृपस्य गेहे ते पाण्डवाः । कृष्णानिमित्तं निजपुत्रकस्य दुर्योधनस्य दुर्विनीत्या दुष्टनीत्या भीमात् भीमस्य भीतितः । कुन्तीमाह, गान्धारीति वा धृतराष्ट्र इति शेषः ॥१८१॥

**अनन्तभट्टीया–** कृष्णानिमित्तेन दुर्विनीत्या भीमादुरुभीतितः ॥ १८१-१८२ ॥

**जनार्दनीया–** ते पाण्डवाः अत्र धृतराष्ट्रगेहे ऊषुः । 'वस निवासे' इति धातोः । कृष्णानिमित्तं द्रौपदीनिमित्ततः । निजपुत्रकदुर्विनीत्या स्वपुत्रस्य दुर्योधनस्य उत्पथवृत्त्या । भीमात् उरुभीतितः महद्भयात् कुन्तीमाह । कृष्णासौन्दर्येण मोहितं मत्सुतं भीमो निहन्यादित्युरुभीतित इति भावः ॥१८१॥

**चट्टि–** सा सौबली गान्धारी दुर्योधनस्य दयितया भार्यया सहिता सती कृष्णां द्रौपदीं अतीवाधिकं अपूजयत् । तेऽपि पाण्डवाश्च अत्र धृतराष्ट्रगेहे ऊषुः । 'वस निवासे' इति धातुः । कृष्णानिमित्तं द्रौपदीनिमित्ततः । निजपुत्रकदुर्विनीत्या स्वपुत्रस्य दुर्योधनस्य उत्पथवृत्त्या । भीमात् उरुभीतितः महद्भयात् कुन्तीमाह, गान्धारीति शेषः । कृष्णासौन्दर्येण मोहितं मत्सुतं भीमो निहन्यादित्युरुभीतित इति भावः ॥ १८१ ॥

**[1]कुन्ति प्रयाहि सहिता स्नुषया गृहं स्वं**
**भीमाद् बिभेमि निजपुत्रकदुर्विनीत्या ।**
**कृष्णा त्रिलोकवनिताधिकरूपसारा**
**यस्मादिति स्म ससुता प्रययौ गृहं सा ॥१८२॥**

**वेदाङ्गतीर्थीया—** कृष्णा त्रिलोकवनिताधिकरूपसारा यस्मात् तस्मात् कारणात् निजपुत्रकदुर्विनीत्या भीमाद् बिभेमि इति उक्ता ॥१८२॥

**वरदराजीया—** स्नुषया सहिता स्वगृहं पाण्डोर्गृहं प्रयाहि । यतो यतः निजपुत्रकदुर्विनीत्या अहं भीमाद् बिभेमि भययुक्ताऽस्मि । पुत्रकस्य दुर्विनीतिः कुतः? यतः कृष्णा त्रिलोकवनिताभ्योऽपि अधिकरूपेण सारा सौन्दर्ययुक्ता । तथा च तां दृष्ट्वा दुर्योधनस्य दुष्टं मनो भविष्यति । भीमश्च तं हनिष्यति । (अनेन) भीमाद् बिभेमि इत्युक्तं भवति । सा कुन्ती गृहं प्रति प्रययौ ॥१८२॥

**जनार्दनीया—** कृष्णा त्रिलोकवनिताधिकरूपसारा त्रिलोकेषु स्त्रीणां यदधिकं सौन्दर्यं तेन सारा अधिकसौन्दर्यवती । 'रूपं स्वभावे सौन्दर्ये' इति विश्वः । त्रिलोकेषु विद्यमानस्त्रीभ्यः अधिकरूपेण अधिकसौन्दर्येण सारा श्रेष्ठा यस्मात् तस्मात् कारणात् निजपुत्रकदुर्विनीत्या भीमाद् बिभेमि इत्युक्ता सा ॥१८२॥

**चट्टि—** कृष्णात्रिलोकवनिताधिकरूपसारा त्रिलोकेषु विद्यमानस्त्रीभ्यः अधिकरूपेण अधिकसौन्दर्येण सारा श्रेष्ठा यस्मात् तस्मात् कारणात् निजपुत्रकदुर्विनीत्या भीमाद् बिभेमि । हे कुन्ति! त्वं स्नुषया सहिता सती स्वं गृहं प्रति याहीति पूर्वेण सम्बन्धः । इत्युक्ता सा कुन्ती ससुता सती गृहं स्वगृहं प्रति ययौ ॥१८२॥

**[2]ऊषुस्तथैव परिवत्सरपञ्चकं ते**
**पाण्डोर्गृहे सुसुखिनोऽखिलभोगयुक्ताः ।**
**कृष्णा च तेषु पृथगेव चतुःस्वरूपा**
**रेमे तथैकतनुरप्यभिमानिभेदात् ॥१८३॥**

---

१. विदुरमुखेन प्राहेत्यर्थः । तथाहि भारते- 'सञ्चिन्त्य विदुरं प्राह युक्तितः सुबलात्मजा । कुन्तीं राजसुतां क्षत्तः सवधूं सपरिच्छदाम् ॥ पाण्डोर्निवेशनं शीघ्रं नीयतां यदि रोचते । करणेन मुहूर्तेन नक्षत्रेण शुभे तिथौ ॥ यथा सुखं तथा कुन्ती रंस्यते स्वगृहे सुतैः । तथेत्येव तदा क्षत्ता कारयामास तत्तथा ॥' इत्यादिपर्वणि-२२७.५-७.

२. 'अवाप्य द्रुपदात् प्राज्ञात् याज्ञसेनीं पृथासुताः । धृतराष्ट्रनिदेशेन जग्मुः करिपुरं शुभम् ॥ भीष्मेण चाम्बिकेयेन तत्र संमानितास्तदा । दुर्योधनादिभिः सार्द्धं न्यवसन् पञ्च वत्सरान् ॥' इति स्कन्दपुराणान्तर्गतवेङ्कटाचलमाहात्म्ये-१.१२-१३

**व्यासतीर्थीया–** परिवत्सरो नाम बृहस्पतेर्द्वादशराशिषु परिवृत्तेर्द्वादशो भागः । कृष्णा पृथगेव पृथक् पृथग् दिन एव तेषु रेमे । ननु एका कथं लोकन्यायमतिक्रम्य पञ्चसु रेम इत्यत उक्तम्– **चतुःस्वरूपेति** ।। ननु चतुःस्वरूपत्वेऽपि शरीरस्य एकत्वात् कथं परपरामृष्टशरीरेण रेम इत्यत उक्तम्– **तथापीति** ।। यद्यपि कृष्णा एकतनुस्तथापि प्रतिदिनमभिमानिभेदात्कारणात् शरीरस्य भिन्नत्वात् परपरामृष्टशरीरे ता नैव रेम इत्यर्थः ।। १८३ ।।

**वेदाङ्गतीर्थीया–** बृहस्पतेरेकैकराशिषु सञ्चारेण यः संवत्सरस्तत्परिमितः कालः परिवत्सर इत्युच्यते । तादृशवत्सरपञ्चकम् । कृष्णाया रमणप्रकारमाह– **कृष्णेत्यादिना** ।। कृष्णा च अभिमानिभेदात् अभिमानिचेतनभेदात् निमित्तात् चतुःस्वरूपा । नतु देहभेदात् । तेषु पाण्डवेषु पृथगेव रेमे । एकैकस्मिन् दिन एकैकेन रेम इति भावः ।।१८३।।

**सत्याभिनवतीर्थीया–** तत्रैव 'ऊषुस्तथैव परिवत्सरपञ्चकं ते..' इति श्लोके 'कृष्णा च तेषु पृथक् रेमे' इत्यस्य कृष्णा च तेषु पाण्डवेषु मध्ये एकैकेन पृथक् पृथग् दिनेषु एकैकदिने इति यावत् । रेमे इत्यर्थः । एतेन तेषु इत्येतत् अनन्वितमिति दूषणस्यानवकाशः । तेष्विति निर्धारणसप्तमी एकैकेनेति अध्याहारः इति स्वीकृत्यान्वयस्योक्तत्वात् ।। १८३-२११ ।।

**मधुसूदनीया–** ।। **ऊषुस्तथैव परिवत्सरपञ्चकमिति** ।। गुर्वावृत्तद्वादशमासाः परिवत्सरम् । 'इडा-वत्सरनामासौ नक्षत्रद्वादशे स्थितः । तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः ।। वत्सरो यः स्थितस्त्वह्नां षष्ट्युत्तरशतत्रये । गुर्वावृत्तद्वादशांशे यः स्थः स परिवत्सरः ।। सौरद्वादशमासेषु यः स्थः संवत्सरो हरिः । एवं स कालनामापि कालस्थः परमेश्वरः ।।' इत्यादि । (भा.ता.३.१२.१४) ब्रह्मतर्कवचनात् ।

कृष्णायाः पञ्चसु रमणप्रकारमाह– **कृष्णा चेत्यादिना** ।। कृष्णा द्रौपदी तेषु पाण्डवेषु पृथगेव पृथग्दिन एव रेमे । ननु एका लोकन्यायमतिक्रम्य पञ्चसु कथं रेम इत्यत आह– **चतुःस्वरूपेति** ।। ननु चतुःस्वरूपत्वे शरीरस्यैकत्वात् कथं परपरामृष्टेन शरीरेण रेम इत्यत आह– **एकतनुरपीति** ।। तथाशब्दोऽपिशब्देन सम्बध्यते । यद्यपि एकतनुः तथाप्यभिमानिभेदात् अभिमानिजीवभेदात् कारणात् विशेषणभेदेन विशिष्टस्य भिन्नत्वात् । अभिमानिभेदेन तद्विशिष्टस्य शरीरस्य भिन्नत्वात् परपरामृष्टशरीरेण नैव रेमे इत्यर्थः । ननु प्रतिदिनं अभिमानभेदेऽपि अभिमन्यमानदेहस्यैकत्वात् तस्य परपरामृष्टत्वात् कथं परपरामृष्टेनैव शरीरेण परेण रमणमित्यतः तदभिप्रायं विवृण्वन्- 'यदि मे पतयः पञ्च रतिमिच्छामि तैर्मिथः । कौमारं च भवेत् सर्वैः सङ्गमे सङ्गमे च मे ।। पतिशुश्रूषया चैव सिद्धिः प्राप्ता मया पुरा । भोगेच्छा च मया प्राप्ता स च भोगश्च मे भवेत् ।। रुद्रः:- पतिश्च भद्रे सिद्धिश्च न भजेते परस्परम् । अभोगानाप्स्यसे सिद्धिं योगेन महता तथा ।। अन्यदेहान्तरे चैव रूपभाग्यगुणान्विता । पञ्चभिः प्राप्य कौमारं महाभागा भविष्यसि ।।' इत्यादिपर्वणि (२१३.२४-२७) ।। १८३ ।।

**वरदराजीया–** ।। **परिवत्सरेति** ।। गुर्वावृत्तद्वादशमासाः परिवत्सरः । तादृक् परिवत्सरपञ्चकं पाण्डोर्गृहे यथोक्तं तथैव ऊषुः वासमकुर्वन् । 'अखिलभोगयुक्ताः' इत्युक्तम् । तत्र पञ्चानां एकस्या भोगप्रकारं चतुर्मुखादिशापादिसङ्घटनार्थं सविस्तारमाह– **कृष्णा चेत्यादिना** ।। कृष्णा तेषु युधिष्ठिरादिषु रेमे । कथम्? पृथगेव पृथग्दिने क्रमेण एकैकस्मिन् दिने तथा तत्रापि पृथगेव श्यामला युधिष्ठिरेणैव, शची अर्जुनेनैव इत्येवंरूपेण पृथगेव रेमे । यतः चतुःस्वरूपा श्यामलादिचतुःस्वरूपयुक्ता । ननु चतुःस्वरूपयुक्तत्वेऽपि एकदेहत्वात् कथं पूर्वस्मिन् दिने युधिष्ठिरेण परामृष्टेन देहेन द्वितीयदिने भीमेन सह रेमे । एवं तृतीयदिनेऽपि कथं परपरामृष्टेन इत्यत आह– **एकेति** ।। एकतनुरपि एकदेहापि सा कृष्णा अभिमानिभेदात् प्रतिवासरं अन्याभिमानोत्पत्तिभेदेन अभिमानिजीवभेदात् ।।१८३।।

**अनन्तभट्टीया–** परिवत्सरो नाम बृहस्पतेः द्वादशराशिषु परिवृत्तेर्द्वादशो भागः । पृथक् पृथग्दिनेषु रेमे । ननु कथमेका लोकन्यायमतिक्रम्य पञ्चसु रेम इत्यत आह– **चतुःस्वरूपेति** ।। ननु चतुःस्वरूपत्वेऽपि देहस्यैकत्वात् कथं परपरामृष्टेन शरीरेण रेम इत्यत उक्तम्– **एकतनुरपीति** ।। यद्यपि कृष्णा एकतनुः तथापि अभिमानिभेदात् कारणात् [१]परपरामृष्टेन शरीरेणैव क्रमतः रेम इत्यर्थः ।। १८३ ।।

**लघ्वनन्तभट्टीया–** ।। **कृष्णेति** ।। ननु एकस्याः कृष्णायाः पञ्चभिः रमणं कथमित्यत आह– **चतुस्स्वरूपेति** ।। अश्विनप्रियाया एकत्वात् शिवायाः पतिसम्बन्धाभावाच्च न क्षुद्रोपद्रवः ।। एकस्यां चतुःस्वरूपत्वं चतुःस्वरूपाया एकसमं..* न मन्तव्यमित्याह– **पृथगेवेति** ।। ननु देहस्यैकत्वात् कथं चतुःस्वरूपत्वमित्यत आह– **एकतनुरपीति** ।। देहभेदाभावेऽपि ममैवायं देहः सुखदुःखादिसाधनमित्यभिमानभेदात् चतुःस्वरूपश्च युज्यते । माध्वदेहविशिष्टस्य द्विःस्वरूपत्ववदिति भावः ।।१८३ ।।

**जनार्दनीया–** बृहस्पतेरेकैकराशिषु सञ्चारेण यो वत्सरपरिमितः कालः स परिवत्सर इत्युच्यते । तादृशपरिवत्सरपञ्चकं कृष्णायाः पाण्डवेषु रमणप्रकारमाह– **कृष्णेत्यादिना** ।। कृष्णा च यद्यपि एकतनुः तथापि अभिमानिभेदात् जीवभेदात् निमित्तात् चतुःस्वरूपा श्यामलादिचतुःस्वरूपा । न तु देहभेदात् । तेषु पाण्डवेषु पृथगेव रेमे । एकैकस्मिन् दिने एकैकेन रेम इति भावः ।।१८३।।

**भावचन्द्रिका–** ।। **रेम इति** ।। पत्यपेक्षया भिन्नाभिन्नतनूनां अत्यन्ताभिन्नवत एकदेहोपादानकस्य तत्तदभिमानविशिष्टद्वयस्यापि अत्यन्तभेद एवेति न दोषः । पुत्रस्य तद्भार्यगामित्वे पितुः स्नुषागामित्वं स्यात् । तच्छरीरोपादानत्वात् पुत्रशरीरस्य विशिष्टद्वययोः अभेदव्यपदेशः प्रत्यभिज्ञावदेवेति ज्ञातव्यम् ।। १८३-१८४ ।।

**भारतश्री–** बृहस्पतिः मेषादिराशिषु एकैकवत्सरं प्रविश्य यावता कालेन सञ्चरति तावत् कालं परिवत्सरं कथयन्ति । कृष्णाया पाण्डवेषु रमणप्रकारं आह– **कृष्णेत्यादिना** ।। यद्यप्येकतनुः तथापि अभिमानभेदात् जीवभेदात् निमित्तात् चतुस्स्वरूपा श्यामलादिचतुःस्वरूपा न तु देहभेदात् । तेषु पाण्डवेषु पृथगेव रेमे । एकैकस्मिन् दिने एकैकेन रेम इति भावः ।। १८३ ।।

---

१. 'परपरामृष्टशरीरेण नैव रेमे' इति कचित् कोशेषु । तथात्वे अभिमान्यपेक्षया वाक्यं योजनीयम् ।

**चट्टि–** पाण्डवाः अखिलभोगयुक्ताः सन्तः सुसुखिनस्सन्तः पाण्डोः गृहे यथोक्तं तथैव परिवत्सरपञ्चकं गुर्वावृत्तद्वादशमासाः परिवत्सरः । एतादृशपरिवत्सराणां पञ्चकं ऊषुः । तदुक्तम्- 'इडावत्सरनामासौ नक्षत्रद्वादशे स्थितः । तिथीनां द्वादशावर्ते यो हरिः सोऽनुवत्सरः ।। वत्सरो यः स्थितस्त्वह्नां षष्ठ्युत्तरशतत्रये । गुर्वावृत्तद्वादशांशे यः स्थः स परिवत्सरः ।। सौरद्वादशमासेषु यः स्थः संवत्सरो हरिः । एवं स कालनामापि कालस्थः परमेश्वरः ।।' इत्यादि ब्रह्मतर्के ।

कृष्णायाः पञ्चसु पाण्डवेषु रमणप्रकारमाह– **कृष्णा चेत्यादिना** ।। कृष्णा द्रौपदी च यद्यपि एकतनुस्तथापि अभिमानिभेदात् जीवभेदात् निमित्तात् चतुःस्वरूपा श्यामलादिचतुःस्वरूपा । न तु देहभेदात् । तेषु पाण्डवेषु पृथगेव रेमे । एकैकस्मिन् दिने एकैकेन रेम इति भावः ।। १८३ ।।

**कन्यैव साऽभवदतः प्रतिवासरं च**
**जन्माभवद्ध्यभिमतेः पृथगेव नाशात् ।**
**प्रायो हि नाभिमतिनाशमवाप वाणी**
**तस्मान्मरुच सकलेष्वभिविष्ट[१] आसीत् ।।१८४।।**

**व्यासतीर्थीया–** ननु प्रतिदिनमभिमानिभेदेऽपि कथं तस्मात्परामृष्टेन शरीरेण परेण रमणमित्यत-स्तदभिप्रायं विवृण्वन्नाह– **कन्येति** ।। अस्यार्थः- अभिमतेरभिमानस्य प्रतिवासरं पृथगेव नाशात् कारणात् तस्याः प्रतिवासरं जन्माभवत् । अतः कारणात् प्रतिवासरं सा कन्यैवाभवत् । अतः कारणात् सा परपरामृष्टेन शरीरेण नैव रेम इति । नन्वभिमतेः पृथगेव नाशात् इत्युक्त्या भारत्या अपि स्ववासरेण विना इतरवासरेषु इतरासामिवाभिमाननाशः तर्हीत्यतो विशेषमाह– **प्राय इति** ।। ननु भारत्याः स्ववासरेण विनेतरवासरेष्वभिमानाभावे अर्जुनादिदूषितत्वं स्यादित्यत उक्तम्– **तस्मादिति** ।। प्रतिवासरं भारत्या अभिमानभावादिति । अभिविष्टश्चेति सम्बन्धः ।। १८४ ।।

**वेदाङ्गतीर्थीया–** नन्वेवं तर्हि इतरासामिव भारत्या अप्यभिमाननाशः सर्वात्मना किम्? नेत्याह– **प्राय इति** ।। प्रायः सर्वात्मना अभिमतिनाशं नावाप हि यस्मात् तस्मात् प्रायः प्रतिदिनं भारत्या अभिमाननाशाभावात् मरुत् सकलेषु च युधिष्ठिरादिषु चतुर्षु च अनुविष्ट आसीत् ।।१८४।।

**वादिराजतीर्थीया–** 'अभिमतेः पृथगेव नाशात्' इत्यत्र हि यस्मात् अभिमतेः देहाभिमानस्य पृथगेव पृथक्पृथगेव अन्येषां रमणदिने नाशात् स्वस्वपतिना रमणदिने उत्पत्तेश्च प्रतिवासरं जन्म अभवत् । जन्मेत्युपलक्षणम् । पूर्वदिने अभिमाननाशान्नाशः, अपरदिने अभिमानोत्पत्तेरुत्पत्तिश्चेति ज्ञेयम् । लोकेऽपि विद्यमानदेहाभिमाननाश एव नाशः, तदुत्पत्तिरेव जन्मेति प्रसिद्धम् । अतः सा द्रौपदी प्रतिवासरं कन्यैव स्वस्वदिने रममाणपतिना सह मानसविवाहयोग्या कन्यैवाभवत् । एवं च सर्वेषां पार्थानां

१. 'सकलेष्वनुविष्ट' इति वेदाङ्गतीर्थीय-जनार्दनीय-ताम्रपर्णीय-भागवश्री-चट्टीपाठः ।

स्वस्वरमणदिने स्वस्ववधूभिरेव सङ्गमः । तासां च स्वस्वपतिव्यतिरिक्तानां रमणदिने देहाभिमान-नाशान्नापरसङ्गदोषः । स्वपतिना सह रमणे च अभिनवजन्मना कन्यात्वं प्राप्य मानसविवाहविधिना पुनरुद्वाह्य स्वपत्न्या सह रमणात् न तस्य कन्यागमनदोषः । कन्यायाश्च मानसविवाहविधिना स्वपतिना सह रमणेन निमित्तेन नासंस्कृतपुरुषगमनदोष इति ज्ञेयम् । वाणी तु भीमसेनरमणदिवसे सम्पूर्णदेहाभिमानं करोति । 'तत्रान्यगाश्च भवत' (ता.नि-१८.९९) इति ब्रह्मदत्तशापस्य स्वपतियोगवरं ददता शिवेनैव परिहृतत्वात् । 'रमते सततं तया यत्'(१८५) इति ग्रन्थकृतैव उत्तरश्लोके वक्ष्यमाणत्वाच्च भारत्यैव रमणम् । इतरासां तदा अभिमान एव नास्ति । अन्यथा ताभिरित्यवक्ष्यत् । अन्यासां दिनेष्वपि वाणी 'कृष्णात्रिलोकवनिताऽधिकरूपसारा' (१८२) इति वचनात् भारतीयोग्यदिव्यसौन्दर्यादिलक्षणभरित-योग्यतायाः स्वातन्त्र्येणेतरास्वसम्भवात् विवाहसम्भ्रमार्थं गजे दत्तेऽपि तन्नियमनार्थं यन्तुः सहैव गमनवत् प्रायः अभिमाननाशं नावाप । ईषदभिमानं सर्वदा करोत्येव । अतस्तस्या एव रमणार्थं भीमोऽपि धर्मादिषु चतुर्ष्वपि अभिविष्टः एकैककलया प्रविष्ट आसीत् । तेन कारणेन भीमस्यापि न परस्त्रीगमनशङ्का । नापि भारत्याः परपुरुषगमनशङ्केति सर्वमवदातम् । तदुक्तं भारते- 'इदं च तत्राद्भुतमुत्तमं तदा दधाति कृष्णा वपुषातिमानुषम् । महानुभावा किल साधुमध्यमा बभूव कन्यैव गते गतेऽहनि ।।'(१.२१९.२४) इति । एवं चास्मिन् श्लोके महानुभावा कृष्णा अतिमानुषं मानुषायोग्यं उत्तममद्भुतं कर्म वपुषा एकेन देहेन दधाति । किं तत् अहनि एकैकरन्तुरहनि गते गते सति मध्ये सर्वासां पातिव्रत्यरक्षणाय तत्तत्पतीनां देहाभिमानाख्यजन्म दत्त्वा कन्यैव बभूवेति वदता व्यासेनैव महासामर्थ्यवत्त्वात् अतिमानुषं मानुषायोग्यमुत्तमं एकस्याः पञ्चपुरुषसङ्गनिमित्तदोषपरिहाररूपत्वात् उत्तममद्भुतं एकस्यैव देहस्य पञ्चस्त्रीरूपत्वं तत्रापि स्वपतिना सह सम्बन्धे अभिनवोत्पत्त्या अहन्यहन्यभिनवकन्यात्वम्, कन्यात्वादेव गान्धर्वो विवाहः, स्वपतिना सह रमणम्, अन्यरमणदिने देहाभिमाननाशात् तदीयरमणाननुभवश्च इत्याद्यद्भुततमं कर्म वपुषा एकेनैव देहेन दधातीति स्फुटं समस्तशङ्कानां परिहृतत्वात् आचार्यनिरूपित-पञ्चद्रौपदीव्याख्याने न कश्चित्क्षुद्रोपद्रवः । किं बहुना 'बभूव कन्यैव गते गतेऽहनि' इति 'कन्यैव साऽभवदतः प्रतिवासरं च' इति पदविन्यासयोरप्यैकविध्यात् प्रामाणिकशिरोमणिर्ग्रन्थकारः इति ज्ञेयम् ।।

**मधुसूदनीया–** नालायन्याख्यां इन्द्रसेनां प्रति द्रौपदीजन्मनि प्रतिपुरुषसङ्गमे रुद्रदत्तं कन्यात्वं स्वयं युक्तिभिः साधयति– **कन्येत्यादिना** ।। पृथगेकैकस्याः अभिमतेरभिमानस्य प्रतिवासरं प्रतिदिनं नाशात् कारणात् चशब्देन अभिमत्युत्पत्तिरपि ग्राह्या । प्रतिदिनं अन्यस्या अभिमत्युत्पत्तेश्च जन्म मरणं चाऽभवत् । एकैकस्याः प्रतिदिनमभिमानोत्पत्तिनाशाभ्यां जन्ममरणे स्याताम् । 'जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद । विषयस्वीकृतिं प्राहुः यथा स्वप्नो मनोरथः ।। विषयाभिनिवेशेन नात्मानं यत्स्मरेन्मनः । जन्तोर्वै कस्यचिद्धेतोः मृत्युरत्यन्तविस्मृतिः ।।' इति भागवतोक्तेः (११.२२.३८-३९)। अतः प्रतिदिनमभिमानोत्पत्तेरस्याः जन्माभवत् । तस्मात्कारणात् सा कन्यैव । प्रतिदिनमभिमानोत्पत्त्या तद्विशिष्टदेहस्याप्युत्पत्तेः । कन्यैवेत्यतो न देहापेक्षया व्यभिचार इति भावः । ननु भारत्या अपि

स्ववासरातिरिक्तवासरेषु अन्यासामिव अभिमतिनाशः किमित्यत आह– **प्राय इति** ।। हिशब्दो हेत्वर्थे । ननु तर्हि भारत्याः स्ववासरातिरिक्तशच्यादिवासरेष्वप्यभिमानसद्भावे अर्जुनादिदूषितत्वं स्यादित्यत आह– **तस्मादिति** ।। तस्मात् प्रतिवारं भारत्याः प्रायो अभिमानत्यागाभावादित्यर्थः । मरुत् सकलेषु धर्मात्मजादिषु [१]अभिविष्ट आसीदित्यन्वयः । यद्वा ननु भारत्या अपि शच्यादिवदभिमाननाशं 'अतस्त्वयैकदेहत्वमिच्छामः' (ता.नि-१८.१०४) इति भारतीं प्रति पार्वत्यादिप्रार्थितं त्रिजन्मैकदेहत्व-वरभङ्गः स्यात् । देहाभिमाननाशस्यैव देहवियोगापरपर्यायमरणरूपत्वेन अत्रोच्यमानत्वेन शच्यादिदिने भारत्याः देहवियुक्तत्वेन एकदेहत्वाभावादित्यत आह– **प्राय इति** ।। हि यस्मात् पार्वत्यादिदेवीः प्रति भारत्याः स्वात्मना साकमेकदेहत्ववरो दत्तः तस्माद् वाणी अभिमतिनाशं प्रायो न अवाप । चशब्देन पार्वत्यपि प्रायो अभिमतिनाशं न अवाप । अत्र प्रायःशब्देन भारत्याः देहाभिमानसद्भावेऽपि धर्मजादिषु विषये अभिमानाभावं वायुविषयेऽभिमानसद्भावं तथा पार्वत्याः प्रतिदिनं देहाभिमानसद्भावेऽपि भारत्यादीनां स्वपतिभिः साकं सम्भोगदशायां पार्वत्या अभिमाननाशं च सूचयति । 'तासां पतित्वमास्यन्ति भारत्यैव तु पार्वती । संयुक्ता व्यवहारेषु प्रवर्तेत न चान्यथा' (ता.नि-१८.१३६) इति पूर्वाध्याये ब्रह्मणा कृष्णादेहे शच्यादितिसृणां स्वपतिमात्रयोगवरं दत्वा पार्वत्याः भारत्या साकं व्यवहारमात्रमुक्ता ।। 'नचाऽन्यथा' इति मरुता स्वभर्त्रा च सम्भोगस्य निषिद्धत्वात् । ननु तर्हि भारत्याः प्रतिदिनं अभिमाननाशाभावे धर्मार्जुनादीनां कथं भारत्याऽभिमतदेहस्पर्शाधिकार इत्यत आह– **तस्मादिति** ।। तस्मादित्येतदावृत्त्या योज्यम् । तथाहि । यस्माद्वाणी प्रायो अभिमतिनाशं नावाप तस्मात् मरुत् सकलेषु धर्मात्मजादिषु अभिविष्ट आसीदिति योज्यम् । तथाच धर्मार्जुनादीनां भारत्यभिमतदेहस्पर्शाधिकारसिद्ध्यर्थं धर्मार्जुनादिषु वायुराविष्ट आसीत् । 'यूयं च सर्वे मरुतो विशेषसंयोगहीनाः स्वशरीरसंस्थाः । स्पर्शोऽपि नास्याः पवमानपत्न्याः सुपूततालं भवतामिदानीम् ।।' (ता.नि-३२.११३) इत्युत्तरत्र धर्मार्जुनादिषु विशेषवाय्वावेशस्य तत्स्पर्शहेतुत्वोक्तेरिति भावः ।।१८४।।

**वरदराजीया**– हि यस्मात् प्रतिवासरं जन्म अभवत् । अतः कारणात् प्रतिवासरं कन्यैव अभवत् । अत एव तद्देहस्य पूर्वदिने परामृष्टत्वाभावात् न दोष इति भावः । ननु पूर्वदिवसीयजीवाभिमानसद्भावे कथमुत्तरदिवसे जीवान्तराभिमानोत्पत्तिरित्यत उक्तम्– **अभिमतेः पृथगेव नाशादिति** ।। पृथगेव उत्तरोत्तरदिने पूर्वपूर्वदिवसीयायाः अभिमतेः अभिमानस्य नाशात् मरणसाधर्म्ये प्राप्ते सति अभिमानान्तरोत्पत्त्या प्रसिद्धजन्मवत् जन्म घटते इत्यतः प्रतिवासरं कन्यैव अभवदिति भावः । ननु तत्रापि 'मारुतादन्यं न स्पृशेम' (ता.नि-१८.१०१) इति प्रार्थितत्वात् युधिष्ठिरेण भोगदिवसे पार्वत्या युधिष्ठिरेण भोगः प्राप्त इत्याशङ्क्य युधिष्ठिरादिषु मरुतः आविष्टत्वात् तेनैव साकं भोगो न युधिष्ठिरादिना इति वक्तुं मरुतस्तत्र प्रवेशकारणमाह– **प्रायो हीत्यादिना** ।। हि यस्माद् वाणी भारती अभिमतिनाशं

---

१.'अभिनिविष्टः' इति क्वचित् कोशेषु ।

प्रायः सर्वात्मना न आप तस्मात् मरुत् सकलेषु युधिष्ठिरादिषु अभिविष्टः आसीत् । भारत्याः युधिष्ठिरादिविषये अभिमतिनाशः आविष्टमरुद्विषये अभिमाननाशो नास्तीत्यभिप्रायेण 'प्रायः' इत्युक्तम् । एवं पार्वत्या अपि । तथाच पार्वत्या अपि मरुतैव भोगो नान्यैः इत्युक्तं भवति ।।१८४।।

**अनन्तभट्टीया–** ननु प्रतिदिनमभिमानिभेदेऽपि शरीरस्यैकत्वात् तस्य च परपरामृष्टत्वात् कथं परपरामृष्टेन तेन परेण रमणमित्यतः पूर्वोक्तं विवृण्वन्नाह– **कन्येति** ।। अस्यार्थः- अभिमतेरभिमानस्य प्रतिवासरंपृथगेवनाशात्कारणात्अनेनमरणमुक्तम् ।उपलक्षणश्चैतत् ।प्रतिदिनमन्यस्याभिमानजननादिति द्रष्टव्यम् । तेन जन्माभावात् । अतः प्रतिवासरं सा कन्यैवाभवत् । अतः परामृष्टशरीरेण नैव रेम इति । इतरासामिव भारत्याः अपि स्ववासव्यतिरिक्तकाले किमभिमाननाश इत्याशङ्क्य आह– **प्राय इति** ।। वाणी भारती अभिमतिनाशं नावाप । तर्हि स्ववासरव्यतिरिक्ते दिवसे [१]अर्जुनादिदूषितत्वं स्यादित्यत आह– **तस्मादिति** ।। यस्मात् प्रतिवासरं भारत्याः अभिमानसद्भावः तस्मान्मरुत् सकलेषु धर्मादिषु अभिविष्ट आसीत् ।। १८४ ।।

**लघ्वनन्तभट्टीया–** ननु तथापि सदाभिमानात् परसम्बन्धो दुर्वारः । ग्रन्थान्तरे प्रतिदिनं कन्यात्वमुक्तमित्यतो वा आह– **कन्यैवेति** ।। प्रतिवासरमित्यस्य देहलीदीपन्यायेन उभयत्र सम्बन्धः । जन्मेत्युपलक्षणम् । नाशश्च इत्यपि द्रष्टव्यम् । कुत इत्यत आह– **पृथगभिमतेरिति** ।। उपलक्षणश्चैतत् । अभिमतेरुत्प..त्यपि द्रष्टव्यम् । नचैवं अन्वहं विवाहप्रसङ्गः । देहैक्येन पाणिग्रहणस्य पूर्वमेव कृतत्वात् । ननु भारत्या अपि सर्वथा अभिमतेर्नाशोऽस्ति किं नेत्याह– **प्रायेति** ।। ममैवायं देह इत्यभिमतेरभावात् 'प्रायः' इत्युक्तम् । वाणी भारती ।।१८४।।

**जनार्दनीया–** ननु अभिमानिभेदेन भेदेऽप्यभिमन्यमानदेहस्यैकत्वात् देहापेक्षया व्यभिचारः स्यादित्यत आह– **कन्यैवेति** ।। यतः जन्माभवत् अतः सा कन्यैवाभवत् । नन्वस्याः शरीरनाशाभावात् कथं जन्माभवदित्यत आह– **अभिमतेरिति** ।। एकैकस्याः अभिमतेरभिमानस्य पृथक् प्रतिदिनं नाशादेव पूर्वपूर्वशरीरनाशोऽप्यस्तीत्यर्थः । अभिमानोत्पत्त्यपेक्षया देहस्य प्रतिदिनमुत्पत्तेः देहापेक्षयापि न व्यभिचार इति भावः । नन्वितरासामिव भारत्या अपि स्ववासरातिरिक्तकाले सर्वात्मनाभिमतिनाशः किमित्याशङ्क्याह– **प्राय इति** ।। वाणी भारती प्रायः सर्वात्मना अभिमतिनाशं नाप । हि यस्मात् तस्मात् प्रायः प्रतिदिनं भारत्या अभिमाननाशाभावात् मरुत्सकलेषु युधिष्ठिरादिषु चतुर्षु चानुविष्ट आसीत् ।।१८४।।

**ताम्रपर्णी–** जन्मेत्युपलक्षणम् । नाशश्चेति द्रष्टव्यम् । हि शब्दो हेतौ । हि यस्मात् प्रतिवासरं जन्मविनाशश्चाभवदित्यतः सा प्रतिवासरं कन्येत्यर्थः । प्रतिदिनं जन्मविनाशश्च कुत इत्यत आह–

१. अर्जुनादिभोग्यत्वं इति क्वचित् ।

**अभिमतेरिति** ।। पृथक् प्रतिदिनमभिमतेर्नाशादित्युपलक्षणम् । उत्पत्तिश्चेति ग्राह्यम् । नन्वेवं तर्हि इतरासामिव भारत्या अभिमाननाशोऽस्ति किम्? नेत्याह– **प्राय इति** ।। इतरदिनेषु 'ममैवायं देहः' इति अभिमतेरभावात् 'प्रायः' इत्युक्तम् । केशाकुलनादावभावाद्वा । ननु केशाकुलनादावभिमानाभावे 'नाशपत् धार्तराष्ट्रांश्च महापद्यपि सा ततः' (ता.नि-१८.१७) इत्युक्तिरयुक्ता । 'द्रौपद्या अप्यतिक्लेशात् क्षमा धर्मो महानभूत् । सा हि भीममनो वेद न कार्यः शाप इत्यलम्' (ता.नि-२२.३७) इति चोक्तिरयुक्तेति चेत् । केशाकुलनवस्त्रापहारादौ बुद्धिपूर्वमभिमानत्यागः स्वाभिमानतत्स्पर्शप्राप्तेः कुतोऽभिमानत्यागः कार्यः । केशाकुलनादिमहाक्लेशकारणप्रसक्तौ सत्यां शापेन तत्संहारोपपत्तेरित्यतो महाधर्मलाभाय क्षमा कृतेति तद्वाक्यतात्पर्योपपत्तेरिति द्रष्टव्यम् । युधिष्ठिरादिविषयं तस्याः बुद्धिसंमोहसद्भावात् 'प्रायः' इत्युक्तमित्याहुः । केचित्तु– प्रायः सर्वात्मनाभिमतिनाशं नावापेत्याहुः । तर्हि भारत्याः इतरदिने युधिष्ठिरादिदूषितत्वं स्यादित्यत आह– **तस्मादिति** ।। भारत्या अभिमतिनाशाभावे ज्ञापकं चाह– **तस्माच्च तस्मादेवेति** ।। हि यस्माद्वाण्यभिमतिनाशं नावाप तस्मादेव सकलेष्वनुविष्ट आसीदिति योज्यम् ।। १८४ ।।

**भारतश्री–** ननु अभिमानिभेदेऽप्यभिमन्यमानस्यैकत्वात् देहापेक्षया व्यभिचारः स्यादित्यत आह– **कन्यैवेति** ।। प्रतिवासरं च द्रौपदी कन्यैवाभवत् । यतोऽतः देहतोऽपि अन्यगात्वं नास्ति । ननु कथमेकस्यैव शरीरस्य प्रतिवासरं कन्यात्वमित्यत आह– **जन्माभवदिति** ।। हि यस्मात् तस्मादस्य देहस्य प्रतिवासरं जन्माभवत् अतः कन्यात्वं युक्तम् । शरीरस्यैकस्यैव प्रतिदिनं सर्वैः दृश्यमानत्वाद् अनुभवविरुद्धं प्रतिवासरं तज्जन्म इति चेत्, सत्यम् । देहैक्यं तथापि अभिमानिनां पृथक् पृथक् प्रतिवासरं तस्मिन् देहे पूर्वाभिमाननाशात्, उत्तराभिमतेः उत्पाद्यमानत्वादिति शेषः । तथा च प्रतिदिनमभिमानोत्पत्तिनाशापेक्षया देहस्योत्पत्तिनाशाङ्गीकारात् देहापेक्षयापि न व्यभिचार इति भावः । भारत्यामपि इतरासामिव किं नेत्याह– **प्रायो हीति** ।। प्रायः सर्वात्मना । ननु तर्हि युधिष्ठिरदिवसे भारत्याः नीचयोगः स्यादित्यत आह– **तस्मादिति** ।। हि यस्मात् मरुत्पत्नी भारती प्रायः अभिमतिनाशं नावाप तस्मात् मरुच्च सकलेषु युधिष्ठिरादिष्वनुविष्ट आसीत् ।। १८४ ।।

**चट्टि–** ननु अभिमानिचेतनभेदेऽपि अभिमन्यमानदेहस्यैकत्वात् देहापेक्षया व्यभिचारः स्यादित्यत आह– **कन्यैवेति** ।। यतः जन्माभवत् अतः सा कन्यैवाभवत् । नन्वस्याः शरीरनाशाभावात् कथं जन्माभवदित्यत आह– **अभिमतेरिति** ।। एकैकस्याः अभिमतेरभिमानस्य । पृथक् प्रतिदिनं नाशादेव पूर्वपूर्वशरीरनाशोऽप्यस्तीत्यर्थः । अभिमानोत्पत्त्यपेक्षया देहस्य प्रतिदिनमुत्पत्तेः देहापेक्षयापि न व्यभिचार इति भावः । ननु भारत्या अपि स्ववासरातिरिक्तवासरेषु अन्यासामिव सर्वात्मनाभिमतिनाशः किमित्यत आह– **प्राय इति** ।। वाणी भारती प्रायः सर्वात्मना अभिमतिनाशं नाप, हि यस्मात् तस्मात् प्रायः प्रतिदिनं भारत्या अभिमाननाशाभावात् मरुत्सकलेषु युधिष्ठिरादिषु चतुर्षु चानुविष्ट आसीत् ।।१८४।।

**धर्मात्मजादिषु मरुत् प्रतिविष्ट एषां**
**बुद्धिं [१]विमोह्य रमते सततं तया यत् ।**
**शुद्धैव सा हि तत एव दिने दिने च**
**सम्मोहतो मरणवद् भवतीह कन्या ॥१८५॥**

**व्यासतीर्थीया–** ननु युधिष्ठिरादिषु मरुतः प्रवेशेऽपि इतरवासरेषु धर्माद्यभिमृष्टत्वं स्यादित्यत आह– **धर्मात्मजादिष्विति** ॥ भारतीविषये एषां बुद्धिं विमोह्य परिहृत्य तेषां च विषये भारतीबुद्धिं विमोह्य तया रमते । ततश्च प्रायःशब्दः सार्थकः । यत् तत एव शुद्धैव हीति योजना । अभिमतेः पृथगेव नाशात् प्रतिवासरं जन्माभवत् इति यतोऽतः प्रतिवासरं सा कन्यैवाभवदित्युक्तमर्थं दृष्टान्तेन बोधयन्नाह– **दिने दिने चेति** ॥ मरणे यथा सम्मोहतः सर्वात्मनाभिमानाभावः तथेह शरीरे अभिमानाभावादभिमानरहितत्वं मरणवद्भवत्यतो दिने दिने च सा कन्या भवतीति योजना ॥ १८५ ॥

**वेदाङ्गतीर्थीया–** तेष्वाविष्टस्य मरुतो रमणप्रकारमाह– **धर्मात्मजादिष्विति** ॥ धर्मात्मजादिषु प्रतिविष्टो मरुदेषां युधिष्ठिरादीनां बुद्धिं विमोह्य तया सततं प्रतिदिनं रमते इति (यत्) यस्मात् तस्मात् तत एव धर्मात्मजादिभिः सङ्गाभावादेव । तत् सदृष्टान्तमुपपादयति– **दिने दिने चेति** ॥ दिने दिने प्रतिदिनं इह देहे एकैकस्याः मरणवत् मरणं यथा तथा सम्मोहतः कन्या भवति ॥१८५॥

**वादिराजतीर्थीया–** उक्तमर्थमेव स्फुटयति– **धर्मात्मजादिष्विति** ॥ संमोहतः देहाभिमानरहितत्वात् । 'सं' इत्युपसर्गेण देहविस्मरणेऽपि हरिस्मरणमस्तीति सूचयति ॥ १८५ ॥

**मधुसूदनीया–** नन्वितरदिनेषु धर्मात्मजादिषु मरुतः प्रवेशेऽपि तत्र प्रविष्टमरुता तैश्च भारत्या सम्भोगः प्राप्त इत्यत आह– **धर्मात्मजादिष्विति** ॥ धर्मात्मजादिषु प्रविष्टो मरुदेषां धर्मात्मजादीनां बुद्धिं विमोह्य भारतीविषये मोहयित्वा, तया भारत्याश्च बुद्धिं धर्मात्मजादिषु विषये विमोह्य परिहृत्य, तया भारत्या सततं रमत इति यत् ततः सा शुद्धैव परापरामृष्टैव । तथाच धर्मादीनां भरतीविषये बुद्धिं विमोहयित्वा अस्मत्स्त्रीभिरेव साकं अस्माभिरनुभुज्यत इति तेषां धियमुत्पाद्य तथा भारत्या अपि धर्मात्मजादिषु विषये बुद्धिं विमोह्य मत्पतिर्भीमसेनः तेनैव साकं मया भुज्यत इति तस्याऽपि बुद्धिमुत्पाद्य भारत्या भीमो रमते । प्रायस्सर्वात्मना भारत्याः युधिष्ठिराद्याविष्टवायुविषये अभिमानो वर्तत इति 'प्रायः' इत्युक्तमित्यतः सा शुद्धैवेति समुदायार्थः । अभिमतेः पृथगेवोत्पत्तेः नाशाच्च प्रतिदिनं जन्ममरणे स्यातां यतोऽतः प्रतिवासरं कन्यैवाभवदित्युक्तमर्थं दृष्टान्तमुखेन स्पष्टयति– **दिने दिने चेति** ॥ मरणवत् इत्यत्र तत्र तस्यैवेति । मरणावस्थायामिव सम्मोहतः पृथक् पृथक् सर्वात्मना अभिमानाभावात् दिने दिने सा कन्यैव भवति । तथाच यथा मरणे सर्वात्मना अभिमानाभावः तथा प्रतिदिनं एकैकस्याः अभिमाननाशेन

---

१. 'व्यपोह्य' इति लव्वनन्तभट्टीये ।

अभिमानाभावात् मरणवद्भवति । अथ च क्रमशो अभिमानोत्पत्त्या जन्मवद्भवतीति कन्यैव सा इत्युक्तं भवति ।। १८५ ।।

**वरदराजीया–** ननु युधिष्ठिरदेहे उभयोरपि विद्यमानत्वात् भारत्याश्च कृष्णादेहे अभिमानसद्भावात् उभाभ्यां भोगो प्राप्त इत्यत आह– **धर्मात्मजादिषु इति** ।। मरुत् वायुः एषां धर्मजादीनां बुद्धिं भारतीविषये विमोह्य तया कृष्णया रमते । यद्यस्मात् तस्माद्भारत्याः युधिष्ठिरादिसंस्पर्शशङ्का न कार्या । एवं पार्वत्या अपीति भावः । अभिमानभेदात् कन्यैवेत्युक्तमर्थं निगमयति– **शुद्धैवेति** ।। यतः कारणात् दिने दिने सम्मोहतः अभिमाननाशात् । यस्याः अभिमाननाशः तस्याः मरणवद्भवति । प्रसिद्धमरणमपि अभिमाननाश एवेति भावः । तत एव कारणात् अभिमानोत्पत्त्या । यस्याः अभिमानोत्पत्तिः तस्याः जन्मवद् भवतीति दिने दिने शुद्धा परपरामर्शादिदोषरहिता कन्या अभवदित्यर्थः ।।१८५।।

**अनन्तभट्टीया–** एवमपि पूर्वोक्तदोषस्तदवस्थ इत्यत आह– **धर्मजादिष्विति** ।। धर्मजादिषु प्रविष्टो मरुदेषां धर्मजादीनां बुद्धिं भारतीविषये विमोह्य, तस्याश्च बुद्धिं धर्मजादिविषये विमोह्य परिहृत्य, तया रेमे हि । धर्मजादिविषये भारत्या अभिमानाभावात् पूर्वं 'प्रायः' इत्युक्तम् । तत एव आशु सा शुद्धैव हीति योजना । अभिमतेः पृथगेव नाशात् । प्रतिवासरं जन्मभावात् । अतः कन्यैवेत्युक्तमर्थं दृष्टान्तेन बोधयन् आह– **दिने दिने चेति** ।। मरणवत् मरणे यथा मोक्षतः सर्वत्मनाभिमानाभावः तथेत्याह– शरीरे मानाभावादिति ।। मानरहितत्वं अभिमतिरहितत्वं मरणवद्भवति । अतो दिने दिने सा कन्या भवतीति योजना ।।१८५।।

**लघ्वनन्तभट्टीया–** तर्ह्यन्यसम्बन्धो दुर्वार इत्यत आह– **धर्मेति** ।। एषां धर्मादीनां बुद्धिं व्यपोह्य परिहृत्येति । उपलक्षणश्चैतत् । भारत्याः बुद्धिं धर्मादिविषये व्यपोह्येत्यपि द्रष्टव्यम् । ननु सुप्त्यादाविव संमोहश्चेत् कथं जन्म कन्यात्वश्चेत्यत सिंहावलोकनन्यायेन पूर्वोक्तं विवृणोति– **दिने दिनेति** ।।१८५।।

**जनार्दनीया–** तेष्वाविष्टस्य मरुतो रमणप्रकारमाह– **धर्मात्मजादिष्विति** ।। धर्मात्मजादिषु प्रविष्टो मरुत् एषां युधिष्ठिरादीनां बुद्धिं भारतीविषये विमोह्य, तया भारत्या सततं प्रतिदिनं रमते । यत् यस्मात् तस्मात् तत एव धर्मात्मजादिभिः सहावस्थानसमयेऽपि तत्प्रविष्टमरुतैव रमणात् शुद्धैव हि तदन्यसङ्ग-रहितैव हि । 'प्रतिवासरं कन्यैवाभवत्' इति यदुक्तं तत्सदृष्टान्तमुपपादयति– **दिने दिने चेति** ।। दिने दिने प्रतिदिनं इह देहे एकैकस्याः मरणवत् मरणे यथा मोहः तथा सम्मोहतः कन्या भवति ।।१८५।।

**ताम्रपर्णी–** तथाप्यसम्बन्धो दुर्वार इत्यत उक्तं विवृणोति– **धर्मात्मजादिष्विति** ।। भारतीविषये एषां विमोह्य परिहृत्यैव एषां च विषये भारत्याः बुद्धिं परिहृत्यैव यद्यस्मात् तया भारत्या रेमेऽतः सा भारती शुद्धैवेत्यर्थः । सुप्त्यादाविव संमोहश्चेत् कथं जन्म कन्यात्वं चेत्यतः सिंहावलोकनन्यायेन पूर्वोक्तं विवृणोति– **दिने दिन इति** ।। प्रतिदिनमिह देहमरण इव सम्मोहतः अभिमानत्यागतः कन्या भवतीत्यर्थः ।।१८५।।

**भावचन्द्रिका–** 'आवेशयुक्ता शच्याश्च' इत्यादिना यद्यपि आवेशयुक्तः तथापि ग्रहावेशवत् सुप्याद्यापादकावेशो नेत्याह– **विमोह्येति** ।। (स्वभार्यायामप्यन्यस्त्रीभावं) कुर्वन् मानसव्यभिचारीति भावः । मुद्गलदेहस्य ब्रह्मशापादेवान्यस्त्रीसङ्गात् कष्टमिति ज्ञेयम् ।। १८५-२०० ।।

**भारतश्री–** ततः किं इत्यत आह– **धर्मात्मजादिष्विति** ।। धर्मात्मजादिषु चतुर्षु प्रतिविष्टो मरुदेषां युधिष्ठिरादीनां वाणीविषये बुद्धिं विमोह्य, तया भारत्या सततं प्रतिदिनं रमते । यत् यस्मात् तस्मात् द्रौपद्याः युधिष्ठिरादिभिः सहावस्थानसमयेऽपि तत्प्रविष्टमरुतैव रमणात् सा भारती शुद्धैव । तदन्यसंसर्गाभावादिति योजना । 'हि' इत्यनेनास्यार्थस्यानेकप्रमाणप्रसिद्धिं द्योतयति । एकस्याः भोगसमये अन्यासामभिमानवर्जनं किमिव भवतीत्यत तत्र दृष्टान्तमाह– **सम्मोहत इति** ।। एकस्याः भोगसमये दिवसे इतरासां सम्मोहतः तद्देहस्मरणाभावपूर्वकमभिमतित्यागतः यथास्मदादीनां अन्यदेहे अन्यदेहेन भुज्यमाने अभिमानाभावः तथा नेत्यर्थः । मरणवद्भवति मरणमिव भवति । उपसंहरति– **भवतीह कन्येति** ।। इह अव्ययानामनेकार्थत्वात् इत्युक्तप्रकारेण दिने दिने द्रौपदी कन्यैवेत्यतो न दोष इत्यर्थः ।। १८५ ।।

**चट्टि–** ननु इतरदिनेषु धर्मात्मजादिषु मरुतः प्रवेशेऽपि तत्र प्रविष्टमरुता तैश्च भारत्या सम्भोगः प्राप्तः इत्यत आह– **धर्मात्मजादिष्विति** ।। धर्मात्मजादिषु प्रतिविष्टो मरुदेषां धर्मात्मजादीनां बुद्धिं विमोह्य भारतीविषये मोहयित्वा, तथा भारत्याश्च बुद्धिं धर्मात्मजादिषु विषये विमोह्य परिहृत्य, तया भारत्या सततं रमत इति यत् ततः सा शुद्धैव अपरामृष्टैव । तथा च धर्मात्मजादीनां बुद्धिं मोहयित्वा अस्मत्स्त्रीभिरेव साकमस्माभिरनुभुज्यते इति तेषां धियं उत्पाद्य तथा भारत्याः अपि धर्मात्मजादिविषये बुद्धिं विमोह्य मत्पतिना भीमसेनेनैव साकं मयाऽनुभुज्यते इति तस्या अपि बुद्धिं उत्पाद्य भारत्या भीमो रेमे । प्रायः सर्वात्मना भारत्याः युधिष्ठिराद्याविष्टवायुविषये अभिमानो वर्तत इति 'प्रायः' इत्युक्तमित्यतः सा शुद्धैवेति समुदायार्थः । अभिमतेः पृथगेव नाशात् प्रतिदिनं जन्माभवत् यतोऽतः प्रतिवासरं कन्यैवाभवदित्युक्तार्थं दृष्टान्तमुखेन स्पष्टयति– **दिने दिने इति** ।। दिने दिने प्रतिदिनम् । इह देहे । एकैकस्याः मरणवत् मरणे यथा सम्मोहः तथा सम्मोहतः दिने दिने कन्या भवति । तथा च यथा मरणे सर्वात्मना अभिमानाभावः तथा प्रतिदिनमेकैकस्या अभिमाननाशेनाभिमानाभावात् मरणवद्भवति । अथ च क्रमशोऽभिमानोत्पत्त्या जन्मवत् भवतीति कन्यैव सेत्युक्तं भवति ।।१८५।।

**[१]नो सुप्तिवत् त्विदमतोऽन्यवशत्वतो हि**
**देहस्य संस्मृतित एव हरेर्न मोहः ।**

---

१. 'नो सुप्तवत्' इति अनन्तभट्टीयपाठः ।

**नाऽवेशवच्च तत एव [1]मृतेः स्वरूप-**
**मेतत् त्वतः[2] प्रतिदिनं जननाद्धि कन्या ॥१८६॥**

**व्यासतीर्थीया–** नन्विदमभिमानरहितत्वं सुप्तिमोहावेशेषु यदभिमानराहित्यं तत्तुल्यं चेन्न । मरणवत् । मरणवद्भावाभावात् न प्रतिदिनं कन्येत्यत आह– **नो सुप्तिवदिति** ।। सुप्त्या तुल्यं वर्तत इति सुप्तिवत् सुप्तिसमयाभिमानराहित्यवदित्यर्थः । तदभिमानवर्जनं नो सुप्तिवत् कुतः अत इत्युक्तं विस्पष्टमाह– **अन्यवशत्वतो हि देहस्येति** ।। सुप्तशरीरस्य तद्वशत्वतः अस्य शरीरस्यान्यवशत्वतो हि कारणात् नो सुप्तिवत् अभवत् । तर्हीदं मोहवदित्यत आह– **संस्मृतित एव हरेः मोहो मोहवदिति** ।। मोहे स्मृतेरभावादत्र तु इतरासां हरेः संस्मृतित एव कारणान्न मोहः स्यात् । तर्ह्यावेशवदित्यत आह– **आवेशवदिति** ।। आविष्टस्य स्मृतेरभावादत्र तु तत एव हरेः स्मृतिभावादेव कारणान्नावेशवदित्यर्थः । अतो 'नो सुप्तिवत्' इत्यादिना यन्मरणसालक्षण्यमुपपादितं तदुपसंहरन्, मृतेः स्वरूपमेतदिति । मृतिस्वरूपं मृतिस्वरूपसदृशम् । अत्रायं प्रयोगः । विमतमभिमानवर्जनं मृतिस्वरूपं भवितुमर्हति कुतस्तत एव तस्यार्थः सुप्तिमोहावेशाभिमानाभावविलक्षणाभिमानाभावत्वात् मरणान्तरवदिति । प्रतिदिनं कन्यात्व-मुपपाद्य निगमयति– **अतः प्रतिदिनं जननाद्धि कन्येति** ।। अत अस्याभिमानवर्जनस्य मरणसालक्षण्यात् प्रतिदिनं जननात् प्रतिदिनं कन्या हीत्यर्थः ।। १८६ ।।

**वेदाङ्गतीर्थीया–** हेतुं विवृणोति– **देहस्यान्यवशत्वतो हीति** ।। सुप्तौ देहस्यान्यवशत्वाभावात् अत्र तत्सद्भावात् सुप्तिवन्नेति भावः । हरेः संस्मृतितः देहाभिमानरहितानामितरासां हरिस्मृतिसद्भावात् मोहो नैव । मूर्च्छितानां हरिस्मृत्यसद्भावात् मोहोऽयं नैवेति भावः । तत एव हि स्मृतिसद्भावात् इतरावेशवत् ग्रहाद्यावेशवच्च न । ततः उक्तप्रकारेण सुप्ताद्यवस्थात्रयवैलक्षण्यात् एतद् देहाभिमानवर्जनं मृतेः सरूपं मृतिसदृशम् । अनेन मरणवद् भवतीत्येतत् परिशेषप्रमाणसिद्धमित्युपपादितं भवति । 'प्रतिदिनं कन्यैवाभवत्' इत्येतदुपपाद्योपसंहरति– **अत इति** ।। अतः पूर्वाभिमानराहित्यस्य मरणसादृश्यात् उत्तराभिमानस्य प्रतिदिनं जननात् प्रतिदिनं कन्या हि कन्यैव ।।१८६।।

**वादिराजतीर्थीया–** एतदेव प्रपञ्चयति– **नो सुप्तिवदित्यादिना** ।। इदं अन्यपतिना अन्यस्या रमणे पत्यन्तरस्य जायमानं चेष्टितं देहस्यान्यवशत्वतः अन्यवशत्वात् अन्यवशं कृत्वा स्वाभिमानमात्र-त्यागादित्यर्थः । हरेः संस्मृतितः तदापि हरेः सम्यक् स्मरणात् सुप्तिवत् नो । अत एव मोहवत् मूर्च्छावदपि न । आवेशवत् भूतावेशवच्च न । सुप्त्याद्यवस्थात्रये[3] स्मरणस्यैवाभावात् । आसां च अन्यरमणकाले देहविस्मरणेऽपि हरिस्मरणसद्भावात् सुप्त्याद्यवस्थात्रयवदिदं नेत्यर्थः । का तर्हीयमवस्थेत्यत उक्तं एतत्तु

---

१. 'मृतेः सरूपं' इति वेदाङ्गतीर्थीयपाठः । भारतश्रीपाठोऽपि तथैव ।

२. 'एतत्त्वतः' इति मधुसूदनभिक्षवः । चर्द्रीपाठोऽपि तथा ।

३. 'सुप्त्याद्यवस्थालये' इति तौळवपाठः ।

ततः देहविस्मरणात् हरिस्मरणसद्भावाच्च मृतेरेव स्वरूपम् । मृतिसमये साधूनां देहाभिमानाभावेऽपि हरिस्मरणदर्शनात् तेन मृतिरेवेयमिति भावः । अतः पूर्वदिने मरणात् अपरदिने जननाच्च प्रतिदिनं कन्यैवाभवद्धीति योजना । हिशब्देनास्मिन्नर्थे 'इदं च तत्राद्भुतम्' इत्यादिभारतकथाप्रसिद्धिं सूचयति ।।१८६।।

**मधुसूदनीया–** ननु देहाभिमानराहित्यं सुप्तिमोहावेशेषु तुल्यं न मरणवत् । मरणवदभावे 'प्रतिदिनं कन्यैव' इति प्रागुक्तमयुक्तं स्यात् इत्यत आह– **नो सुप्तिवदिति** ।। 'तेन तुल्यं क्रिया चेद्वतिः' (सि.कौ.१७७८) इति वतिः । इदं देहाभिमानवर्जनं सुप्तिवत् । सुप्त्या तुल्यं वर्तत इति सुप्तिवत् । सुप्तिसमयाभिमानराहित्यसदृशं नो न भवतीत्यर्थः । कुत इत्यत आह– **अन्यवशत्वत इति** ।। देहस्यान्यवशत्वतः जीवान्तरवशगत्वादित्यर्थः । सुप्तशरीरस्य तु जीवान्तरवशगत्वाभावेन एतच्छरीरस्य तु जीवान्तरवशगत्वात् । सौषुप्तिकाभिमानराहित्यसमं नेति भावः । ननु तर्हि मूर्च्छावस्थाकालीनाभिमानवर्जनसमं स्यादित्यत आह– **न मोह इति** ।। कुत इत्यत आह– **हरेरिति** ।। हरेः संस्मृतितः स्मरणसद्भावात् मोहः मोहवच्च न भवति । तर्ह्यावेशवत्स्यादित्यत आह– **नावेशवच्चेति** ।। आवेशवत् पिशाचाद्यावेशवच्च न भवति । आवेशवत्कुतो न इत्यतस्तत्र हेतुमाह– **तत इति** ।। तत एव हरिस्मृतिसद्भावादेव । आवेशमूर्च्छावस्थयोस्तु हरिस्मरणाभावात् अत्रत्यस्य तु हरिस्मृतिसद्भावात् एतद्देहाभिमानवर्जनं तत्कालीनदेहाभिमानवर्जनसमं नेति भावः । 'नो सुप्तिवत्' इत्यादिना यन्मरणसालक्षण्यं उपपादितं तदुपसंहरति– **मृतेः स्वरूपमिति** ।। तत इत्यावृत्त्या योज्यम् । ततः सुप्त्यादिविलक्षणत्वान्मृतेरेव स्वरूपं मरणवदेव भवति । प्रतिदिनं एतत्त्वतः मरणसदृशाभिमाननाशवत्त्वात् कारणात् मरणवत्त्वात् तथा जननात् अभिमानोत्पत्तिमत्त्वात् कारणात् जन्मवत्त्वात् कन्या हि कन्यैव । 'हिर्हेतावधारणे' इत्यभिधानात् । तथाच विमतमभिमानवर्जनं मृतिसलक्षणम् । सुप्तिमोहावेशकालीनाभिमानाभावविलक्षणाभिमानाभावत्वात् । मरणानन्तराभिमानवर्जनवत् । नच असम्प्रज्ञातसमाध्यवस्थाकालीनाभिमानाभावे व्यभिचारः । 'देहस्यान्यवशत्वतः' इत्यनेन तद्वैलक्षण्यस्याप्युपपादितत्वादिति प्रयोगः सूचितो भवति ।।१८६।।

**वरदराजीया–** प्रतिदिनं अभिमाननाशस्य मरणसारूप्यं वक्तुं प्रसक्तप्रतिषेधं करोति– **नो सुप्तिवदित्यादिना** ।। इदं अभिमानवर्जनं सुप्तिवत् सुषुप्तिवत् नो न भवति । ततो वैलक्षण्यात् इत्युक्तम्– **अतोऽन्येति** ।। देहस्य अतः पूर्वाभिमान्यन्याभिमानिवशत्वात् । सुप्तौ च जाग्रदवस्थापन्नपूर्वाभिमानिवशतया अन्याभिमानिवशत्वाभावात् । तर्हि मूर्च्छावत् स्यादित्यत आह– **संस्मृतित इति** ।। एतत् अभिमानवर्जनं मोहोऽपि न भवति । कुतः? हरेः संस्मृतितः त्यक्ताभिमानजीवस्य तत्र विद्यमानस्य हरिस्मृत्यादिमत्त्वात् । मूर्च्छायाश्च मूर्च्छितस्य स्मृत्याद्यभावादित्यर्थः । तर्हि आवेशवत् स्यादित्यत आह– **नावेशवदिति** ।। तत एव हरेः स्मृतित एव अभिमानवर्जनं आवेशवत् ग्रहाद्यावेशवत् न भवति । त्यक्ताभिमानजीवस्य हरिस्मृत्यादिमत्वात् ग्रहाद्याविष्टस्य च स्मृत्याद्यभावेन ततो

वैलक्षण्यादिति भावः । एवं प्रसक्तप्रतिषेधं कृत्वा परिशेषसिद्धमर्थमाह– **मृतेः स्वरूपमिति** ।। अत एव एतदभिमानवर्जनं मृतेः स्वरूपं मरणमेवेत्यर्थः । अतः प्रयोगोऽपि 'एतदभिमानवर्जनं मरणविशेषो भवितुमर्हति सुषुप्तिमूर्च्छावेशस्थलीयाभिमाननाशभिन्नाभिमाननाशरूपत्वात् प्रसिद्धमरणवत्' इति । अतः पूर्वाभिमाननाशस्य मरणरूपत्वेन उत्तराभिमानोत्पत्तेः जन्मरूपत्वात् प्रतिदिनं कन्यैवेत्युपसंहारः ।।१८६।।

**अनन्तभट्टीया–** ननु इदमभिमानराहित्यं सुप्तिमोहावेशेषु यदभिमानराहित्यं तत्तुल्यं चेन्न । तर्हि मरणवत्स्यात् । मरणवत्वाभावात् न प्रतिदिनं कन्या इत्यत आह– **नो सुप्तीति** ।। इदं मरणराहित्यं अतः पूर्वजीवापेक्षया देहस्य अन्यवशत्वतः सुप्तवन्नो । इदं हरेः संस्मृतितः मोहो न भवति । इदं तत एव आवेशवच्च न । एतत् अतः मृतेः स्वरूपम् । अतः प्रतिदिनं जननात् कन्या हीत्यन्वयः । सुप्त्या तुल्यं वर्तत इति सुप्तवत् सुप्तिसमयाभिमानराहित्यवत् इत्यर्थः । कुतः? अतः । एतदेव विवृणोति– **अन्यवशत्वतो देहस्येति** ।। सुप्तिशरीरस्य प्राक्तनाभिमानिवशत्वतः प्रकृते तु प्राक्तनाभिमानिवशत्वाभावात् अन्यवशत्वाच्च । सुप्तिवन्न भवतीत्यर्थः । भवतु तर्हि इदं मोह इत्यत आह– **संस्मृतित इति** ।। मोहे स्मृतेरभावात् । अत्र तु इतरासां हरेः संस्मृतित एव कारणात् न मोहः स्यात् । तर्हि आवेश इत्यत आह– **नावेशवदिति** ।। आविष्टस्य स्मृतेरभावात् अत्र तु तत एव हरेः स्मृतित एव कारणात् नावेशवत् । उक्तमुपसंहरन् परिशेषसिद्धमाह– **तत एवेति** ।। मृतेः स्वरूपं मृतिसदृशम् । अत्रायं प्रयोगः । एतदभिमानवर्जनं मृतिस्वरूपं भवितुमर्हति सुप्तिमोहावेशाभिमानाभावविलक्षणाभिमानाभाववत्वात् मरणवदिति । प्रतिदिनं कन्यात्वमुपपाद्य निगमयति– **अतः प्रतिदिनमिति** ।। अतः अस्याभिमानाभावस्य मरणसालक्षण्यात् प्रतिदिनं जननात् प्रतिदिनं कन्या हीत्यर्थः ।।१८६।।

**लघ्वनन्तभट्टीया–** मरण इव संमोहतः सुप्त्यादाविव किं न स्यादित्यत आह– **संस्मृतित इति** ।। आवेशवत् किं न स्यादित्यत आह– **नेति** ।। तत एव पूर्वजीवस्य हरेः स्मृतित एव । यद्यावेशे स्मृतिर्वर्तते तत्र देहाभिमानोऽप्यस्तीति न काचित्कथन्ता ।।१८६।।

**जनार्दनीया–** अत इति हेतुं विवृणोति– **देहस्यान्यवशत्वतो हीति** ।। सुप्तौ देहस्यान्यवशत्वाभावादत्र तत्सद्भावात् सुप्तिवन्नेति भावः । हरेः संस्मृतितः देहाभिमानरहितानामितरासां हरिसंस्मृतिसद्भावात् मोहो नैव । मूर्च्छितानां हरिसंस्मृत्यभावादेतासां तत्सद्भावात् मोहवन्नैवेति भावः । तत एव हरिसंस्मृतिसद्भावादेव आवेशवत् ग्रहाद्यावेशवच्च न । तत उक्तप्रकारेण सुप्त्यादित्रयवैलक्षण्यात् एतद्देहाभिमानवर्जनं मृतेः स्वरूपं मृतिसदृशम् । अनेन मरणवद्भवतीत्येतत्परिशेषप्रमाणसिद्धमित्युपपादितं भवति । प्रमाणं तु- एतद्देहाभिमानवर्जनं मृतिस्वरूपं भवितुमर्हति । सुप्तिमोहावेशविलक्षणाभिमानवर्जनत्वात् प्रदृश्यमान-मरणवदिति । प्रतिदिनं कन्यैवाभवदित्येतदुपपाद्योपसंहरति– **अत इति** ।। अतः पूर्वाभिमानराहित्यस्य मरणसादृश्यात् प्रतिदिनं निरन्तरं जननात् अभिमानजननात् कन्या हि कन्यैव ।। १८६ ।।

**ताम्रपर्णी–** प्रतिदिनमभिमाननाशस्य सुप्त्याद्यवस्थागताभिमाननाशतुल्यत्वे प्रतिदिनं जन्मकन्यात्वानुपपादकत्वात् मरणावस्थागताभिमाननाशसारूप्यं प्रतिज्ञातम् । तत्परिशेषेण साधयितुं प्रसक्तप्रतिषेधं करोति– **नो सुप्तिवदित्यादिना** ।। अतः पूर्वजीवापेक्षया देहत्वान्यवशत्वादिदमभिमानवर्जनं सुप्तिवत् सुप्तिसमयभाव्यभिमानवर्जनवन्नेत्यर्थः । इदमुक्तं भवति । सुप्तावभिमाननाश एव नास्ति । किन्तु अव्यक्तिरेव । 'अव्यक्तिरेव कामानां न नाशो मोहसुप्तयोः' (३.४.स्तुत्यधिकरण) इति अनुव्याख्यानवचनात् । अत्राप्यव्यक्तिरेवेति ब्रूम इति चेत्? पूर्वजीवापेक्षया देहस्यान्यवशत्वात् अन्यथा सुप्तावपि तत्प्रसङ्ग इति । न मोहः न मूर्च्छागताभिमानवर्जनवत् । तत एव हरिस्मरणसद्भावादेव । ग्रहाद्यावेशवच्च न यत्रावेशे स्मृतिरस्ति तत्राभिमानोऽप्यस्तीति न काचित्कथन्ता । एवं प्रसक्तप्रतिषेधं कृत्वा परिशेषसिद्धमर्थमाह– **मृतेः स्वरूपमिति** ।। अत एव सुप्तिमोहावेशावस्थागताभिमानवर्जनविलक्षणाभिमानवर्जनत्वात् एतदभिमानवर्जनं मृतेः स्वरूपं मृतिस्वरूपतुल्यम् । उपसंहरति– **अत इति** ।। अतः प्रतिदिनं मरणाज्जननाच्च प्रतिदिनं कन्या । हिशब्देन प्रमाणप्रसिद्धिं द्योतयति । नन्विदमभिमानवर्जनं यथा न सुप्त्यादिवत् तथा न मरणवद्देहस्यान्यवशत्वात् हरिस्मृतेश्चेति चेत् । न वयमिदं मरणमेवेति ब्रूमः । किन्तु तत्सदृशमिति । देहस्यान्यवशत्वादिकं तु साक्षान्मरणात्मकत्वमेवाक्षिपेन्न तु सादृश्यमपि तदात्यन्तिकसादृश्यस्याभिमानविनाशस्य विद्यमानत्वात् । न चैवं वयमपि ब्रूमो न सुप्तिरेवेदं किन्तु तत्सदृशम् । देहस्यान्यवशत्वादिकं साक्षात्सुप्त्याद्यात्मकत्वमेव व्यावर्तयेत् न तत्सादृश्यमपि । तत्सादृश्यस्याभिमानविनाशस्य सत्त्वादिति वाच्यम् । सुप्त्यादावभिमानस्य प्रमितत्वेन तदव्यक्तिसत्त्वेऽपि नाशाभावात् । अत्रापि सुप्त्यादिवदभिमानाव्यक्तिरेव किं न स्यादिति चेत्? पूर्वजीवापेक्षया देहस्यान्यवशत्वात् । न हि सुप्त्यादाविवाभिमानस्य स्वरूपसत्त्वे तदुपपद्यते । ज्ञानिचरममरणे हरिस्मृतिसद्भावाद् हरिस्मरणं न मरणव्यावर्तकसारूप्यव्यावर्तकमिति न कश्चिद्दोषः ।। १८६ ।।

**भारतश्री–** मरणवद्भवतीत्युक्तम् । तं परिशेषप्रमाणप्रदर्शनपूर्वकमुपपादयति– **नो सुप्तिवदिति** ।। इदं द्रौपदीदेहे एकस्या भोगकाले अन्यासामभिमानवर्जनपूर्वकमवस्थानं सुप्तिवन्नो भवति । अतः अन्याभिमानतः । अत इति हेतुं विवृणोति– **देहस्यान्यवशत्वतो हीति** ।। अस्मदादिसुप्तौ देहस्य अन्याभिमानिवशत्वाभावात् अत्र तत्सद्भावात् सुप्तिवन्नेति भावः । हरेः संस्मृतितः देहाभिमानरहितानामितरासां हरिसंस्मृतिसद्भावात् मोहो नैव । मूर्च्छितानां हरिस्मृत्यभावात् । एतासां च तत्सद्भावात् मोहवन्नेति भावः । तत एव हरिस्मृतिसद्भावादेव आवेशवत् ग्रहस्यावेशवच्च न । ततः उक्तक्रमेण सुप्त्यादित्रयवैलक्षण्यादेतत् देहाभिमानवर्जनपूर्वकमवस्थानं मृतेः सरूपं मृतिसदृशं सम्यक् मृतिरपि न भवतीति 'मृतेस्सरूपम्' इत्युक्तम् । अनेन मरणवद्भवतीत्येतत् परिशेषप्रमाणसिद्धमित्युक्तं भवति । अनेनात्रेदमनुमानमपि प्रमाणं सूचितम् । एतत् देहाभिमानवर्जनं मृतिसदृशं भवितुमर्हति सुप्तिमोहावेशविलक्षणाभिमानवर्जनत्वात् व्यतिरेकेण देवदत्तजाग्रद्वत् । परमप्रकृतमुपसंहरति– **प्रतिदिनमिति** ।। अत इति शेषः । अतः पूर्वाभिमानराहित्यस्य मरणसादृश्यात् प्रतिदिनं निरन्तरं जननात् अभिमानजननात् कन्या कन्यैव भवति । अतो न काप्यनुपपत्तिः ।। १८६ ।।

**चट्टि–** ननु देहाभिमानराहित्यं सुप्तिमोहावेशेषु तुल्यं चेन्न । मरणवत् । मरणवदभावे 'प्रतिदिनं कन्या' इति प्रागुक्तमयुक्तं स्यादित्यत आह– **नो सुप्तिवदिति** ।। 'तेन तुल्यं क्रिया चेद् वतिः' इति वतिः । इदं देहाभिमानवर्जनं सुप्तिवत् सुप्त्या तुल्यं वर्तत इति सुप्तिवत् । सुप्तिसमयाभिमानराहित्यसदृशं नो भवतीत्यर्थः । कुत इत्यत आह– **अन्यवशत्वतो हीति** ।। देहस्यान्यवशत्वतः जीवान्तरवशगत्वादित्यर्थः । सुप्तशरीरस्य जीवान्तरवशगत्वाभावात् एतच्छरीरस्य तु जीवान्तरवशगत्वात् सौषुप्तिकाभिमानराहित्यसमं नेति भावः । ननु तर्हि मूर्च्छावस्थाकालीनाभिमानवर्जनसमं स्यादित्यत आह– **न मोह इति** ।। कुत इत्यत आह– **हरेरिति** ।। हरेः संस्मृतितः स्मरणसद्भावात् मोहः मोहावच्च न भवति । तर्हि आवेशवत् स्यादित्यत आह– **नावेशवच्चेति** ।। आवेशवच्च पिशाचाद्यावेशवच्च न भवति । आवेशवच्च कुतो न इत्यतः तत्र हेतुमाह– **तत इति** ।। तत एव हरिस्मृतिसद्भावादेव आवेशमूर्च्छावस्थयोस्तु हरिस्मृत्यभावात् अत्रत्यस्य तु हरिस्मृतिसद्भावादेतद्देहाभिमानवर्जनं तत्कालीनदेहाभिमानवर्जनसमं नेति भावः । 'नो सुप्तिवत्' इत्यादिना यन्मरणसालक्षण्यमुपपादितं तदुपसंहरति– **मृतेः स्वरूपमिति** ।। 'ततः' इत्यावृत्त्या योज्यम् । सुप्त्यादिविलक्षणत्वात् मृतेरेव स्वरूपं मरणवदेव भवति । एतत्त्वतः मरणसदृशाभिमाननाशवत्वात् कारणात् प्रतिदिनं जननात् जन्मवत्वात् कन्या हि कन्यैव । 'हिर्हेतावववधारणे' इत्यभिधानात् । तथा च विमतं अभिमानवर्जनं मृतिसलक्षणं सुप्तिमोहावेशाभिमानाभावविलक्षणाभिमानाभावत्वात् मरणानन्तराभिमानवर्जनवत् । न चासम्प्रज्ञातसमाध्यवस्थाकालीनाभिमानाभावे व्यभिचारः । 'देहास्यान्यवशत्वतः' इत्यनेन तद्वैलक्षण्यस्याप्युपपादितत्वात् इति प्रयोगः सूचितो भवति ।। १८६ ।।

**एवं स वायुरनुविष्टयुधिष्ठिरादि-**
**भीमात्मनैव रमते सततं तयैकः ।**
**अन्यादृशा[१] हि सुरभुक्तिरतोऽन्यरूपा**
**मानुष्यभुक्तिरिति नात्र विचार्यमस्ति ।।१८७।।**

**व्यासतीर्थीया–** ननु युधिष्ठिरादिषु चतुर्ष्वाविष्टो मरुत् तेषां बुद्धिं विमोह्य कृष्णया प्रतिदिनं रमते चेत् युधिष्ठिरादीनां स्वभार्याधिगमो नास्तीति प्राप्तम् । तच्छिववरविरुद्धमिति शङ्कां युधिष्ठिरादेः भारतीविषय एव मोहो नतु स्वभार्याविषयेऽपि अतो नोक्तदोष इत्यभिप्रेयन्, 'धर्मात्मजादिषु' इत्युक्तं स्पष्टयति– **एवमिति** ।। एवं तेषां बुद्धिं विमोह्य इत्युक्तप्रकारेण अनुविष्टा युधिष्ठिरादयो येन तदनुविष्टयुधिष्ठिरादि तेन भीमात्मना चैक एव सततं तया रमत इत्यर्थः । ननु युधिष्ठिरादिदेहे युधिष्ठिरादिर्मरुच्च इति द्वौ तिष्ठतः । एवमर्जुनादिदेहेष्वपि । कृष्णाशरीरे च भारती स्वस्वदिने श्यामलादिष्वेकेति प्रतिदिनं द्वे स्त्रियौ तिष्ठतः । तर्हि कथं भारतीमपोह्य युधिष्ठिरादिः स्वस्त्रियः मरुच्च

१. 'अन्यादृशी हि' इति वेदाङ्गतीर्थानां पाठः ।

भारतीमन्याश्च भुञ्जीत इत्यत आह– **अन्यादृशा हीति** ।। इति सुरमानुष्यभुक्त्योः विलक्षणत्वादत्र विचार्यं नास्तीत्यर्थः ।। १८७ ।।

**वेदाङ्गतीर्थीया–** 'धर्मात्मजादिषु मरुत् प्रतिविष्टः' इत्युक्तमुपपादयति– **एवमिति** ।। अनुविष्ट-युधिष्ठिरादिभीमात्मना । अनुविष्टाः युधिष्ठिरादयो येन सः अनुविष्टयुधिष्ठिरादिः । स चासौ भीमात्मा चेति अनुविष्टयुधिष्ठिरादिभीमात्मा तेन । अनुविष्टयुधिष्ठिरादिचतुःस्वरूपैर्भीमरूपेण चेति भावः । ननु यदि युधिष्ठिरः तदनुविष्टो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेष्वपि । कृष्णादेहे च भारती स्वयमन्याश्च देव्यस्तिष्ठन्ति । तत्र युधिष्ठिरादयस्तु कृष्णादेहगतस्वस्वभार्याभिरेव रमन्ते । तेष्वाविष्टो वायुस्तु भारत्या अन्याभिश्च रमत इत्येतत् कथं घटते इत्यत आह– **अन्यादृशी हीति** ।। सुरभुक्तिः सुरभोगः अन्यादृशी मनुष्यभोगविलक्षणा इति हेतोः, अत्र उक्तार्थे विचार्यं घटते न वेति विचारविषयः नास्ति । निश्चित एवेति भावः ।।१८७।।

**वादिराजतीर्थीया–** 'अनुविष्टयुधिष्ठिरादिभीमात्मनैव' इत्यत्र अनुविष्टः युधिष्ठिरादिः येनांशेन सोऽनुविष्टयुधिष्ठिरादिः । अनुविष्टयुधिष्ठिरादिना अंशेन भीमात्मना भीमरूपेण च एको वायुः तयैव भारत्यैव रमत इति योजना । 'वपुषाऽतिमानुषम्' इति भारतोक्तातिमानुषपदतात्पर्यमाह– **अन्यादृशेति** ।।१८७।।

**मधुसूदनीया–** 'धर्मराजादिषु मरुत्प्रविष्टः' इत्युक्तमर्थमुपसंहरति– **एवमिति** ।। अनुविष्टाः युधिष्ठिरादयो येन सः अनुविष्टयुधिष्ठिरादिः । अनुविष्टयुधिष्ठिरादिश्च भीमश्च तावेवात्मा स्वरूपं यस्य सः अनुविष्टयुधिष्ठिरादिभीमात्मा तेन । युधिष्ठिराद्याविष्टचतुःस्वरूपैः भीमरूपेण च एक एव तया भारत्या एव सततं रमत इत्यन्वयः । ननु युधिष्ठिरदेहे युधिष्ठिरस्तदाविष्टो मरुच इति द्वौ तिष्ठतः । एवमर्जुनादिदेहेऽपि द्वौ तिष्ठतः । एवं कृष्णादेहेऽपि भारतीदिने भारती । श्यामलादिदिनेषु भारती श्यामला च इत्यादि प्रकारेण प्रतिदिनं द्वे स्त्रियौ तिष्ठतः । तत्र युधिष्ठिरो भारतीमपोह्य स्वस्त्रियं तत्राविष्टो मरुद्भारतीमेव रमते इत्यादिकं कथं घटत इत्यत आह– **अन्यादृशा हीति** ।। सुरभुक्तिः सुरभोगः अन्यादृशा मनुष्यभोगादि-विलक्षणा । मानुष्यभुक्तिः अतः सुरभोगात् अन्यरूपा विलक्षणः इति हेतोः, अत्र उक्तार्थो विचार्यं युक्तमयुक्तं वा इति विचारविषयो नास्ति इत्यन्वयः । किन्तु युक्तमेवेति निश्चेतव्यमिति भावः ।

अत्र व्यासतीर्थास्तु- 'ननु युधिष्ठिरादिदेहे युधिष्ठिरादिः मरुतश्च इति द्वौ तिष्ठतः । कृष्णादेहे भारती स्वस्वदिने श्यामलादिषु एकैका इति द्वे स्त्रियौ तिष्ठतः । तत्र भारतीमपोह्य युधिष्ठिरादिः स्वस्त्रियं मरुच भारतीमन्याश्च भुङ्क्ते इत्येतत् कथमित्यत आह– **अन्यादृशा हीति** ।।' इति व्याचक्षते ।

वेदाङ्गतीर्थास्तु– 'ननु युधिष्ठिरादिदेहे युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेष्वपि तिष्ठतः । कृष्णाहेदेऽपि भारती अन्यदेव्यश्च तिष्ठन्ति । युधिष्ठिरादयस्तु कृष्णादेहगतस्वभार्याः एव रमन्ते ।

तेष्वाविष्टो वायुस्तु भारत्या अन्याभिश्च रमत इत्येतत् कथं घटते इत्यत आह– **अन्यादृशी हीति** ।।' इति व्याकुर्वते ।

अनन्तभट्टारकास्तु– 'ननु युधिष्ठिरदेहे युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेष्वपि तिष्ठतः । कृष्णादेहेऽपि भारती स्वस्वदिनेषु श्यामलादिष्वन्यतमैवेत्येवं प्रतिदिनं द्वे स्त्रियौ तिष्ठतः । एवं सति कथं युधिष्ठिरो भारतीमपोह्य स्वस्त्रियं मरुच्च भारतीमन्यां चानुभवतीत्यत आह– **अन्यादृशा हीति** ।।' इति व्याचक्षते ।

वरदराजाचार्यास्तु– ''ननु 'तत्रापि मारुतादन्यं न स्पृशेम' इति प्रार्थितत्वाद्युधिष्ठिरेण भोगदिवसे पार्वत्या युधिष्ठिरेण भोगः प्राप्त इत्याशङ्क्य युधिष्ठिरादिषु मरुतः आविष्टत्वात् तेनैव साकं भोगः, न युधिष्ठिरादिना इति वक्तुं मरुतः तत्र प्रवेशकारणमाह– **प्रायो हीत्यादिना** ।। भारत्या युधिष्ठिरादिविषयेषु अभिमतिनाशः तदाविष्टमरुद्विषये अभिमतिनाशो नास्तीत्यभिप्रायेण 'प्रायः' इत्युक्तम् । एवं पार्वत्या अपि । तथाच पार्वत्या अपि मरुता एव भोगो नान्यैः इत्युक्तं भवति ।। **धर्मात्मजादिष्विति** ।। यस्मात् धर्मादीनां बुद्धिं भारतीविषये विमोह्य कृष्णया वायुरेव रमते, तस्मात् भारत्याः युधिष्ठिरादिसंस्पर्शशङ्का न कार्या । एवं पार्वत्या अपीति भावः । ननु धर्मराजादिषु मरुदेवाऽविष्टो रमत इत्युक्तमयुक्तम् । शिवेन शच्यादीनां पतियोगवरस्य दत्तत्वेन स्वभर्तृभिः भोगस्य वक्तव्यत्वादित्यतो 'धर्मात्मजादिषु' इत्युक्तं विवृणोति– **एवमिति** ।। एवं च विशेषणीभूतानां युधिष्ठिरादीनामपि भोगो अस्त्येव इत्युक्तं भवति । तथाच 'एषां बुद्धिं विमोह्य' इत्यत्र भारतीपार्वतीविषये तेषां बुद्धिं विमोह्य इत्यभिप्राय उक्तो भवति । तथाच ब्रह्मणो अन्यगामित्वरूपशापः, स्वपतिप्राप्तिरूपशिववरः, 'तत्रापि मारुतादन्यं न स्पृशेम' इत्यादि शच्यादिप्रार्थनफलम्, 'स्वार्थे पतियोगवरो मृषा भवेत्' इति रुद्रं प्रति ब्रह्मवचनश्च इत्यादि सर्वं घटत इत्याशयः । ननु तथापि युधिष्ठिरादिदेहे युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिष्वपि । कृष्णादेहे च भारतीपार्वत्योः स्वस्वदिने श्यामलादिष्वन्यतमैरित्येवं प्रतिदिनं तिस्रस्तिष्ठन्ति । एवञ्च सति कथं युधिष्ठिरादिः भारतीं पार्वतीं चापोह्य स्वस्त्रियमेव रमते । मरुत्तु भारतीमन्यां च इत्येतत्कथं घटत इत्यत आह– **अन्यादृशा हीति** ।।'' इति व्याचक्षते । तदेतद्व्याख्यानचतुष्टयं चिन्त्यम् ।

'विलासं दर्शयामासुः ब्रह्मणः पश्यतोऽधिकम् । शशाप तास्तदा ब्रह्मा मानुषीं योनिमाप्स्यथ ।। तत्रान्यगाश्च भवतेत्येवं शप्ताः सुराङ्गनाः ।।' (ता.नि-१८.९८-९९) इति पूर्वाध्याये 'मानुषीं योनिमाप्स्यथ' 'तत्रान्यगाश्च भवत' इत्येकवचनेन एकदेह एव अन्यगामित्वशापकथनात् । तस्य चेन्द्रसेनादेहे जातत्वात्, 'ब्रह्मणैव च शप्ताः स्मः' इत्यादेस्तु त्रिष्वपि जन्मसु एकेदहत्वमात्रप्रतिपादकत्वेन जन्मत्रयेऽप्यन्यगामित्वप्रतिपादकत्वाभावात् रमणप्रसङ्गेऽपि देवीनां वायुसंयोगप्रतिपादकपदादर्शनाच्च कृष्णाजन्मनि अन्यगामित्वे च 'अभिमतेः पृथगेव नाशात्' इति सामान्यतो भारतीरमणदिनेऽपि अभिमतनाशोक्तिवैयर्थ्यात् । न च शच्यादितिसृणां दिनेष्वेव शच्यादितिसृणां यथाक्रमं अभिमान-

नाशोऽनेन उच्यते, न तु भारतीदिनेऽपि तासामिति वाच्यम् । विनिगमकाभावात् । भारतीदिने तासां अभिमतिनाशाद्यभावे जन्माद्यभावेन तासां कन्यात्वाभावापत्तेश्च । पञ्चदेवीनामपि रमणोक्तेः अभिप्रेतत्वे पञ्चस्वरूपा रेम इत्युक्त्यापत्तेश्च । 'चतुःस्वरूपा' इत्युक्त्ययोगाच्च । 'प्रायो नाभिमतिनाशम्' इत्यनेन भारत्याः स्ववासरातिरिक्तवासरेष्वपि अभिमानसद्भावमुक्त्वा 'विमोह्य रमते सततं तया यत्' इति 'तया' इत्येकवचनेन भारत्या एव मरुता साकं भोगस्य उक्तत्वाच्च । 'अनुविष्टयुधिष्ठिरादिभीमात्मनैव सततं रमते तयैव' इत्यत्रापि 'तयैव' इत्येकवचनेन भारत्या एव मरुत्सम्भोगकथनात् । 'मृषा वाग्येषु ते प्रोक्ता मारुताद्यास्तु तेऽखिलाः । तासां पतित्वमाप्स्यन्ति भारत्यैव तु पार्वती ।। संयुक्ता व्यवहारेषु प्रवर्तेत न चान्यथा ।।'(ता.नि-१८.१३५-१३६) इत्यादिना पूर्वाध्यायेऽपि 'तासां पतित्वमाप्स्यन्ति' इति कृष्णादेहे तासां स्वपतिमात्रसम्भोगस्य भारत्या साकं पार्वत्या व्यवहारमात्रस्य च कथितत्वेन पार्वत्या अपि कृष्णादेहे अन्यगामित्वस्य कथनात् । अन्यथा- 'स आज्ञया ब्रह्मण आह कृष्णां क्रमात् कर्तुं भीम एवैकसंस्थाम् । अन्या देवीः स्वापयित्वा शरीरे तस्या भारत्याः पूर्णभोगार्थमेव ।।' (ता.नि-२०.१४९) इत्युत्तराध्याये, 'अन्या देवीः स्वापयित्वा' इति वचनं विरुद्धं स्यात् । किञ्च- 'स्प्रष्टुं च संस्कारवशादियेष निषिध्य तं प्राह सुराधिराजः । एषा हि साक्षाज्जगतां प्रियस्य प्राणात्मनो जीववरेश्वरस्य ।। प्राणप्रिया श्रीरिति नाम यस्याः शमात्मकेऽस्मिन् रमते यदेषा । युष्मच्चतुर्देहगतस्य वायोर्वायुप्रिया भीमतनोस्तथैव ।। भोगाय सृष्टा पुरुषोत्तमेन युष्मत्प्रियार्थं भवतां च दारैः ।। प्रीतिस्ततो ह्यभ्यधिका बभूव भीमस्य चास्यास्तदनु स्म पार्थे ।। ततो भवत्स्वेव यथाक्रमेण गुणानुसारेण समीरणस्य । एषा हि सा शुद्धतनुः प्रजाता शच्यादियोगापगताग्र्यदेहा ।। यूयं च सर्वे मरुतो विशेषसंयोगहीनाः स्वशरीरसंस्थाः । स्पर्शोऽपि नास्याः पवमानपत्न्यास्सपूततालं भवतामिदानीम् ।।' इति (१०९-११३) द्वात्रिंशाऽध्याये । 'युष्मत्प्रियार्थं भवतां च दारैः साकं सृष्टा' इत्यनेन शच्यादीनां स्वपतिमात्रभोगस्यैवाऽवगमात् । 'यूयं च सर्वे मरुतो विशेषसंयोगहीनाः' इत्यनेन श्लोकेन भारतीप्रविष्टदेहस्य स्पर्शाधिकारसिद्ध्यर्थमेव धर्मजादिषु मरुदावेशस्य उक्तत्वेन पार्वतीसम्भोगार्थं धर्मजादिषु मरुदावेशस्याकथनाच्च इति सम्प्रदायविदः ।। १८७-१९१ ।।

**वरदराजीया–** ननु 'धर्मजादिषु मरुदेवाविष्टो रमते' इत्युक्तम् । शिवेन शच्यादीनां पतियोगवरस्य दत्तत्वेन स्वभर्तृभिः योगस्य वक्तव्यत्वादित्यतो धर्मजादिष्वित्युक्तं विवृणोति– **एवमित्यादिना** ।। अनुविष्टाः युक्ताः युधिष्ठिरादयः येन सः तेन रूपेण, भीमात्मना भीमस्वरूपेण च वायुः तया रमते । एवञ्च विशेषणीभूतानां युधिष्ठिरादीनामपि भोगोऽस्त्येवेत्युक्तं भवति । तथा च 'एषां बुद्धिं विमोह्य' इत्यत्र भारतीपार्वतीविषये तेषां बुद्धिं विमोह्येति अभिप्राय उक्तो भवति । तथा च ब्रह्मणोऽन्यगामित्वरूपो शापः, शिवस्य स्वपतिप्राप्तिरूपो वरः, 'तत्रापि मारुतादन्यं न स्पृशेम' इत्यादि शच्यादीनां प्रार्थनाफलम्, 'स्वार्थे पतियोगवरो मृषा भवेत्' इति रुद्रं प्रति ब्रह्मवचनञ्च इत्यादि सर्वं सङ्गच्छते इत्याशयः । ननु तथापि युधिष्ठिरदेहे युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवं अर्जुनादिष्वपि । कृष्णादेहे च भारतीपार्वत्यौ स्वस्वदिने श्यामलादिष्वन्यतमा इत्येवं प्रतिदिने स्वस्त्रियः तिष्ठन्ति । एवञ्च सति कथं युधिष्ठिरादिः

भारतीं उमां च अपोह्य स्वस्त्रियमेव रमते । मरुत्तु भारतीमन्यां च अनुभवतीत्येतत् घटत इत्यत आह– **अन्यादृशा हीति** ।। सुराणां भुक्तिः भोगो अन्यदृशा लोकविलक्षणा । मानुष्यभुक्तिः मनुष्याणां भुक्तिः अतः सुरभुक्तेः अन्यरूपा विलक्षणा इति हेतोः । अत्र भोगविषये विचार्यं कथञ्चन नास्ति । अतो लोकवैलक्षण्यं भूषणमेवेति भावः ।।१८७।।

**अनन्तभट्टीया–** ननु युधिष्ठरादिषु आविष्टो मरुत् कृष्णायां रमते चेत् युधिष्ठिरादीनां स्वभार्याधिगमो नास्तीति प्राप्तम् । तत् एकदेहत्वेऽपि स्वपतिप्राप्तिरूपशिवदत्तवरविरुद्धं इत्याशङ्क्य युधिष्ठिरादेर्भारतीविषये मोहः नतु स्वभार्याविषये इत्यभिप्रेत्य 'धर्मात्मजादिषु' इत्युक्तं स्पष्टयति– **एवमिति** ।। एवं धर्मात्मजादिष्वित्युक्तप्रकारेण अनुविष्टा युधिष्ठिरादयो येन तेनैव भीमात्मना एक एव तया रमत इत्यर्थः । ननु युधिष्ठिरदेहे युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेष्वपि द्वौ तिष्ठतः । कृष्णादेहे च भारती स्वस्वदिनेषु श्यामलादिष्वन्यतमेत्येवं प्रतिदनं द्वे स्त्रियौ तिष्ठतः । एवं सति कथं युधिष्ठिरो भारतीमपोह्य स्वस्त्रियं मरुच्च अन्यामपोह्य भारतीं चानुभवतीत्यत आह– **अन्यादृशा हीति** ।। अतः सुरभुक्तेः मनुष्यभुक्तेर्विलक्षणत्वात् । अत्र विचार्यं नास्ति । कथन्ता न कर्तव्येत्यर्थः ।। १८७ ।।

**लघ्वनन्तभट्टीया–** उपसंहरति– **एवमिति** ।। अनुविष्टयुधिष्ठिरादयो येनेति विग्रहः । युधिष्ठिरादीन् अनुविष्ट इति वा । तया भारत्या । ननु अर्जुनादिदेहे अर्जुनो वायुश्चेति द्वौ तिष्ठतः । एवं शच्यभिमन्यमानदेहे शची भारती चेति द्वे तिष्ठतः । तथाच शच्या इन्द्रसम्बन्ध एव भारत्या वायुसम्बन्ध एव इति व्यवस्था कथमित्यत आह– **अन्यादृशेति** ।। शुद्धभारतीदेहत्वाभावात् न कश्चित् क्षुद्रोपद्रव इति रहस्यम् । टीकासु तु एते श्लोका प्रकारान्तरेण व्याख्याताः । शच्यादीनां वायुसम्बन्धश्चोक्तः ।।१८७।।

**जनार्दनीया–** 'धर्मात्मजादिषु मरुत्प्रविष्टः' इत्युक्तमुपसंहरति– **एवमिति** ।। अनुविष्टयुधिष्ठिरादि-भीमात्मना अनुविष्टाः युधिष्ठिरादयो येन सः अनुविष्टयुधिष्ठिरादिः, अनुविष्टयुधिष्ठिरादिश्च भीमश्च तावेव आत्मा स्वरूपं यस्य सः अनुविष्टयुधिष्ठिरादिभीमात्मा तेन । युधिष्ठिराद्याविष्टचतुःस्वरूपैः भीमरूपेण चेति भावः । ननु युधिष्ठिरदेहे युधिष्ठिरस्तदाविष्टो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेऽपि द्वौ तिष्ठतः । एवं कृष्णादेहेऽपि भारती स्वयं स्वस्वदिने श्यामलादिष्वन्यतमेत्येवं प्रतिदिनं द्वे स्त्रियौ तिष्ठतः । एवं सति युधिष्ठिरः भारतीमपोह्य स्वस्त्रियं, तेष्वाविष्टो मरुद्भारतीं रमत इत्येतत्कथं घटत इत्यत आह– **अन्यादृशा हीति** ।। सुरभुक्तिः सुरभोगः अन्यादृशा मानुष्यभोगविलक्षणः । मनुष्यभुक्तिः अतः सुरभोगात् अन्यरूपा विलक्षणा । इति हेतोरत्रोक्तार्थे न वेति विचारविषयो नास्ति । निश्चय एवेति भावः ।

केचिट्टिप्पणीकाराः- 'कृष्णाजन्मनि अपि अन्यगात्वम्' इति व्याकुर्वन्ति । तेषामभिप्रायं न जानीमः । 'विलासं दर्शयामासुः' इत्यादिना एकस्मिन् जन्मन्यगात्वमिति आचार्यैः दर्शितम् । 'ब्रह्मणैव हि शप्ताः स्मः' इत्यादिना त्रिषु जन्मस्वेकदेहत्वं दर्शितम् । रमणप्रसङ्गेऽपि देवीनां मरुतः सङ्गो न दर्शितः । कृष्णाजन्मनि अन्यगात्वं चेत्तर्हि युधिष्ठिररमणदिवसे श्यामलायाः युधिष्ठिरेण युधिष्ठिरस्थवायुनापि

सम्बन्धः । शच्यादीनां वायोः केवलं सम्बन्धः स्यात् । भीमरमणदिने भीमेनैव सर्वासां च । तथा अर्जुनरमणदिने शच्या अर्जुनेन तत्स्थवायोः सम्बन्धः । शच्यादिसर्वासां तथा नकुलसहदेवयोश्च इत्युपपत्तेः । 'अभिमतेः पृथगेव नाशात्' इत्युक्तिर्वृथा स्यात् । तस्मात् कृष्णाजन्मनि अन्यगात्वं न घटत इति प्रतीयते ।।१८७।।

**ताम्रपर्णी–** एवं शच्यादीनामभिमानोत्पत्तिनाशवशात् कन्यात्वमुपपाद्य, शुद्धत्वमभिधायोपसंहृत्य अत्यक्ताभिमानाया अपि भारत्याः शुद्धत्वं घटकोक्त्या निरूपितमुपसंहरति– **एवमिति** ।। एवं धर्मात्मजादिषु मरुत्प्रविष्ट इत्युक्तरीत्या अनुविष्टा युधिष्ठिरादयो येनेति विग्रहः । तया भारत्या यतोऽतः सा भारत्यपि एवं श्यामलादिवच्छुद्धेति शेषो वा । नन्वर्जुनादिदेहे अर्जुनो वायुश्चेति द्वौ तिष्ठतः । एवं चाभिमानिदेहे शचीभारती चेति द्वौ तिष्ठतः । तथा च शच्या इन्द्रसम्बन्ध एव भारत्या वायुसम्बन्ध एवेति व्यवस्था कथम्? न चार्जुनादीनां भारत्यंशे मोहात् शच्यादीनां भीमे मोहात् नानुपपत्तिरिति वाच्यम् । भीमस्य मोहाभावेन शच्यादियोगस्यावर्जनीयत्वादित्यत आह– **अन्यादृशा हीति** ।। ननु यत्तावदुक्तं 'प्रतिदिनं जन्माऽभवत्' इति तदयुक्तमाभाति । प्रत्यहं विवाहप्रसङ्गात् । न च देहैक्येन न कन्यात्वं विवाहप्रतिबन्धकमिति वाच्यम् । तर्हि देहैक्यमादायान्यगात्वस्यापि प्राप्तेरिति चेन्मध्ये मध्ये कन्यात्वप्राप्तावपि प्राथमिकपाणिग्रहाविरोधेन भोगस्य देवतासूपपत्तेरिति तदेतदाह– **अन्यादृशा हीति** ।।

ननु 'अन्यवशत्वतो देहस्य' इत्ययुक्तमिव प्रतीयते । अनेककर्मनिर्मितशरीरे कदाचिदेकस्याभिमाना-भावेनाभोगः एकस्यास्तद्भावेन भोग इत्यनुपपत्तेरिति चेत्? देवभोगस्यान्यादृशत्वादिदमप्याह– **अन्यादृशा हीति** ।। ननु 'भारत्यैव च पार्वती । संयुक्ता व्यवहारेषु' (ता.नि-१८.१३६) इत्युक्त्या भारतीदिने पार्वत्या अभिमानस्य वक्तव्यत्वेन वायुसम्बन्धो दुर्वार इति चेत् । देवताभुक्तेर्मानुषभुक्त्यतिविलक्षणत्वात् पार्वत्याः सत्यप्यभिमाने तदभोगोपपत्तेस्तदिदमप्याह– **अन्यादृशा हीति** ।। टीकास्वेते श्लोकाः प्रकारान्तरेण व्याख्यताः । शच्यादीनां वायुसम्बन्धश्चोक्तः ।।१८७।।

**भारतश्री–** 'धर्मात्मजादिषु मरुत्प्रविष्टः' इत्युक्तमुपसंहरति– **एवमिति** ।। अनुविष्टयुधिष्ठिरादि-भीमात्मना अनुविष्टा युधिष्ठिरादयो येन सः अनुविष्टयुधिष्ठिरादिः, अनुविष्टयुधिष्ठिरादिश्च भीमश्च तावात्मा स्वरूपं यस्य सः अनुविष्टयुधिष्ठिरादिभीमात्मा तेन । युधिष्ठिराद्याविष्टचतुःस्वरूपेण भीमेन चेति भावः । ननु युधिष्ठिरदेहे युधिष्ठिरः तदाविष्टो वायुश्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेऽपि । एवं कृष्णादेहेऽपि भारती स्वयं स्वस्वदिने श्यामलादिष्वन्यतमेत्येवं प्रतिदिनं द्वे स्त्रियौ तिष्ठतः । एवं सति युधिष्ठिरः भारतीमपोह्य स्वस्त्रियं रमते । तदाविष्टो मरुत् भारतीं रमत इत्येतत्कथं घटते? अस्मदादिष्वदृष्टत्वादित्यत आह– **अन्यादृशा हीति** ।। सुरभुक्तिः सुरभोगः अन्यादृशा मनुष्यभोगविलक्षणा । मानुष्यभुक्तिः अतः सुरभोगात् अन्यरूपः विलक्षण इति हेतोरत्रोक्तार्थे युक्तिः न घटतीति विचारविषयो नास्ति । अतः यदुक्तं तत्सर्वं सङ्गत एवेत्यर्थः ।

केचिट्टिप्पणिकारास्तु- 'कृष्णाजन्मन्यपि अन्यगात्वम्' इति व्याकुर्वन्ति । तेषामभिप्रायं न जानीमः। 'विलासं दर्शयामासुः' इत्यादिना एकस्मिन् जन्मन्यन्यगात्वं आचार्यैः दर्शितम् । 'ब्रह्मणैव हि शप्ता स्मः' इत्यादिना त्रिषु जन्मसु एकदेहत्वं दर्शितम् । रमणप्रसङ्गेऽपि देवीनां मरुतः सङ्गो न दर्शितः । कृष्णाजन्मन्यप्यन्यगात्वं चेत् तर्हि युधिष्ठिररमणदिवसे श्यामलायाः युधिष्ठिरस्थवायुनापि सम्बन्धः । शच्यादीनां वायोः केवलं सम्बन्धः स्यात् । भीमरमणदिने भीमेनैव सर्वासां च । तथाऽर्जुनरमणदिने शच्या अर्जुनेन सम्बन्धः तत्स्थवायोः सम्बन्धश्च । श्यामलादीनां केवलं वायुना सम्बन्धः । तथा नकुलसहदेवयोश्च। तथा सति 'अभिमतेः पृथगेव नाशः' इत्याद्युक्तिः वृथा स्यात् । तस्मात् कृष्णाजन्मन्यन्यगात्वं न घटते इति प्रतीयते ।। १८७ ।।

**भावचन्द्रिका–** *..तनुर्येषां ते ईरार्धतनवः । तेषां भावस्तत्वं तस्मात् । कोऽर्थः युधिष्ठिरादिषु सौम्यादिरूपेण प्रविष्टो मरुत् तद्भार्याभिस्साकं स्वीयां स्वभार्यां द्रौपदीं बुभुजे । युधिष्ठिरादयस्तु द्रौपदीदेहगतस्वस्वभार्या एव बुभुजिरे । ननु कथमिदं घटते । द्रौपद्यभिमतदेहस्य युधिष्ठिरादिना अभिमर्षे तेषां महादोषस्य प्राप्तेः । तथान्यपुरुषपरामर्शे कृष्णाया अपि महादोषस्य प्राप्तेः । एतद्दोषपरिहारार्थमेव 'ईरार्धतनुत्वात्' इत्युक्तम् । ईरोऽपि तेष्वाविष्टः भारतीविषये तेषां बुद्धिं विमोह्य स्वस्वभार्याविषये बुद्धिं सम्पाद्य तथा द्रौपद्या युधिष्ठिरादिविषये बुद्धिं विमोह्य स्वविषये बुद्धिं सम्पाद्य भोगं कृतवान् । अतो न दोषप्राप्तिः । यदा बुद्धिमोहस्सम्पादितः..* अन्यदत्तवरादेव जानन्तः । तथाच तत्स्वभार्याभिमतदेहेन तत्तद्दिनक्लृप्तेन युधिष्ठिरादीनां भोगः । न तु भारतीदेहेन । तथाच बुद्धिमोहेन न परामर्शदोषः । यथा मुद्गलदेहे मुद्गलस्य तद्बुद्धेः वायुना मोहितत्वात् बुद्धिरेव दोषनिमित्तम् । यथा दुर्योधनभार्यायां आत्मपत्नीबुद्धिमुत्पाद्य दुर्योधनवंशं अविच्छिन्नं करिष्यामीति बुद्ध्यैव अश्वत्थाम्नो ब्रह्मचर्यात् च्युतिः । नन्विदं कस्मात् कल्प्यत इत्यत आह– **आदिति** ।। आकारेण अकारवाच्यहरिनियमो लक्ष्यते । तथाच आत् हरिनियमात् । अथवा आत् तस्मात् प्रसिद्धात् हरिनियमात् । कीदृशो हरिनियमः? वायुं विना भारत्या नान्यो भर्तेति । कीदृशात् नियमात्? अपात् न विद्यते वायुं विना पतिर्यस्य भारतीचेतनस्य सः अपः तस्मात् । पुनः कीदृशात्? भीमात् अतिभयङ्करात् । अथवा अपात् न विद्यते पतिः हरिं विना यस्य नियमस्य सोऽपः ततस्तस्मात् । केनाप्यन्यथाकर्तुं अशक्यादित्यर्थ इति । तद्रीत्या व्यासतीर्थीये- 'ननु युधिष्ठिरादिदेहेषु युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेषु । कृष्णाशरीरे भारती स्वस्वदिने श्यामलादिष्वेकैकेति प्रतिदिनं द्वौ स्त्रियौ तिष्ठतः । तर्हि कथं भारतीमपोह्य युधिष्ठिरादिः स्वस्वस्त्रियं मरुच्च अन्यां भारतीं भुञ्जत इत्यत आह– **अन्यादृशा हीति** ।। सुरमानुषभुक्त्योर्विलक्षणत्वात् । अतो विचार्यं नास्तीत्यर्थः ।' इति व्यासतीर्थाद्युक्तरीत्या च द्रौपद्याश्चान्यगामित्वस्य आचार्यैरेवोक्तेः । एवञ्च पूर्वजन्मपरिग्रहस्यावश्यकत्वे त्रयमप्यङ्गीक्रियते । एकस्य च कन्यात्वेनोक्तेः । तदुक्तं मत्स्यपुराणे अलकापुरीमाहात्म्ये द्रौपद्याख्याने- 'एकदेहास्ततो देव्यः पुनर्वै ब्रह्मसन्निधौ । विलासं चक्रिरे कामात् पुनर्ब्रह्मा शशाप ह ।। युष्माकमन्यगामित्वं भवेत् त्रिष्वपि जन्मसु ।।' इति ।।१८७।।

**चट्टि–** 'धर्मात्मजादिषु मरुत्प्रविष्टः' इत्युक्तमुपसंहरति– **एवमिति** ।। अनुविष्टयुधिष्ठिरादिभीमात्मना अनुविष्टाः युधिष्ठिरादयो येन सः अनुविष्टयुधिष्ठिरादिः, स च भीमश्च तावेवात्मा स्वरूपं यस्य असौ अनुविष्टयुधिष्ठिरादिभीमात्मा तेन । युधिष्ठिरायाविष्टचतुःस्वरूपैः भीमरूपेण च एक एव तया भारत्यैव सततं रमत इत्यन्वयः । ननु युधिष्ठिरदेहे युधिष्ठिरस्तदाविष्टो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेऽपि द्वौ तिष्ठतः । कृष्णादेहेऽपि भारतीदिने भारती । श्यामलादिदिनेषु भारती श्यामला चेत्यादिप्रकारेण प्रतिदिनं द्वे स्त्रियौ तिष्ठतः । तत्र युधिष्ठिरो भारतीं अपोह्य स्वस्त्रियं, तत्राविष्टो मरुद्भारतीं एव रमत इत्यादि कथं घटत इत्यत आह– **अन्यादृशा हीति** ।। सुरभुक्तिः सुरभोगः अन्यादृशा मानुष्यभोगविलक्षणा । मानुष्यभुक्तिः मानुष्यभोगः, अतः सुरभोगात् अन्यरूपा विलक्षण इति हेतोः, अत्रोक्तार्थे विचार्यं युक्तमयुक्तं चेति विचारविषयो नास्ति इत्यन्वयः । किन्तु युक्तमेवेति निश्चेतव्यमिति भावः ।

अत्र व्यासतीर्थास्तु- 'ननु युधिष्ठिरादिदेहे युधिष्ठिरादिः मरुच्चेति द्वौ तिष्ठतः । कृष्णादेहे भारती स्वस्वदिने श्यामलादिष्वेकैकेति द्वे स्त्रियौ तिष्ठतः । तर्हि भारतीमपोह्य युधिष्ठिरादिः स्वस्त्रियं मरुच्च भारतीमन्यां च भुङ्क्ते इत्यत आह– **अन्यादृशा हीति** ।।' इति व्याचक्षते ।

वेदाङ्गतीर्थास्तु- 'ननु युधिष्ठिरादिदेहे युधिष्ठिरस्तदाविष्टो मरुच्चेति द्वौ तिष्ठतः । एवं अर्जुनादिदेहेष्वपि द्वौ द्वौ तिष्ठतः । कृष्णादेहेऽपि भारती स्वयमन्यदेव्यश्च तिष्ठन्तीति युधिष्ठिरादयस्तु कृष्णादेहगतस्वभार्याभिरेव रमन्ते । तेष्वाविष्टो वायुस्तु भारत्या अन्याभिश्च रमत इत्येतत्कथं घटत इत्यत आह– **अन्यादृशेति** ।।' इति व्याचक्षते ।

अनन्तभट्टारकास्तु- 'ननु युधिष्ठिरदेहे युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिदेहेष्वपि तिष्ठतः । कृष्णादेहे च भारती स्वस्वदिनेषु श्यामलादिष्वन्यतमैवेत्येवं प्रतिदिनं द्वे स्त्रियौ तिष्ठतः । एवं सति कथं युधिष्ठिरो भारतीमपोह्य स्वस्त्रियं मरुच्च भारतीमन्यां चानुभवतीत्यत आह– **अन्यादृशेति** ।।' इति व्याचक्षते ।

वरदराजाचार्यस्तु- ननु 'तत्रापि मारुतादन्यं न स्पृशेम' इति प्रार्थितत्वात् युधिष्ठिरेण भोगदिवसे पार्वत्या युधिष्ठिरेण भोगः प्राप्तः इत्याशङ्क्य युधिष्ठिरादिषु मरुतः आविष्टत्वात् तेनैव साकं भोगो न युधिष्ठिरादिनेति वक्तुं मरुतस्तत्प्रवेशकारणमाह– **प्रायो हीत्यादिना** ।। भारत्या युधिष्ठिरादिविषये अभिमतिनाशस्तदाविष्टमरुद्विषये अभिमतिनाशो नास्ति इत्यभिप्रायेण 'प्रायः' इत्युक्तम् । एवं पार्वत्या अपि । तथा च पार्वत्या अपि मरुतैव भोगो नान्यैरित्युक्तं भवति ।। **धर्मात्मजादिष्विति** ।। यस्मात् धर्मादीनां वृद्धिं भारतीविषये विमोह्य, कृष्णया वायुरेव रमते । तस्माद् भारत्या युधिष्ठिरादिसंस्पर्शशङ्का न कार्या । एवं पार्वत्या अपि इति भावः । ननु 'धर्मात्मजादिषु मरुदेवाविष्टो रमते' इत्युक्तमयुक्तम् । शिवेन शच्यादीनां पतियोगवरस्य दत्तत्वेन स्वभर्तृभिः भोगस्य वक्तव्यत्वादित्यतो 'धर्मात्मजादिषु' इत्युक्तं विवृणोति– **एवमिति** ।। एवं च विशेषणीभूतानां युधिष्ठिरादीनामपि भोगोऽन्यैवेत्युक्तं भवति ।

तथा च 'तेषां बुद्धिं विमोह्य' इत्यत्र भारतीपार्वतीविषये तेषां बुद्धिं विमोह्येत्यभिप्राय उक्तो भवति । तथा ब्रह्मणोऽन्यगामित्वरूपशापः, स्वपतिप्राप्तिरूपशिववरः, 'तत्रापि मारुतादन्यं न स्पृशेम' इत्यादि शच्यादिप्रार्थनफलम्, 'स्वार्थे पतियोगवरो मृषा भवेत्' इति रुद्रं प्रति ब्रह्मवचनश्च इत्यादि सर्वं घटत इत्याशयः । ननु तथापि युधिष्ठिरादिदेहे युधिष्ठिरो मरुच्चेति द्वौ तिष्ठतः । एवमर्जुनादिष्वपि । कृष्णादेहेऽपि भारतीपार्वत्यौ स्वस्वदिने श्यामलादिष्वन्यतमैवेत्येवं प्रतिदिनं तिस्रः तिष्ठन्ति । एवं च सति कथं युधिष्ठिरादिः भारतीं पार्वतीं चापोह्य स्वस्त्रियमेव रमते । मरुत्तु भारतीमन्यां चेत्येतत् कथं घटत इत्यत आह– **अन्यादृशा हीति** ।।' इति व्याचक्षते ।

अस्मिन् व्याख्यानचतुष्टये कैश्चित् बाधकमुक्तम् । तथा हि- 'विलासं दर्शयामासुः ब्रह्मणः पश्यतोऽधिकम् । शशाप तास्तदा ब्रह्मा मानुषीं योनिमाप्स्यथ ।। तत्रान्यगाश्च भवतेत्येवं शप्ताः सुराङ्गनाः ।।' इत्यत्र एकदेहा एवान्यगात्वशापप्रतीतेः तस्य चेन्द्रसेनादेहे जातत्वात् । 'ब्रह्मणैव हि शप्ता स्मः' इत्यादेस्तु त्रिषु जन्मस्वेकदेहत्वमात्रप्रतिपादकत्वेन जन्मत्रयेऽप्यन्यगामित्वप्रतिपादकत्वाभावात् । रमणप्रसङ्गेऽपि देवीनां वायुसंयोगप्रतिपादकपदादर्शनाच्च । कृष्णाजन्मन्यपि अन्यगात्वे च 'अभिमतेः पृथगेव नाशात्' इत्युक्त्यसम्भवाच्च । परपरामृष्टत्वस्य शापप्राप्तत्वेन तस्यावर्जनीयत्वेन तत्परिहारार्थं प्रतिदिनं कन्यात्वसमर्थनवैय्यर्थ्यात् । 'अनुविष्टयुधिष्ठिरादिभीमात्मना' इत्यस्यापि भारतीमात्ररमण-प्रतिपादकत्वेन इतररमणाप्रतिपादकत्वात् । 'मृषा वाग्येषु ते प्रोक्ता मारुताद्यास्तु तेऽखिलाः । तासां पतित्वमाप्स्यन्ति भारत्यैव तु पार्वती ।। संयुक्ता व्यवहारेषु प्रवर्तेत न चान्यथा ।।' इत्यादिना भारत्या साकं पार्वत्याः व्यवहारमात्रस्य कथितत्वेन पार्वत्या अपि कृष्णादेहे अन्यगात्वस्य अकथनादिति सम्प्रदायविदः ।।१८७।।

**वासिष्ठयादववृषावपि केशवौ तौ**
**तत्रोषतुः परमसौहृदतो हि तेषु ।**
**ताभ्यामनन्तगुणपूर्णसुखात्मकाभ्यां**
**पार्थाश्च ते मुमुदिरे [1]युतसत्कथाभिः ।।१८८।।**

**व्यासतीर्थीया–** युतसत्कथाभिः अन्योन्यवाक्मिश्रिताभिः सत्कथाभिः ।। १८८-१८९ ।।

**वेदाङ्गतीर्थीया–** तत्र पाण्डवगेहे । युतसत्कथाभिः अन्योन्यवचनमिश्रोत्तमकथाभिः । युतत्वं नाम परस्परप्रश्नपरिहाररूपत्वम् ।।१८८।।

**वादिराजतीर्थीया–** 'मुमुदिरे युतसत्कथाभिः' इत्यत्र युताः सन्तः वेदपुराणादयो याभिः ताः ताभिः कथाभिरित्यर्थः ।।१८८-१८९।।

---

१. 'अयुतसत्कथाभिः' इत्यपि पदं छिन्दन्ति भारतश्रीनिवासाचार्याः ।

**वरदराजीया**— वासिष्ठयादववृषौ वासिष्ठानां यादवानां श्रेष्ठौ केशवौ व्यासकृष्णौ तत्र पाण्डवगेहे ऊषतुः । तेषु पाण्डवेषु परमसौहार्दात् निमित्तात् । ताभ्यां कृष्णव्यासाभ्यां सह, युताभिः प्रश्नपरिहाररूपेण अन्योन्यसम्भाषणयुताभिः सतीभिः कथाभिः । सतां कथाभिरिति वा ।।१८८।।

**अनन्तभट्टीया**— ।। युतेति ।। अन्योन्यव्यामिश्रितसत्कथाभिः ।।१८८-१८९।।

**लघ्वनन्तभट्टीया**— युतसत्कथाभिः प्रश्नोत्तररूपेण व्यामिश्रितसत्कथाभिः ।।१८८-१९१।।

**जनार्दनीया**— तत्र पाण्डवगेहे । अनन्तगुणपूर्णसत्सुखात्मकाभ्यां अनन्तगुणपूर्णौ च तौ सुखात्मकौ च तथा, ताभ्याम् । युतसत्कथाभिः अन्योन्यवचनमिश्रितोत्तमकथाभिः । युतत्वं नाम परस्परप्रश्न-परिहारवत्वम् ।।१८८।।

**ताम्रपर्णी**— युतसत्कथाभिः प्रश्नोत्तररूपेण व्यामिश्रकथाभिः ।।१८८-१८९।।

**भारतश्री**— प्रकृतकथामाह— **वासिष्ठयादवेत्यादिना** ।। 'ऊषुस्तथैव परिवत्सरपञ्चकं ते पाण्डोर्गृहे सुसुखिनोऽखिलभोगयुक्ताः'(१८३) इति पूर्वमुक्तं तेनास्य सम्बन्धः । तत्र पाण्डोर्गृहे । युतसत्कथाभिः युतत्वं नाम परस्परप्रश्नपरिहारवत्वम् । अयुतसत्कथाभिरिति वा । बहुसत्कथाभिरित्यर्थः ।। १८८ ।।

**चट्टि**— वासिष्ठयादववृषौ वासिष्ठानां यादवानां च श्रेष्ठौ तौ केशवौ व्यासकृष्णावपि तेषु पाण्डवेषु परमसौहृदतः परमात् सौहृदात् निमित्तात् तत्र पाण्डवगेहे ऊषतुः । ते पार्थाश्च अनन्तगुणपूर्णसुखात्मकाभ्यां अनन्तगुणपूर्णौ च तौ सुखात्मकौ च तथा, ताभ्याम् । युतसत्कथाभिः अन्योन्यवचननिमित्तोत्तमकथाभिः । युतत्वं नाम परस्परप्रश्नपरिहारवत्वम् । युताभिः सतां कथाभिरिति वा । मुमुदिरे ।।१८८।।

**पूर्वं हि तेषु वनगेषु बभूव काशि-**
**राज्ञः सुताकृत उरुक्षितिपालयोगः ।**
**तत्र स्वयंवरगतां धृतराष्ट्रपुत्रः**
**कन्यां बलाज्जगृह आत्मबलातिदृप्तः ।।१८९।।**

**वेदाङ्गतीर्थीया**— पाण्डवविवाहमुक्त्वा दुर्योधनादीनामुद्वाहं वक्तुमतीतकथामाह— **पूर्वमित्यादिना** ।।१८९।।

**वरदराजीया**— एवं पाण्डवानां भार्यापरिग्रहादिकमुक्त्वा ततः पूर्वं वृत्तं दुर्योधनादीनां भार्यापरिग्रहादिक-माह— **पूर्वं हीत्यादिना** ।। तेषु पाण्डवेषु वनगेषु हिडिम्बवने स्थितेषु सत्सु काशिराज्ञः सुताकृते तदर्थं उरूणां क्षितिपालानां योगः मेलनं बभूव । धृतराष्ट्रपुत्रः दुर्योधनः स्वयंवरगतां कन्यां बलाज्जगृहे ।।१८९।।

**जनार्दनीया**— पाण्डवविवाहमुक्त्वा दुर्योधानादीनामुद्वाहं वक्तुं पूर्वकथामाह— **पूर्वमित्यादिना** ।। पूर्वं कृष्णाविवाहात् पूर्वं तेषु पार्थेषु वनगेषु सत्सु हिडिम्बवनं प्राप्तेषु सत्सु । दृप्तः मत्तः ।।१८९।।

**भारतश्री–** पाण्डवविवाहमुक्त्वा दुर्योधनादीनामुद्वाहं वक्तुं पूर्वकथामाह– **पूर्वं हीत्यादिना** ।। कृष्णाविवाहात् पूर्वं वनगेषु हिडिम्बादिवने वसत्सु सत्सु ।। १८९-१९१ ।।

**चट्टि–** पाण्डवविवाहमुक्त्वा दुर्योधनादीनां विवाहं वक्तुं पूर्वकथामाह– **पूर्वमित्यादिना** ।। पूर्वं कृष्णाविवाहात् पूर्वम् । तेषु पार्थेषु वनगेषु हिडिम्बवनं प्राप्तेषु सत्सु काशिराज्ञः सुताकृते तदर्थं उरूणां क्षितिपालानां योगो मेलनं सम्बभूव । तत्र सभायां धृतराष्ट्रपुत्रः दुर्योधनः आत्मबलेन अतिदृप्तः सन् स्वयंवरगतां कन्यां बलाज्जगृहे ।।१८९।।

**पूर्वं हि राजगणने मगधाधिराजः**
**सङ्ख्यात इत्यतिरुषा प्रगृहीतकन्ये ।**
**दुर्योधने नृपतयो युयुधुः स्म तेन**
**भग्नाश्च कर्णसहितेन सहानुजेन ।।१९०।।**

**व्यासतीर्थीया–** पूर्वं प्रथमतः । कन्यायाः पुरतो राजगणने ।। १९०-१९१ ।।

**वेदाङ्गतीर्थीया–** राजगणने राजसङ्ख्याने मगधाधिराजः पूर्वं प्रथमतः सङ्ख्यात इति हेतोः अतिरुषा ।।१९०।।

**वादिराजतीर्थीया–** 'पूर्वं हि राजगणने' इत्यत्र राजगणने मगधाधिराजः पूर्वं सङ्ख्यात इति पूर्वपदसम्बन्धः ।। १९०-१९१ ।।

**वरदराजीया–** राज्ञां गणने कर्तव्ये पूर्वं प्रथमं मगधाधिराजो जरासन्धः सङ्ख्यातः परिगणित इति अतिरुषा कोपेन दुर्योधने गृहीतकन्ये सति, नृपाश्च जरासन्धाद्याः तेन दुर्योधनेन युयुधुः । भग्नाश्च नृपतयः ।।१९०।।

**अनन्तभट्टीया–**पूर्वं प्रथमं सङ्ख्यातः परिगणितः । कन्याया पुरतो राजगणने । तेन दुर्योधनेन ।।१९०।।

**जनार्दनीया–** राजगणने राजसङ्ख्याने मगधाधिराजः पूर्वं प्रथमतः सङ्ख्यातः परिगणित इति हेतोः अतिरुषा दुर्योधने प्रगृहतीकन्ये सति, नृपतयः जरासन्धाद्याः तेन दुर्योधनेन युयुधुः स्म भग्नाश्च ।।१९०।।

**ताम्रपर्णी–** पूर्वं प्रथमतः सङ्ख्यात इति सम्बन्धः ।। १९० ।।

**चट्टि–** राजगणने राजसङ्ख्याने मगधाधिराजः जरासन्धः पूर्वं हि प्रथमतः एव सङ्ख्यातः परिगणित इति हेतोः अतिरुषा अत्यन्तकोपेन दुर्योधने प्रगृहतीकन्ये सति, नृपतयः जरासन्धाद्याः सहानुजेन कर्णसहितेन दुर्योधनेन युयुधुः स्म भग्नाश्च ।। १९० ।।

**भग्नेषु तेषु पुनरात्तशरासनेषु**
**कर्णो जगाद धृतराष्ट्रसुतं प्रयाहि ।**
**युक्तः सहोदरजनैर्गुरुभीष्ममुख्यै-**
**र्युक्तस्य ते न पुरमेत्य हि घर्षणेशाः ।।१९१।।**

**वेदाङ्गतीर्थीया–** पुरगतेऽपि पुरमेत्य धर्षयेयुरित्यत आह– **गुरुभीष्मेति** ।।१९१।।

**वरदराजीया–** तेषु पूर्वं भग्नेषु पुनः परावृत्य आत्तशरासनेषु सत्सु, सहोदरजनैर्युक्तः प्रयाहीति सम्बन्धः । ननु पुरं प्रति एत्य धर्षयेयुरित्यतो नेत्याह– **गुरुभीष्मेति** ।।१९१।।

**अनन्तभट्टीया–** सहोदरजनैः भीष्ममुख्यैः युक्तः प्रयाहि । तैर्युक्तस्य ते घर्षणे ईशाः न ।।१९१।।

**जनार्दनीया–** तेषु जरासन्धादिषु पुनरात्तशरासनेषु सत्सु, कर्णः सहोदरजनैर्युक्तस्त्वं प्रयाहीति धृतराष्ट्रसुतं जगाद । पुरमेत्य नगरं प्राप्य, ते नृपतयः गुरुभीष्ममुख्यैः युक्तस्य ते घर्षणे नेशाः समर्थाः न ।।१९१।।

**ताम्रपर्णी–** पुरमेत्य गुरुभीष्मद्रौणिमुख्यैः युक्तस्य तव ते राजानो घर्षणेशाः नेत्यर्थः ।।१९१।।

**चट्टि–** भग्नेषु तेषु जरासन्धादिषु पुनरात्तशरासनेषु गृहीतचापेषु सत्सु, कर्णः सहोदरजनैर्युक्तस्सन् त्वं प्रयाहीति धृतराष्ट्रसुतं दुर्योधनं जगाद । ननु पुरं प्रत्यपि आगत्य धर्षयेयुः इत्यतो नेत्याह– **गुर्विति** ।। ते नृपतयः पुरं नगरं एत्य प्राप्य गुरुभीष्ममुख्यैः युक्तस्य ते घर्षणे नेशाः समर्थाः न ।।१९१।।

**एकान्ततो जयमवीक्ष्य च नानुयाति**
**बार्हद्रथः पुरगतस्य जये न निष्ठा ।**
**द्रौणिं च रुद्रतनुमेष सदा विजानन्**
**नो तेन युद्धमभिवाञ्छति रुद्रभक्तः ।।१९२।।**

**व्यासतीर्थीया–** एकान्ततो निश्चयेन । पुरगतस्य जये मागधस्य निष्ठा निश्चयो नास्ति । द्रौणिस्त्वत्सहायस्तिष्ठत्वित्यत आह– **द्रौणिमिति** ।। १९२ ।।

**वेदाङ्गतीर्थीया–** एकान्ततः नियमेन, निश्चयेनेति यावत् । जयमवीक्ष्य नानुयाति, शत्रूनिति शेषः । तर्हि जये निश्चित्य अस्मत्पुरमागमिष्यतीत्यत आह– **पुरगतस्येति** ।। पुरगतस्य ते जये पुरगतं त्वां जेष्यामीति निष्ठा निश्चयो नास्ति । इतश्च त्वां जेतुं नागमिष्यतीत्यभिप्रायवानाह– **द्रौणिमिति** ।।१९२।।

**मधुसूदनीया–** ननु जरासन्धः समायास्यति इत्यत आह– **एकान्तत इति** ।। बार्हद्रथः जरासन्धः एकान्ततः निश्चयतः जयमवीक्ष्य अनवलोक्य, जयनिश्चयमकृत्वेति यावत् । पुरगतस्येति कर्मणि षष्ठी ।

नानुयाति । ननु जयं निश्चित्यैवागमिष्यतीत्यत आह– **जय इति** ।। निष्ठा निश्चयो नास्ति । भीष्माश्वत्थामादिभयादिति भावः । यद्वा पुरगतस्य ते जये तस्य निष्ठा च आसक्तिश्च नास्ति ।।१९.२-१९.५।।

**वरदराजीया–** किञ्च एकान्ततो जयं निश्चितं जयमवीक्ष्य अनवलोक्य जयो भविष्यतीति निश्चयाभावात् न अनुयाति पृष्ठतो नायाति । किञ्च पुरगतस्य स्वपुरे स्थितस्य शत्रोः जये तस्य जरासन्धस्य निष्ठा अपेक्षा नास्ति । तर्हि द्रौणिरत्र युद्धार्थं तिष्ठतु इत्यत आह– **द्रौणिं चेति** ।। रुद्रतनुं रुद्रस्यावतारम् । तेन द्रौणिना । यतः रुद्रभक्तः ।।१९.२।।

**अनन्तभट्टीया–** पुरगतस्य ते । कर्मणि षष्ठीयम् । निष्ठा निश्चयः । द्रौणिस्त्वात्मसहायत्वेन तिष्ठत्वित्यत आह– **द्रौणिमिति** ।।१९.२।।

**लघ्वनन्तभट्टीया–** एकान्ततो निश्चयेन । निष्ठा निश्चयः । 'बार्हद्रथो नायाति' इत्यत्र निमित्तमाह– **द्रौणिश्चेति** ।।१९.२-९.३।।

**जनार्दनीया–** एकान्ततः नियमेन, निश्चयेनेति यावत् । जयमवीक्ष्य च नानुयाति, शत्रूनिति शेषः । बार्हद्रथः निवृत्य अस्मत्पुरमागमिष्यतीत्यत आह– **पुरगतस्येति** ।। पुरगतस्य ते । कर्मणि षष्ठी । जये विषयसप्तमी । पुरगतं त्वां जेष्यामीति निष्ठा न जेष्यामीति निश्चयो नास्ति । इतोऽपि त्वां जेतुं नागमिष्यतीत्यभिप्रायवानाह– **द्रौणिमिति** ।। तेन अश्वत्थाम्ना ।। १९.२ ।।

**ताम्रपर्णी–** एकान्ततो निश्चयेन । निष्ठा निश्चयः । 'बार्हद्रथो नानुयाति' इत्यत्र हेत्वन्तरमाह– **द्रौणिमिति** ।। १९.२-१९.३ ।।

**भारतश्री–** नानुयाति, दातुमिति शेषः । पुरगतस्य तव । कर्मणि षष्ठी । पुरगतं त्वां जये विषयसप्तमी । न निष्ठा जेष्यामीति निश्चयो नास्ति ।।१९.२-१९.३।।

**चट्टि–** बार्हद्रथः जरासन्धः एकान्ततः नियमेन जयमवीक्ष्य अनवलोक्य नानुयाति, शत्रूनिति शेषः । किञ्च पुरगतस्य पुरे स्थितस्य शत्रोः जये तस्य जरासन्धस्य निष्ठा आसक्तिश्च नास्ति । इतोऽपि जेतुं नागमिष्यति इत्यभिप्रायवानाह– **द्रौणिमिति** ।। एषः जरासन्धः द्रौणिं अश्वत्थामानं रुद्रतनुं रुद्रावतारं सदा विजानन् तेन द्रौणिना युद्धं नो वाञ्छति । सः यतः रुद्रभक्तः ।। १९.२ ।।

**एकोऽहमेव नृपतीन् प्रतियोधयिष्य**
**एतैर्मयि प्रतिजितेऽपि न तेऽस्त्यकीर्तिः ।**
**एकं च तेऽनुजमिमे यदि पौरुषेण**
**गृह्णीयुरत्र तव कीर्तिरुपैति नाशम्** ।।१९.३।।

**व्यासतीर्थीया–** मदनुजास्तर्हि त्वत्सहायास्तिष्ठन्त्वित्यत आह– **एकश्चेति** ।। १९३ ।।

**वेदाङ्गतीर्थीया–** मयि गते इदानीमेव मामनुगच्छेयुरित्यत आह– **एकोऽहमिति** ।। प्रतियोधयिष्ये प्रतिप्रति योधयिष्ये ।।१९३।।

**वरदराजीया–** तस्मादहमेक एव नृपतीन् योधयिष्ये । एतैः नृपैः मयि प्रतिजितेऽपि तव अकीर्तिः अपयशो नास्ति । एकमपि तवानुजं इमे नृपाः अत्र । तथा सति तव कीर्तिः नाशमुपैति ।।१९३।।

**जनार्दनीया–** मयि गते इदानीमेवान्ये मामनुगच्छेयुरित्यत आह– **एकोऽहमिति** ।। प्रतियोधयिष्ये । अकीर्तिः अपयशः । अत्रानुजग्रहणेन ।। १९३ ।।

**चट्टि–** मयि गते इदानीमेवान्ये मामनुगच्छेयुरित्यत आह– **एक इति** ।। अहं एक एव नृपतीन् प्रतियोधयिष्ये । एतैः नृपैर्मयि प्रतिजिते ते अकीर्तिः अपकीर्तिः नास्ति । इमे नृपाः एकमपि तेऽनुजमत्र यदि पौरुषेण गृह्णीयुः तर्हि तव कीर्तिः नाशमुपैति ।।१९३।।

**भीष्मादयोऽपि न हि योधयितुं समर्था**
**राज्ञा ह्यनेन [१]तत एव हि वाह्लिकोऽस्य ।**
**भृत्यो बभूव न तु भीष्ममयं युधेऽगाद्**
**राजा न हीति न च तेन विरोध आसीत् ।।१९४।।**

**व्यासतीर्थीया–** तर्हि भीष्मादयो वार्हद्रथेन राज्ञा योद्धुं न शक्या इत्युक्तम् । तत एवासमर्थत्वादेवेति भीष्मसमो वाह्लीकः । इतोऽपि भीष्मो अत्र योद्धुं न तिष्ठत्वित्युक्तम्– **नत्विति** ।। मागधो भीष्मेण योद्धुं नागादिति कुतोऽवगतमित्यत उक्तम्– **न चेति** ।। १९४ ।।

**वेदाङ्गतीर्थीया–** मद्ग्रहणेऽसमर्थोऽसावित्यत आह– **भीष्मादयोऽपीति** ।। योधयितुं योद्धुं समर्था न । किमु तवानुजा इति भावः ।।१९४।।

**वरदराजीया–** तर्हि भीष्मादयो युद्धार्थं तिष्ठन्त्वित्यत आह– **भीष्मादयोऽपीति** ।। अनेन जरासन्धेन राज्ञा । तत एव असमर्थत्वादेव अस्य जरासन्धस्य भृत्यो बभूव । वाह्लीकस्य असमर्थतया जरासन्धभृत्यभावे वाह्लीकसमस्य भीष्मस्यापि असामर्थ्यं सिद्धमिति भावः । किञ्च अयं जरासन्धो युद्धे युद्धार्थं भीष्मं नागात् । कुतः– **न हीति** ।। भीष्मो राजा न भवति । राज्यपदवीं न प्राप्त इति हेतोः । अत एव तेन भीष्मेण जरासन्धस्य कदापि विरोधो नासीत् ।।१९४।।

---

१. 'तत एव च' इति ताम्रपर्णीयपाठः ।

**अनन्तभट्टीया–** तत्र हेतुः– **राजा न हीति** ।। भीष्मस्याराजत्वात् न तेन युयुध इत्यर्थः । युद्धे नागादिति कुतोऽवगतमित्यत आह– **न चेति** ।। अन्यथा सज्जनविरोधिना जरासुतस्य भीष्मेण विरोधाभावो न घटत इति भावः ।। १९४ ।।[1]

**लघ्वनन्तभट्टीया–** ननु वयं तिष्ठामः । यदि मेऽनुजमेकं गृह्णीयुः, तदा भीष्मादय आगत्य मुञ्चेयुरित्यत आह– **भीष्मादयोऽपीति** ।। टीकासु तु भीष्मसमो बाह्लीक इति भाव इत्युक्तम् । ननु जरासुतो बली चेत् भीष्मं योद्धुं कुतो नागादित्यत आह– **न तु इति** ।। १९४-१९६ ।।

**जनार्दनीया–** ननु मदनुजग्रहणेऽसमर्थोऽसावित्यत आह– **भीष्मादय इति** ।। अनेन राज्ञा जरासन्धेन भीष्मादयोऽपि आदिशब्देन भीष्मसमत्वात् बाह्लीकादयोऽपि विवक्षिताः । प्रतियोधयितुं योद्धुं न समर्थाः । किन्त्वल्पसारास्तवानुजा इति भावः । तत एव अशक्तत्वादेव बाह्लीकोऽस्य जरासन्धस्य भृत्यो बभूव । तर्हि भीष्मः किमर्थमनेन न जित इत्यत आह– **नेति** ।। अयं जरासन्धो भीष्मं युधे युद्धार्थं नागात् । शक्तोऽपि कुतो नागादित्यत आह– **राजेति** ।। भीष्मो राजा न हि राजपुत्रोऽपि राज्यपदवीं न प्राप्त इति भावः । इति हेतोः । अत एव तेन भीष्मेण विरोधो नासीत्, जरासन्धस्येति शेषः ।।१९४।।

**ताम्रपर्णी–** ननु वयं तिष्ठामः । यदि मेऽनुजमेकं गृह्णीयुः तदा भीष्मादयः आगत्य मोचयेयुरित्यत आह– **भीष्मादय इति** ।। **तत एवेति** ।। अन्यथा पुत्रे बलवति पिता भृत्यो न भवेदिति भावः । ननु जरासुतो बली चेद्भीष्मं युद्धे कुतो नागादित्यत आह– **नत्विति** ।। टीकासु- 'द्रौणिम्' इत्यादिश्लोका रीत्यन्तरेणावतारिताः । 'तत एव च बाह्लिकोऽस्य' इत्यत्र तत एव भीष्मसमत्वादेवेति । भीष्मस्य बाह्लीकसाम्यमप्युक्तम् ।।१९४-१९६।।

**भारतश्री–** ।। **भीष्मादयोऽपि न हि योधयितुं समर्था इति** ।। अत एवोत्तरत्राचार्यैः उक्तम्- 'कीचकस्य हिडिम्बस्य बककिर्मीरयोरपि । जरासन्धस्य नृपतेः कंसादीनां च सर्वशः ।। न बाधनाय भीष्माद्याः अपि शेकुः कथञ्चन ।।' इति (ता.नि-२३.३६) ।। भीष्मः कस्मात् तद्भृत्यो न बभूवेत्यत आह– **राजा न हीति** ।। १९४-२०० ।।

**चट्टि–** ननु मदनुजग्रहणे असौ समर्थः किमित्यत आह– **भीष्मादय इति** ।। अनेन राज्ञा जरासन्धेन भीष्मादयोऽपि । आदिशब्देन भीष्मसमत्वात् बाह्लीकादयो विवक्षिताः । योधयितुं योद्धुं न समर्थाः । किं तु स्वल्पसारास्तवानुजा इति भावः । अत एव अशक्तत्वादेव बाह्लीकोऽस्य जरासन्धस्य भृत्यो बभूव । तर्हि भीष्मः अनेन किमर्थं न जित इत्यत आह– **नेति** ।। अयं जरासन्धो भीष्मं युधे युद्धार्थं नागात् । शक्तोऽपि कुतो नागादित्यत आह– **राजेति** ।। भीष्मो राजा न हि राजपुत्रोऽपि राज्यपदवीं न प्राप्त इति भावः । इति हेतोः । अत एव तेन भीष्मेण विरोधो नासीत्, जरासन्धस्येति शेषः ।। १९४ ।।

---

१. **अनन्तभट्टीया–** जरासन्धेन सह योद्धुं तिष्ठतु त्वं मामनुयाहीत्यत आह– **भीष्मादय इति** ।। तत एव अशक्यत्वादेव ।। **बाह्लीक इति** ।। बाह्लीकसमो भीष्म इति भावः । तर्हि जयार्थं भीष्मेण किमिति न युयुधे इत्यत आह– **न त्विति** ।।१९४।। इति तौळवपाठः ।।

**इत्युक्त आशु स विमृश्य ययौ पुरं स्वं**
**कर्णोऽपि तैः प्रतियुयोध जिगाय चैनान्[१] ।**
**कर्णस्य वीर्यमगणय्य जरासुतोऽपि**
**ह्येकैकमेव नृपतीन् स दिदेश योद्धुम् ॥१९५॥**

**व्यासतीर्थीया–** कर्णः कथमेक एव नृपतीन् जिगायेत्यत आह– **कर्णस्येति** ॥ १९५-१९७ ॥

**वेदाङ्गतीर्थीया–** एकैकं (एकदा एकम्) ॥१९५॥

**वरदराजीया–** सः दुर्योधनो विमृश्य विचार्य स्वपुरं ययौ । तैः जरासन्धादिभिः नृपैः । एनान् नृपान् जिगाय च । अगणय्य अनादृत्य । एकैकं यथा भवति तथा नृपतीन् योद्धुं दिदेश प्रेषितवान् । अतश्च क्रमेण समस्तान् जिगायेति भावः ॥१९५॥

**जनार्दनीया–** विमृश्य विचार्य । अगणय्य अनादृत्य ॥ १९५ ॥

**चट्टि–** सः दुर्योधनः इत्युक्तः सन्, कर्णेनेति शेषः । विमृश्य विचार्य आशु स्वं पुरं ययौ । कर्णोऽपि तैः नृपैः प्रतियुयोध । एतान् नृपान् जिगाय च । सः जरासुतः जरासन्धोऽपि कर्णस्य वीर्यं अगणय्य अनादृत्य एकैकं यथा भवति तथा नृपतीन् योद्धुं दिदेश ॥ १९५ ॥

**सर्वेषु तेषु विजितेष्वभिजग्मिवान् स**
**योद्धुं बृहद्रथसुतोऽप्यमुना रथेन ।**
**तं चैव रामवरतो विरथं विशस्त्रं**
**चक्रे स चैनमथ मुष्टिभिरभ्युपेतौ ॥१९६॥**

**वेदाङ्गतीर्थीया–** स जरासुतश्च एनं कर्णं विरथं विशस्त्रं चक्रे ॥१९६-१९७॥

**वादिराजतीर्थीया–** 'चक्रे स चैनम्' इत्यत्र स च जरासन्धश्च एनं कर्णं विरथं विशस्त्रं च चक्र इति योजना ॥ १९६ ॥

**मधुसूदनीया–** स जरासन्धः एनं कर्णं कर्णश्च जरासन्धमित्यन्योन्यं मुष्टिभिः अभ्युपेतौ मुष्टियुद्धं चक्रतुरित्यर्थः ॥ १९६ ॥

**वरदराजीया–** रथेन अभिजग्मिवान् । तं जरासन्धं रामवरत एव, तद्बलादित्यर्थः । स च जरासन्धः एनं कर्णं विरथं विशस्त्रं चक्रे । अथ अन्योन्यरथशस्त्रापगमनानन्तरं मुष्टिभिः युद्धार्थं अभ्युपेतौ प्राप्तौ ॥१९६॥

---

१. 'चैतान्' इति चट्टीपाठः ।

**अनन्तभट्टीया–** रथेन अभिजग्मिवान् । स चैनं विरथं विशस्त्रं चक्रे ।। १९६-१९७ ।।

**जनार्दनीया–** अमुना कर्णेन । योद्धुं रथेनाभिजग्मिवान् । तं जरासन्धम् । स जरासुतश्च एनं कर्ण विरथं विशस्त्रं चक्रे ।। १९६ ।।

**चट्टि–** सर्वेषु तेषु नृपेषु विजितेषु पराजितेषु सत्सु, सः बृहद्रथसुतः जरासन्धोऽपि अमुना कर्णेन योद्धुं रथेनाभिजग्मिवान् । सः कर्णः रामवरत एव तं जरासन्धं विरथं विशस्त्रं च चक्रे । स जरासन्धः एनं कर्णं च विरथं विशस्त्रं च चक्रे । अथ अनन्तरं मुष्टिभिः अभ्युपेतौ युद्धार्थं प्राप्तौ ।। १९६ ।।

**सन्धौ यदैव जरया प्रतिसन्धितस्य**
**कर्णो जघान न परत्र तुतोष राजा ।**
**न ज्ञातमेतदपि हो हलिना तदेतत्**
**ज्ञातं त्वया भव ततो मम भृत्य एव ।।१९७।।**

**वादिराजतीर्थीया–** 'न ज्ञातमेतदपि हो हलिना' इत्यत्र हो अहो इत्यर्थः ।। १९७ ।।

**मधुसूदनीया–** जरया प्रतसिन्धितस्य सन्धौ सन्धिस्थल एव जघान । परत्र अतिरिक्तस्थले न जघान । यदा तदा जरासन्धः तुतोष ।। १९७-२१७ ।।

**वरदराजीया–** जरया तन्मात्रा प्रतिसन्धितस्य जरासन्धस्य सन्धौ शरीरसन्धाने कर्णो जघान । मुष्टिभिः तताड न परत्र अन्यत्र न जघान । तदा राजा जरासन्धः तुतोष । तदेतत्सन्धौ ताडनं हलिना वलभद्रेण न ज्ञातम् । हो आश्चर्यम् । त्वया च ज्ञातम् । ततः मर्मज्ञत्वादेव मम भृत्यो भव ।।१९७।।

**लघ्वनन्तभट्टीया–** परत्र न जघान । ततः मर्मज्ञत्वात् ।। १९७ ।।

**जनार्दनीया–** जरया प्रतिसन्धितस्य जरासन्धस्य सन्धौ जघान । न परत्र सन्धेरन्यत्र न जघानेत्यर्थः । तदा राजा तुतोष । हलिनापि एतत् मर्मस्थानं न ज्ञातम् । तत् रामेणाज्ञातमेतन्मर्मस्थानं त्वया ज्ञातम् । हो आश्चर्यम् । ततो मर्मज्ञत्वात् । मम भृत्यो भवेत्यन्वयः ।। १९७ ।।

**ताम्रपर्णी–** न परत्र जघान ।।१९७।।

**चट्टि–** कर्णः जरया प्रतिसन्धितस्य जरासन्धस्य सन्धौ सन्धिस्थले एव जघान । मुष्टिभिः यदा तताड न परत्र सन्धेरन्यत्र न जघानेत्यर्थः । तदा राजा जरासन्धः तुतोष । हलिनापि एतत् मर्मस्थानं न ज्ञातम् । तत् रामेणाज्ञातमेतन्मर्मस्थानं त्वया ज्ञातम् । हो आश्चर्यम् । ततो मर्मज्ञत्वात् । ममैव भृत्यो भवेत्यन्वयः ।। १९७ ।।

**एवं विधं सुकुशलं बहुयुद्धशौण्डं**
**न त्वां हनिष्य उत ते पितुरेव पूर्वम् ।र**
**बाह्वोर्बलादभिहृतं हि मयाऽङ्गराज्यं**
**तत् त्वं गृहाण युधि कर्पकरश्च मे स्याः ॥१९८॥**

**व्यासतीर्थीया–** कर्मज्ञाने सुकुशलम् ॥१९८॥

**वेदाङ्गतीर्थीया–** अङ्गराज्यस्य दुर्योधनेन दत्तत्वात् जरासन्धः कथं पुनरदादित्यत आह– **पूर्वमिति** ॥१९८-२०२॥

**वरदराजीया–** 'सुकुशलम्' इत्यस्य विवरणम्– **बहुयुद्धशौण्डमिति** ॥ वहुप्रकारेण युद्धेषु प्रौढमित्यर्थः । अत एव त्वां न हनिष्ये । उत ते पितुः अधिरथाख्यात् अङ्गराज्यं पूर्वं मया अभिहृतं तदङ्गराज्यं पुनः त्वं गृहाण । युधि युद्धे मे कर्मकरो युद्धाख्यक्रियाकर्ता स्याः भव ॥१९८॥

**अनन्तभट्टीया–** ॥ **ते पितुरेवेत्यादि** ॥ पितुर्वंशे समस्तमङ्गराज्यमासीत् । तज्जरासन्धेनापहृतम् । तदेकदेशश्च दिग्विजये भीमेन जरासुतादपहृत्य धृतराष्ट्राय दत्तम् । स एव अङ्गराज्यैकदेशो दुर्योधनेन कर्णाय दत्तम् । अवशिष्टमङ्गराज्यं मागधेन कर्णाय दत्तमिति यथाक्रमः ॥ १९८ ॥

**लघ्वनन्तभट्टीया–** एवं विधं सुकुशलं मर्मावगतौ कुशलम् । 'सुकुशलम्' इत्यस्यैव 'वहुयुद्धशौण्डम्' इति विवरणमिति केचित् ॥१९८-१९९॥

**जनार्दनीया–** एवं विधं सुकुशलं वहुयुद्धशौण्डं वहुप्रकारयुद्धेषु शौण्डं प्रौढं त्वां न हनिष्ये । मया ते पितुरधिरथात् पूर्वं अभिहृतमङ्गराज्यं त्वं गृहाण । युधि मे कर्मकरश्च स्याः भव । युद्धे मम साहाय्यं त्वं कुर्विति भावः ॥१९८॥

**ताम्रपर्णी–** एवं विधं कुशलं मर्मावगतौ कुशलम् । कुशलम् इत्यस्य वहुयुद्धेति विवरणमिति ॥ १९८-२०० ॥

**चट्टि–** एवं विधं सुकुशलम् । 'सुकुशलम्' इत्यस्य विवरणम्– **बहुयुद्धशौण्डमिति** ॥ वहुप्रकारयुद्धेषु शौण्डं प्रौढं त्वां न हनिष्ये । उत अनन्तरं मया वाह्वोः वलात् पूर्वं ते पितुरधिरथात् एव हृतं यत् अङ्गराज्यं तत् त्वं गृहाण । युधि मे कर्मकरश्च स्याः भव । युद्धेषु मम साहाय्यं त्वं कुर्विति भावः ॥ १९८ ॥

**इत्युक्त आशु स तथैव चकार कर्णः**
**पूर्वं हि तस्य निजराज्यपदैकदेशः ।**
**दुर्योधनेन विहितो मगधाधिराजं**
**जित्वा वृकोदरहृतः पितुरेव दत्तः ॥१९९॥**

**व्यासतीर्थीया–** ननु पूर्वमेव दुर्योधनेन कर्णायाङ्गराज्यं दत्तम् । कथं मागधो अदादित्यत आह– **पूर्वं हीति** ।। तस्य कर्णस्य । दुर्योधनस्याप्यङ्गराज्यैकदेशः कथमागतः यः कर्णाय दत्त इत्यत उक्तम्– **मागधेति** ।। १९९ ।।

**वादिराजतीर्थीया–** 'अभ्यषेचयदङ्गेषु राजानं पित्रनुज्ञया' (ता.नि-१८.३८) इत्यत्र प्राग्दुर्योधनेन अङ्गराज्यं कर्णाय दत्तमित्युक्तम् । इदानीं जरासन्धेन दत्तमित्युच्यते । अतः पूर्वोत्तरविरोध इत्यत आह– **पूर्वं हि तस्येति** ।। कर्णजननात्पूर्वं अधिरथपालितसमस्तराज्यं जरासन्धेनापहृतम्, तस्माद्राज्यादित्यर्थतः प्राप्तं शेषमध्याहृत्य वाक्यं योजनीयम् । पूर्वं युधिष्ठिरस्य युवराजपट्टकाले मगधाधिराजं जित्वा वृकोदरहृतः यो निजराज्यपदैकदेशः निजं कर्णपितुर्वंशपरम्पराप्राप्तं यद्राज्यपदं तस्यैकदेशः पितुरेव ज्येष्ठपितुर्धृतराष्ट्रस्यैव दत्तः । स एव राज्यपदैकदेशः पूर्वं अभ्यासप्रदर्शनसमये दर्योधनेन कर्णाय विहितः दत्तः । उर्वरितार्धदेशस्तु जरासन्धवश एव स्थितः । स इदनीं जरासन्धेन कर्णाय दत्त इति अतीतश्लोके उक्तम् । अतो न विरोध इति भावः ।। १९९-२०५ ।।

**वरदराजीया–** तथैव यथा जरासन्धेन उक्तम् । ननु पूर्वं 'अभ्यषेचयदङ्गेषु' इति दुर्योधनेन कर्णाय अङ्गराज्यं दत्तमित्युक्तम् ।इदानीं जरासन्धेन दत्तमित्युच्यते । तदुभयं कथं घटत इत्यत आह– **पूर्वं हीत्यादिना** ।। निजराज्यपदस्य अङ्गराज्यस्य एकदेशः एकभागो दुर्योधनेन तस्य कर्णस्य विहितः दत्तः । अङ्गराज्यस्य पूर्वं कर्णपितृसम्बन्धित्वात् निजेत्युक्तम् । ननु अङ्गराज्यं अधिरथाज्जरासन्धेन अपहृतम् इत्युक्तमतः तदेकदेशोऽपि कथं दुर्योधनेन दत्त इत्यत आह– **मगध इति** ।। मगधाधिराजं दिग्विजयसमये जित्वा वृकोदरेण हृतो राज्यैकदेशः पितुः धृतराष्ट्रस्य दत्तः । स एव पूर्वं दुर्योधनेन दत्त इत्यर्थः । अवशिष्टं अङ्गराज्यार्धं जरासन्धवशे विद्यमानं जरासन्धेन कर्णाय दत्तमिति भावः ।।१९९।।

**जनार्दनीया–** कर्णस्तथैव चकार । अङ्गराज्यं अङ्गीचकारेति भावः । अङ्गराज्यस्य दुर्योधनेन दत्तत्वात् जरासन्धः कथं पुनरदादित्यत आह– **पूर्वमिति** ।। पूर्वं निजराज्यपदैकदेशः निजराज्यपदस्य अधिरथ-सम्बध्यङ्गराज्यैकदेश एकप्रदेशः दुर्योधनेनास्य कर्णस्य विहितो दत्तः । अङ्गराजस्य पूर्वं कर्णपितृसम्बन्धित्वात् निजेत्युक्तम् । ननु अधिरथाज्जरसन्धेनाभिहृतो दुर्योधनेन कथं एकप्रदेशो दत्त इत्यत आह– **मगधेति** ।। मगधाधिराजं जित्वा, दिग्विजय इति शेषः । वृकोदरहृतः पितुरेव धृतराष्ट्रस्यैव दत्तः । तद्राज्यं दुर्योधनेन शिक्षासन्दर्शनसमये कर्णाय दत्तम् । अन्यज्जरासन्धेन इदानीं दत्तमिति भावः ।।१९९।।

**चट्टि–** इत्युक्तः सः कर्णः आशु तथैव जरासन्धेन यथोक्तं तथा चकार । युद्धसाहाय्ये अङ्गराज्ये च अङ्गीचकारेति भावः । 'अभ्यषेयचदङ्गेषु राजानं पित्रनुज्ञया' इति प्राक् दुर्योधनेन अङ्गराज्यस्य दत्तत्वात् इदानीं जरासन्धः कर्णाय अङ्गराज्यं कथं पुनरदादित्यत आह– **पूर्वमिति** ।। पूर्वं निजराज्यपदैकदेशः निजराज्यपदस्य अधिरथसम्बध्यङ्गराज्यस्य एकदेशः एकप्रदेशः दुर्योधनेन तस्य कर्णस्य विहितो दत्तः । अधिरथाज्जरासन्धेन अभिहृतो दुर्योधनेन कथं दत्त इत्यत आह– **मगधेति** ।। मगधाधिराजं जित्वा,

दिग्विजय इति शेषः । वृकोदरहृतः पितुरेव धृतराष्ट्रस्यैव दत्तः । तद्राज्यं दुर्योधनेन शिक्षासन्दर्शनसमये कर्णाय दत्तम् । अन्यजरासन्धेन इदानीं दत्तमिति भावः ।। १९९ ।।

**अङ्गाधिराज्यमुपलभ्य जरासुतस्य**
**स्नेहं च सूर्यसुत आशु कुरून् जगाम ।**
**दृष्ट्वैव तं मुमुदिरे धृतराष्ट्रपुत्रा**
**नानेन तुल्यमधिजग्मुरतो हरिश्च ।।२००।।**

**व्यासतीर्थीया–** अतः मागधजयकर्मणा ।। २०० ।।

**वरदराजीया–** एवं सम्पूर्णं अङ्गराज्यं उपलभ्य लब्ध्वा, स्नेहं च उपलभ्य । हरिं कृष्णं अनेन कर्णेन तुल्यं सदृशं नाधिजग्मुः । अथ जरासन्धं जित्वा आगत इति कृष्णादप्यधिक इति मेनिर इति भावः ।।२००।।

**अनन्तभट्टीया–** हरिं अनेन तुल्यं नाधिजग्मुः ।। २०० ।।

**लघ्वनन्तभट्टीया–** अधिराज्यं पूर्णराज्यम् । अतः कारणात् ।।२००।।

**जनार्दनीया–** अतो जरासन्धजयात् । अनेन कर्णेन तुल्यं हरिं कृष्णं नाधिजग्मुः । कृष्णादधिकः कर्ण इति मेनिर इति भावः ।।२००।।

**चट्टि–** सूर्यसुतः कर्णः अङ्गाधिराज्यं जरासुतस्य स्नेहं चोपलभ्याशु कुरून् कौरवान् प्रति जगाम । धृतराष्ट्रपुत्राः दुर्योधनादयस्तं कर्णं दृष्ट्वैव मुमुदिरे । अतो जरासन्धजयात् अनेन कर्णेन हरिं श्रीकृष्णं च तुल्यं सदृशं नाधिजग्मुः । कृष्णादधिकः कर्ण इति मेनिर इति भावः ।। २०० ।।

**उद्वाह्य काशितनयां [१]गिरिजाधिविष्टां**
**साक्षान्नरेषु जनितां प्रथमामलक्ष्मीम् ।**
**तस्यां सुतं त्वजनयत् पुर आस योऽक्षः**
**कन्यां पुरा प्रियतमां च षडाननस्य ।।२०१।।**

**व्यासतीर्थीया–** साक्षादलक्ष्मीत्वे कथं भारते सभामध्ये कृष्णावासोहरणादौ क्रियमाणे दुःखितत्वोक्तिरित्यत उक्तम्– **गिरिजाधिविष्टामिति** ।। षडाननस्य स्कन्दस्य ।। २०१-२०२ ।।

**वरदराजीया–** नरेषु मनुष्यलोकेषु जनितां साक्षादलक्ष्मीं प्रथमां ज्येष्ठां कलेर्भार्यां गिरिजाधिविष्टां प्रविष्टाम् । गिरिजावेशादेव द्रौपदीवस्त्रहरणसमये तथा क्लेशः कृत इति भारतीकथा द्रष्टव्येति भावः । तस्यां

१. 'गिरिजाभिविष्टाम्' इति जनार्दनीय-चट्टीपाठः ।

काशिराजतनयायां पूर्वं योऽक्षकुमारो राक्षसः तं सुतं अजनयदिति सम्बन्धः । पुरा पूर्वं षडाननस्य स्कन्दस्य प्रियतमां भार्यां कन्याश्च अजनयत् ॥२०१॥

**अनन्तभट्टीया–** अलक्ष्मीत्वे द्रौपदीवस्त्राहरणसमये तस्या दुःखित्वोक्तिः भारते कथमित्यत आह– **गिरिजाधिविष्टामिति** ॥ तद्दुःखित्वं गिरिजासम्बन्धीति भावः । अक्षः रावणपुत्रः । पुरा पूर्वं षडाननस्य स्कन्दस्य ॥२०१-२०२॥

**लघ्वनन्तभट्टीया–** षडाननस्य स्कन्दस्य ॥ २०१-२२२ ॥

**जनार्दनीया–** गिरिजाभिविष्टाम् । अत एव भारते द्रौपदीवस्त्रहरणादिविषये अस्याः दुःखितत्वोक्तिः सङ्गच्छते । तदुक्तं सभापर्वणि- 'धार्तराष्ट्रस्त्रियस्ताश्च निखिलेनोपलभ्य वै । गमनं परिकर्षश्च कृष्णाया द्यूतमण्डले ॥ रुरुदुः सुस्वरं सर्वा विनिन्दन्त्यः कुरून् भृशम् । इत्युच्य सुचिरं कालं करासक्तमुखाम्बुजा ॥' इति (१०१.६३-६४) । साक्षादलक्ष्मीं प्रथमां ज्येष्ठाम् । समुद्रमन्थने लक्ष्म्याः सकाशादादौ जातेति भावः । नरेषु जनितां उत्पन्नां काशितनयां काशिराजसुतां उद्वाह्य विवाह्य । पुरा योऽक्षः अक्षकुमारः आस । तं सुतं तस्यां अजनयत् । पुरा षडाननस्य गुहस्य प्रियतमां भार्यां देवसेनां कन्यां चाजनयत् । वायुपुराणे- 'शतक्रतो रूपमती देवसेनेति या सुता । सा महेन्द्रेण रत्यर्थं भार्यात्वेनोपपादिता ॥ उदीर्णसेनापतये महासेनाय सुव्रत ॥' इति ॥ २०१ ॥

**ताम्रपर्णी–** केचित् प्रथमां तमोयोग्यस्त्रीषु प्रधानाम् । यद्वा महालक्ष्म्यपेक्षया प्रधानां ज्येष्ठां क्षीर-समुद्रमथनकाले पूर्वमुत्पन्नां इति यावत् । प्रथमामुद्वाह्येत्यन्वयः । प्रथमभार्यात्वेनोद्वाह्येत्यर्थः । न तत्रालक्ष्म्यावेशो मन्तव्य इत्याह– **साक्षादलक्ष्मीमिति** ॥ साक्षादलक्ष्मीत्वे कथं भारते सभामध्ये कृष्णावासोपहरणादौ क्रियमाणे दुःखितत्वोक्तिः । कथं वा रूपातिशय इत्यत आह– **गिरिजाधिविष्टामिति** ॥२०१-२॥

**भावचन्द्रिका–** समुद्रमथने काले पूर्वोत्पन्नत्वात् प्रथमां साक्षादलक्ष्मीम् । आसुरीषु प्रथमामिति वा ।

**भारतश्री–** प्रथमां ज्येष्ठाम् । 'दुःशासनं विनिन्द्यासीद् दुःखार्ता काशिजा तदा । विलोक्य द्रौपदीं साध्वीं क्लिष्टां श्वशुरसन्निधौ ॥' इति भारतोक्तेः । कथमलक्ष्म्याः तादृशी बुद्धिरित्यतः तत्रोपपत्तिमाह– **गिरिजाधिविष्टामिति** ॥ षडाननस्य प्रियां देवसेनाम् । तदुक्तं वायुपुराणे- 'शतक्रतो रूपवती देवसेनेति या श्रुता । सा महेन्द्रेण रत्यर्थे भार्यात्वेनोपपादिता । उदीर्णसेनापतये महासेनाय सुव्रत ॥' इति २०१-२

**चट्टि–** सः दुर्योधनः गिरिजाभिविष्टां गिरिजया पार्वत्या अभिविष्टां अत एव भारते द्रौपदी-वस्त्रापहरणादिविषये अस्याः दुःखितत्वोक्तिः सङ्गच्छते । तदुक्तं सभापर्वणि– 'धार्तराष्ट्रस्त्रियस्ताश्च निखिलेनोपलभ्य वै । गमनं परिकर्षं च कृष्णाया द्यूतमण्डले ॥ रुरुदुः सुस्वरं सर्वा विनिन्दन्त्यः कुरून् भृशम् । दध्युश्च सुचिरं कालं करासक्तमुखाम्बुजा ॥' इति । साक्षादलक्ष्मीं प्रथमां ज्येष्ठाम् । समुद्रमन्थने

लक्ष्मीप्रादुर्भावात् पूर्वं जातामिति भावः । नरेषु जनितां उत्पन्नां काशितनयां काशिराजसुतां उद्वाह्य । पुरा योऽक्षः अक्षकुमारः आस । तं तस्यां काशिराजसुतायां सुतं अजनयत् । पुरा षडाननस्य प्रियतमां भार्यां कन्यां चाजनयत् ।।२०१।।

**पुत्रो बभूव स तु लक्षणनामधेयः**
**सा लक्षणेत्यधिकरूपगुणाऽऽस कन्या ।**
**तस्यानुजाश्च निजयोग्यगुणा अवापुः**
**भार्याः पुनश्च स सुयोधन आप भार्याः[१] ।।२०२।।**

**वरदराजीया–** तत्र तयोर्मध्ये यः पुत्रः स लक्षणनामधेयो बभूव । सा कन्या लक्षणा इति नामवती आस । यतो अधिकरूपगुणेत्यर्थः । तस्मात् तस्य दुर्योधनस्यानुजाः दुःशासनाद्याः निजयोग्यगुणाः स्वयोग्यगुणयुक्ताः भार्याः अवापुः ।।२०२।।

**जनार्दनीया–** तस्य दुर्योधनस्य अनुजाः । निजयोग्यगुणाः पापशीला इत्यर्थः । भार्याः अवापुः ।।२०२।।

**चट्टि–** तयोः मध्ये यः पुत्रः सः लक्षणनामधेयो बभूव । अधिकरूपगुणा सा कन्या लक्षणेति नामवती आस । तस्य दुर्योधनस्य अनुजाः दुःशासनादयः । निजयोग्यगुणाः पापशीला इत्यर्थः । भार्याः अवापुः । सः सुयोधनः पुनश्च भार्यामाप ।।२०२।।

**पूर्वं सुरान्तक इति प्रथितः सुतोऽभूद्**
**दुःशासनस्य तदनु प्रतितप्यमानाः ।**
**दृष्ट्वैव पार्थबलवीर्यगुणान् समृद्धिं**
**तां चैव ते प्रतिययुः स्म कलिङ्गदेशम् ।।२०३।।**

**व्यासतीर्थीया–** तां कृष्णाम् ।। २०३-२०४ ।।

**वेदाङ्गतीर्थीया–** तदनु पाण्डवागमनानन्तरम् । समृद्धिं कृष्णां च ।।२०३-२०७।।

**वरदराजीया–** पुरा सुरान्तक इति यः सः दुःशासनस्य सुतोऽभूत् । ते दुर्योधनाद्याः पार्थानां बलवीर्यगुणान् दृष्ट्वा परितप्यमानाः कलिङ्गदेशं प्रति ययुः ।।२०३।।

**अनन्तभट्टीया–** सुरान्तकः देवान्तकः सोऽपि रावणपुत्रः । तां समृद्धिं प्रसिद्धां च दृष्ट्वा ।। २०३-४।।

**जनार्दनीया–** सुरान्तक इति प्रथितः देवान्तक इति ख्यातः । तदनु पाण्डवागमनानन्तरम् । समृद्धिं तां कृष्णां च दृष्ट्वा ।।२०३।।

---

१. 'आप भार्याम्' इति चट्टीपाठः ।

**ताम्रपर्णी–** तां च द्रौपदीं च ।।२०३।।

**भारतश्री–** तदनु द्रौपदीमुद्वाह्य पाण्डवागमनादनु पाण्डवगमनानन्तरम् । तां च द्रौपदीश्च।।२०३-६।।

**चट्टि–** पूर्वं सुरान्तक इति देवान्तक इति प्रथितः ख्यातः यः सः दुःशासनस्य सुतोऽभूत् । तदनु पाण्डवागमनानन्तरं पार्थवलवीर्यगुणान् तां कृष्णां समृद्धिं च दृष्ट्वैव प्रतितप्यमानास्ते दुर्योधनाद्याः कलिङ्गदेशमेव प्रतिययुः स्म ।।२०३।।

**आसीत् स्वयंवर उतात्र कलिङ्गराज-**
**पुत्र्याः सुवज्र इति यं प्रवदन्ति भूपाः ।**
**रौद्राद् वरादविजितस्य च तस्य कन्यां**
**दृप्तो बलात्स जगृहे धृतराष्ट्रसूनुः ।।२०४।।**

**वरदराजीया–** अत्र कलिङ्गनगरे कलिङ्गराजपुत्र्याः स्वयंवरः आसीत् । ते दुर्योधनाद्याः । यं कलिङ्गराजम् । तस्य सुवज्रस्य । धृतराष्ट्रसूनुः दृप्तः स्वयंवरे स्थितां कलिङ्गस्य कन्यां बलात् जगृहे ।।२०४।।

**जनार्दनीया–** तस्य सुवज्रस्य । दृप्तो मत्तः ।।२०४।।

**ताम्रपर्णी–** ।। यं प्रवदन्तीति ।। तेनायं बलिष्ठ इति सूचयति ।।२०४-२०९।।

**चट्टि–** अत्र कलिङ्गगृहे कलिङ्गराजपुत्र्याः स्वयंवरः आसीत् । उतानन्तरं भूपाः यं सुवज्र इति प्रवदन्ति । रौद्रात् रुद्रसम्बन्धिनः वरात् अविजितस्य सुवज्रस्य कन्यां, दृप्तो मत्तः सः धृतराष्ट्रसूनुः दुर्योधनः बलात् जगृहे च ।। २०४ ।।

**तत्राथ रुद्रवरतः स जरासुतेन**
**युक्तो बबन्ध च सुयोधनमाशु जित्वा ।**
**कर्णः पराद्रवदिह स्म सुतेषु पाण्डोः**
**यस्मात् स्पृधाऽगमदतः स पराजितोऽभूत् ।।२०५।।**

**व्यासतीर्थीया–** ननु कर्णः कथं 'न जीयसे' (ता.नि-१५.५८) इति रामवरभावात् पराजितः पराद्रवदित्यत उक्तम्– इह **स्मेति** ।। २०५-२०७ ।।

**वरदराजीया–** सः सुवज्रः जरासुतेन सहितः सुयोधनं जित्वा बबन्ध । इह युद्धे कर्णः पराद्रवत् । ननु 'न जीयसे' इति परशुरामेण वरस्य दत्तत्वात् कर्णः कथं पराजित इत्यत आह– **स्पृधेति** ।। पाण्डोः सुतेषु स्पृधा स्पर्धया अगमत् यस्मात् तस्मात् पराजितोऽभूत् । 'स्पर्धमानः पराभूतिम्' इति परशुरामवचनादेव इति भावः ।।२०५।।

**अनन्तभट्टीया–** ननु 'न जीयसे' इति परशुरामवरसद्भावात् कर्णः कथं पराजित इत्यत आह– **स्पृधेति** ।। पाण्डोः सुतेषु स्पृधा । 'स्पर्धमानस्तु यासि पराभूतिम्' इति तत्रैवोक्तत्वादिति भावः ।। २०५-२०६ ।।

**जनार्दनीया–** पूर्वं कर्णः जरासुतादीन् जितवान् अथ कथं पराजित इत्यत आह– **स्पृधेति** ।। यस्मात् पाण्डोः सुतेषु स्पृधा अगमत् अतः ।।२०५।।

**चट्टि–** अथ तत्र स्वयंवरे सः सुवज्रः जरासुतेन युक्तः सन् रुद्रवरतः सुयोधनमाशु जित्वा बबन्ध च । इह युद्धे कर्णः पराद्रवत् । पूर्वं कर्णः जरासुतादीन् जितवान् अथ कथं पराजित इत्यत आह– **स्पृधेति** ।। यस्मात् पाण्डोः सुतेषु स्पृधा स्पर्धया अगमत् अतः सः कर्णः पराजितोऽभूत् ।। २०५ ।।

**दुर्योधनेऽनुजजनैः सह तैर्गृहीते**
**भीष्माम्बिकेयविदुराग्रजवाक्यनुन्नः ।**
**भीमो विजित्य नृपतीन् सजरासुतांस्तान्**
**हत्वा सुवज्रममुचद् धृतराष्ट्रपुत्रान् ।।२०६।।**

**वादिराजतीर्थीया–** 'अमुचद् धृतराष्ट्रपुत्रान्' इत्यत्र अमुचत् अमूमुचत्; मोचयामासेत्यर्थः।।२०६-१।।

**वरदराजीया–** अनुजजनैः दुःशासनादिभिः । भीष्मादिवाक्यैः नुन्नः बलात् प्रेरितो सजरासुतान् जरासुतेन सह वर्तमानान् नृपतीन् विजित्य युयुत्सुं सुवज्रं कलिङ्गराजं हत्वा ।।२०६।।

**जनार्दनीया–** नुन्नः प्रेरितः ।।२०६।।

**चट्टि–** अनुजजनैः दुःशासनादिभिः सह दुर्योधने तैः राजभिः गृहीते सति भीमः भीष्माम्बिकेय-विदुराग्रजवाक्यैः नुन्नः प्रेरितः सन् सजरासुतान् तान् नृपतीन् विजित्य सुवज्रं हत्वा धृतराष्ट्रपुत्रान् दुर्योधनादीन् अमुचत् अमूमुचत्; मोचयामासेत्यर्थः ।। २०६ ।।

**तेऽपि स्म कर्णसहिता मृतकप्रतीका**
**नागाह्वयं पुरमथाऽययुरप्यमीषाम् ।**
**दृष्ट्वा विरोधमवदन्नृपतिश्च धर्म-**
**पुत्रं [1]पुरन्दरकृतस्थलमाशु याहि ।।२०७।।**

---

१. 'पुनर्वै विग्रहो मा भूत् खाण्डवप्रस्थमाविश । न हि वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम् ।।' इति भारते १.२२७.१६.

**वरदराजीया–** मृतकप्रतीकाः मृतकप्रायाः । अमीषां स्वपुत्राणां पाण्डवानां च । नृपतिः धृतराष्ट्रः । पुरन्दरेण कृतं निर्मितं स्थलं इन्द्रप्रस्थम् ।।२०७।।

**अनन्तभट्टीया–** अमीषां कुरुपाण्डवानाम् । पुरन्दरेण कृतं स्थलं नगरम्, इन्द्रप्रस्थमित्यर्थः ।।२०७-९।।

**जनार्दनीया–** मृतकप्रतीकाः मृतसदृशाः । अमीषां दुर्योधनादीनां नृपतिर्धृतराष्ट्रः । पुरन्दरकृतस्थलं इन्द्रेण निर्मितस्थलं इन्द्रप्रस्थमित्यर्थः ।।२०७।।

**भारतश्री–** मृतकप्रतीकाः मृतसदृशाः ।। २०७-२०९ ।।

**चट्टि–** तेऽपि सुयोधनादयोऽपि कर्णसहिताः सन्तः मृतकप्रतीकाः मृतसदृशाः सन्तः नागाह्वयं पुरं हस्तिनपुरं प्रत्याययुः । अथ अमीषां कुरुपाण्डवानां विरोधं दृष्ट्वा नृपतिर्धृतराष्ट्रश्च धर्मपुत्रमवदत् । किमिति? पुरन्दरेण इन्द्रेण कृतं निर्मितं स्थलं इन्द्रप्रस्थमित्यर्थः । आशु याहि ।। २०७ ।।

**[1]तत्रार्धराज्यमनुभुङ्क्ष्व सहानुजैस्त्वं**
**[2]कोशार्धमेव च गृहाण पुरा हि शक्रः ।**
**तत्राभिषिक्त उत कञ्जभवादिदेवैः**
**तत्रस्थ एव स चकार चिरं च राज्यम् ।।२०८।।**

**व्यासतीर्थीया–** अस्तु राज्यादिकं परन्तु अपकृष्टमित्याशङ्क्याह– **पुरा हीति** ।। २०८-२०९ ।।

**वेदाङ्गतीर्थीया–** तत्र स्थित्वा अर्धराज्यं मद्राज्यार्धम् । 'पुरन्दरकृतस्थलम्' इत्येतद्विवृणोति– **पुरा हीति** ।।२०८-२०९।।

**वरदराजीया–** तत्र इन्द्रप्रस्थे । कोशार्धं च गृहाण । 'पुरन्दरकृतस्थलम्' इत्येतत्स्पष्टयति– **पुरा हीति** ।। पुरा इन्द्रप्रस्थे । तत्रस्थ एव तत्र इन्द्रप्रस्थे तिष्ठन्नेव ।।२०८।।

**जनार्दनीया–** तत्र स्थित्वा अर्धराज्यमनुभुङ्क्ष्व । 'पुरन्दरकृतम्' इत्येतद्विवृणोति– **पुरा हीति** ।। तत्र इन्द्रप्रस्थे अभिषिक्तः । उत तत्रस्थ एव सः शक्रः चिरं राज्यं चकार ।।२०८।।

**चट्टि–** तत्र इन्द्रप्रस्थे, स्थित्वेति शेषः । अनुजैः सहैव त्वं अर्धराज्यमनुभुङ्क्ष्व । कोशार्धं च गृहाण । 'पुरन्दरकृतम्' इत्येतद्विवृणोति– **पुरा हीति** ।। पुरा सः शक्रः तत्र इन्द्रप्रस्थे कञ्जभवादिदेवैः अभिषिक्तः सन् उत अनन्तरं तत्रस्थ एव इन्द्रप्रस्थे स्थित एव चिरं राज्यं च चकार च ।। २०८ ।।

---

१. 'अर्धराज्यं तु सम्प्राप्य खाण्डवप्रस्थमाविश ।' इति भारते- १.२२७.१७.

२. 'नगरं खाण्डवप्रस्थं रत्नान्यादाय सर्वशः । तत्र ते न्यवसन् पार्थाः संवत्सरगणान् बहून् ।।' इत्यादिपर्वणि- ६१.३६.

**त्वं वीर शक्रसम एव ततस्तवैव**
**योग्यं पुरं तदत आश्वभिषेचयामि ।**
**इत्युक्त आह स युधिष्ठिर ओमिति स्म**
**चक्रेऽभिषेकमपि तस्य रा आम्बिकेयः ॥२०९॥**

**वरदराजीया–** हे वीर! त्वं शक्रसमः । तवैव योग्यम् । अतः कारणाद्याहीत्याह । आम्बिकेयो धृतराष्ट्रः ॥२०९॥

**जनार्दनीया–** इतः अत्रैव अभिषेचयामि ॥२०९॥

**चट्टि–** हे वीर! त्वं शक्रसम एव । ततः तत्पुरं तवैव योग्यम् । अतः इतः अत्रैव अभिषेचयामि इत्यवदिति पूर्वेणान्वयः । इत्युक्तः, धृतराष्ट्रेणेति शेषः । सः युधिष्ठिरः ओमित्याह । सः आम्बिकेयो धृतराष्ट्रस्तस्य धर्मजस्य अभिषेकमपि चक्रे स्म ॥२०९॥

**[1]तस्याभिषेकमकरोत् प्रथमं स कृष्णो**
**वासिष्ठनन्दन उरुर्भव चक्रवर्ती ।**
**[2]यष्टाऽश्वमेधनिखिलात्मकराजसूय-**
**पूर्वैर्मखैः सततमेव च धर्मशीलः ॥२१०॥**

**व्यासतीर्थीया–** निखिलेत्यस्य परतो यज्ञपदं प्रक्षेप्यम् ॥ २१०-२११ ॥

**वेदाङ्गतीर्थीया–** अश्वमेधनिखिलात्मकराजसूयपूर्वैः अश्वमेधश्च निखिलात्मकराजसूयश्च तत्पूर्वैः ॥ २१०-११॥

**वादिराजतीर्थीया–** 'अश्वमेधनिखिलात्मकराजसूयपूर्वैः' इत्यत्र अश्वमेधस्य निखिलः आत्मा स्वरूपं स्वभावो वा । राजसूयोऽप्यश्वहोमरूपत्वादश्वमेध एव, राज्ञां विजयरूपनिषूदनानन्तरं क्रियमाणत्वाद्राज्ञां विजयेनार्जितधनैः प्रसूयमानत्वाद्वा राजसूय इत्युच्यते । अत एव 'राजसूयाश्वमेधे' (वायुस्तुति-२३श्लो) इति प्राचां प्रयोगः ॥ २१०-२११ ॥

---

१. 'तस्मिन् क्षणे महाभाग कृष्णद्वैपायनस्तदा । आगत्य कुरुभिः सर्वैः पूजितः ससुहृद्गणैः ॥ मूर्धाभिषिक्तैः सहितो ब्राह्मणैर्वेदपारगैः । कारयामास विधिवत्केशवानुमते तदा ॥' इत्यादिपर्वणि- २२७.३२-३३.
'कृपो द्रोणश्च भीष्मश्च धौम्यश्च व्यासकेशवौ । बाह्लीकः सोमदत्तश्च चातुर्वेद्यपुरस्कृताः ॥ अभिषेकं तदा चक्रुः भद्रपीठे सुसंस्कृतम् ॥' इत्यादिपर्वणि- २२७. ३४-३५.

२. व्यास उवाच– जित्वा तु पृथिवीं कृत्स्नां वशे कृत्वा नृपान् भवान् । राजसूयादिभिर्यज्ञैः क्रतुभिर्वरदक्षिणैः ॥ स्नात्वा ह्यवभृथस्नानं मोदतां बान्धवैस्सह । एवमुक्त्वा तु ते सर्वे आशीर्भिरभिपूजयन् ॥ मूर्धाभिषिक्तः कौरव्यः सर्वाभरणभूषितः । जयेति संस्तुतो राजा प्रददौ धनमक्षयम् ॥' इत्यादिपर्वणि- २२७.३६-३८.

**वरदराजीया–** वासिष्ठनन्दनः कृष्णः वेदव्यासः अश्वमेधनिखिलात्मकः सर्वयज्ञात्मको राजसूययज्ञश्च पूर्वौ येषां तैः मखैः । यष्टा धार्मिकश्च भव ।।२१०।।

**अनन्तभट्टीया–** ।। **निखिलात्मकेति** ।। निखिलयज्ञात्मकेत्यर्थः ।। २१० ।।

**जनार्दनीया–** प्रथमं वासिष्ठनन्दनः । स कृष्णः व्यासः । 'सकृष्णः' इत्यत्र भिन्नं पदम् । अश्वमेधनिखिलात्मकराजसूयपूर्वैः अश्वमेधश्च निखिलात्मकराजसूयश्च सर्वयज्ञात्मको राजसूयः तत्पूर्वैर्मखैः । यष्टा उरुः उत्कृष्टः, सर्वेभ्य इति शेषः । चक्रवर्ती धर्मशीलो भवेति ।।२१०।।

**ताम्रपर्णी–** ।। **अश्वमेधेति** ।। अश्वमेधानां यन्निखिलं साकल्यं तदात्मकराजसूयपूर्वैरित्यर्थः । अश्वमेधश्च निखिलयज्ञात्मको राजसूयश्च तत्पूर्वैर्मखैरिति वा ।। २१०-२२१ ।।

**भारतश्री–** 'सकृष्णः' इत्यत्र भिन्नं पदम् ।। २१०-२२३ ।।

।। इति डम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां एकोनविंशोऽध्यायः ।।

**चट्टि–** प्रथमं वासिष्टनन्दनः कृष्णः श्रीव्यासस्तस्य धर्मराजस्य अभिषेकमकरोत् । हे वीर! त्वं उरुः उत्कृष्टः चक्रवर्ती भव । अश्वमेधनिखिलात्मकराजसूयपूर्वैः अश्वमेधश्च निखिलात्मकराजसूयश्च सर्वयज्ञात्मकराजसूयश्च तत्पूर्वैर्मखैः । यष्टा च भव सततमेव धर्मशीलश्च भव ।। २१० ।।

**इत्येव पार्षतसुतासहितेऽभिषिक्ते**
**कृष्णोऽपि वृष्णिवृषभः स तथाऽभ्यषिञ्चत् ।**
**एवं च मारुतिशिरस्यभिषेकमेतौ**
**सञ्चक्रतुः स्म युवराजपदे सभार्यम् ।।२११।।**

**सत्याभिनवतीर्थीया–** तत्रैव 'इत्येव पार्षतसुतासहितेऽभिषिक्ते..' इति श्लोके युवराजपदे इत्यस्य युवराजाधिपत्यकरणार्थमित्यर्थः । एतेन युवराजाधिपत्यकरणार्थमिति वक्तव्यम् । युवराजपदे इति कथनमनुपपन्नमिति दूषणं परिहृतम् । आधिपत्यवाचकेन पदशब्देन तत्करणं गृहीत्वा युवराजपदे इति सप्तमी तादर्थ्ये इत्यभ्युपेत्य युवराजाधिपत्यकरणार्थमित्यर्थस्योक्तत्वात् ।। २११-२२३ ।।

।। इति श्रीमज्जगत्पूज्यपादुकानां श्रीसत्यनाथतीर्थश्रीपादनां शिष्येण श्रीसत्याभिनवयतिना विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां दुर्घटार्थप्रकाशिकायां एकोनविंशोऽध्यायः ।।

**वरदराजीया–** इत्यभिषिक्ते एव सति पार्षदसुतासहिते भीमेऽभिषिक्ते सति वृष्णिवृषभः कृष्णोऽपि तथा अभ्यषिञ्चत् ।सभार्यमिति क्रियाविशेषणम् ।एतौ व्यासकृष्णौ युवराज्यपदे अभिषेकं चक्रतुः ।।२११।।

**अनन्तभट्टीया–** सभार्यमिति क्रियाविशेषणम् ।। २११ ।।

**जनार्दनीया–** पार्षतसुतासहिते युधिष्ठिरे अभिषिक्ते सति । कृष्णोऽपि तथाऽभ्यषिञ्चत् । एवं पूर्वोक्ताशीःपूर्वकम् । एतौ कृष्णौ मारुतिशिरसि अभिषेकं सञ्चक्रतुः ।।२११।।

**चट्टि–** इति पार्षतसुतासहिते धर्मजे अभिषिक्ते सत्येव वृष्णिवृषभः सः श्रीकृष्णोऽपि तथाऽभ्यषिञ्चत् । एवं पूर्वोक्ताशीःपूर्वकं एतौ कृष्णौ मारुतिशिरसि भीमशिरसि चाभिषेकं सञ्चक्रतुः स्म । ननु धर्मराजस्य राज्यं दत्त्वा अभिषेकस्य कृतत्वात् भीमशिरस्यपि किमिति कृतवन्तावित्यत आह– **युवराजपदे इति** ।। सभार्यं भीमं युवराजपदे यौवराज्ये अभिषेकवन्तं सञ्चक्रतुरित्यर्थः ।। २११ ।।

**भीमे च पार्षतसुतासहितेऽभिषिक्ते**
**ताभ्यामनन्तसुखशक्तिचिदात्मकाभ्याम् ।**
**अन्यैश्च विप्रवृषभैः [1]सुकृतेऽभिषेके**
**धर्मात्मजानु मुमुदुर्निखिलाश्च सन्तः ।।२१२।।**

**व्यासतीर्थीया–** धर्मात्मजानु सुकृताभिषेके ।। २१२ ।।

**वेदाङ्गतीर्थीया–** पार्षतसुतासहिते भीमे च धर्मात्मजानु अभिषिक्ते ।।२१२।।

**वादिराजतीर्थीया–** 'अन्यैश्च विप्रवृषभैः' इत्यत्र अन्यैः विप्रवृषभैश्च । धर्मात्मजानु धर्मात्मजाभिषेकानन्तरं अभिषेके भीमस्याभिषेके सुकृते सुष्ठु कृते सतीत्यर्थः ।। २१२-२१५ ।।

**वरदराजीया–** ताभ्यां व्यासकृष्णाभ्यां अनन्तसुखशक्तिः चित् आत्मा स्वरूपं ययोस्तौ तथा ताभ्याम् । धर्मात्मजस्य अनु अभिषेकानन्तरम् ।।२१२।।

**अनन्तभट्टीया–** धर्मत्मजानु धर्मजाभिषेकानन्तरम् ।।२१२।।

**जनार्दनीया–** पार्षतसुतासहिते भीमे च धर्मात्मजानु ताभ्याममभिषिक्ते सति । अन्यैश्चाभिषेके सुकृते सति सन्तो मुमुदुः ।।२१२।।

**चट्टि–** पार्षतसुतासहिते भीमे च धर्मात्मजानु अनन्तरं अनन्तसुखशक्तिचिदात्मकाभ्यां ताभ्यां व्यासकृष्णाभ्यां अभिषिक्ते सति अन्यैः विप्रवृषभैश्चाभिषेके सुकृते सति निखिलाः सन्तो समस्तसज्जनाश्च मुमुदुः ।। २१२ ।।

**तस्मिन् महोत्सववरे दिनसप्तकानु-**
**वृत्ते वसिष्ठवृषभेण च वृष्णिपेन ।**
**कृष्णेन ते ययुरमा पृथया तया च**
**पाञ्चालराजसुतया स्थलमिन्द्रवासम् ।।२१३।।**

---

१. 'सुकृताभिषेके' इति व्यासतीर्थीयपाठः ।

**व्यासतीर्थीया–** 'तया' इति वैरहेतुभूतत्वं सूचयति ।। २१३-२१५ ।।

**वेदाङ्गतीर्थीया–** दिनसप्तकानुवृत्ते दिनसप्तकमनुवृत्ते ।।२१३-२१५।।

**वरदराजीया–** दिनसप्तकमनुवृत्ते तस्मिन् महोत्सवे सन्तो मुमुदुः । वासिष्ठवृषभेण श्रीवेदव्यासेन वृष्णिपेन कृष्णेन यादवकृष्णेन च अमा सह पाञ्चालराजसुतया तया प्रसिद्धया द्रौपद्या पृथया च अमा इन्द्रवासस्थलं इन्द्रप्रस्थं ययुः ।।२१३।।

**अनन्तभट्टीया–** 'तया' इति वैरहेतुभूतत्वेन प्रसिद्धयेति सूचयति ।। २१३-२१५ ।।

**जनार्दनीया–**दिनसप्तकानुवृत्ते दिनसप्तकमनुवृत्तः दिनसप्तकानुवृत्तः तस्मिन् दिनसप्तकानुवृत्ते ।।२१३।।

**चट्टि–** दिनसप्तकानुवृत्ते दिनसप्तकमनुवृत्तः तस्मिन् दिनसप्तकानुवृत्ते तस्मिन् महोत्सववरे, सम्पूर्णे सति इति शेषः । तस्मिन् उत्सवे सन्तो मुमुदुरिति पूर्वेणान्वयो वा । ते पार्थाः वसिष्ठवृषभेण श्रीवेदव्यासेन वृष्णिपेन श्रीकृष्णेन यादवकृष्णेन च तया पृथया कुन्त्या च पाञ्चालराजसुतया द्रौपद्या च अमा सह इन्द्रवासस्थलमिन्द्रप्रस्थं ययुः ।। २१३ ।।

**कोशस्य चार्धसहितास्तु यदैव पार्था**
**गच्छन्तिताननुययुर्निखिलाश्च पौराः ।**
**ऊचुश्च हा बत सुयोधन एष पापो**
**दूरे चकार ननु पाण्डुसुतान् गुणाढ्यान् ।।२१४।।**

**वरदराजीया–** कोशस्यार्धेन सहिताः यदा गच्छन्ति तदा तान् गच्छमानान् अनु पृष्ठतो ययुः । हा इति खेदे । इति ऊचुः ।।२१४।।

**जनार्दनीया–** यदा पार्थाः गच्छन्ति गताः तदा पौराश्च ताननुययुः । एषः दुर्योधनः पाण्डुसुतान् दूरे चकार । ननु हा खेदे । बत आश्चर्ये ।।२१४।।

**चट्टि–** पार्थाः कोशस्यार्धेन सहिताः सन्तः यदैव गच्छन्ति गताः । तदा निखिलाश्च पौराः ताननुययुः । पापः एषः दुर्योधनः गुणाढ्यान् पाण्डुसुतान् दूरे चकार । ननु हा खेदे । बत आश्चर्ये । इति ऊचुः ।।२१४।।

**भीमप्रतापमवलम्ब्य कलिङ्गबन्धा-**
**न्मुक्तः सुतामपि हि तस्य पुरं निनाय ।**
**द्वेष्ट्येवमप्यतिबलान् हि सदैव पार्थान्**
**यामो वयं गुणिभिरद्य सहैव पार्थैः ।।२१५।।**

**वरदराजीया–** अवलम्ब्य आश्रित्य । कलिङ्गस्य गङ्गो बन्धात् । तस्य कलिङ्गस्य सुतां पुरं स्वपुरीं निनाय नीतवान् । एवमपि सति पार्थान् द्वेष्ट्येव द्विषन्नेव वर्तते ।।२१५।।

**जनार्दनीया–** अवलम्ब्य आश्रित्य । द्वेष्टि द्वेषं करोति ।।२१५।।

**चट्टि–** भीमस्य प्रतापमवलम्ब्य आश्रित्य, सः दुर्योधनः कलिङ्गवन्धात् मुक्तः तस्य कलिङ्गस्य सुतामपि पुरं निनाय । एवमप्यतिवलान् पार्थान् सदैव द्वेष्टि द्वेषं करोति एव । वयमद्य गुणिभिः पार्थैः सहैव यामः ।। २१५ ।।

**[1]आज्ञापयत्यपि [2]स भेरिरवेण पार्थान्**
**नैवानुगच्छत यदि व्रजथानु वोऽद्य ।**
**वित्तं हरिष्य इह सर्वमपीति तच्च**
**पापः करोतु न वयं विजहाम पार्थान् ।।२१६।।**

**व्यासतीर्थीया–** कथं वयं पार्थाननुयामेत्यत आह– **आज्ञापयतीति** ।। सत्यम्, नैवानुगच्छत इत्याज्ञापयतीति । अपि तथापि अनुयामः । अनुयाने वो वित्तं हरिष्यतीति च व्रवीत्यतः कथं यामेत्यत आह– **तच्चेति** ।। २१६ ।।

**वेदाङ्गतीर्थीया–** सः दुर्योधनः भेरिरवेण पार्थान् नैवानुगच्छत इति आज्ञापयति आज्ञां कुर्वन् वर्तते । अपि तथापि वयं पार्थान् न विजहाम । अनुगमने सर्वमपि वित्तं हरिष्यामीति चेत् पापः तच्च करोतु । इति स्म धृतचेतसः धर्म आह ।। २१६-२१८।।

**वादिराजतीर्थीया–** 'आज्ञापयत्यपि सभेरिरवेण' इत्यत्र सभेरिरवेण भेरिरवसहितेन दूतेन आज्ञापयति सत्यपीत्यपिपदसम्वन्धः ।। २१६ ।।

**वरदराजीया–** सः दुर्योधनः भेरीरवेण भेरीघोषेण आज्ञापयत्यपि आज्ञां करोत्यपि । किमिति? पार्थान् अनु नैव गच्छत । यदि अनुव्रजथ तर्हि अद्य वः युष्माकं सर्वमपि वित्तं हरिष्य इति आज्ञापयतीति सम्वन्धः । पापो दुर्योधनः तच्च करोतु सर्वं वित्तं हरत्वित्यर्थः । तथापि पार्थान् न विजहाम ।।२१६।।

**अनन्तभट्टीया–** प्रजासम्भाषणमभिनयति– **आज्ञापयतीति** ।। दुर्योधनः इत्याज्ञापयति । तर्हि तच्च करोतु ।। २१६ ।।

**जनार्दनीया–** यदि अनुव्रजथ । तथापि पार्थान्न विजहामः । अनुगमे सर्वमपि वित्तं हरिष्यतीति चेत् पापस्तच्च करोतु ।।२१६।।

**चट्टि–** सः दुर्योधनः पार्थान् नैवानुगच्छतु । यदि अनुव्रजथ तर्हि अद्य वः युष्माकं सर्वमपि वित्तम् इह अत्रैव हरिष्ये इति भेरिरवेण भेरीघोषेण आज्ञापयति सति आज्ञां करोत्यपि तथापि पापो दुर्योधनः तच्च वित्तहरणं करोतु । वयं पार्थान्न विजहामः ।।२१६।।

---

१. 'तान् दृष्ट्वा नागरास्सर्वे भक्त्या चैव प्रतस्थिरे । गच्छतः पाण्डवैस्सार्धं दृष्ट्वा नागपुरालयात् ।। पाण्डवैस्सहिता गन्तुं नार्हन्तीति च नागरान् । घोषयामास नगरे धार्तराष्ट्रः ससौबलः ।।' इत्यादिपर्वणि- २२७.५०-५१.

२. 'सभेरिरवेण' इति वादिराजतीर्थीये समस्तपदतया पठ्यते ।

**सद्भिर्हि सङ्गतिरिहैव [१]सुखस्य हेतु-**
**र्मोक्षैकहेतुरथ तद्विपरीतमन्यत् ।**
**तस्माद् व्रजेम सह पाण्डुसुतैर्हि शक्र-**
**प्रस्थं त्विति स्म धृतचेतस आह [२]धार्मः ॥२१७॥**

**व्यासतीर्थीया–** एवमपि पार्थैः सह किमर्थं गन्तव्यमित्यत आह– **सद्भिरिति** ॥ २१७ ॥

**वादिराजतीर्थीया–** 'तद्विपरीतमन्यत्' इत्यत्र अन्यत् असज्जनसङ्गमनमित्यर्थः ॥ २१७-२२० ॥

**वरदराजीया–** हि यस्मात् सद्भिः सङ्गतिः इह लोके सुखस्यैव हेतुः । अथानन्तरं मोक्षैकहेतुः अपि । अन्यत् असद्भिः सङ्गः विपरीतफलं तस्मात् शक्रप्रस्थं व्रजेम इति धृतचेतसः निश्चितचित्तान् पुरस्थान् प्रति धर्मः धर्मजः आह ॥२१७॥

**अनन्तभट्टीया–** सुखस्यैवेति सम्बन्धः । अन्यत् दुस्सङ्गतिः दुःखसङ्गतिर्वा ॥ २१७ ॥

**जनार्दनीया–** अन्यत् दुःसङ्गतिः । विपरीतं इह दुःखहेतुः परत्र नरकहेतुः । इति स्म इत्येव । धृतचेतसः गन्तुं निश्चितान्तःकरणान् धार्मः धर्मजः आह ॥२१७॥

**चट्टि–** हि यस्मात् सद्भिः सज्जनैः सङ्गतिरेव इह लोके सुखैकहेतुः उतानन्तरं मोक्षैकहेतुरपि । अन्यत् दुःसङ्गतिः विपरीतं विपरीतहेतु; इह दुःखहेतुः परत्र नरकहेतुः । तस्मात् पाण्डुसुतैः पाण्डुतनयैः सह शक्रप्रस्थं व्रजेम इति स्म इत्येव । धृतचेतसः गन्तुं निश्चितान्तःकरणान् । धर्मः धर्मजः आह ॥ २१७ ॥

**प्रीतिर्यदि स्म भवतां मयि सानुजेऽस्ति**
**तिष्ठध्वमत्र पितुरेव हि शासने मे ।**
**कीर्तिर्हि वोऽनुगमनात् पितुरत्ययेन**
**नश्येन्न इत्यनुसरध्वमिहाऽम्बिकेयम् ॥२१८॥**

**व्यासतीर्थीया–** तिष्ठति धातोरनुपसर्गेऽस्यात्मनेपदत्वं चान्द्रमतन्यायेन ॥ २१८-२२१ ॥

**मधुसूदनीया–** भवतामनुगमनादस्मदनुगमनात् । पितुर्धृतराष्ट्रस्य अत्ययेन उल्लङ्घनेन नः अस्माकं कीर्तिर्नश्येत् । 'पाण्डवाः स्वयं पुरात् निर्गच्छन्तः सर्वान् पौरानाकृष्य गताः' इति जना वदेयुः । ततोऽस्माकं कीर्तिनाशः स्यादिति भावः ॥ २१८-२२० ॥

---

१. 'सुखैकहेतुर्मोक्षैकहेतुरुत' इति चट्टीपाठः ।

२. 'धर्मः' इति वेदाङ्गतीर्थीय-वरदराजीय-चट्टीपाठः ।

**वरदराजीया–** भवतां युष्माकं सानुजे मयि यदि प्रीतिः अस्ति तर्हि मे पितुः धृतराष्ट्रस्य शासने आज्ञायां तिष्ठध्वम् । वो युष्माकं युष्मत्कृतात् अस्मदनुगमनात् पितुरत्ययेन अतिक्रमेण निमित्तेन नोऽस्माकं कीर्तिः विनश्येदिति हेतोः इह नागपुरे धृतराष्ट्रमनुसरध्वम् ।।२१८।।

**अनन्तभट्टीया–** पितुः इति कर्मणि षष्ठी । नः कीर्तिर्नश्येत् इति हेतुः ।। २१८-२१९ ।।

**जनार्दनीया–** यदि मयि प्रीतिश्चेत् । अत्र नागपुरे । वः भवताम् । अनुगमनेन कृतेन पितुरत्ययेन नः कीर्तिर्नश्येत् । आम्बिकेयं अनुसरध्वं सेवां कुरुध्वमित्यर्थः ।। २१८ ।।

**चट्टि–** सानुजे मयि भवतां युष्माकं यदि प्रीतिरस्ति, तर्हि इह नागपुरे मे पितुः धृतराष्ट्रस्य शासने आज्ञायामेव तिष्ठध्वम् । वः भवतां अनुगमनात् पितुरत्ययेन अतिक्रमणेन नः अस्माकं कीर्तिर्नश्येत् । 'पाण्डवाः स्वयं निर्गच्छन्तः पुरस्थान् सर्वान् जनानाकृष्य गताः' इति जना वदेयुः । ततोऽस्माकं कीर्तिनाशः स्यादिति भावः । इति हेतोः इह नागपुरे आम्बिकेयं धृतराष्ट्रं अनुसरध्वं सेवां कुरुध्वमित्यर्थः ।।२१८।।

**इत्येव तैः पुरजना निखिलैर्निषिद्धाः**
**कृच्छ्रेण तस्थुरपि तान् मनसाऽन्वगच्छन् ।**
**प्राप्याथ शक्रपुरमस्मरतां च [1]कृष्णौ**
**[2]देवेशवर्धकिमथाऽगमदत्र सोऽपि ।।२१९।।**

**वेदाङ्गतीर्थीया–** देवेशवर्धकिं विश्वकर्माणम् ।।२१९।।

**वरदराजीया–** निखिलैः तैः पाण्डवैः निषिद्धाः न आगन्तव्यमित्युक्ताः कृच्छ्रेण क्लेशेन तस्थुः । निवृत्ता अपि तथा मनसा अन्वगच्छन् । मनस्तत्रैव स्थापितवन्त इत्यर्थः । शक्रपुरं प्राप्य कृष्णौ वासिष्ठयादवौ देवेशवर्धकिं विश्वकर्माणं अस्मरतां आगच्छ इत्यचिन्तयताम् । अत्र सोऽपि वर्धकिरागमत् ।।२१९।।

**जनार्दनीया–** निषिद्धाः निवारिताः । वार्धकिं विश्वकर्माणम् । सोऽपि विश्वकर्मा ।।२१९।।

**चट्टि–** इत्येतत् पूर्वोक्तप्रकारेणैव निखिलैः समस्तैः पार्थैः पुरजनाः निषिद्धाः निवारिताः सन्तः कृच्छ्रेण कष्टेन तस्थुः । अपि तथापि तान् पाण्डवान् मनसा अन्वगच्छन् । मनस्तत्रैव स्थापितवन्त इत्यर्थः । अथ

---

१. 'वासुदेवो जगन्नाथश्चिन्तयामास वासवम् । महेन्द्रश्चिन्तितो राजन् विश्वकर्माणमादिशत् ।। विश्वकर्मन् महाप्राज्ञ अद्यप्रभृति तत्पुरम् । इन्द्रप्रस्थमिति ख्यातं दिव्यं भूम्यां भविष्यति । महेन्द्रशासनात् गत्वा विश्वकर्मा तु केशवम् । प्रणम्य प्रणिपातार्हं किं करोमीत्यभाषत । वासुदेवस्तु तच्छ्रुत्वा विश्वकर्माणमूचिवान् । कुरुष्व कुरुराजस्य महेन्द्र-पुरसन्निभम् । इन्द्रेण कृतनामानमिन्द्रप्रस्थं महापुरम् ।।' इत्यादिपर्वणि- २२७.५३-५७.

२. 'देवेशवार्धकिम्' इति जनार्दनीय-चट्टीपाठः ।

अनन्तरं कृष्णौ वासिष्ठयादवौ कृष्णौ शक्रपुरमिन्द्रप्रस्थपुरं प्राप्य देवेशवार्धकिं विश्वकर्माणं अस्मरताम् । अथानन्तरं सोऽपि विश्वकर्मापि अत्र इन्द्रप्रस्थं प्रत्यगमत् ।। २१९ ।।

**वासिष्ठपेन यदुपेन च पाण्डवानां**
**रत्नोत्करं कुरु पुरं पुरुहूतपुर्याः ।**
**सादृश्यतस्त्विति नियुक्त उभौ प्रणम्य**
**सर्वेश्वरौ स कृतवांश्च पुरं तथैव ।।२२०।।**

**वेदाङ्गतीर्थीया–** रत्नोत्करं रत्नमयम् ।।२२०।।

**वरदराजीया–** पुरुहूतपुर्याः स्वर्गलोकस्य सादृश्यतः सादृश्येन रत्नोत्करं नवरत्नखचितं पुरं पाण्डवानां अर्थे कुर्विति नियुक्तः अज्ञापितः । सर्वेश्वरौ व्यासकृष्णौ प्रणम्य सः विश्वकर्मा तथैव पुरं कृतवान् ।।२२०।।

**अनन्तभट्टीया–** रत्नोत्करं रत्नप्रचुरम् ।। २२० ।।

**जनार्दनीया–** रत्नोत्करं रत्नमयम् । सादृश्यतः सादृश्येन ।। २२० ।।

**चट्टि–** वासिष्ठपेन श्रीवेदव्यासेन यदुपेन यादवकृष्णेन च पुरुहूतपुर्याः स्वर्गलोकस्य सादृश्येन रत्नोत्करं रत्नमयं पुरं पाण्डवानामर्थे कुर्विति नियुक्तः आज्ञापितः सः विश्वकर्मा सर्वेश्वरौ व्यासकृष्णौ उभौ प्रणम्य तथैव पुरं च कृतवान् ।। २२० ।।

**देशं च नातिजनसंवृतमन्यदेश-**
**संस्थैर्जनैरभिपुपूरिर आशु पार्थाः ।**
**तेषां गुणैर्हरिपदानतिहेतुतश्च**
**राष्ट्रान्तरा इह शुभा वसतीः स्म चक्रुः ।।२२१।।**

**वेदाङ्गतीर्थीया–** नातिजनसंवृतं अतिजनसङ्कीर्णतारहितम् । अल्पजनमिति यावत् । राष्ट्रान्तराः अन्यराष्ट्रस्थाः । शुभाः सज्जनाः । वसतीः निवासान् ।।२२१।।

**वादिराजतीर्थीया–** 'राष्ट्रान्तरा इह शुभा वसतीः स्म चक्रुः' इत्यत्र अन्यद्राष्ट्रं येषां ते राष्ट्रान्तराः शुभाः सज्जना इत्यर्थः ।। २२१-२२३ ।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमदानन्दतीर्थभगवत्पादाचार्यकृत-श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां एकोनविंशोऽध्यायः ।।

**मधुसूदनीया–** नातिजनसंवृतं जनशून्यदेशम् ।। २२१-२२३ ।।

।। इति श्रीविद्याधीशतीर्थपूज्यपादानां शिष्येण मधुसूदनभिक्षुणा विरचिते श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे एकोनविंशोऽध्यायः ।।

**वरदराजीया–** नातिजनैरल्पजनैः संवृतं युक्तं देशं इन्द्रप्रस्थदेशं अन्यदेशसंस्थैः जनैरभितः पुपूरिरे पूरयामास । ननु अन्यदेशस्थाः कथमत्र आगता इत्यत आह– **तेषां गुणैरिति** ।। तेषां पाण्डवानां गुणैः निमित्तैः ।। **हरिपदेति** ।। राष्ट्रन्तराणां हरिभक्तित्वहेतोः इत्यर्थः । शुभाः सज्जनाः राष्ट्रान्तरस्थाः इन्द्रप्रस्थे वसतीः वासान् चक्रुः ।।२२१।।

**अनन्तभट्टीया–** ।। **नातिजनेति** ।। अल्पजनमित्यर्थः ।।२२१।।

**जनार्दनीया–** नातिजनसंवृतं अतिसङ्कीर्णतारहितम् । अल्पजनमिति यावत् । अभिपुपूरिरे पूरितवन्तः । राष्ट्रान्तराः अन्यदेशस्थाः शुभाः सज्जनाः । वसतीः गृहाणि । 'वसती रात्रिवेश्मनोः' इत्यमरः ।।२२१।।

**चट्टि–** पार्थाः नातिजनसंवृतं अल्पजनयुक्तं देशं चान्यदेशसंस्थैः जनैः आश्वभितः सर्वत्र पुपूरिरे पूरयामासुः । नन्वन्यदेशस्थाः कथमत्रागताः इत्यत आह– **तेषां गुणैरिति** ।। तेषां पाण्डवानां गुणैः निमित्तैः हरिपदानतिहेतुतः हर्योः श्रीव्यासकृष्णयोः पदयोः आनतिरेव हेतुस्तस्माच्च शुभाः सज्जनाः राष्ट्रान्तराः अन्यदेशस्थाः इह इन्द्रप्रस्थे वसतीः वासं चक्रुः स्म ।। २२१ ।।

**प्रस्थाप्य दूरमनुजस्य सुतान् स राजा**
**चक्रेऽभिषेकमपि तत्र सुयोधनस्य ।**
**दुःशासनं च युवराजमसौ विधाय**
**मेने कृतार्थमिव च स्वमशान्तकामः ।।२२२।।**

**व्यासतीर्थीया–** अशान्तकामत्वेन असत्पुत्राभिवृद्धिकाङ्क्षित्वात् ।। २२२ ।।

**वेदाङ्गतीर्थीया–**तत्र हस्तिनानगरे । अभिषेकं साम्राज्याभिषेकम् । अशान्तकामः अनुपरतविषयेच्छः । अन्यथा वनं गच्छेदिति भावः ।।२२२।।

**वरदराजीया–** अनुजस्य पाण्डोः । तत्र नागपुरे असौ धृतराष्ट्रः । स्वात्मानं कृतार्थं कृतकृत्यं मेने । यतः स्वतः अशान्तकामः भीमात् स्वपुत्रनिधनं शङ्कमान एव तिष्ठतीति भावः ।।२२२।।

**अनन्तभट्टीया–** स्वं आत्मानम् । अशान्तकामत्वञ्च दुष्टपुत्रवृद्धिकाङ्क्षितत्वात् ।। २२२ ।।

**जनार्दनीया–** तत्र हस्तिनपुरे । अभिषेकं साम्राज्याभिषेकम् । अशान्तकामो अनुपरतविषयेच्छः । कृतार्थं कृतकृत्यमिव मेने । अन्यथा वनं गच्छेदिति भावः ।।२२२।।

**ताम्रपर्णी–** स्वं आत्मानं कृतार्थं कृतकृत्यमिव मेने । यतस्ततो अशान्तकामः भीमात् स्वपुत्रनिधनं शङ्कमान एव तिष्ठतीति भावः ।। २२२ ।।

**चट्टि–** सः राजा धृतराष्ट्रः अनुजस्य पाण्डोः सुतान् दूरं प्रस्थाप्य तत्र हस्तिनपुरे सुयोधनस्य अभिषेकं साम्राज्याभिषेकमपि चक्रे । असौ धृतराष्ट्रः दुःशासनं युवराजं च विधाय अशान्तकामो अनुपरतविषयेच्छः सन् एव स्वमात्मानं कृतार्थं कृतकृत्यमिव मेने । अन्यथा वनं गच्छेदिति भावः ।। २२२ ।।

**पार्थाश्च ते मुमुदुरत्र वसिष्ठवृष्णि-**
**वर्योदितानखिलतत्त्वविनिर्णयांस्तु ।**
**शृण्वन्त एव हि सदा पृथिवीं च धर्माद्**
**भुञ्जन्त आश्रितरमापतिपादयुग्माः ।।२२३।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये एकोनविंशोऽध्यायः ।।

**व्यासतीर्थीया–** भुञ्जन्तः पालयन्तः ।। २२३ ।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां एकोनविंशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** भुञ्जन्तः पालयन्तः ।।२२३।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां एकोनविंशोऽध्यायः ।।

**वरदराजीया–** अखिलतत्त्वविनिर्णयग्रन्थान् शृण्वन्तः । धर्मात् धर्मेण भुञ्जन्तः पालयन्तः । आश्रितं रमापतेः श्रीकृष्णस्य पादयुग्मं यैः ते तथा । इत्यशेषमतिमङ्गलम् ।।२२३।।

।। इति आद्यवरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां एकोनविंशोऽध्यायः ।।

**अनन्तभट्टीया–** भुञ्जन्तः पालयन्तः ।। २२३ ।।

।। इति श्रीमद्विद्वच्छिखामणिनरसिंहाचार्यसुतेन अनन्ताख्येन कृतायां तन्त्रमालायां एकोनविंशोऽध्यायः ।।

**जनार्दनीया–** भुञ्जन्तः पालयन्तः ।।२२३।।

यं गङ्गा जमदग्निजान्वयभवद्विद्वद्धिरण्याभिधात्
पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्प्रयुतात् ।

पूर्तिस्तस्य कृतौ तदर्थविवृतावेकोनविंशः शुभः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां
पदार्थदीपिकायां एकोनविंशोऽध्यायः ।।

**ताम्रपर्णी–** भुञ्जन्तः पालयन्तः ।। २२३ ।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना
श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) एकोनविंशोऽध्यायः ।।

**भावचन्द्रिका–** ।। **शृण्वन्त एवेति** ।। 'श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित्' (अनुव्याख्याने-३.३.७८) इत्युक्तेः ।। **पृथिवीश्चेति** ।। 'देवादीनामादिराज्ञां महोद्योगेऽपि नो मनः । विष्णोश्चलति..।।' इत्युक्तेः (गी.भा.३.४)।। २२३ ।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां एकोनविंशोऽध्यायः ।।

**चट्टि–** ते पार्थाः पाण्डवाश्च इन्द्रप्रस्थे वसिष्ठवृष्णिवराभ्यां उदितान् अखिलतत्त्वविनिर्णयान् शृण्वन्त एव सदा पृथिवीं धर्माद् भुञ्जन्तः पालयन्तश्च अश्रितं रमापतेः श्रीकृष्णस्य पादयुग्मं यैस्ते तथाविधाः सन्तः मुमुदुः ।। इत्यशेषमतिमङ्गलम् ।। २२३ ।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां एकोनविंशोऽध्यायः ।।

★★★

# अथ विंशोऽध्यायः

**यज्ञोरुदाननरदेववन्यताप्रश्नर्षिपूजासु युधिष्ठिरोऽभूत् ।**
**धर्मानुशास्तिहरितत्त्वशंसनस्वराष्ट्ररक्षादिषु भीम आसीत् ।।१।।**

**व्यासतीर्थीया–** प्राप्तराज्यानां पाण्डवादीनां पृथक् पृथग् व्यापारादीनाह– **यज्ञेत्यादिना** ।। नरदेवाः क्षत्रियाः ।। १ ।।

**वेदाङ्गतीर्थीया–** लब्धराज्यानां पाण्डवानां व्यापारानाह– **यज्ञेत्यादिना** ।। उरुदानानि तुलापुरुषादि-महादानानि । प्रश्नः सभायामृषीन् प्रति धर्मादिविचारः । अभूत् यज्ञादिषु । धर्मानुशास्तिः वर्णाश्रमाणाम् । हरितत्त्वशंसनं स्वप्रजानाम् ।। १ ।।

**वरदराजीया–** ।। **यज्ञेत्यादिना** ।। यज्ञादौ कर्तव्ये युधिष्ठिरोऽभूत्, अधिकृत इति शेषः । धर्मस्यानुशास्तिरनुशासनं शिक्षणमित्यर्थः । हरितत्त्वशंसनं उपदेशः । स्वराष्ट्ररक्षा स्वराज्यस्य शत्रुभिः संरक्षणम् । आदिशब्देन विष्णुनिन्दकशिक्षणादिकं गृह्यते । भीमो अधिकृत आसीत् ।।१।।

**अनन्तभट्टीया–** अभूत् अधिकृतोऽभूत् ।। १ ।।

**जनार्दनीया–** प्राप्तसाम्राज्यानां पार्थानां व्यापारभेदानाह– **यज्ञेत्यादिना** ।। युधिष्ठिरः यज्ञे यज्ञकरणे । उरुदानेषु तुलापुरुषादिमहादानेषु । नरदेववन्यतायां नृपतिवन्दने । नृपतयो युधिष्ठिरं नमस्कुर्वन्तीति भावः । प्रश्ने सभायां ऋषीन् प्रति तत्त्वप्रश्ने ऋषिपूजायाश्च अभूत् अधिकृतोऽभूत् । भीमः धर्मानुशास्तौ वर्णाश्रमाणां धर्मशिक्षणे । हरितत्त्वशंसने हरितत्त्वोपदेशे । स्वराष्ट्ररक्षादौ स्वराष्ट्ररक्षणे । आदिशब्देन प्रजापरिचारकादिरक्षणं, विष्णुनिन्दकशिक्षणादि गृह्यते । आसीत् ।।१।।

**ताम्रपर्णीया–** उरूणां बहूनां दानं उरुदानं उत्कृष्टदानं वा । रक्षादिष्विति आदिशब्देन वक्ष्यमाणं परमर्दनं ग्राह्यम् ।।१।।

**चट्टी–** प्राप्तसाम्राज्यानां पार्थानां पृथक्पृथक् व्यापाराण्याह– **यज्ञेत्यादिना** ।। युधिष्ठिरः यज्ञोरुदान-नरदेववन्यताप्रश्नर्षिपूजासु यज्ञे यज्ञकर्मणि, उरुदानेषु तुलापुरुषादिमहादानेषु, नरदेवैः नृपैः वन्यतायाम्, प्रश्ने सभायां ऋषीन् प्रति तत्त्वप्रश्ने, ऋषिपूजासु अभूत् अधिकृतोऽभूत् । भीमः धर्मानुशास्तौ वर्णाश्रमाणां धर्मशिक्षणे, हरितत्त्वशंसने हरितत्त्वोपदेशे, स्वराष्ट्ररक्षादौ स्वराष्ट्ररक्षणे आसीत् । आदिशब्देन प्रजा-परिचारकादिरक्षणं गृह्यते ।।१।।

**[1]स्त्री[2]धर्मसंशासनभृत्य[3]कोश[4]रक्षाव्ययादौ गुणदोषचिन्तने ।**
**अन्तःपुरस्थस्य जनस्य कृष्णा त्वासीद्धरेर्धर्मनिदर्शनी च ॥२॥**

**व्यासतीर्थीया–** भृत्यकोशौ । अन्तःपुरधर्मनिदर्शनी चासीत् ॥ २ ॥

**वेदाङ्गतीर्थीया–** कृष्णा तु स्त्रीधर्मसंशासनभृत्यकोशरक्षाव्ययादौ । अन्तःपुरगतस्त्रीणां धर्मशिक्षणे अन्तःपुरगभृत्यानां रक्षायां वेतनदानादियोगक्षेमचिन्तायाम् कोशस्य रक्षायां व्यये आदिशब्दात् गृहरक्षणादौ च । अन्तःपुरस्थस्य जनस्य च गुणदोषचिन्तने । अयमपराधी अयमनपराधी अयं धर्मस्थः अयमधर्मस्थः इत्यादिगुणदोषविवेकेऽधिकृता । अन्तःपुरस्थस्य सर्वस्यापि जनस्य हरेर्धर्मनिदर्शनी चासीत् ॥ २-३ ॥

**वरदराजीया–** स्त्रीणां धर्मस्य संशिक्षणं अनुशासनम्, भृत्यानां कोशस्य च रक्षायाम्, आयव्यये अन्तःपुरस्थितभृत्यादिभ्यो द्रव्यदाने स्त्रीभ्यः हरितत्त्वशंसनं आदिशब्दगृहीतम् । अन्तःपुरस्थजनस्य गुणदोषचिन्तने क दोषः कस्य गुणः इति विचारे कृष्णा द्रौपदी अधिकृता आसीत् । हरेर्धर्माणां वैष्णवधर्माणां निदर्शनी दर्शयित्री च आसीत् ॥२॥

**अनन्तभट्टीया–** अन्तःपुरस्थस्य गुणदोषचिन्तने । निदर्शनी दर्शयित्री ॥२-४॥

**जनार्दनीया–** कृष्णा द्रौपदी तु स्त्रीधर्मसंशासनभृत्यकोशरक्षाव्ययादौ । अन्तःपुरस्थस्त्रीणां धर्म-शिक्षणे । भृत्यानां रक्षणे, वेतनादिना योगक्षेमचिन्तायामित्यर्थः । कोशस्य रक्षायां व्यये च । आदिशब्दाद् गृहरक्षणादिविवक्षितम् । अन्तःपुरस्थस्य जनस्य गुणदोषचिन्तने अयमपराधी अयमनपराधी अयं धर्मस्थ इत्यादिगुणविवेके । तथा अन्तःपुरस्थसर्वजनस्य हरेर्धर्मनिदर्शनी धर्मोपदेशकर्त्रीत्यर्थः । आसीत् ॥२॥

**ताम्रपर्णीया–** ॥ **स्त्रीधर्मेति** ॥ भृत्यकोशयो रक्षणेऽन्तःपुरोपयुक्तव्यये । आदिपदेन तदुपयुक्तक्षीर-घृताद्यार्जने चेत्यर्थः । हरेः धर्मनिदर्शनी भगवद्गुणज्ञापयती ॥२-३॥

---

१. 'शतं दासीसहस्राणि कौन्तेयस्य महात्मनः । कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः । महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः । मणीन्हेम च बिभ्रत्यो नृत्यगीतविशारदाः । तासां नाम च रूपं च भोजनाच्छादनानि च । सर्वासामेव वेदाहं कर्म चैव कृताकृतम् ॥' वनपर्वणि– २३४.४८-५०

२. 'अन्तःपुराणां सर्वेषां भृत्यानां चैव सर्वशः । आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ।' वनपर्वणि-२३४.५४.

३. 'एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् । अनिशायां निशायां च विहाय क्षुत्पिपासयोः । आराधयन्त्या कौरव्याँस्तुल्या रात्रिरहश्च मे ॥' वनपर्वणि– २३४.५८-५९.

४. 'सर्वं राज्ञः समुदयमायं च व्ययमेव च । एकाहं वेद्मि कल्याणि पाण्डवानां यशस्विनी । मयि सर्वं समासज्य कुटुम्बं भरतर्षभाः । उपासनरताः सर्वे घटयन्ति वरानने ॥' वनपर्वणि-२३४.५५-५६.

**चट्टी–** कृष्णा द्रौपदी तु स्त्रीधर्मसंशासनभृत्यकोशरक्षाव्ययादौ । स्त्रीणां धर्मस्य संशासनं संशिक्षणं तस्मिन्, भृत्यानां रक्षणे वेतनादिना योगक्षेमचिन्तायामित्यर्थः । कोशस्य रक्षायां व्यये च । आदिशब्दाद् गृहरक्षादिकं गृह्यते । अन्तःपुरस्थस्य च जनस्य गुणदोषचिन्तने अयमपराधी अनपराधी इत्यादि-गुणविवेके । तथा अन्तःपुरस्थस्य सर्वजनस्य हरेर्धर्मनिदर्शनी च धर्मोपदेशकर्त्रीत्यर्थः । आसीत् ॥२॥

**बीभत्सुरासीत्पपरराष्ट्रमर्दने तेनानियम्यांस्तु जरासुतादीन् ।**
**[1]सकीचकादींश्च ममर्द भीमस्तस्यैव ते बलतो नित्यभीताः ॥३॥**

**व्यासतीर्थीया–** अर्जुनानियम्यान् कथं भीमो ममर्देत्यत उक्तम्– **तस्येति** ॥ ३-४ ॥

**वरदराजीया–** परेषां शत्रूणां राष्ट्रस्य मर्दने बीभत्सुः अर्जुनः आसीत् । तेन बीभत्सुना अनियम्यान् निहन्तुमशक्यान् कीचकादिभिः सह वर्तमानान् जरासुतादिकान् भीमो ममर्द पीडयामास । मर्दनफलमाह– **तस्यैवेति** ॥ भीमस्य बलतो बलेन नित्यं भीताः ॥३॥

**जनार्दनीया–** तेनार्जुनेन अनियम्यान् नियन्तुमशक्यान् । ते जरासुतादयः बलतो बलेन, आसन्निति शेषः ॥३॥

**भावविवृतिः–** 'तेनानियम्यांस्तु जरासुतादीन् सकीचकादींश्च ममर्द भीमः' इत्यत्र जरासुतादीन् इत्यादिपदेन अर्जुनेन जेतुमशक्यानां मूर्धावसिक्तानां राज्ञां ग्रहणम् । सकीचकादीन् इत्यादिपदेन राज्ये अभिषेकरहितानां कीचकवद् बलिष्ठानां एकलव्यादीनां ग्रहणम् ॥३॥

**चट्टी–** बीभत्सुः अर्जुनः परेषां शत्रूणां राष्ट्रस्य मर्दने आसीत् । तेनार्जुनेनानियम्यान् नियन्तुमशक्यान् सकीचकादीन् कीचकादिभिः सह वर्तमानान् जरासुतादीन् भीमो ममर्द पीडयामास । मर्दनफलमाह– **तस्यैवेति** ॥ तस्य भीमस्य बलतः बलेनैव ते जरासुतादयः नित्यभीताः, आसन्निति शेषः ॥ ३ ॥

**राष्ट्रेषु भीमेन विमर्दितेषु जिताश्च युद्धेषु निरुद्यमास्ते ।**
**बभूवुरासीद्धरिधर्मनिष्ठः प्रायेण [2]लोकश्च तदीयशासनात् ॥४॥**

**वेदाङ्गतीर्थीया–** राष्ट्रेषु भीमेन विमर्दितेषु जितास्ते निरुद्यमाः भीमं प्रत्युद्यमरहिता बभूवुः । 'प्रायेण' इति अयोग्यजनव्यावृत्त्यर्थम् ॥ ४ ॥

**वरदराजीया–** तथा स्वराष्ट्रेषु भीमेन विमर्दितेषु सत्सु तथा युद्धेषु जिताश्च ते जरासुतादयो निरुद्यमाः उद्योगरहिता बभूवुः । कर्तव्यमूढत्वादिति भावः । तदीयशासनात् भीमकृताज्ञया लोकः हरिधर्मनिष्ठो वैष्णवधर्मपरायणः आसीत् । असुरजनव्यावृत्त्यर्थम्– **प्रायेणेति** ॥४॥

---

१. 'तत्र ते न्यवसन् पार्थाः संवत्सरगणान् बहून् । वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान् महीभृतः ॥' आदिपर्वणि- ६१.३६.
२. 'लोकाश्च' इति भावविवृतिकाराणां पाठः ।

**जनार्दनीया—** राष्ट्रेषु स्वराष्ट्रेषु भीमेन विमर्दितेषु भीमेन युद्धेषु जितेषु जितास्ते निरुद्यमाः भीमं प्रति निरुद्यमाः वभूवुः । 'प्रायेण' इत्ययोग्यजनव्यावृत्त्यर्थः ।।४।।

**भावविवृतिः—**'प्रायेण लोकाश्च तदीयशासनात्' इत्यत्र असुराविष्टजनव्यावृत्त्यर्थं 'प्रायेण' इति।।४-३६।।

**ताम्रपर्णीया—** 'प्रायेण' इत्यसुरजनव्यावृत्त्यर्थम् ।। ४ ।।

**चट्टी—** राष्ट्रेषु स्वस्वराष्ट्रेषु भीमेन विमर्दितेषु सत्सु भीमेन युद्धेषु जितास्ते जरासन्धादयः निरुद्यमाः भीमं प्रति उद्योगरहिताः बभूवुः । कर्तव्यमूढत्वादिति भावः । तदीयशासनात् तस्येदं तदीयं च तच्छासनं च । तस्माल्लोको जनः प्रायेण बाहुल्येन हरिधर्मनिष्ठः आसीत् । असुरजनव्यावृत्त्यर्थं 'प्रायेण' इत्युक्तम् ।।४।।

**आजीविनां वेतनदस्तदाऽऽसीन्माद्रीसुतः प्रथमोऽथ द्वितीयः ।**
**सन्धानभेदादिषु धर्मराजपश्चाच्च खड्गी स बभूव रक्षन् ।।५।।**

**व्यासतीर्थीया—** आजीविनामुपजीविनाम् ।। ५ ।।

**वेदाङ्गतीर्थीया—** आजीविनां वेतनार्थमाजीविनाम् । सन्धानभेदादिषु विप्रतिपन्नानां सन्धानम् । अन्योन्यसङ्गतानां द्विषां भेदः द्वैधीभावः । आदिशब्देन विग्रहाद्युच्यते । तेषु आसीत् । धर्मराजं रक्षन् खड्गी धर्मराजपश्चाच्च बभूव ।। ५-७ ।।

**वरदराजीया—** प्रथमो माद्रीसुतः नकुलः आजीविनां वेतनोपजीविनां पदात्यादीनां वेतनादिनियत-जीवनदः आसीत् । द्वितीयो माद्रीसुतः सहदेवः इत्यर्थः । सन्धानं सन्धिकरणम् । भेदो विग्रहः दण्डादि-कर्मादिपदगृहीतम् । धर्मराजस्य पश्चात् पृष्ठभागे खड्गी खड्गधारी सन् शत्रुभ्यो रक्षणं कुर्वन् वभूवेत्यर्थः ।।५।।

**अनन्तभट्टीया—** प्रथमो ज्येष्ठः । पश्चात् पृष्ठभागे ।। ५-१० ।।

**जनार्दनीया—** आजीविनां सेवोपजीविनाम् । सन्धानभेदादिषु विप्रतिपन्नानां सन्धानं सन्धिकरणम् । अन्योन्यसम्मतानां द्विषां भेदः द्वैधीकरणम् । आदिशब्देन विग्रहाद्युच्यते । तेष्वासीत् । स धर्मराजं रक्षन् धर्मराजपश्चाच्च खड्गी वभूव ।।५।।

**ताम्रपर्णीया—** आजीविनामुपजीविनां सेवकानाम् । सन्धानभेदादिषु सन्धिविग्रहदानादिनीतिविशेषेषु इत्यर्थः ।। ५-६ ।।

**चट्टी—** प्रथमो माद्रीसुतः नकुलः आजीविनां वेतनोपजीविनां तदा वेतनदः आसीत् । अथ द्वितीयः सहदेवः सन्धानं सन्धिकरणम् । भेदः द्विषां द्वैधीकरणम् । आदिशब्देन विग्रहाद्युच्यते । तेष्वासीत् । स सहदेवः धर्मराजं रक्षन् धर्मराजपश्चाच्च खड्गी वभूव ।। ५ ।।

**धृष्टद्युम्नस्तत्र सेनाप्रणेता शक्रप्रस्थे नित्यमास्तेऽतिहार्दात् ।**
**[1]विशेषतो भीमसखा स आसीद् राष्ट्रं चैषां सर्वकामैः सुपूर्णम् ॥६॥**

**व्यासतीर्थीया–** स्वयं पृथग्राज्यस्य राजा कथं तत्र तिष्ठतीत्यत उक्तम्– **अतिहार्दादिति** ॥ ६ ॥

**वरदराजीया–** सेनाया प्रणेता सेनापतिः । तत्र शक्रप्रस्थे अतिहार्दात् पाण्डवेष्वपि अतिस्नेहात् नित्यमास्ते तिष्ठतीत्यर्थः । सः धृष्टद्युम्नो विशेषतो अर्जुनापेक्षया भीमस्य सखा आसीत् । समासान्त-विधेरनित्यत्वात् भीमसखेति साधु । एषां पाण्डवानां राष्ट्रं सर्वकामैः विषयैः सम्पूर्णमासीत् ॥६॥

**जनार्दनीया–** सेनाप्रणेता सेनापतिः । अतिहार्दात् अतिस्नेहात् आस्ते तिष्ठति । तेषां पाण्डवानाम् । कामैः विषयैः ॥६॥

**चट्टी–** धृष्टद्युम्नः तत्र शक्रप्रस्थे सेनाप्रणेता सेनापतिः सन्, अतिहार्दात् पाण्डवेष्वतिस्नेहात् नित्यं आस्ते तिष्ठति । सः धृष्टद्युम्नः विशेषतः भीमसखा आसीत् । समासान्तविधेरनित्यत्वात् भीमसखेति साधु । एषां पाण्डवानां राष्ट्रं सर्वकामैः समस्तविषयैः सुपूर्णमासीत् ॥ ६ ॥

**नावैष्णवो न दरिद्रो बभूव न धर्महानिश्च बभूव कस्यचित् ।**
**तेषां राष्ट्रे शासति भीमसेने न व्याधितो नापि विपर्ययान्मृतिः ॥७॥**

**व्यासतीर्थीया–** दीर्घकालीनाद्व्याधितः ॥ ७-८ ॥

**वादिराजतीर्थीया–** 'विपर्ययान्मृतिः' इत्यत्र पितरि सति पुत्रस्य मरणम्, पत्यौ सति भार्याया मरणम्, शतवर्षाभ्यन्तरे मरणं चेत्यादिकं विपर्ययान्मृतिरित्युच्यत इति ज्ञेयम् ॥ ७-१० ॥

**वरदराजीया–** अवैष्णवः विष्णुभक्तिरहितो जनो न बभूव । दरिद्रोऽपि न बभूव । कस्यचिदपि जनस्य धर्महानिश्च न वभूव । तेषां पाण्डवानां स्वराष्ट्रे स्वकीयराष्ट्रे भीमसेने शासति सति व्याधितो व्याधिपीडितो न वभूव । विपर्ययात् वैपरीत्येन वयोगतस्य पुरस्तात् अवयसो मृतिरित्याद्यपि न वभूवेत्यर्थः ॥७॥

**जनार्दनीया–** भीमसेने शासति, तेषां पाण्डवानां राष्ट्रे व्याधितः व्याधियुक्तः । विपर्ययान्मृतिः वृद्धस्य पुरतस्तरुणस्य नाशो न वभूवेत्यर्थः ॥७॥

---

१. 'एवं सन्नोद्य सर्वाणि स्वान्यनीकानि पार्षतः । भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषैर्वृतः । नहि पाञ्चालराजस्य लोके कश्चन विद्यते । भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः ॥' भीष्मपर्वणि- ५४.१४-१५.
'अपृच्छद्धाप्यसंरुद्धो निःश्वसन् वाचमीरयन् । मम प्राणैः प्रियतमः क्व भीम इति दुःखितः ॥' भीष्मपर्वणि-७७.२८.
'मम भीमः सखा चैव सम्बन्धी च महाबलः । भक्तोऽस्मान् भक्तिमाँश्चाहं तमप्यरिनिषूदनम् ॥' भीष्मपर्वणि-७७.३८

**ताम्रपर्णीया–** तेषां राष्ट्रे नावैष्णव इति सम्बन्धः । 'प्रायेण लोकः' इति तु सर्वराष्ट्रसाधारणमिति ज्ञेयम् ।। **न दरिद्र इति** ।। यज्जातीयस्य यादृशैश्वर्येण भाव्यं तस्य तदूनता नासीदित्यर्थः ।। **न व्याधित इति** ।। स्वेच्छया वा युद्धेन वा मृतिभावेऽपि व्याधितो मृतिर्न इत्यर्थः । 'कोऽपि पुरुषो व्याधितो व्याधिपीडितो न' इत्यप्यर्थमाहुः ।। ७ ।।

**चट्टी–** भीमसेने शासति तेषां पाण्डवानां राष्ट्रे अवैष्णवः विष्णुभक्तिरहितः जनो न बभूव । दरिद्रोऽपि न बभूव । कस्यचिदपि धर्महानिश्च न बभूव । व्याधितः व्याधिपीडितः न बभूव । विपर्ययान्मृतिः वृद्धस्य पुरतस्तरुणस्य नाशो न बभूव ।। ७ ।।

**युधिष्ठिरं यान्ति हि दर्शनोत्सुकाः प्रतिग्रहायाप्यथ याजनाय ।**
**[1]कार्यार्थिनो नैव वृकोदरेण कार्याणि [2]सिद्ध्यन्ति यतोऽखिलानि ।।८।।**

**वेदाङ्गतीर्थीया–** दर्शनोत्सुकाः यान्ति कार्यार्थतो नैव यान्ति ।। ८-९ ।।

**मधुसूदनीया–** ।। **कार्यार्थिन इति** ।। प्रयोजनार्थिनः तु युधिष्ठिरं नैव यान्ति । कुत इत्यत आह– **वृकोदरेणेति** ।। यतः कारणात् अखिलानि कार्याणि वृकोदरेणैव सिद्ध्यन्ति । ततः कार्यार्थिनो युधिष्ठिरं नैव यान्तीत्यन्वयः । किन्तु प्रतिग्रहार्थमेव तं प्राप्नुवन्तीति भावः ।। ८-३२ ।।

**वरदराजीया–** दर्शनोत्सुकाः दर्शनार्थिन एव युधिष्ठिरं यान्ति । प्रतिग्रहाय अथवा याजनाय कार्यार्थिनो नैव यान्ति । कुतः? अखिलानि कार्याणि वृकोदरेणैव सिद्धानि । अतो दर्शनप्रयोजनकमेव सर्वेषां आगमनमिति भावः ।।८।।

**जनार्दनीया–** दर्शनोत्सुकाः राजदर्शनोत्कण्ठाः प्रतिग्रहाय याजनाय युधिष्ठिरं यान्ति । कार्यार्थिनो नैव । कुतः? वृकोदरेणाखिलानि कार्याणि सिद्ध्यन्ति सिद्धिं यान्ति । यतः अतो नैव युधिष्ठिरं यान्तीत्यर्थः।।८।।

**चट्टी–** दर्शनोत्सुकाः राजदर्शनोत्कण्ठाः प्रतिग्रहायापि अथवा याजनाय युधिष्ठिरं यान्ति । कार्यार्थिनो प्रयोजनार्थिनस्तु युधिष्ठिरं नैव यान्ति । कुतः? इत्यत आह– **वृकोदरेणेति** ।। यतः कारणात् अखिलानि कार्याणि वृकोदरेणैव सिद्ध्यन्ति, ततः कार्यार्थिनो युधिष्ठिरं नैव यान्तीत्यन्वयः । किन्तु प्रतिग्रहार्थमेव तं प्राप्नुवन्तीति भावः ।। ८ ।।

**गन्धर्वविद्याधरचारणाश्च सेवन्त एतान्त्सततं समस्ताः ।**
**यथा सुरेन्द्रं मुनयश्च सर्व आयान्ति देवा अपि कृष्णमर्चितुम् ।।९।।**

---

१. 'कार्यार्थतो नैव' इति वेदाङ्गतीर्थपाठः स्यात् ।

२. 'सिद्धानि' इति वरदराजीयपाठः ।

**व्यासतीर्थीया–** सेवन्त इति कालव्यत्यासस्योदाहरणम् । यथा सुरेन्द्रं गन्धर्वादयः सेवन्ते ।।९।।

**वरदराजीया–** गन्धर्वाद्याः समस्ताः एतान् पाण्डवान् यथा सुरेन्द्रं इन्द्रं तथा नृत्तगानादिभिः सेवन्ते सेवां कुर्वन्ति । देवादयश्च कृष्णमर्चितुं पूजयितुं आयान्ति ।।९।।

**जनार्दनीया–** गन्धर्वाद्याः इन्द्रं यथा तथा एतान् पार्थान् सेवन्ते, नृत्यगीतादिभिरिति शेषः । देवा अपि मुनयश्च कृष्णमर्चितुमायान्ति । कृष्णः पाण्डवस्नेहात् प्रायेणेन्द्रप्रस्थे तिष्ठतीति भावः ।।९।।

**ताम्रपर्णीया–** ।। **यथा सुरेन्द्रमिति** ।। यथा गन्धर्वाद्या नृत्यादिना सुरेन्द्रं सेवन्ते तथा सेवन्ते इत्यर्थः ।।९।।

**चट्टी–** समस्ताः गन्धर्वविद्याधरचारणाश्च सुरेन्द्रं यथा तथा एतान् पार्थान् सेवन्ते, नृत्यगीत-वाद्यादिभिरिति शेषः । सर्वे देवा अपि मुनयश्च श्रीकृष्णमर्चितुमायान्ति । श्रीकृष्णः पाण्डवस्नेहात् प्रायेणेन्द्रप्रस्थे तिष्ठतीति भावः ।।९।।

**तेषां राष्ट्रे कार्तयुगा हि धर्माः प्रवर्तिता एव ततोऽधिकाश्च ।**
**वृद्धिश्च तस्मादधिका सुवर्णरत्नाम्बरादेरपि सस्यसम्पदाम् ।।१०।।**

**व्यासतीर्थीया–** सस्यानां सम्पदां धान्यानामित्यर्थः ।। १० ।।

**वेदाङ्गतीर्थीया–** कार्तयुगाः कृतयुगसम्बन्धिनः । ततः कृतयुगधर्मेभ्यः ।।१०।।

**वरदराजीया–** तेषां पाण्डवानां राष्ट्रे कार्तयुगाः कृतयुगे प्रवर्तमानाः । ततः कार्तयुगधर्मेभ्यः । तस्मात् कृतयुगात् अधिकवृद्धिः समृद्धिः सम्यक् सम्पदामभिवृद्धिः ।।१०।।

**जनार्दनीया–** कार्तयुगाः कृतयुगसम्बन्धिनः । तैः प्रवर्तिताः । ततः कृतयुगधर्मेभ्यो अधिकाश्च । तस्मात् कृतयुगात् । सुवर्णादेः सस्यसम्पदामपि वृद्धिरधिका बभूव ।।१०।।

**ताम्रपर्णीया–** तस्मात् कृतयुगात् ।।१०।।

**चट्टी–** तेषां पाण्डवानां राष्ट्रे कार्तयुगाः कृतयुगसम्बन्धिनः धर्माः एव तैः प्रवर्तिताः । ततः कृतयुग-धर्मेभ्यो अधिकाश्च प्रवर्तिताः । सुवर्णरत्नाम्बरादेः सस्यसम्पदां च वृद्धिस्तस्मात् कृतयुगादपि अधिका बभूव ।। १० ।।

**[1]अथोपयेमे शिशुपालपुत्रीं युधिष्ठिरो देवकीं नाम [2]पूर्वम् ।**

---

१. 'शैब्यस्य कन्यां देवकीं नाम उपयेमे युधिष्ठिरः । तस्यां पुत्रं जनयामास यौधेयं नाम ।।' आदिपर्वणि-६३.७८.

२. 'पूर्वाम्' इति वरदराजीय-अनन्तभट्टीय-चट्टीपाठः ।

**स्वीयां भार्यां यत्सहजो [1]धृष्टकेतुरनुह्लादः सवितुश्चांशयुक्तः ॥११॥**

**व्यासतीर्थीया–** 'यत्सहजो धृष्टकेतुः' इत्यनेन 'भ्रातृमतीं यवीयसीम्' इति स्मृतिसिद्धो भ्रातृमत्या विवाहः कर्तव्य इति सूचयति ॥ ११ ॥

**वेदाङ्गतीर्थीया–** युधिष्ठिरस्य विवाहान्तरमाह– **अथेति** ॥ यत्सहजः धृष्टकेतुः पूर्वमनुह्लादः ॥११॥

**वादिराजतीर्थीया–** 'यत्सहजो धृष्टकेतुः' इत्यत्र यस्याः देवक्याः सहज इत्यर्थः ॥ ११-१९ ॥

**वरदराजीया–** अथ अनन्तरं भारत्यसंस्पृष्टतया श्यामलादीनां जन्म प्रदर्श्य युधिष्ठिरादीनां पृथक् भार्यास्वीकारमाह– **अथेत्यादिना** ॥ स्वीयां स्वस्य विद्यमानां पूर्वां भार्यां श्यामलां अत्र शिशुपालपुत्रीं देवकीं नाम प्रसिद्धां उपयेमे स्वीचकार । यस्याः देवक्याः सहजो भ्राता धृष्टकेतुर्नाम सः पूर्वमनुह्लादः प्रह्लादभ्राता सवितुर्देवस्यांशेन युक्तश्च जात इत्यर्थः ॥११॥

**अनन्तभट्टीया–** पूर्वां भार्याम् ॥ ११ ॥

**जनार्दनीया–** श्यामलादीनां भारत्यस्पृष्टतया पृथक् पृथक् चतुर्थं जन्म दर्शयन् युधिष्ठिरादीनां विवाहान्तरमाह– **अथेत्यादिना** ॥ यत्सहजः यस्याः देवक्याः सहजो भ्राता धृष्टकेतुः पूर्वं अनुह्लादः प्रह्लादावरजः ॥११॥

**ताम्रपर्णीया–** 'यत्सहजो धृष्टकेतुः' इत्यनेनाभ्रातृमत्याः कन्यायाः विवाहो न प्रशस्यत इति शङ्का परास्तेति सूचयति ॥ ११ ॥

**भारतश्री–** स्वीयां भार्यां श्यामलाम् । यत्सहजः यद्भ्राता ॥ ११-१४ ॥

**चट्टी–** श्यामलादीनां भारत्यस्पृष्टतया पृथक् पृथक् जन्म दर्शयन् युधिष्ठिरादीनां विवाहान्तरमाह– **अथेत्यादिना** ॥ अथ अनन्तरं युधिष्ठिरः स्वीयां स्वस्य विद्यमानां पूर्वां भार्यां श्यामलां अत्र शिशुपालपुत्रीं देवकीं नाम प्रसिद्धां उपयेमे स्वीचकार । यत्सहजः यस्याः देवक्याः सहजो धृष्टकेतुः पूर्वं अनुह्लादः प्रह्लादावरजः सवितुरंशेन युक्तश्च जातः ॥ ११ ॥

**तस्यां सुहोत्रो नामतः पुत्र आसीद् यश्चित्रगुप्तो नाम पूर्वं सुलेखः ।**
**कृष्णा सैवाऽप्यन्यरूपेण जाता काशीशपुत्री यां प्रवदन्ति कालीम् ॥१२॥**

**व्यासतीर्थीया–** सैव कृष्णान्यरूपेण जाता इतरदेवीसहितत्वेनेति प्राप्तं निवारयितुमुक्तम्– **सेति** ॥१२॥

---

१. 'अनुह्लादस्तु तेजस्वी यस्तु ख्यातो जघन्यजः । धृष्टकेतुरिति ख्यातो स बभूव नरेश्वरः ॥' आदिपर्वणि-६८.७.

**व्यासतीर्थीया–** सेवन्त इति कालव्यत्यासस्योदाहरणम् । यथा सुरेन्द्रं गन्धर्वादयः सेवन्ते ।।९।।

**वरदराजीया–** गन्धर्वाद्याः समस्ताः एतान् पाण्डवान् यथा सुरेन्द्रं इन्द्रं तथा नृत्तगानादिभिः सेवन्ते सेवां कुर्वन्ति । देवादयश्च कृष्णमर्चितुं पूजयितुं आयान्ति ।।९।।

**जनार्दनीया–** गन्धर्वाद्याः इन्द्रं यथा तथा एतान् पार्थान् सेवन्ते, नृत्यगीतादिभिरिति शेषः । देवा अपि मुनयश्च कृष्णमर्चितुमायान्ति । कृष्णः पाण्डवस्नेहात् प्रायेणेन्द्रप्रस्थे तिष्ठतीति भावः ।।९।।

**ताम्रपर्णीया–** ।। **यथा सुरेन्द्रमिति** ।। यथा गन्धर्वाद्या नृत्यादिना सुरेन्द्रं सेवन्ते तथा सेवन्ते इत्यर्थः ।।९।।

**चट्टी–** समस्ताः गन्धर्वविद्याधरचारणाश्च सुरेन्द्रं यथा तथा एतान् पार्थान् सेवन्ते, नृत्यगीत-वाद्यादिभिरिति शेषः । सर्वे देवा अपि मुनयश्च श्रीकृष्णमर्चितुमायान्ति । श्रीकृष्णः पाण्डवस्नेहात् प्रायेणेन्द्रप्रस्थे तिष्ठतीति भावः ।।९।।

**तेषां राष्ट्रे कार्तयुगा हि धर्माः प्रवर्तिता एव ततोऽधिकाश्च ।**
**वृद्धिश्च तस्मादधिका सुवर्णरत्नाम्बरादेरपि सस्यसम्पदाम् ।।१०।।**

**व्यासतीर्थीया–** सस्यानां सम्पदां धान्यानामित्यर्थः ।। १० ।।

**वेदाङ्गतीर्थीया–** कार्तयुगाः कृतयुगसम्बन्धिनः । ततः कृतयुगधर्मेभ्यः ।।१०।।

**वरदराजीया–** तेषां पाण्डवानां राष्ट्रे कार्तयुगाः कृतयुगे प्रवर्तमानाः । ततः कार्तयुगधर्मेभ्यः । तस्मात् कृतयुगात् अधिकवृद्धिः समृद्धिः सम्यक् सम्पदामभिवृद्धिः ।।१०।।

**जनार्दनीया–** कार्तयुगाः कृतयुगसम्बन्धिनः । तैः प्रवर्तिताः । ततः कृतयुगधर्मेभ्यो अधिकाश्च । तस्मात् कृतयुगात् । सुवर्णादेः सस्यसम्पदामपि वृद्धिरधिका बभूव ।।१०।।

**ताम्रपर्णीया–** तस्मात् कृतयुगात् ।।१०।।

**चट्टी–** तेषां पाण्डवानां राष्ट्रे कार्तयुगाः कृतयुगसम्बन्धिनः धर्माः एव तैः प्रवर्तिताः । ततः कृतयुग-धर्मेभ्यो अधिकाश्च प्रवर्तिताः । सुवर्णरत्नाम्बरादेः सस्यसम्पदां च वृद्धिस्तस्मात् कृतयुगादपि अधिका बभूव ।। १० ।।

**[1]अथोपयेमे शिशुपालपुत्रीं युधिष्ठिरो देवकीं नाम [2]पूर्वम् ।**

---

१. 'शैब्यस्य कन्यां देवकीं नाम उपयेमे युधिष्ठिरः । तस्यां पुत्रं जनयामास यौधेयं नाम ।।' आदिपर्वणि-६३.७५.

२. 'पूर्वाम्' इति वरदराजीय-अनन्तभट्टीय-चट्टीपाठः ।

**स्वीयां भार्यां यत्सहजो [1]धृष्टकेतुरनुह्लादः सवितुश्चांशयुक्तः ॥११॥**

**व्यासतीर्थीया–** 'यत्सहजो धृष्टकेतुः' इत्यनेन 'भ्रातृमतीं यवीयसीम्' इति स्मृतिसिद्धो भ्रातृमत्या विवाहः कर्तव्य इति सूचयति ॥ ११ ॥

**वेदाङ्गतीर्थीया–** युधिष्ठिरस्य विवाहान्तरमाह– **अथेति** ॥ यत्सहजः धृष्टकेतुः पूर्वमनुह्लादः ॥११॥

**वादिराजतीर्थीया–** 'यत्सहजो धृष्टकेतुः' इत्यत्र यस्याः देवक्याः सहज इत्यर्थः ॥ ११-१५ ॥

**वरदराजीया–** अथ अनन्तरं भारत्यसंस्पृष्टतया श्यामलादीनां जन्म प्रदर्श्य युधिष्ठिरादीनां पृथक् भार्यास्वीकारमाह– **अथेत्यादिना** ॥ स्वीयां स्वस्य विद्यमानां पूर्वां भार्यां श्यामलां अत्र शिशुपालपुत्रीं देवकीं नाम प्रसिद्धां उपयेमे स्वीचकार । यस्याः देवक्याः सहजो भ्राता धृष्टकेतुर्नाम सः पूर्वमनुह्लादः प्रह्लादभ्राता सवितुर्देवस्यांशेन युक्तश्च जात इत्यर्थः ॥११॥

**अनन्तभट्टीया–** पूर्वां भार्याम् ॥ ११ ॥

**जनार्दनीया–** श्यामलादीनां भारत्यस्पृष्टतया पृथक् पृथक् चतुर्थं जन्म दर्शयन् युधिष्ठिरादीनां विवाहान्तरमाह– **अथेत्यादिना** ॥ यत्सहजः यस्याः देवक्याः सहजो भ्राता धृष्टकेतुः पूर्वं अनुह्लादः प्रह्लादावरजः ॥११॥

**ताम्रपर्णीया–** 'यत्सहजो धृष्टकेतुः' इत्यनेनाभ्रातृमत्याः कन्यायाः विवाहो न प्रशस्यत इति शङ्का परास्तेति सूचयति ॥ ११ ॥

**भारतश्री–** स्वीयां भार्यां श्यामलाम् । यत्सहजः यद्भ्राता ॥ ११-१४ ॥

**चट्टी–** श्यामलादीनां भारत्यस्पृष्टतया पृथक् पृथक् जन्म दर्शयन् युधिष्ठिरादीनां विवाहान्तरमाह– **अथेत्यादिना** ॥ अथ अनन्तरं युधिष्ठिरः स्वीयां स्वस्य विद्यमानां पूर्वां भार्यां श्यामलां अत्र शिशुपालपुत्रीं देवकीं नाम प्रसिद्धां उपयेमे स्वीचकार । यत्सहजः यस्याः देवक्याः सहजो धृष्टकेतुः पूर्वं अनुह्लादः प्रह्लादावरजः सवितुरंशेन युक्तश्च जातः ॥ ११ ॥

**तस्यां सुहोत्रो नामतः पुत्र आसीद् यश्चित्रगुप्तो नाम पूर्वं सुलेखः ।**
**कृष्णा सैवाऽप्यन्यरूपेण जाता काशीशपुत्री यां प्रवदन्ति कालीम् ॥१२॥**

**व्यासतीर्थीया–** सैव कृष्णान्यरूपेण जाता इतरदेवीसहितत्वेनेति प्राप्तं निवारयितुमुक्तम्– **सेति** ॥१२॥

---

१. 'अनुह्लादस्तु तेजस्वी यस्तु ख्यातो जघन्यजः । धृष्टकेतुरिति ख्यातो स बभूव नरेश्वरः ॥' आदिपर्वणि-६८.७.

**वेदाङ्गतीर्थीया—** पूर्वं यः सुलेखश्चित्रगुप्तो नाम स तस्यां नामतः सुहोत्रः पुत्र आसीत् । सा कृष्णा अन्यरूपेणापि जाता ।।१२।।

**सत्याभिनवतीर्थीया—** 'तस्यां सुहोत्रो नामतः पुत्रः..' इति श्लोकः । तस्यार्थः । यस्य पूर्वं चित्रगुप्त इति नाम, यः पूर्वं सुलेखः तस्याः देवक्याः सुहोत्र इति नामतः नाम्ना युक्तः पुत्रः आसीत् । सा कृष्णैव अन्यरूपेण काशीशपुत्री जाता यां या काशीशपुत्री तामपि तामेव कालीं प्रवदन्तीति । एतेन यश्चित्रगुप्तो नामेत्येतदनन्वितमिति दूषणं परास्तम् । य इत्यस्य अर्थवशात् यस्येति विपरिणामं इतिशब्दाध्याहारं च स्वीकृत्य यस्य चित्रगुप्त इति नामेत्यन्वयस्योक्तत्वात् । एतेनैव तस्याः पुत्रः आसीदिति इति वक्तव्यम् । तस्यां पुत्र आसीत् इति कथनमनुपपन्नमिति दूषणं परास्तम् । तस्यामिति सप्तमी षष्ठ्यादेश इत्यङ्गीकृत्य तस्याः आसीदित्यर्थस्योक्तत्वात् । एतेनैव कृष्णांशभूतायाः काशीशपुत्र्याः कालीशब्दवाच्यत्वं वक्तव्यम् । यां कालीं प्रवदन्ति सा कृष्णेति अंशिभूतायाः कृष्णायाः कालीशब्दवाच्यत्वकथनमयुक्तमिति दूषणं निरस्तम् । यामिति द्वितीया प्रथमादेशः, तामित्यस्याध्याहारः । अपिशब्दस्य अवधारणार्थत्वं या काशीशपुत्री तामेव कालीं प्रवदन्तीति इत्यन्वय इति चाङ्गीकृत्य कृष्णांशभूतायाः काशीशपुत्र्याः कालीशब्दवाच्यत्वमुच्यते इत्यभ्युपगमात् ।।१२-२७।।

**वरदराजीया—** तस्यां देवक्यां नामतः सुहोत्रः आसीत् । स पूर्वं कः? यश्चित्रगुप्तो नाम सुलेखः सम्यक् लेखनकर्ता स सुहोत्रो आसीदिति सम्बन्धः । सैव कृष्णा द्रौपदी अन्यरूपेणापि काशीशपुत्री जाता । यां कालीमिति प्रवदन्ति ।।१२।।

**अनन्तभट्टीया—** पूर्वं चित्रगुप्तः।। १२-१३ ।।

**जनार्दनीया—** पूर्वं यः सुलेखः सम्यक् लेखनकर्ता चित्रगुप्तो नाम स तस्यां देवक्यां नामतः सुहोत्रः पुत्र आसीत् । सा कृष्णैव अन्यरूपेणापि जाता ।।१२।।

**ताम्रपर्णीया—** ।।**कृष्णा सैवेति** ।।या भारती द्रौपदीत्वेन जाता सैव भारती द्रौपदीशरीरप्रविष्टरूपापेक्षया रूपान्तरेण जातेत्यर्थः । भारतीति वाच्ये कृष्णापदप्रयोगस्तु कृष्णाशब्दो भारत्यामेव मुख्यः 'उत्कृष्टत्वाच्च योषिताम्' इत्यादिव्युत्पत्तेरितरत्रामुख्यत्वादिति सूचयितुमिति ज्ञेयम् ।। १२ ।।

**चट्टी—** यः पूर्वं सुलेखः सम्यक् लेखनकर्ता चित्रगुप्तो नाम चित्रगुप्त इति प्रसिद्धः स तस्यां देवक्यां नामतः सुहोत्रः इति पुत्र आसीत् । सैव कृष्णा अन्यरूपेणापि काशीशस्य काशिराजस्य पुत्री जाता । यां पुत्रीं कालीं प्रवदन्ति ।। १२ ।।

**सा केवला भारती नान्यदेव्यस्तत्राऽविष्टास्तत्कृते[१] काशिराजः ।**
**स्वयंवरार्थे नृपतीनाजुहाव सर्वांस्तेऽपि ह्यत्र हर्षात् समेताः ।।१३।।**

१. 'तत्राविष्टा यत्कृते' इति वरदराजीयः पाठः ।

**वेदाङ्गतीर्थीया**— सा काली केवला भारती । केवलेत्युक्तं विवृणोति— **नेति** ।। तत्र काल्याम् ।।१३।।

**वरदराजीया**— सा काली केवला भारती । अन्यदेव्यः शच्याद्याः तत्र कालीदेव्यां नाविष्टाः । एकदेह-कृतवञ्चनफलत्वेन त्रिवारं भारतीदेहसंसृष्टतया जन्मनः प्राप्तत्वेन शापस्य परिसमाप्तत्वादिति भावः । यत्कृते यस्य कालीदेव्याः कृते स्वयंवरार्थं सर्वान् नृपतीन् आजुहाव आकारितवान् । तत्र स्वयंवरे तेऽपि नृपतयो हि हर्षात् हर्षेण समेताः मिलिताः ।।१३।।

**जनार्दनीया**— सा काली केवला भारती । केवलेत्युक्तं विवृणोति— **नेति** ।। तत्र काल्यां अन्यदेव्यः शच्याद्याः नाविष्टाः । एकदेहत्वेन वञ्चनकृतफलं भारतीसंस्पृष्टतया जन्मत्रयम् । तत्रैकस्मिन् जन्मनि अन्यगात्वमनुभूतमिति भावः । तत्कृते कालीकृते आजुहाव आह्वयामास । समेताः मिलिताः ।।१३।।

**ताम्रपर्णीया**— ननु कालीरूपा भारत्यपि किं देव्यन्तरसहिता नेत्याह— **सेति** ।।१३।।

**चट्टी**— सा काली केवला भारती । केवलेत्युक्तं विवृणोति— **नेति** ।। तत्र कालीदेव्यां अन्यदेव्यः शच्याद्याः नाविष्टाः । एकदेहकृतवञ्चनफलत्वेन त्रिवारं भारतीसंस्पृष्टतया जन्मनः प्राप्तत्वेन शापस्य परिसमाप्तत्वादिति भावः । काशिराजः तत्कृते कालीकृते स्वयंवरार्थं सर्वान् नृपतीन् आजुहाव आह्वयामास । अत्र स्वयंवरे ते नृपतयोऽपि हर्षात् समेताः मिलिताः ।।१३।।

**तेषां मध्ये भीमसेनांस एषा मालामधात् तत्र जरासुताद्याः ।**
**क्रुद्धा विष्णोराश्रितानाक्षिपन्त आसेदुरुच्चैः शिवमास्तुवन्तः ।।१४।।**

**व्यासतीर्थीया**— आक्षिपन्तः निन्दन्तः ।।१४।।

**वेदाङ्गतीर्थीया**— तत्र तस्मिन्नवसरे । क्रुद्धाः वैष्णवो भीमोऽनया वृत इति क्रुद्धाः । अत एव विष्णोराश्रितान् वैष्णवान् । उपलक्षणमेतत्, विष्णुमपि उच्चैराक्षिपन्तः निन्दन्तः शिवं शैवांश्च आस्तुवन्तः ।।१४।।

**वरदराजीया**— तेषां नृपतीनां मध्ये एषा काली भीमसेनस्यांसे स्कन्धे मालामधात् स्थापितवती । तत्रावसरे ते क्रुद्धाः सन्तः विष्णोराश्रितान् विष्णुपक्षीयान् आक्षिपन्तः निन्दन्तः उच्चैः उत्तमत्वेन शिवं रुद्रं आस्तुवन्तः आसेदुः समीपं प्राप्ताः ।।१४।।

**अनन्तभट्टीया**— भीमसेनांसे इति पदच्छेदः । आक्षिपन्तः निन्दन्तः ।।१४।।

**जनार्दनीया**— एषा काली तेषां राज्ञां मध्ये भीमसेनांसे भीमसेनस्य स्कन्धे मालामधात् स्थापयामास । तत्र तस्मिन्नवसरे । वैष्णवेन राज्ञः कन्या ह्रियते इति क्रुद्धाः सन्तः । विष्णोराश्रितान् वैष्णवान् । उपलक्षणमेतत्, विष्णुमपि उच्चैराक्षिपन्तः निन्दन्तः, शिवं शैवांश्च आस्तुवन्तः सन्तः आसेदुः प्राप्ताः ।।१४।।

**ताम्रपर्णीया–** विष्णोराश्रितान् विष्णुं चाक्षिपन्तो निन्दन्तः शिवं शैवांश्च स्तुवन्तः ।। १४ ।।

**चट्टी–** एषा काली तेषां राज्ञां मध्ये भीमसेनांसे भीमसेनस्कन्धे मालामधात् स्थापयामास । तत्र तस्मिन्नवसरे जरासुतायाः । वैष्णवेन राज्ञः कन्या हीयते इति क्रुद्धाः सन्तः विष्णोराश्रितान् वैष्णवान् । उपलक्षणमेतत्, विष्णुं च उच्चैराक्षिपन्तः निन्दन्तः, शिवं शैवांश्च आ सम्यक् स्तुवन्तः आसेदुः प्राप्ताः ।।१४।।

**पूर्वं वाक्यैर्वैदिकैस्तान् स भीमो जिग्ये तर्कैः साधुभिः सम्प्रयुक्तैः ।**
**वेदा ह्यदोषा इति पूर्वमेव संसाधयित्वैव सदागमैश्च ।।१५।।**

**व्यासतीर्थीया–** तर्कैर्वैदिकार्थसाधनाङ्गभूतैः सह वैदिकैरिति योज्यम् । साधुभिः पक्षधर्मत्वादियुक्तैः । सम्प्रयुक्तैः न्यूनत्वादिवचनदोषरहितैः । तत्र बौद्धादिमताश्रयिणामपि भावात् कथं वैदिकैर्वाक्यैर्भीमस्तान् जिग्य इति शङ्कापरिहारपूर्वकं जयक्रममाह– **वेदा इति** ।। बौद्धादीन् प्रति अपौरुषेयत्वादियुक्तिभिर्वेदस्य प्रामाण्यमभ्युपगम्य, पौरुषेयत्वमभ्युपगच्छतः प्रति 'वाचा विरूप' (ऋ.सं-८.७५.६) इत्यादिसदागमैश्च, सञ्जिग्य इति शेषः ।। १५ ।।

**वेदाङ्गतीर्थीया–** स भीमः पूर्वमेव आदावेव वेदाः अदोषाः अप्रामाण्यकारणदोषरहिताः इति संसाधयित्वा अपौरुषेयत्वादियुक्तिभिः सम्यक् साधयित्वा । वैदिकैर्वाक्यैः वेदगतवाक्यैः साधुभिः प्रमाणबाधादिदोषरहितैः तर्कैः अनुमानैः । सदागमैः पञ्चरात्रेतिहासादिभिः । चशब्दोऽन्योन्यसमुच्चयार्थः । तान् जरासुतादीन् पूर्वं वक्ष्यमाणबाहुयुद्धापेक्षया पूर्वं प्रथमतः जिग्य इति सम्बन्धः ।। १५ ।।

**वरदराजीया–** पूर्वं आदौ वैदिकैः वेदानुकूलैः साधुभिः सर्वाङ्गोपेतैः सम्प्रयुक्तैः तथैव प्रयुक्तैः तर्कैः ब्रह्मतर्कैः तान् जरासुतादीन् भीमो विजिग्ये जितवान् । ननु वेदादेः प्रामाण्ये सिद्धे तैः जयो युक्तः । तदेव कुत इत्यतः पूर्वमेव सम्पादितमित्याह– **वेदा हीति** ।। वेदाः अदोषाः अपौरुषेयत्वेन पुरुषदोषा-ज्ञानाद्यधीनाबोधकत्वादिवाक्यदोषराहित्यात् प्रमाणमेवेति पूर्वमेव संसाधयित्वा । सदागमैश्च जिग्य इति पूर्वेण सम्बन्धः ।।१५।।

**अनन्तभट्टीया–** साधुभिः पक्षधर्मतायुक्तैः ।। १५ ।।

**जनार्दनीया–** स भीमः पूर्वमेवादावेव वेदाः अदोषाः अप्रामाण्यादिदोषरहिताः इति संसाधयित्वा, सम्प्रयुक्तैः अपौरुषेयत्वादियुक्तिभिः साधयित्वा, वैदिकैर्वाक्यैर्वेदगतवाक्यैः, साधुभिः दोषरहितैः तर्कैः अनुमानैः, सदागमैः पञ्चरात्रेतिहासादिभिः वचोभिः । तानन्यसम्मतान् जरासुतादीन् । पूर्वं वक्ष्यमाण-युद्धापेक्षया प्रथमतः जिग्य इति भावः ।।१५।।

**ताम्रपर्णीया**– ।। **पूर्वमिति** ।। 'पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये' (कथालक्षण.श्लो.७) इत्युक्तरीत्येति भावः । साधुभिरर्थदोषशून्यैः संप्रयुक्तैः न्यूनतादिशब्ददोषरहितैस्तर्कैस्सहितैः वैदिकैर्वेदगतैः वाक्यैः जिग्ये इत्यन्वयः । वेदप्रामाण्यानभ्युपगन्तॄन् बौद्धादीन् प्रति कथं वैदैर्जय इत्यत आह– **तर्कैरिति** ।। तर्कैरपौरुषेयत्वादितर्कैः वेदा ह्यदोषा इति पूर्वमेव संसाधयित्वा इत्यन्वयः । नन्वपौरुषेयत्व-युक्त्या वेदादोषत्वसाधनमयुक्तम् । तार्किकमते अपौरुषेयत्वासिद्धेरित्यत आह– **सदागमैरिति** ।। 'वाचा विरूप नित्यया' इत्यादिसदागमैर्युक्तिभिश्च वेदा ह्यदोषा इति साधयित्वेत्यर्थः । यद्वा सदागमैः पञ्चरात्रेतिहासादिवचोभिश्च जिग्य इति सम्बन्धः । इदं वेदप्रामाण्यसाधनं बाह्यान् प्रत्येव शैवान् प्रति न साध्यं तैरभ्युपगतत्वात् ।। १५ ।।

**अतिविशद**– 'पूर्वं वाक्यैर्वैदिकैस्तान् स भीमो जिग्ये तर्कैः साधुभिः सम्प्रयुक्तैः । वेदा ह्यदोषा इति पूर्वमेव संसाधयित्वैव सदागमैश्च' इत्यत्र भीमेन जरासन्धादिविजयकाले वेदानां प्रामाण्यं प्रसाध्य अनन्तरं वेदवाक्यैस्तद्विजय उच्यते । केयं कथेति वक्तव्यम् । वादकथा जल्पकथा वितण्डा वा । नाद्यः । गुरुशिष्ययोरेव प्रकृते कथाभावेन 'गुरुशिष्ययोः कथा वादः' इति वादलक्षणानाक्रान्तत्वात् । न द्वितीयः । उभयोः सज्जनत्वाभावेनाजल्पत्वात् । न तृतीयः । वितण्डायाः स्वपक्षसाधनहीनत्वेन अत्र तत्स्थापनस्य 'वेदा ह्यदोषा' इत्यादिना क्रियमाणत्वात् । तस्मात् केयं कथा इति चेन्न । 'वितण्डैव' इति केचित् । 'वेदा ह्यदोषा' इति स्वपक्षस्थापनपरवाक्यस्य परपक्षनिराकरणैकतात्पर्यकत्वेन अत्रातात्पर्यात् । अपरे तु- 'इयं कथैव न समयवन्धादिरहितत्वात्' इत्याहुः । अयमत्राभिप्रायः । अस्याः कथात्वे स्वपक्ष-स्थापनादिकं कथमत्र कृतमिति शङ्कावसरः । अस्यास्तदभावादेव नावसर इति ।। १५-६१ ।।

**भारतश्री**– साधुभिः प्रमाणमूलकैः । सम्प्रयुक्तैः व्याप्तिमद्भिः, न दुष्टैरित्यर्थः ।। १५ ।।

**गूढवाक्यार्थविवृतिः**– 'पूर्वं वाक्यैः..सदागमैश्च' इत्यत्र भीमेन जरासन्धादिविजयकाले वेदानां प्रामाण्यं प्रसाध्य अनन्तरं वेदवाक्यैः तद्विजय उच्यते । केयं कथेति वक्तव्यम् । वादकथाजल्पकथावितण्डा वा । नाद्यः । 'गुरुशिष्ययोः कथा वादः' इति वादलक्षणानाक्रान्तत्वात् । न द्वितीयः । उभयोः सज्जनत्वाभावेनाजल्पत्वात् । न तृतीयः । वितण्डायाः स्वपक्षस्थापनाहीनत्वेन तत्र स्थापनस्य वेदा ह्यदोषा इत्यादिना क्रियमाणत्वात् । तस्मात्केयं कथेति चेन्न । 'वितण्डैव' इति केचित् । 'वेदा ह्यदोषा' इति स्वपक्षस्थापनवाक्यस्य परपक्षनिराकरणैकतात्पर्यकत्वेन अत्रातात्पर्यात् । अपरे तु- 'इयं कथैव न समयवन्धरहितत्वात्' इत्याहुः । अयमभिप्रायः । अस्याः कथात्वे स्वपक्षस्थापनादिकं कथमत्र कृतमिति शङ्कावसरः । अस्यास्तदभावादेव नावसर इति ।। १५-६१।।

**चट्टी**– ननु वेदानां प्रामाण्ये सिद्धे तैः जयो युक्तः तदेव कुत इत्यत पूर्वमेव सम्पादितमित्याह– **वेदा इति** ।। स भीमः पूर्वमेवादावेव वेदाः अदोषाः अप्रामाण्यशङ्काख्यदोषरहिताः इति अपौरुषेयत्वादियुक्तिभिः सदागमैश्च । संसाधयित्वा एव वैदिकैर्वाक्यैर्वेदगतवाक्यैः सम्प्रयुक्तैः सम्यक् प्रयुक्तैः साधुभिः दोषरहितैः

तर्कैः अनुमानैः सदागमैः पञ्चरात्रेतिहासादिवचोभिश्च । तान् जरासुतादीन् । पूर्वं वक्ष्यमाणयुद्धापेक्षया प्रथमतः जिग्ये ।। १५ ।।

**वेदाधिक्यं शैवशास्त्राणि चाऽहुर्वेदोज्झितानां बहुलां च निन्दाम्[१] ।**
**तथा शाक्तेयस्कान्दसौरादिकानां तत्रैवोक्तं छन्दसां वैष्णवत्वम् ।।१६।।**

**व्यासतीर्थीया–** शैवांश्च प्रति वेदप्रामाण्यं न साध्यं तदभ्युपगमादित्याह– **वेदेति** ।। वेदानामाधिक्यं प्रामाण्यं वेदोज्झितानां निन्दया च वेदप्रमाण्यं स्वीकृतमिति भावेनोक्तम्– **वेदोज्झितानां बौद्धादीनामिति** ।। ये तु वेदप्रामाण्यमङ्गीकृत्यापि वेदं न वहु मन्यन्ते । तेषां स्कान्दसौरादिकानां च तथा निन्दमाहुः । अस्तु वेदप्रामाण्यं तस्य विष्णुपरत्वं कुत इत्यत उपक्रमाद्यनुसन्धानात् । ज्ञापकान्तर-माह– **तत्रैव शैवशास्त्र एवेति** ।। १६ ।।

**वेदाङ्गतीर्थीया–** वेदाधिक्यं वेदानां प्रामाण्यलक्षणाधिक्यम् । वेदोज्झितानां वेदप्रामाण्यमनङ्गी-कुर्वताम् । शाक्तेयादिशास्त्राणि तथा वेदाधिक्यं आहुः । तत्रैव प्रमाणतयाङ्गीकृतशैवादिशास्त्रेष्वेव वैष्णवत्वं विष्णूत्कर्षपरत्वम् ।। १६ ।।

**वादिराजतीर्थीया–** शैवशास्त्राणि शैवपुराणादीनि । शैवशाक्तेयस्कान्दसौरादीनां वैदिकपाषण्डित्वात् क्वचिद्वेदमपि मानयन्तीति भावः ।। १६ ।।

**वरदराजीया–** वेदाधिक्यं वेदस्य सर्वप्रमाणाधिक्यं सर्वशास्त्राणि इतराणि शास्त्राणि आहुः प्रतिपादयन्ति । वेदोज्झितानां अवैदिकानां वहुलां महतीं निन्दां चाहुः । तथा शाक्तेयादीनां दर्शनानां निन्दाश्चाहुरित्यर्थः । तत्रैव तेष्वेव शास्त्रेषु छन्दसां वेदानां वैष्णवत्वं विष्णुप्रतिपादकत्वमुक्तम् ।।१६।।

**अनन्तभट्टीया–** निन्दामाहुः सौरादिकानां निन्दामाहुः । वैष्णवत्वं विष्णुपरत्वम् ।। १६ ।।

---

१. श्रीभगवानुवाच– गोपनीयमिदं तात न वक्तव्यं दुरात्मसु । देवगुह्यमिदं विद्धि मोहकं सुरवैरिणाम । तेषां तु मोहप्राप्त्यर्थं मयाऽदिष्टेन शम्भुना । कृतं मिथ्यामतं शास्त्रं तेन मुह्यन्ति जन्तवः ।। तत्रोक्तं शृणु कल्याण न विश्वास्यं मुमुक्षुभिः । विश्वासादेव पातित्यं पतितानां तु किं पुनः ।। तच्छ्रुत्वा दितिजाः सर्वे मद्भक्तद्वेषकारिणः । मन्निन्दका महाक्रूरा मत्प्रमाणविनिन्दकाः ।। मद्रूपहारिणः सर्वे सद्गुणार्णवकाङ्क्षिणः । निर्गुणं मन्यमानास्ते मां परं पुरुषोत्तमम।। शिवचन्द्रावहं शम्भुर्द्वयोर्निर्गुणता तथा । लक्ष्मीति पार्वती प्रोक्ता सा च गङ्गाममाङ्घ्रिजाम । गङ्गा गौरी स एवायमहं तत्त्रिरिति प्रथा । हरस्तु पुरुषः साक्षात तद्वयोरेकभावनाः ।। काशीमरणमात्रेण शम्भुत्वं प्राप्नुवन्ति च । इति निश्चितसङ्कल्पविकत्थनपराः खलाः ।। दुःशास्त्रशीलसम्पन्नाः दुर्मेधा दुःखभागिनः । तेषां शम्भुर्मतानां तु काश्यां दत्वा महानघम । कुमन्त्रं कुहकं मिथ्या निर्गुणत्वं दुरात्मनाम ।। दत्वा पातयते दुष्टानन्धे तमसि निश्चयम ।। श्रीमत्तीर्थाभिषेको भवति दुरितगः सोद्धतानां जनानां तत्पुण्यं विश्वमेतत्सकलगुणनिधिर्विश्वभर्तुर्मृषेति । सर्वैकज्ञं मङ्गलैकप्रदमशुभहरं जल्पकानां स्वबुद्ध्या वध्वा तान पूर्वदेवांस्तमसि गुरुरयं पातयिष्यत्युमेशः।। इति वायुपुराणान्तर्गत आनन्दकाननमाहात्म्ये ।

**जनार्दनीया–** शैवशास्त्राणि वेदाधिक्यं वेदानां प्रामाण्यलक्षणमाधिक्यं वेदोज्झितानां वेदप्रामाण्यमनङ्गीकुर्वतां शैवशास्त्राणि बहुलां बह्वीं निन्दामाहुः । तथा शाक्तेयस्कान्दसौरादिकानां दर्शनानां निन्दामाहुः । तत्रैव प्रमाणतयाङ्गीकृते वेद एव छन्दसां वेदानां वैष्णवत्वं विष्णोरुत्कर्षपरत्वम् ।। १६ ।।

**ताम्रपर्णीया–** अस्तु प्रामाण्यम् । न तस्येतरशास्त्रातिशय इति चेत् तस्याप्यभ्युपगमादन्यथा अपसिद्धान्तापत्तेरित्याह– **वेदेति** ।। आधिक्यं चशब्दात्प्रामाण्यं च । वेदविरुद्धानि शैवशास्त्राणि चाहुः । तात्पर्यद्योतनायार्थवादमाह– **वेदोज्झितानामिति** ।। वेदोज्झितानां बौद्धानां तथा ये तु वेदप्रामाण्यमङ्गीकृत्यापि वेदं न बहु मन्यन्ते तेषां स्कान्दादीनां च निन्दामाहुरित्यर्थः । अस्तु वेदप्रामाण्यमाधिक्यं च तेषां चान्यपरत्वान्न विष्णूत्कर्षसिद्धिरित्यत आह– **तत्रैव शैवशास्त्रेष्वेवेति** ।। १६ ।।

**भारतश्री–** तथा शाक्तेयस्कान्दसौरादिकानां निन्दामित्यन्वयः । तत्रैव साङ्ख्यादिशाक्तेयादिशास्त्र एव । छन्दसां वेदानां वैष्णवत्वं विष्णुपरत्वम् ।। १६ ।।

**चट्टी–** सर्वशास्त्राणि वेदाधिक्यं वेदानां प्रामाण्यलक्षणमाधिक्यं वेदोज्झितानां वेदप्रामाण्यमनङ्गीकुर्वतां बहुलां च निन्दामाहुः । तत्रैव प्रमाणतयाङ्गीकृते वेद एव छन्दसां वेदानां वैष्णवत्वं विष्णुप्रतिपादकत्वमुक्तम् ।।१६।।

**विष्णोराधिक्यं तानि शास्त्राणि चाऽहुः शिवादिभ्यः कुत्रचिन्नैव वेदे ।**
**[१]विष्णूत्कृष्टः कथितो बौद्धपूर्वाश्चाऽहुर्विष्णुं परमं सर्वतोऽपि ।।१७।।**

**व्यासतीर्थीया–** विष्णोः सर्वाधिक्यं सर्वतन्त्रसिद्धान्तश्चेत्याह– **विष्णोरिति** ।। कुत्रचिदिति पूर्वत्रापि सम्बध्यते । ननु यथा विष्ण्वाधिक्यं शैवादिशास्त्रे सत्वात्सर्वत्र सिद्धान्तस्तथा वेदे शिवाद्याधिक्यमप्युक्तं चेत् तदपि सर्वतन्त्रसिद्धान्तः स्यादित्यत आह– **कुत्रचिदिति** ।। विष्णोः सर्वोत्तमत्वं सर्वतन्त्रसिद्धान्त इत्युक्तम् । तत्कथमित्यतस्तत्प्रकारं लेशतो दर्शयन्नाह– **बौद्धपूर्वा इत्यादिना** ।। विष्णुं बुद्धादिरूपिणम्।।

**वेदाङ्गतीर्थीया–** न केवलं विष्णूत्कर्षो वेदैरेवोच्यते । किन्तु शैवादिशास्त्राण्यप्याहुरित्याह– **विष्णोरिति** ।। तानि शास्त्राणि कुत्रचित् शिवादिभ्यः विष्णोराधिक्यमाहुः । शैवशास्त्रेष्विव वेदेऽन्योत्कर्षः न कथित इत्याह– **कुत्रचिदिति** ।। वेदे कुत्रचित् विष्णूत्कृष्टः विष्णोरुत्तमः अन्यः न कथितः । न केवलं वैदिका विष्णुं परमाहुः । किन्तु अवैदिकाश्च तथाहुरित्याह– **बौद्धपूर्वाश्चेति** ।। विष्णुं बुद्धरूपिणम् ।।१७।।

**वादिराजतीर्थीया–** कुत्रचिदिति पदं सर्वत्राप्यावर्तनीयम् । बौद्धपूर्वाणामवैदिकत्वेऽपि रामकृष्णाद्यवतारेषु दृष्टकार्यस्यापोढुमशक्यत्वात् । कश्चित्स्वकीयग्रन्थकोणे विष्णुं परमं वदन्तीति भावः ।। १७ ।।

---

१. 'विष्णूत्कर्षः' इति चट्टीपाठः । वरदराजीयपाठोऽपि तथैव ।

**वरदराजीया—** तानि अन्यशास्त्राणि च शिवादिभ्यः सकाशात् विष्णोराधिक्यमाहुः । वेदे तु कुत्रचिदपि स्थाने शिवादिः विष्णोरुत्कर्षः विष्णोः सकाशादुत्तमो नैव कथितः । रुद्रादिनाम्नां विष्णुपरत्वादिति भावः। बौद्धपूर्वाः वादिनः सर्वतोऽप्युत्तमं विष्णुमाहुः ।।१७।।

**अनन्तभट्टीया—** विष्णूत्कृष्टः विष्णोरुत्तमः ।।१७।।

**जनार्दनीया—** न केवलं विष्णूत्कर्षो वेदैरुच्यते किन्तु शैवशास्त्राण्यप्याहुरित्याह— **विष्णोरिति** ।। तानि शास्त्राणि कुत्रचित् प्रसङ्गे शिवादिभ्यः विष्णोराधिक्यमाहुः । वेदे कुत्रचित् विष्णूत्कृष्टः विष्णोः सकाशादुत्तमः अन्यो न कथितः । इन्द्रादिशब्दानां विष्णुपरत्वादिति भावः । न केवलं वैदिकाः विष्णुं परममाहुः । किन्त्ववैदिकाश्च तथाहुरित्याह— **बौद्धपूर्वाश्चेति** ।। विष्णुं बुद्धरूपिणं सर्वतोऽपि सर्वेभ्य एव परममाहुः ।।१७।।

**ताम्रपर्णीया—** विष्णूत्कर्षानङ्गीकारेऽपसिद्धान्तमप्याह— **विष्णोरिति** ।। प्रतिवन्दीं मोचयति— **कुत्रचिदिति** ।। कैमुत्यन्यायेनापि तत्साधयति— **बौद्धेति** ।। १७ ।।

**भारतश्री—** शिवादिभ्यः विष्णोराधिक्यं तानि शास्त्राणि शैवादिशास्त्राणि । वेदे तु कुत्रचिदपि शिवादीनां विष्णूत्कर्ष उक्तो नैव । कुत्रचिदित्यस्योभयत्र सम्बन्धः ।। १७ ।।

**चट्टी—** न केवलं विष्णुप्रतिपादकं वेदानां किन्तु शैवशास्त्राण्यपि विष्णूत्कर्षमाहुरित्याह— **विष्णोरिति** ।। तानि शास्त्राणि अन्यशास्त्राणि च कुत्रचित् प्रसङ्गे । शिवादिभ्यः विष्णोराधिक्यमाहुः । वेदे कुत्रचित् विष्णूत्कर्षः विष्णोः सकाशादुत्कृष्टः उत्तमः न कथितः । रुद्रादिशब्दानां विष्णुपरत्वादिति भावः । बौद्धपूर्वाश्च विष्णुं बुद्धरूपिणं सर्वतोऽपि सर्वत एव । परमं उत्तममाहुः ।। १७ ।।

**[1]लोकायताश्च क्वचिदाहुरग्र्यं विष्णुं गुरुं सर्ववरं बृहस्पतेः ।**
**सर्वागमेषु प्रथितोऽत एव विष्णुः समस्ताधिक एव मुक्तिदः ।।१८।।**

**व्यासतीर्थीया—** न केवलमग्र्यमाहुः बृहस्पतेर्गुरुमप्याहुः । क्वचित् सर्ववरं चाहुरिति सम्बन्धः । विष्ण्वाधिक्यस्य सर्वतन्त्रसिद्धान्तत्वं लेशतो दर्शयित्वोपसंहरति— **सर्वेति** ।। अत एव बौद्धपूर्वा इत्युक्तप्रकारेण यो मुक्तिदः स एव समस्ताधिकः । विष्णुरेव मुक्तिदः अतोऽपि स एव समस्ताधिक इत्याह— **मुक्तिद इति** ।। १८ ।।

**वेदाङ्गतीर्थीया—** लोकायताः चार्वाकाः । सर्ववरं च बृहस्पतेर्गुरुं विष्णुं क्वचिदग्र्यमाहुः । अत एव शैवादिभिरपि विष्णोराधिक्यस्याङ्गीकृतत्वादेव । मुक्तिदो विष्णुः सर्वागमेषु प्रथितः (समस्ताधिक) एव।।

१. हरिवंशे भविष्यपर्वणि-अध्याय-२१.

**वादिराजतीर्थीया–** *'लोकायताश्च'* इत्यत्र लोकायताः चार्वाकाः वृहस्पत्युक्तस्वमतस्य आप्तिमूलत्व-चिन्तायां वृहस्पतेरपि गुरुम् अत एव सर्ववरं विष्णुं वदन्तीति भावः । किं बहुना मत्स्यकूर्मवराह-नरसिंहरामकृष्णाद्यवतारेषु इतरासाध्यानां वेदाहरणसमुद्रमथनमन्दरोद्धरणादिकर्मणां हिरण्याक्षहिरण्य-कशिपुरावणकंसजरासन्धादिप्रवलदैत्यवधानां वलिवन्धनत्रिलोकत्रिपदीकरणव्रह्माण्डखण्डनाद्यप्रतिम-चरित्राणां चास्मिन्नेव लोके सार्वजनीनतया कृतानामपलापायोगात् विष्णोः सर्वाधिकत्वं सकलवादिषु को नाम प्रेक्षावानुपेक्षेत । अत एव सर्वागमेषु प्रथित इत्याद्युक्तम् । अत एव सर्वाधिको विष्णुरेवेत्येव-कारद्वयसम्वन्धः ।। १८ ।।

**वरदराजीया–** लोकायताश्चार्वाकाः कचित् स्वग्रन्थेषु विष्णुमग्र्यमाहुः । तथा सर्वतो वरं वृहस्पतेरपि गुरुमाहुः । अत एव विचार्यमाणे सति सर्वागमेषु विष्णुरेव प्रथितः प्रसिद्धः । समस्तापेक्षया अधिको मुक्तिदश्च प्रथितः ।।१८।।

**अनन्तभट्टीया–** वृहस्पतेर्गुरुश्चाहुः ।। १८ ।।

**जनार्दनीया–** लोकायताः चार्वाकाः कचित् विष्णुं सर्ववरं वृहस्पतेः गुरुं कचित् वृहस्पतेरग्र्यमाहुः । अत एव शिवादिभिरपि विष्णोराधिक्यस्याङ्गीकृतत्वादेव । मुक्तिदो विष्णुः समस्ताधिक इति सर्वागमेषु एकः प्रथित एव प्रसिद्ध एव ।।१८।।

**ताम्रपर्णीया–** लोकायताश्च विष्णुमग्र्यमाहुः । न केवलमग्र्यमाहुः किन्तु स्वगुरुत्वेनाभ्युपगत-वृहस्पतेरपि गुरुमाहुः । कचित् सर्ववरं चाहुः । सर्ववरं विष्णुं वृहस्पतेर्गुरुमिति वा । विष्ण्वाधिक्यस्य सर्वतन्त्रसिद्धान्तत्वं लेशतो दर्शयित्वोपसंहरति– **सर्वेति** ।। यतो विष्णुः मुक्तिदः अत एव विष्णुः सर्वागमेषु सर्वाधिकः प्रथित इत्यर्थः ।। १८ ।।

**भारतश्री–** लोकायताः चार्वाकाः ।। १८-२० ।।

**चट्टी–** लोकायताः चार्वाकाश्च विष्णुं सर्वेभ्यः वरं वृहस्पतेः गुरुं अग्र्यं च कचित् स्वग्रन्थे आहुः । अत एव शिवादिभिरपि विष्णोराधिक्यस्याङ्गीकृतत्वादेव । मुक्तिदो विष्णुः समस्ताधिक एवेति सर्वागमेषु प्रथितः प्रसिद्ध एव ।। १८ ।।

**तेष्वागमेष्वेव परस्परं च विरुद्धता ह्यन्यपक्षेषु भूपाः ।**
**प्रत्यक्षतश्चात्र पश्यध्वमाशु वलं वाह्वोर्मे विष्णुपदाश्रयस्य ।।१९।।**

**व्यासतीर्थीया–** ननु शिवादेः सर्वाधिक्यप्रतिपादकेषु तदागमेषु जागरूकेषु कथं विष्णोः सर्वाधिक्यं सिद्ध्येदित्यतः पूर्वोत्तरविरुद्धत्वात् अप्रमाणानीत्याह– **तेष्विति** ।। तेष्वागमेषु प्रतिपादितेषु विष्ण्वाधिक्यापेक्षयान्येषु पक्षेषु प्रमेयेषु परस्परविरुद्धता । अत एव ते अप्रमाणानीति । यत्प्रसादादहं

शिवादिसर्वविजयी अतोऽपि विष्णुः सर्वाधिक इति भावेनाह– **प्रत्यक्षत इति** ।। वैदिकत्वात् पश्यध्वमिति। बाह्वोश्च बलम् ।। १९ ।।

**वेदाङ्गतीर्थीया–** अन्यपक्षेषु शिवादेरुत्तमत्वसिद्धान्तेषु, तेष्वागमेष्वेव, शैवाद्यागमेष्वेव परस्परं च विरुद्धता हि । आगमानामन्योन्यविरोधः एकस्मिन्नन्यागमेन पूर्वोत्तरं च विरुद्धता हि । एवमागमैः विष्णोराधिक्यं प्रसाध्य प्रत्यक्षेणापि साधयति– **प्रत्यक्षतश्चेति** ।। १९ ।।

**वादिराजतीर्थीया–** अन्यपक्षेष्वभिमानवन्तो भूप इति तेषां सम्बोधनमिति ज्ञेयम् । अन्यपक्षेषु शिवशक्त्यदीनामुत्तमत्वपक्षेष्विति वा । विरुद्धता शिवस्य सर्वोत्तमत्वकथनं भस्मासुरभयात् पलायनकथनं विषपानं गले विषशक्त्या नैल्येन नीलकण्ठत्वं शिरसि सदा विष्णुपादोदकधारणं वेदस्याप्रामाण्यकथनं स्वानुकूलस्य 'ब्राह्मणो न हन्तव्यः' 'अहिंसा परमो धर्मः' इत्यादेः प्रमाण्याङ्गीकरणं चेत्यादिना परस्परं विरुद्धतेत्यर्थः ।। १९-२० ।।

**वरदराजीया–** अन्यपक्षेषु शैवादिपक्षेषु तेषु शैवादिष्वागमेषु परस्परं विरुद्धता शिवस्योत्तमे शाक्त्यादिप्रतिक्षेपात् शक्तेरुत्तमत्वे शिवादेः प्रतिक्षेपात् परस्परं विरुद्धतया अप्रामाण्यमित्यर्थः । 'भूपाः' इति जरासन्धादीन् प्रति भीमस्य सम्बोधनम् । आगमैः सुतर्कैः विष्णूत्कर्षं प्रसाध्य प्रत्यक्षेणापि कैमुतिकन्यायेन विष्णोरेवोत्कर्षं साधयितुमाह– **प्रत्यक्षतश्चेति** ।। विष्णुपदाश्रयस्य मे बाह्वोः बलं प्रत्यक्षतः प्रत्यक्षेण पश्यध्वं पश्यन्तु ।।१९।।

**अनन्तभट्टीया–** अन्यपक्षेषु शिवाद्युत्तमपक्षेषु तेष्वागमेषु परस्परं वैष्णवविरुद्धता पूर्वोत्तरविरुद्धता ।।

**जनार्दनीया–** अन्यपक्षेषु शिवादेरुत्तमत्वसिद्धान्तेषु । तेष्वागमेष्वेव शिवाद्यागमेष्वेव परस्परं विरुद्धता हि आगमानामन्योन्यविरोधः । एकस्मिन्नप्यागमे पूर्वोत्तरविरुद्धता हि । एवमागमैर्विष्णोराधिक्यं प्रसाध्य प्रत्यक्षेणापि साधयति– **प्रत्यक्षतश्चेति** ।। हे भूपाः! अत्र विष्ण्वाधिक्यविषये । कैमुत्यन्यायेन विष्णुपदाश्रयस्य मे बाह्वोर्बलं प्रत्यक्षतः आशु पश्यध्वं पश्यन्तु ।।१९।।

**ताम्रपर्णीया–** ननु शिवादेः सर्वाधिक्यप्रतिपादकेषु तदागमेषु जागरूकेषु कथं विष्णोस्सर्वाधिक्यं सिद्ध्येदित्यतः पूर्वोत्तरविरुद्धत्वात् परस्परविरुद्धत्वाच्च ते अप्रमाणानीत्याह– **तेष्विति** ।। अन्यपक्षेषु शिवादिसर्वोत्तमत्वपरतया वैष्णवपक्षादन्यपक्षेषु तेष्वागमेषु परस्परं विरुद्धताऽस्तीत्यर्थः । यन्न्यायेन शिवस्योत्तमत्वं शैवैरुच्यते तन्न्यायेन शाक्तैः शक्तेः साध्यते । तथा च न्यायसाम्येऽपि परस्परविरुद्धत्वात् निर्णायकाभावात् सर्वाप्रामाण्यमिति भावः । यद्वा तेष्वागमेषु अन्यपक्षेषु विष्ण्वाधिक्यापेक्षयान्यप्रमेयेषु पूर्वोत्तरं परस्परविरुद्धता वर्तते । तेन तस्याप्रामाण्यमङ्गीकार्यं 'शिवशास्त्रेऽपि तद् ग्राह्यं भगवच्छास्त्रयोगि यत्' (ता.नि-१.७२) इत्युक्तन्यायेन तच्छास्त्रगतवैष्णवभागस्य न विरोधेनाप्रामाण्यमसाधारणप्रकरण-पठितत्वादिति भावः । नन्वियं कथा वितण्डा 'वितण्डा त्वसतां सता' (अनु-२.१) इति तल्लक्षण-

लक्षितत्वात् । तत्र च न स्वपक्षसाधनं कार्यं 'अप्रकाश्य स्वसिद्धान्तमसतां पक्षदूषणम्' (अनु-२.१) इत्युक्तेः । तथा च कथमत्र वेदप्रामाण्यसाधनविष्णुसर्वोत्तमत्वादिसाधनमिति चेदुच्यते । वितण्डायामपि यावता स्वपक्षसाधनेन विना परपक्षदूषणं न घटते तावतः साधनीयत्वात् । अन्यथा वेदविरोधेन शैवाद्यागमाप्रामाण्येऽभिहिते तदप्रामाण्यशङ्कायामुत्तराभावप्रसङ्गात् । अत एव सुधायाम्- 'नन्ववैदिकं प्रति कथमागमं प्रयुज्यत तत्प्रामाण्यं साधनीयम्' इत्युक्तम् । वादजल्पयोरिव शास्त्रोदितक्रमापरिहारेण स्वपक्षाप्रकाशनाभिप्रायमप्रकाशस्येति वचनम् । अत एवैतरेयभाष्ये- 'चतुर्थोऽयोग्यपूरुषे । उपदेशं केशवस्य' (प्र-२.अ-८.ब्रा-४) यथाशास्त्रोदितक्रमानुसारेण अयोग्योपदेशस्य चतुर्थापराधत्वमुक्तं न तु परपक्षदूषणार्थं विशकलिततया स्वसिद्धान्तप्रकाशनस्येति ज्ञेयम् । अत्र इदानीम् । बलं बलकार्यम् ।।१९।।

**चट्टी–** अन्यपक्षेषु शिवादेरुत्तमत्वसिद्धान्तेषु शैवादिष्वागमेष्वेव परस्परं विरुद्धता । शिवस्योत्तमत्वे शक्त्यादेः प्रतिक्षेपात् शक्तेरुत्तमत्वे शिवादेः प्रतिक्षेपात् परस्परं विरुद्धतया अप्रामाण्यमित्यर्थः । एकस्मिन्नागमेऽपि पूर्वोत्तरं विरुद्धता हि । एवमागमसत्तर्कैः विष्णोराधिक्यं प्रसाध्य प्रत्यक्षेणापि साधयति- **प्रत्यक्षतश्चेति** ।। हे भूपाः! अत्र विष्ण्वाधिक्यविषये । कैमुत्यन्यायेन विष्णुपदाश्रयस्य मे बाह्वोर्बलं प्रत्यक्षतः आशु पश्यध्वं पश्यत ।। १९ ।।

**पूर्वं हि गङ्गा मम विष्णुपूजाविघ्नार्थमायाद् वामकरेण सा मे ।**
**नुन्ना परस्ताद् बहुयोजनं गता पुरे कुरूणां शिव आगतस्तदा ।।२०।।**

**व्यासतीर्थीया–** किं शौर्यं किं करिष्यसि । वृथा अहङ्कारं करोषीत्यत आह- **पूर्वं हीति** ।।२० ।।

**वेदाङ्गतीर्थीया–** पूर्वं गङ्गा कुरूणां पुरे मम विष्णुपूजाविघ्नार्थं आगता मे वामकरेण नुन्ना परिक्षिप्ता ।।२०।।

**वरदराजीया–** तदेव दर्शयति- **पूर्वं हीति** ।। पूर्वं कुरूणां पुरे हस्तिनपुरे गङ्गानदी मम कर्तुः विष्णुपूजाविघ्नार्थं मत्क्रियमाणविष्णुपूजाविघातार्थं आयात् मदुपर्यागात् । सा गङ्गा मे मम वामकरेण परस्तात् दूरतो नुन्ना परिक्षिप्ता सती बहुयोजनं अतिदूरं गता । तदा तस्यां दशायां शिवो रुद्र आगतः ।।२०।।

**अनन्तभट्टीया–** मे वामकरेण परीक्षन्, [१]मद्बलमिति शेषः ।। २० ।।

**जनार्दनीया–** तदेव दर्शयति- **पूर्वमित्यादिना** ।। कुरूणां पुरे गङ्गा मम विष्णुपूजाविघ्नार्थमायात् । मे मया वामकरेण नुन्ना परिक्षिप्ता । परस्तात् परतः, कूलादिति शेषः । बहुयोजनं गता । तदा शिव आगतः ।।२०।।

**ताम्रपर्णीया–** ननु तवास्मज्जयमात्रेण कथं विष्णोः शिवाद्युत्कर्षसिद्धिरित्यतः पूर्ववृत्तमाह- **पूर्वमिति** ।। २०-२१ ।।

---

१. 'यत् मण्डलमिति शेषः ।' इति क्वचित् कोशेषु ।

**चट्टी–** तदेव दर्शयति– **पूर्वमित्यादिना** ।। पूर्वं कुरूणां पुरे नागपुरे गङ्गा मम विष्णुपूजाविघ्नार्थमायात् मदुपर्यागताभूत् । सा गङ्गा मे मया वामकरेण नुन्ना परिक्षिप्ता सती । परस्तात् कूलात् परतः बहुयोजनं गता । तदा शिव आगतः ।। २० ।।

**स व्याघ्ररूपी [१]कपिलात्मिकामुमां [२]परीक्षयन् मां हन्तुमिवाऽद्रवद् द्रुतम् ।**
**स मे युद्धे विजितो मूर्च्छितश्च गदाप्रहारादास लिङ्गान्तरस्थः ।।२१।।**

**व्यासतीर्थीया–** मां परीक्षयन् ।। २१-२२ ।।

**वेदाङ्गतीर्थीया–** कपिलात्मकामुमां हन्तुमिव प्रावर्तत ।। २१ ।।

**वादिराजतीर्थीया–** 'परीक्षयन् हन्तुमिवाद्रवत्' इत्यत्र मां परीक्षयन् मद्बलं परीक्षयन्नित्यर्थः । कपिलात्मिकामुमां हन्तुमिवाद्रवदिति योजना ।।२१।।

**वरदराजीया–** स शिवो व्याघ्ररूपी भूत्वा कपिलात्मिकां कपिलगोरूपधरां उमां पार्वतीं हन्तुमिव मृषैव द्रुतं वेगेन आद्रवत् धावन् पृष्ठत आगतः । कुतः? मां परीक्षयन् कपिलां स्वबाहुबलेन मोचयिष्यति न वेति परीक्षां कुर्वन्नित्यर्थः । स शिवो मे मया युद्धे गदाप्रहारात् विजितो निर्जितः । अत एव मूर्च्छितश्च भयेन लिङ्गान्तरस्थः पाषाणमयलिङ्गमध्यस्थः आस बभूव ।।२१।।

**अनन्तभट्टीया–** लिङ्गस्यान्तरे तिष्ठतीति तथोक्तः ।। २१ ।।

**जनार्दनीया–** स शिवः कपिलात्मिकां कपिलगोरूपाम् । परीक्षयन् मम, बलमिति शेषः । मे मया गदाप्रहारात् विजितः मूर्च्छितः सन् लिङ्गान्तरस्थः पाषाणलिङ्गान्तरस्थः आस । पाषाणलिङ्गं विवेशेत्यर्थः ।।२१।।

**भारतश्री–** कपिलात्मिकां कपिलगोरूपाम् । परीक्षयन्, मद्बलमिति शेषः ।। २१-२३ ।।

**चट्टी–** स शिवः कपिलात्मिकां कपिलगोरूपां उमां हन्तुमिव मम बलं परीक्षयन् द्रुतं आद्रवत् । सः शिवः मे मया गदाप्रहारात् विजितः मूर्च्छितः सन् लिङ्गान्तरस्थः आस । भयात् पाषाणलिङ्गं विवेशेत्यर्थः ।।२१।।

**व्याघ्रेश्वरं नाम लिङ्गं पृथिव्यां ख्यातं तदास्ते तद्वदन्यत्र युद्धे ।**
**तीरे गोमत्या हैमवते गिरौ हि जितस्तत्राप्यास शार्दूललिङ्गम् ।।२२।।**

**वेदाङ्गतीर्थीया–** तद्वत् (अन्यत्र) युद्धे व्याघ्ररूपिणा रुद्रेण ।। २२ ।।

---

१. 'कपिलात्मकाम्' इति वेदाङ्गतीर्थीय पाठः ।

२. 'परीक्षयन् हन्तुमिवाद्रवत्' इति जनार्दनीय-चट्टीपाठः स्यात् ।

**वरदराजीया–** लिङ्गं व्याघ्रेश्वरं नाम पृथिव्यां ख्यातं आस्ते अधुना तिष्ठति । तद्वदेव अन्यत्र स्थानान्तरे । तदेव दर्शयति– **तीर इति** ।। हैमवते गिरौ हिमवत्पर्वते गोमत्याः नद्याः तीरे युद्धे सति मया विजितः विनिर्जितः भीत्या लिङ्गं पूर्ववत् प्रविष्टः तत् शार्दूललिङ्गमासेत्यर्थः ।।२२।।

**जनार्दनीया–** तद्वदन्यत्र स्थलान्तरे युद्धमभूत् । तदेव विवृणोति– **तीर इति** ।। हैमवते गिरौ हिमवत्पर्वते गोमत्याः गोमतीनाम्न्याः नद्यास्तीरः तत्रापि तीरे शार्दूललिङ्गमास । तत्रस्थं लिङ्गं प्रविश्य शार्दूललिङ्गनामा बभूवेति भावः ।।२२।।

**ताम्रपर्णीया–** ।। **तीर इति** ।। हैमवते गिरौ गोमत्यास्तीरे कपिलात्मिकामुमां बिभीषयन् व्याघ्ररूपी शिवो जितः लिङ्गं विवेश । तत्रापि शार्दूललिङ्गं ख्यातमासेत्यर्थः ।। २२-२३ ।।

**चट्टी–** तदा तल्लिङ्गं व्याघ्रेश्वरं नाम पृथिव्यां ख्यातं तद्वदन्यत्र स्थलान्तरे युद्धमभूत् । तदेव विवृणोति– **तीर इति** ।। हैमवते गिरौ हिमवत्पर्वते गोमत्याः गोमतीनाम्न्याः नद्यास्तीरे जितः निर्जितः सन् तत्रापि शार्दूललिङ्गमास । तत्रस्थं लिङ्गं प्रविश्य नाम्ना शार्दूललिङ्गं बभूवेति भावः ।। २२ ।।

**एवं प्रत्यक्षे विष्णुपदाश्रयस्य बलाधिक्ये किमु वक्तव्यमत्र ।**
**विष्णोराधिक्ये क्षत्रियाणां प्रमाणं बलं विप्रे ज्ञानमेवेति चाऽहुः ।।२३।।**

**व्यासतीर्थीया–** न केवलमहं बलाधिकः किन्तु ज्ञानादिगुणैरप्यधिकश्च । भगवत्प्रसादतोऽपि भगवानधिक इत्यभिप्रेयन् ज्ञानादिगुणवत्वं कुत इत्यतो निरुपाधिकं बलं तत्र प्रमाणमाह– **क्षत्रियाणामिति** ।। २३ ।।

**वेदाङ्गतीर्थीया–** बलाधिक्ये सिद्धेऽपि स्वरूपाधिक्ये किमायातमित्यत आह– **क्षत्रियाणामिति** ।। प्रमाणं ज्ञापकम् ।। २३ ।।

**वादिराजतीर्थीया–** 'क्षत्रियाणां प्रमाणम्' इत्यत्र प्रमाणं आधिक्ये प्रमाणम् ।। २३-२७ ।।

**वरदराजीया–** ततः किं प्रकृते इत्यत कैमुत्यन्यायेन विष्णोरेवाधिक्यं सिद्धमित्याह– **एवमिति** ।। अत्र प्रकृते विष्णोः किमु वक्तव्यं न किमपि न्यायप्राप्तत्वादित्यर्थः । बलाधिक्येन स्वरूपाधिक्यं व्याप्तिबलसिद्धमित्याह– **क्षत्रियाणामिति** ।। बलं प्रमाणं स्वरूपाधिक्यप्रमाणकम् । विप्रे च ज्ञानं प्रमाणमाहुराचार्याः ।।२३।।

**जनार्दनीया–** ततः प्रकृते किमायातमिति तत्राह– **एवमिति** ।। विष्णुपदाश्रयस्य वैष्णवस्य बलाधिक्ये प्रत्यक्षे सति । अत्र प्रकृते विष्णोराधिक्ये किमु वक्तव्यम् । न वक्तव्यमित्यर्थः । एवं बलाधिक्ये सिद्धे स्वरूपाधिक्ये किमायातमित्यत आह– **क्षत्रियाणामिति** ।। क्षत्रियाणां बलं प्रमाणं ज्ञापकम्, स्वरूपाधिक्यस्येति शेषः । विप्रे ज्ञानमेव प्रमाणमाहुः, आर्या इति शेषः ।। २३ ।।

**चट्टी–** ततः किमित्यत आह– **एवमिति** ।। विष्णुपदाश्रयस्य वैष्णवस्य मे बलाधिक्ये प्रत्यक्षे सति । अत्र प्रकृते श्रीविष्णोराधिक्ये किमु वक्तव्यम् । न वक्तव्यमित्यर्थः । एवं बलाधिक्ये सिद्धे बलाधिक्येन स्वरूपाधिक्यं व्याप्तिबलात् सिद्धमित्याह– **क्षत्रियाणामिति** ।। क्षत्रियाणां स्वरूपाधिक्ये बलं प्रमाणं विप्रे च स्वरूपाधिक्ये ज्ञानमेव प्रमाणमित्याहुः ।। २३ ।।

**मया केदारे विप्ररूपी जितश्च रुद्रोऽविशल्लिङ्गमेवाऽऽशु भीतः ।**
**ततः परं वेदविदामगम्यताशापं प्रादाच्छङ्करो व्रीडितोऽत्र ।।२४।।**

**व्यासतीर्थीया–** वेदविदां पुराणविदां च ।। २४ ।।

**वेदाङ्गतीर्थीया–** जितः, वाग्युद्धे इति शेषः । अत्र केदारे ।। २४ ।।

**वरदराजीया–** विप्ररूपे च रुद्रे मदपेक्षया ज्ञानमल्पमेवेत्याह– **मयेति** ।। विप्ररूपी रुद्रः केदारक्षेत्रे वाग्युद्धे जितः निरुत्तरीकृतोऽत एव भीतो लिङ्गमेव अविशत् । अत्र केदारे वेदविदां विदुषामगम्यताशापं विद्वद्भिः अत्र नागन्तव्यमित्येवं शापं प्रादात् । यतः पराजयेन व्रीडितो लज्जां प्राप्त इत्यर्थः ।।२४।।

**अनन्तभट्टीया–** अत्र केदारे । अगम्यतां तद्रूपं स्यात् ।। २४ ।।

**जनार्दनीया–** केदारे केदाराख्यक्षेत्रे जितः, वाग्युद्धे इति शेषः । अत्र केदारे । ततः परं पराजयानन्तरं वेदविदामगम्यतां शापं प्रादात् । केदारक्षेत्रं विदुषामप्राप्यं भवेदित्यशपदिति भावः । यतः व्रीडितः लज्जितः, पराजयेनेति शेषः ।।२४।।

**ताम्रपर्णीया–** ज्ञानाधिक्यं चास्ति ममेत्याह– **मयेति** ।। वाग्युद्धे इति शेषः । विप्ररूपीति विशेषणात् विष्णुबले विष्ण्वाश्रितबले कैमुत्येन विष्णुबले प्रत्यक्षतुल्ये सतीति वा ।। २४-२९ ।।

**भारतश्री–** केदारे केदाराख्ये क्षेत्रे । वेदविदामगम्यताशापं केदारं क्षेत्र..*।। २४-४४ ।।

**चट्टी–** विप्ररूपेऽपि मदपेक्षया ज्ञानमल्पं शिवस्येति भाववानाह– **मयेति** ।। केदारे केदाराख्यक्षेत्रे विप्ररूपी रुद्रः मया जितः, वाग्युद्धे इति शेषः । अत एव भीतः रुद्रः आशु लिङ्गमेवाविशत् । ततः परं पराजयानन्तरं शङ्करः व्रीडितः लज्जितः सन्, पराजयेनेति शेषः । अत्र केदारे वेदविदामगम्यतां शापं प्रादात् । केदारक्षेत्रं विदुषामगम्यं अप्राप्यं भवेदित्यशपदिति भावः ।। २४ ।।

**एवं प्रत्यक्षे विष्णुबले प्रतीपं मनो यस्य ह्युत्तरं स ब्रवीतु ।**
**क्रोधाऽधिकश्चेत् क्षिप्रमायातु योद्धुमित्युक्तास्तेऽभ्याययुरात्तशस्त्राः ।।२५।।**

**व्यासतीर्थीया–** विष्ण्वाश्रितबले ।। २५-२६ ।।

**वेदाङ्गतीर्थीया–** एवं विष्णुवले प्रत्यक्षे आधिक्ये प्रत्यक्षसिद्धे सति । यस्य मनः प्रतीपम् आधिक्ये विप्रतिपन्नम् । स्ववलमुक्त्वा विष्णुवल इति कथमुच्यत इति चेत् सत्यम् । स्ववलस्यापि विष्णुवल-प्रतिविम्वत्वात् तथेति युज्यते ॥२५-२७॥

**वरदराजीया–** एवमुक्तरीत्या विष्णुवले प्रत्यक्षे प्रत्यक्षप्रमाणसिद्धेऽपि यस्य मनः प्रतीपं विप्रतिपन्नं स पुरुषः उत्तरं ब्रवीतु वदतु । निरुत्तरत्वात् क्रोधाधिकश्चेत् क्षिप्रमविलम्वं योद्धुं आयातु आगच्छतु इत्युक्ताः ते जरासन्धाद्याः आत्तशस्त्राः उद्यतायुधाः सन्तः आययुः, योद्धुमिति शेषः ॥२५॥

**अनन्तभट्टीया–** यस्य मनः प्रतीपं विप्रतिपन्नम् ॥ २५-२६ ॥

**जनार्दनीया–** एवमुक्तरीत्या विष्णुवले प्रत्यक्षे अधिकतया प्रत्यक्षसिद्धे सति । यस्य मनः प्रतीपं विप्रतिपन्नं स ब्रवीतु । आधिक्ये विप्रतिपन्नं प्रति स्ववलमुक्त्वा, विष्णुवल इति कथमुच्यत इति चेत्सत्यम् । स्ववलस्यापि विष्णुवलप्रतिविम्वत्वात् तथेति युज्यते । क्रोधाधिकश्चेत्, निरुत्तरत्वादिति शेषः ॥२५॥

**चट्टी–** एवमुक्तरीत्या विष्णुवले प्रत्यक्षे अधिकतया प्रत्यक्षसिद्धे सति । यस्य मनः प्रतीपं विप्रतिपन्नं स उत्तरं ब्रवीतु । विष्णोः आधिक्ये विप्रतिपन्नं प्रति स्ववलमुक्त्वा विष्णुवलमिति कथमुच्यत इति चेत्सत्यम् । स्ववलस्यापि विष्णुवलप्रतिविम्वत्वात् इति युज्यते । क्रोधाधिकश्चेत्, निरुत्तरत्वादिति शेषः । क्षिप्रमविलम्वेन योद्धुं आयातु आगच्छतु । इत्युक्तास्ते जरासुतादयः आत्तशस्त्राः उद्यतायुधाः सन्तः अभ्याययुः ॥ २५ ॥

**विद्राप्य[१] तान् बाणसङ्घैः समस्तान् जरासुतं गदया योधयित्वा[२] ।**
**बाहुभ्यां चैनं परिगृह्याऽशु विष्णोः पदोत्थायां[३] प्राक्षिपद्देवनद्याम् ॥२६॥**

**वरदराजीया–** समस्तान् तान् वाणसङ्घैः विद्राव्य एनं जरासन्धं विष्णोः पादोत्थायां पादजायां देवनद्यां गङ्गायां प्राक्षिपत् ॥२६॥

**जनार्दनीया–** एनं जरासुतं विष्णोः पदोत्थायां पदात् पादात् उत्थायां जातायां देवनद्यां भागीरथ्यां प्राक्षिपत् चिक्षेप ॥ २६ ॥

**चट्टी–** भीमः समस्तान् तान् राज्ञः वाणसङ्घैः विद्राव्य जरासुतं गदया पोथयित्वा एनं जरासन्धं वाहुभ्यां परिगृह्य आशु विष्णोः पदोत्थायां देवनद्यां भागीरथ्यां प्राक्षिपत् चिक्षेप । ननु जरासन्धस्य

---

१. 'विद्राव्य' इति वरदराजीय-चट्टीपाठः ।

२. 'पोथयित्वा' इति चट्टीपाठः ।

३. 'पादोत्थायाम्' इति वरदराजीयपाठः ।

यदृच्छासंस्पृष्टवाचकन्यायेन बलात् भीमसेनेन भागीरथ्यां प्रक्षिप्ते स्नानफलोदितः सद्गतिः स्यात् किमित्यत आह– **देवनद्यामिति** ।। देवा इत्युपलक्षणम् । विष्णुभक्ता इत्यपि ग्राह्यम् । 'नद हर्षे' इत्यस्मात् धातोः, देवा नन्दन्ति अस्यामिति देवनदी भागीरथी । अनेन भक्तिपूर्वकस्नानाभावे फलाभावं सूचयति । तदुक्तं वायुपुराणे आनन्दकाननमाहात्म्ये– (६.९५-९६) 'ये वै दुराचारतया दुरात्मनो भागीरथीस्नानबलेन सर्वदा । मत्सम्मतानां च विनिन्दया तु म्रियन्ति काश्यां भविनः पिशाचताम् ।। ते रुद्रपैशाच्यमवाप्य घोरं भुञ्जन्ति दुःखं मम नीलकण्ठात् । ततोऽनुभूयात्मसुखं तु पार्थिवं प्रयान्ति सर्वे स्वनिजं तमोऽन्धम् ।।' इति दुरात्मनां काशीमरणस्यापि पिशाचत्वतमस्साधनत्वोक्तेरिति ।। २६ ।।

**स व्रीडितः प्रययौ मागधांश्च भूपैः समेतो भीमसेनो रथं स्वम् ।**
**आरुह्य काशीश्वरपूजितश्च ययौ [1]काल्या शक्रसनामकं पुरम् ।।२७।।**

**व्यासतीर्थीया–** समानं नाम यस्य तत्समाननामकं शक्रेण समाननामकम् ।।२७-२९।।

**वरदराजीया–** भूपैः समेतो प्रययौ । काशीश्वरेण पूजितस्सन् भीमसेनः स्वकीयं रथं आरुह्य काल्या देव्या सह शक्रसनामकं शक्रेण समाननामकं पुरं इन्द्रप्रस्थं प्रययौ ।।२७।।

**अनन्तभट्टीया–** सनामकं समाननामकम् ।। २७ ।।

**जनार्दनीया–**काल्या कालीनाम्न्या सह शक्रसनामकं पुरं शक्रेण समाननामकं पुरं शक्रप्रस्थमित्यर्थः ।।२७।।

**चट्टी–** सः जरासन्धः व्रीडितः लज्जितसन् भूपैः समेतः मागधान् देशान् प्रययौ । भीमसेनश्च काशीश्वरेण पूजितस्सन् काल्या कालीनाम्न्या सह । स्वं रथमारुह्य शक्रसनामकं शक्रेण समाननामकं पुरं शक्रप्रस्थमित्यर्थः । प्रययौ ।। २७ ।।

**तस्यां त्रिलोकाधिकरूपसद्गुणैरासम्मितायां[2] रममाणः सुतं च ।**
**[3]शर्वत्रातं नामाजनयत्[4] पुरा यः समानवायुर्बलवीर्ययुक्तः ।।२८।।**

**वेदाङ्गतीर्थीया–** आसम्मतायां सम्यक् प्रसिद्धायाम् ।।२८-३२।।

---

१. '..अथ घटोत्कचः । भीमसेनाद् हिडिम्बायां, काल्यां शर्वगतस्ततः ।' इति भागवते-९.१९.३१ । विष्णुपुराणेऽपि -४.२०.

२. 'आसम्मतायाम्' इति वेदाङ्गतीर्थीय-अनन्तभट्टीयपाठः ।

३. 'भीमसेनस्तु वारणस्यां काशिराजकन्यां जलन्धरां नाम उपयेमे स्वयंवरस्थाम् । तस्यामस्य जज्ञे शर्वत्रातः' आदिपर्वणि-६३.७६.

४. 'नाम्नाऽजनयत्' इति सत्याभिनवतीर्थीय-चट्टीपाठः ।

**वादिराजतीर्थीया–** 'रूपसद्गुणैरासम्मितायाम्' इत्यत्र आ समन्तात् सम्यक् मितायां प्रमितायाम् ।। २८-२९ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'तस्यां त्रिलोकाधिकरूपसद्गुणैः' इति श्लोके 'शर्वत्रातं नाम्ना' इत्यस्य नामात्मकशर्वत्रातशब्दवन्तमित्यर्थः । एतेन शर्वत्रातनामकमिति वक्तव्यम् । नाम्ना शर्वत्रातमिति कथनमनुपपन्नमिति दूषणं परास्तम् । तृतीयाविधाने 'प्रकृत्यादिभ्य उपसङ्ख्यानम्' इति वचनात् नाम्नेति तृतीयया अभेद उच्यते शर्वत्रातशब्दार्थात् मत्त्वर्थे अच्प्रत्यय इति चाङ्गीकृत्य नाम्ना शर्वत्रातमित्यस्य नामात्मकशर्वत्रातशब्दवन्तमित्यर्थः । शर्वत्रातनामकमिति इत्यभ्युपगमात् ।। २८-३४ ।।

**वरदराजीया–** त्रिलोकेषु अधिकैः रूपैः सद्गुणैः आसम्मितायां आसमन्तात् सम्मितायां सर्वथा स्वानुरूपायां तस्यां काल्यां रममाणो रतिं कुर्वन् शर्वत्रातं सुतमजनयत् । यः शर्वत्रातः पुरा समानवायुः प्राणादिषु पञ्चसु समाननामा वायुः मुख्यप्राणः तदंशो अत एव बलवीर्याभ्यां युक्तः ।।२८।।

**अनन्तभट्टीया–** आसम्मतायां स्वानुरूपायाम् ।। २८-२९ ।।

**लघ्वनन्तभट्टीया–** आसम्मतायां अनुरूपायाम् ।। २८-३५ ।।

**जनार्दनीया–** आसम्मितायां सम्यक् प्रसिद्धायाम् । आसमन्तात् सम्मितायां स्वानुरूपायां वा ।।२८।।

**चट्टी–** भीमोऽपि त्रिलोकाधिकरूपसद्गुणैः त्रिलोकेष्वधिकैः रूपसद्गुणैः आ समन्तात् सम्मितायां स्वानुरूपायां तस्यां काल्यां रममाणः सन् रतिं कुर्वन् सन् नाम्ना शर्वत्रातं सुतं पुत्रं च अजनयत् । यः शर्वत्रातः पुरा समानवायुः प्राणादिषु पञ्चसु समानाख्यो वायुः मुख्यप्राणदासः स एव बलवीर्याभ्यां युक्तः ।।२८।।

**[1]कृष्णोऽपि गत्वा द्वारवतीं सरामः सत्यापितुर्वधकर्तारमेव ।**

---

१. यद्यपि भागवते द्रौपदीस्वयंवरानन्तरमेव कृष्णः शतधन्वानं अनुद्रुत्य अहन् इत्यवोचत् । तथा हि- निहन्तुं शतधन्वानं सत्यभामापितुर्द्रुहम् । शतधन्वनि दुर्बुद्धौ हते सीरधरोग्रजः । कुपितो मामनादृत्य विदेहान् विमना ययौ । एतावन्तमहं कालं तदागमनकाङ्क्षया ।। पुर एवावसं क्वापि नागच्छं कार्ययन्त्रितः ।। भागवते-१०.६२. १३-१५ । यदि तथैव कथा स्यात् तदा द्रौपदीविवाहानन्तरं एकवर्षं पाण्डवाः पाञ्चालके उषित्वा हस्तिनपुरं अगमन् । तत्पूर्वमागतः कृष्णोऽपि तैः सह तत्र अगमत्, तै सह पञ्चवर्षं उषित्वा विश्वकर्मणा इन्द्रप्रस्थं निर्माय द्वारकां ययौ इति भारतकथा असङ्गता भवति । तच्चोक्तं भारते आदिपर्वणि- 'पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः । आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ।। सविहारं सुखं जग्मुर्नगरं नागसाह्वयम्।।' २२६.१८-१९. । तथा राज्यस्वीकारविषये कृष्णसम्मतिदानं न्यरूरूपत् । तथाहि- 'विश्रान्तास्ते महात्मानः कञ्चित् कालं सकेशवाः' (२२७.११) प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च । वासुदेवेन संमन्त्र्य पाण्डवा समुपाविशन् ।। (२२७.१९) 'ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः । मण्डयाञ्चक्रिरे तद्वै पुरं स्वर्गादिव च्युतम् ।।'

**शतधन्वानं हन्तुमैच्छत् स चैव [1]ययाचेऽक्रूरं कृतवर्मानुयुक्तम् ॥२९॥**

**वरदराजीया–** कृष्णोऽपि इन्द्रप्रस्थाद् द्वारवतीं गत्वा सरामो बलभद्रेण सहितः सत्यायाः पितुः सत्राजितो वधकर्तारं शतधन्वानम् । सः शतधन्वा कृतवर्मणा अनुयुक्तं सहितं अक्रूरं स्वसहायार्थं ययाचे ॥२९॥

**जनार्दनीया–** गत्वा, इन्द्रप्रस्थादिति शेषः । स च शतधन्वा ययाचे, सहायार्थमिति शेषः ॥२९॥

**चट्टी–** श्रीकृष्णोऽपि, शक्रप्रस्थादिति शेषः । द्वारवतीं गत्वा सरामः बलभद्रेण सहितः सन् सत्यायाः पितुः सत्राजितः वधकर्तारं शतधन्वानं हन्तुमेव ऐच्छत् । स चैव शतधन्वा कृतवर्मानुयुक्तं अक्रूरम्, स्वसहायार्थमिति शेषः । याचे ययाचे ॥ २९ ॥

**तावब्रूतां [2]सर्वलोकैककर्तुर्नाऽवां विरोधं मनसाऽपि कुर्वः ।**
**कृष्णस्य सर्वेशितुरित्यनूक्त[3] आरुह्य [4]चाश्वीं भयतः पराद्रवत् ॥३०॥**

**व्यासतीर्थीया–** विरोधाकरणे सर्वकर्तृत्वं सर्वेशितत्वञ्च हेतुः । 'अजा-एडका-कोकिला-चटका-अश्वा..' (सि.कौ-४५४.गणपाठः) इति जातिवाचिनोऽश्वशब्दस्य स्त्रियां टावन्तत्वनियतिर्नेति भावेनोक्तम्– **आश्वीमिति** ॥ ३०-३२ ॥

**वादिराजतीर्थीया–** 'इत्यनूक्त आरुह्य' इत्यत्र इति उक्तं अनु अनन्तरमिति पदविभागः ॥३०-३२॥

**वरदराजीया–** तौ अक्रूरकृतवर्माणौ सर्वलोकैकभर्तुः अत एव सर्वेशितुः कृष्णस्य । इत्यनूक्तः विरोधं न कुर्व इत्यनूक्त इति प्रत्युत्तरं प्राप्तः । आश्वीं वडवाम् ॥३०॥

**अनन्तभट्टीया–** लोककर्तुः श्रीकृष्णस्य । आश्वीं वडवाम् ॥३०॥

---

२२७.५३ । तथा पुरनिर्माणमेव विश्वकर्मणा कृतं न तु पूर्वं पाण्डवैः निर्मितं पुरं विश्वकर्मा नवीकृतवान् । तथाहि- 'ततः पुण्यं शिवं देशे शान्तिं कृत्वा महारथाः । स्वस्ति वाच्य यथान्यायमिन्द्रप्रस्थं भवत्विति । तत्पुरं मापयामासुर्द्वैपायनपुरोगमाः । ततः स विश्वकर्मा तु चकार पुरमुत्तमम् ।'(२२७.५८-५९) इत्यादि भारतोक्तबहुप्रमाणेन पुरनिर्माणसमये ततः पूर्वं कृष्णः पाण्डवानां समीपे एव आसीत् । तैः साकं द्रुपदपुरात् हस्तिनपुरं आगतः इति सिद्धमिति न द्रौपदीस्वयंवरसमनन्तरमेव शतधन्वाहननम् । अतः भागवतस्य सङ्क्षेपशास्त्रत्वात् विस्तारानुसारेण कथा ज्ञेया इति भारतानुसारेण कथामवदन् श्रीमदाचार्याः ।

१. 'याचे' इति चट्टीपाठः ।

२. 'सर्वलोकैकभर्तुः' इति वरदराजीय-अनन्तभट्टीयपाठः ।

३. वादिराजतीर्थीये 'इति अनु उक्तम्' इति पदविभागः ।

४. 'अश्वीम्' इति जनार्दनीय-चट्टीपाठः । 'आश्वीम्' इति ताम्रपर्णीये ।

**जनार्दनीया—** तौ अक्रूरकृतवर्माणौ आवां विरोधं मनसापि न कुर्व इति अब्रूताम् । इत्यनूक्तः अक्रूरकृतवर्मभ्यां स्ववाक्यमनूक्तः इत्यर्थः । अश्वीं वडवाम् ।।३०।।

**ताम्रपर्णीया—** ।। **आश्वीमिति** ।। 'अजा-एडका-कोकिला-चटका-अश्वा..' इति जातिवाचिनोऽश्व-शब्दस्य स्त्रियां टाबन्तत्वनियतिर्नेति भावेनोक्तम्— **आश्वीमिति** ।। केचित्तु- 'आश्वाम्' इति पठन्ति ।।३०-३५।।

**चट्टी—** तौ अक्रूरकृतवर्माणौ आवां सर्वलोकैकर्तुः सर्वेशितुः श्रीकृष्णस्य विरोधं मनसापि न कुर्व इति तं शतधन्वानं प्रत्यब्रूताम् । इत्यनूक्तः अक्रूरकृतवर्मभ्यां स्ववाक्यमनूक्तः इत्यर्थः । अश्वीं वडवां आरुह्य भयतः पराद्रवत् ।। ३० ।।

**अन्वेव तं कृष्णरामौ रथेन यातौ शतं योजनानां दिनेन ।**
**गत्वा मृतायां वडवायां पदैव [1]स प्राद्रवत्[2] कृष्ण एनं पदाऽगात् ।।३१।।**

**वरदराजीया—** तं पराद्रवन्तं शतधन्वानं अन्वेव योजनानां शतं दिनेन एकस्मिन्नेव दिने । शतधन्वानं एनं पदा पद्भ्यां अगात् ।।३१।।

**अनन्तभट्टीया—** पदाऽगात्, बलं विहायेति शेषः ।। ३१ ।।

**जनार्दनीया—** कृष्णः एनं पदाऽगात्, रामं विहायेति शेषः ।। ३१ ।।

**चट्टी—** तमन्वेव श्रीकृष्णरामौ रथेन यातौ । वडवायां दिनेन योजनानां शतं गत्वा मृतायां सत्यां शतधन्वा पदैव सम्प्राद्रवत् । श्रीकृष्णः एनं पदाऽगात् ।। ३१ ।।

**छित्वा शिरस्तस्य चक्रेण जानन्नक्रूरे मणिमेनेन दत्तम् ।**
**अप्यङ्गवल्लोकविडम्बनाय परीक्ष्य वासोऽत्र नेत्याह रामम् ।।३२।।**

**वरदराजीया—** एतेन शतधन्वना अक्रूरे दत्तं स्थापितं मणिं स्यमन्तकं जानन्नपि वासः परीक्ष्य अत्र एतस्मिन् मणिर्नेत्याह ।।३२।।

**अनन्तभट्टीया—** नेत्याह मणिर्नास्तीत्याह ।। ३२ ।।

---

१. 'सम्प्राद्रवत्' इति चट्टीपाठः ।

२. 'पद्भ्यामेव ततो गत्वा शतधन्वानमच्युतः । मिथिलामभितो राजन् जघानपरमास्त्रवित् । स्यमन्तकं च नापश्यत् हत्वा भोजं महाबलम् । निवृत्तं चाब्रवीत्कृष्णं रत्नं देहीति लाङ्गली । नास्तीति कृष्णश्चोवाच ततो रामो रुषान्वितः । धिक्च्छब्दमसकृत्कृत्वा प्रत्युवाच जनार्दनम् । भ्रातृत्वान्मर्षयाम्येष स्वस्ति तेऽस्तु व्रजाम्यहम् । कृत्यं न मे द्वारकया न त्वया न च वृष्णिभिः ।।' हरिवंशे-१.३९.१९-२२.

**जनार्दनीया–** वासः शतधन्ववस्त्रम् । परीक्ष्य मणिरस्ति वा न वेति दृष्ट्वेत्यर्थः । नेत्याह मणिर्नास्तीत्याह ।। ३२ ।।

**चट्टी–** श्रीकृष्णः तस्य शतधन्वनः शिरः चक्रेण छित्वा एनेन शतधन्वना अक्रूरे दत्तं स्थापितं मणिं स्यमन्तकमणिं जानन्नपि अज्ञवत् लोकविडम्बनार्थं वासः शतधन्वनः वस्त्रं परीक्ष्य मणिरस्ति वा न वेति दृष्ट्वेत्यर्थः । अत्र एतस्मिन्नेति मणिर्नास्तीति रामं प्रत्याह ।। ३२ ।।

**अविश्वासात् स तु सक्रोध एव ययौ विदेहानवसत् पञ्च चाब्दान् ।**
**जानन् पार्थेभ्योऽहार्यतां केशवस्य वशीकर्तुं [1]धार्तराष्ट्रो बलं गात् ।।३३।।**

**व्यासतीर्थीया–** बलं गात् । 'बहुलं छन्दस्यमाङ्योगेऽपि' (सि.कौ.३९४६) इत्यनुशासनादिति साधुः ।।३३-३४।।

**वेदाङ्गतीर्थीया–** पार्थेभ्यः केशवस्य अहार्यतां हर्तुमशक्यतां जानन् । गात् अगात् ।।३३।।

**वादिराजतीर्थीया–** 'जानन् पार्थेभ्योऽहार्यताम्' इत्यत्र केशवस्य पार्थेभ्योऽहार्यतां अपहारायोग्यतां पार्थस्नेहं हित्वा स्वस्नेहाय अपहर्तुमशक्यतामित्यर्थः । 'बलं गात्' इत्यत्र 'बहुलं छन्दस्यमाङ्योगेऽपि' इति वचनात् गात् बलं वशीकर्तुं विदेहनगरमगात् ।। ३३-५१ ।।

**मधुसूदनीया–** ।। **ययौ विदेहानवसदिति** ।। नच 'षष्टिवर्षगते काले यद्रोषोऽभून्ममानघ' इति हरिवंशविरोधः (१.३९.३७) । 'भवेद्विश्वसृजां सत्रे संवत्सरपदं दिने'[2] इति मीमांसकैरपि वत्सरशब्दस्य गौणार्थकत्वस्य स्वीकृतत्वेन 'यो मासः सः संवत्सरः' (यजु.आ.२प्र.अ-८) इति श्रुतेश्च वर्षशब्देन मासग्रहणे विरोधाभावादिति भावः ।। ३३-४१ ।।

**वरदराजीया–** सः रामः कृष्णे अविश्वासात् क्रोधो विमना विदेहान् ययौ । तत्र पञ्च अब्दान् अवसच्च । केशवस्य पार्थेभ्यो अहार्यतां आहर्तुमशक्यतां कृष्णः पार्थैः वशीकृत इति जानन्नित्यर्थः । स्वयं च बलं च बलभद्रं च वशीकर्तुं अगात् ।।३३।।

**अनन्तभट्टीया–** केशवस्य अहार्यतां आत्मसहायत्वे वशीकरणानर्हताम् । गात् अगात् ।।३३।।

**जनार्दनीया–** पार्थेभ्यः केशवस्य अहार्यतां आहर्तुमशक्यतां जानन् बलं बलभद्रं वशीकर्तुं गात् अगात् ।। ३३ ।।

**चट्टी–** सः रामः, श्रीकृष्ण इति शेषः । अविश्वासात् एव सक्रोधः सन् विदेहान् ययौ । तत्र पञ्चाब्दान् संवत्सरान् अवसच्च । न च 'षष्टिवर्षे गते काले यद्रोषोऽभूत् ममानघ' इति हरिवंशविरोधः । 'भवेद्विश्वसृजां

---

१. 'अथ दुर्योधनो राजा गत्वा तु मिथिलां प्रभुः । गदाशिक्षां ततो दिव्यां बलभद्रादवाप्तवान् ।।' हरिवंशे-१.३९.२८.

२. अयं विचारः पूर्वमीमांसायां ६.७.१३. वर्तते ।

सत्रे संवत्सरपदं दिने' इति मीमांसकैरपि वत्सरशब्दस्य गौणार्थकत्वस्य स्वीकृतत्वेन 'यो मासः स संवत्सरः' इति श्रुतेश्च वर्षशब्देन मासग्रहणे विरोधाभावादिति भावः । धार्तराष्ट्रः दुर्योधनः पार्थेभ्यः केशवस्य श्रीकृष्णस्य अहार्यतां आहर्तुमशक्यतां जानन् बलं बलभद्रं वशीकर्तुं गात् अगात् ।। ३३ ।।

**बभूव शिष्योऽस्य तथा गदायामसन्निधानं केशवस्य प्रतीक्षन् ।**
**तदा ययाचे भगिनीं च तस्य स च प्रतिज्ञामकरोत् प्रदाने ।।३४।।**

**वेदाङ्गतीर्थीया–** असन्निधानं असामीप्यम् ।।३४।।

**वरदराजीया–** अस्य बलभद्रस्य गदायां गदाशिक्षायां शिष्यो बभूव । तथाशब्दः समुच्चये । केशवस्य कृष्णस्य असन्निधानं कृष्णसन्निधानाभावं प्रतीक्षन् बहुकालं कृष्णेन वियुक्तं राममपेक्ष्यमाण इत्यर्थः । वशीकरणफलमाह– **तदेति** ।। तस्य बलभद्रस्य भगिनीं सुभद्रां ययाचे । मह्यं दातव्येति प्रार्थितवान् । स च रामः प्रदाने भगिनीं प्रदातुं प्रतिज्ञां दास्यामीति प्रतिज्ञां अकरोत् ।।३४।।

**अनन्तभट्टीया–** प्रतीक्षन् दृष्ट्वा ।। ३४-३५ ।।

**जनार्दनीया–** धार्तराष्ट्रः केशवस्य असन्निधानं असामीप्यं प्रतीक्षन् अपेक्ष्यमाणः सन् । अस्य रामस्य गदायां गदाशिक्षायामित्यर्थः । शिष्यो बभूव । यथा वशीकर्तुमगात् तथा वशीकर्तुमेव शिष्यो बभूवेति भावः । तस्य रामस्य भगिनीं सुभद्रां स रामः प्रदाने दातुमित्यर्थः ।। ३४ ।।

**चट्टी–** केशवस्य असन्निधानं असामीप्यं प्रतीक्षन् अपेक्षमाणः दुर्योधनः गदायाः गदाशिक्षायामित्यर्थः। अस्य बलरामस्य शिष्यो बभूव । तथाशब्दः समुच्चये । तदा तस्य रामस्य भगिनीं सुभद्रां च ययाचे । सः रामश्च प्रदाने दातुमित्यर्थः । प्रतिज्ञां अकरोत् ।।३४।।

**ज्येष्ठं ह्येनं केशवो नातिवर्तेदित्येव मेने धार्तराष्ट्रः स तस्मात् ।**
**जग्राह हस्तं दक्षिणं सत्यहेतोर्ददौ च रामः करमस्मै हलाङ्कम् ।।३५।।**

**व्यासतीर्थीया–** नातिवर्तेत् इत्यात्मनेपदित्वं चान्द्रन्यायेन । तस्माद्बलात् ।। **हलाङ्कमिति** ।। भटाः शपथं कुर्वन्तः स्वायुधं प्रदर्श्य कुर्वन्ति । रामोऽपि तत्कृतवानिति सूचयति ।।३५।।

**वेदाङ्गतीर्थीया–** हस्तम्, बलस्येति शेषः ।।३५।।

**सत्याभिनवतीर्थीया–** तत्रैव 'ज्येष्ठं ह्येनं केशवो नातिवर्तेत्' इति श्लोकः । तस्यार्थः- धार्तराष्ट्रः दुर्योधनः हि यस्मात् केशवः ज्येष्ठं एनं बलरामं नैवातिवर्तेदिति मेने । तस्मात् सत्यहेतोः शपथहेतोः दक्षिणहस्तो देय इत्युक्त्वा दानार्थं दक्षिणहस्तं जग्राह । सः रामः अस्मै दुर्योधनाय हलाङ्कं करं दक्षिणकरं ददाविति । एतेन सत्यहेतोः दक्षिणकरो देय इत्युक्त्वा दानार्थे दक्षिणहस्तं जग्राहेति वक्तव्यं । सत्यहेतोः

दक्षिणहस्तं जग्राहेत्येतावन्मात्रकथनमनुपपन्नमिति दूषणं निरस्तम् । दक्षिणहस्त इत्यादेः शेषमभ्युपगम्य दक्षिणहस्तो देय इत्युक्त्वा दानार्थे दक्षिणहस्तं जग्राहेत्यर्थ उच्यते इति स्वीकरणात् ।।३५-४४।।

**वरदराजीया–** हि यस्मात् ज्येष्ठमग्रजं एनं बलभद्रं केशवः कृष्णो नातिवर्तेत् अतिक्रमकर्ता न भवेत् इत्येवं मेने निश्चयं कृतवान् । तस्मात् कारणात् सः धार्तराष्ट्रः सत्यहेतोः प्रतिज्ञायाः सत्यत्वहेतोः दक्षिणं हस्तं जग्राह । रामोऽपि अस्मै दुर्योधनाय हलाङ्कं करं ददौ । भटाः सायुधेन हस्तेन शपथं कुर्वन्तीत्याह– **हलाङ्कमिति** ।। ३५ ।।

**अनन्तभट्टीया–** भटाः सायुधहस्तेन शपथं कुर्वन्तीति सूचयितुं 'हलाङ्कम्' इत्युक्तम् ।। ३५ ।।

**जनार्दनीया–** हि यस्मात् केशवः एनं ज्येष्ठं अग्रजं रामं नातिवर्तेत् अतिक्रमी न भवतीत्यर्थः । धार्तराष्ट्र इति मेने । तस्मात् कारणात् स दुर्योधनः सत्यहेतोः सत्यप्रतिज्ञार्थं दक्षिणं हस्तं जग्राह । रामः अस्मै दुर्योधनाय हलाङ्कं हस्तं ददौ । क्षत्रियाः आयुधहस्तेन शपथं कुर्वन्तीति सूचयितुं 'हलाङ्कम्' इत्युक्तम् ।। ३५ ।।

**ताम्रपर्णीया–** नातिवर्तेत् नातिवर्तेत । तस्माद् रामात् ।। **हलाङ्कमिति** ।। हलरेखावदित्यर्थः । 'देहस्य लक्षणं नैव भूमावप्यन्यथा भवेत्' (भा.ता.३.१७.२१) इत्युक्तरीत्या स्वरूपलक्षणयुक्तमद्भुतं हस्तमयोग्याय ददावित्यनौचित्यद्योतनायैवमुक्तम् । व्यासतीर्थीये तु- 'भटाः शपथं कुर्वन्तः स्वायुधं प्रदर्श्य कुर्वन्ति । रामोऽपि तत्कृतवानिति सूचयति' इत्युक्तम् ।।३५।।

**चट्टी–** हि यस्मात् केशवः श्रीकृष्णः ज्येष्ठमेनं बलभद्रं नातिवर्तेत् अतिक्रमी न भवेत् । इत्येव मेने निश्चयं कृतवान् । तस्मात् कारणात् सः धार्तराष्ट्रः सत्यहेतोः सत्यप्रतिज्ञायाः सत्यत्वहेतोः दक्षिणं हस्तं जग्राह । सः रामश्चास्मै दुर्योधनाय हलाङ्कं हस्तं ददौ । क्षत्रियाः आयुधहस्तेन शपथं कुर्वन्तीति सूचयितुं 'हलाङ्कम्' इत्युक्तम् ।।३५।।

**रूपेण तस्या मोहितो धार्तराष्ट्रो विशेषतः कृष्णरामौ भगिन्याः ।**
**स्नेहाद् वशं यास्यत इत्यगृह्णाद्धस्तं हलाङ्कं हलिनो रिपुघ्नम् ।।३६।।**

**व्यासतीर्थीया–** तद्भगिनीयाचने कारणमाह– **रूपेणेति** ।। 'रिपुघ्नम्' इत्यनेन यदि अपरथा स्यात् तर्हि इदं हलं रिपुहननं मे अङ्गं न स्यादिति शपथं कुर्वन् तं प्रकारं सूचयति ।। ३६ ।।

**वेदाङ्गतीर्थीया–** भगिन्याः स्नेहात् कृष्णरामौ तु मे वशं यास्यत इति विशेषतः मुख्याभिप्रायेण हलिनो हस्तमगृह्णात् ।।३६।।

**वरदराजीया–** तस्याः सुभद्रायाः रूपेण मोहितः । तथा भगिन्याः जातस्नेहात् कृष्णरामौ विशेषतो वशं यास्यत इति बुद्ध्या रिपुघ्नं हस्तं अगृह्णात् ।।३६।।

**लघ्वनन्तभट्टीया–** विशेषतः स्नेहादिति वा, पाण्डवापेक्षया विशेषतः । पूर्वत्र सम्बन्धः । कुन्त्यपेक्षया भगिन्याः विशेषस्नेहादिति वा ।। ३६ ।।

**जनार्दनीया–** भगिन्याः स्नेहात् कृष्णरामौ मे वशं यास्यत इति विशेषतः मुख्याभिप्रायेण हलिनो हस्तमगृह्णात् ।।३६।।

**ताम्रपर्णीया–** विशेषतोऽधिकं मोहित इत्यन्वयः । कुन्त्यपेक्षया विशेषतो भगिन्याः स्नेहादिति वा । रिपुसंहारकं हस्तं रिपुरगृह्णादित्येतदीश्वरेच्छाप्राप्तमिति सूचयितुं 'रिपुघ्नम्' इत्युक्तम् । टीकायां तु- यदि शपथात्ययस्तर्हीदं हलं रिपुहनने मेऽङ्गं न स्यादिति शपथप्रकारं ध्वनयितुं 'रिपुघ्नम्' इत्युक्तम् ।।३६-३७

**चट्टी–** तस्याः सुभद्रायाः रूपेण धार्तराष्ट्रो मोहितस्सन् श्रीकृष्णरामौ भगिन्याः स्नेहात् विशेषतः मे वशं यास्यत इति बुद्ध्या हलाङ्कं रिपुघ्नं हलिनः बलभद्रस्य हस्तं अगृह्णात् ।। ३६ ।।

**[१]जाता देवक्यां सा सुभद्रेति नाम्ना भद्रा रूपेणानकदुन्दुभेस्ताम् ।**
**कृत्वा पुत्रीं रोहिणी स्वामरक्षत्पूर्वं तु याऽऽसीत् त्रिजटैव नाम्ना ।।३७।।**

**वेदाङ्गतीर्थीया–** पूर्वं या नाम्ना त्रिजटा सैव देवक्यां जाता ।। ३७ ।।

**वरदराजीया–** सा कृष्णरामयोर्भगिनी देवक्यामानकदुन्दुभेः वसुदेवात् रूपेण भद्रा यतः अतः सुभद्रा इति नाम्ना जाता इत्यर्थः । सुभद्रां रोहिणी वसुदेवभार्या स्वां पुत्रीं कृत्वा अरक्षत् पालयामास । सुभद्रा पूर्वं केत्यत आह– **पूर्वमिति** ।। या पूर्वं रामावतारे नाम्ना त्रिजटैव ।।३७।।

**जनार्दनीया–** पूर्वं या नाम्ना त्रिजटा आसीत् सैवानकदुन्दुभेः वसुदेवात् देवक्यां जाता । तां सुभद्रां रोहिणी वसुदेवभार्या स्वां पुत्रीं कृत्वा अरक्षत् ।।३७।।

**भावविवृतिः–** त्रिजटा पूर्वं अप्सरा शापाद्रक्षस्त्वमापन्ना इति ।। ३७-५९ ।।

**चट्टी–** पूर्वं नाम्ना या त्रिजटा आसीत् सैव यतः रूपेण भद्रा मङ्गलरूपा अतः नाम्ना सुभद्रेत्यानकदुन्दुभेः वसुदेवात् देवक्यां जाता तां सुभद्रां रोहिणी स्वां पुत्रीं कृत्वा अरक्षत् ।।३७।।

---

१. सुभद्रायाः कन्यादानसमये वसुदेवेन सह देवकी आगता । तस्यै एव कृष्णो अर्जुनाय दास्यामीति अकथयत् । न तु रोहिण्यागता । किञ्च भागवते स्पष्टं देवकीपुत्रीति वाक्यमप्यस्ति । तेन ज्ञायते देवकी एव तस्याः माता इति । 'सारणस्य सहोदरी' इति भारतवाक्येन साक्षात् रोहिणीजातत्वं न प्रतीयते । रोहिण्या रक्षितत्वात् रोहिण्यात्मजानां सहोदरित्वं सम्भवति । भागवते- (९.२१.५६) 'अष्टमस्तु तयोरासीत् स्वयमेव हरिः किल । सुभद्रा च महाभागा तव राजन् पितामही ।।' आदिपर्वणि- 'ममैषा भगिनी पार्थ सारणस्य सहोदरी । सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।।' (२३९..१८) तस्या चित्रा इति नामान्तरम् । 'चित्राखुपर्णी गोडुम्बा सुभद्रा दन्तिकासु च । मायायां' इति भानुदीक्षितः । रामायणे युद्धकाण्डे-४१.पृ-१६१. । 'चित्रा नाम कुमारी च रोहिणीतनया दश । चित्रा सुभद्रेति पुनः विख्याता कुरुनन्दन ।।' इति हरिवंशपर्वणि-३५.६.

**सीतायाः प्राङ् नित्यशुश्रूषणात् सा बभूव विष्णोर्भगिनी प्रिया च ।**
**उमावेशाद् रूपगुणोपपन्ना पद्मेक्षणा चम्पकदामगौरी ॥३८॥**

**वेदाङ्गतीर्थीया–** चम्पकदामगौरी चम्पकमालावत् पीतवर्णा ॥३८॥

**वरदराजीया–** या प्राग्जन्मनि सीतायाः प्रतिकृतेः नित्यं शुश्रूषणात् अतिसेवनान्निमित्तात् विष्णोः कृष्णस्य भगिनी प्रिया बभूवेत्यर्थः । उमावेशात् उमायाः पार्वत्याः आवेशात् निमित्तात् रूपगुणैश्चोपपन्ना । पद्मवदीक्षणे यस्या सा तथा । चम्पकदामवद्गौरी गौरवर्णा च बभूवेत्यर्थः ॥३८॥

**जनार्दनीया–** प्राक् पूर्वम् । चम्पकदामगौरी चम्पकमालावत्पीतवर्णा ॥३८॥

**ताम्रपर्णीया–** ॥ **नित्यशुश्रूषणादिति** ॥ लङ्कातः सीतया सहायोध्यां प्रति त्रिजटायाः गतत्वादिति भावः ॥३८-४१॥

**चट्टी–** सा सुभद्रा प्राक् रामावतारे सीतायाः नित्यशुश्रूषणात् विष्णोः श्रीकृष्णस्य भगिनी प्रिया च बभूव । उमायाः पार्वत्याः आवेशान्निमित्ताद् रूपेण गुणैश्चोपपन्ना । पद्मवदीक्षणे यस्याः सा तथा । चम्पकदामवद् गौरी पीतवर्णा ॥३८॥

**एतत् कृत्वा धृतराष्ट्रात्मजः स ययौ कुरून् निवसत्यत्र रामे ।**
**कृष्णोऽक्रूरं विवसन्तं भयेन सहार्दिक्यं चाऽनयित्वा जगाद ॥३९॥**

**वेदाङ्गतीर्थीया–** अत्र विदेहपुर्याम् । विवसन्तं द्वारवत्या अन्यत्र वसन्तं अक्रूरमानयित्वा मणिस्त्वय्यास्ते इति जगाद ॥ ३९-४६ ॥

**वरदराजीया–** एतत्कार्यं कृत्वा सम्पाद्य, अत्र पाञ्चालेषु रामे निवसत्येव स्वयं ययौ । भयेन विवसन्तं देशान्तरस्थं हार्दिक्येन कृतवर्मणा सह वर्तमानं अक्रूरं आनयित्वा रामं बलभद्रं च आनीय समस्तसात्वतां सर्वेषां यादवानां सन्निधाने मणिः स्यमन्तकं त्वयि अक्रूरे आस्ते तिष्ठति । तं दर्शयेति जगादेति सम्बन्धः । अस्मै कृष्णाय रत्नं मणिमदर्शयत् ॥३९-४०॥

**जनार्दनीया–** धृतराष्ट्रात्मजः एतद्भगिनीप्रदाने शपथं कृत्वा सम्पाद्य, अत्र विदेहपुर्यां रामे निवसति सति स्वयं कुरून् ययौ । कृष्णः द्वारवत्याः अन्यत्र भयेन विवसन्तं स्थितं सहार्दिक्यं कृतवर्मणा सहितं अक्रूरं आनयित्वा रामं च आनीय, विदेहपुर्या इति शेषः । समस्तसात्वतां सन्निधाने जगाद ॥३९॥

**चट्टी–** सः धृतराष्ट्रात्मजः एतत्कार्यं कृत्वा सम्पाद्य, अत्र विदेहेषु रामे निवसति सति कुरून् ययौ । श्रीकृष्णः भयेन विवसन्तं देशान्तरस्थं हार्दिक्येन कृतवर्मणा सह वर्तमानं सहार्दिक्यं अक्रूरं चानयित्वा रामं चानीय समस्तसात्वतसन्निधाने जगाद ॥ ३९ ॥

**आनीय रामं च समस्तसात्वतां यदाऽवादीत् केशवः सन्निधाने ।**
**मणिस्त्वय्यास्ते दर्शयेत्येव भीतस्तदाऽक्रूरोऽदर्शयद् रत्नमस्मै ॥४०॥**

**अनन्तभट्टीया–** सात्वतां सन्निधाने ॥ ४० ॥

**जनार्दनीया–** यदा केशवः, हे अक्रूर! मणिस्त्वयि आस्ते तिष्ठति दर्शयेत्यवादीत् । तदा भीतोऽक्रूरः अस्मै कृष्णाय रत्नमदर्शयत् इत्यन्वयः ॥४०॥

**चट्टी–** हे अक्रूर! त्वयि मणिरास्ते दर्शयेत्येवं यदा केशवः श्रीकृष्णः अवादीत् । तदा अक्रूरः भीतः सन् अस्मै श्रीकृष्णाय रत्नं स्यमन्तकमणिमदर्शयत् ॥ ४०॥

**अव्याजतामात्मनो दर्शयित्वा हलायुधे केशवस्तस्य जानन् ।**
**रत्नाकाङ्क्षामुग्रसेनस्य चैव मातुश्च साम्बस्य पुनर्बभाषे ॥४१॥**

**व्यासतीर्थीया–** अव्याजतामच्छद्मताम् ॥ ४१ ॥

**वरदराजीया–** केशवः आत्मनः स्वस्य अव्याजतां निष्कपटत्वं हलायुधे रामे प्रदर्शयित्वा तस्य हलायुधस्य रत्नाकाङ्क्षां तथा उग्रसेनस्य राज्ञः साम्वस्य मातुः जाम्ववत्याश्च रत्नाकाङ्क्षां जानन् पुनर्वभाषे ॥४१॥

**अनन्तभट्टीया–** अव्याजतां [१]निष्कपटत्वम् । साम्वस्य मातुः जाम्ववत्याः ॥ ४१ ॥

**जनार्दनीया–** अव्याजतां निष्कपटत्वम् । तस्य रामस्य । साम्वस्य मातुः जाम्ववत्याः ॥४१॥

**चट्टी–** केशवः श्रीकृष्णः आत्मनः स्वस्य अव्याजतां निष्कपटत्वं हलायुधे वलरामं प्रतीत्यर्थः । दर्शयित्वा तस्य हलायुधस्य रत्नाकाङ्क्षां तथा उग्रसेनस्य राज्ञश्च साम्वस्य मातुः जाम्ववत्याश्च रत्नाकाङ्क्षां जानन् पुनर्वभाषे ॥४१॥

**आस्तामक्रूरे मणिरन्यैरधार्यः सदा यज्ञाद् दानपतेः स धार्यः ।**
**न सत्या कृष्णावाञ्छितं किञ्चिदिच्छेत् तथाऽपि तस्या योग्य इत्याह कृष्णः॥**

**व्यासतीर्थीया–** सत्या कृष्णावाञ्छितां नैव किञ्चिदिच्छेत् । अथापि इच्छावतीं आत्मानमदर्शयत् । कृष्णश्च तस्य योग्यो मणिरित्याहेति योज्यम् ॥ ४२ ॥

**मधुसूदनीया–** अन्यैः वलभद्रसत्यभामादिभिः अधार्यः धारयितुमयोग्य इत्यर्थः । तथाच अस्य मणेः शुचिना ब्रह्मचर्यादिगुणवता धारयितुं योग्यत्वेन वलभद्रादीनां मदिरापानाद्यशेषभोगयुक्तत्वेन

---

१. 'निष्कण्टकत्वम्' इति क्वचित् ।

शुचित्वाद्यभावात् इत्यभिप्रायेण मम च पत्नीधनस्य निन्दितत्वात् इत्यभिप्रायेणाऽयं मणिरक्रूरे तिष्ठत्वित्युक्तमिति भावः । तथाचोक्तम्- 'एतद्धि मणिरत्नं आत्मसंशोधनायैतेषां यदूनां मया दर्शितम् । एतच्च मम बलभद्रस्य च सामान्यं पितृधनं चैतत्सत्यभामायाः नान्यस्यैतत् । एतच्च सर्वकालं शुचिना ब्रह्मचर्यादिगुणवता ध्रियमाणं अशेषराष्ट्रस्योपकारकं भवति । अशुचिना च ध्रियमाणमाधारमेव हन्ति । अतोऽहमस्य षोडशस्त्रीसहस्रपरिग्रहादसमर्थो धारणे कथमेतत् सत्यभामा स्वीकरोति । आर्य बलभद्रेणापि मदिरापानाद्यशेषभोगपरित्यागः कार्यः । तदलं यदुलोकोऽयं बलभद्रः अहश्च सत्या च त्वां दानपतेः प्रार्थयामः । तद्भवानेव धारयितुं समर्थः' इति विष्णुपुराणे (४.१३.१५४-१५९)।। ४२-६४ ।।

**वरदराजीया–** मणिः अक्रूरे आस्तां तिष्ठतु । यतो अन्यैरधार्यः । स मणिर्दानपतेः अक्रूरस्य धार्यः । कुतः? सदा यज्ञात् निमित्तात् । सर्वदा यज्ञकर्तृत्वादित्यर्थः । मणिः सत्यभामायोग्य इति कृष्णवचनात् तया आकाङ्क्षितो मणिरिति भ्रान्तिं निवारयति– **कृष्णेति** ।। कृष्णेन अवाञ्छितं अनाकाङ्क्षितं किञ्चिदपि वस्तु सत्या सत्याभामा नेच्छेत् नाकाङ्क्षति । तथापि तस्याः सत्याः योग्य इति कृष्ण आह । 'पितुर्धनं पुत्रस्येव पुत्र्या अपि योग्यः' इत्यनेन अभिप्रायेण कृष्णः 'तस्या योग्य' इत्युक्तमिति भावः ।।४२।।

**अनन्तभट्टीया–** दानपतेः अक्रूरेण धार्यः । तत्र हेतुः– **सदा यज्ञादिति** ।। यजनात् कारणात् ।।४२-३।।

**लघ्वनन्तभट्टीया–** 'तस्या योग्य' इति कृष्णवचनात् तस्या रत्नाकाङ्क्षाऽस्तीति भ्रान्तिं वारयति– **न सत्येति** ।। ४२-४३ ।।

**जनार्दनीया–** अन्यैरधार्यो मणिरक्रूरे आस्तां तिष्ठतु । स मणिः दानपतेः धार्यः धर्तुं योग्यः । कुतः? सदा यज्ञात् नित्ययज्ञकर्तृत्वादित्यर्थः । सत्या सत्यभामा कृष्णावाञ्छितं कृष्णेन अनाकाङ्क्षितं किञ्चिदपि नेच्छेत् । तथापि तस्याः योग्य इत्याह ।।४२।।

**ताम्रपर्णीया–** ।। **न सत्येति** ।। यद्यपि सत्या कृष्णेनानिच्छितं किञ्चिदपि नेच्छेत्, तथापि पितुर्धनं पुत्राभावे दौहित्राधिकारिकत्वात् पुत्र्याः योग्य इति धर्मावलम्बनेन मणिस्सत्यभामाया योग्य इत्याह कृष्ण इत्यर्थः ।। ४२-४३ ।।

**चट्टी–** अन्यैरधार्यः मणिरक्रूरे आस्तां तिष्ठतु । कुतः? सदा यज्ञात् सदा यज्ञकर्तृत्वात् इत्यर्थः । सः मणिः दानपतेरक्रूरस्य धार्यः मणिः । सत्यभामायोग्या इति श्रीकृष्णवचनात् तया काङ्क्षिता मणिरिति भ्रान्तिं निवारयति– **नेति** ।। श्रीकृष्णेनावाञ्छितं किञ्चिदपि वस्तु सत्या सत्यभामा नेच्छेत् नाकाङ्क्षति । तथापि तस्याः सत्यायाः योग्य इति श्रीकृष्ण आह । पितुर्धनं पुत्रस्येव पुत्र्या अपि योग्यमित्यभिप्रायेण श्रीकृष्णेन तस्याः योग्यमित्युक्तमिति भावः ।। ४२ ।।

**लब्ध्वा रत्नं दानपतिः सदैव सन्दीक्षितोऽभूद् यज्ञकर्मण्यतन्द्रः ।**
**प्रदर्श्य कृष्णो हलिने रत्नमेतच्छक्रप्रस्थं [1]पाण्डवस्नेहतोऽगात् ।।४३।।**

**वरदराजीया–** अतन्द्रः अनालस्यः यज्ञकर्मणि सन्दीक्षितः सम्यक् दीक्षितोऽभूत् । पाण्डवस्नेहतो न तु बभलभद्रस्योपरि कोपादित्यर्थः ।।४३।।

**जनार्दनीया–** अतन्द्रः आलस्यरहितः ।। ४३ ।।

**चट्टी–** दानपतिरक्रूरः रत्नं लब्ध्वा अतन्द्रः अनालस्यस्सन् सदैव यज्ञकर्मणि सन्दीक्षितः सम्यग् दीक्षितोऽभूत् । श्रीकृष्णः हलिने बलभद्राय एतद्रत्नं प्रदर्श्य पाण्डवस्नेहतः न तु बलभद्रस्योपरि क्रोधादिति भावः । शक्रप्रस्थमगात् ।।४३।।

**वसन्नजस्तत्र बहूंश्च मासान् सफल्गुनोऽयान्मृगयां कदाचित् ।**
**हत्वा मृगान् यमुनातीरसंस्थः सोऽन्यां कालिन्दीं ददृशे तत्स्वसारम् ।।४४।।**

**व्यासतीर्थीया–** कलिन्दस्य सूर्यस्य पुत्री कालिन्दीमित्येतावत्युक्ते नदीमिति प्राप्नोति अत उक्तम्– **अन्यामिति** ।।४४।।

**वरदराजीया–** अत्र इन्द्रप्रस्थे । सफल्गुनो अर्जुनेन सहितः । तस्याः यमुनायाः स्वसारं अत एव अन्यां यमुनाभिधां कालिन्दीं ददृशे ।।४४।।

**अनन्तभट्टीया–** नदीरूपकालिन्दीव्यावृत्तये 'अन्याम्' इत्युक्तम् । तत्स्वसारं यमुनास्वसारम् ।।४४-५

**लघ्वनन्तभट्टीया–** अन्या मूलकालिन्यपेक्षया अन्या । 'यमुनापेक्षया अन्याम्' इति केचित् ।।४४।।

**जनार्दनीया–** नदीरूपकालिन्दीव्यावृत्तये 'अन्याम्' इति प्रयोगः । तत्स्वसारं यमुनाभगिनीम्।।४४।।

**ताम्रपर्णीया–** ।। **स इति** ।। यमुनापेक्षयान्यां कालिन्दीं ददृशे । ननु यमुनैव कालिन्दी कथमन्या कालिन्दीत्यतस्तस्या अपि तत्स्वसृतया कलिन्दपुत्रीत्वादित्याह– **तत्स्वसारमिति** ।।४४।।

**भारतश्री–** कालिन्द्याः अन्यां यमुनानुजातां यमुनानुजाम् ।।४४।।

**चट्टी–** अजः श्रीकृष्णः तत्र इन्द्रप्रस्थे बहून् मासांश्च वसन् सफल्गुनः अर्जुनेन सहितस्सन् कदाचिद् मृगयामयात् । सः श्रीकृष्णः यमुनायास्तीरे संस्थः स्थितस्सन् मृगान् हत्वा तत्स्वसारं यमुनायाः स्वसारं अत एवान्यां यमुनाभिन्नां कालिन्दीं ददृशे ।।४४।।

---

१. 'एकदा पाण्डवान् द्रष्टुं प्रतीतान् पुरुषोत्तमः । इन्द्रप्रस्थं गतः श्रीमान् युयुधानादिभिर्वृतः ।।' भागवते-१०.६२.१.

**[1]सा सूर्यपूत्री यमुनानुजाता तपश्चरन्ती कृष्णपत्नीत्वकामा ।**
**पृष्टाऽर्जुनेनाऽह समस्तमेतत् पत्नीं च तां जगृहे वासुदेवः ॥४५॥**

**व्यासतीर्थीया–** एतद्विवृण्वन्नाह– **सेति** ॥ ४५-४६ ॥

**वरदराजीया–** तदेव विवृणोति– **सेति** ॥ यमुनानुजाता सा कृष्णपत्नीत्वकामा कृष्णस्य पत्नी स्यामिति कामयमाना तपश्चरन्ती, तिष्ठन्तीति शेषः । अर्जुनेन कासि? किमर्थमत्र तपश्चरसि? इति पृष्टा एतत्समस्तमाह । वासुदेवः कृष्णः तां पत्नीं जगृहे भार्यात्वेन स्वीचकार ॥४५॥

**लघ्वनन्तभट्टीया–** कृष्णपत्नीत्वकामा इत्येकं पदम् ॥ ४५-८१ ॥

**जनार्दनीया–** तदेव विवृणोति– **सेति** ॥ कृष्णपत्नीत्वकामा कृष्णस्य पत्नीत्वे कामो यस्याः सा तथा । एतत्समस्तं स्वतपःकारणम् ॥४५॥

**ताम्रपर्णीया–** तद्विवृणोति– **सेति** ॥ ४५-५१ ॥

**चट्टी–** तदेव विवृणोति– **सेति** ॥ यमुनामनु जाता सूर्यपुत्री सा कालिन्दी श्रीकृष्णपत्नीत्वकामा श्रीकृष्णस्य पत्नी स्यामिति कामयमाना तपश्चरन्ती, तिष्ठन्तीति शेषः । सा कालिन्दी अर्जुनेन त्वं कासि? किमर्थमत्र तपश्चरसि? इति पृष्टा सती एतत्समस्तमाह । सः वासुदेवः श्रीकृष्णः तां पत्नीं जगृहे भार्यात्वेन स्वीचकार ॥ ४५ ॥

**[2]ततो गत्वा नग्नजितो गृहं च स्वयंवरे सप्त वृषानगृह्णात्[3] ।**
**सर्वैरग्राह्यानसुरान् वरेण शिवस्य यैर्निर्जिता भूमिपालाः ॥४६॥**

**वरदराजीया–** नग्नजिद्राज्ञः सप्तवृषान् ककुद्मिनो अगृह्णात् दमयामास । शिवस्य वरेण सर्वैरग्राह्यान् अवध्यान् पूर्वमसुरान् । यैः वृषैः भूमिपाला विजिताः भङ्गं प्रापिताः ॥४६॥

---

१. 'अहं देवस्य सवितुः दुहिता पतिमिच्छती । विष्णुं वरेण्यं वरदं तपः परममास्थिता । नान्यं पतिं वृणे वीर तमृते श्रीनिकेतनम् । तुष्यतां मे स भगवान् मुकुन्दोऽनाथवत्सलः । कालिन्दीति समाख्याता वसामि यमुना जले । निर्मिते भवने पित्रा यावदच्युतदर्शनम् । तथावदद् गुडाकेशो वासुदेवाय सोऽपि ताम् । रथमारोप्य तद्विद्वान् धर्मराजमुपागमत् । वसंस्तत्र हृषीकेशः शक्रप्रस्थे यथा सुखम् । विश्वकर्माणमाहूय शिल्पविद्याविशारदम् । अद्भुतं कारयामास नगरं धर्मसूनवे । सप्रासादपुरद्वारगोपुराट्टालतोरणम् । पुरन्दरपुरप्रख्यं स्वानां प्रियचिकीर्षया। अथ पार्थैरनुज्ञातः सुहृद्भिः स्वजनान्वितः । आययौ द्वारकां भूयः सात्यकिप्रमुखैर्वृतः । अथोपयेमे कालिन्दीं पुण्ये नक्षत्र ऊर्जिते ॥' भागवते-१०.६२.२७-३२.

२. भागवते- १०.६२.३६-५८.

३. 'अगृह्णन्' इति चट्टीपाठः ।

**अनन्तभट्टीया–** अगृह्णात् अवघ्नात् ।। ४६ ।।

**जनार्दनीया–** नग्नजितो राज्ञः । वरेण अग्राह्यान् गृहीतुमशक्यान् असुरान् सप्तवृषान् वृषभान् अगृह्णात् अवघ्नात् । यैर्वृषभैः ।।४६।।

**भारतश्री–** पूर्वं कृष्णेन निहताः वृषभाः दितिजा वृषरूपधराः वृन्दावने कृष्णं पीडितुं यशोदाभ्रातुः कुम्भकनाम्नो गृहे स्थिताः । एतान् निगृह्य समुद्धतान् गृहाणेति तेन लीलयोक्तः तान् निजघान । नीलामवाप च । नग्निजितो गृहे स्थितास्तु असुराः महादेवेन नग्नजिते दत्ताः एतान् निजघान । तूष्णीमगृह्णात् । अयं विशेषः हरिवंशादवगन्तव्यः ।। ४६ ।।

**चट्टी–** ततः सः श्रीकृष्णः नग्नजितो राज्ञः गृहं च गत्वा स्वयंवरे शिवस्य वरेण सर्वैरग्राह्यानदम्यान् असुरान् पूर्वमसुरान् सप्तसङ्ख्याकान् वृषान् ककुद्मिनः अगृह्णत् दमयामास । यैः वृषैर्भूमिपालाः निर्जिताः भङ्गं प्रापिताः ।। ४६ ।।

**ततो नीलां तस्य सुतां च लेभे पूर्वं नीला गोपकन्याऽपि याऽसीत् ।**
**सा देहेऽस्याः प्राविशत् पूर्वमेषा यस्मादेका द्विविधा सम्प्रजाता ।।४७।।**

**व्यासतीर्थीया–** पूर्वमेव कालीनाम कृष्णभार्या स्यात् । सा किं जाता इत्यत उक्तम्– **पूर्वं नीलेति** ।। ४७-४९ ।।

**वेदाङ्गतीर्थीया–** पूर्वं गोपकन्या या नीला कुम्भकसुता सा तद्देहं परित्यज्य अस्याः नग्नजितः सुताया देहे प्राविशत् । एषा नीला पूर्वमेका द्विविधा द्विरूपा सम्प्रजाता यस्मात् ।।४७-४८।।

**वरदराजीया–** तस्य नग्नजितः सुतां नीलां लेभे । यः सप्तवृषभान् दमयिष्यति सः मदीयां कन्यां गृह्णातु इति नग्नजित्प्रतिज्ञानुसारादिति भावः । ननु यशोदाभ्रातुः कुम्भकस्य कन्यां नीलां लब्धवानित्युक्तम् । इदानीं नग्नजिद्राज्ञः कन्यां नीलां लेभ इत्युच्यते । तथा जाम्बवत्यादि षडित्यादि विरोध इत्यत आह– **पूर्वमिति** ।। या गोपकस्य कुम्भकस्य कन्या नीला आसीत् सा अस्याः नग्नजितः कन्यायाः नीलायाः देहे प्राविशत् । एषा नीला एकैव यस्मात् पूर्वमेव द्विविधा द्विरूपा सम्प्रजाता । देहभेदेऽपि जीवभेदाभावात् जाम्बवत्यादीनां षट्त्वमुपपन्नमेवेति भावः ।।४७।।

**अनन्तभट्टीया–** अस्याः सूर्यस्य पुत्र्याः देहे ।। ४७ ।।

**जनार्दनीया–** तस्य नग्नजितः सुतां नीलां लेभे । पूर्वं गोपकन्या यशोदाभ्रातृकुम्भकनामगोपालस्य कन्या या नीला कृष्णभार्या सा गोपकन्या नीला अस्याः नग्नजित्सुतायाः देहे प्राविशत् । एषा नीला एका यस्मात् द्विविधा द्विप्रकारेण रूपद्वयेनेत्यर्थः । सम्प्रजाता तस्मादिति सम्बन्धः ।।४७।।

**भारतश्री–** ।। **सा देहे अस्याः प्राविशदिति** ।। पूर्वदेहमपरित्यज्यैव प्राविशदिति सम्प्रदायविदः ।। ४७-४९ ।।

**चट्टी–** ततोऽनन्तरं तस्य नग्नजितः सुतां नीलां च लेभे । यः सप्तवृषान् दमयिष्यति सः मदीयां कन्यां गृह्णात्विति नग्नजितः प्रतिज्ञानुसारादिति भावः । ननु यशोदाभ्रातुः कुम्भकस्य कन्यां नीलां लब्धवानिति पूर्वमुक्तम्, इदानीं नग्नजिद्राजकन्यां लेभे इत्युच्यते । तथा च जाम्बवत्याद्या षडिति नियमभङ्ग इत्यत आह– **पूर्वमिति** ।। पूर्वं गोपकन्या अपि या नीला आसीत् सा अस्याः नग्नजित्कन्यादेहे प्राविशत् । एषा नीला यस्मात् पूर्वमेकैव द्विधा द्विरूपा सम्प्रजाता । देहभेदेऽपि जीवभेदाभावात् जाम्बवत्यादीनां षट्त्वमुपपन्नमिति भावः ।। ४७ ।।

**[1]पितृष्वसुर्मित्रविन्दा सुता च कृष्णे मालामासजद् राजमध्ये ।**
**विन्दानुविन्दौ भ्रातरावेव तस्या न्यषेधतां धार्तराष्ट्रार्थमुग्रौ ।।४८।।**

**वरदराजीया–** पितृष्वसुः वसुदेवभगिन्याः सुता मित्रविन्दा नामतः राज्ञां मध्ये कृष्णे मालां आसजत् समर्पितवती । तस्याः मित्रविन्दायाः भ्रातरौ धार्तराष्ट्रार्थं दुर्योधनाय दातुं न्यषेधताम्, कृष्णविवाहमिति शेषः । तत्र हेतुः– **उग्राविति** ।।४८।।

**अनन्तभट्टीया–** पितृष्वसुः सुता तस्याः विवाहं धार्तराष्ट्रार्थं न्यषेधताम् ।।४८-४९.।।

**जनार्दनीया–** पितृष्वसुः राजाधिदेव्याः । आसजत् समर्पयामास । तस्याः मित्रविन्दायाः भ्रातरौ धार्तराष्ट्रार्थं दुर्योधनाय, दातुमिति शेषः । न्यषेधतां निषेधं चक्रतुः । अत एव उग्रौ ।।४८।।

**चट्टी–** पितृष्वसुः वसुदेवभगिन्याः सुतां मित्रविन्दां च राज्ञां मध्ये श्रीकृष्णे मालामासजत् समर्पितवती । तस्याः मित्रविन्दायाः भ्रातरौ विन्दानुविन्दौ एव धार्तराष्ट्रार्थं दुर्योधनाय दातुं न्यषेधताम्, श्रीकृष्णविवाहमिति शेषः । तत्र हेतुः– **उग्राविति** ।।४८।।

**[2]जित्वाऽऽवन्त्यौ तौ नृपतींश्चैव सर्वानादाय तां प्रययौ वासुदेवः ।**
**पितृष्वसुस्तनयां च द्वितीयां भद्रां दत्तामग्रहीद् भ्रातृभिः सः ।।४९।।**

**वेदाङ्गतीर्थीया–** द्वितीयां पितृष्वसुस्तनयाम् ।। ४९ ।।

**वरदराजीया–** अवन्त्यौ अवन्तिदेशाधिपती तौ भ्रातरौ सर्वान् नृपतीन् च जित्वा तां मित्रविन्दाम् । द्वितीयां पितृष्वसुः भेदात् । भद्रामपि श्रुतकीर्तेः सुतां भद्रामपि मित्रविन्दापेक्षया द्वितीयां भ्रातृभिः सन्तर्दनादिभिः दत्ताम् । सः कृष्णः ।।४९।।

---

१. 'विन्द्यानुविन्द्यावावन्त्यौ दुर्योधनवशानुगौ । स्वयंवरे स्वभगिनीं कृष्णकामां न्यषेधताम् । राजाधिदेव्यास्तनयां मित्रविन्दां पितृष्वसुः । प्रसह्य हृतवान् कृष्णो राजन् राज्ञां प्रपश्यताम् ।।' भागवते-१०.६२.३४-३५.

२. 'श्रुतकीर्तेः सुतां भद्रां उपयेमे पितृष्वसुः । कैकेयीं भ्रातृभिर्दत्तां कृष्णः सन्तर्दनादिभिः ।।' भागवते-१०.६२.५९.

**जनार्दनीया–** आवन्त्यौ अवन्तिदेशोद्भवौ विन्दानुविन्दौ । नृपतींश्च तत्रागतान् नृपतीन् । तां मित्रविन्दाम् । द्वितीयां पितृष्वसुः श्रुतकीर्तेस्तनयां भ्रातृभिर्दत्तां भद्रां भद्रानाम्नीं अग्रहीत् ।। ४९ ।।

**चट्टी–** वासुदेवः श्रीकृष्णः आवन्त्यावन्तिदेशाधिपती भ्रातरौ सर्वान् नृपतींश्च जित्वा तां मित्रविन्दामादाय प्रययौ । पितृष्वसुः पूर्वापेक्षया अन्यस्या तनयां च द्वितीयां मित्रविन्दापेक्षया भ्रातृभिः सन्तर्दनादिभिः दत्तां भद्रां सः श्रीकृष्णः अग्रहीत् ।। ४९ ।।

**विश्वेषां देवानामवतारा हि पञ्च कैकेया[1] भ्रातरोऽस्या हरेश्च ।**
**भक्ता नित्यं पाण्डवानां च तातोऽप्येषां वशे शैव्यनामर्भुरग्रे ।।५०।।**

**व्यासतीर्थीया–** अत्र शैव्यनामा ।। ५० ।।

**वेदाङ्गतीर्थीया–** हरेश्च भक्ताः पाण्डवानाञ्च भक्ताः । अग्रे पूर्वं ऋभुः कश्चिद् देवः अत्र शैव्यनामा । तातोऽपि केकयानां तातोऽपि एषां केकयानां वशे, तिष्ठतीति शेषः । अत एव सत्यपि ताते 'भ्रातृभिर्दत्ताम्' इत्युक्तम् ।। ५० ।।

**वरदराजीया–** अस्याः भद्रायाः भ्रातरः सन्तर्दनादयः पञ्च विश्वेषां देवानां अवताराः । कैकेयाः कैकेयदेशाधिपतयः । हरेः नित्यं भक्ताः । एषां सन्तर्दनादीनां तातः पिता शैव्यनामा पाण्डवानां वशे तिष्ठति यतोऽग्रे पूर्वे ऋभुर्नामदेव इत्यर्थः ।।५०।।

**अनन्तभट्टीया–** शैव्यनामा अग्रे ऋभुः अभूत् ।। ५०-५१ ।।

**जनार्दनीया–** अस्याः भद्रायाः भ्रातरः पञ्च कैकयाः कैकयदेशोत्पन्नाः । एते पूर्वं विश्वेषां देवानामवताराः हि यस्मात् तस्माद्धरेश्च भक्ताः । पाण्डवानां च भक्ताः । एषां तातोऽपि कैकयानां पितापि अग्रे पूर्वं ऋभुः ऋभ्वाख्यः कश्चन देवः । अत्र शैव्यनामा एषां कैकयानां वशे, तिष्ठतीति शेषः । अत एव सत्यपि ताते 'भ्रातृभिर्दत्ताम्' इत्युक्तम् ।।५०।।

**भारतश्री–** ऋभुगणेषु एकः शैव्यनामा बभूव । 'ऋभवो नाम तपसा सोमं प्राप्ताः सहस्रशः' इति भागवतोक्तेः (४.५.१२)।। ५०-५५ ।।

**चट्टी–** अस्याः भद्रायाः भ्रातरः सन्तर्दनादयः पञ्च विश्वेषां देवानां अवताराः कैकेयाः कैकेयदेशाधिपतयः नित्यं हरेः भक्ताः । एषां सन्तर्दनादीनां तातः शैव्यनामा च पाण्डवानां वशे, तिष्ठतीति शेषः । यतो अग्रे पूर्वं ऋभुर्नामा देव इत्यर्थः ।।५०।।

---

१. 'कैकया' इति वेदाङ्गतीर्थीय-जनार्दनीयपाठः ।

**[1]स्वयंवरो [2]लक्षणायास्तथाऽऽसीद् यथा द्रौपद्या [3]लक्ष्यवेधात्मकः सः ।**
**मद्रेषु तस्याश्च पिता पिनाकं स्वयंवरार्थं जगृहे गिरीशात् ॥५१॥**

**वेदाङ्गतीर्थीया–** मद्रेषु लक्षणायाः स्वयंवरः आसीत् । सः स्वयंवरः द्रौपद्याः स्वयंवरो यथा तथा लक्षवेधात्मकः ॥५१॥

**वरदराजीया–** लक्षणायाः स्वयंवरः आसीत् । यथा द्रौपद्या स्वयंवरः लक्ष्यवेधात्मकः तथा स इत्यर्थः । तस्याः लक्षणायाः पिता बृहत्सेनः मद्रेषु देशेषु,[4] राजेति शेषः । पिनाकं त्र्यम्बकं धनुः ॥५१॥

**जनार्दनीया–** मद्रेषु मद्रदेशेषु लक्षणायाः स्वयंवरः आसीत् । स लक्षणायाः स्वयंवरः द्रौपद्याः स्वयंवरो यथा तथा लक्ष्यवेधात्मकः । तस्याः लक्षणायाः पिता बृहत्सेनः । पिनाकं धनुः ॥ ५१ ॥

**चट्टी–** लक्षणायाः स्वयंवरः आसीत् । द्रौपद्याः स्वयंवरः यथा लक्ष्यवेधात्मकः सः लक्षणायाः स्वयंवरश्च तथेत्यर्थः । तस्याः लक्षणायाः पिता मद्रेषु देशेषु, राजेति शेषः । सः स्वयंवरार्थं पिनाकं त्र्यम्बकं धनुः गिरिशाज्जगृहे ॥ ५१ ॥

**लक्ष्यं च तत् सर्वतश्छन्नमेव द्वारं च तस्याप्युपरि स्म लक्षात् ।**
**छिन्नेषुणा पातनीयं च तद्धि द्रौपद्यर्थात् तदशक्यं ततोऽलम् ॥५२॥**

**व्यासतीर्थीया–** द्रौपदी अर्थः यस्य द्रौपद्यर्थः तस्मात् । ततः छिन्नेषुणा पातनीयत्वादिकारणेन ॥ ५२-५९ ॥

**वेदाङ्गतीर्थीया–** तत् तस्मात् लक्षस्य सर्वतश्छन्नत्वादेव कारणात् द्रौपद्यर्थात् ततः लक्षपातनसकाशात् अलं अशक्यं दुष्करं हि ॥ ५२ ॥

**वादिराजतीर्थीया–** 'द्रौपद्यर्थात् तदशक्यम्' इत्यत्र द्रौपद्यर्थात् ततः लक्षात् तत् लक्षणास्वयंवरे कृतं लक्षं अलमशक्यमिति योजना ॥ ५२-५४ ॥

**वरदराजीया–** द्रौपदीस्वयंवरापेक्षयात्र विशेषमाह– **लक्ष्यञ्चेति** ॥ तल्लक्ष्यं सर्वतः छन्नं पिहितम् । तस्य लक्ष्यस्य द्वारं लक्ष्यादुपरि देशे तिष्ठतीत्यर्थः । तल्लक्ष्यं छिन्नेषुणा बाणखण्डेन पातनीयम् । ततः कारणात् द्रौपद्यर्थात् द्रौपदीस्वयंवरार्थं रचितात् लक्ष्यात् तल्लक्ष्यमलमत्यन्तं अशक्यम् ॥५२॥

---

१. 'सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् । स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥' भागवते-१०.६२.६०.

२. भागवते-१०.७१.१७-३९.

३. 'लक्षवेधात्मकः' इति वेदाङ्गतीर्थीयपाठः ।

४. 'उपदेशेषु' इति क्वचित् ।

**अनन्तभट्टीया—** लक्षवीक्षाम् प्रति ।।५२-५९।।

**जनार्दनीया—** तल्लक्ष्यं सर्वतः छन्नं पिहितम् । तस्य लक्षस्य द्वारमपि लक्ष्यादुपरि स्म । लक्ष्यस्योर्ध्वभागे वर्तत इति शेषः । तल्लक्ष्यं छिन्नेषुणा छिन्नवाणेन पातनीयम् । द्रौपद्यर्थात् द्रौपदीस्वयंवरार्थं कृताल्लक्ष्यात् तत् लक्षणायाः स्वयंवरे रचितलक्ष्यम्, ततः लक्ष्यस्य सर्वतः छन्नत्वादेः कारणात् अलं अत्यन्तं अशक्यं हि दुष्करम् ।।५२।।

**ताम्रपर्णीया—** द्रौपद्यर्थात् तल्लक्षवेधात् । हि यस्माच्छिन्नेषुणा पातनीयं ततः कारणादिति वा ।।५२-५६।।

**चट्टी—** द्रौपदीस्वयंवरापेक्षया अत्र विशेषमाह— **लक्ष्यं चेति** ।। तल्लक्ष्यं च सर्वतः छन्नं पिहितमेव तस्य लक्ष्यस्य द्वारं च लक्ष्यादुपरि देशे तिष्ठतीत्यर्थः । तल्लक्ष्यं छिन्नेषुणा वाणखण्डेन पातनीयं ततः कारणात् द्रौपद्यर्थात् द्रौपदीस्वयंवरार्थं रचिताल्लक्ष्यात् तल्लक्ष्यमलं अत्यन्तं अशक्यम् ।। ५२ ।।

**तत्राऽजग्मुर्मागधाद्याश्च सर्वे पार्था अपि द्रष्टुमिहाभ्युपाययुः ।**
**दुर्योधनाद्याश्च ससूतपुत्रा सज्यीकर्तुं धनुरप्युत्सहन्ते ।।५३।।**

**वेदाङ्गतीर्थीया—** तत्र मागधाद्याः दुर्योधनाद्याश्च आजग्मुः । सर्वे धनुः सज्जीकर्तुमुत्सहन्ते प्रयत्नमकुर्वन् ।।५३-५५।।

**वरदराजीया—** तत्र स्वयंवरे सर्वे मागधादयः आजग्मुः । पार्थाः द्रष्टुमभ्याययुः । तत्र स्वयंवरे ससूतपुत्राः सकर्णाः धनुः सज्जीकर्तुं अपि उत्सहन्ते प्रयतन्ते । लक्षवेधस्तु दूरोपास्त इत्यर्थः ।।५३।।

**जनार्दनीया—** तत्र स्वयंवरे मागधाद्याः ससूतपुत्राः सर्वे दुर्योधनाद्या आजग्मुः । धनुरपि सज्जीकर्तुं उत्सहन्ते प्रयतन्ते । पार्था अपि केवलं इह स्वयंवरं द्रष्टुम्, लक्षणाकृष्णयोगमिति शेषः ।। ५३ ।।

**चट्टी—** तत्र स्वयंवरे मागधाद्याः जरासन्धाद्याः सर्वे चाजग्मुः । पार्था अपि द्रष्टुमिहाभ्युपाययुः । ससूतपुत्राः कर्णेन सहिताः दुर्योधनाद्याश्च धनुः सज्जीकर्तुमप्युत्सहन्ते प्रयतन्ते । लक्ष्यवेधस्तु दुरापास्त एवेति भावः ।। ५३ ।।

**केचिन्निपेतुर्धनुषैव ताडिता नवै केचिच्चालयितुं च शेकुः ।**
**दुर्योधनो मागधः सूतपुत्रः सज्जं कृत्वा लक्ष्यवीक्षां न शेकुः ।।५४।।**

**वरदराजीया—** चालयितुं न शेकुः । धनुः सज्जं कृत्वा लक्ष्यवीक्षां कर्तुं न शेकुः ।।५४।।

**जनार्दनीया—** लक्ष्यवीक्षां कर्तुम् ।।५४।।

**[१]स्वयंवरो [२]लक्षणायास्तथाऽऽसीद् यथा द्रौपद्या [३]लक्ष्यवेधात्मकः सः ।**
**मद्रेषु तस्याश्च पिता पिनाकं स्वयंवरार्थं जगृहे गिरीशात् ॥५१॥**

**वेदाङ्गतीर्थीया–** मद्रेषु लक्षणायाः स्वयंवरः आसीत् । सः स्वयंवरः द्रौपद्याः स्वयंवरो यथा तथा लक्षवेधात्मकः ॥५१॥

**वरदराजीया–** लक्षणायाः स्वयंवरः आसीत् । यथा द्रौपद्या स्वयंवरः लक्ष्यवेधात्मकः तथा स इत्यर्थः । तस्याः लक्षणायाः पिता बृहत्सेनः मद्रेषु देशेषु,[४] राजेति शेषः । पिनाकं त्र्यम्बकं धनुः ॥५१॥

**जनार्दनीया–** मद्रेषु मद्रदेशेषु लक्षणायाः स्वयंवरः आसीत् । स लक्षणायाः स्वयंवरः द्रौपद्याः स्वयंवरो यथा तथा लक्ष्यवेधात्मकः । तस्याः लक्षणायाः पिता बृहत्सेनः । पिनाकं धनुः ॥ ५१ ॥

**चट्टी–** लक्षणायाः स्वयंवरः आसीत् । द्रौपद्याः स्वयंवरः यथा लक्ष्यवेधात्मकः सः लक्षणायाः स्वयंवरश्च तथेत्यर्थः । तस्याः लक्षणायाः पिता मद्रेषु देशेषु, राजेति शेषः । सः स्वयंवरार्थं पिनाकं त्र्यम्बकं धनुः गिरिशाज्जगृहे ॥ ५१ ॥

**लक्ष्यं च तत् सर्वतश्छन्नमेव द्वारं च तस्याप्युपरि स्म लक्षात् ।**
**छिन्नेषुणा पातनीयं च तद्धि द्रौपद्यर्थात् तदशक्यं ततोऽलम् ॥५२॥**

**व्यासतीर्थीया–** द्रौपदी अर्थः यस्य द्रौपद्यर्थः तस्मात् । ततः छिन्नेषुणा पातनीयत्वादिकारणेन ॥ ५२-५९ ॥

**वेदाङ्गतीर्थीया–** तत् तस्मात् लक्षस्य सर्वतश्छन्नत्वादेव कारणात् द्रौपद्यर्थात् ततः लक्षपातनसकाशात् अलं अशक्यं दुष्करं हि ॥ ५२ ॥

**वादिराजतीर्थीया–** 'द्रौपद्यर्थात् तदशक्यम्' इत्यत्र द्रौपद्यर्थात् ततः लक्षात् तत् लक्षणास्वयंवरे कृतं लक्षं अलमशक्यमिति योजना ॥ ५२-५४ ॥

**वरदराजीया–** द्रौपदीस्वयंवरापेक्षयात्र विशेषमाह– लक्ष्यञ्चेति ॥ तल्लक्ष्यं सर्वतः छन्नं पिहितम् । तस्य लक्ष्यस्य द्वारं लक्ष्यादुपरि देशे तिष्ठतीत्यर्थः । तल्लक्ष्यं छिन्नेषुणा बाणखण्डेन पातनीयम् । ततः कारणात् द्रौपद्यर्थात् द्रौपदीस्वयंवरार्थं रचितात् लक्ष्यात् तल्लक्ष्यमलमत्यन्तं अशक्यम् ॥५२॥

---

१. 'सुतां च मद्राधिपतेर्लक्ष्मणां लक्षणैर्युताम् । स्वयंवरे जहारैकः स सुपर्णः सुधामिव ॥' भागवते-१०.६२.६०.

२. भागवते-१०.७१.१७-३९.

३. 'लक्षवेधात्मकः' इति वेदाङ्गतीर्थीयपाठः ।

४. 'उपदेशेषु' इति क्वचित् ।

**अनन्तभट्टीया**— लक्षवीक्षाम् प्रति ।।५२-५९।।

**जनार्दनीया**— तल्लक्ष्यं सर्वतः छन्नं पिहितम् । तस्य लक्षस्य द्वारमपि लक्ष्यादुपरि स्म । लक्ष्यस्योर्ध्वभागे वर्तत इति शेषः । तल्लक्ष्यं छिन्नेषुणा छिन्नवाणेन पातनीयम् । द्रौपद्यर्थात् द्रौपदीस्वयंवरार्थं कृताल्लक्ष्यात् तत् लक्षणायाः स्वयंवरे रचितलक्ष्यम्, ततः लक्ष्यस्य सर्वतः छन्नत्वादेः कारणात् अलं अत्यन्तं अशक्यं हि दुष्करम् ।।५२।।

**ताम्रपर्णीया**— द्रौपद्यर्थात् तल्लक्षवेधात् । हि यस्माच्छिन्नेषुणा पातनीयं ततः कारणादिति वा ।।५२-५६।।

**चट्टी**— द्रौपदीस्वयंवरापेक्षया अत्र विशेषमाह— **लक्ष्यं चेति** ।। तल्लक्ष्यं च सर्वतः छन्नं पिहितमेव तस्य लक्ष्यस्य द्वारं च लक्ष्यादुपरि देशे तिष्ठतीत्यर्थः । तल्लक्ष्यं छिन्नेषुणा बाणखण्डेन पातनीयं ततः कारणात् द्रौपद्यर्थात् द्रौपदीस्वयंवरार्थं रचिताल्लक्ष्यात् तल्लक्ष्यमलं अत्यन्तं अशक्यम् ।। ५२ ।।

**तत्राऽजग्मुर्मागधाद्याश्च सर्वे पार्था अपि द्रष्टुमिहाभ्युपाययुः ।**
**दुर्योधनाद्याश्च ससूतपुत्रा सज्यीकर्तुं धनुरप्युत्सहन्ते ।।५३।।**

**वेदाङ्गतीर्थीया**— तत्र मागधाद्याः दुर्योधनाद्याश्च आजग्मुः । सर्वे धनुः सज्जीकर्तुमुत्सहन्ते प्रयत्नमकुर्वन् ।।५३-५५।।

**वरदराजीया**— तत्र स्वयंवरे सर्वे मागधादयः आजग्मुः । पार्थाः द्रष्टुमभ्याययुः । तत्र स्वयंवरे ससूतपुत्राः सकर्णाः धनुः सज्जीकर्तुं अपि उत्सहन्ते प्रयतन्ते । लक्षवेधस्तु दूरोपास्त इत्यर्थः ।।५३।।

**जनार्दनीया**— तत्र स्वयंवरे मागधाद्याः ससूतपुत्राः सर्वे दुर्योधनाद्या आजग्मुः । धनुरपि सज्जीकर्तुं उत्सहन्ते प्रयतन्ते । पार्था अपि केवलं इह स्वयंवरं द्रष्टुम्, लक्षणाकृष्णयोगमिति शेषः ।। ५३ ।।

**चट्टी**— तत्र स्वयंवरे मागधाद्याः जरासन्धाद्याः सर्वे चाजग्मुः । पार्था अपि द्रष्टुमिहाभ्युपाययुः । ससूतपुत्राः कर्णेन सहिताः दुर्योधनाद्याश्च धनुः सज्जीकर्तुमप्युत्सहन्ते प्रयतन्ते । लक्ष्यवेधस्तु दुरापास्त एवेति भावः ।। ५३ ।।

**केचिन्निपेतुर्धनुषैव ताडिता नवै केचिच्चालयितुं च शेकुः ।**
**दुर्योधनो मागधः सूतपुत्रः सज्जं कृत्वा लक्ष्यवीक्षां न शेकुः ।।५४।।**

**वरदराजीया**— चालयितुं न शेकुः । धनुः सज्जं कृत्वा लक्ष्यवीक्षां कर्तुं न शेकुः ।।५४।।

**जनार्दनीया**— लक्ष्यवीक्षां कर्तुम् ।।५४।।

**चट्टी–** केचिन्नृपाः धनुषैव ताडितास्सन्तो निपेतुः । केचित् धनुश्चालयितुं च न शेकुः । दुर्योधनो मागधः सूतपुत्रः कर्णश्चेति एते तद्धनुः सज्जं कृत्वा लक्ष्यवीक्षां कर्तुं न शेकुः ।। ५४ ।।

**[1]धनञ्जयः स्वात्मबलं प्रकाशयन् सज्जं कृत्वा धनुरैक्षच्च लक्ष्यम् ।**
**नैवाऽददे बाणमनिच्छयैव तत् प्राप्यां जानन् केशवेनैव तां च ।।५५।।**

**वादिराजतीर्थीया–** 'नैवाददे बाणमनिच्छयैव' इत्यत्र 'मत्स्याभासं जले दृष्ट्वा ज्ञात्वा च तदवस्थितिम् । पार्थो यत्तोऽसृजद्बाणं नाच्छिनत्पस्पृशे परम् ।।' इति(१०.७१.२४) भागवतोक्तेः विरोधपरिहाराय धनञ्जयः अनिच्छयैव कृष्णप्राप्यलक्षणायामिच्छाभावेनैव कारणेन बाणं नैवाददे । नैव सम्यक् दत्तवान् । लक्ष्यच्छेदो यथा भवति तथा न दत्तवानित्यर्थः । लक्षस्पर्शस्याप्यतिकुशलसाध्यत्वाद्भागवते 'यत्त' इत्युक्तम् । लक्ष्यच्छेदो यथा न भवति तथा स्पर्शमात्रं च यथा भवति तथा सन्नाहवानित्यर्थः ।।५५।।

**सत्याभिनवतीर्थीया–** तत्रैव 'धनञ्जयः स्वात्मबलम्' इति श्लोके स्वात्मबलं प्रकाशयन् इत्यस्य सु सम्यक् आत्मबलं प्रकाशयन्नित्यर्थः । एतेन आत्मबलमित्यनेनैव पूर्णत्वात् स्वेत्येतत् व्यर्थमिति दूषणस्यानवकाशः । नायं स्वशब्दः किं तु सुशब्द इत्यङ्गीकारात् ।। ५५-७५ ।।

**वरदराजीया–** स्वात्मनो बलं प्रकाशयन् न तु कन्यां वाञ्छन्, धनुः सज्जं कृत्वा लक्ष्यं ऐक्षच्च । बाणं नैवाददे । अनिच्छया कन्यायाः । तां कन्यां केशवेन प्राप्यां जानन् ।।५५।।

**जनार्दनीया–** लक्ष्यं ऐक्षत् ददर्श । अनिच्छयैव, कन्याया इति शेषः । तां लक्षणाम् ।। ५५ ।।

**भारतश्री–** बाणं नैवाददे कृष्णकीर्त्यर्थमेव । मृषा यत्नं चकारेति ज्ञातव्यम् । अत एवोक्तम्- 'पार्था द्रष्टुमिहाभ्युपाययुः' इति ।।५५।।

**चट्टी–** धनञ्जयः अर्जुनः स्वात्मबलं प्रकाशयन् न तु कन्यां वाञ्छन्, धनुः सज्जं कृत्वा लक्ष्यं चैक्षत् । तां लक्षणां च केशवेन श्रीकृष्णेनैव प्राप्यां जानन् अनिच्छयैव, कन्याया इति शेषः । बाणं नैवाददे ।।५५।।

**भीमश्चापं लक्ष्यमप्येतदत्र द्रष्टुं च नैवैच्छदरीन्द्रधारिणः ।**
**योग्ये [2]कर्मण्यायतंश्चापराधी स्यादित्यज्ञः पश्यमानो महात्मा ।।५६।।**

**वेदाङ्गतीर्थीया–** भीमः चापं आरोपबुद्ध्या लक्षं पातनबुद्ध्या द्रष्टुं च नैच्छत् । आयतन् प्रयत्नं कुर्वन् पुरुषः ।।५६-५९।।

**वादिराजीया–** 'भीमश्चापं लक्षमप्येतदत्र द्रष्टुं च नैवैच्छदरीन्द्रधारिणः' इत्युक्तेः 'सज्यं कृत्वा परे वीराः प्राग्ज्योतिमगधेश्वरौ । भीमो दुर्योधनः कर्णः नाविन्दंस्तदवस्थितिम् ।।' इति (१०.७१.२३)

१. सत्याभिनवतीर्थीये– 'धनञ्जयः सु आत्मबलम्' इति पदविभागः ।

२. 'कर्मण्यायतश्च' इति भारतश्रीपाठः । 'कर्मण्यायतंश्च' इति पाठान्तरम् ।

भागवतोक्तेश्च विरोधपरिहाराय दर्योधनाद्याः सज्यं कृत्वा तदवस्थितिं तस्य लक्षस्यावस्थितिं नाविन्दन् । भीमस्त्वच्छिन्नधर्मत्वात् तस्य धनुषः अवस्थितिमेव नाविन्दत् नापश्यत् । विष्णुयोग्यवस्तुनि इच्छाऽपि दोष इति मन्वानः धनुषो दर्शनमपि न चकारेति योजना द्रष्टव्या । अत एव 'तदवस्थितिं नाविन्दन्' इति सामान्येन प्रयोगः ।।५६-५९।।

**वरदराजीया–** तत्र स्वयंवरे अरीन्द्रधारिणः चक्रपाणेः योग्यकर्मणि आयतन् प्रयतमानः पुरुषो अपराधी स्यादिति अज्ञः पश्यमानः सम्यक् पश्यमानो जानन् भीमः नैवैच्छदिति सम्बन्धः ।।५६।।

**जनार्दनीया–** अरीन्द्रधारिणः चक्रधरस्य योग्ये कर्मणि आयतन् यत्नवान् अपराधी स्यामिति अज्ञः सम्यक् पश्यमानः पश्यतीति पश्यन् तच्छीलः पश्यमानः । 'ताच्छील्यवयोवचन...'(सि.कौ-३१०९) इति शानच् । जानन्नित्यर्थः । महात्मा भीमः अत्र स्वयंवरे चापं एतल्लक्ष्यं द्रष्टुमपि नैवैच्छत् ।।५६।।

**भारतश्री–** आयतः सम्बद्धः । 'आयतंश्च' इत्यपि पाठः । प्रयतन्नित्यर्थः ।।५६-५८।।

**चट्टी–** अरीन्द्रधारिणः चक्रधारिणः श्रीकृष्णस्य योग्ये कर्मणि आयतन् यतमानस्सन् अपराधी स्यामित्यज्ञः सम्यक् पश्यमानः महात्मा भीमः चापं चैतल्लक्ष्यमप्यत्र स्वयंवरे द्रष्टुं च नैवैच्छत् ।। ५६ ।।

**कृष्णस्ततश्चापमधिज्यमाशु कृत्वाऽचिन्त्यश्छिन्नबाणेन लक्ष्यम् ।**
**अपातयद् दुन्दुभयश्च दिव्या नेदुः प्रसूनं ववृषुः सुराश्च ।।५७।।**

**वरदराजीया–** अचिन्त्यः कृष्णः । सुराः प्रसूनं पुष्पाणि ववृषुः ।।५७।।

**जनार्दनीया–** अचिन्त्यः हेतुगर्भविशेषणमेतत् ।।५७।।

**ताम्रपर्णीया–** ।। **अचिन्त्य इति** ।। अचिन्त्यमहिमस्य नैतदश्चर्यमिति भावः । यद्वा अर्जुनादि-साध्योऽयं लक्षवेधः कथं कृष्णस्य महिमोच्यते इत्यत आह– **अचिन्त्य इति** ।। 'रामावतारचरितानि तदन्यपुम्भिः शक्यानि नैव मनसापि हि तानि कर्तुम्' (ता.नि-९.४२) इत्युक्तरीत्या 'एवं विधान्यगणितानि यदूत्तमस्य' (ता.नि-२२.२५६) इति वक्ष्यमाणरीत्या च भगवदीयं तदेव लक्षवेधाधिरूपं कर्माचिन्त्यमनन्यसाधारणमिति भावः ।। ५७-५९ ।।

**चट्टी–** अचिन्त्यः श्रीकृष्णः ततः आशु चापमधिज्यं कृत्वा छिन्नबाणेन बाणखण्डेन लक्ष्यमपातयत् । दिव्याः दुन्दुभयश्च नेदुः । सुराः प्रसूनं पुष्पाणि ववृषुः ।। ५७ ।।

**कृष्णे ब्रह्माद्यैः स्तूयमाने नरेन्द्रकन्या मालां केशवांसे निधाय ।**
**तस्थावुपास्याथ सर्वे नरेन्द्रा युद्धायागुः केशवं स्वात्तशस्त्राः ।।५८।।**

**वेदाङ्गतीर्थीया–** अस्य उप समीपे तस्थौ ।। ५८ ।।

**वरदराजीया–** स्तूयमाने सति केशवास्यांसे स्कन्धे । अस्य कृष्णस्योप समीपे तस्थौ । केशवं प्रति युद्धायागुः प्राप्ताः ।। ५८ ।।

**जनार्दनीया–** केशवांसे कृष्णस्य स्कन्धे । अस्य कृष्णस्य उप समीपे तस्थौ । अथ नरेन्द्राः अगुः प्रापुः ।।५८।।

**चट्टी–** श्रीकृष्णे ब्रह्माद्यैः स्तूयमाने सति नरेन्द्रकन्या राजकन्या लक्षणा केशवांसे मालां निधाय अस्य श्रीकृष्णस्य उप समीपे तस्थौ । अथ सर्वे नरेन्द्राश्च आत्तशस्त्राः गृहीतायुधाः सन्तः युद्धाय केशवं प्रति जग्मुः ।। ५८ ।।

**विद्राप्य[१] तान् मागधादीन् स कृष्णो भीमार्जुनाभ्यां सहितः पुरीं स्वाम् ।**
**ययावेता अष्ट महामहिष्यः कृष्णस्य दिव्या लोकसुन्दर्य इष्टाः ।।५९।।**

**वरदराजीया–** तान् नरेन्द्रान् । स्वां पुरीं द्वारकाम् । एता रुक्मिण्याद्याः कृष्णस्य अष्टमहामहिष्यः । पट्टस्त्रियः दिव्याः आलौकिकाः इष्टाः प्रियाः ।।५९।।

**जनार्दनीया–** पुरीं द्वारावतीम् । एताः रुक्मिण्याद्याः अष्ट महामहिष्यः पट्टस्त्रियः दिव्याः अलौकिकाः इष्टाः प्रियाः इत्युक्ताः ।।५९।।

**भारतश्री–** दिव्याः अनन्ययोग्याः ।। ५९-६० ।।

**चट्टी–** सः श्रीकृष्णः तान् मागधादीन् जरासन्धादीन् विद्राव्य भीमार्जुनाभ्यां सहितः सन् स्वां पुरीं द्वारकां ययौ । एताः रुक्मिण्याद्याः श्रीकृष्णस्य महामहिष्यः दिव्याः अलौकिकाः लोके सुन्दर्यः इष्टाः प्रियाः ।।५९।।

**भैष्मी सत्या चैकतनुर्द्विधैव जाता भूमौ प्रकृतिर्मूलभूता ।**
**तयैवान्याः सर्वदाऽनुप्रविष्टास्तासां मध्ये जाम्बवती प्रधाना ।।६०।।**

**व्यासतीर्थीया–** ननु रुक्मिणीसत्ये मूलप्रकृतित्वाद्भगवतः कृष्णाङ्गसङ्गयोग्ये इतराः कथमित्यत आह– **तयेति** ।। प्रधाना प्रकृत्याधिक्यावेशात् ।। ६० ।।

**वेदाङ्गतीर्थीया–** एताः रुग्मिण्याद्याः अष्ट महामहिष्यः इत्युक्त्या रुक्मिणीसत्यभामयोरितरावत् स्वरूपभेदः ताभिः साम्यं च प्रतीयते । ततस्तन्निवारयति– **भैष्मीति** ।। मूलभूता सर्वस्य जननीत्वेन कारणभूता प्रकृतिः लक्ष्मीः । अन्या जाम्बवत्याद्याः । प्रधाना स्वभावतः ।।६०।।

**वादिराजतीर्थीया–** 'तासां मध्ये जाम्बवती प्रधाना' इत्यत्र रमावेशाज्जाम्बवत्याः रामसाम्यम् । अन्यासां तु ईषद्रमावेशेऽपि ततः किञ्चिदूनत्वम् । निजस्वरूपविचारे तु षण्णामपि प्रद्युम्नतो

१. 'विद्राव्य' इति चट्टीपाठः ।

विंशतिगुणाधिकत्वेन साम्यमेव । अतस्तारतम्यस्तोत्रे 'स्त्रियः षट्च' इति षण्णामपि समतयोक्तिरिति ज्ञेयम् ।। ६०-६४ ।।

**वरदराजीया–** रुक्मिण्यादीनां साधाराण्यं निवारयति– **भैष्मीति** ।। भैष्मी रुक्मिणी सत्या सत्यभामा च एकतनुः एकरूपा मूलभूता सर्वस्य आदिकारणभूता प्रकृतिर्महालक्ष्मीरेव भूमौ द्विधा जाता । तया प्रकृत्या अन्या जाम्ववत्याद्याः सर्वदाऽनुप्रविष्टाः । तत्रापि तासां मध्ये जाम्ववती हरेः प्रियत्वे प्रधाना श्रेष्ठा ।।६०।।

**अनन्तभट्टीया–** जाम्ववती सदा श्रीसन्निधिमती ।। ६०-६४ ।।

**जनार्दनीया–** रुक्मिणीसत्यभामयोः इतरावत् स्वरूपभेदः ताभिः साम्यं च प्रतीयते । अतस्तां निवारयति– **भैष्मीति** ।। मूलभूता सर्वस्य जननीत्वेन कारणभूता प्रकृतिर्लक्ष्मीः । अन्याः जाम्ववत्याद्याः तया लक्ष्म्या सर्वदा नित्यं अनुप्रविष्टाः युक्ता इत्यर्थः । तासां षट्स्त्रीणां मध्ये जाम्ववती प्रधाना श्रेष्ठा ।।६०।।

**भावविवृतिः–** 'तयैवान्याः सर्वदा...विंशगुणाधिकाः स्युः' इत्यत्र तयैव मूलप्रकृत्यैव अन्याः जाम्ववत्यादिषण्महिष्यः सर्वदा यावद्देहपर्यन्तं आवेशिताः । तासां जाम्ववत्यादिषण्णां मध्ये जाम्ववती प्रधाना श्रेष्ठा । आवेशविषये, न स्वरूपतः । 'प्रद्युम्नतो विंशगुणाधिकाः स्युः' इति षण्णां साम्योक्तेः ।।६०।।

**ताम्रपर्णीया–** अष्टमहामहिष्य इति परस्परं भेद उक्तस्तत्रापवादमाह– **भैष्मीति** ।। भैष्मी सत्या चैकतनुरेवेत्यन्वयः । तर्ह्यष्टत्वं महिषीणां कथम्? तत्राह । सर्वजगत्कारणभूता प्रकृतिर्महालक्ष्मी अचिन्त्यशक्त्या श्रीर्भूरिति द्विधा भूता सती भूमौ भैष्मी सत्या चेति जातेत्यर्थः । प्रधाना स्वभावतः प्रियत्वे इत्युपलक्षणम् ।। ६० ।।

**चट्टी–** रुक्मिण्यादीनां साधारण्यं निवारयति– **भैष्मीति** ।। भैष्मी रुक्मिणी सत्यभामा चैकतनुः एकरूपा मूलभूता सर्वस्यादिकारणभूता प्रकृतिः महालक्ष्मीः एव भूमौ द्विधा जाता । तयैव प्रकृत्या अन्याः जाम्ववत्याद्याः सर्वदा अनुप्रविष्टाः । तत्रापि तासां मध्ये जाम्ववती हरेः प्रियत्वे प्रधाना श्रेष्ठा ।।६०।।

**रामेण तुल्या जाम्ववती प्रियत्वे कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः ।**
**यदाऽऽवेशो बहुलः स्याद् रमायास्तदा तासु प्रीयते केशवोऽलम् ।।६१।।**

**व्यासतीर्थीया–** तदा जाम्ववती रामेण तुल्या ।।६१।।

**वेदाङ्गतीर्थीया–** एवं स्वरूपमुक्त्वा तासां रमावेशनिमित्ततात्कालिकविशेषमाह– **यदेति** ।।६१-६४

**वरदराजीया–** स्तूयमाने सति केशवास्यांसे स्कन्धे । अस्य कृष्णस्योप समीपे तस्थौ । केशवं प्रति युद्धायागुः प्राप्ताः ।। ५८ ।।

**जनार्दनीया–** केशवांसे कृष्णस्य स्कन्धे । अस्य कृष्णस्य उप समीपे तस्थौ । अथ नरेन्द्राः अगुः प्रापुः ।।५८।।

**चट्टी–** श्रीकृष्णे ब्रह्माद्यैः स्तूयमाने सति नरेन्द्रकन्या राजकन्या लक्षणा केशवांसे मालां निधाय अस्य श्रीकृष्णस्य उप समीपे तस्थौ । अथ सर्वे नरेन्द्राश्च आत्तशस्त्राः गृहीतायुधाः सन्तः युद्धाय केशवं प्रति जग्मुः ।। ५८ ।।

**विद्राप्य[1] तान् मागधादीन् स कृष्णो भीमार्जुनाभ्यां सहितः पुरीं स्वाम् ।**
**ययावेता अष्ट महामहिष्यः कृष्णस्य दिव्या लोकसुन्दर्य इष्टाः ।।५९।।**

**वरदराजीया–** तान् नरेन्द्रान् । स्वां पुरीं द्वारकाम् । एता रुक्मिण्याद्याः कृष्णस्य अष्टमहामहिष्यः । पट्टस्त्रियः दिव्याः आलौकिकाः इष्टाः प्रियाः ।।५९।।

**जनार्दनीया–** पुरीं द्वारावतीम् । एताः रुक्मिण्याद्याः अष्ट महामहिष्यः पट्टस्त्रियः दिव्याः अलौकिकाः इष्टाः प्रियाः इत्युक्ताः ।।५९।।

**भारतश्री–** दिव्याः अनन्ययोग्याः ।। ५९-६० ।।

**चट्टी–** सः श्रीकृष्णः तान् मागधादीन् जरासन्धादीन् विद्राव्य भीमार्जुनाभ्यां सहितः सन् स्वां पुरीं द्वारकां ययौ । एताः रुक्मिण्याद्याः श्रीकृष्णस्य महामहिष्यः दिव्याः अलौकिकाः लोके सुन्दर्यः इष्टाः प्रियाः ।।५९।।

**भैष्मी सत्या चैकतनुर्द्विधैव जाता भूमौ प्रकृतिर्मूलभूता ।**
**तयैवान्याः सर्वदाऽनुप्रविष्टास्तासां मध्ये जाम्बवती प्रधाना ।।६०।।**

**व्यासतीर्थीया–** ननु रुक्मिणीसत्ये मूलप्रकृतित्वाद्भगवतः कृष्णाङ्गसङ्गयोग्ये इतराः कथमित्यत आह– **तयेति** ।। प्रधाना प्रकृत्याधिक्यावेशात् ।। ६० ।।

**वेदाङ्गतीर्थीया–** एताः रुग्मिण्याद्याः अष्ट महामहिष्यः इत्युक्त्या रुक्मिणीसत्यभामयोरितरावत् स्वरूपभेदः ताभिः साम्यं च प्रतीयते । ततस्तन्निवारयति– **भैष्मीति** ।। मूलभूता सर्वस्य जननीत्वेन कारणभूता प्रकृतिः लक्ष्मीः । अन्या जाम्ववत्याद्याः । प्रधाना स्वभावतः ।।६०।।

**वादिराजतीर्थीया–** 'तासां मध्ये जाम्ववती प्रधाना' इत्यत्र रमावेशाज्जाम्ववत्याः रामसाम्यम् । अन्यासां तु ईषद्रमावेशेऽपि ततः किञ्चिदूनत्वम् । निजस्वरूपविचारे तु षण्णामपि प्रद्युम्नतो

[1]. 'विद्राव्य' इति चट्टीपाठः ।

विंशतिगुणाधिकत्वेन साम्यमेव । अतस्तारतम्यस्तोत्रे 'स्त्रियः षट्च' इति षण्णामपि समतयोक्तिरिति ज्ञेयम् ।। ६०-६४ ।।

**वरदराजीया–** रुक्मिण्यादीनां साधाराण्यं निवारयति– **भैष्मीति** ।। भैष्मी रुक्मिणी सत्या सत्यभामा च एकतनुः एकरूपा मूलभूता सर्वस्य आदिकारणभूता प्रकृतिर्महालक्ष्मीरेव भूमौ द्विधा जाता । तया प्रकृत्या अन्या जाम्बवत्याद्याः सर्वदाऽनुप्रविष्टाः । तत्रापि तासां मध्ये जाम्ववती हरेः प्रियत्वे प्रधाना श्रेष्ठा ।।६०।।

**अनन्तभट्टीया–** जाम्ववती सदा श्रीसन्निधिमती ।। ६०-६४ ।।

**जनार्दनीया–** रुक्मिणीसत्यभामयोः इतरावत् स्वरूपभेदः ताभिः साम्यं च प्रतीयते । अतस्तां निवारयति– **भैष्मीति** ।। मूलभूता सर्वस्य जननीत्वेन कारणभूता प्रकृतिर्लक्ष्मीः । अन्याः जाम्ववत्याद्याः तया लक्ष्म्या सर्वदा नित्यं अनुप्रविष्टाः युक्ता इत्यर्थः । तासां षट्स्त्रीणां मध्ये जाम्ववती प्रधाना श्रेष्ठा ।।६०।।

**भावविवृतिः–** 'तयैवान्याः सर्वदा...विंशगुणाधिकाः स्युः' इत्यत्र तयैव मूलप्रकृत्यैव अन्याः जाम्बवत्यादिषण्महिष्यः सर्वदा यावद्देहपर्यन्तं आवेशिताः । तासां जाम्बवत्यादिषण्णां मध्ये जाम्ववती प्रधाना श्रेष्ठा । आवेशविषये, न स्वरूपतः । 'प्रद्युम्नतो विंशगुणाधिकाः स्युः' इति षण्णां साम्योक्तेः ।।६०।।

**ताम्रपर्णीया–** अष्टमहामहिष्य इति परस्परं भेद उक्तस्तत्रापवादमाह– **भैष्मीति** ।। भैष्मी सत्या चैकतनुरेवेत्यन्वयः । तर्ह्यष्टत्वं महिषीणां कथम्? तत्राह । सर्वजगत्कारणभूता प्रकृतिर्महालक्ष्मी अचिन्त्यशक्त्या श्रीर्भूरिति द्विधा भूता सती भूमौ भैष्मी सत्या चेति जातेत्यर्थः । प्रधाना स्वभावतः प्रियत्वे इत्युपलक्षणम् ।। ६० ।।

**चट्टी–** रुक्मिण्यादीनां साधारण्यं निवारयति– **भैष्मीति** ।। भैष्मी रुक्मिणी सत्यभामा चैकतनुः एकरूपा मूलभूता सर्वस्यादिकारणभूता प्रकृतिः महालक्ष्मीः एव भूमौ द्विधा जाता । तयैव प्रकृत्या अन्याः जाम्ववत्याद्याः सर्वदा अनुप्रविष्टाः । तत्रापि तासां मध्ये जाम्ववती हरेः प्रियत्वे प्रधाना श्रेष्ठा ।।६०।।

**रामेण तुल्या जाम्बवती प्रियत्वे कृष्णस्यान्याः किञ्चिदूनाश्च तस्याः ।**
**यदाऽऽवेशो बहुलः स्याद् रमायास्तदा तासु प्रीयते केशवोऽलम् ।।६१।।**

**व्यासतीर्थीया–** तदा जाम्बवती रामेण तुल्या ।।६१।।

**वेदाङ्गतीर्थीया–** एवं स्वरूपमुक्त्वा तासां रमावेशनिमित्ततात्कालिकविशेषमाह– **यदेति** ।।६१-६४

**वरदराजीया–** प्राधान्यं व्यवस्थापयति– **रामेणेति** ।। कृष्णस्य प्रियत्वे विषये जाम्ववती रामेण वलभद्रेण तुल्याः । अन्याः कालिन्द्याद्याः तस्याः जाम्ववत्याः किञ्चिदूनाः । किञ्चिदूनत्वमपि न सार्वकालिकमित्याह– **यदेति** ।। यदा कालिन्द्याद्यासु रमायाः आवेशो वहुलः स्यात् तदा तास्वपि केशवोऽलं सम्यक् जाम्बवतीसाम्येन प्रीयते ।।६१।।

**अनन्तभट्टीया–** कृष्णस्य प्रियत्वे रामेण तुल्या । विंशगुणाधिका इति हेतोः ।। ६१ ।।

**जनार्दनीया–** एवं स्वरूपमुक्त्वा तासां रमावेशनिमित्ततारतम्यविशेषमाह– **रामेणेति** ।। जाम्ववती कृष्णस्य प्रियत्वे रामेण तुल्या, सदा रमावेशादिति शेषः । न तु स्वरूपतः । अन्याः कालिन्द्याद्याः यदा रमायाः आवेशो वहुलः स्यात्, तदा तस्याः जाम्ववत्याः सकाशात् किञ्चिदूनाः । तदैव तासु कालिन्द्यादिपञ्चसु केशवः अलं प्रीयते ।।६१।।

**भावविवृतिः–** श्रैष्ठ्यप्रकारमेवोपपादयति– **रामेण तुल्येति** ।। जाम्ववती कृष्णस्य प्रियत्वे विषये रामेण तुल्या, अन्या नीलाद्याः पञ्चमहिष्यः कृष्णस्य प्रियत्वे विषये अस्याः जाम्ववत्यास्सकाशात् किञ्चिदूनाः । कुतः? जाम्ववत्यपेक्षया एतासु रमावेशस्य किञ्चिदूनत्वादिति हेतुसूचनाय चशब्दः । तासु रमावेशस्य सदातनत्वेऽपि आवेशव्यक्तिरेव प्रीत्यतिशयकारणमित्याह– **यदावेश इति** ।। यदा यस्मिन् कालविशेषे तासु रमावेशः वहुलःस्यात् व्यक्तो भवेत्, तदा तस्मिन् काले केशवोऽलमधिकं प्रीयते ।।६१।।

**ताम्रपर्णीया–** जाम्ववत्या रामसाम्यमितरासां प्रायस्साम्यं च न स्वाभाविकमपि त्वावेशकृतमित्याह– **यदेति** ।। अलं प्रीयते जाम्ववत्या रामसाम्ये नेतरा सा प्रायो रामसाम्येन प्रीयते इत्यर्थः । तत् तदा । इदमुक्तं भवति । रमावेशोद्रेकदशायां जाम्ववती रामसमा अन्यास्तु रामात् किञ्चिदूनाः । तदभावकाले सर्वेऽपि रामात् पञ्चगुणन्यूनाः । प्रद्युम्नतो विंशतिगुणाधिकाः तदापि जांववती किञ्चिदधिकेति । टीकायां तु- 'तासां मध्ये जाम्ववती प्रधाना प्रकृत्यावेशाधिक्यात्' इत्युक्तम् । केचित्तु- 'इतरासां किञ्चिदूनत्वं न सार्वकालिकमित्याह– **यदेति** ।। तासु कालिन्द्याद्यासु अलं प्रीयते जाम्ववती साम्येन प्रीयते । यदा तत्र तासु आवेशोऽल्पत्वमुपैति तदा प्रद्युम्नतो विंशगुणाधिका स्युः । तदा किञ्चिदूनत्वमिति भावः' इति ।।६१।।

**भारतश्री–** रामेण तुल्या, रमायाः वहुलावेशकाले रमावेशकालेऽपि जाम्ववती इतराभ्यः किञ्चिदधिकप्रिया....* ।। ६१-६७ ।।

**चट्टी–** एवं स्वरूपमुक्त्वा तासां रमावेशनिमित्ततारतम्यविशेषमाह– **रामेणेति** ।। जाम्ववती कृष्णस्य प्रियत्वे रामेण तुल्या, सदा रमावेशादिति शेषः । न तु स्वरूपतः । अन्याः कालिन्द्याद्याः यदा रमायाः आवेशः वहुलः स्यात् तदा तस्याः जम्ववत्याः किञ्चिन्न्यूनाः । तदैव तासु कालिन्द्यादिपञ्चसु केशवः श्रीकृष्णः अलं प्रीयते ।। ६१ ।।

**यदाऽऽवेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः ।**
**अनादितस्ताः केशवान्नान्यसंस्था रेमे ताभिः केशवो द्वारवत्याम् ।।६२।।**

**व्यासतीर्थीया–** षोडशसहस्रभार्याः यथा यादृच्छिकास्तथा न ता इत्याह– **अनादितः** ।। ६२-६४ ।।

**वरदराजीया–** तत्र तासु देव्या आवेशो ह्रासमल्पत्वमुपैति, तदा प्रद्युम्नतः कृष्णपुत्रात् विंशगुणाधिकाः त्रिंशतिगुणैः विंशतिगणनाभिः अधिकाः स्युः । तदा किञ्चिद्धीनत्वमिति भावः । जाम्बवत्यास्तु सर्वदा बहु एव देव्याः आवेशः । तदपेक्षया जाम्बवती प्रधानेत्युक्तमिति भावः । इदं च तारतम्यं न स्वरूपप्रयुक्तम्, न मोक्षपर्यवसायि, स्वरूपतारतम्ये जाम्बवत्याः रमावतारत्वात् प्रद्युम्नापेक्षया च कालिन्यादीनां बहुगुणाधिकत्वात् । तस्मात् कृष्णस्य प्रिया इत्युक्तत्वात् अवतारे वात्सल्यप्रत्युक्तमेवेदं नैमित्तिकं तारतम्यमाचार्यैरवतारप्रसङ्गे निरूपितमिति द्रष्टव्यम् । अन्यस्मिन् पुरुषे न तिष्ठन्तीति तथा । केशवस्य नियताः स्त्रियः इति भावः । ताभिः जाम्बवत्यादिभिः ।।६२।।

**जनार्दनीया–** यदा श्रियः आवेशः तत्र तासु ह्रासमुपैति । तत्र तस्मिन् काले प्रद्युम्नतः कृष्णपुत्रप्रद्युम्नात् विंशगुणाधिकाः विंशतिगुणैः अधिकाः स्युः । अनादितः अनादिकालतः ताः जाम्बवत्याद्याः केशवान्नान्यसंस्थाः । हरिं विना अन्यपुरुषेण न रमन्ते इति भावः । ताभिरष्टमहामहिषीभिः ।।६२।।

**भावविवृतिः–** यदा तत्र तासु अवेशः, रमाया इति शेषः । ह्रासं ह्रासत्वमुपैति । शक्तो भवेदित्यर्थः । तदा आवेशस्य शक्ततादशायां षण्महिष्यः प्रद्युम्नतः कृष्णपुत्रतः तस्य कामावतारत्वात् विंशगुणाधिकास्स्युः विंशतिगुणाधिकास्स्युः । इन्द्रकामापेक्षया उमादीनां दशोत्तरत्वं उमादिभ्यो दशोत्तरत्वं जाम्बवत्यादीनां अतो विंशगुणाधिकत्वं सम्भवति । जाम्बवत्यादिभ्यो गरुडशेषरुद्राणां पञ्चगुणोत्तरत्वमिति वस्तुस्थितिः । यद्यप्यत्र विरुद्धतया प्रतीयमानानि सन्ति वाक्यानि तथापि तान्यावेशादिविवक्षया प्रवृत्तानीति नोक्तार्थबाधकानि स्युरिति ।। **अनादितः केशवान्नान्यसंस्था इति** ।। अनादिकालादारभ्य केशवात् केशवं विना अन्यसंस्था अन्यस्मिन् पुरुषे स्थानं भार्यात्वेन स्थिता न स्युरित्यर्थः । यतोऽत इति शेषः । ताभिः रेम इत्यर्थः । पूर्वं तासां स्वरूपं तु उक्तं गरुडपुराणे वेङ्कटाचलमाहात्म्ये–

[1]"चन्द्रपुत्री च या पूर्वं सैव जाम्बवती ह्यभूत् । पूर्वं तु पितृदेवस्य कव्यवाहस्य या सुता ।।
सैव नीला द्विरूपेण नग्नजित्कुम्भयोस्सुता । नलाख्यपितृदेवस्य पुत्री भद्रा प्रकीर्तिता ।।
अग्निष्वात्तानामकस्य या सुता पूर्वजन्मनि । अभूत्सैव.....* मित्रविन्दा प्रकीर्तिता ।।
पूर्वसर्गे सूर्यपुत्री कालिन्दीनामिका ह्यभूत् । पूर्वसर्गे बर्हिषदः पितृदेवस्य पुत्रिका ।।
सैव जाता लक्षणेति षण्महिष्यः प्रकीर्तिताः । अनादिकालतस्तास्तु नान्यत्रस्था हरिं विना ।।
शेषाच्च पञ्चगुणतो न्यूनास्ताः सम्प्रकीर्तिताः । ताभ्यो द्विगुणतो न्यूनाः शेषरुद्रविपस्त्रियः ।।'

१. एतच्छ्लोकाः उपलभ्यमानगरुडपुराणान्तर्गतवेङ्कटेशमाहात्म्ये नोपलभ्यन्ते ।

**वरदराजीया–** प्राधान्यं व्यवस्थापयति– **रामेणेति** ।। कृष्णस्य प्रियत्वे विषये जाम्ववती रामेण वलभद्रेण तुल्याः । अन्याः कालिन्द्याद्याः तस्याः जाम्ववत्याः किञ्चिदूनाः । किञ्चिदूनत्वमपि न सार्वकालिकमित्याह– **यदेति** ।। यदा कालिन्द्याद्यासु रमायाः आवेशो बहुलः स्यात् तदा तास्वपि केशवोऽलं सम्यक् जाम्ववतीसाम्येन प्रीयते ।।६१।।

**अनन्तभट्टीया–** कृष्णस्य प्रियत्वे रामेण तुल्या । विंशगुणाधिका इति हेतोः ।। ६१ ।।

**जनार्दनीया–** एवं स्वरूपमुक्त्वा तासां रमावेशनिमित्ततारतम्यविशेषमाह– **रामेणेति** ।। जाम्ववती कृष्णस्य प्रियत्वे रामेण तुल्या, सदा रमावेशादिति शेषः । न तु स्वरूपतः । अन्याः कालिन्द्याद्याः यदा रमायाः आवेशो बहुलः स्यात्, तदा तस्याः जाम्ववत्याः सकाशात् किञ्चिदूनाः । तदैव तासु कालिन्द्यादिपञ्चसु केशवः अलं प्रीयते ।।६१।।

**भावविवृतिः–** श्रैष्ठ्यप्रकारमेवोपपादयति– **रामेण तुल्येति** ।। जाम्ववती कृष्णस्य प्रियत्वे विषये रामेण तुल्या, अन्या नीलाद्याः पञ्चमहिष्यः कृष्णस्य प्रियत्वे विषये अस्याः जाम्ववत्यास्सकाशात् किञ्चिदूनाः । कुतः? जाम्ववत्यपेक्षया एतासु रमावेशस्य किञ्चिदूनत्वादिति हेतुसूचनाय चशब्दः । तासु रमावेशस्य सदातनत्वेऽपि आवेशव्यक्तिरेव प्रीत्यतिशयकारणमित्याह– **यदावेश इति** ।। यदा यस्मिन् कालविशेषे तासु रमावेशः बहुलःस्यात् व्यक्तो भवेत्, तदा तस्मिन् काले केशवोऽलमधिकं प्रीयते ।।६१।।

**ताम्रपर्णीया–** जाम्ववत्या रामसाम्यमितरासां प्रायस्साम्यं च न स्वाभाविकमपि त्वावेशकृतमित्याह– **यदेति** ।। अलं प्रीयते जाम्ववत्या रामसाम्ये नेतरा सा प्रायो रामसाम्येन प्रीयते इत्यर्थः । तत् तदा । इदमुक्तं भवति । रमावेशोद्रेकदशायां जाम्ववती रामसमा अन्यास्तु रामात् किञ्चिदूनाः । तदभावकाले सर्वेऽपि रामात् पञ्चगुणन्यूनाः । प्रद्युम्नतो विंशतिगुणाधिकाः तदापि जांववती किञ्चिदधिकेति । टीकायां तु- 'तासां मध्ये जाम्ववती प्रधाना प्रकृत्यावेशाधिक्यात्' इत्युक्तम् । केचित्तु- 'इतरासां किञ्चिदूनत्वं न सार्वकालिकमित्याह– **यदेति** ।। तासु कालिन्द्याद्यासु अलं प्रीयते जाम्ववती साम्येन प्रीयते । यदा तत्र तासु आवेशोऽल्पत्वमुपैति तदा प्रद्युम्नतो विंशगुणाधिका स्युः । तदा किञ्चिदूनत्वमिति भावः' इति ।।६१।।

**भारतश्री–** रामेण तुल्या, रमायाः बहुलावेशकाले रमावेशकालेऽपि जाम्ववती इतराभ्यः किञ्चिदधिकप्रिया....* ।। ६१-६७ ।।

**चट्टी–** एवं स्वरूपमुक्त्वा तासां रमावेशनिमित्ततारतम्यविशेषमाह– **रामेणेति** ।। जाम्ववती कृष्णस्य प्रियत्वे रामेण तुल्या, सदा रमावेशादिति शेषः । न तु स्वरूपतः । अन्याः कालिन्द्याद्याः यदा रमायाः आवेशः बहुलः स्यात् तदा तस्याः जम्ववत्याः किञ्चिन्न्यूनाः । तदैव तासु कालिन्द्यादिपञ्चसु केशवः श्रीकृष्णः अलं प्रीयते ।। ६१ ।।

**यदाऽऽवेशो ह्रासमुपैति तत्र प्रद्युम्नतो विंशगुणाधिकाः स्युः ।**
**अनादितस्ताः केशवान्नान्यसंस्था रेमे ताभिः केशवो द्वारवत्याम् ॥६२॥**

**व्यासतीर्थीया—** षोडशसहस्रभार्याः यथा यादृच्छिकास्तथा न ता इत्याह— **अनादितः** ॥ ६२-६४ ॥

**वरदराजीया—** तत्र तासु देव्या आवेशो ह्रासमल्पत्वमुपैति, तदा प्रद्युम्नतः कृष्णपुत्रात् विंशगुणाधिकाः विंशतिगुणैः विंशतिगणनाभिः अधिकाः स्युः । तदा किञ्चिद्धीनत्वमिति भावः । जाम्बवत्यास्तु सर्वदा बहु एव देव्याः आवेशः । तदपेक्षया जाम्बवती प्रधानेत्युक्तमिति भावः । इदं च तारतम्यं न स्वरूपप्रयुक्तम्, न मोक्षपर्यवसायि, स्वरूपतारतम्ये जाम्बवत्याः रमावतारत्वात् प्रद्युम्नापेक्षया च कालिन्द्यादीनां बहुगुणाधिकत्वात् । तस्मात् कृष्णस्य प्रिया इत्युक्तत्वात् अवतारे वात्सल्यप्रत्युक्तमेवेदं नैमित्तिकं तारतम्यमाचार्यैरवतारप्रसङ्गे निरूपितमिति द्रष्टव्यम् । अन्यस्मिन् पुरुषे न तिष्ठन्तीति तथा । केशवस्य नियताः स्त्रियः इति भावः । ताभिः जाम्बवत्यादिभिः ॥६२॥

**जनार्दनीया—** यदा श्रियः आवेशः तत्र तासु ह्रासमुपैति । तत्र तस्मिन् काले प्रद्युम्नतः कृष्णपुत्रप्रद्युम्नात् विंशगुणाधिकाः विंशतिगुणैः अधिकाः स्युः । अनादितः अनादिकालतः ताः जाम्बवत्याद्याः केशवान्नान्यसंस्थाः । हरिं विना अन्यपुरुषेण न रमन्ते इति भावः । ताभिरष्टमहामहिषीभिः ॥६२॥

**भावविवृतिः—** यदा तत्र तासु अवेशः, रमाया इति शेषः । ह्रासं ह्रासत्वमुपैति । शक्तो भवेदित्यर्थः । तदा आवेशस्य शक्ततादशायां षण्महिष्यः प्रद्युम्नतः कृष्णपुत्रतः तस्य कामावतारत्वात् विंशगुणाधिकास्स्युः विंशतिगुणाधिकास्स्युः । इन्द्रकामापेक्षया उमादीनां दशोत्तरत्वं उमादिभ्यो दशोत्तरत्वं जाम्बवत्यादीनां अतो विंशगुणाधिकत्वं सम्भवति । जाम्बवत्यादिभ्यो गरुडशेषरुद्राणां पञ्चगुणोत्तरत्वमिति वस्तुस्थितिः । यद्यप्यत्र विरुद्धतया प्रतीयमानानि सन्ति वाक्यानि तथापि तान्यावेशादिविवक्षया प्रवृत्तानीति नोक्तार्थबाधकानि स्युरिति ॥ **अनादितः केशवान्नान्यसंस्था इति** ॥ अनादिकालादारभ्य केशवात् केशवं विना अन्यसंस्था अन्यस्मिन् पुरुषे स्थानं भार्यात्वेन स्थिता न स्युरित्यर्थः । यतोऽत इति शेषः । ताभिः रेम इत्यर्थः । पूर्वं तासां स्वरूपं तु उक्तं गरुडपुराणे वेङ्कटाचलमाहात्म्ये—

[1]'चन्द्रपुत्री च या पूर्वं सैव जाम्बवती ह्यभूत् । पूर्वं तु पितृदेवस्य कव्यवाहस्य या सुता ॥
सैव नीला द्विरूपेण नग्नजित्कुम्भयोस्सुता । नलाख्यपितृदेवस्य पुत्री भद्रा प्रकीर्तिता ॥
अग्निष्वात्तानामकस्य या सुता पूर्वजन्मनि । अभूत्सैव.....* मित्रविन्दा प्रकीर्तिता ॥
पूर्वसर्गे सूर्यपुत्री कालिन्दीनामिका ह्यभूत् । पूर्वसर्गे बर्हिषदः पितृदेवस्य पुत्रिका ॥
सैव जाता लक्षणेति षण्महिष्यः प्रकीर्तिताः । अनादिकालतस्तास्तु नान्यत्रस्था हरिं विना ॥
शेषाच्च पञ्चगुणतो न्यूनास्ताः सम्प्रकीर्तिताः । ताभ्यो द्विगुणतो न्यूनाः शेषरुद्रविपस्त्रियः ॥'

---

१. एतच्छ्लोकाः उपलभ्यमानगरुडपुराणान्तर्गतवेङ्कटेशमाहात्म्ये नोपलभ्यन्ते ।

इत्यादि । स्वभावतः शेषादिभ्यः पञ्चगुणाधमानां जाम्बवत्यादीनां मध्ये जाम्बवत्याः शेषावतार-रामतुल्यत्वं अन्यासां तस्याः किञ्चिदूनत्वं च रमावेशनिमित्तकमिति भावः ।। ६२ ।।

**अतिविशद–** 'अनादितस्ताः केशवान्नान्यसंस्थाः' इत्यत्र जाम्बवत्यादीनां अनन्यसंस्थात्वमुच्यते । तत्तु प्राप्तपदानां अप्राप्तपदानां वा । नाद्यः । प्राप्तपदानां अन्यत्रास्थितत्वेऽपि तत्पूर्वं मनुष्यावस्थायां केशवादन्यत्रास्थितेरभावात् । अनादिपदव्याकोपात् । 'तदुपर्यपि बादरायणः सम्भवात्' (ब्र.सू.१.३.२६) इति सूत्रे मनुष्याणां सतां देवादित्वोक्तेः । देवत्वन्तु अपरोक्षज्ञानिनामेव । 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः'(गी.ता-उपोद्घात) इत्युक्तत्वात् । अनादितः दैवतपदाभाव उपपन्नः । न द्वितीयः । मनुष्यावस्थायां केशवादन्यत्रास्थितेर्वक्तुमशक्यत्वात् । किञ्च तासां तत्सम्बन्धोऽप्यनुपपन्नः । यथोक्तं व्यासेन- 'ऋते रमां जातु ममाङ्गसङ्गयोग्याङ्गना नैव सुरालयेऽपि' (ता.नि-११.१२२) इति । तस्मात् अनादितः केशवादन्यत्रास्थितिरासां दुर्निरूपैवेति चेन्न । यथा भारत्याः अनादिकाले वायोरन्यत्रास्थितिः तथा एतासामपि केशवादन्यत्रास्थितिरिति ग्रहणम् । 'त्वां नान्यो मारुताद्व्रजेत् । नियमोऽयं हरेर्यस्मादनादिर्नित्य एव तु' (ता.नि-१८.१०५) इत्यादिना पार्वत्यादिभिः भारत्या अपि वायोरन्यत्रा-स्थितेरुक्तत्वात् । भारत्याः वायोरन्यत्रास्थित्वे न काप्यनुपपत्तिरिति वाच्यम् । मुद्गलपत्नीत्वादेरनुपपत्तेः भारतादौ श्रवणात् । नच 'न त्वं यास्यसि ता देवीर्मारुतस्त्वच्छरीरगः । यास्यति त्वं तदा मूर्च्छां गतो नैव विबुध्यसे ।।' (ता.नि-१८.११४) इति ब्रह्मणैवानुपपत्तेः परिहृतत्वादिति वाच्यम् । अथापि तु मुद्गलदेहसम्बन्धादिरूपानुपपत्तेः परिहर्तुमशक्यत्वात् । देहसम्बन्धस्त्वप्रयोजकः । तस्य जडसम्बन्धत्वात् । भारत्याः जीवसम्बन्धाभावात् । वायोरन्यत्रास्थितिरुपपन्नैवेति चेत्? तर्हि अनादिकालेन तत्तज्जन्मनि पतिभूतजीवे स्थितकेशवादन्यत्रास्थितेः अत्रापि वक्तुं शक्यत्वात् नानुपपत्तिरिति सम्बन्धानुपपत्तिपरिहारः । अम्बिकाम्बालिकादिविदुरमातृषु यथा व्याससम्बन्धः तथा एतास्वपीति ग्रहणम्, एतत्सम्बन्धस्यापि अनादितः हरिणैव निर्वाह्यत्वात् ।। ६२-६६ ।।

**गूढवाक्यार्थविवृतिः–** 'अनादितः केशवान्नान्यसंस्थाः' इत्यत्र जाम्बवत्यादीनां अनन्यसंस्था उच्यते । सा तु प्राप्तपदानां वा अप्राप्तपदानां वा । नाद्यः । प्राप्तपदानां केशवादन्यत्रास्थितत्वात् तत्पूर्वमनुष्यावस्थायां केशवादन्यत्रास्थिरभावेन अनादिपदव्याकोपात् । 'तदुपर्यपि बदरायणः सम्भवात्' इति सूत्रे मनुष्याणां सतां देवादित्वोक्तेः । देवत्वं तु अपरोक्षज्ञानिनामेव 'नैव देवपदं प्राप्ता ब्रह्मदर्शनवर्जिताः' इत्युक्तत्वात् अनादित एव पदाभाव उपपन्नः । न द्वितीयः । मनुष्यावस्थायां केशवादन्यत्रास्थितेर्वक्तुं अशक्यत्वात् । यथोक्तं व्यासेन- 'ऋते रमां जातु ममाङ्गसङ्गयोग्याङ्गना नैव सुरालयेऽपि' इति । तस्मादनादितः केशवादन्यत्रास्थितिः आसां दुर्निरूपैवेति चेन्न । यथा भारत्याः अनादिकाले वायोरन्यत्रास्थितिः । तथा एतासामपि केशवादन्यत्रास्थितिरिति ग्रहणम् । 'त्वां नान्यो मारुताद् व्रजेत् । नियमोऽयं हरेर्यस्मात् अनादिर्नित्य एव तत्'[१] इत्यादिना पार्वत्यादिभिः भारत्या अपि वायोरन्यत्रास्थितेरुक्तत्वात् ।

---

१. 'एव तु' इति अतिविशदकाराणां पाठः ।

ननु भारत्याः वायोरन्यत्रास्थितत्वेन काप्यनुपपत्तिरिति वाच्यम् । मुद्गलपत्नीत्वादेवानुपपत्तेः भारतादौ श्रवणात् । 'न त्वं यास्यसि ता देवीः मारुतस्त्वच्छरीरगः । यास्यसि त्वं तदा मूर्च्छां गतो नैव विबुध्यसे ॥' इति ब्रह्मणैवानुपपत्तिः परिहृता इति न वाच्यम् । अथापि मुद्गलदेहसम्बन्धादिरूपानुपपत्तेः परिहर्तुमशक्यत्वात् । देहसम्बन्धस्त्वप्रयोजकः जीवसम्बन्ध एव प्रयोजकः । तस्याः जडसम्बन्धात् । भारत्याः जीवसम्बन्धत्वात् वायोरन्यत्रास्थितिरुपपन्ना इति चेत्? तर्हि अनादिकाले तत्तज्जन्मनि पतिभूतजीवे स्थितकेशवादन्यत्रास्थितेरत्रापि वक्तुं शक्यत्वात् नानुपपत्तिरिति ॥ ६२-६६ ॥

**ताम्रपर्णीया– ॥ अनादित इति ॥** केशवादन्यसंस्थाः नेत्युक्त्या अनादितः केशवे संस्था इति सिद्ध्यति । तासां अनादितः सामान्यापरोक्षित्वेन भगवत्संसर्गोपपत्तेरिति भावः ॥ ६२-६४ ॥

**चट्टी–** यदा श्रियः आवेशः ह्रासमुपैति तत्र तस्मिन् काले प्रद्युम्नतः श्रीकृष्णपुत्रप्रद्युम्नात् विंशतिगुणाधिकाः स्युः । अनादितो अनादिकालतः ता जाम्बवत्याद्याः केशवादन्यसंस्था न भवन्ति । हरिं विना अन्यपुरुषेण न रमन्तीति भावः । ताभिरष्टमहिषीभिः केशवः श्रीकृष्णः द्वारवत्यां रेमे ॥ ६२ ॥

**[1]एवं कृष्णो द्वारकामध्यसंस्थे गिरिं भूपा रैवतकं समाययुः ।**
**दुर्योधनाद्याः पाण्डवाश्चैव सर्वे[2] नानादेश्या ये च भूपालसङ्घाः ॥६३॥**

**वरदराजीया–** रैवतकं गिरिं नानादेश्या नानादेशाधिपतयो भूपालसङ्घाः समाययुः ॥६३॥

**जनार्दनीया–** रैवतकं रैवतनामकं गिरिम् । नानादेश्याः नानादेशोद्भवाः राजानः ॥६३॥

**भावविवृतिः– ॥ गिरिं भूपा रैवतकं समाययुरिति ॥** तत्र, कृष्णं द्रष्टुं इति शेषः ॥ ६३-६५॥

**चट्टी–** एवं श्रीकृष्णो द्वारकामध्ये संस्थे सति भूपाः रैवतकं रैवतनामकं गिरिं समाययुः । दुर्योधनाद्याः पाण्डवाश्च नानादेश्याः ये भूपालसङ्घाः ते च सर्वे समाययुरित्यन्वयः॥ ६३ ॥

**आत्मानं तान् द्रष्टुमभ्यागतान् स कृष्णो गिरौ रैवतके ददर्श ।**
**नमस्कृते सर्वनरेन्द्रमुख्यैः कृष्णे वैदर्भ्या सह दिव्यासनस्थे ॥६४॥**

---

१. 'दूतैस्तैः कृतसन्धानाः पृथिव्यां सर्वपार्थिवाः । श्रियं द्रष्टुं हृषीकेशं आजग्मुः कृष्णमन्दिरम् ॥ दुर्योधनमुखाः सर्वे धृतराष्ट्रवशानुगाः । पाण्डवप्रमुखाश्चैव धृष्टद्युम्नादयो नृपाः ॥ पाण्ड्याश्चोलकलिङ्गेशा बाह्लीका द्राविडाः खशाः । अक्षौहिणीः प्रकर्षन्तो दश चाष्टौ च भूमिपाः ॥ आजग्मुर्यादवपुरीं गोविन्दभुजपालिताम् । ते पर्वतं रैवतकं परिवार्यावनीश्वराः ॥' विष्णुपर्वणि-११०.७-१०। 'धन्याश्चर्यविषये' शान्तिपर्वणि-२०९ तम अध्यायोऽपि संवादो वर्तते ।

२. 'पाण्डवाश्चैव तत्र' इति भावविवृतिकाराणां पाठः ।

**वरदराजीया–** आत्मानं स्वात्मनं द्रष्टुं अभ्यागतान् तान् भूपान् कृष्णो ददर्श । वैदर्भ्या रुक्मिण्या सहितं दिव्यसिंहासनस्थे कृष्णे नरेन्द्रमुख्यैः नमस्कृते सति ।।६४।।

**जनार्दनीया–** वैदर्भ्या रुक्मिण्या ।।६४।।

**चट्टी–** सः श्रीकृष्णः आत्मानं स्वात्मानं द्रष्टुमभ्यागतान् तान् भूपान् रैवतके गिरौ ददर्श । वैदर्भ्या रुक्मिण्या सह दिव्यासनस्थे श्रीकृष्णे सर्वनरेन्द्रमुख्यैः नमस्कृते सति ।। ६४ ।।

**[1]एत्याऽकाशान्नारदः कृष्णमाह सर्वोत्तमस्त्वं त्वादृशो नास्ति कश्चित् ।**
**इत्याश्चर्यो धन्य इत्येव शब्दद्वये तूक्ते वासुदेवस्तमाह ।।६५।।**

**व्यासतीर्थीया–** नारद आकाशादेत्य कृष्णमाह । किमिति? 'धन्य आश्चर्य' इति । धन्याश्चर्यपदयोः कावर्थावित्यत आह– **स्वयमाश्चर्यः सर्वोत्तमः त्वादृशो नास्ति कश्चिदिति** ।। दक्षिणाभिः साकमित्यस्य नारदाय यदेतत् त्वया सर्वोत्तमत्वमुक्तम् । तद्दक्षिणाभिः सहिताज्जगत इत्यर्थः ।।६५।।

**वेदाङ्गतीर्थीया–** आकाशान्नारदः कृष्णमेत्य सर्वोत्तमस्त्वादृशः कश्चिन्नास्ति इत्येतमर्थमभिप्रेत्य त्वं धन्यः, त्वमाश्चर्य इत्याह । नारदेन धन्य आश्चर्य इति शब्दद्वय एवमुक्ते सत्येव वासुदेवस्तं दक्षिणाभिः साकमेवेत्याह । भूपाः धन्य आश्चर्य इति ऋषिणोक्तम्, किम्? दक्षिणाभिः साकमिति भवतोक्तं किमिति कृष्णं पप्रच्छुः । स नारायणः वदेति त्वदुक्तस्य मदुक्तस्य चार्थं वदेति मुनिमूचे । स नारदोऽपि मदुक्तस्य भगवदुक्तस्य चार्थं शृणुध्वमिति भूपान् आह ।। ६५-६६ ।।

**वादिराजतीर्थीया–** 'सर्वोत्तमस्त्वं त्वादृशो नास्ति कश्चित्' इति श्लोकस्यैवं योजना । त्वं सर्वोत्तमोऽसि कश्चिदपि लोके त्वादृशो नास्ति इति इत्यभिप्रायेण नारदेन कृष्णं प्रत्येव । तु पूर्वोक्त-सकलाऽऽश्चर्यधन्येभ्यः विशेषेण त्वमेवाऽऽश्चर्योऽसि धन्योऽसि च इति शब्दद्वये उक्ते सति आसमन्तात् चर्याः सुखचरणयोग्याः जीवाः यस्मात्प्रवर्तन्ते स आश्चर्यः । धं स्ववशजगद्धारकत्वेन कुत्सितवादिभिः कथ्यमानं नि नितरां अयति दूरे यापयति अष्टमरसीकरोतीति धन्य इति व्युत्पत्तिमभिप्रेत्योक्तम्– **सर्वोत्तमस्त्वं त्वादृशो नास्ति कश्चिदिति** ।। एवकारेण पार्श्वस्थां रुक्मिण्याख्यश्रियं व्यवच्छिनत्ति । वासुदेवस्तं नारदं प्रति दक्षिणाभिस्साकमेवाहं आश्चर्योऽस्मि धन्योऽस्मीत्याह । 'दक्षिणाभिः साकम्' इति वदन् कृष्णः न केवलोऽहमेव आश्चर्यादिशब्दार्थभूतसर्वोत्तमत्वादिगुणवान् किन्तु या दक्षिणाभिमानित्वात्, अर्धनारीश्वरतया स्थितस्य भगवद्देहभागस्य वामभागे स्थितायाः दक्षिणभागे इनः स्वपतिर्नारायणः सदा वर्तत इति हेतोर्वा दक्षिणापदवाच्या रुक्मिणीरूपा, इयं श्रीश्च सर्वोत्तमत्वादसदृशत्वाच्च आश्चर्या धन्या चेत्यभिप्रैति । बहुवचनं तु नानाविधयज्ञेषु दीयमानदक्षिणानां अनेकप्रकारवत्त्वेन बहुत्वात् तदभिमानितया तत्र स्थितानां अत एव दक्षिणापदवाच्यानां दक्षिणाख्यमूलरूपमांशानां बहुत्वाभिप्रायेणेति ज्ञेयम् । अत्र

१. 'तद्दुर्दिनतलं भित्वा नारदः प्रत्यदृश्यत । संवेष्टितजटाधारी वीणासक्तेन बाहुना ।।' विष्णुपर्वणि-११०.१८.

सर्वपदेन च प्रस्तुताः कूर्ममारभ्य ब्रह्मपर्यन्ताः प्रधानजीवाः वेदाभिमानिनी यज्ञाभिमानिनी चेति द्विरूपा श्रीश्च गृह्यन्ते । तत्र ब्रह्मपर्यन्तजीवेभ्य उत्तमत्वं कृष्णस्य रुक्मिण्याश्च समम् ।

इयांस्तु विशेषः । स्वस्य निरवधिकोत्तमत्वं लक्ष्म्यास्तु सावधिकोत्तमत्वमिति । वेदयज्ञाख्यलक्ष्मी-रूपद्वयात् स्वस्य निरवधिकमुत्तमत्वं लक्ष्म्यास्तु स्वरूपेषूत्तमाधमविभागायोगेऽपि रमारूपत्रयाभि-मन्यमानवेदयज्ञदक्षिणानां क्रमेणोत्तमत्वात् तदभिमानिनीनां लक्ष्मीरूपाणामपि क्रमेणोत्तमत्वोक्तिरिति ज्ञेयम् । शुष्कवेदात्तदर्थभूतविष्णुपूजारूपयज्ञस्य ज्यैष्ठ्यम् । ऋत्विक्कृतपुण्यश्रेयस्सम्पत्त्या यजमानकृत-यज्ञपूरकत्वाद्यज्ञकालीनर्त्विच्छ्रमनिवर्तकत्वाच्च दक्षिणायाः केवलयज्ञादपि ज्यैष्ठ्यम् । यथा एकस्यैव राजकुमारस्य मेषतुरगगजाख्येषु क्रमेण अधिकस्थानेषु स्थितौ तस्यैव स्थानकृतनीचोच्चभावोपाधिका नीचोच्चता द्रष्टॄणां दृशि दृश्यते । अत एव गजराजस्थितं तं महाराज इति परितो नमन्ति । तथेहापीत्येको भावः । बहिर्निष्ठवेदाभिमानितया वहिस्थितरमारूपात् भगवदङ्कगता यज्ञाभिमानिनी लक्ष्मीः स्थानाधिक्येन अधिका इत्युच्यते । ततोऽपि भगवतः देहार्धगता रमा स्थानवैशेष्यात् विशिष्टेत्युच्यत इति अपरो भावः ।। ६५-६६ ।।

**मधुसूदनीया–** ।। **इत्याश्चर्य इति** ।। इत्यभिप्रायेणेत्यर्थः । प्रथमत आगत्य त्वं धन्यस्त्वमाश्चर्य इति कृष्णं प्रति नारदेनोक्तम् । तच्छब्दद्वयस्याऽभिप्रायः 'सर्वोत्तमस्त्वादृशो नास्ति कश्चित्' इति भगवत्पादैरुच्यत इति ज्ञेयम् । तत्र 'आश्चर्य' इत्यस्य 'त्वादृशो नास्ति कश्चित्' इति 'धन्य' इत्यस्य 'सर्वोत्तम' इति च ज्ञेयम् । 'अनपेक्षो गुणैः पूर्णो धन्य इत्युच्यते बुधैः'(भा.ता-४.२३.२५) इति शब्दनिर्णयवचनात् गुणपरिपूर्णत्वस्य धन्यशब्दार्थत्वेऽपि तस्य सर्वोत्तमत्वाभावे असम्भवात् । गुणपूर्ण एव सर्वोत्तम इत्यभिप्रायेण 'गुणपूर्णः' इत्यनुक्त्वा 'सर्वोत्तमः' इत्युक्तम् ।। ६५-६८ ।।

**वरदराजीया–** नारदो मुनिः आकाशात् एत्य आगत्य कृष्णमाह । केनाभिप्रायेण स त्वं सर्वोत्तमः त्वादृशः त्वत्सदृशः कश्चिदपि नास्तीत्यर्थद्वयाभिप्रायेण 'त्वं धन्यः आश्चर्यश्च' इत्येवं शब्दद्वये उक्ते सत्येव वासुदेवः कृष्णः तं नारदमाह ।।६५।।

**जनार्दनीया–** नारदः आकाशात् कृष्णमेत्य, 'त्वं सर्वोत्तमः, त्वादृशः कश्चिन्नास्ति' इत्येतदर्थमभिप्रेत्य, त्वं धन्यस्त्वमाश्चर्य इत्याह । नारदेन धन्यः आश्चर्य इति शब्दद्वये उक्ते सत्येव, वासुदेवः तं नारदम् ।।६५।।

**अनन्तभट्टीया–** धन्याश्चर्यशब्दयोरर्थमाह– **सर्वोत्तमस्त्वं त्वादृशो नास्तीति** ।। ६५-६६ ।।

**ताम्रपर्णीया–** ।। **सर्वोत्तमस्त्वमिति** ।। त्वं सर्वोत्तमः कश्चिदपि त्वादृशो नास्तीत्यभिप्रायेण 'त्वं धन्यः त्वमाश्चर्यः' इति शब्दद्वये उक्ते सतीति योजना । धन्यः कृतार्थः पूर्णः निरवधिकपूर्णत्वमेव सर्वोत्तमत्वम् । आश्चर्यशब्दप्रवृत्तिनिमित्तं च दुर्लभत्वम् । यथोक्तं गीताभाष्ये- 'आश्चर्यवदिति दुर्लभत्वेनेत्यर्थः । तद्धि आश्चर्यं लोक' (२.२९) इति । दुर्लभत्वं चेश्वरस्य समराहित्येनेति भावः ।। ६५-६७ ।।

**चट्टी–** नारदः आकाशात् श्रीकृष्णमेत्य त्वं सर्वोत्तमः त्वादृशः कश्चिन्नास्ति इत्येवमर्थमभिप्रेत्य 'त्वं धन्यः, त्वमाश्चर्यः' इत्याह । नारदेनेतिशब्दद्वये उक्ते सति वासुदेवः श्रीकृष्णः दक्षिणाभिस्साकं इत्येव धन्यः आश्चर्यश्चास्मीति नारदमाह ।। ६५ ।।

**दक्षिणाभिः साकमित्येव कृष्णं पप्रच्छुरेतत् किमिति स्म भूपाः ।**
**नारायणो मुनिमूचे वदेति शृणुध्वमित्याह स नारदोऽपि ।।६६।।**

**व्यासतीर्थीया–** धन्याश्चर्यपदाभ्यां नारदेन किमुक्तम्, 'दक्षिणाभिः साकम्' इति त्वया च किमुक्तमिति स्म भूपाः पप्रच्छुः । मद्वाक्यार्थं च त्वद्वाक्यार्थं च वद नारद इत्युक्तो धन्याश्चर्य इत्याद्युक्तवाक्यार्थं तावदाभाष्याह– **शृणुध्वमित्यादिना** ।। ६६ ।।

**वरदराजीया–** किमिति? दक्षिणाभिः साकमिति दक्षिणाभिः साकं धन्यः आश्चर्यश्चास्मि इति कृष्णेनोक्तमिति भावः । धन्याश्चर्यशब्दयोरभिप्रेतोऽर्थ आचार्यैर्दर्शितः 'सर्वोत्तमस्त्वम्, त्वादृशो नास्ति कश्चित्' इति । सर्वोत्तमत्वाद् धन्यः सदृशरहितत्वात् आश्चर्यः इत्युक्तं नारदेनेत्यर्थः । भूपाः कृष्णं पप्रच्छुः । किमिति? एतत् किमिति नारदवचनं त्वद्वचनं च किं केनाभिप्रायेणेत्यर्थः । नारायणो कृष्णः मुनिं नारदं त्वं वदेति वृत्तान्तं भूपेभ्यो ब्रूहि इति उवाचेत्यर्थः । हे भूपाः! वृत्तान्तं शृणुध्वं इत्याह नारदोऽपि ।।६६।।

**जनार्दनीया–** दक्षिणाभिः साकमित्येवाह । भूपाः 'धन्यः आश्चर्यः' इति ऋषिणोक्तं किम्? 'दक्षिणाभिः साकम्' इति त्वयोक्तं किमिति कृष्णं पप्रच्छुः स्म । नारायणः कृष्णः त्वदुक्तस्य मदुक्तस्य चार्थं वदेति मुनिमूचे । स नारदोऽपि मदुक्तस्य भगवदुक्तस्य च मया वक्ष्यमाणमर्थं यूयं शृणुध्वमिति भूपानाह ।।६६।।

**भावविवृतिः–** ।। **दक्षिणाभिः साकमिति** ।। मायाजयाद्यशेषरमावताररूपाणां यदा यदा रतिपात्रता तदा दक्षिणात्वमस्तीति सूचनाय 'दक्षिणाभिः' इति बहुवचनम् ।। ६६ ।।

**चट्टी–** भूपाः नारदोक्तं च तं प्रति त्वयोक्तं च तत् किं केनाभिप्रायेणेति श्रीकृष्णं पप्रच्छुः । श्रीनारायाणः कृष्णः त्वदुक्तस्य मदुक्तस्य चार्थं वदेति मुनिं नारदमूचे । सः नारदोऽपि मया वक्ष्यमाणमर्थं शृणुध्वमिति भूपान् आह ।। ६६ ।।

**[१]कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्ति समस्त्वेति[२] ।**
**ऊचे गङ्गामुत्तमां सा जलेशमुमामूचे पृथिवीनामिकां सः ।।६७।।**

---

१. धन्योपाख्यानम् । हरिवंशे विष्णुपर्वणि- अध्याय-११०.

२. 'नास्त्यधिकस्त्वेति' इति पाठो गूढवाक्यार्थविवृतौ । अतिविशदकाराणां पाठोऽपि तथैव ।

**व्यासतीर्थीया–** कूर्मो न प्राकृतः । एवं त्वमेव धन्याश्चर्य इत्युक्तः । (सः जलेशयः) गङ्गां स्वाश्रयत्वात् स्वोत्तमामूचे । अत उत्तमस्य भावान्नाहं सर्वोत्तमो अत एव नाश्चर्य इति भावः । सा जलेशं प्राप्य उत्तममूचे । अभिप्रायः पूर्वोक्तो अनुसन्धेयः । त्वमेवाश्चर्यो धन्य इत्युक्तः स च जलेशः स्वाश्रयत्वादात्मन उत्तमां पृथिवीनामिकामुमामूचे ।। ६७ ।।

**वेदाङ्गतीर्थीया–** तत्रादौ स्वोक्तशब्दद्वयार्थमाह– **कूर्म इत्यादिना** ।। मया विष्णुपद्यां दृष्टः त्वमुत्तमः तव समो नास्ति इत्यभिप्रायेण त्वं धन्यः त्वमाश्चर्यः इत्युक्तः कूर्मः उपलक्षणमेतत् धन्यामाश्चर्याम् ऊचे । मम सा जलेशं धन्यमाश्चर्यमूचे । स जलेशः उमां धन्यामाश्चर्यामूचे । जलेशः पृथिवीं धन्यामाश्चर्यामूच इति ग्रन्थान्तराभिप्रायमाह– **पृथिवीनामिकामिति** ।। ६७ ।।

**वादिराजतीर्थीया–** 'कूर्मो दृष्टो विष्णुपद्यां मयोक्तः' इत्यादिनारदवाक्यस्यैवं योजना । विष्णुपद्यां गङ्गायां मया दृष्टः कूर्मः त्वमुत्तमोऽसि तव समो नास्तीति च भावेनोक्तः आश्चर्योऽसि धन्योऽसीत्युक्तः । एवंवदतोनारदस्यकूर्मःस्वावरसर्वोत्तमइत्येवाभिसन्धिः ।गङ्गातोऽप्यवरस्यनिरवधिकसर्वोत्तमत्वायोगात् । साक्षात्कृतपरमतत्त्वस्य नारदस्य भ्रमायोगाच्च । अतः कूर्मोऽसौ गङ्गातोऽप्यवरः तारतम्यपूर्वावधिभूत-पुष्कर एवेति ज्ञेयम् । एवमुक्ते सति कूर्मः स्वाधारत्वाद्गङ्गैव मत्तोऽप्याश्चर्या धन्या चेति भावेन गङ्गामेवोत्तमामूचे । तदा गङ्गामागत्य त्वमाश्चर्याऽसि धन्यासीत्यब्रुवम् । तदा सा गङ्गा स्वपतित्वाद्वरुणः मत्त आश्चर्यो धन्यश्चेति भावेन जलेशमुत्तममूचे । ततोऽहं वरुणमुपेत्य त्वमाश्चर्योऽसि धन्योऽसीत्यब्रुवम् । तदा स वरुणः ममापि मातृस्थानीयत्वात् पृथिवी उत्तमैव मत्तोऽप्याश्चर्या धन्या चेति भावेन पृथिवीनामिकामुमामूचे । क्वचिद् ग्रन्थे पृथिवीमाहेत्यप्यस्ति । तस्य तात्पर्यकथनाय 'पृथिवीनामिकाम्' इत्युक्तम् । या मादृशा देवताः सन्ति सर्वशः सर्वास्ता देवताः प्रथितत्वात् पृथिव्या पृथिवीनाम्न्या उमया धृताः । अतः सा उत्तमेति वरुणस्य भावः । ततोऽहमुमामभ्येत्य त्वमाश्चर्याऽसि धन्यासीत्यब्रुवम् । तदा सा उमाऽपि मम पतित्वात्पतिसमत्वाच्च शिवशेषगरुडा एव मत्तोऽप्याश्चर्याः धन्याश्चेति भावेन परावनात् पर्वतनामधेयान् शिवशेषगरुडाख्यदेवानुत्तमानाह । परेषां स्वावराणामिन्द्रादीनां अवनाद्रक्षणात् पर्वतनामधेयानिति वदता परपदोपपदात् 'अव रक्षणे' इति धातोः, क्तप्रत्यये कृते निरुक्तत्वादुपपदान्तिमस्य धातोरादिमस्य चाकारस्य नाशे श्लिष्टोच्चारणे कृते सति पर्वतशब्दो निष्पन्न इति सूचितम् ।। ६७-६८ ।।

**वरदराजीया–** मया विष्णुपद्यां गङ्गायां कश्चिद्विशिष्टः कूर्मः दृष्टः । स च त्वमुत्तमः, तवाधिकः सदृशश्च इत्यपि सर्वत्र द्रष्टव्यम् । नास्तीत्युक्तः स्वापेक्षया गङ्गां उत्तमामूचे । गङ्गामाश्रित्याहं तिष्ठामीति तस्मात् गङ्गा अत्युत्तमेति कूर्मेण उक्तमिति भावः । सा गङ्गा जलेशं वरुणं उत्तमं ऊचे । स्वपतिं स्वागम्यं वरुणं उत्तममुक्तवतीत्यर्थः । स जलेशः पृथिवीं स्वाश्रयत्वेन उत्तममूचे । तत्र पृथिव्या वरुणावरत्वेन तदुत्तमत्वस्य प्रमाणविरुद्धत्वात् मूलभारतोक्तस्य पृथिवीशब्दस्य अपूर्वमर्थं आह आचार्यः– **उमामिति**।। भारते पृथिवीशब्देन उमैव विवक्षिता । न तु भूदेवता इति भावः ।।६७।।

**जनार्दनीया–** तत्रादौ 'धन्य आश्चर्यः' इति स्वोक्तशब्दद्वयार्थमाह– **कूर्म इत्यादिना** ।। मया विष्णुपद्यां कश्चन कूर्मो दृष्टः । कूर्मो नाम गङ्गातोयचरः गङ्गातोऽवरः कश्चन देवः । त्वमुत्तमस्तव समो नास्तीत्यभिप्रायेण त्वं धन्यस्त्वमाश्चर्य इति मयोक्तः । कूर्मः गङ्गामुत्तमामूचे । उपलक्षणमेतत्। आश्चर्यमित्यपि ग्राह्यम् । मयोक्ता सा गङ्गा जलेशं वरुणं धन्यमाश्चर्यमूचे । स जलेशः उमां धन्यां आश्चर्यमूचे । जलेशः पृथिवीं धन्यामाश्चर्यमूच इति ग्रन्थान्तरस्याभिप्रायमाह– **पृथिवीनामिकामिति** ।।६७।।

**अनन्तभट्टीया–** नारदेन कूर्मं प्रति त्वमुत्तम इत्युक्ते स गङ्गामुत्तमामाह । सा समुद्रम्, स च पृथ्वीम्, सा पर्वतान्, ते ब्रह्माणम्, स च वेदान्, ते च यज्ञम् इत्यादिका भारतकथाऽस्ति । तस्य तात्पर्यमाह– **कूर्म इत्यादिना** ।। कूर्मो न प्राकृतः । गङ्गां स्वाश्रयामुत्तमामूचे । मत्तः उत्तमस्य भावात् नाहं सर्वोत्तमः अत एव नाश्चर्य इति भावः । एवमुत्तरत्रापि सा गङ्गा जलेशम् । स्वप्राप्यत्वात् उत्तमम् । स उमामूचे । साऽपि पर्वतानाह ।। ६७ ।।

**भावविवृतिः–** विष्णुपद्यां दृष्टः कूर्मः बुधः मातृशापात् कूर्मो बभूवेति वदन्ति ।। ६७-६९ ।।

**अतिविशद–** 'कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्त्यधिकस्तवेति । ऊचे गङ्गामुत्तमां सा जलेशमुमामूचे पृथिवीनामिकां सः' इत्यत्र 'उमामूचे पृथिवीनामिकां सः' इत्यत्र पृथिवीशब्देनोमा गृह्यते । तदनुपपन्नम् । तदुत्तमसर्वपरित्यागेनैतद्ग्रहणे कारणाभावादिति चेन्न । 'सौपर्णी वारुणी तथा । उमेति चार्थमानिन्यस्तिस्रो द्विद्व्येकदेवताः ।।' इति (१.७.१०) काठकभाष्ये उमायाः गन्धाभिमानित्वस्योक्तेः तद्ग्रहणस्य युक्तत्वात् ।। ६७-६८ ।।[१]

**गूढवाक्यार्थविवृतिः–** 'कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्त्यधिकस्तवेति' इत्यत्र 'कूर्मः कर्माभिमानी पुष्करः' इति केचित् । तदभिप्रायस्तु कूर्ममारभ्य विष्णुपर्यन्तं तारतम्यस्यात्रोच्यमानत्वात् पुष्करस्य सर्वावरत्वात् स एवात्र विवक्षित इति । अन्ये तु- ''कश्चन विशिष्टः कूर्म' इति । अपरे तु- 'बुध' इति । कुत इत्यतः तस्य जलाभिमानित्वात्'' इति वदन्ति । 'गङ्गायां स्नानकाले तु नारदेन महात्मना । पृष्टः प्रोवाच पर्जन्यः कूर्मरूपी सनातनम् ।।' *..तारतम्यमित्यर्थः इति केचित् । तत्तु सर्वप्रमाणविरुद्धम् । पर्जन्यापेक्षया गङ्गाया उत्तमत्वाभावात् । 'वारुणी च' इत्यनुव्याख्यानेन 'पर्जन्यो वारुणी' इति सुधायाश्च समत्वावगमात् ।। ६७-१४० ।।

---

१. अतिविशद– 'कूर्मो दृष्टो विष्णुपद्यां मयोक्तस्त्वमुत्तमो नास्त्यधिकस्तवेति' इत्यत्र 'कूर्मः कर्माभिमानी पुष्करः' इति केचित् । तदभिप्रायस्तु कूर्ममारभ्य विष्णुपर्यन्तं तारतम्यस्यात्रोच्यमानत्वात् पुष्करस्य सर्वदेवावरत्वात् स एवात्र विवक्षित इति । अन्ये तु कश्चन विशिष्टः कूर्मेति । अपरे तु बुध इति, कुत इत्यत आह तस्य जलाभिमानित्वात् जले दृष्टत्वाच्चेति वदन्ति । केचित्तु- 'गङ्गायां स्नानकाले तु नारदेन महात्मना। दृष्टः प्रोवाच पर्जन्यः कूर्मरूपी सनातनम् ।।' तारतम्यमित्यर्थः । तत्र सर्वप्रमाणविरुद्धम् । पर्जन्यापेक्षया गङ्गाया उत्तमत्वाभावात् । वारुणी च । इत्यनुव्याख्यानेन 'पर्जन्यो वारुणी' इति सुधया च समत्वावगमाद्गङ्गाया इति ।। ६७-६८ ।। इति मातृकान्तरपाठः ।

**चट्टी–** अत्रादौ 'धन्याश्चर्यः' इति स्वोक्तशब्दद्वयार्थमाह– **कूर्म इत्यादिना** ।। मया विष्णुपद्यां गङ्गायां कश्चन कूर्मो दृष्टः । कूर्मो नाम गङ्गायाः अवरः कश्चन देवः । त्वमुत्तमः तव अधिकः समो नास्तीत्यभिप्रायेण त्वं धन्यः त्वमाश्चर्य इति मयोक्तः कूर्मो गङ्गामुत्तमामूचे । उपलक्षणमेतत् । अश्चर्यमित्यपि ग्राह्यम् । मयोक्ता सा गङ्गा जलेशं वरुणं धन्यमाश्चर्यमूचे । सः जलेशः उमां धन्यामाश्चर्यामूचे ।। ६७ ।।

**या मादृशा देवताः सर्वशस्ता धृतास्तया प्रथितत्वात् पृथिव्या ।**
**शिवं शेषं गरुडं चाऽह साऽपि [1]परावनात् पर्वतनामधेयान् ।।६८।।**

**व्यासतीर्थीया–** जलेशो उमां कथमित्यत आह– **या इति** ।। केन निमित्तेनोमा पृथिवी इत्युक्ता इत्यत उक्तम्– **प्रथितत्वात् पृथिव्या इति** ।। त्वमेव धन्या आश्चर्या इत्युक्ता सा पृथिवी स्वाश्रयत्वात् स्वोत्तमत्वात् पर्वतानाह । के ते पर्वता इत्यत उक्तम्– **शेषमित्यादि** ।। शेषादयः पर्वता इति कस्मादुक्ता इत्यत उक्तम्– **परावनात् परमज्ञानित्वादिति** ।। वाधातोः परेत्युपपदे कृते 'वर्णागमो वर्णविपर्ययश्च तथा परौ वर्णविकारनाशौ' इत्यनुशासनात् दीर्घस्य ह्रस्वागमे कृते उपपदाकारस्य च नाशे सति क्तप्रत्यये च कृते पर्वत इति भवति ।। ६८ ।।

**वेदाङ्गतीर्थीया–** सा त्वत्तः कथमुत्तमेत्यत आह– **या इति** ।। या मादृशा देवतास्ता सर्वशः तया उमया धृताः । तस्मात् सा मत्त उत्तमेति भावः । उमायां पृथिवीशब्दप्रवृत्तिनिमित्तमाह– **प्रथितत्वादिति** ।। प्रसिद्धत्वात् पृथिव्या पृथिवीनाम्न्या तया इति सम्बन्धः । सापि त्वं धन्येत्यादि मयोक्ताप्युमा शिवं शेषं गरुडं च धन्यानाश्चर्यानाह । पृथिवी स्वाश्रयान् पर्वतान् धन्यानाहेति ग्रन्थान्तरवचनाभिप्रायं पर्वतशब्दनिरुक्तिपूर्वकमाह– **परावनादिति** । परस्य भगवतः आ सम्यक् वानात् ज्ञानात् । 'वा गतिगन्धनयोः' इति धातुःल्युडन्तः । गत्यर्थानां ज्ञानार्थत्वाद्वानं ज्ञानम् । परेषामन्येषामुमादिस्वावराणामा सम्यक् अवनात् रक्षणादिति वा । 'अव रक्षणे' इति धातुः । पर्वतशब्दस्तु परशब्दोपपदाभ्यां 'वा गतिगन्धनयोः' 'अव रक्षणे' इत्याभ्यां धातुभ्यां क्तप्रत्ययान्तः । 'वर्णागमो वर्णविपर्ययश्च' इत्यनुशासनात् पर्वत इति रूपसिद्धिः ।।६८।।

**वरदराजीया–** या मादृशा वरुणसदृशा देवताः ताः सर्वशः सर्वास्तया उमयाः धृताः प्रथितत्वात् प्रसिद्धत्वात् पृथिवीशब्दवाच्यया उमया धृता तस्मिन् पृथिवी शब्दवाच्यायाः उमायाः वरुणादुत्तमत्वं युक्तमेवेति भावः । सा उमा पर्वतान् स्वोत्तमानाहेति भारते । तत्र प्रसिद्धपर्वतानां उत्तमत्वं न घटते इत्यतः पर्वतशब्दस्य अलौकिकमर्थमाह– **शिवमिति** ।। सा उमापि, परेषां उमादीनां अवनाद् रक्षणात् निमित्तात् पर्वतशब्दवाच्यान् शिवं शेषं गरुडं चेति त्रीन् स्वोत्तमानाह– **परावनादिति** ।। 'परज्ञानात्' इति पाठे उत्तमज्ञानान्निमित्तादित्यर्थः । परशब्दोपपदात् वाते रूपमेतत् ।।६८।।

---

१. 'परज्ञानात्' इति वरदराजीये पाठान्तरम् । 'परावानात्' इति ताम्रपर्णी-भारतश्रीपाठः । तथा चट्टीपाठान्तरञ्च। 'परावनात्' इति ताम्रपर्णी-भारतश्रीपाठान्तरम् ।

**जनार्दनीया–** सा पृथिवीनामिका उमा त्वत्तः कथमुत्तमेत्यत आह– **या इति** ।। या मादृशाः मत्सदृश्यो देवताः ताः सर्वशः सर्वाः मदुत्तमाश्चन्द्रादीन्द्रान्ताश्चेत्यर्थः । तया उमया धृताः । तस्मात् सा मदुत्तमेति भावः । उमायां पृथिवीशब्दप्रवृत्तिनिमित्तमाह– **प्रथितत्वादिति** ।। प्रथितत्वात् प्रसिद्धत्वात् पृथिव्या पृथिवीनाम्न्या तया उमया देवताः धृता इत्यन्वयः । सा उमापि मया त्वं धन्याश्चर्येत्युक्ता शिवं शेषं गरुडं च धन्यानाश्चर्यानाह । पृथिवी स्वाश्रयान् पर्वतान् धन्याश्चर्यानाहेति ग्रन्थान्तरवचनाभिप्रायं पर्वतशब्दनिरुक्तिपूर्वकमाह– **परावनादिति** ।। परावनात् परः परमात्मा, तस्य आ वनात् ज्ञानात् 'वा गतिगन्धनयोः' इति धातुः ल्युडन्तः । गत्यर्थानां ज्ञानार्थत्वात् वनं ज्ञानम् । परेषां अन्येषां उमादिस्वावराणां आ सम्यगवनात् रक्षणादिति वा । 'अव रक्षणे' इति धातुः । पर्वतशब्दस्तु परशब्दोपपदाभ्यां 'वा गतिगन्धनयोः' 'अव रक्षणे' इत्येताभ्यां धातुभ्यां क्तप्रत्ययान्तः । 'वर्णागमो वर्णविपर्ययश्च' इत्यनुशासनात् पर्वत इति रूपसिद्धिर्द्रष्टव्या ।।६८।।

**अनन्तभट्टीया–** के ते पर्वता इत्यत आह– **शेषमित्यादिना** ।। परावनात् कारणात् उत्कृष्ट-ज्ञानित्वादित्यर्थः ।। परपूर्वधातोक्तेः रूपम्– **पर्वत इति** ।।६८।।

**ताम्रपर्णीया–** ।। **या मादृशा इति** ।। देवतात्वेन मत्सदृशा इत्यर्थः ।। **परावानादिति** ।। परस्य भगवत आसम्यक् वानाद् ज्ञानादित्यर्थः । 'परावनात्' इति केचित्पठन्ति । तदा परेषां उत्तमदेवानां अवनाद् रक्षणादित्यर्थः ।। ६८ ।।

**भारतश्री–** परावानान्निमित्तात् पर्वतनामधेयाः । 'परावनात्' इति पाठेऽपि अयमेवार्थः । अवनमेव आवनम् ।। ६८ ।।

**चट्टी–** जलेशः पृथिवीं धन्यामाश्चर्यामूचे इति ग्रन्थान्तरस्याभिप्रायमाह । पृथिवीनामिका उमा त्वत्तः कथमुत्तमेत्यत आह– **या इति** ।। याः मादृशाः मत्सदृशाः देवताः तास्सर्वशः सर्वाः मदुत्तमाः इन्द्रादि-चन्द्रान्ताः चेत्यर्थः । तया उमया धृताः तस्मात् सा उत्तमेति भावः । उमायां पृथिवीशब्दप्रवृत्तिनिमित्तमाह– **प्रथितत्वादिति** ।। प्रथितत्वात् प्रसिद्धत्वात् पृथिव्या पृथिवीनाम्न्या तया उमया देवता धृता इत्यन्वयः । उमापि मया त्वं धन्या आश्चर्या इत्युक्ता सती शिवं शेषं गरुडं च धन्यान् अश्चर्यांश्चाह । पृथिवी स्वाश्रयान् पर्वतान् धन्यान् आश्चर्यान् आहेति ग्रन्थान्तरवचनाभिप्रायं पर्वतशब्दनिरुक्तिपूर्वकमाह– **परावनादिति**।। परेषां उमादीनां अवनाद् रक्षणान्निमित्तात् पर्वतशब्दवाच्यान् । 'परावानात्' इति पाठे परः परमात्मात् तस्य आ सम्यक् वानात् ज्ञानात् । 'वा गतिगन्धनयोः' इति धातुः । उत्तमज्ञानान्निमित्तादित्यर्थः । पर्वतनामधेयान् शिवं शेषं च गरुडं च धन्यान् आश्चर्यान् आहेति सम्बन्धः ।। ६८ ।।

**तैरेवाहं मत्समाश्चैव देव्यो ध्रियन्त इत्येव त ऊचिरेऽथ ।**
**ब्रह्माणमेवोत्तममाह सोऽपि वेदात्मिकां प्रकृतिं विष्णुपत्नीम् ।।६९।।**

**व्यासतीर्थीया–** शेषादयः त्वत्त उत्तमाः कथमित्यत आह– **तैरेवाहमिति** ।। अथ यूयमेव धन्या आश्चर्याश्चेत्युक्तास्ते ब्रह्माणं स्वोत्तममूचिरे । त्वं धन्य आश्चर्य इत्युक्तः । सोऽपि स्वोत्तमान् वेदानाह । वेदा नाम के इत्यत उक्तम्– **वेदात्मिकां प्रकृतिमिति** ।। प्रकृतीनां बहुत्वात् 'विष्णुपत्नीम्' इत्युक्तम् ।।६९।।

**वेदाङ्गतीर्थीया–** शेषादयः कथं त्वत्त उत्तमा इत्यत आह– **तैरेवेति** ।। अहं मत्समा देव्यः वरुणादयश्च तैः शेषादिभिरेव ध्रियन्त इत्येव हेतोः । मत्त उत्तमाः । अथ तानपि प्राप्य यूयं धन्या इत्यादि मदुक्ताः ते शेषादयः ब्रह्माणमेवोत्तमं धन्यमाश्चर्यं चोचिरे । सोऽपि वेदात्मिकां वेदाभिमानिनीम् अत एव वेदनाम्नीं विष्णुपत्नीं प्रकृतिं धन्यामाश्चर्यामूचे । 'वेदात्मिकाम्' इत्यनेन 'ब्रह्मा वेदानाह' इत्यस्य गतिरुक्ता भवति ।।६९।।

**वादिराजतीर्थीया–** तैः शिवशेषगरुडैरेव अहं मत्समा देव्यश्च ध्रियन्त इति हेतोः तानेव स्वोत्तमानाहेति पूर्वेण सम्बन्धः । ततोऽहं तानपि गत्वा यूयमाश्चर्या धन्याश्चेत्यब्रुवम् । अथ ते स्वपितृत्वादस्मत्तोऽपि ब्रह्मा आश्चर्यो धन्यश्चेति भावेन ब्राह्मणजातेः प्रवर्तकत्वात् ब्राह्मणशब्दवाच्यं ब्रह्माणमेवोत्तममूचिरे । ततोऽहं ब्रह्माणं दृष्ट्वा त्वमाश्चर्योऽसि धन्योऽसीत्यब्रुवम् । सोऽपि मम च मातृत्वात् वेदाभिमानिनी श्रीरेव मत्तोऽप्याश्चर्या धन्या चेति भावेन वेदात्मिकां प्रकृतिं प्रकृतिनाम्नीं विष्णुपत्नीं उत्तमामाह ।।६९।।

**मधुसूदनीया–** वेदात्मिकां प्रकृतिमित्यादि लक्ष्म्या अपि अधिष्ठानभेदात् तारतम्यस्य सत्वात् वेदात्मिकामित्याद्युक्तिर्घटत इति भावः । एकादशस्कन्धतात्पर्ये- 'सर्ववेदाऽभिमानिन्यो देव्यो लक्ष्मीस्ततोऽधिका । वेदाभिमानिनी साक्षात् सा विष्णोर्दूरवत्स्थिता ।। यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता । हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु ।। उत्तरोत्तरतस्सापि विशिष्टा दक्षिणा सुखे ।।' (भा.ता-११.१६.१३.) इति वचनात् ।। ६९-७७ ।।

**वरदराजीया–** उत्तमत्वे हेतुमाह– **तैरेवेति** ।। तैः पर्वतशब्दवाच्यैः शिवादिभिः एवाहं उमा मत्समाश्च देव्यः । बहुरूपत्वात् बहुवचनम् । ध्रियन्ते धारणपोषणादिना रक्ष्यन्ते । अतः पर्वतशब्दवाच्याः शिवाद्याः । अत उत्तमा इति पृथिव्योक्तमित्यर्थः । ते शिवाद्याः अथ अनन्तरं ब्रह्माणं चतुर्मुखं स्वोत्तममूचिरे । सोऽपि ब्रह्मा वेदान् स्वोत्तमानूचे आहेति भारतम् । तत्र वेदानां ब्रह्मोत्तमत्वायोगात् वेदशब्दतात्पर्यार्थं आह– **वेदात्मिकामिति** ।। अचेतनप्रकृतिभ्रमं निवारयति– **विष्णुपत्नीमिति** ।।६९।।

**जनार्दनीया–** शेषादयः कथं त्वदुत्तमा इत्यत आह– **तैरिति** ।। अहं मत्समाः देव्यो । वारुण्याः बहुरूपत्वाद्बहुवचनम् । अथ कान्तिर्ग्राह्या । तैः शेषादिभिरेव ध्रियन्ते धारणपोषणाभ्यां रक्ष्यन्ते इत्येव हेतोः ते मदुत्तमाः । अथाहं तानपि प्राप्य यूयं धन्या आश्चर्या इति अवदम् । एवं मयोक्तास्ते शेषादयः ब्रह्माणमेवोत्तमं धन्यं आश्चर्यमाहुः । 'त्वं धन्यस्त्वमाश्चर्यः' इति मदुक्तः सोऽपि वेदात्मिकां वेदाभिमानिनीं

अत एव वेदनाम्नीं विष्णुपत्नीं प्रकृतिं धन्यामाश्चर्यामूचे । 'वेदात्मिकाम्' इत्यनेन 'ब्रह्मा वेदानाह' इत्युक्तस्य गतिरुक्ता भवति ।।६९।।

**ताम्रपर्णीया–** ।। **मत्समा इति** ।। यद्यपि सौपर्णीवारुण्यावेव उमासमे तथापि तत्पदयोग्यविवक्षया वा अल्पत्वाविवक्षया षण्महिषीणामपि साम्यविवक्षया वा देवतात्वेनेतरदेवीनामपि साम्यविवक्षया वा बहुवचनम् ।। ६९ ।।

**भावचन्द्रिका–** ।। **तैरिति** ।। तारतम्यप्रसङ्गात् अहमिति पार्वत्युक्त्या वारुणीसौपर्ण्यौ । द्वयोरपि अविशिष्टत्वात् । मत्समा इति बहुवचनम् । श्रीरित्याख्यमित्युक्तश्रीरूपाभिप्रायम् । यद्वा..* इत्युक्तमित्यभिप्रायः । तस्याश्च वारुण्यपेक्षया न्यूनत्वेऽपि एकपतिभार्यात्वेन साम्यं ज्ञेयम् । द्विवचनार्थबहुवचनम् । 'चाप्योऽथो' इत्यत्र वरुणसाम्यस्योक्तावपि 'देवता' इत्युक्त्या देवतानां स्वाधमानां स्वोत्तमाधीनत्वोक्तिवद् देवीत्वेन समानां स्वोत्तमाधीनत्वं वा 'साऽपि' इत्यादि । यद्यपि लक्ष्म्या एकत्वात् अनुसन्धानसंश्लेशविशेषयोरप्रयोजकत्वात् परस्परसुखानुसन्धानस्यापि प्राप्तेः सुखानुभवे विशेषाभावात् देहस्याप्राकृतत्वेन स्वरूपत्वात्..* त्वात् उत्तमत्वं दुर्निरूपम् । तथाप्येकस्यैव देवदत्तस्योपादाने..* अवयवावच्छेदेन चन्दनकर्पूराद्यनुलेपने साधनातिशयात् । सुखातिशयवत् विशेषवलवदवस्थात्वादिव्यवस्थापितेष्वङ्गस्थत्वादिव्यञ्जकातिशयेन सुखाभिव्यक्त्यतिशयमादायोत्तरमादाय उत्तमत्वमुक्तं वेदितव्यम् ।।६९।।

**अतिविशद–** 'तैरेवाहं मत्समा देव्यो ध्रियन्ते' इत्यत्र पार्वत्या 'पर्वतनामभिः शिवशेषगरुडैः अहं पार्वती मत्समाश्चैव देव्यो ध्रियन्त' इत्युच्यते । इदमनुपपन्नम् । गरुडशेषस्त्रीव्यतिरिक्तान्यस्त्रीणां पार्वतीसमानत्वात् । पार्वत्या अहमित्यनेन लब्धत्वात् बहुवचनमनुपपन्नम् । तस्मात् कथमेतदिति चेत् । अत्र केचित्- तद्गणस्थानां अन्यासां भावादिति । तदप्यनुपपन्नम् । अन्यगणस्थानां अन्यगणस्थनियामकत्वेऽतिप्रसङ्गात् । वस्तुतस्तु अहं अहङ्काराभिमानिनं शिवं शेषं गरुडं पर्वतनामधेयानाहेत्यर्थः । अथवा रुद्रादिनीचत्वेन मया समाः सौपर्णीवारुणीजाम्ववत्याद्या देव्य इति । यथोक्तमेकादशस्कन्धे- 'पञ्चभूतात्मकत्वेन [1]समानेष्वपि वस्तुषु' (भा.ता-११.२१.३) इति पञ्चभूतात्मकत्वेन यथा समानत्वं वस्तूनां तथा रुद्रादिनीचत्वेन पार्वत्यादिसमानत्वं जाम्ववत्यादीनामित्यर्थ इति । यद्वा अहं पर्वती समे समाने सौपर्णीवारुण्यौ अहश्च समे च मत्समाः । अयमभिप्रायः । न केवलं अहं पार्वती तैर्धृताः किन्तु या समाने सौपर्णीवारुण्यौ याभ्यः नीचे ताश्चापि जाम्ववत्याद्याः देव्यः तैरेव ध्रियन्त इति ।।६९-१४०।।

**भारतश्री–** मत्समाः सौपर्णीवारुण्यः । रूपवाहुल्याभिप्रायेण बहुवचनम् । 'आश्चर्यं परमं वेदा धन्या वेदाश्च नारद' (२.११०.६६) इति हरिवंशोक्तेः वेदशब्दार्थमाह– **वेदात्मिकां प्रकृतिमिति** ।। वेदात्मिकां वेदाभिमानिनीम् ।। ६९ ।।

---

१. 'समता सर्ववस्तुषु' इति उपलब्धपाठः ।

**चट्टी–** शेषादयः कथं त्वदुत्तमा इत्यत आह– **तैरिति** ।। अहं मत्समाः देव्यो वारुण्याद्याश्चैव देव्यस्तैः शेषादिभिरेव ध्रियन्ते धारणपोषणाभ्यां रक्ष्यन्ते इत्येव हेतोस्ते मदुत्तमाः । अथ तानपि प्राप्य यूयं धन्याः आश्चर्या इति मयोक्तास्ते शेषादयः ब्रह्माणमेव उत्तमं धन्यमाश्चर्यं चाहुः । त्वं धन्य आश्चर्य इति मदुक्तः सोऽपि ब्रह्मा वेदात्मिकां वेदाभिमानिनीं अत एव वेदनाम्नीं विष्णुपत्नीं प्रकृतिं धन्यामाश्चर्यामूचे । 'वेदात्मिकाम्' इत्यनेन 'ब्रह्मा वेदानाह' इत्युक्तस्य गतिरुक्ता भवति ।। ६९ ।।

**सैका देवी बहुरूपा बभाषे युक्ता यदाऽहं ज्ञेन नारायणेन ।**
**यज्ञक्रियामानिनी यज्ञनाम्नी तदोत्तमा [1]तत्प्रवेशात् तदाख्या ।।७०।।**

**व्यासतीर्थीया–** त्वमेव धन्याश्चर्येत्युक्ता मदवस्थाभेदानां मदुत्तमानां भावान्नाहं धन्याश्चर्येति भावेन वेदाभिमानिन्याः केवलाया आत्मतया आत्मानं यदा अहं नारायणेन युक्ता यज्ञनाम्नी तदोत्तमेति बभाषे । कुतो यज्ञनाम्नी जातेत्यतो– **ज्ञेति** ।। ज्ञेन ज्ञानस्वरूपेण युक्ता, यज्ञक्रियामानिनी, तत्प्रवेशात् यज्ञप्रवेशात् तदाख्या यज्ञाख्या इति त्रीणि कारणान्युक्तानि । 'वेदा ऊचुः' (विष्णुपर्वणि-११०.७२) इति भारतगं बहुवचनं घटयितुमुक्तम्– **बहुरूपेति** ।। ७० ।।

**वेदाङ्गतीर्थीया–** त्वं धन्येत्यादि मयोक्ता देवी एका स्वरूपत एका बहुरूपा बहुवेदाभिमानित्वात् बहुरूपा सती । अनेन 'वेदा ऊचुः' इति बहुवचनाभिप्रायः उक्तः । अत एवमुत्तरत्राप्यभिप्रायोऽवगन्तव्यः ।। ७०-७१ ।।

**वादिराजतीर्थीया–** ततोऽहं तामेव श्रियमभ्युपेत्य त्वमाश्चर्याऽसि धन्यासीत्यब्रुवम् । तदा बहुरूपा सा एका देवी मदभिमन्यमानवेदादपि वेदफलीभूतयज्ञाभिमानिनी अभिमन्यमानतारतम्यात् आश्चर्या धन्या चेति भावेन तामेवोत्तमां बभाषे । एका रूपत्रयेऽपि भेदरहिता यदाऽहं ज्ञेन सर्वज्ञेन नारायणेन युक्ता यज्ञक्रियाभिमानिनी तत्प्रवेशात् यज्ञक्रियान्तरेऽपि सन्निधानात् तदाख्या यज्ञनाम्नी भूयासम् । तदा सा अधिष्ठानज्यैष्ठ्यादुत्तमेति बभाषे इति पूर्वेणान्वयः । ज्ञेन युता यज्ञक्रियाभिमानिनी तत्प्रविष्टेति च यज्ञपदवाच्यत्वे निमित्तत्रयमुदितमिति ज्ञेयम् । ज्ञेन नारयणेन युता यज्ञनाम्नीति वदन्त्या ज्ञं यातीति समासः । अग्न्याहितादिवत् यज्ञशब्दस्य पूर्वनिपात इति सूचितम् ।।७०।।

**वरदराजीया–** विष्णुपत्न्याः एकत्वेन वेदानिति वहुवचनानुपपत्तिरित्यतो बहुरूपापेक्षया बहुवचनं घटते इत्याह– **एकापि बहुरूपेति** ।। वेदा यज्ञं स्वोत्तममूचुरिति भारतं तत्र क्रियात्मकस्य यज्ञस्य रमोत्तमत्वं न घटते इत्यत यज्ञशब्दस्यापूर्वमर्थं आह– **युक्तेति** ।। तथा च यज्ञशब्देन च विष्णुपत्न्या रूपविशेषः एव उक्तः । स च अयुक्तात्वावस्थापन्नात् वेदशब्दवाच्यरूपविशेषाद् विष्णुप्रेमास्पदतया उत्तमं इत्युक्तं भवति । अक्षरयोजना चैवम्- यदाहं वेदाभिमानिनी दूरवत् स्थिता ज्ञेन नारायणेन युक्ता भवामि

[1]. 'तदावेशात्तदाख्या' इति भारतश्रीपाठः ।

तदा वेदाभिमानिरूपापेक्षया विशेषशक्त्याहं उत्तमेति । यतो यज्ञक्रियाभिमानिनी अतो यज्ञनाम्नी । तस्मिन् यज्ञे विष्णौ प्रवेशादङ्के उपविशिष्टया तद्विशिष्टत्वात् तदाख्या यज्ञाख्या इति रूपविशेषे यज्ञशब्दप्रवृत्तौ निमित्तद्वयमुक्तम् । वेदाभिमानिनी स्वात्मानमेव यज्ञनाम्नीं उत्तमां बभाषे इति भावः ।।७०।।

**अनन्तभट्टीया–** एवमेव धन्येत्युक्ता सा देवी अवस्थाभेदेन मदुत्तमानां भावात् नाहं धन्येति भावेन वेदाभिमानिन्याः केवलायाः स्वात्मानं स्वात्मानमेव यदाहं नारायणेन युक्ता यज्ञनाम्नी तदोत्तमेति बभाषे । अयं भावः । देव्या अवस्थाद्वयमस्ति । केवलनारायणयुक्तत्वावस्था तदयुक्तत्वावस्था च इति । वेदाभिमानित्वं तु अवस्थाद्वयेऽपि समानम् । तत्र अयुक्तत्वापेक्षया युक्तावस्थायाः गरीयस्त्वात् [१]अयुक्तावस्थाविशिष्टा मत्तः युक्तत्वावस्थाविशिष्टा अहं उत्तमा । अतो मदुत्तमायाः विद्यमानत्वात् नाहं सर्वोत्तमेति । यज्ञनाम्नी कुतो जाता इत्यत आह– **ज्ञेति** ।। ज्ञेन युक्तत्वात् यज्ञक्रियामानित्वात् यज्ञप्रवेशाच्चेति निमित्तत्रयमाह । तदवस्था यज्ञनामिका । 'वेदा ऊचिरे' इति भारतगवहुवचनं घटयितुं 'बहुरूपा' इत्युक्तम् ।। ७० ।।

**लघ्वनन्तभट्टीया–** तैः शेषाद्यैः । स ब्रह्मा वेदा इत्यूचे । के ते वेदा इत्यत आह– **वेदात्मिकामिति** ।।७०।।

**जनार्दनीया–** त्वं धन्येत्यादिमदुक्ता देवी एका स्वरूपतः एका बहुरूपा बहुवेदाभिमानित्वाद्बहुरूपा सती बभाषे । अनेन 'वेदा ऊचुः' इति वचनाभिप्राय उक्तो भवति । अहं ज्ञेन नारायणेन युक्ता युक्तत्वात्, यज्ञक्रियाभिमानिनी, यज्ञक्रियाभिमानित्वादिति हेतुगर्भविशेषणम् । तत्प्रवेशात् तस्मिन् यज्ञनाम्नि विष्णौ प्रवेशात्, अङ्के स्थितत्वात् तदाख्या यज्ञाख्या इति हेतुत्रयात् यज्ञनाम्नी भवामि । यदा, तदाहं उत्तमा । तथा च देव्याः अवस्थाद्वयमस्ति । अत्यन्तनारायणयुक्तत्वावस्था तदयुक्तत्वावस्था । वेदाभिमानित्वं त्ववस्थाद्वयेऽपि समानम् । तथा चायुक्तत्वावस्थापेक्षया युक्तत्वावस्थाविशिष्टा या सा उत्तमा । तस्मान्नाहं उत्तमेति भावः ।।७०।।

**भावविवृतिः–** 'कूर्मो दृष्टो विष्णुपयाम्' इत्यारभ्य 'सोऽपि वेदत्मिकां प्रकृतिं विष्णुपत्नीम्' इत्यन्तं देवतातारतम्यमुक्त्वा, रमारूपेष्वपि कतिपयरूपाणां भगवत्सन्निधाननिमित्तकः कश्चिद्विशेषोऽस्त्यत आह– **सैका देवीत्यादिना** ।। ७०-७२ ।।

**ताम्रपर्णीया–** ।। **सैका देवी बहुरूपेति** ।। एतेन 'वेदा ऊचुः' इति हरिवंशगतबहुवचनतात्पर्यमुक्तं भवति ।। **युक्तेति** ।। यदाहं भगवदङ्कस्थत्वेन ज्ञेन नारायणेन युक्ता यज्ञनाम्नी भवानि तदा वेदाभिमानिरूपापेक्षयोत्तमेत्यर्थः । विष्णुना युक्तत्वमात्रेणोत्तमत्वं कुत इत्यतो भगवत्सन्निधिविशेष-

---

१. 'अयुक्तत्वावस्थायाः मत्तः' इति क्वचित् ।

मात्रत्वादित्युक्तम्– **तत्प्रवेशादिति** ।। तस्य भगवतस्तस्यां प्रवेशादुत्तमेत्यर्थः । कुतो यज्ञनाम्नीत्यतो ज्ञेन नारायणेन युक्ता यज्ञक्रियामानिनी तत्प्रवेशाच्च तदाख्येति निमित्तत्रयमुक्तम् । तत्र युक्तेत्यनेन याति ज्ञमिति व्युत्पत्तिर्दर्शिता । यज्ञक्रियामानिनीत्यभिमान्यभिमन्यमानयोरेकशब्दवाच्यत्वं इत्युक्तं भवति । तस्य यज्ञनामकस्य हरेस्तस्यां प्रवेशादित्यनेन समाकर्षन्यायः उक्तो भवति ।। ७० ।।

**भारतश्री–** बहुवचनस्यापि गतिमाह– **सैषा देवी बहुरूपेति** ।। 'आश्चर्याश्चैव धन्याश्च यज्ञाश्चात्म-परायणाः' (हरिवंशे-२.११०.७२) इत्युक्तेः यज्ञशब्दार्थमाह– **युक्तेति** ।। ज्ञं यातीति यज्ञा । याति ज्ञमिति वा यज्ञनाम्नीत्युक्तम् । तत्र पूर्वोक्तं यज्ञाभिमानित्वे निमित्तं कथयतीत्याह– **तत्प्रवेशादिति** ।। यज्ञप्रवेशात् यज्ञाभिमानित्वादित्यर्थः । यद्वा ज्ञेन यज्ञेन । यकारलोपः । विष्णोः देवीवद् यज्ञाभिमानित्वं नास्ति इति सूचयति । यदा यज्ञेन नारायणेन यज्ञनामाकनारायणेन । यज्ञनाम्नीत्वे यज्ञक्रियामानिनीत्येकं निमित्तमुक्तम् । निमित्तान्तरमप्याह– **तदावेशादिति** ।। तस्य यज्ञनामकविष्णोरावेशात् तदाख्या ।।७०।।

**चट्टी–** त्वं धन्येत्यादि मदुक्ता देवी एका स्वरूपतः एका बहुरूपा बहुवेदाभिमानित्वात् बहुरूपा सती बभाषे । अनेन 'वेदाः ऊचुः' इति बहुवचनाभिप्राय उक्तो भवति । अहं ज्ञेन नारायणेन युक्ता युक्तत्वाद् यज्ञक्रियाभिमानित्वादिति हेतुगर्भविशेषणम् । तत्प्रवेशात् तस्मिन् ज्ञनाम्नि विष्णौ प्रवेशादङ्के स्थितत्वात् तदाख्या यज्ञाख्या इति हेतुत्रयात् यज्ञनाम्नी भवामि । यदा, तदाहं उत्तमा लक्ष्म्या अपि अधिष्ठानभेदात् तारतम्यस्य सत्वात् वेदात्मिकामित्युक्तिर्घटत इति भावः । तदुक्तम्- 'सर्ववेदाभिमानिन्याः देव्याः लक्ष्मीस्ततोऽधिका । वेदाभिमानिनी साक्षात् सा विष्णोः दूरवस्थिता ।। यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता । हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु ।। उत्तरोत्तरतः सापि विशिष्टा दक्षिणा सुखे ।।' इति ।।७०।।

**विष्ण्वाविष्टा यज्ञनाम्नी तदङ्कस्थिता सोचे केशवो ह्युत्तमोऽलम् ।**
**[१]न तत्समश्चाधिकोऽतः कुतः स्यादृषे सत्यं नान्यथेति स्म [२]भूयः ।।७१।।**

**व्यासतीर्थीया–** त्वमेव धन्याश्चर्येत्युक्ता तदङ्कस्थिता सा च यज्ञनाम्नी आत्मनो अलं उत्तमः केशव इत्यूचे । विष्ण्वाविष्टा तदङ्कस्थितेति यज्ञनाम्नित्वे उक्तेषु हेतुषु उदितौ...* ।। ७१ ।।

**वादिराजतीर्थीया–** अत्र सर्वत्रोत्तमत्वं स्वावरेभ्य एव नतु सर्वेभ्यः । अत एव विष्णोः निरवधिकसर्वोत्तमत्वज्ञापनाय अलंशब्दप्रयोगः । हिशब्देन हरेः निरवधिकसर्वोत्तमत्वं 'एष सर्वेश्वरः' इत्यादिश्रुतिस्मृतिषु प्रसिद्धमिति सूचयति । ततोऽहं तामपि समेत्य त्वमाश्चर्याऽसि धन्याऽसीत्यब्रुवम् । तदा विष्ण्वाविष्टा विष्ण्वङ्कस्थिता यज्ञनाम्नी लक्ष्मीः ममापि पतित्वान्मदीययजनक्रियायां पूज्यत्वात्

---

१. 'न तत्समश्चाभ्यधिकः' इति चट्टीपाठः ।

२. 'भूपाः' इति चट्टीपाठः । 'भूयः' इति पाठान्तरश्च ।

निरवधिकगुणपूर्णत्वाच्च केशव एव मत्तोऽप्यलं आश्चर्यो धन्यश्चेति भावेन केशवमुत्तममूचे । सर्वत्र प्रतिवचनबलादुक्तरीत्या प्रश्नोऽप्यनुसन्धेयः । एवञ्च कूर्मदेहाद्गङ्गाजलस्य, गङ्गाजलात् तदाधारभूत-समुद्रजलस्य, समुद्रजलादपि तदाधारभूतपृथिव्याः, पृथिवीतोऽपि पृथिव्याधारभूतभूधराणाम्, भूधरेभ्योऽपि ब्रह्माभिमन्यमानमहत्तत्वस्य, ततोऽपि ब्राह्मण्यहेतुभूतवेदस्य, वेदादपि यज्ञस्य, यज्ञादपि दक्षिणायाश्चेति क्रमेण ज्यैष्ठ्यमिति जडतारतम्यं च दर्शितमिति । पुष्करादिभ्यो गङ्गा, गङ्गातो वरुणः, वरुणदेवादुमा, उमातो रुद्रशेषगरुडाः, ततो ब्रह्मा, ततो बहुरूपिणी लक्ष्मीः, ततः श्रीनारायण इति देवतातारतम्यं च दर्शितमिति ज्ञेयम् ।। ७१-७४ ।।

**वरदराजीया–** सा यज्ञनाम्नी त्वमुत्तमासीति मयोक्ता मां प्रत्यूचे । किमिति? केशवोऽलं उत्तमः तस्य केशवस्य समश्च नास्ति । अतः केशवादधिकः कुतः स्यान्न कुतोऽपि इत्यर्थः । हे ऋषे! नारद एतत्सत्यं नान्यथा मृषा न भवति इति मां प्रत्यूचे इति सम्बन्धः ।।७१।।

**अनन्तभट्टीया–** तदा विष्ण्वाविष्टा अत एव यज्ञनाम्नी । तदङ्कस्थिता सा चालं उत्तमः केशव इति ऊचे ।। **विष्ण्वाविष्टेति** ।। यज्ञनामकत्वायुक्तेषु त्रिषु कारणेषु एको अनूदितः ।।७१।।

**जनार्दनीया–** विष्ण्वाविष्टा विष्णुना आविष्टा । तदङ्कस्थिता यज्ञक्रियामानिनीत्येतदपि बोध्यम् । यज्ञनाम्नी प्रकृतिः त्वं धन्येत्यादि मयोक्ता । सा केशवः अलं उत्तम इति भूयः ऊचे । किमिति? हे ऋषे! सत्यं नान्यथा मृषा नेति सम्बन्धः । वेदाभिमानिनी अङ्कस्थिता एकैवेति सूचनार्थं 'भूयः' इत्युक्तम् ।।७१।।

**ताम्रपर्णीया–** विष्णुनाविष्टा तदङ्कस्थिता या यज्ञनाम्नी, आत्मनः केशवः उत्तमः इत्यूच इत्यर्थः । अत्र 'विष्ण्वाविष्टा' इति 'तत्प्रवेशात्' इत्यस्यानुवादः । 'तदङ्कस्थिता' इति 'ज्ञेन नारायणेन युक्ता' इत्यस्यानुवादः इति ज्ञेयम् ।।७१।।

**भारतश्री–** आविष्टा सा तदङ्कस्थिता यज्ञनाम्नी केशवो उत्तमोऽलमित्यूचे..* ।।७१।।[१]

**चट्टी–** विष्ण्वाविष्टा विष्णुना आविष्टा तदङ्कस्थिता यज्ञनाम्नी प्रकृतिस्सा त्वं धन्येत्यादि मयोक्ता सा केशवोऽलमुत्तमः तत्समो नास्ति । अभ्यधिकश्च कुतः स्यान्न कुतोऽपीत्यर्थः । हे ऋषे! नारद एतत्सत्यं अन्यथा मृषा न इत्यूचे इति पूर्वेण सम्बन्धः । हे भूपाः! इति नारदेन राज्ञां सम्बोधनम् । 'भूयः' इति पाठे वेदाभिमानिनी अङ्कस्थिता एकैवेति सूचनं प्रयोजनम् ।। ७१ ।।

**तयोक्तोऽहं नावतारेषु कश्चिद् विशेष इत्येव यदुप्रवीरम् ।**
**सर्वोत्तमोऽसीत्यवदं स चाऽह न केवलं मेऽङ्कगायाः श्रियोऽहम् ।।७२।।**

---

१. अत्र ग्रन्थोपलब्धिर्नास्ति ।

**व्यासतीर्थीया–** विष्ण्वङ्कगाया यज्ञनाम्न्या धन्याश्चर्येत्युक्तत्वात् त्वया च तमेव प्रति तथा वक्तव्यम् । किमर्थं आगत्य तथोक्तवानित्यत आह– **अहमिति** ।। सर्वोत्तमो धन्यः सामानरहितश्चासीदिति च वदन् स्ववाक्यार्थमुक्त्वा 'दक्षिणाभिः साकम्' इति कृष्णवाक्यस्यार्थमाह– **स चाहेत्यादिना** ।। किन्तु यदा तु सा मे वामार्धरूपा दक्षिणानामधेया तदाप्यस्या उत्तमोऽहमिति उत्तरवाक्येन सम्बन्धः । ।।७२।।

**वेदाङ्गतीर्थीया–** एवं स्ववचनाभिप्रायमुक्त्वा 'दक्षिणाभिः साकम्' इति कृष्णवचनाभिप्रायमाह– **स चेत्यादिना** ।। सः कृष्णः इत्येव इत्यभिप्रायवानेव हि दक्षिणाभिः साकम् इत्याह । कोऽभिप्राय इत्यतो दक्षिणाभिः साकमिति वक्तुरभिप्रायमाह– **न केवलमित्यदिना** ।। न केवलं मे अङ्कगायाः श्रियः यज्ञनाम्न्याः प्रकृतेः सदा उत्तमः ।।७२।।

**वरदराजीया–** इत्युक्तरीत्या तया यज्ञनाम्न्या उक्तोऽहं नारायणं प्रति गत्वा त्वं उत्तम इति वक्तव्ये अवतारेषु नारायणावतारेषु विशेषः कश्चिदपि नास्ति इत्येवं विनिश्चित्य नारायणात्मकं यदुप्रवीरं प्रत्यागत्य सर्वोत्तमोऽसदृशश्च असि इत्यभिप्रायेण धन्यः आश्चर्यश्च इत्यवदम् । एवं स्ववाक्याभिप्रायमुक्त्वा 'दक्षिणाभिः साकम्' इति कृष्णाभिप्रायं वक्तुमाह– **स चाहेत्यादिना** ।। सर्वोत्तमोऽसि इत्यनेनाभिप्रायेण मयोक्तः सः कृष्णो मां प्रति दक्षिणाभिः साकम् इत्याहेत्यर्थः । एवं वदतोऽभिप्रायमाह– **न केवलमित्यादिना** ।। न केवलं मे अङ्कगाया मम अङ्के स्थिताया मयुक्ताया यज्ञनामिकायाः श्रियोऽहमुत्तमः ।।७२।।

**अनन्तभट्टीया–** 'दक्षिणाभिः साकम्' इति कृष्णवाक्यार्थमाह– **स चाहेति** ।। यदा तु सा मे वामार्धरूपा दक्षिणानामधेया तदाप्यस्या उत्तमोऽहमिति उत्तरवाक्येन सम्बन्धः ।। ७२ ।।

**जनार्दनीया–** तयाऽङ्कस्थितया यज्ञनाम्न्या उक्तोऽहं यदुप्रवीरं सर्वोत्तमोऽसि इत्यवदम् । एवं स्ववचनाभिप्रायमुक्त्वा 'दक्षिणाभिः साकम्' इति कृष्णवचनाभिप्रायमाह– **स चेत्यादिना** ।। स कृष्णः इत्येव इत्यभिप्रायवानेव दक्षिणाभिः साकम् इत्याह । कोऽभिप्राय इत्यतः 'दक्षिणाभिः साकम्' इति वक्तुरभिप्रायमाह– **न केवलमित्यादिना** ।। अहं केवलं मे अङ्कगायाः यज्ञनाम्न्या श्रियः प्रकृतेरेव सकाशात् सदा उत्तमो न ।।७२।।

**ताम्रपर्णीया–** दक्षिणाभिस्साकमित्यस्य भावमाह– **न केवलमित्यादिना** ।। यदा तु सा श्रीर्मे वामार्धरूपा सती दक्षिणानामधेया तदा तस्या अप्युत्तम इत्युत्तरेणान्वयः ।।७२।।

**चट्टी–** तयाऽङ्कस्थितया यज्ञनाम्न्या उक्ता अहमवतारेषु श्रीनारायणस्यावतारेषु कश्चिदपि विशेषो नास्तीत्येवं निश्चित्य यदुप्रवीरं श्रीकृष्णं त्वं सर्वोत्तमोऽसीति अवदम् । सः श्रीकृष्णश्चाह– **न केवलमित्यादिना** ।। अहं केवलं मे अङ्कगाया यज्ञनाम्न्या श्रियः प्रकृतेरेव सकाशात् सदा उत्तमो न ।।७२।।

**सदोत्तमः किन्तु यदा तु सा मे वामार्धरूपा दक्षिणानामधेया ।**
**यस्मात् तस्या दक्षिणतः स्थितोऽहं तस्मान्नाम्ना दक्षिणेत्येव सा स्यात्।।७३।।**

**व्यासतीर्थीया–** दक्षिणाया उत्तममाह– **यस्मादिति** ।। दक्षिणभागे दक्षे इनो यस्या सा दक्षिणा । ननु कथं दक्षिणेति स्यात् । नैष दोषः । 'शकन्धुः कर्कन्धुः' इत्यत्र सवर्णदीर्घत्वे भाव्ये यथा पूर्वपदयोः स्थाने पूर्वरूपमेव प्राप्तं तथेहापि ।। ७३ ।।

**वेदाङ्गतीर्थीया–** तर्हि कुतस्त्वमुत्तम इति पृच्छति– **किन्त्विति** ।। उत्तरमाह– **यदेति** ।। सा श्रीरेव यदा यस्मिन्नवसरे मे वामार्धरूपा वामार्धे प्रविष्टस्वरूपा, तत एव दक्षिणानामधेया दक्षिणानाम्नी । दक्षिणानामधेयत्वे कारणमाह– **यस्मादिति** ।। इनः पतिः अहं तस्याः दक्षिणतः यस्मात् दक्षिणभागे स्थितः तस्मादेव सा नाम्ना दक्षिणेति स्यात् ।।७३।।

**वरदराजीया–** किन्तु यदा सा यज्ञनाम्नी श्रीः एवार्धरूपा अत एव दक्षिणानामधेया । वामार्धरूपत्वे कथं दक्षिणाशब्दवाच्यत्वं लब्धमित्येतत्स्पष्टयति– **यस्मादिति** ।। तस्याः वामार्धरूपायाः श्रियो दक्षिणतो दक्षिणभागेऽहं स्थितः । तत्तस्मात् सा श्रीः दक्षिणेति नामवती स्यात् । तथा च दक्षे दक्षिणभागे इनः पतिर्यस्याः सा दक्षिणेत्युक्तं भवति । लाङ्गलीषा इत्यादिवत् दक्षिणा इत्यत्र पररूपं द्रष्टव्यम् ।।७३।।

**अनन्तभट्टीया–** दक्षिणभागे इनः स्वामी यस्याः सा दक्षिणा । दक्ष इनेत्यत्र पररूपे दक्षिणेति भवति ।। ७३ ।।

**जनार्दनीया–** तर्हि कुतस्त्वमुत्तम इति पृच्छति– **किं त्विति** ।। उत्तरमाह– **यदेति** ।। सा यज्ञनाम्नी श्रीः यदा यस्मिन्नवसरे मे वामार्धरूपा वामार्धे प्रविष्टरूपा, तत एव दक्षिणानामधेया दक्षिणानाम्नी । दक्षिणानामधेयत्वे कारणमाह– **यस्मादिति** ।। इनः पतिः अहं तस्याः दक्षिणतः दक्षिणभागे स्थितः यस्मात् तस्मादेव सा नाम्ना दक्षिणेति स्यात् ।।७३।।

**भावविवृतिः–** दक्षिणाशब्दार्थं त्रेधा निरूपयति– **यदा त्विति** ।। दक्षे दक्षिणे भागे इनः परमात्मा यस्याः सा दक्षिणा । 'भर्त्रेन्द्र इन ईशिता' इत्यभिधानात् । इनः पतिः ।।७३।।

**ताम्रपर्णीया–** दक्षिणाशब्दं निर्वक्ति– **यस्मादिति** ।। दक्षभागे इनः पतिर्यस्या सा दक्षिणेत्युक्तं भवति । लाङ्गलीषा इत्यादिवदत्र पररूपं द्रष्टव्यम् ।। ७३ ।।

**चट्टी–** तर्हि कुतस्त्वमुत्तम इति पृच्छति– **किं त्विति** ।। उत्तरमाह– **यदेति** ।। सा यज्ञनाम्नी श्रीः यदा यस्मिन् अवसरे मे वामार्धरूपा वामार्धे प्रविष्टरूपा, तत एव दक्षिणानामधेया दक्षिणानाम्नी । दक्षिणानामधेयत्वकारणमाह– **यस्मादिति** ।। इनः पतिरहं तस्याः दक्षिणतः दक्षिणभागे स्थितः यस्मात् तस्मात् एव सा नाम्ना दक्षिणेत्येव स्यात् ।। ७३ ।।

**सा दक्षिणामानिनी देवता च सा च स्थिता[1] बहुरूपा मदर्धा ।**
**वामार्धो मे तत्प्रविष्टो यतो हि ततोऽहं स्यामर्धनारायणाख्यः ।।७४।।**

**व्यासतीर्थीया–** पुनरपि दक्षिणानाम्नित्वे निमित्तद्वयमाह– **सा दक्षिणेति** ।। 'दक्षिणाभिः' इति बहुवचनं प्रयुक्तमित्यतस्तस्याभिप्रायमाह– **सा च स्थितेति** ।। त्वदर्धस्तया प्रविष्ट इति कुत इत्यत आह– **वामार्ध इति** ।। ७४ ।।

**वेदाङ्गतीर्थीया–** प्रकारान्तरेणापि दक्षिणानामवत्वमाह– **सेति** ।। सा दक्षिणामानिनी देवता यज्ञादौ दीयमानाया दक्षिणाया अभिमानिदेवता च । तस्माच्च दक्षिणेत्यर्थः । 'दक्षिणाभिः साकम्' इति बहुवचनाभिप्रायमाह– **सा चेति** ।। मयि अर्धः यस्याः सा मदर्धा । मम अर्धः यस्यां सा मदर्धा इति वा । स्वार्धस्य तस्यां प्रविष्टत्वात् स्वस्यापि नामान्तरमाह– **वामार्ध इति** ।। मे वामार्धः तत्प्रविष्टः तस्यां प्रविष्टः यतस्ततो हि तत एव अहमर्धनारायणाख्यः । सः कृष्णः दक्षिणानां च शश्वत् सर्वोत्तमत्वं सर्वस्माज्जगत उत्तमत्वं स्मरन् 'दक्षिणाभिः साकम्' इत्यवादीत् ।। ७४-७५ ।।

**वरदराजीया–** दक्षिणाशब्दस्य देव्यां प्रवृत्तौ निमित्तान्तरमाह– **सेति** ।। दक्षिणाभिमानिनी देवता सा देवी अतोऽपि दक्षिणानाम्नीत्यर्थः । रूपविशेषे वामार्धरूपत्वे दक्षिणाभिरिति बहुवचनं कथं घटते इत्यत उक्तम्– **साऽवस्थितेति** ।। मदधीना सती बहुरूपावस्थिता सती । बहुरूपमद्वामार्धत्वेन तस्या अपि बहुरूपत्वात् 'दक्षिणाभिः' इति बहुवचनं युक्तमिति भावः । वामार्धरूपेत्यस्य अभिप्रायमाह– **वामार्धो मे इति** ।। यतः कारणात् मे वामार्धो वामभागः तया प्रविष्टः मदीयवामभागे तस्याः प्रविष्टितत्वात् वामार्धरूपेत्युच्यत इत्यर्थः । वामार्धभागे तस्याः प्रविष्टत्वेन तस्यै तद्भागस्य दत्तत्वादेव अहं अर्धनारायणाख्य अस्मि इत्यर्थः ।।७४।।

**अनन्तभट्टीया–** पुनस्तन्नामत्वे निमित्तद्वयमाह– **दक्षिणाभिरिति** ।। बहुवचनप्रयोगाभिप्रायमाह– **सेति** ।। ममार्धो यस्यां सा मदर्धा मे तत्प्रविष्टः तस्यां प्रविष्टः ।। ७४ ।।

**जनार्दनीया–** प्रकारान्तरेणापि दक्षिणानामवत्वमाह– **सेति** ।। सा दक्षिणामानिनी देवता यज्ञादौ दीयमानायाः दक्षिणायाः अभिमानिदेवता च । तस्माच्च नाम्ना दक्षिणेत्यर्थः । 'दक्षिणाभिः साकम्' इति बहुवचनाभिप्रायमाह– **सेति** ।। मयि अर्धो यस्याः सा मदर्धा सती स्थिता । मम अर्धो यस्यां सा मदर्धेति वा । स्वार्धस्य तस्यां प्रविष्टत्वात् स्वस्यापि नामान्तरमाह– **वाम इति** ।। मे वामार्धस्तत्प्रविष्टः तस्यां दक्षिणानाम्न्यां प्रविष्टो यतः तत एवाहमर्धनारायणाख्यः अर्धनारायण इति आख्या यस्य सः ।।७४।।

**ताम्रपर्णीया–** पुनरपि दक्षिणानामवत्वनिमित्तद्वयमाह– **सा दक्षिणेति** ।। दक्षिणाभिमानित्वाद् दक्षिणयेज्यदेवतात्वाद् दक्षिणाप्रदानमन्त्रप्रतिपाद्यदेवतात्वाद् दक्षिणानामधेयेत्यर्थः । 'दक्षिणाभिः' इति

१. 'साऽवस्थिता' इति वरदराजीयपाठः ।

बहुवचनतात्पर्यमाह– **सा चेति** ।। अहमेव दक्षार्धो यस्याः सा मदर्धा । मयि क्षीरनीरवदप्रतिघातत्वेन चित्संवलनेन दक्षार्धो यस्याः सेति वा । अनेन 'यस्मादस्या दक्षिणतः स्थितोऽहम्' इति विवृतं भवति । नन्वेवं चेदर्धनारायणत्वप्रसिद्धिरयुक्ता, लक्ष्मीदक्षभागस्य भगवद्दक्षभागे संवलितत्वेऽपि भगवद्वामभागः लक्ष्मीवामभागः भगवद्दक्षभाग इति भागत्रयावशेषादित्याशङ्कां परिहरन् अर्धनारायणत्वप्रसिद्ध्यन्यथा-नुपपत्त्यापि दक्षिणाशब्दस्योक्तं प्रवृत्तिनिमित्तमङ्गीकार्यमिति भावेन 'वामार्धरूपा' इत्येतद्विवृणोति– **वामार्ध इति** ।। यतो मे वामभागस्तद्वामभागे प्रविष्टाङ्गारवह्निवत् संवलितस्तत एवाहमर्धनारायणाख्यः स्याम् । अन्यथा तन्न स्यादिति भावः ।। ७४ ।।

**चट्टी– प्रकारान्तरेणापि** दक्षिणानामवत्त्वमाह– **सेति** ।। सा दक्षिणामानिनी देवता यज्ञादौ दीयमानायाः दक्षिणायाः मानिनी अभिमानिनी देवता च । तस्माच्च नाम्ना दक्षिणेत्यर्थः । 'दक्षिणाभिः साकम्' इति बहुवचनाभिप्रायमाह– **सेति** ।। मयि अर्धो यस्याः सा मदर्धा । सा दक्षिणाख्या श्रीः बहुरूपा सती स्थिता । ममार्धो यस्यां सा मदर्धेति वा । स्वार्धस्य तस्यां प्रविष्टत्वात् स्वस्यापि नामान्तरमाह– **वाम इति** ।। मे वामार्धं यतः तत्प्रविष्टः तस्यां दक्षिणानाम्न्यां प्रविष्टस्तत एव वाम अर्धनारायणाख्यो अर्धनारायण इत्याख्या यस्य सः । स्याम् ।। ७४ ।।

## तदाऽप्यस्या उत्तमोऽहं सुपूर्णो न मादृशः कश्चिदस्त्युत्तमो वा ।
## इत्येवावादीद् दक्षिणाभिः सहेति सर्वोत्तमत्वं[१] दक्षिणानां स्मरन् सः ।।७५।।

**व्यासतीर्थीया–** उत्तमत्वे निमित्तमुक्तम्– **सुपूर्णेति** ।। गुणैरिति शेषः । उत्तमत्वं विशदयति– **न मादृश इति** ।। ७५ ।। ननु नारदः...* ।

**वेदाङ्गतीर्थीया–** तदाऽपि अस्या एवं दक्षिणानाम्न्या अस्याः सकाशात् अहं उत्तमः धन्यः सुपूर्ण आश्चर्य इत्यर्थः । दक्षिणाभिः (समेतात्) साकं स्थितात् जगतः । (स्वस्मात्) जगतः अप्राधान्यं च सिद्धमिति भावः ।। ७५ ।।

**वादिराजतीर्थीया–** 'तदाऽप्यस्या उत्तमोऽहम्' इति वदन् कृष्णः दक्षिणाभिः साकम् इत्यस्य दक्षिणाभिः सह स्थितात् कूर्मादियज्ञान्तदेवतावर्गादुत्तमोऽस्मीत्यर्थान्तरं च सूचयति । 'सर्वोत्तमत्वं दक्षिणानां स्मरन्' इति वदन्नारदः प्रागुक्तमर्थं मुख्यत्वान्मुखतो वक्ति । तस्माद् दक्षिणाभिः साकम् इत्यस्य द्वेधाऽप्यर्थो ज्ञेयः । असङ्कुचितस्वेतरसकलसर्वोत्तमत्वं कृष्णस्यैव । लक्ष्म्यास्तु न कृष्णवदसङ्कुचितवृत्त्या सर्वजगतः स्वेतरसर्वोत्तमत्वम् । पत्युः पुरुषोत्तमादप्युत्तमत्वस्य तस्यामसम्भवात् । सा ब्रह्मादिसर्वजगतः श्रेष्ठा । हरेस्तु भार्यात्वात् भक्तैव । निरवधिकसर्वोत्तमस्तु भगवान् श्रीकृष्ण एवेति भावः ।। ७५ ।।

---

१. 'मदोत्तमत्वम्' इति अनन्तभट्टीयपाठः ।

**वरदराजीया–** तदापि तस्यां अवस्थायां अस्याः दक्षिणायाः सकाशात् अहमुत्तमः सुपूर्णः देशतः कालतो गुणतश्च परिच्छित्तिरहितः । तस्मात् मादृशः कश्चित् नास्ति उत्तमः नास्त्येव इत्यभिप्रायेण दक्षिणानां सर्वोत्तमत्वं स्मरन् अनुसन्धाता दक्षिणाभिः सह इत्यवादीत् । तथाच यथा वेदाभिमानिरूपविशेषापेक्षया मदङ्कस्थितयज्ञनामकरूपस्य विशेषशक्त्या मत्प्रेमविषयास्पदत्वेन अधिकत्वम्, तथा [१]मद्रूपविशेषापेक्षया मदर्धरूपविशेषस्योत्तमत्वमस्तीति स्मरन् मदङ्कस्थितरूपविशेषापेक्षया मदर्धरूपविशेषस्योत्तमत्वमस्तीति स्मरन् दक्षिणाभिः यज्ञान्तसर्वजगदुत्तमाभिः साकं विद्यमानात् सर्वस्मात् जगतो अहमुत्तम इत्यवादीत् इत्युक्तं भवति ।। ७८ ।।

**अनन्तभट्टीया–** ननु नारदेनैव जगदुत्तमस्योक्तत्वात् उत्तमस्योत्तमत्वात् 'दक्षिणा' इत्यंवालम् । पुनः दक्षिणाभिः साकम् इति सहशब्दो व्यर्थ इत्यत तस्याभिप्रायमाह– **सदोत्तमत्वमिति** ।। 'दक्षिणाभ्यः' इत्येवोक्ते तासां जगदपेक्षया आधिक्यं प्रतीयते । आधिक्येन परम्परया तज्जगतः सह प्रयोगे तदपि प्रतीयत इति भावः ।। ७८ ।।

**जनार्दनीया–** तदापि वामार्धावसरेऽपि अस्याः दक्षिणानाम्न्याः सकाशादहमुत्तमः सुपूर्णः, बलज्ञानादिभिरिति शेषः । अतः कश्चिन्न मादृशो उत्तमो नैवास्ति । स कृष्णः दक्षिणानां च शश्वत्सर्वोत्तमत्वं सर्वस्माज्जगतः उत्तमत्वं स्मरन् साधयन् दक्षिणाभिः सह साकमिति अवादीत् । दक्षिणाभिः साकं स्थिताज्जगतः अहमुत्तम इत्यवादीत् । एवमुक्ते जगतः स्वस्य दक्षिणानां प्राधान्यं स्वस्माद्दक्षिणाभियुक्तजगतः अप्राधान्यं च सिद्धमिति भावः । तथा च वेदाभिमानिप्रकृतिरूपापेक्षया अङ्कस्थरूपस्य विशेषत्वम्, तस्माद्वामार्धरूपस्य विशेषत्वं सिद्धम् ।।७८।।

**भावविवृतिः–** 'दक्षिणाभिस्साकम्' इत्युक्त्या मम दक्षिणारूपसाहित्यात् भगवतः किञ्चिदाधिक्यम् इत्येतद्दर्शयितुं अपिपदम् । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यभिधानात् । 'अपि सम्भावनासर्गगर्हासमुच्चयेषु' इति सूत्राच । तर्हि 'दक्षिणाभिः साकम्' इत्युक्तः कोऽभिप्राय इत्यत आह– **सर्वोत्तमत्वं दक्षिणानां स्मरन् इति** ।। सः कृष्णः सर्वेषु रमारूपेषु मध्ये दक्षिणारूपाणां उत्तमत्वमाधिक्यं स्मरन् स्मारयन् आहेत्यर्थः । ननु इन्द्रार्जुनादाविव अंशांशिनोर्विशेषरहितानां अत्यभिन्नानां अप्राकृतविग्रहवतां रमारूपाणां मध्ये कतिपयरूपाणामुत्तरोत्तरत आधिक्यकथनं कथं इति न शङ्कनीयम् । अत्र स्वरूपत आधिक्यस्याकथनात् । सुखानुभवविषय एव इत्यङ्गीकारात् । उक्तश्च एतदाधिक्यं सुखानुभवविषयमिति । 'सर्ववेदाभिमानिभ्यो देव्यो लक्ष्मीस्ततोऽधिका । वेदाभिमानिनी साक्षात् सा विष्णोर्दूरतः स्थिता ।। यज्ञाख्या सैव विष्णोस्तु या तूरःस्थानमाश्रिता । हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु ।। उत्तरोत्तरतस्सापि विशिष्टा दक्षिणा सुखे ।।' इति । तथापि न स्वरूपसुखानुभवविषयकमेतदाधिक्यम् । किन्तु भगवद्रतिपात्रतादशायां भगवच्छरीरे अर्धप्रवेशादागन्तुकं सुखानुभवविषयकमेव आधिक्यमिति

---

१. वाक्यमिदमनन्वितम् ।

मन्तव्यम् । किन्तु 'यदा तु सा मे वामार्धरूपा दक्षिणा नाम' इत्यनेन रतिपात्रता च क्वचित्कालविशेष एवेति ज्ञायते । हरेर्वामार्धरूपप्रवेशश्च रमाया रतिपात्रतादशायामेवेति सूचनाय एकस्तुशब्दः । रमाया अनन्तानन्तरूपाणामपि यदा यदा रतिपात्रता तदा तदा दक्षिणात्वं तदानीं भगवद्वामार्धरूपप्रवेशात् आगन्तुकसुखानुभवात् आधिक्यञ्चेति ज्ञापनाय अपरस्तुशब्दः । 'भवति भूतिकृदेव भूत्या' इति रमाया अपि आगन्तुकभूतिविशेषलाभश्चोक्तः । अन्यथा रमारतिपात्रताया निष्प्रयोजनता स्यात् । स्वरमणत्वेन भगवतश्चानेन प्रयोजनाभावात् । ननु रूपमात्रेऽपि रतिपात्रतादशायां उक्तरीत्या दक्षिणात्वसम्भवे उत्तमाधमत्वं कथं स्यादिति वाच्यम् । कालभेदेनोच्यमानत्वात् । यथैका सरस्वती प्राणयोगवियोगाभ्यां उत्तमा अवरा च भवति कालभेदेन तथाऽत्रापीति । उक्तश्च एतत् छान्दोग्यभाष्ये- (१.१) 'विशेषात् प्राणसंयुक्ता वागृगित्यभिधीयते । ऋ गताविति धातोश्च ऋक्च सर्वाभिमानिनी ।। विशेषसंयोगहीना यदा सैव सरस्वती । तदा तस्या वरा चैव प्राणसंयोगिनी मता ।। प्राणयोगवियोगाभ्यां सा चैकापि विभिद्यते ।।' इति ।। ७४-७५ ।।

**ताम्रपर्णीया**– 'दक्षिणाभिस्साकमहं धन्य आश्चर्यः' इत्यत्र धन्यपदार्थकथनम्– **सुपूर्ण इति** ।। उत्तम इति तात्पर्यकथनम् । ननु दक्षिणाया भगवदर्धाङ्गत्वेन तत्समत्वात् कथं भगवत उत्तमत्वमित्यतः प्रयुक्ताश्चर्यपदार्थमाह– **न मादृश इति** ।। समाभावादेव उत्तमाभावः कैमुत्यसिद्ध इत्याह– **उत्तमो वेति** ।। ननु यज्ञान्तसर्वोत्तमत्वे नारदेनोक्ते कृष्णेन दक्षिणान्तसर्वोत्तमत्वमुच्यते । तदिदं विशेषशून्ययज्ञ-दक्षिणयोरेकत्वेन विशेषाभावादित्यत कृष्णस्याभिप्रायमाह– **सर्वोत्तमत्वमिति** ।। स्मरन् अभिप्रेयन् । तदुक्तं एकादशस्कन्धतात्पर्ये- 'सर्ववेदाभिमानिन्यो देव्यो लक्ष्मीस्ततोऽधिका । वेदाभिमानिनी साक्षात् सा विष्णोर्दूरतः स्थिता । यज्ञाख्या सैव विष्णोस्तु या तूरःस्थलमाश्रिता । हरिणा रतियोगस्था दक्षिणाख्यापि सैव तु । उत्तरोत्तरतस्सा तु विशिष्टा दक्षिणा सुखे ।।' इति ।। ७५ ।।

**भावचन्द्रिका**– स्मरन् स्मारयन् ।।७५।।

**भारतश्री**– '...यदा सैव सरस्वती । तदा तस्या वरा सैव प्राणसंयोगिनी मता ।। प्राणयोग-वियोगाभ्यां सा चैकापि विभिद्यते ।।' इति छान्दोग्यभाष्ये ऋगभिमानिसरस्वत्यपेक्षया वागभिमानि-सरस्वत्या उत्तमत्वं प्रतिपादितम् । तथाऽत्रापीति सम्प्रदायविदः ।। ७५ ।।

**चट्टी**– तदापि वामार्धस्थितावसरेऽपि अस्याः दक्षिणानाम्न्याः सकाशात् अहमुत्तमः सुपूर्णः, बल-ज्ञानादिभिरिति शेषः । अतः कश्चित् मादृशः नास्ति उत्तमो वा नैवास्ति । सः कृष्णः दक्षिणानां च शश्वत्सर्वोत्तमत्वं सर्वस्मात् जगतः उत्तमत्वं स्मरन् दक्षिणाभिः साकमित्यवादीत् । एवमुक्ते जगतः स्वस्य दक्षिणानां प्राधान्यं स्वस्माद् दक्षिणाभियुक्तस्य जगतः अप्राधान्यं च सिद्धमिति भावः ।। ७५ ।।

**ताभिश्चैताभिर्दक्षिणाभिः समेताद् वरिष्ठोऽहं जगतः सर्वदैव ।**
**मत्सामर्थ्यान्नैव चानन्तभागो दक्षिणानां विद्यते नारदेति ॥७६॥**

**वेदाङ्गतीर्थीया–** उक्तमर्थं विशदयन् स्वस्य सर्वोत्तमत्वमाह– **ताभिरित्यादिना** ॥ स्वस्य दक्षिणोत्तमत्वमुपपादयति– **मत्सामर्थ्यादिति** ॥ अनन्तभागः सामर्थ्यानन्तभागादेकभागः । 'दक्षिणाभिः साकम्' इति भगवद्वाक्यार्थमुक्त्वोपसंहरति– **इतीति** ॥ ७६ ॥

**वादिराजतीर्थीया–** एतदेव प्रपञ्चयति– **ताभिश्चैताभिरित्यादिना** ॥ 'अनन्तभागः' इत्यत्र अनन्तादेको भागः अनन्तभाग इत्यर्थः ॥ ७६-७७ ॥

**सत्याभिनवतीर्थीया–** तत्रैव 'मत्सामर्थ्यान्नैव..' इत्यस्ति । तस्यार्थः- हे नारद! मत्सामर्थ्यात् मत्सामर्थ्यस्य यः अनन्तभागः तदेकभागसमसामर्थ्यं दक्षिणां नैव विद्यत इति चावादीदिति । एतेन 'सत्यं सत्यं पुनस्सत्यं शपथैश्चापि कोटिभिः । विष्णुमाहात्म्यलेशस्य विभक्तस्य च कोटिधा । पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा । नैकांशसममाहात्म्याः श्रीशेषब्रह्मशङ्कराः ॥' (गी.भा.२.२४) इति नारदपुराणवचनानुसारेण मत्सामर्थ्यस्य यः अनन्तभागः, तदेकभागसमत्सामर्थ्यं दक्षिणानां नैव विद्यत इति वक्तव्यम् । मत्सामर्थ्यादनन्तभागो दक्षिणायां नैव विद्यते इति कथनमनुपपन्नमिति दूषणं परिहृतम् । मत्सामर्थ्यादिति पञ्चमी षष्ठ्यादेशः । यः अनन्तभागः तदेकदेशसमसामर्थ्यं इत्यनयोः पदयोः शेष इति चाङ्गीकृत्य मत्सामर्थ्यस्य यः अनन्तभागः तदेकदेशसमसामर्थ्यं दक्षिणानां न विद्यते इत्यर्थस्य उक्तत्वात् ॥७६-७८॥

**वरदराजीया–** कृष्णवाक्ययोजनां दर्शयति– **ताभिश्चेति** ॥ ताभिर्वेदाभिमानिदेवताभिः दक्षिणाभिश्च समेताज्जगतः सकाशात् सर्वदा वरिष्ठ एव । वरुणादे गङ्गाद्युत्तममत्वं यथा मितैः गुणैः तथा दक्षिणाभ्यो हरेरुत्तमत्वमिति न भ्रमितव्यमित्याह– **मत्सामर्थ्यादिति** ॥ मत्समर्थ्यात् मम गुणसामर्थ्यमपेक्ष्य अनन्तो भागो अनन्तांशोऽपि दक्षिणानां नैव विद्यते । नारद! इति कृष्णकृतं सम्बोधनम् ॥७६॥

**अनन्तभट्टीया–** दक्षिणानामधेया इति पूर्वं प्रातिपदिकार्थ उक्तः । सम्प्रति विभक्त्यर्थं वदन् वाक्यार्थं स्पष्टयति– **ताभिरिति** ॥ नन्वत्र दक्षिणाभ्यः उत्तमत्वं ज्ञाप्यम् । अतः किमर्थं दक्षिणाभिः साकं जगत इत्युक्तमित्यतः प्रयोजनान्तरमाह– **मत्सामर्थ्यादिति** ॥ अपेक्ष्येति शेषः । इत्यभिप्रायवतोक्तं जगता साहित्याग्रहणेन 'दक्षिणाभ्यः' इत्येवोक्तपूर्वपूर्वस्मादुत्तरोत्तरस्य यावदाधिक्यं भगवतोऽपि दक्षिणाभ्य-स्तावदाधिक्यं प्रतीयेत । अपकृष्टजगता सह प्रयोगे तु तथा न प्रतीयादिति भावेन 'साकम्' इति च प्रयुक्तमिति भावः ॥ ७६ ॥

**जनार्दनीया–** उक्तमेवार्थं विशदयन् स्वस्य सर्वोत्तमत्वमाह– **ताभिरित्यादिना** ॥ ताभिः वेदाभिमानियज्ञनाम्नीभिः प्रकृतिभिः । बहुवेदाभिमानित्वाद्बहुवचनम् । एताभिः दक्षिणाभिः । यज्ञादौ

दीयमानदक्षिणानां वहुप्रकारत्वाद्बहुवचनम् । समेतायुक्ताज्जगतः सर्वदा अहं वरिष्ठ एव श्रेष्ठ एव । स्वस्य दक्षिणोत्तमत्वमुपपादयति– **मत्सामर्थ्यादिति** ।। हे नारद! इति कृष्णसम्वोधनम् । मत्सामर्थ्यादनन्तभागः सामर्थ्यानन्तभागादेकभागः दक्षिणानां नैव विद्यते । वामार्धरूपायाः लक्ष्म्या अपि नास्तीत्यर्थः । 'दक्षिणाभिः साकम्' इति भगवद्वाक्यमुक्त्वा उपसंहरति– **इतीति** ।।७६।।

**भावविवृतिः–** मत्सान्निध्यात् दक्षिणानामाधिक्यवत् दक्षिणासाहित्येन ममाधिक्यमस्तीति न मन्तव्यमित्याह– **मत्सामर्थ्यादिति** ।। ७६ ।।

**ताम्रपर्णीया–** उक्तमेव विशदयन् 'दक्षिणाभिः साकम्' इत्यस्यान्वयमुखेनार्थमाह । ताभिर्वेद-यज्ञाभिमानिभिः वरुणादेर्गङ्गाद्युत्तमत्ववच्च हरेर्दक्षिणोत्तमत्वमित्याह– **मत्सामर्थ्यादिति** ।। मत्सामर्थ्य-मपेक्ष्य ।। ७६ ।।

**चट्टी–** दक्षिणाभिः साकं स्थिताज्जगतोऽहं उत्तम इत्यवादीत् । तथा च वेदाभिमानिरूपापेक्षया अङ्गस्थरूपस्य सर्वोत्तमत्वमाह– **ताभिरित्यादिना** ।। ताभिर्वेदाभिमानियज्ञनाम्नीभिः प्रकृतिभिः । बहुवेदाभिमानित्वात् बहुवचनम् । एताभिः दक्षिणाभिः यज्ञादौ दीयमानदक्षिणानां बहुप्रकारत्वात् बहुवचनम् । समेतायुक्ताज्जगतस्सर्वदा अहं वरिष्ठ एव । स्वस्य दक्षिणोत्तमत्वमुपपादयति– **मत्सामर्थ्या-दिति** ।। हे नारद! इति श्रीकृष्णकृतसम्वोधनम् । मत्सामर्थ्यादनन्तभागः सामर्थ्यानन्तभागादेकभागः दक्षिणानां नैव विद्यते । वामार्धरूपायाः लक्ष्म्या अपि नास्तीत्यर्थः ।।७६।।

**उक्तं कृष्णेनाप्रतिमेन भूपा अन्योत्तमत्वं दक्षिणानां च शश्वत् ।**
**सेयं भैष्मी दक्षिणा केशवोऽयं तस्याः श्रेष्ठः पश्यत राजसङ्घाः ।।७७।।**

**वेदाङ्गतीर्थीया–** हे भूपाः! इति अभिप्रायेण अप्रतिमेन कृष्णेन 'दक्षिणाभिः साकम्' इत्युक्तम् । दक्षिणाभिः साकमिति वदतः कृष्णस्य दक्षिणानां च जगदुत्तमत्वमभिप्राय इत्याह– **अन्योत्तमत्वमिति**।। अन्योत्तमत्वं च शश्वत् अन्यस्माज्जगत उत्तमत्वं चाभिप्रेतमिति । तस्याः केशवस्य श्रैष्ठ्यं वयं कथं स्फुटं जानीम इत्यत आह– **सेति** ।। सा दक्षिणा ।। ७७ ।।

**वरदराजीया–** हे भूपाः! इति नारदकृतसम्वोधनम् । तर्हि दक्षिणाभ्य उत्तम इति वक्तव्ये दक्षिणाभिरिति किमर्थमुक्तमित्यत उक्तम्– **अन्योत्तमत्वमिति** ।। दक्षिणाभ्यः इत्युक्ते तदुत्तमत्वं स्वस्योक्तं स्यात् । न तु दक्षिणानां स्वेतरसर्वोत्तमत्वम् । 'दक्षिणाभिः साकम्' इत्युक्ते च न केवलमहमेव सर्वोत्तमः किन्तु दक्षिणाभिः साकं तद्विशिष्ट एव सर्वोत्तम इत्यप्यर्थप्रतीतेः । विशेषणीभूतदक्षिणायाः अन्योत्तमत्वं लभ्यते अतः अनया वाचोभङ्ग्या दक्षिणानां अन्योत्तमत्वं आह । कृष्ण इत्यर्थः । दक्षिणाभिः साकं कृष्णस्य सर्वोत्तमत्वं भूपानां अनुभवारूढं करोति– **सेयमिति** ।। सेयं सिंहासने कृष्णेन सह स्थिता भैष्मी रुक्मिणी दक्षिणा रमारूपविशेषदक्षिणास्वरूपा । अयं केशवः कृष्णः तस्याः भैष्म्याः पतित्वेन श्रेष्ठः इति । हे राजसङ्घाः! पश्यत ।।७७।।

**अनन्तभट्टीया–** दक्षिणायाः स्वेतरसर्वोत्तमत्वस्य ज्ञातव्यत्वात् पुनरपि वाक्यतात्पर्यमाह– **अन्योत्तमत्वमिति** ।। ननु भगवान् दक्षिणाभ्यः उत्तमश्चेत्? अयं कृष्णः स्वयं कथं 'दक्षिणाभिः साकम्' इत्यब्रवीदित्यत आह– **सेयमिति** ।। अयं कृष्णः केशवः ।। ७७ ।।

**जनार्दनीया–** हे भूपाः! इति नारदकृतसम्बोधनम् । अप्रतिमेन कृष्णेन शश्वत् दक्षिणानां अन्योत्तमत्वं स्वेतरजगदुत्तमत्वं विद्यते इत्यभिप्रायेण 'दक्षिणाभिः साकम्' इत्युक्तम् । अतः दक्षिणायाः सकाशात् केशवस्योत्तमत्वं युक्तम् । ननु केशवः उत्तमश्चेत् कृष्णः धन्य आश्चर्य इति किमर्थमुक्त इति तत्राह– **सेयमिति** ।। सा दक्षिणा इयं भैष्मी एषा दृश्यमाना रुक्मिणी । स केशवः अयं कृष्णः अस्याः श्रेष्ठः । हे राजसङ्घाः ! ।।७७।।

**भावविवृतिः–** 'सेयं भैष्मी दक्षिणा केशवोऽयं तस्याः श्रेष्ठः' इत्यत्र सा दक्षिणा इयं भैष्मी स यज्ञनामा केशवः ब्रह्मरुद्रनियामको हरिः अयं कृष्णः दक्षिणांशभूतायाः रुग्मिण्याः सकाशात् श्रेष्ठः ।।७७-८७।।

**ताम्रपर्णीया–** 'ताभिः वेदादिभिः एताभिः दक्षिणाभिः समेताज्जगतः' इत्युक्त्या प्राप्तं दक्षिणाया इतरसाम्यं वारयन् कदाचिद्दक्षिणानामुत्तमत्वं कदाचिद्यज्ञानामुत्तमत्वं किमिति शङ्कां च वारयति– **अन्येत्तमत्वमिति** ।। 'दक्षिणभिः साकम्' इति वदतः कृष्णस्य दक्षिणानामन्योत्तमत्वमभिप्रेतमिति भावः । सेयं भैष्मीति सा दक्षिणेयं भैष्मीत्यर्थः । ननु कथं भैष्म्या दक्षिणात्वम्? तस्याः अर्धनारीनरात्मना दक्षभागे स्थितत्वेनाभावात् । न च दक्षिणैक्यविवक्षयैवमुक्तिरिति वाच्यम् । यज्ञैक्येन भैष्मी यज्ञनाम्नीति वक्तव्यतापत्तेरिति चेदत्राहुः । दक्षिणारूपाद्विभक्तत्वेनैवमुक्तिसम्भवात् यद्वा रूक्मिण्यपीदानीं दक्षिणैव भागतः पुरुषत्वं न व्यक्तमतो न दोषः । 'तस्या इनो हि विष्णुः स दक्षभागे स्थितः सदा'(२-१) इत्यैतरेयभाष्यानुसारेण दक्षिणारूपाणि व्यवस्थितानि वा । 'यदा तु सा मे वामा वामार्धरूपा' इत्यादिवलात् सर्वरूपाणामपि दक्षिणात्वं भवति वेति चिन्तास्मदाचार्यैरेवान्यत्र कृतेति नेह कृता ।।७७-८१।।

**चट्टी–** 'दक्षिणाभिः साकम्' इति भगवद्वाक्याभिप्रायमुक्त्वा उपसंहरति– **इतीति** ।। हे भूपाः! इति नारदकृतसम्बोधनम् । अप्रतिमेन श्रीकृष्णेन शश्वद् दक्षिणानां चान्योत्तमत्वमुक्तम् । ननु केशवः उत्तमश्चेत् श्रीकृष्णः धन्यः आश्चर्य इति किमर्थमुक्तमित्यत आह– **सेयमिति** ।। सा दक्षिणेयं भैष्मी एषा दृश्यमाना रुक्मिणी सः केशवः अयं श्रीकृष्णः तस्याः श्रेष्ठः । हे राजसङ्घाः! ।। ७७ ।।

**प्रत्यक्षं वो वीर्यमस्यापि कुन्त्या युद्धेऽर्थितः केशवो वीर्यमस्यै ।**
**अदर्शयत् पाण्डवान् धार्तराष्ट्रान् भीष्मद्रोणद्रौणिकृपान् सकर्णान् ।**
**[1]निरायुधांश्चक्र [2]एकक्षणेन लोकश्रेष्ठान् दैवतैरप्यजेयान् ।।७८।।**

---

१. 'जितवान् अर्जुनद्वारा' इति नीलकण्ठः । हरिवंशे विष्णुपर्वणि-१०२.१८.

२. 'एकः क्षणेन' इति वरदराजीयपाठः ।

**वेदाङ्गतीर्थीया–** एवं श्रीकृष्णस्य सर्वोत्तमत्वमुक्त्वा प्रत्यक्षेणापि तत्साधयति– **प्रत्यक्षमिति** ।।७८।।

**वादिराजतीर्थीया–** 'प्रत्यक्षं वो वीर्यम्' इत्यत्र हे राजसङ्घाः! अस्य वीर्यं वः प्रत्यक्षमपीति यदा नारदो जगाद तदा कुन्त्या अर्थितः तव वीर्यं दर्शयेत्यर्थितः केशवः अस्यै युद्धे वीर्यमदर्शयदिति यदा तदेति पदे उपस्कृत्य योजना ।। ७८ ।।

**मधुसूदनीया–** अस्य वीर्यं वः युद्धे प्रत्यक्षम् । कुन्त्या अर्थितः त्वं यदि सर्वेभ्योऽप्यधिकः तर्हि त्वद्बलं प्रदर्शयेति प्रार्थितस्सन् अस्यै कुन्त्यै वीर्यमदर्शयत् । प्रदर्शनप्रकारमेवाह– **पाण्डवानित्यादिना** ।। तथाचोक्तम्– 'तथा गाण्डीवधन्वानं क्रीडन्तं मधुसूदनः । जिगाय भरतश्रेष्ठ कुन्त्याः प्रमुखतो विभुः ।। द्रोणं द्रौणिं कृपं कर्णं भीष्मं चैव सुयोधनम् । चक्रानुयानैः सहिताञ्जिगाय पुरुषोत्तमः ।।' इति हरिवंशे (२.१०२.१७-१८) (सभापर्वणि- ६१.१४-१५)।। ७८-८१ ।।

**वरदराजीया–** अस्य कृष्णस्य वीर्यं सामर्थ्यं वो युष्माकं प्रत्यक्षमपि कुन्त्या अर्थितः । यदि समेतान् एतान् भूपान् त्वमेव एको युद्धे जेष्यसि तर्हि त्वं सर्वोत्तमत्वाच्च असदृशत्वाच्च धन्यः आश्चर्यश्चेति मम निश्चयो भविष्यतीति कुन्त्या प्रार्थितः केशवः अस्यै कुन्त्यै वीर्यं पराक्रममदर्शयत् । युद्धे पाण्डवादीन् एक एव क्षणेन एकक्षणमात्रेण निरायुधाँश्छिन्नायुधान् चक्रे । ननु कतिपयभूपजये कथं सर्वोत्तमत्वं लब्धमित्यत उक्तम्– **लोकेति** ।। तथाच कैमत्युन्यायेन लौकिकालौकिकसर्वपुरुषोत्तमत्वं लब्धमित्यर्थः ।।७८।।

**अनन्तभट्टीया–** एवं विष्णोरेव धन्याश्चर्यत्वे इति दर्शयित्वा प्रकारान्तरेण ज्ञापयन्नाह– **प्रत्यक्षमिति** ।। यदि त्वं समेतान् भीष्मादीन् जेष्यसि युद्धे तर्हि त्वं सर्वोत्तमो असदृशश्चेति कुन्त्यार्थितः निरायुधान् छिन्नत्वेन निरायुधान् ।। ७८ ।।

**जनार्दनीया–** अपि यद्यपि वः युष्माकं कृष्णस्य केशवत्वे संशयस्तर्हि प्रत्यक्षं अस्य कृष्णस्य वीर्यं पश्यत, यूयमिति शेषः । नारदेन इत्युक्ते, कुन्त्या युद्धे क्रीडायुद्धे विषये अर्थितः यदि त्वमेवात्रत्यान् पार्थिवान् सर्वान् जेष्यसि तर्हि त्वं धन्याश्चर्य इति प्रार्थितः । केशवः कृष्णः अस्यै कुन्त्यै वीर्यं पराक्रमं अदर्शयत् । वीर्यप्रदर्शनं दर्शयति– **पाण्डवानिति** ।। दैवतैरपि अजेयान् लोकश्रेष्ठान् पाण्डवादीन् एकक्षणेन क्षणमात्रेण निरायुधान् चक्रे ।। ७८ ।।

**चट्टी–** अपि यद्यपि वो युष्माकं श्रीकृष्णस्य केशवत्वे संशयस्तर्हि प्रत्यक्षं अस्य श्रीकृष्णस्य वीर्यं पश्यत, यूयमिति शेषः । नारदेनेत्युक्ते कुन्त्या युद्धे क्रीडायुद्धे विषये अर्थितः यदि त्वमेवात्रत्यसर्वान् जेष्यसि तर्हि त्वं धन्यः त्वमाश्चर्यः इति प्रार्थितः श्रीकृष्णः अस्यै कुन्त्यै वीर्यं पराक्रमं अदर्शयत् । तदेव विशदयति– **पाण्डवानिति** ।। दैवतैरप्यजेयान् लोकश्रेष्ठान् पाण्डवान् सकर्णान् धार्तराष्ट्रान् भीष्मद्रोण-द्रौणिकृपान् सर्वानप्येकक्षणेन क्षणमात्रेण निरायुधान् चक्रे ।। ७८ ।।

**व्रतं भीमस्यास्ति नैवाभि कृष्णमियामिति स्माऽज्ञया तस्य विष्णोः ।**
**चक्रं रथस्याग्रहीत् स प्रणम्य कृष्णं स तं केशवोऽपाहरच्च ॥७९॥**

**वेदाङ्गतीर्थीया–** अपाहरत् पश्चादनयत् ।। ७९-८० ।।

**वादिराजतीर्थीया–** यस्मात् कृष्णमभि न इयां युद्धार्थं न गच्छेयमिति भीमस्य व्रतमस्ति अतः कारणात् आज्ञया युद्धं कुर्विति कृष्णाज्ञया कृतयापि सः भीमः कृष्णं प्रणम्य आज्ञोल्लङ्घनभिया नमस्कृत्य रथचक्रमेवाग्रहीत् । न तु युयोध । तथाऽपि सः केशवः स्ववीर्योत्कर्षं दर्शयितुं तं भीममपाहरत् स्वबाहुबलेन रथाद् विमोच्य दूरे प्राक्षिपदिति योजना ।। ७९-८१ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'व्रतं भीमस्यास्ति..' इति श्लोके अभि इत्यस्य अभितः सर्वस्मिन् देशे सर्वस्मिन् काले चेत्यर्थः । एतेन अभीत्येतत् व्यर्थमिति दूषणं परास्तम् । सर्वस्मिन् देशे सर्वस्मिन् काले च कृष्णं नैव इयामिति व्रतं भीमस्यास्तीति वक्तुं अभीत्युक्तमित्यङ्गीकारात् ।। ७९-८७ ।।

**वरदराजीया–** 'पाण्डवान्' इत्युक्त्या भीमेनापि युद्धं कृतं पराजयोऽपि प्राप्त इति प्रतीयतेऽतः आह– **व्रतमिति** ।। कृष्णं अभि कृष्णं प्रति युद्धार्थं नैव इयां नैव गच्छामीति भीमस्य प्रतिज्ञापूर्वकव्रतं नियमोऽस्तीत्यर्थः । तर्हि कथं भीमादुत्तमत्वं निर्णीतमित्यतः प्रकारान्तरेण निर्णीतमित्याह– **आज्ञयेति** ।। तस्य विष्णोः कृष्णस्य आज्ञया सः भीमः कृष्णं प्रणम्य रथस्य चक्रमग्रहीत् । रथस्य पुरतश्चलनं यथा न भवति तथा चक्रं गृहीतवानित्यर्थः । केशवः तं रथं अपाहरत् पुरतो नीतवान् ।।७९।।

**अनन्तभट्टीया–** कृष्णमभि । विष्णोराज्ञया व्रतमस्ति यथा । विष्णोराज्ञया रथस्य चक्रमग्रहीदिति सम्बन्धः । तं रथम् ।। ७९ ।।

**जनार्दनीया–** पूर्वं भीमेन कृष्णेन सह गदाशिक्षा न कृता । 'प्रत्युद्यमो भगवतापि भवेद्गदायाः शिक्षा यदा भगवता क्रियते न चेमम् । कुर्याम्' (ता.नि-१४.१०८) इति गदाशिक्षा न कृता । यस्मात् तस्मात् कृष्णमभि कृष्णं प्रति नैव इयां न गच्छामि, युद्धार्थमिति शेषः । इति भीमस्य व्रतं अस्ति हि यस्मात् तस्मात् तस्य विष्णोः आज्ञया स भीमः कृष्णं प्रणम्य, रथस्य चक्रं कृष्णस्य रथचक्रमित्यर्थः । अग्रहीत् । रथक्षेपणार्थं गृहीतमिति दर्शयन् कृष्णं ननामेति भावः । स केशवः तं भीमं अपाहरत् पश्चादनयत् ।।७९।।

**चट्टी–** 'प्रत्युद्यमो भगवतापि भवेद्गदायाः शिक्षा यदा भगवता क्रियते न चेमम् । कुर्याम्' इति भीमेन कृष्णेन सह पूर्वं गदाशिक्षा न कृता । तस्मात् श्रीकृष्णमभि श्रीकृष्णं प्रति नैव इयां न गच्छामि, युद्धार्थमिति शेषः । इति भीमस्य व्रतमस्ति हि यस्मात् तस्मात् तस्य श्रीविष्णोराज्ञया सः भीमः श्रीकृष्णं प्रणम्य रथस्य चक्रं, श्रीकृष्णस्येति शेषः । अग्रहीत् रथक्षेपणार्थं गृहीतमिति दर्शयन् श्रीकृष्णं ननामेति भावः । केशवः श्रीकृष्णः तं भीमं अपाहरत् पश्चादनयच्च ।। ७९ ।।

**वेदाङ्गतीर्थीया–** एवं श्रीकृष्णस्य सर्वोत्तमत्वमुक्त्वा प्रत्यक्षेणापि तत्साधयति– **प्रत्यक्षमिति** ।।७८।।

**वादिराजतीर्थीया–** 'प्रत्यक्षं वो वीर्यम्' इत्यत्र हे राजसङ्घाः! अस्य वीर्यं वः प्रत्यक्षमपीति यदा नारदो जगाद तदा कुन्त्या अर्थितः तव वीर्यं दर्शयेत्यर्थितः केशवः अस्यै युद्धे वीर्यमदर्शयदिति यदा तदेति पदे उपस्कृत्य योजना ।। ७८ ।।

**मधुसूदनीया–** अस्य वीर्यं वः युद्धे प्रत्यक्षम् । कुन्त्या अर्थितः त्वं यदि सर्वेभ्योऽप्यधिकः तर्हि त्वद्बलं प्रदर्शयेति प्रार्थितस्सन् अस्यै कुन्त्यै वीर्यमदर्शयत् । प्रदर्शनप्रकारमेवाह– **पाण्डवानित्यादिना** ।। तथाचोक्तम्– 'तथा गाण्डीवधन्वानं क्रीडन्तं मधुसूदनः । जिगाय भरतश्रेष्ठं कुन्त्याः प्रमुखतो विभुः ।। द्रोणं द्रौणिं कृपं कर्णं भीष्मं चैव सुयोधनम् । चक्रानुयानैः सहिताञ्जिगाय पुरुषोत्तमः ।।' इति हरिवंशे (२.१०२.१७-१८) (सभापर्वणि- ६१.१४-१५)।। ७८-८१ ।।

**वरदराजीया–** अस्य कृष्णस्य वीर्यं सामर्थ्यं वो युष्माकं प्रत्यक्षमपि कुन्त्या अर्थितः । यदि समेतान् एतान् भूपान् त्वमेव एको युद्धे जेष्यसि तर्हि त्वं सर्वोत्तमत्वाच्च असदृशत्वाच्च धन्यः आश्चर्यश्चेति मम निश्चयो भविष्यतीति कुन्त्या प्रार्थितः केशवः अस्यै कुन्त्यै वीर्यं पराक्रममदर्शयत् । युद्धे पाण्डवादीन् एक एव क्षणेन एकक्षणमात्रेण निरायुधाँश्छिन्नायुधान् चक्रे । ननु कतिपयभूपजये कथं सर्वोत्तमत्वं लब्धमित्यत उक्तम्– **लोकेति** ।। तथाच कैमत्युन्यायेन लौकिकालौकिकसर्वपुरुषोत्तमत्वं लब्धमित्यर्थः ।।७८।।

**अनन्तभट्टीया–** एवं विष्णोरेव धन्याश्चर्यत्वे इति दर्शयित्वा प्रकारान्तरेण ज्ञापयन्नाह– **प्रत्यक्षमिति** ।। यदि त्वं समेतान् भीष्मादीन् जेष्यसि युद्धे तर्हि त्वं सर्वोत्तमो असदृशश्चेति कुन्त्यार्थितः निरायुधान् छिन्नत्वेन निरायुधान् ।। ७८ ।।

**जनार्दनीया–** अपि यद्यपि वः युष्माकं कृष्णस्य केशवत्वे संशयस्तर्हि प्रत्यक्षं अस्य कृष्णस्य वीर्यं पश्यत, यूयमिति शेषः । नारदेन इत्युक्ते, कुन्त्या युद्धे क्रीडायुद्धे विषये अर्थितः यदि त्वमेवात्रत्यान् पार्थिवान् सर्वान् जेष्यसि तर्हि त्वं धन्याश्चर्य इति प्रार्थितः । केशवः कृष्णः अस्यै कुन्त्यै वीर्यं पराक्रमं अदर्शयत् । वीर्यप्रदर्शनं दर्शयति– **पाण्डवानिति** ।। दैवतैरपि अजेयान् लोकश्रेष्ठान् पाण्डवादीन् एकक्षणेन क्षणमात्रेण निरायुधान् चक्रे ।। ७८ ।।

**चट्टी–** अपि यद्यपि वो युष्माकं श्रीकृष्णस्य केशवत्वे संशयस्तर्हि प्रत्यक्षं अस्य श्रीकृष्णस्य वीर्यं पश्यत, यूयमिति शेषः । नारदेनेत्युक्ते कुन्त्या युद्धे क्रीडायुद्धे विषये अर्थितः यदि त्वमेवात्रत्यसर्वान् जेष्यसि तर्हि त्वं धन्यः त्वमाश्चर्यः इति प्रार्थितः श्रीकृष्णः अस्यै कुन्त्यै वीर्यं पराक्रमं अदर्शयत् । तदेव विशदयति– **पाण्डवानिति** ।। दैवतैरप्यजेयान् लोकश्रेष्ठान् पाण्डवान् सकर्णान् धार्तराष्ट्रान् भीष्मद्रोण-द्रौणिकृपान् सर्वानप्येकक्षणेन क्षणमात्रेण निरायुधान् चक्रे ।। ७८ ।।

**व्रतं भीमस्यास्ति नैवाभि कृष्णमियामिति स्माऽज्ञया तस्य विष्णोः ।**
**चक्रं रथस्याग्रहीत् स प्रणम्य कृष्णं स तं केशवोऽपाहरच्च ॥७९॥**

**वेदाङ्गतीर्थीया–** अपाहरत् पश्चादनयत् ॥ ७९-८० ॥

**वादिराजतीर्थीया–** यस्मात् कृष्णमभि न इयां युद्धार्थं न गच्छेयमिति भीमस्य व्रतमस्ति अतः कारणात् आज्ञया युद्धं कुर्विति कृष्णाज्ञया कृतयापि सः भीमः कृष्णं प्रणम्य आज्ञोल्लङ्घनभिया नमस्कृत्य रथचक्रमेवाग्रहीत् । न तु युयोध । तथाऽपि सः केशवः स्ववीर्योत्कर्षं दर्शयितुं तं भीममपाहरत् स्वबाहुबलेन रथाद् विमोच्य दूरे प्राक्षिपदिति योजना ॥ ७९-८१ ॥

**सत्याभिनवतीर्थीया–** तत्रैव 'व्रतं भीमस्यास्ति..' इति श्लोके अभि इत्यस्य अभितः सर्वस्मिन् देशे सर्वस्मिन् काले चेत्यर्थः । एतेन अभीत्येतत् व्यर्थमिति दूषणं परास्तम् । सर्वस्मिन् देशे सर्वस्मिन् काले च कृष्णं नैव इयामिति व्रतं भीमस्यास्तीति वक्तुं अभीत्युक्तमित्यङ्गीकारात् ॥ ७९-८७ ॥

**वरदराजीया–** 'पाण्डवान्' इत्युक्त्या भीमेनापि युद्धं कृतं पराजयोऽपि प्राप्त इति प्रतीयतेऽतः आह– **व्रतमिति** ॥ कृष्णं अभि कृष्णं प्रति युद्धार्थं नैव इयां नैव गच्छामीति भीमस्य प्रतिज्ञापूर्वकव्रतं नियमोऽस्तीत्यर्थः । तर्हि कथं भीमादुत्तमत्वं निर्णीतमित्यतः प्रकारान्तरेण निर्णीतमित्याह– **आज्ञयेति** ॥ तस्य विष्णोः कृष्णस्य आज्ञया सः भीमः कृष्णं प्रणम्य रथस्य चक्रमग्रहीत् । रथस्य पुरतश्चलनं यथा न भवति तथा चक्रं गृहीतवानित्यर्थः । केशवः तं रथं अपाहरत् पुरतो नीतवान् ॥७९॥

**अनन्तभट्टीया–** कृष्णमभि । विष्णोराज्ञया व्रतमस्ति यथा । विष्णोराज्ञया रथस्य चक्रमग्रहीदिति सम्बन्धः । तं रथम् ॥ ७९ ॥

**जनार्दनीया–** पूर्वं भीमेन कृष्णेन सह गदाशिक्षा न कृता । 'प्रत्युद्यमो भगवतापि भवेद्गदायाः शिक्षा यदा भगवता क्रियते न चेमम् । कुर्याम्' (ता.नि-१४.१०८) इति गदाशिक्षा न कृता । यस्मात् तस्मात् कृष्णमभि कृष्णं प्रति नैव इयां न गच्छामि, युद्धार्थमिति शेषः । इति भीमस्य व्रतं अस्ति हि यस्मात् तस्मात् तस्य विष्णोः आज्ञया स भीमः कृष्णं प्रणम्य, रथस्य चक्रं कृष्णस्य रथचक्रमित्यर्थः । अग्रहीत् । रथक्षेपणार्थं गृहीतमिति दर्शयन् कृष्णं ननामेति भावः । स केशवः तं भीमं अपाहरत् पश्चादनयत् ॥७९॥

**चट्टी–** 'प्रत्युद्यमो भगवतापि भवेद्गदायाः शिक्षा यदा भगवता क्रियते न चेमम् । कुर्याम्' इति भीमेन कृष्णेन सह पूर्वं गदाशिक्षा न कृता । तस्मात् श्रीकृष्णमभि श्रीकृष्णं प्रति नैव इयां न गच्छामि, युद्धार्थमिति शेषः । इति भीमस्य व्रतमस्ति हि यस्मात् तस्मात् तस्य श्रीविष्णोराज्ञया सः भीमः श्रीकृष्णं प्रणम्य रथस्य चक्रं, श्रीकृष्णस्येति शेषः । अग्रहीत् रथक्षेपणार्थं गृहीतमिति दर्शयन् श्रीकृष्णं ननामेति भावः । केशवः श्रीकृष्णः तं भीमं अपाहरत् पश्चादनयच्च ॥ ७९ ॥

**एवं क्रीडन्तोऽप्यात्मशक्त्या प्रयत्नं कुर्वन्तस्ते विजिताः केशवेन ।**
**ततः सर्वे नेमुरस्मै पृथा च सविस्मया वासुदेवं ननाम ॥८०॥**

**वरदराजीया–** एवं क्रीडतोऽपि न क्रोधात् आत्मशक्त्यनुसारेण प्रयत्नं कुर्वन्तोऽपि भूपाः केशवेन विजिताः । ततः परीक्षानन्तरं सर्वे पाण्डवाद्याः अस्मै कृष्णाय नेमुः नमस्कृतवन्तः । पृथा कुन्ती च सविस्मया सती वासुदेवं ननाम ॥८०॥

**जनार्दनीया–** एवं क्रीडन्तस्ते केशवेन विजिताः पराजिताः । ततः पराभवानन्तरं सर्वे अस्मै कृष्णाय नेमुः । पृथा च सविस्मया तत्रास्यां क्रियायां यथा भवति तथा । ननाम ॥८०॥

**चट्टी–** एवं क्रीडन्तः आत्मशक्त्या प्रयत्नं कुर्वन्तोऽपि ते सर्वे केशवेन श्रीकृष्णेन विजिताः । ततः पराभवानन्तरं अस्मै श्रीकृष्णाय नेमुः । पृथा च सविस्मया आश्चर्येण सहिता सती वासुदेवं ननाम ॥८०॥

**[1]एवं विधान्यद्भुतानीह कृष्णे दृष्टानि वः शतसाहस्रशश्च ।**
**तस्मादेष [2]ह्यद्भुतोऽप्युत्तमश्चेदुक्ता नेमुस्तेऽखिला वासुदेवम् ॥८१॥**

**वेदाङ्गतीर्थीया–** एष हि एष एव अद्भुतः आश्चर्यः अत्युत्तमः धन्यः ॥ ८१ ॥

**वरदराजीया–** एवं भारते धन्याश्चर्योक्तं धन्यत्वमाश्चर्याध्यायोक्तं धन्यत्वं आश्चर्यत्वं चोपपाद्य उपसंहरति– **एवं विधानीति** ॥ उक्तप्रकारेण अद्भुतानीति सामर्थ्यानि वा युष्माभिः शतसहस्रशः दृष्टानि । यतः [3]तस्मादेषः कृष्णः अद्भुतः आश्चर्यः उत्तमः धन्यो हि इत्युक्त्वा नारदेन बोधिताः अखिलास्ते भूपाः वासुदेवं कृष्णं नेमुः ॥८१॥

**अनन्तभट्टीया–** अद्भुतं आश्चर्यम् ॥ ८१-८३ ॥

**जनार्दनीया–** वः युष्माभिः एवंविधानि उक्तप्रकाराणि अद्भुतानि इह कृष्णे शतसाहस्रशश्च दृष्टानि । तस्मात् कारणात् एष हि एष एव अद्भुतः आश्चर्य अत्युत्तमः धन्यः सत्यम् इति नारदेनोक्तास्ते वासुदेवं नेमुः । 'उक्त्वा' इति पाठे नारदेन धन्य इत्याद्युक्त्वा बोधितास्ते नेमुः ॥८१॥

**चट्टी–** वः युष्माभिरिह श्रीकृष्णे एवं विधान्युक्तप्रकाराण्यद्भुतानि शतसहस्रशश्च दृष्टानि । तस्मात् कारणादेष हि एष एव अद्भुत आश्चर्य उत्तमः धन्यश्चेत्युक्ता ते अखिला राजानः वासुदेवं श्रीकृष्णं नेमुः ॥८१॥

---

१. 'श्रुतोऽयमेव शतशस्तथा शतसहस्रशः । अन्तो हि कर्मणामस्य दृष्टपूर्वो न केनचित् ॥ एवमेतानि कर्माणि शिशुमध्यगतस्तदा । कृतवान् पुण्डरीकाक्षः संकर्षणसहायवान् ॥ इत्युवाच पुरा व्यासस्तपोवीर्येण चक्षुषा । महायोगी महाबुद्धिः सर्वप्रत्यक्षदर्शिवान् ॥' हरिवंशे विष्णुपर्वणि-१०२.३०.-४१.

२. 'ह्यद्भुतोऽत्युत्तमः' इति जनार्दनीयपाठः । 'उक्त्वा नेमुः' इति वरदराजीयपाठः । तथा पाठान्तरमिति जनार्दनीये ।

३. 'स्वस्मात्' इति क्वचित् कोशेषु ।

**वाय्वाज्ञया वायुशिष्यः स सत्यमित्यायुक्त्वा नारदो रुक्मिणीं च ।**
**स्तुत्वा पुष्पं पारिजातस्य दत्वा ययौ लोकं क्षिप्रमब्जोद्भवस्य ॥८२॥**

**वेदाङ्गतीर्थीया–** सत्यं यथार्थम् । 'कूर्मो दृष्टः' इत्यादि ॥ ८२ ॥

**वादिराजतीर्थीया–** 'वाय्वाज्ञया वायुशिष्य.' इत्यत्र वायुशिष्यः सः नारदः वाय्वाज्ञया रैवताचलस्थ-कृष्णमहिमानं तत्र पुञ्जीभूतराजकटकमध्ये प्रकटीकृत्य गच्छेति विष्णुप्रेषितमूलरूपवाय्वाज्ञया सत्यं हरेर्महामाहात्म्यं यथार्थमिति, आदिपदेन दक्षिणादेव्या अपि माहात्म्यं च सत्यमित्युक्त्वेति योजना । अन्यत् स्पष्टमेव ॥८२-८४॥

**मधुसूदनीया–** ॥ **स सत्यमिति** ॥ सत्यं शपथं तत्सहितं यथा भवति तथा इत्यर्थः ॥८२-८७॥

**वरदराजीया–** इदं नारदेन किमर्थं अनुष्ठितमित्यत आह– **वाय्वाज्ञयेति** ॥ वायोः शिष्यो नारदः वाय्वाज्ञया विष्णोस्सर्वोत्तमत्वादिकं लोके ख्यापय इति वायोराज्ञया सत्यं विष्णोरुक्तं सामर्थ्यं सत्यमित्यायुक्त्वा, रुक्मिणीश्च स्तुत्वा, पारिजातस्य पुष्पं रुक्मिण्यै दत्वा, अब्जोद्भवस्य ब्रह्मणो लोकं क्षिप्रं अविलम्बेन ययौ ॥८२॥

**लघ्वनन्तभट्टीया–** इत्यादि सत्यमुक्त्वा । 'उक्तं सत्यमित्यायुक्त्वा' इति केचित् ॥८२-१०३॥

**जनार्दनीया–** वायुशिष्यः स नारदः वाय्वाज्ञया वायोराज्ञया विष्णुः समाधिकरहितः उत्तमश्च सत्यं यथार्थं इत्यायुक्त्वा, रुक्मिणीं च स्तुत्वा, पुष्पं पारिजातपुष्पं दत्वा, रुक्मिण्यै इति शेषः ॥८२॥

**ताम्रपर्णीया–** इत्यादि सत्यमुक्त्वा ॥८२॥

**चट्टी–** वायोः शिष्यः सः नारदः वाय्वाज्ञया विष्णोः सर्वोत्तमत्वादिकं लोके ख्यापय इति वायोराज्ञया सत्यं इत्यादिविष्णोः सामर्थ्यमुक्त्वा रुक्मिणीं स्तुत्वा, पारिजातस्य पुष्पं दत्वा, रुक्मिण्यै इति शेषः । क्षिप्रं अब्जोद्भवस्य ब्रह्मणः लोकं ययौ ॥८२॥

**साक्षात् सत्या रुक्मिणीत्येकसंविद् द्विधाभूता नात्र भेदोऽस्ति कश्चित् ।**
**तथाऽपि सा प्रमदानां [१]स्वभावप्रकाशनार्थं कुपितेवाऽस सत्या ॥८३॥**

**वेदाङ्गतीर्थीया–** साक्षात् एकसंविद् (एकैव संविद्रूपा) ॥ ८३ ॥

**वरदराजीया–** एका अत्यन्ताभिन्ना संविद् यस्याः सा साक्षाल्लक्ष्मीरेव रुक्मिणी सत्यभामेति द्विधा भूता अत्र अनयोः भेदो विशेषः कश्चिदपि नास्ति । तथापि सा सत्या प्रमदानां स्वभावं प्राकृतस्त्रीणां स्वभावस्य प्रदर्शनार्थं कुपितेव आस । रुक्मिणीसम्माननादिना लौकिकसपत्नीव क्रोधाविष्टेव सा जातेत्यर्थः ॥८३॥

---

१. 'स्वभावप्रदर्शनार्थम्' इति वरदराजीयपाठः स्यात् ।

**जनार्दनीया–** साक्षात्, लक्ष्मीरिति शेषः । एकसंवित् अभिन्नसंवित् । सत्येति सत्यभामेति रुक्मिणीति द्विधा भूता । सत्यारुक्मिण्योरेकसंविदेवेति भावः । अत्र अनयोः सत्यारुक्मिण्योः कश्चिद्भेदो नास्ति । यद्यपि तथापि सा सत्या प्रमदानां स्वभावप्रकाशनार्थं कुपितेवास । रैवते रुक्मिणीसन्मानेन स्वयं सपत्नीस्वभावप्रकाशनार्थं क्रोधयुक्तेवास ।।८३।।

**ताम्रपर्णीया–** एकसंवित्वं विषयैक्यादिति न मन्तव्यमिति भावेनोक्तम्– **साक्षादिति** ।। ८३-४।।

**चट्टी–** एका अत्यन्ता अभिन्ना संविद् यस्याः सा लक्ष्मीरेव रुक्मिणी सत्या सत्यभामा चेति द्विधा भूता । अत्रानयोः सत्यारुक्मिण्योः कश्चिदपि भेदः विशेषो नास्ति । तथापि सा सत्या प्रमदानां स्त्रीणां स्वभावप्रकाशनार्थं कुपितेवास ।। ८३ ।।

**साकं रुक्मिण्या राजमध्ये प्रवेशात् स्तवादृषेः पुष्पदानाच्च देवीम् ।**
**कोपाननं दर्शयन्तीमुवाच विडम्बनार्थं कामिजनस्य कृष्णः ।।८४।।**

**वेदाङ्गतीर्थीया–** कामिजनस्य स्त्रैणजनस्य । इत्येवं उवाच ।। ८४ ।।

**वरदराजीया–** कुपितप्रदर्शने निमित्तानि दर्शयति– **साकमिति** ।। रुक्मिण्या साकं राज्ञां सभामध्ये प्रवेशात्, तदा ऋषेः नारदस्य स्तवात् तत्कर्तृकरुक्मिणीस्तोत्रात्, पारिजातपुष्पप्रदानाच्च निमित्तात् कोपाननं कोपयुक्ताननं प्रदर्शयन्तीं देवीं सत्यभामां उवाच कृष्णः । किमिति? कामिनः कामुकस्य जनस्य विडम्बनार्थं प्रतारणार्थं उवाचेति सम्बन्धः ।।८४।।

**अनन्तभट्टीया–** ऋषेरिति कर्तरि षष्ठी ।। ८४ ।।

**जनार्दनीया–** कोपदर्शने निमित्तमाह– **साकमिति** ।। कोपाननं कोपयुक्तमुखं दर्शयन्तीं सत्यभामां कामिजनस्य स्त्रैणजनस्य विडम्बनार्थं उवाच ।। ८४ ।।

**चट्टी–** कोपदर्शने निमित्तमाह– **साकमिति** ।। रुक्मिण्या साकं राजमध्ये राज्ञां सभामध्ये प्रवेशात्, तथा ऋषेः नारदस्य स्तवात् स्तोत्रात्, पुष्पस्य पारिजातपुष्पस्य दानाच्च निमित्तात् कोपाननं कोपयुक्तमुखं दर्शयन्तीं देवीं सत्यभामां कामिजनस्य स्त्रैणजनस्य विडम्बनार्थं श्रीकृष्णः उवाच ।। ८४ ।।

**[१]दातास्म्यहं पारिजातं तरुं त इत्येव तत्राथाऽगमद् वासवोऽपि ।**
**सर्वैर्देवैर्भौमजितोऽप्यदित्यास्तेनैवाथो कुण्डलाभ्यां हृताभ्याम्[२] ।।८५।।**

---

१. भागवते १०.६३-६७.

२. 'अमृतस्राविणी दिव्ये मन्मातुः कृष्ण कुण्डले । जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं गजम् ।।' इति विष्णुपुराणे-५.२९.११.

**वेदाङ्गतीर्थीया–** भौमजितोऽपि इत्यपिशब्देनागमने भौमजितत्वमेकं कारणमुक्तम् । कारणान्तरं चाह– **अथो इति** ।। तत् किमित्यत आह– **तेनैवेति** ।। तेनैव भौमेनैव ।। ८५ ।।

**वादिराजतीर्थीया–** 'कुण्डलाभ्यां हृताभ्याम्' इत्यत्र कुण्डलाभ्यां हृताभ्यां सद्भ्यामित्यर्थः ।। ८५ ।।

**वरदराजीया–** ते तुभ्यं पारिजाततरुं इन्द्रलोकस्थितं दाताऽस्मि दास्यामि इत्युवाचेति सम्बन्धः । तत्र रैवतके सर्वदेवैः सहितो वासवो भौमेन जितः पराजितः तथा अदित्या अपि कुण्डलाभ्यां तेन भौमेनैव हृताभ्यां अपहृताभ्यां निमित्तेन चागमत् । उक्तेन निमित्तद्वयेन भौमवधं प्रार्थयितुं कृष्णं प्रत्यागमदिति भावः ।।८५।।

**अनन्तभट्टीया–**तेनैवभौवनेनैवकुण्डलाभ्यांहृताभ्यांनिमित्तेन ।कुण्डलहरणान्निमित्तादित्यर्थः ।।८५।।

**जनार्दनीया–** ते तुभ्यं तरुं दातास्मि दास्यामीति उवाचेति सम्बन्धः । अथ तदा वासवोऽपि सर्वैर्देवैः सह भौमजितः नरकासुरेण पराजितः सन् तत्र रैवतं प्रति अगमत् । अपिशब्देनागमने भौमजितत्वमेकं कारणमुक्तम् । कारणान्तरं चाह– **अथो इति** ।। ततः किमित्यत आह– **तेनेति** ।। तेन भौमेन अदित्याः हृताभ्यां कुण्डलाभ्यां कुण्डलार्थम् ।।८५।।

**ताम्रपर्णीया–** दातास्मीत्युत्तमपुरुषप्रयोगादहमिति सिद्धावपि रुक्मिण्या ऋषिरदात् तुभ्यं त्वहमिति विशेषं स्फोरयितुं पुनरहमिति । वासवागमने कारणान्तरमाह– **अप्यदित्या इति** ।। अथो पराजयानन्तरम् ।।८५।।

**भारतश्री–** कुण्डलाभ्यां हृताभ्यामिति पञ्चमी सप्तम्यर्थे । कुण्डलयोः हृतयोस्सतोरित्यर्थः ।।८५-८७।।

**चट्टी–** अहं ते तुभ्यं पारिजातं तरुं दातास्मि दास्यामीत्युवाच इति सम्बन्धः । अथ वासवः इन्द्रोऽपि सर्वैः देवैः सह भौमजितः भौमेन नरकासुरेण जितः सन् तेनैव नरकासुरेणैवादित्याः कुण्डलाभ्यां हृताभ्यामपि तत्र रैवतं प्रत्यगमत् । अपिशब्देन गमने भौमजितत्वं एकं कारणं अदितिकुण्डलापहरणं द्वितीयं कारणं चोक्तं भवति ।। ८५-८६ ।।

**तदैवाऽगुर्मुनयस्तेन नुन्ना[१] बदर्यास्ते सर्व एवाऽशु कृष्णम् ।**
**ययाचिरे भौमवधाय नत्वा स्तुत्वा स्तोत्रैर्वैदिकैस्तान्त्रिकैश्च ।।८६।।**

**वेदाङ्गतीर्थीया–** तेन नुन्नाः कृष्णं गच्छतेति प्रेरिताः ते सर्वे मुनयः । सेन्द्रा देवाश्च ।। ८६-८९ ।।

**वादिराजतीर्थीया–** 'तेन नुन्नाः' इत्यत्र तेन 'नुद व्यथने' इति धातोः । नुन्नाः व्यथिता इत्यर्थः ।।८६-९०।।

---

१. 'तुन्नाः' इति भावचन्द्रिकाकाराणां पाठः ।

**वरदराजीया–** तेन इन्द्रेण च कृष्णेन च नुन्नाः प्रेरिताः मुनयो वदर्याः सकाशात् तदैव इन्द्रागमनसमये अगुः प्राप्ताः । सर्वे मुनयः कृष्णं प्रत्येत्य नत्वा वैदिकैः तान्त्रिकैः पञ्चरात्रसम्वन्धिभिः स्तोत्रैः स्तुत्वा भौमस्य वधाय वधार्थं याचिरे ।। ८६ ।।

**अनन्तभट्टीया–** तान्त्रिकैः पञ्चरात्रादिसिद्धैः ।। ८६ ।।

**जनार्दनीया–** तदैव तस्मिन्नेव काले तेन भौमजितेनेन्द्रेण नुन्नाः प्रेरिताः । कृष्णं प्रति, गच्छन्त्विति शेषः । ते सर्वे मुनयः वदर्याः सकाशादगुः प्राप्ताः । त एव कृष्णं नत्वा, वैदिकैः तान्त्रिकैः पञ्चरात्रादिसिद्धैः स्तोत्रैः स्तुत्वा ययाचिरे ।। ८६ ।।

**ताम्रपर्णीया–** तेन नुन्नाः इन्द्रेण कृष्णं गच्छथ इति प्रेरिताः तेन भौमेन पीडिता इति वा ।।८६-७।।

**भावचन्द्रिका–** तेन नरकेण तुन्नाः व्यथिताः । 'तुद व्यथने' इति धातोः । नरकः स्वर्गं गत्वा इन्द्रं जित्वा उर्वशीं कामेन ययाचे । साऽपि त्वं यदा यायजूकः तदा आगच्छामीत्याह । तदर्थं वदरीं प्राप्य ऋषिसङ्घं याजयेति ययाचे । तेऽपि दैत्यं न याजयाम इत्याहुः । तेन रुषा बाधिताः कृष्णं जग्मुः इति हरिवंशोक्तेः ।। ८६ ।।

**इन्द्रेण देवैः सहितेन याचितो विप्रैश्च सस्मार विहङ्गराजम् ।**
**आगम्य नत्वा पुरतः स्थितं तमारुह्य सत्यासहितो ययौ हरिः ।।८७।।**

**वरदराजीया–** देवैः सहितेन इन्द्रेण विप्रैश्च मुनिभिश्च याचितो विहङ्गराजं गरुडं सस्मार । पुरतोऽग्रतः स्थितं तं गरुडं आरुह्य सत्यभामया सहितस्सन् ययौ ।।८७।।

**अनन्तभट्टीया–** विप्रैश्च याचितः ।। ८७ ।।

**जनार्दनीया–** इन्द्रेण विप्रैश्च मुनिभिश्च याचितः कृष्णः विहङ्गराजं गरुडं सस्मार । पुरतः स्थितं अग्रे स्थितं तं गरुडमारुह्य ।। ८७ ।।

**चट्टी–** देवैः सहितेनेन्द्रेण विप्रैः मुनिभिश्च याचितः श्रीकृष्णः विहङ्गराजं गरुडं सस्मार । आगम्य नत्वा पुरतः स्थितं तं गरुडं आरुह्य हरिः कृष्णः सत्यासहितः सत्यभामासहितः सन् ययौ ।। ८७-८९ ।।

**नित्यैव या प्रकृतिः स्वेच्छयैव जगच्छिक्षार्थं द्वादशीं भीमसञ्ज्ञाम् ।**
**उपोष्य बभ्रे कोटिधाराजलस्य विष्णोः प्रीत्यर्थं सैव हि सत्यभामा ।।८८।।**

**सत्याभिनवतीर्थीया–** तत्रैव 'नित्यैव या..' इति श्लोके स्वेच्छया इत्यस्य स्वस्य स्वतन्त्रस्य कृष्णस्य इच्छयेत्यर्थः । एतेन सत्यभामायाः कृष्णाधीनत्वात् स्वेच्छयैवेति कथनमनुपपन्नमिति चोद्यस्यानवकाशः । स्वेच्छयैवेति स्वशब्देन कृष्णस्यैव ग्रहणात् ।।८८-९०।।

**मधुसूदनीया–** ।। **द्वादशीं भीमसञ्ज्ञामिति** ।। उक्तञ्च- 'सहैव पुण्डरीकाक्ष द्वादश्यां क्षीरभोजनम् । करिष्यामि यतात्माऽहं निर्विघ्नेनास्तु तच्च मे ।।' इति मात्स्ये (६९.३२)। भीमसेनो यस्यां तिथौ उपवासं कृतवान् ततो भीमसञ्ज्ञेत्यर्थः । तथाचोक्तम्- 'भीमनामा महाबाहुः कौरवाणां यशस्करः । औदरेणाऽग्निना कर्तुं उपवासं तथा क्षमः ।। सोऽपि चैतां महापुण्यां उपोष्यति महाफलम् । ततः प्रभृति भीमस्य नाम्ना ख्याता भविष्यति ।।' इति बृहन्नारदीये । सा च माघशुद्धेति मन्तव्यम् ।। **कोटिधारा-जलस्येति** ।।जलस्यकोटिधाराःकोटिसङ्ख्याकधाराःवभ्रे धृतवती ।कलशस्यमाषमात्रप्रमाणकबृहच्छिद्राणि कृत्वा तत्र जलं प्रपूर्य तद्धाराभिः स्नातवतीत्यर्थः । तथाचोक्तम्- 'प्रणम्य कलशं तत्र माषमात्रेण संयुतम् । छिद्रेण जलसम्पूर्णमधः कृष्णाजिने स्थितः ।। तस्य धारां च शिरसि धारयत्सकलां निशि । धाराभिर्भूरिभिश्चैव फलं वेदविदो विदुः ।। यस्मात् तस्मात् कुरुश्रेष्ठ धारा धार्या च शक्तितः ।।' इति मात्स्ये (६९.३८)। एतेन 'कोटिधाराख्यतीर्थं स्नातवती' इत्यनन्तभट्टीयव्याख्यानं अपहसितं वेदितव्यम् । अप्रामाणिकत्वात् । प्रमाणविरुद्धत्वाच्च ।। ८८-९६ ।।

**वरदराजीया–** तत्र सत्यभामया कोटिधारास्नानं कृतमिति भारतेऽस्ति । तत्तात्पर्यमाह– **नित्यैवेति** ।। देहतोऽपि नित्या या प्रकृतिर्महालक्ष्मीः सैव सत्यभामा स्वेच्छयैव जगच्छिक्षार्थं न त्वप्राप्तफलोद्देशेन भीमसञ्ज्ञां द्वादशीं प्रति एकादश्यामुपोष्य विष्णोः प्रीत्यर्थं जलस्य कोटिधाराः कोटिसङ्ख्याका धाराः वभ्रे । कोटिसङ्ख्याकाभिः धाराभिः युगपदेव स्नातवतीत्यर्थः ।।८८ ।।

**अनन्तभट्टीया–** जलकोटिधारां वभ्रे । कोटिधाराख्यतीर्थे स्नातवतीत्यर्थः ।। ८८ ।।

**जनार्दनीया–** नित्या नाशरहिता या प्रकृतिः लक्ष्मीः सैव सत्यभामा स्वेच्छयैव जगच्छिक्षार्थमेव । न तु काम्यफलोद्देशेन । भीमसञ्ज्ञां द्वादशीं भीमाख्यमाघशुद्धद्वादशीव्रतं कर्तुं, विष्णोः प्रीत्यर्थमुपोष्य, एकादश्यामिति शेषः । रात्रौ जलस्य सच्छिद्रकलशस्थजलस्य कोटिधाराः वभ्रे । कोटिसङ्ख्याकधाराभिः सस्नावित्यर्थः । भीमद्वादशी तु मत्स्यपुराणेऽभिहिता । 'सहैव पुण्डरीकाक्ष द्वादश्यां क्षीरभोजनम् । करिष्यामि मितात्माहं निर्विघ्नेनास्तु मे व्रतम् ।।' इति । तथा तत्रैव- 'प्रणम्य कलशं तत्र माषमात्रेण संयुतम् । छिद्रेण जलसम्पूर्णमधः कृष्णाजिने स्थितः । तस्य धारां च शिरसि धारयेत् सकलां निशि ।। धाराभिर्भूरिभिश्चैव फलं वेदविदो विदुः । यस्मात् तस्मात् कुरुश्रेष्ठ धारा धार्यानुशक्तितः ।।' इति ।।८८।।

**भावविवृतिः–** 'द्वादशीं भीमसञ्ज्ञाम्' इत्यत्र माघशुद्धद्वादशी दशमीवेधात् द्वादश्यामुपवासः । भीमेनोपोषितत्वात् भीमसञ्ज्ञाम् । 'भीमो नाम महाबाहुः कौरवाणां यशस्करः । औदरेणेनाग्निना कर्तुं उपवासं तथा क्षमः ।। सोऽपि चैतां महापुण्यामुपोष्यति महाबलः । ततः प्रभृति भीमस्य नाम्ना ख्याता भविष्यति ।।' इति बृहन्नारदीये । 'सहैव पुण्डरीकाक्ष द्वादश्यां क्षीरभोजनम् । करिष्यामि यतात्माऽहं निर्विघ्नेनास्तु मे व्रतम् ।।' इति मात्स्ये । 'प्रणम्य कलशं तत्र माषमात्रेण संयुतम् । छिद्रेण जलसम्पूर्णमधः कृष्णाजिने स्थितः ।। तस्य धाराश्च शिरसि धारयेत्सकलां निशि । धाराभिर्भूरिभिश्चैव फलं वेदविदो

विदुः ।। यस्मात् तस्मात् कुरुश्रेष्ठ धारा धार्या तु शक्तितः ।।' इति मात्स्ये । कोटिधाराजलस्येति षष्ठी द्वितीयार्थे । जलं बभ्र इत्यर्थः । कोटिधाराजलक्षरणं प्रकारान्तरेणोक्तं हरिवंशे- 'स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । श्वशुराभ्याञ्च चरणौ सततं सन्नमस्य च ।। गृहीत्वौदुम्बरं पात्रं सकुशं साक्षतं तथा । गोशृङ्गं दक्षिणं सिच्य प्रतिगृह्णीत तज्जलम् ।। अत्मनोऽथ निषेक्तव्यं ततः शिरसि मज्जनम् । कोटिधाराजलमिदं सर्वतीर्थाधिकं मतम् ।। त्रैलोक्यसर्वतीर्थेषु स्नानमेतदुदाहृतम् ।।'(२.७८.१९-२२) इत्यादि ।।८८-१०३।।

**ताम्रपर्णीया–** गमनसमये सत्यया कोटिधारास्नानं कृतमिति हरिवंशतात्पर्यमाह– **नित्येति** ।। देहतो नित्येत्यर्थः । द्वादशीमित्येकादशीमित्यर्थः । द्वादशीं प्रत्येकादशीमुपोष्येति वा ।। ८८-८९ ।।

**भावचन्द्रिका–** ।। **स्वेच्छयैव** ।। 'छन्दत उभयाविरोधात्' (ब्र.सू-३.३.२९) इति मुक्तानां स्वेच्छया कर्मकरणोक्तेः ।। द्वादशीम् एकादशीम् । उपवासोक्तेः । 'वैष्णवस्तु दशाविद्धां द्वादशीं तु परित्यजेत्' इति स्मृतिषु प्रयोगाच्च । वस्तुतो यद्द्वादश्यां एकस्मिन् घटे कोटिच्छिद्राणि तन्निर्गतजलधाराभिः स्नायादिति भावाद् द्वादशीमाहात्म्योक्तेः जलस्य कोटिधारा बभ्र इति युक्तम् ।। ८८-९१ ।।

**भारतश्री–** ।। **द्वादशीं भीमसञ्ज्ञाम्** ।। माघशुक्लैकदशी भीमैकादशी दशमीवेधात् द्वादशी स्यात्। कोटिधाराजलस्य कर्मणि षष्ठी । जलं बभ्रे । सैव हि सत्यभामा नित्यैव या प्रकृतिः सैव हीत्यन्वयः। तदुक्तं कोटिधाराजललक्षणं हरिवंशे- 'स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत् सती । श्वशुराभ्यां च चरणौ सततं सन्नमस्य च ।। गृहीत्वौदुम्बरं पात्रं सकुशं साक्षतं तथा । गोशृङ्गं दक्षिणं सिच्य प्रतिगृह्णीत तज्जलम् ।। आत्मनोऽथ निषेक्तव्यं ततः शिरसि तज्जलम् ।।८८-२०८।।[1]

**तया युक्तो गरुडस्कन्धसंस्थो दूरानुयातो वज्रभृताऽप्यनुज्ञाम् ।**
**दत्वाऽमुष्मै प्रययौ वायुजुष्टामाशां कृष्णो भौमवधे धृतात्मा ।।८९।।**

**वरदराजीया–** तया सत्यभामया । वज्रभृता इन्द्रेण दूरानुयातो अनुज्ञां स्वर्गं प्रति याहीति च अनुज्ञां अमुष्मै इन्द्राय दत्वा भौमस्य वधे । धृतो निश्चययुक्तः आत्मा मनो यस्य सः । कृष्णो वायुजुष्टां अधिष्ठितां आशां दिशं प्रययौ । नरकवधं निश्चित्य प्राग्ज्योतिषं प्रति ययावित्यर्थः ।।८९।।

**जनार्दनीया–** तया सत्यया । वज्रभृता दूरानुयातः । इन्द्रः भौमवधार्थं यान्तं कृष्णं दूरमनुययाविति भावः । अमुष्मै इन्द्राय अनुज्ञां दत्वा, स्वलोकम्, याहीति शेषः । धृतात्मा निश्चितान्तःकरणः वायुजुष्टां वायुनाधिष्ठितां आशां दिशं ययौ ।। ८९ ।।

---

१. इतः परं नवाधिकद्विशततमश्लोकपर्यन्तं मूलकोशे ग्रन्थपातः ।

**[1]भौमो ह्यासीद् ब्रह्मवरादवध्यो न शस्त्रभृज्जीयस इत्यमुष्मै ।**
**दत्तो वरो ब्रह्मणा तद्वदेव तस्यामात्यानां तद्वदवध्यता च ॥९०॥**

**वेदाङ्गतीर्थीया–** तस्यामात्यानां तद्वदेव भौमवदेव अजेयता तद्वत् भौमवत् अवध्यता च ब्रह्मणा दत्ता ॥ ९० ॥

**वरदराजीया–** ब्रह्मवरादवध्य आसीत् । तथा शस्त्रभृता शस्त्रधारी त्वं न जीयसे पराभवं न प्राप्स्यसि इत्यमुष्मै भौमाय ब्रह्मणा वरो दत्तः । तद्वद् भौमवदेव तस्य भौमस्य अमात्यानां शस्त्रभृतत्वे पराजयाभावरूपो वरः दत्त इत्यर्थः । तद्वद् भौमस्येव अवध्यता च तेषां ब्रह्मणा दत्तेत्यर्थः ॥ ९० ॥

**अनन्तभट्टीया–** तद्वद् वरम् ॥ **शस्त्रभृतेति** ॥ ९० ॥

**जनार्दनीया–** शस्त्रभृत् शस्त्रधारी त्वं न जीयसे पराभवं न यास्यसि इति अमुष्मै नरकाय वरो दत्तः । अजेयत्वमपि दत्तमित्यर्थः । तस्यामात्यानां तद्वदेव भौमवदेव अजेयता तद्वद् भौमवदवध्यता च ब्रह्मणा दत्ता ॥ ९० ॥

**ताम्रपर्णीया–** तस्यामात्यानां तद्वद्भौमवत् न शस्त्रभृज्जीयसे इति वरो दत्तः । तद्वद्भौमवदवध्यता च दत्ता ॥ ९० ॥

**चट्टी–** भौमः नरकासुरः ब्रह्मणः वरादवध्यः आसीत् । त्वं शस्त्रभृत् शस्त्रधारी सन् न जीयसे पराभवं न यास्यसि इति अमुष्मै नरकाय ब्रह्मणा वरो दत्तः । तस्य भौमस्य अमात्यानां तद्वद् भौमवदेवाजेयता तद्वद् भौमवदवध्यता च ब्रह्मणा दत्ता ॥ ९० ॥

**भौमेन [2]जेयत्वमपि ह्यमीषां दत्तं भौमाय ब्रह्मणा क्रोडरूपात् ।**
**विष्णोर्जातायास्य दुर्गं च दत्तं [3]प्राग्ज्योतिषं नाम पुरं समस्तैः ॥९१॥**

---

१. 'नैर्ऋतो नरको नाम ब्रह्मणो वरदर्पितः । ..अवध्यः सर्वभूतानां भौमः स नरकोऽसुरः ॥ हरिवंशे-२.६३.३४,३७. हयग्रीवो निसुन्दश्च वीरः पञ्चजनस्तथा । मुरुः पुत्रसहस्रैश्च वरमत्तोऽसुरो महान् ॥' इति हरिवंशे-२.३४.१९. दनुपुत्रः नरकासुरोऽप्यपरः अस्ति । तस्यैव नरकस्य अस्थिराशिः पाण्डवैः मन्दरगिर्यां दृष्टा । एषः नरकः विष्णोः पाणिना चपेटघातेन ममार । वनपर्वणि-१४४.१५-२६.

२. 'जय्यत्वमपि' इति वेदाङ्गतीर्थीय-वरदराजीयपाठः ।

३. शब्दकल्पद्रुमे नरकशब्दे नरकराज्यविषये– 'करतोया सत्यगङ्गा पूर्वभागावधिश्रिता । यावल्ललितकान्तास्ति तावद्देशं पुरं तदा ॥ अत्र देवी महामाया योगनिद्रा जगत्प्रसूः । कामाख्यारूपमादाय सदा तिष्ठति शोभना ॥ अत्रास्ति नदराजोऽयं लौहित्यो ब्रह्मणः सुतः । अत्रैव दशदिक्पालाः स्वे स्वे पीठे व्यवस्थिताः ॥ अत्र स्वयं महादेवो ब्रह्मा चाहश्च सर्वदा । चन्द्रः सूर्यश्च सततं वसतेऽत्रैव पुत्रक । सर्वे क्रीडार्थमायाता रहस्यं देशमुत्तमम् । अत्र श्रीः सर्वतोभद्रा भोग्यमत्र सदा बहु ॥ अत्रैव स्थितो ब्रह्मा प्राङ्नक्षत्रं ससर्ज ह । ततः प्राग्ज्योतिषाख्येयं पुरी

**वेदाङ्गतीर्थीया–** अमीषां अमात्यानां भौमेन जय्यत्वं जेतुं शक्यत्वं भौमाय दत्तम् । समस्तैः दुर्गम् ।।९१।।

**वादिराजतीर्थीया–** 'पुरं समस्तैः' इत्यत्र 'पॄ पालनपूरणयोः' इति धातोः । समस्तैः भाग्यैः पुरं पूर्णमित्यर्थः ।। ९१ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'भौमेन जेयत्वमपि ह्यमीषां..' इति श्लोके अमात्यानां भौमकर्तृकजयविषयत्वरूपो वरः भौमाय दत्तः इत्युच्यते । तदयुक्तम् । अमात्यनिष्ठभौमकर्तृकजयविषयत्वस्य भौमवरत्वायोगादिति चेन्न । अमात्यनिष्ठस्यापि भौमकर्तृकजयविषयत्वस्य भौमनिष्ठसुखादिफलहेतुत्वात् भौमवरत्वमुपपद्यते इत्यङ्गीकारात् ।। ९१-११५ ।।

**वरदराजीया–** अमीषां अमात्यानां भौमेन जय्यत्वं जेतुं शक्यत्वं भौमाय दत्तम् । अमात्यानामन्यैरजेयत्वेऽपि भौमेन जय्यत्वं अस्त्विति ब्रह्मणोक्तमित्यर्थः । कथम्भूताय भौमाय? क्रोडरूपात् वराहावतारविष्णोः सकाशात् भूमिदेव्यां जाताय । अस्य सम्बन्धमात्रे षष्ठी । समस्तैर्दुर्गं दुरासदं प्राग्ज्योतिषं नाम पुरं च ब्रह्मणा दत्तम् ।। ९१ ।।

**अनन्तभट्टीया–** अजेयत्वममीषाममात्यानां समस्तैः दुर्गं अधृष्यमित्यर्थः ।।९१।।

**जनार्दनीया–** ब्रह्मणा अमीषां अमात्यानां भौमेन जेयत्वं जेतुं शक्यत्वं क्रोडरूपाद् वराहरूपाद्विष्णोः सकाशात् जाताय भौमाय दत्तम् । अस्य नरकस्य समस्तैः दुर्गं गन्तुमशक्यं पुरं दत्तम्, ब्रह्मणेति शेषः।।९१।।

**ताम्रपर्णीया–** समस्तैर्दुर्गं च गन्तुमशक्यम् ।।९१।।

**चट्टी–** अमीषां अमात्यानां भौमेन जेयत्वं जेतुं शक्यत्वमपि ब्रह्मणा क्रोडरूपाद् वराहरूपाद् विष्णोः सकाशाज्जाताय भौमाय दत्तम् । अस्य नरकस्य समस्तैर्दुर्गं गन्तुमशक्यं प्राग्ज्योतिषं नाम पुरं च दत्तम् ।।९१।।

**आसीद् बाह्ये गिरिदुर्गं तदन्तः पानीयदुर्गं मौरवं पाशदुर्गम् ।**
**[1]तस्याप्यन्तः क्षुरधारोपमं [2]तत्पाशाश्च ते षट्सहस्राः सुघोराः ।**
**अभेद्यत्वमरिभिरतार्यता च दत्ता दुर्गाणां ब्रह्मणाऽऽराधितेन ।।९२।।**

---

शक्रपुरीसमा ।। अत्र त्वं वस भद्रं ते ह्यभिषिक्तो मया स्वयम् । कृतदारः सहामात्यै राजा भूत्वा महाबल ।। इति कालिकापुराणे ।

१. 'क्षुरान्तान् मौरवान् पाशान् षट्सहस्रान् ददर्श ह ।' हरिवंशे-१.९१.४४. BORI पृ-585

२. 'उग्रान् रक्षोगणान् हत्वा नरकस्य महासुरान् । क्षुरान्तान् मौरवान् पाशान् षट्सहस्रं ददर्श सः ।। सञ्छिद्यपाशान् शस्त्रेण मुरं हत्वा महान्वयम् । शैलसङ्घानतिक्रम्य निशुम्भं च व्यपोथयत् ।। यः सहस्रसहस्त्वेकः सर्वान् देवानपोथयत् । तं जघान महावीर्यं हयग्रीवं महाबलम् ।।' सभापर्वणि-५५.२८-३०.

**वेदाङ्गतीर्थीया–** पुरस्य वाह्ये । मौरवं मुरस्वामिकं क्षुरधारोपमं पाशदुर्गं पाशभूतं दुर्गम् । तत्पाशाः मुरस्य पाशाः ।। ९२-९३।।

**वादिराजतीर्थीया–** मौरवं मुरनामकदैत्येन कृतम् । 'दत्ता दुर्गाणाम्' इत्यत्र दुर्गाणां दुर्गमत्वात् दुर्गपदवाच्यानां गिरिसलिलमुरपाशानामित्यर्थः ।। ९२-१०१ ।।

**वरदराजीया–** प्राग्ज्योतिपस्य दुर्गमत्वं दर्शयति– **आसीदिति** ।। पुरस्य वाह्ये वाह्यतो गिरिरूपं दुर्गं, तदन्तः गिरिदुर्गस्यान्तःप्रदेशे पानीयदुर्गं जलदुर्गं, तस्य पानीयदुर्गस्याप्यन्तःप्रदेशे मौरवं मुरनिर्मितं दुर्गं, क्षुरधारोपमं क्षुरधरावत् तीक्ष्णं तत्पाशमयं दुर्गं, ते तत्रत्याः पाशाः सुघोराः षट्सहस्रसङ्ख्याकाः सन्ति। दुर्गाणां गिरिदुर्गादीनां त्रयाणां यथाक्रमं अरिभिः अभेद्यत्वं दत्तम् । तथा पानीयदुर्गस्य अतार्यता च तर्तुमशक्यतां च आराधितेन ब्रह्मणा दत्ता । पाशदुर्गस्याभेद्यत्वमपि दत्तमिति द्रष्टव्यम् ।। ९२ ।।

**अनन्तभट्टीया–** तस्याप्यन्तः पानीयदुर्गस्याप्यन्तः । तत् पाशदुर्गं क्षुरधारोपमम् ।। ९२-९५ ।।

**जनार्दनीया–** पुरस्य दुर्गत्वं दर्शयति– **आसीदिति** ।। पुरस्य वाह्ये गिरिदुर्गमासीत् । तदन्तः गिरिदुर्गस्यान्तः प्रदेशे पानीयदुर्गं जलदुर्गमासीत् । तस्याप्यन्तः पानीयदुर्गस्यान्तः मौरवं मुरस्वामिकं मुरनिर्मितमित्यर्थः । क्षुरधारोपमं क्षुरवत्तीक्ष्णं पाशदुर्गमासीत् । ते दुर्गस्थस्य पाशाः तत्पाशाः तस्य मुरस्य पाशाः मुरसम्बन्धिन इत्यर्थः । ते पाशाः षट्सहस्राः षट्सहस्रसङ्ख्याकाः, सुघोराः क्रूराः । आराधितेन ब्रह्मणा दुर्गाणां अभेद्यत्वं दत्तम् । गिरिपाशदुर्गयोरिति ज्ञातव्यम् । अतार्यता च तर्तुमशक्यता च दत्ता । जलदुर्गस्येति ज्ञातव्यम् ।।९२।।

**ताम्रपर्णीया–** मौरवं मुरनिर्मितम् ।। ९२-९५ ।।

**भावचन्द्रिका–** तस्य पानीयदुर्गस्य ।। ९२-११० ।।

**चट्टी–** पुरस्य दुर्गत्वं दर्शयति– **आसीदिति** ।। पुरस्य वाह्ये गिरिदुर्गमासीत् । तदन्तः गिरिदुर्गस्य अन्तःप्रदेशे पानीयदुर्गं आसीत् । तस्यापि पानीयदुर्गस्याप्यन्तः मौरवं मुरस्वामिकं मुरनिर्मितमित्यर्थः । क्षुरधारोपमं तत्पाशदुर्गमासीत् । सुघोराः ते पाशाः षट्सहस्राः षट्सहस्रसङ्ख्याकाः आराधितेन ब्रह्मणा तस्य नरकस्य दुर्गाणामरिभिरभेद्यत्वं दत्तम् । अतार्यता तर्तुमशक्यता च दत्ता । गिरिपाशदुर्गयोरभेद्यत्वं जलदुर्गस्य अतार्यतेति च ज्ञातव्यम् ।। ९२ ।।

**तस्यामात्याः पीठमुरौ निशुम्भहयग्रीवौ पञ्चजनश्च शूराः ।**
**सङ्कल्प्य तान् लोकपालानहं च ब्रह्मेत्यद्धा भाषमाणः स आस्ते ।।९३।।**

**वेदाङ्गतीर्थीया–** ।। ब्रह्मेति ।। चतुर्मुखः ।।९३-९५।।

**वरदराजीया–** तस्य भौमस्यामात्या मन्त्रिणः पीठादयः पञ्च शूराः सन्ति । तानमात्यान् लोकपालान् सङ्कल्पयित्वा, अहं ब्रह्मा चतुर्मुख इति अद्धा निश्चयेन भाषमाणो वदन् भौमः आस्ते तिष्ठतीत्यर्थः ।।९३।।

**जनार्दनीया–** तस्य पीठादयः पञ्चजनान्ताः ये पञ्च अमात्यास्तान् लोकपालान् सङ्कल्प्य, अहं ब्रह्मा चतुर्मुख इति ।।९३।।

**चट्टी–** पीठमुरौ निशुम्भहयग्रीवौ पञ्चजनश्च इति शूराः ये तस्य अमात्याः तान् लोकपालान् सङ्कल्प्य, अहं ब्रह्मा चतुर्मुखः इति अद्धा निश्चयेन भाषमाणः वदन् सः भौमः आस्ते तिष्ठति ।।९३।।

**हन्तुं कृष्णो नरकं तत्र गत्वा [1]गिरिदुर्गं गदया निर्बिभेद ।**
**वायव्यास्त्रेणोदकं शोषयित्वा चकर्त खड्गेन मुरस्य पाशान् ।।९४।।**

**वरदराजीया–** तत्र पुरे । निर्बिभेद भेदितवान् । वायव्यास्त्रेण वायुदेवताकमन्त्रेण ।। ९४ ।।

**जनार्दनीया–** तत्र भौमपुरे ।। ९४ ।।

**चट्टी–** श्रीकृष्णः नरकं हन्तुं गत्वा तत्र पुरे गदया दुर्गं गन्तुमशक्यं गिरिं निर्बिभेद । वायव्यास्त्रेण वायुदेवताकेनास्त्रेण उदकं जलं शोषयित्वा मुरस्य पाशान् खड्गेन चकर्त ।। ९४ ।।

**अथाभिपेतुर्मुरपीठौ निशुम्भहयग्रीवौ पञ्चजनश्च दैत्याः ।**
**ताञ्छैलशस्त्रास्त्रशिलाभिवर्षिणश्चक्रे व्यसून् चक्रनिकृत्तकन्धरान् ।।९५।।**

**वरदराजीया–** अभिपेतुः प्राप्ताः । तान् मुरपीठादीन् पर्वताद्यभिवर्षणशीलान् । चक्रेण निकृत्तं कन्धरं येषां ते तथा तान् । अत एव व्यसून् विगतप्राणान् चक्रे ।। ९५ ।।

**जनार्दनीया–** व्यसून् गतप्राणान् ।।९५।।

**चट्टी–** अथ मुरपीठौ निशुम्भहयग्रीवौ पञ्चजनश्च इति दैत्याः अभिपेतुः प्राप्ताः । शैलशस्त्रास्त्रशिलाभिवर्षिणः तान् मुरादीन् चक्रनिकृत्तकन्धरान् कृत्वा व्यसून् गतप्राणान् चक्रे ।। ९५-९६ ।।

**तेषां सुताः सप्तसप्तोरुवीर्या वरादवध्या गिरिशस्याभिपेतुः ।**
**तानस्त्रशस्त्राभिमुचः शरोत्तमैः समर्पयामास स मृत्यवेऽच्युतः ।।९६।।**

**वेदाङ्गतीर्थीया–** प्रत्येकं सप्तसप्त सुताः ।। ९६-१०० ।।

**वरदराजीया–** तेषां पीठादीनां सुताः सप्तसप्त प्रत्येकं सप्त सुता पञ्चत्रिंशदित्यर्थः । उरुवीर्याः उत्कृष्टपराक्रमाः गिरिशस्य वरादवध्या इति सम्बन्धः । अस्त्रशस्त्राभिमुचः अस्त्रशस्त्रवर्षिणः तान् अमात्यसुतान् मृत्यवे समर्पयामास यमलोकं प्रापितवान् ।।९६।।

---

१. 'गिरिं दुर्गम्' इति चट्टी पाठः ।

**अनन्तभट्टीया—** अमात्यानां प्रत्येकं सप्तसुतत्वं वक्तुं सप्तसप्त इति वीप्सा कृता ।। ९६ ।।

**जनार्दनीया—** तेषां मुरपीठादीनाम् । सप्तसप्त सुताः एकैकस्य सप्तसुता इत्यर्थः ।।९६।।

**ताम्रपर्णीया—** प्रत्येकं सप्तसप्त सुताः ।। ९६-९९ ।।

**हत्वा पञ्चत्रिंशतो मन्त्रिपुत्रान् जगाम भौमस्य सकाशमाशु ।**
**श्रुत्वा भौमः कृष्णमायान्तमारादक्षौहिणीत्रिंशकेनाभ्ययात् तम् ।।९७।।**

**वरदराजीया—** पञ्चत्रिंशतः पञ्चाधिकत्रिंशत्सङ्ख्याकान् आशु संहृत्य प्रेषितवान् । आरात् समीपे अक्षोहिणीत्रिंशकेन त्रिंशदक्षोहिण्यात्मकसेनया तं कृष्णं अभ्ययात् ।। ९७ ।।

**अनन्तभट्टीया—** त्रिंशकेन त्रिंशता अक्षौहिण्या ।। ९७ ।।

**जनार्दनीया—** पञ्चत्रिंशतः पञ्चोत्तरत्रिंशत्सङ्ख्याकान् । आरात् समीपे । अक्षौहिणीत्रिंशकेन त्रिंशत्सङ्ख्याकाक्षौहिण्या ।। ९७ ।।

**चट्टी—** सः श्रीकृष्णः पञ्चत्रिंशतः पञ्चोत्तरत्रिंशत् सङ्ख्याकान् मन्त्रिपुत्रान् हत्वा आशु भौमस्य सकाशं जगाम । भौमः श्रीकृष्णं आरात् समीपे आयान्तं श्रुत्वा अक्षौहिणीत्रिंशकेन त्रिंशत्सङ्ख्याकया अक्षौहिण्या तं श्रीकृष्णं अभ्ययात् ।। ९७ ।।

**जघ्ने सेनां गरुडः पक्षपातैः पादं शेषं केशवः सायकौघैः ।**
**अथाऽससादाऽशु भौमोऽच्युतं तं [1]मुञ्चञ्छरानस्त्रसम्मन्त्रितान् द्राक् ।**
**विव्याध तं केशवः सायकौघैर्भौमः [2]शतघ्नीं ब्रह्मदत्ताममुञ्चत् ।।९८।।**

**मधुसूदनीया—** गरुडः पादं सेनां पक्षपातैः जघ्ने । केशवः सायकौघैः शेषं पादत्रयं जघ्ने ।।९८-१०६।।

**वरदराजीया—** गरुडः स्वपक्षयोः पातैः घातैः सेनां पादं चतुर्थभागं शेषं भागत्रयं सायकौघैः जघ्ने । द्राक् शीघ्रं आससाद । ब्रह्मणा दत्तां शतघ्नीं नाम गदां कृष्णस्योपरि अमुञ्चत् ।।९८।।

**अनन्तभट्टीया—** पादं सेनायाः चतुर्थभागं सायकौघैः जघ्ने । द्राक् शीघ्रम् । शतघ्नीं गदाम् ।। ९८ ।।

**जनार्दनीया—** शेषमुर्वरितम् । पादं चतुर्थं भागं केशवः सायकौघैः जघ्ने । गरुडपक्षपातैः भागत्रयं सैन्यं हतमिति भावः । शतघ्नीं शतघ्न्याख्यां गदां अमुञ्चत् ।।९८।।

---

१. 'मुञ्चन् बाणान्' इति चट्टीपाठः ।

२. 'अयःकण्ठकसञ्छन्ना शतघ्नी महती शिला' इति विजयरक्षितः इति शब्दकल्पद्रुमे । 'शतघ्नी तु चतुस्ताला लोहकण्ठकसञ्चिता यष्टिः' इति मल्लिनाथः रघुवंशव्याख्याने ।

**चट्टी–** अथ भौमः आशु अस्त्रसम्मन्त्रितान् बाणान् मुञ्चन् तमच्युतं द्राक् शीघ्रं आससाद । केशवः श्रीकृष्णः सायकानामोघैः समूहैः तं भौमं विव्याध । भौमः ब्रह्मदत्तां शतघ्नीं शतघ्न्याख्यां गदां अमुञ्चत् । गरुडः पक्षपातैः पक्षयोः पातैः घातैः पादसेनां जघ्ने । शेषं पादत्रयं केशवः श्रीकृष्णः सायकौघैः जघ्ने ।।९८।।

**अच्छेद्योऽभेद्यो नित्यसंवित्सुखात्मा नित्याव्ययः पूर्णशक्तिः स कृष्णः ।**
**निगीर्य तां देववरः शतघ्नीं नित्याश्रान्तोऽदर्शयच्छ्रान्तवत् स्वम् ।।९९।।**

**वरदराजीया–** तस्यां दशायां नित्यमश्रान्तोऽपि श्रमादिरहितोऽपि श्रान्तवत् स्वात्मानं दर्शयामास अयोग्यजनेभ्यः । श्रमः सत्य एव किं न स्यात् इत्यतः तत्कारणछेदाद्यभावादित्याह– **अच्छेद्य इति**[१] ।। अच्छेद्यत्वे हेतुः– **अभेद्य इति** ।। मूर्च्छाद्यभावे उपलक्षिते हेतुः– **नित्येति** ।। नित्ये संवित्सुखे आत्मा देहो यस्य स तथा । नित्यं अव्ययो देहतोऽपि नाशरहितः । पूर्णा परिपूर्णा शक्तिः यस्य सः तथा । एवम्भूतस्य श्रमः अत्यन्तमसम्भावित इति भावः । तां भौमेन मुक्तां शतघ्नीं गदां निगीर्य स्वोदरे समर्प्य इत्यर्थः ।। ९९ ।।

**अनन्तभट्टीया–** निगीर्य भक्षयित्वा ।। ९९ ।।

**जनार्दनीया–** देववरः स कृष्णः शतघ्नीं निगीर्य प्रभक्ष्य । नित्याश्रान्तः नित्यं श्रमरहितोऽपि श्रान्तवत् स्वं अदर्शयत् । श्रमः सत्यः किं न स्यादित्यत आह– **अच्छेद्य इत्यादिना** ।। छेदभेदादिरहितस्य श्रमः कुत इत्यर्थः ।। ९९ ।।

**चट्टी–** अच्छेद्याभेद्यः नित्ये संवित्सुखे आत्मा देहो यस्य स तथा । नित्यः अव्ययो देहतोऽपि नाशरहितः पूर्णा परिपूर्णा शक्तिः यस्य स तथा । देववरः श्रीकृष्णः तां शतघ्नीं निगीर्य स्वोदरे समर्प्य नित्याश्रान्तः नित्यं श्रमरहितोऽपि स्वं श्रान्तवद्दर्श । छेदभेदादिरहितस्य तस्य श्रमः कुत इति भावः।।९९।।

**बहून् वरान् ब्रह्मणोऽन्येष्वमोघान् मोघीकृतान् वीक्ष्य परात्परेशः ।**
**भवेत् कथञ्चिद् [२]बहुमानेन युक्त इत्येव कृष्णोऽदर्शयच्छ्रान्तवत् स्वम्[३] ।।१००।।**

**वेदाङ्गतीर्थीया–** बहुमानयुक्तः ब्रह्मा मया सम्भावितो भवेदिति ।। १००-१०२ ।।

**वादिराजतीर्थीया–** 'कथञ्चिद्बहुमानयुक्तः' इत्यत्र कथञ्चित् स्वभजकदैत्यचित्ते अङ्कुरितबहुमानयुक्त इत्यर्थः । यद्वा कथञ्चित् केवललोकनटनार्थं मया प्रदर्शितश्रमेण स्वस्यापराधशङ्कया 'निरनिष्टो निरवद्यः' 'अच्छेद्योऽयमदाह्योऽयम्' (गीता-२.२४) 'नित्यो नित्यानाम्' (श्वेत.उप-६.१३) 'नित्यानन्दो

१. 'अभेद्य इत्यादिना' इति क्वचित् कोशेषु ।
२. 'बहुमानयुक्तः' इति वादिराजतीर्थानां पाठः । वेदाङ्गतीर्थीयपाठोऽपि तथैव स्यात् ।
३. 'श्रान्तवच्च' इति चट्टीपाठः ।

नित्यज्ञानो नित्यबलः परमात्मा' 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' (श्वेत. उप-६.८) इत्यादि बहुप्रमाणेन युक्तः संयुक्तः आलोचने सर्वविषयकत्वात् ईदृशानि प्रमाणान्यालोच्य केवलमसुरजनमोहनार्थमेव श्रान्तिः प्रदर्शिता। अतो वरदानात्र मेऽपराध इति अनुसन्धाता भवेदित्यर्थः ।।१००।।

**वरदराजीया–** श्रान्तिप्रदर्शनस्य न केवलं दुष्टजनमोहनं प्रयोजनं किन्तु अन्यदपीत्याह– **बहून् वरानिति** ।। परात् परेशः। कृष्णादन्येषु अमोघान् सार्थकान् स्वेन मोघीकृतान् निरर्थकीकृतान् बहून् वीक्ष्य कथश्चित् बहुमानेन सत्कारेण युक्तो भौमः स्यात्। ब्रह्मणि बहुमानयुक्तः स्यात्। ब्रह्मा वा बहुमानः युक्तः स्यादिति बुद्ध्या स्वं आत्मानं श्रान्तवत् अदर्शयत् ।।१००।।

**अनन्तभट्टीया–** बहुमानः सत्कारः ।। १०० ।।

**जनार्दनीया–** श्रमदर्शने कारणमाह– **बहूनिति** ।। परात्परेशः श्रीकृष्णः। अन्येषु अमात्यादिषु। अमोघान् सार्थकान् स्वेन बहून् मोघीकृतान् निरर्थकीकृतान् वरान् वीक्ष्य, कथश्चिन्नरकः अहं ब्रह्मणः पूर्णानुग्रहास्पद इति ब्रह्मणि बहुमानेन सत्कारेण युक्तो भवेत्। इत्येवं कृष्णः स्वं श्रान्तवत् अदर्शयत् ।।१००।।

**ताम्रपर्णीया–** ।। **बहुमानेनेति** ।। ब्रह्मणि कथश्चिद्बहुमानेन युक्तो भौमः स्यादन्यथा ब्रह्माणं विश्वस्य युद्धाय नागच्छेदित्यभिप्रायेण अदर्शयदित्यर्थः। ब्रह्मा बहुमानयुक्तः स्यादिति वा ।। १००-१०३ ।।

**चट्टी–** श्रमदर्शने कारणमाह– **बहूनिति** ।। परात् परेशः श्रीकृष्णः अमोघान् बहून् ब्रह्मणः वरान् अन्येषु अमात्यादिषु मोघीकृतान् निरर्थकीकृतान् निरीक्ष्य कथश्चिन्नरकः अहं ब्रह्मणः पूर्णानुग्रहवान् इति ब्रह्मणि चतुर्मुखे बहुमानेन सत्कारेण युक्तः भवेत्। ब्रह्मा वा बहुमानयुक्तः भवेत् इत्येव श्रीकृष्णः श्रान्तवच्च अदर्शयत् ।। १०० ।।

**तदा दृप्तं नरकं वीक्ष्य देवी सत्याऽऽददे कार्मुकं शार्ङ्गसञ्ज्ञम् ।**
**चकार तं यतमानं च भौमं निरायुधं विरथं च क्षणेन ।।१०१।।**

**वरदराजीया–** तदा तस्यां अवस्थायां दृप्तं दर्पयुक्तं नरकं भौमं वीक्ष्य सत्या देवी शार्ङ्गसञ्ज्ञं कार्मुकं आददे। तं यतमानं पुनः प्रयतमानं तं भौमं निरायुधं आयुधरहितं विरथं विगतरथं च क्षणेन चकार ।।१०१।।

**जनार्दनीया–** दृप्तं गर्वयुक्तम्। यतमानं यत्नं कुर्वाणम्, युद्धायेति शेषः ।।१०१।।

**चट्टी–** तदा दृप्तं दर्पयुक्तं नरकं वीक्ष्य सत्या देवी सत्यभामा शार्ङ्गसञ्ज्ञं कार्मुकं आददे। यतमानं प्रयत्नं कुर्वाणम्, युद्धायेति शेषः। भौमं च निरायुधं विरथं क्षणेन चकार ।। १०१ ।।

**आलिङ्ग्य कृष्णः सत्यभामां पुनश्च रथान्तरे संस्थितं भौममुग्रम् ।**
**सृजन्तमस्त्राण्यरिणा [1]निकृत्तस्कन्धं मृत्योरर्पयामास शीघ्रम् ॥१०२॥**

**वेदाङ्गतीर्थीया–** निकृत्तकन्धरं निकृत्तग्रीवम् ॥ १०२ ॥

**वरदराजीया–** रथान्तरे अन्यस्मिन् रथे अरिणा चक्रेण । निकृत्तः छिन्नः स्कन्धो यस्य स तथा तम् । मृत्योः मृत्यवे अर्पयत् ॥१०२॥

**जनार्दनीया–** निकृत्तस्कन्धं निकृत्तः छिन्नः स्कन्धो यस्य सः तथा ॥ १०२ ॥

**चट्टी–** श्रीकृष्णः सत्यभामां आलिङ्ग्य, पुनश्च रथान्तरे अन्यस्मिन् रथे संस्थितं अस्त्राणि सृजन्तं उग्रं भौमं अरिणा चक्रेण निकृत्तः छिन्नः स्कन्धौ यस्य स तथा तम् । कृत्वा शीघ्रं मृत्योरर्पयामास ॥१०२॥

**स मन्त्रिभिर्मन्त्रिपुत्रैः समेतो जगाम कृष्णावज्ञयाऽन्धंतमश्च ।**
**तदाविष्टो वायुरगाच्च कृष्णमन्तःपुरं प्राविशत् सत्ययेशः ॥१०३॥**

**वरदराजीया–** सः भौमः कृष्णस्य अवज्ञया द्रोहेण । तस्मिन् भौमे आविष्टो वायुः । अनेन भौमः कृष्णपदं वा प्राप्त इति पुराणोक्तेर्गतिरुक्ता भवति । सत्यया सह ॥१०३॥

**जनार्दनीया–** कृष्णावज्ञया कृष्णस्य निन्दया । तदाविष्टः तस्मिन्नरके आविष्टः । अनेन नरकस्य पुराणोक्तकृष्णपदप्राप्तिरुक्ता भवति । सत्यया, सहेति शेषः ॥१०३॥

**चट्टी–** सः नरकः मन्त्रिभिरमात्यैः मन्त्रिपुत्रैश्च समेतः सन् श्रीकृष्णावज्ञया श्रीकृष्णस्य निन्दया अन्धं तमः जगाम । तदाविष्टः तस्मिन्नरके आविष्टः वायुश्च श्रीकृष्णमगात् । अनेन नरकस्य पुराणोक्तकृष्णपदप्राप्तिरुक्ता भवति । ईशः श्रीकृष्णः सत्यया सहान्तःपुरं प्राविशत् ॥ १०३ ॥

**तदा भूमिः पञ्चभूतावरा या [2]यस्यां जज्ञे नरकः श्रीवराहात् ।**
**मूलप्रकृत्यैव भूम्या नितान्तमाविष्टा या साऽगमत् कृष्णपादौ ॥१०४॥**

**वेदाङ्गतीर्थीया–** तदा सा भूमिः कृष्णपादावगमत् इति सम्बन्धः ॥१०४-११०॥

**वरदराजीया–** भूमिः भौममाता । लक्ष्मीस्वरूपां भूमिं व्यावर्तयति– **पञ्चेति** ॥ पञ्चभूतेषु आकाशादिभूताभिमानिषु स्वयं अवरा अधमा । यस्यां भूदेवतायां नरको जज्ञे । ननु सर्वभूतावरा सा कथं श्रीवराहभोगयोग्येत्यत आह– **मूलेति** ॥ मूलप्रकृत्या लक्ष्म्यात्मिकया भूम्या नितान्तं विशेषतः आविष्टा तत्सन्निधिविशेषयुक्ता या भूमिः सा कृष्णपादौ प्रति आगमत् ॥१०४॥

---

१. 'निकृत्तकन्धरम्' इति वेदाङ्गतीर्थीयपाठः ।

२. धरण्युवाच- यदाहमुद्धृता नाथ त्वया सूकरमूर्तिना । त्वत्संस्पर्शभवः पुत्रः तदायं मय्यजायत ॥ ब्रह्मपुराणे-९३.२३.

**अनन्तभट्टीया**— रमाभूतभूदेवीं व्यावर्तयितुं 'पञ्चभूतावरा' इत्युक्तम् ।। १०४ ।।

**लघ्वनन्तभट्टीया**— पञ्चभूतावरा वरुणादिपञ्चभूतादिभ्योऽवरा । सप्तमीसमासो वा द्रष्टव्यः ।।१०४-१२७।।

**जनार्दनीया**— तदा सा भूमिः कृष्णपादः अगमदिति सम्बन्धः । रमास्वरूपभूदेवीं व्यावर्तयितुं 'पञ्चभूतावरा' इत्युक्तम् । यस्यां भूम्यां श्रीवराहात् नरको जज्ञे । ननु पञ्चभूताभिमान्याकाशादिषु अवरा भूमिर्वराहस्य सम्भोगयोग्या कथमित्यत आह— **मूलेति** ।। मूलप्रकृत्या महालक्ष्म्या नितान्तं विशेषतः आविष्टा या ।। १०४ ।।

**भावविवृतिः**— पञ्चभूतावरा पञ्चभूतेषु याऽवरा ।। १०४-१०६ ।।

**ताम्रपर्णीया**— पञ्चभूतावरा पञ्चभूतेष्ववरा । यद्यपि पृथिवी आकाशाभिमानिविघ्नेशसमोक्ता । तथापि एतद्वाक्यबलात् किञ्चिदूनत्वं द्रष्टव्यम् ।। १०४-११८ ।।

**चट्टी**— तदा सा भूमिः कृष्णपादावगमत् इत्यन्वयः । लक्ष्मीस्वरूपां भूमिं व्यावर्तयति— **पञ्चभूतेति** ।। आकाशादिभूताभिमानिष्ववरा अधमा यस्यां नरकः श्रीवराहात् जज्ञे । ननु पञ्चभूतावरा सा कथं श्रीवराहभोगयोग्येत्यत आह— **मूलेति** ।। मूलप्रकृत्या लक्ष्म्यात्मिकयैव भूम्या नितान्तं विशेषतः आविष्टा या सा भूमिः श्रीकृष्णपादावगमत् ।।१०४।।

**साऽदित्यास्ते कुण्डले पादयोश्च निधाय पौत्रं भगदत्तसञ्ज्ञम् ।**
**समर्पयामास तस्याभिषेकं प्राग्ज्योतिषे कारयामास कृष्णः ।।१०५।।**

**वरदराजीया**— सा भूमिः भौमेनापहृते कुण्डले ते कृष्णस्य पादयोः निधाय समर्प्य पौत्रं भौमपुत्रं भगदत्तसञ्ज्ञं समर्पयामास । सः कृष्णः तस्य भगदत्तस्य प्राग्ज्योतिषे पुरे अभिषेकं कारयामास ।।१०५।।

**जनार्दनीया**— सा भूमिः अदित्यास्ते कुण्डले भौमापहृते निधाय, पौत्रं समर्पयामास । तस्य भगदत्तस्य प्राग्ज्योतिषे पुरे ।। १०५ ।।

**चट्टी**— सा भूमिः ते ये भौमेनापहृते ते इत्यर्थः । अदित्याः कुण्डले पादयोः श्रीकृष्णपादयोर्निधाय भगदत्तसञ्ज्ञं पौत्रं भौमपुत्रं भगदत्तमर्पयामास । श्रीकृष्णस्तस्य भगदत्तस्य प्राग्ज्योतिषे पुरे अभिषेकं कारयामास ।। १०५ ।।

**संस्थाप्य तं सर्वकिरातराज्ये भौमाहृतं वैश्रवणाद् बलेन ।**
**शिवेन दत्तं धनदायातिसत्त्वं भगदत्तेऽधात्[१] सुप्रतीकं रमेशः ।।१०६।।**

१. 'न्यदधात् सुप्रतीकम्' इति वरदराजीय-जनार्दनीये तथा चट्टी पाठान्तरम् ।

**वरदराजीया–** रमेशः सर्वस्मिन् किरातराज्ये तं भगदत्तं संस्थाप्य, वैश्रवणात् कुवेरात् बलेन बलात्कारेण भौमेनापहृतं धनदाय कुवेराय शिवेन दत्तं अतिसत्त्वं अतिबलं सुप्रतीकं नाम गजं भगदत्ते अधात् स्थापयामास । 'न्यदधात् सुप्रतीकम्' इति पाठान्तरम् ।।१०६।।

**अनन्तभट्टीया–** तेन नरकेण हृते । शिवेन धनदाय दत्तं सुप्रतीकम् ।।१०६।।

**जनार्दनीया–** रमेशः तं भगदत्तम् । वैश्रवणात् कुवेरात् बलेन बलात्कारेण सुप्रतीकं अधात् । 'न्यदधात्' इति पाठे रमेश इति पदस्य अध्याहारः ।। १०६ ।।

**चट्टी–** रमेशः श्रीकृष्णः तं भगदत्तं सर्वस्मिन् किरातानां राज्ये संस्थाप्य वैश्रवणात् कुवेरात् बलेन बलात्कारेण भौमेनाहृतमपहृतं धनदाय कुवेराय शिवेन दत्तं अतिसत्त्वं अतिबलं सुप्रतीकाख्यं गजं भगदत्ते अधात् स्थापयामास । 'न्यदधात् सुप्रतीकम्' इति पाठान्तरम् ।। १०६ ।।

**करीन्द्रमेकं तं निधायैव तस्मिन् कृत्वा प्रसादं च वसुन्धरायाः ।**
**चतुर्दन्तान् षट्सहस्रान्करीन्द्रान् पयोब्धिजान् प्राहिणोद् द्वारवत्यै ।।१०७।।**

**मधुसूदनीया–** ।। चतुर्दन्तानिति ।। 'पयोब्धिजान्' इत्यनेन पयोब्धिजैः इत्यनेन ऐरावतकुलोत्पन्नत्वं सूचयति । तथाचोक्तम्- 'ऐरावतकुलेभांश्च चतुर्दन्तान् मदोत्कटान् । भगदत्ताय दत्वैकं सुप्रतीकं ततोऽपरान् ।। पाण्डुराभाश्चतुःषष्टिं प्रेषयामास केशवः ।।' इति भागवते (१०.६४.३२-३३)।। १०७-१०८ ।।

**वरदराजीया–** तं सुप्रतीकमेकं करीन्द्रं गजश्रेष्ठं तस्मिन् भगदत्ते निधाय । वसुन्धरायाः प्रसादं अनुग्रहम् । षट्सहस्रान् षट्सहस्रसङ्ख्याकान् । चत्वारो दन्ता एषां ते तथा तान् । द्वारवत्यै द्वारावतीं प्रति ।।१०७।।

**जनार्दनीया–** तस्मिन् भगदत्ते षट्सहस्रसङ्ख्याकान् चतुर्दन्तान् चत्वारो दन्ताः येषां ते तथा तान् । प्राहिणोत् प्रेषयामास ।।१०७।।

**चट्टी–** श्रीकृष्णः एकं तं सुप्रतीकं करीन्द्रं तस्मिन् भगदत्ते एव निधाय वसुन्धरायाः भूम्याः प्रसादमनुग्रहं च कृत्वा पयोब्धिजान् चत्वारो दन्ता येषां ते तथा । तान् षट्सहस्रान् षट्सहस्रसंख्याकान् करीन्द्रान् गजश्रेष्ठान्द्वारवत्यैद्वारवतींप्रतिप्रेषयामासप्राहिणोत् ।'पयोब्धिजान्'इत्यनेनपयोब्धिजैरावतकुलोत्पन्नत्वं सूचयति । तथा चोक्तम्- 'ऐरावतकुलेभांश्च चतुर्दन्तान् मदोत्कटान् । भगदत्ताय दत्वैकं सुप्रतीकं ततो वरान् । पाण्डुराङ्गान् षट्सहस्रान् प्रेषयामास केशवः ।।' इति (BORI- 92.12-13) हरिवंशे ।। १०७ ।।

**नराधिपान् देवगन्धर्वनागान् जित्वाऽऽनीतं हेमरत्नोच्चराशिम् ।**
**शतद्वयं योजनानां समृद्धं समन्ततः प्राहिणोत् स्वां पुरीं सः ।।१०८।।**

**वरदराजीया—** नराधिपान् जित्वा भौमेनानीतं हेम्नां रत्नानां च उच्चराशिम् । पुनः कथम्भूतम्? योजनानां शतद्वयं समन्ततः सर्वतः समृद्धं तं स्वां पुरीं द्वारकां प्रति प्राहिणोत् ।।१०८।।

**जनार्दनीया—** समन्ततः सर्वतः शतद्वयं समृद्धं उन्नतमित्यर्थः ।।१०८।।

**चट्टी—** नराधिपान् देवगन्धर्वनागांश्च जित्वा आनीतम्, भौमेनेति शेषः । समन्ततः सर्वतः योजनानां शतद्वयं समृद्धमुन्नतमित्यर्थः । हेमरत्नोच्चराशिं सः श्रीकृष्णः स्वां पुरीं द्वारकां प्रति प्राहिणोत् प्रेषयामास ।।१०८।।

**महावीर्यैर्नैर्ऋतै राक्षसेन्द्रैर्भौमानीतैर्निर्ऋतिं योधयित्वा ।**
**स प्राहिणोत् सर्वरत्नोच्चराशिं गजांश्च नारायण आदिदेवः ।।१०९।।**

**मधुसूदनीया—** ।। **गजांश्च नारायण इति** ।। 'ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः । अष्टादश-सहस्राणि देशजाश्चोत्तमा हयाः ।। गवां चापरिमेयानि सहस्राणि जनार्दनः ।।' इति हरिवंशे (२.६४.१३) ।।१०९।।

**वरदराजीया—** नैर्ऋतैः निर्ऋतिसम्बन्धिभिः महावीर्यैः निर्ऋतिं योधयित्वा पराभूय भौमेनानीतैः राक्षसेन्द्रैः तेषामुपरि निधाय । प्राहिणोत् प्रेषयामास ।। १०९ ।।

**अनन्तभट्टीया—** निर्ऋतिं दिक्पालम् ।। १०९ ।।

**जनार्दनीया—** नैर्ऋतैः निर्ऋतिसम्बन्धिभिः प्राहिणोत् ।। १०९ ।।

**भावविवृतिः—** 'षट्सहस्रान् करीन्द्रान् प्राहिणोद् द्वारवत्यै' इत्युक्तत्वात् पुनः 'गजांश्च नारायण आदिदेवः' इत्युक्त्या तदन्यान् पाण्डुरवर्णान् चतुर्दन्तान् ऐरावतकुलोत्पन्नान् चतुःषष्टिसङ्ख्याकान् प्राहिणोत् । चशब्दः प्रमाणान्तरेणोक्तार्थसङ्ग्राहकः । तदेतदुक्तम्- 'ऐरावतकुलेभांश्च चतर्दन्तान् मदोत्कटान् । भगदत्ताय दत्त्वैकं सुप्रतीकं ततोऽपरान् ।। पाण्डुरांश्च चतुःषष्टिं प्रेषयामास केशवः । ते च विंशतिसाहस्रा द्विसहस्राः करेणवः ।। अष्टाशतसहस्राणि देशजाश्च हयोत्तमाः । गवाश्चापरिमेयानि सहस्राणि जनार्दनः ।।' इत्यादि हरिवंशे ।।१०९-१२०।।

**चट्टी—** आदिदेवः सः श्रीमन्नारायणः निर्ऋतिं योधयित्वा पराभूय भौमेनानीतैर्महावीर्यैः तैः नैर्ऋतैः निर्ऋतिसम्बन्धिभिः राक्षसेन्द्रैः राक्षसश्रेष्ठैः सर्वरत्नोच्चराशिं गजांश्च प्राहिणोत् प्रेषयामास । 'गजांश्च' इत्यत्र 'ते च विंशतिसाहस्रा द्विस्तावत्यः करेणवः । अष्टौ शतसहस्राणि देशजाश्च हयोत्तमाः ।। गवां चापरिमेयानि सहस्राणि जनार्दनः ।।' इति हरिवंशे ।। १०९ ।।

**तत्रापश्यत् कन्यका भूमिपानां भौमानीताः समरे तान् विजित्य ।**
**द्व्यष्टौ सहस्राणि शतं च रूपशीलोदारा अक्षताः सद्व्रतस्थाः ।।११०।।**

**वेदाङ्गतीर्थीया–** तत्र नरकगृहे । अक्षताः अदृष्टरजसः । सद्व्रतस्थाः वैष्णवव्रतस्थाः ।। ११० ।।

**मधुसूदनीया–** ।। **सद्व्रतस्था इति** ।। उपवासादिसद्व्रतस्था इत्यर्थः । 'परिवव्रुर्महाबाहुं एकवेणीधराः स्त्रियः । सर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः ।। व्रतोपवासैः तन्वङ्ग्यः काङ्क्षन्त्यः कृष्णदर्शनम् ।।' इत्यादि हरिवंशोक्तेः (२.६४.२७-२८) ।। ११० ।।

**वरदराजीया–** तत्र अन्तःपुरे भूमिपानां राज्ञां कन्यकाः समरे युद्धे तान् भूमिपालान् विजित्य भौमेन आनीताः ताः अपश्यत् । द्व्यष्टसहस्राणि षोडशसहस्राणि शतं चाधिक्यम् । रूपशीलाभ्यां उदारा उत्कृष्टाः अक्षताः रजोदर्शनरहिताः परपुरुषसंयोगरहिताः इति वा । सद्व्रतस्थाः निर्दुष्टव्रताचरणपरायणाः ।।११०।।

**अनन्तभट्टीया–** वहुवारं स्त्रीभवनं सम्यक् स्त्रीस्वभावप्राप्त्यर्थम् ।। ११० ।।

**जनार्दनीया–** तान् भूमिपान् द्व्यष्टौ सहस्राणि शतं शताधिका इत्यर्थः । रूपशीलोदाराः रूपशीलाभ्यां उत्कृष्टाः । अक्षताः अदृष्टरजसः । सद्व्रतस्थाः निर्दुष्टव्रतस्थाः ।। ११० ।।

**चट्टी–** समरे युद्धे तान् भूपान् विजित्य भौमेन नरकासुरेणानीताः रूपशीलोदराः रूपशीलाभ्यां उत्कृष्टाः अक्षताः अदृष्टरजसः सद्व्रतस्थाः उपवासादिसद्व्रतस्था इत्यर्थः । द्व्यष्टसहस्राणि षोडशसहस्राणि शतं च शताधिकषोडशसहस्रसंख्याका इत्यर्थः । भूमिपानां कन्यकाः श्रीकृष्णः तत्रान्तःपुरे अपश्यत् । 'सद्व्रतस्थाः' इत्यत्र 'परिवव्रुः महाबाहुमेकवेणीधराः स्त्रियः । सर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः।। व्रतोपवासतन्वङ्ग्यः काङ्क्षन्त्यः कृष्णदर्शनम् ।।' इत्यादि हरिवंशे ।। ११० ।।

**[१]काश्चित् तत्राऽसन् देवगन्धर्वकन्यास्तासां प्रधाना त्वष्टृपुत्री कशेरुः ।**
**[२]पुत्रा अग्नेः पूर्वमासंश्च तेऽथ स्त्रीत्वप्राप्त्यै चक्रुरुग्रं तपश्च ।।१११।।**

**वेदाङ्गतीर्थीया–** 'भूमिपानां कन्यका अपश्यत्' इति सामान्योक्तेरपवादमाह– **काश्चिदित्यादिना** ।। तत्र तासां कन्यकानां मध्ये । पूर्वमग्नेः पुत्रा आसन् । अथ कालान्तरे स्त्रीत्वप्राप्त्यै तपश्चक्रुः ।। १११ ।।

**मधुसूदनीया–** ।। **पुत्रा अग्नेः पूर्वमासन्निति** ।। तथाचोक्तम्- 'अग्निपुत्रा महात्मानः तपसा स्त्रीत्वमापिरे । भर्तारं च जगद्योनिं वासुदेवमजं विभुम् ।।' इति (भा.ता-१.१०.३१) महाकौर्मे । ननु 'तस्मात् सर्वे सुरा यूयमनपत्या भविष्यथ । प्रजाच्छेदो मम कृतो यस्माद्युष्माभिरद्य वै ।। तस्मात् प्रजा वः खगमाः सर्वेषां न भविष्यति ।।' (१३०.७४-७५) इत्यनुशासनवचनेन पार्वतीशापेन देवानां पुत्राभावात् अग्नेः पुत्राः पूर्वमासन्निति कथमुच्यत इति चेत्सत्यम् । शापकाले वह्न्यभावात् तस्य पुत्रोपपत्तेः । 'हुताशनो न तत्रासीत् शापकाले सुरोत्तमाः ।' इत्यनुशासनोक्तेः (१३०.७६) ।। १११-१२६ ।।

---

१. 'देवसिद्धसुरादीनां नृपाणाञ्च जनार्दन । हत्वा हि सोऽसुरः कन्या रुरोध निजमन्दिरे ।।' ब्रह्मपुराणे-९.३.९.

२. 'हुताशनसुताः सर्वा भवन्तोऽप्सरसः पुरा ।' इति मात्स्ये-७०.२१.

**वरदराजीया–** तत्र तासां मध्ये काश्चित् कन्या देवानां गन्धर्वाणाञ्च कन्याः पुत्र्यः । तासां मध्ये त्वष्टुदेवस्य पुत्री नाम्ना कशेरुः प्रधाना श्रेष्ठा । ते कन्यात्वप्राप्तेः पूर्वमग्नेः पुत्रा आसन् । अथ स्त्रीत्वप्राप्त्यै वासुदेवस्य भार्यात्वार्थं च उग्रं तपश्चक्रुः ।।१११।।

**जनार्दनीया–** 'भूमिपानां कन्यका अपश्यन्' इति सामान्योक्तेरपवादमाह– **काश्चिदित्यादिना** ।। तत्र तासां कन्यकानां मध्ये । काश्चिद्देवगन्धर्वकन्याः शताधिकषोडशसहस्रकन्याः काश्चिद्देवकन्याः, काश्चिद्गन्धर्वकन्याः, काश्चिद्राजकन्या इत्यर्थः । तासां देवगन्धर्वराजकन्यानां मध्ये त्वष्टृपुत्री कशेरुः कशेरुनाम्नी प्रधाना गुणाधिका । तासां पूर्वस्वरूपं विवेचयन्नाह– **पुत्रा इति** ।। याः कन्यात्वं प्राप्ताः पूर्वं अग्नेः पुत्रा आसन् अभूवन् ।। १११ ।।

**भावचन्द्रिका–** 'गन्धर्वाणाञ्च या कन्या जहार नरको बली । याश्च देवमनुष्याणां सप्त चाप्सरसां गणाः ।।' इति (२.६३.१२) हरिवंशवचनात् देवगन्धर्वकन्याः देवानां गन्धर्वाणां कन्या इत्यर्थः । काश्चित्स्वर्गदेवा जाताः ।।१११-११६।।

**चट्टी–** 'भूमिपानां कन्यकाः श्रीकृष्णः अपश्यत्' इति सामान्येनोक्तेरपवादमाह– **काश्चिदित्यादिना** ।। तत्र तासां कन्यकानां मध्ये काश्चिद् देवगन्धर्वकन्याः शताधिकषोडशसहस्रसंख्याकासु काश्चिद् देवकन्याः काश्चिद् गन्धर्वकन्याश्च काश्चिद् राजकन्याश्चेत्यर्थः । तासां देवगन्धर्वकन्यानां मध्ये त्वष्टृपुत्री कशेरुः कशेरुनाम्नी प्रधाना गुणाधिका । तासां पूर्वरूपं विवेचयन्नाह– **पुत्रा इति** ।। कन्यात्वं प्राप्तास्ते पूर्वमग्नेः पुत्राः आसन् । 'अग्नेः पुत्राः पूर्वमासन्' इत्यत्र ननु- 'तस्मात् सर्वे सुरा यूयमनपत्या भविष्यथ । प्रजाच्छेदो मम कृतो यस्माद् युष्माभिरद्य वै ।। तस्मात् प्रजा वः स्वस्त्रीषु सर्वेषां न भविष्यति ।।' इत्यनुशासनवचनेन [1]रुद्रशापेन देवानां पुत्राभावात् 'अग्नेः पुत्राः पूर्वमासन्' इति कथमुच्यत इति चेत्? सत्यम्, शापकाले वह्न्यभावात् तस्य पुत्रोपपत्तिः । 'हुताशनो न तत्रासीच्छापकाले सुरोत्तम ।' इत्यनुशासनोक्तेः ।। १११ ।।

> **भार्यात्वार्थे वासुदेवस्य योषित्तनुं तासामिच्छतीनां समीरः ।**
> **अदाद्वरं [2]तपसाऽऽराधितः सन् स्त्रीभूतास्ते बदरीं सम्प्रजग्मुः ।।११२।।**

**वेदाङ्गतीर्थीया–** इच्छतीनां तासाम् इति भाविस्त्रीत्वापेक्षया स्त्रीलिङ्गव्यपदेशः । स्त्रीभूताः स्त्रीरूपं प्राप्ताः ।। ११२ ।।

---

१. 'पार्वतीशापेन' इति मधुसूदनभिक्षवः । 'रुद्रशापेन' इति चट्टीटिप्पण्याम् ।

२. 'सत्यं च यत्पुरा वायुरिहास्मान् वाक्यमब्रवीत् । सर्वभूतमतिज्ञश्च देवर्षिरपि नारदः ।। विष्णुर्नारायणो देवः शङ्खचक्रगदासिभृत् । स भौमं नरकं हत्वा भर्ता च भविता स वः ।।' इति हरिवंशे विष्णुपर्वणि-६४.३३-३४.

**वरदराजीया–** योषित्तनुं स्त्रीत्वमिच्छन्तीनां तासां समीरो वायुः तपसा आराधितः सन् तं वरं प्रादात् । ते अग्निपुत्राः स्त्रीभूताः स्त्रीशरीरं प्राप्ताः बदरीं प्रति सम्प्रजग्मुः ।।११२।।

**जनार्दनीया–** अथ वासुदेवस्य भार्यात्वार्थे भार्यार्थाय स्त्रीत्वप्राप्त्यै स्त्रीरूपप्राप्त्यै तपश्चक्रुः । समीरस्तपसा आराधितः सन् योषित्तनुमिच्छन्तीनाम् । तासामिति भाविस्त्रीत्वापेक्षया स्त्रीलिङ्गम् । वरं अदात् । ते अग्निपुत्राः स्त्रीभूताः स्त्रीरूपं प्राप्ताः बदरीं सम्प्रजग्मुः ।।११२।।

**चट्टी–** अथ वासुदेवस्य भार्यात्वार्थे भार्यात्वसिद्ध्यर्थं स्त्रीत्वप्राप्त्यै स्त्रीस्वरूपप्राप्त्यै उग्रं तपश्चक्रुः । समीरस्तपसा आराधितस्सन् योषित्तनुमिच्छन्तीनाम् । तासां इति भाविस्त्रीत्वापेक्षया स्त्रीलिङ्गम् । वरमदात् । अग्निपुत्राः स्त्रीभूताः स्त्रीरूपं प्राप्ताः बदरीं सम्प्रजग्मुः ।।११२।।

**नारायणं तत्र शुश्रूषमाणाः प्राप्याप्सरस्त्वं राजकुलेषु जाताः ।**
**काश्चित् स्वर्गे ता [१]निशाम्यैव कृष्णं वव्रुः पतिं सर्वगुणाभिरामम् ।।११३।।**

**वेदाङ्गतीर्थीया–** काश्चित् राजकुलेषु जाताः । काश्चित् स्वर्गे जाताः ।।११३।।

**वरदराजीया–** तत्र बदर्यां नारायणं शुश्रूषमाणाः सेवमानाः अप्सरसत्वप्राप्त्यनन्तरं राजकुलेषु जाताः । काश्चित् स्वर्गे जाताः । कन्याः सर्वगुणाभिरामं कृष्णं निशाम्य दृष्ट्वैव पतिं वव्रुः ।।११३।।

**जनार्दनीया–** तत्र बदर्यां नारायणं श्रीवेदव्यासं शुश्रूषमाणाः अप्सरस्त्वं अप्सरस्त्रीत्वं प्राप्य, अनन्तरं काश्चिद्राजकुलेषु जाताः, भूमाविति शेषः । काश्चित्स्वर्गे जाताः, देवगन्धर्वेष्विति शेषः । ताः कन्यकाः गुणाभिरामं कृष्णं निशम्य पतिं वव्रुरिति योजना ।।११३।।

**चट्टी–** तत्र बदर्यां नारायणं श्रीवेदव्यासं शुश्रूषमाणाः अप्सरस्त्वं प्राप्य, अनन्तरं काश्चिद् राजकुलेषु जाताः, भूमाविति शेषः । काश्चित् स्वर्गे जाताः, देवगन्धर्वेष्विति शेषः । ताः कन्यकाः सर्वगुणैरभिरामं श्रीकृष्णं निशाम्य दृष्ट्वैव पतिं वव्रुरिति अन्वयः ।। ११३ ।।

**[२]आजानदेवैः सर्वगुणैः समास्ताः स्वभावतोऽथेन्दिरावेशतोऽतः ।**
**गुणाधिकास्ताः शिबिकासु कृष्ण आरोपयित्वा प्राहिणोद् द्वारवत्यै ।।११४।।**

**व्यासतीर्थीया–** अतः आजानदेवेभ्यः ।। ११४ ।।

**वेदाङ्गतीर्थीया–** ताः स्वभावतः सर्वगुणैः आजानदेवैः समाः । आजानदेवाः जयन्तादयः । अथेन्दिरा-वेशतः अतः आजानदेवेभ्यः गुणाधिकाः ।।११४-११६।।

---

१. 'निशम्यैव' इति जनार्दनीयपाठः ।

२. 'त्रुंवं ह्यष्टसहस्रश्च शृणु तार्क्ष्य मम स्त्रियः । अग्निपुत्रास्तु यच्चाष्टसहस्रश्च मम स्त्रियः ।। आजानजसमा ह्येता नात्र कार्या विचारणा । त्वष्टुः पुत्री कशेरुश्च तासां मध्ये गुणाधिका ।।' इति गरुडपुराणे ब्रह्मकाण्डे- ३.९.१६-१७.

**वादिराजतीर्थीया–** 'आजानदेवैः सर्वगुणैः समास्ताः' इत्यत्र ताः कन्याः स्वभावतः सर्वगुणैः आजानदेवैः समाः । आजानदेवा इति जयन्तादिदेवानामेको गणः । अतः आजानदेवेभ्यः गुणाधिकाः ।। ।।११४-१२६ ।।

**वरदराजीया–** सर्वैः ज्ञानभक्त्यादिगुणैः ताः कन्याः आजानदेवैः स्वभावतः समा अपि । आजानदेवानां स्वरूपं तु प्रथमाध्याये प्रदर्शितम्, तत्र द्रष्टव्यम् । इन्दिरावेशात् निमित्तात् अतः आजानदेवेभ्यो गुणाधिकाः सौन्दर्यादिगुणैः अधिकाः ताः कन्याः शिबिकासु आन्दोलिकासु आरोपयित्वा उपवेश्य प्राहिणोत् ।।११४।।

**अनन्तभट्टीया–** स्वभावतः आजानदेवैः समाः । अतः आजानदेवेभ्यः ।। ११४-११७ ।।

**जनार्दनीया–** ताः कन्याः स्वभावतः सर्वगुणैः आजानदेवैः समाः । आजानदेवाः जयन्तादयः । इन्दिरावेशतः अतः आजानदेवेभ्यः गुणाधिकाः । ताः शिबिकासु आन्दोलिकासु आरोपयित्वा आरोप्य ।।११४।।

**चट्टी–** ताः कन्याः स्वभावतः सर्वगुणैराजानजदेवैः जयन्तादिभिः समाः । अथ इन्दिरायाः लक्ष्म्याः आवेशतः आवेशात् अतः आजानजदेवेभ्यः गुणैरधिकाः सौन्दर्यादिगुणैरधिकास्ताः श्रीकृष्णः शिबिकासु आन्दोलिकासु आरोयित्वा द्वारवत्यै प्राहिणोत् ।।११४।।

**समन्ततो योजनानां शते द्वे प्रवृद्धमिन्द्रस्य स रत्नपर्वतम् ।**
**नित्यामृतस्रावि जलेश्वरस्य छत्रं च दोर्भ्यां गरुडे न्यधाद्धरिः[1] ।।११५।।**

**सत्याभिनवतीर्थीया–** तत्रैव 'समन्ततो योजनानां शते द्वे..' इति श्लोके समन्ततो योजनानां शते द्वे प्रवृद्धमित्यस्य समन्ततः योजनद्विशतपरिमितप्रदेशं व्याप्य स्थितं सर्वकामप्रकर्षेण पूर्णमित्यर्थः । एतेन योजनानां शते द्वे इत्येतदनन्वितमिति दूषणं परास्तम् । 'योजनानां शते द्वे' इत्यनेन योजनद्विशतपरिमितप्रदेशस्य ग्रहणम्, व्याप्य स्थितमित्यध्याहारः इति चाभ्युपेत्य अन्वयस्योक्तत्वात् ।।११५-११८।।

**वरदराजीया–** स कृष्णः समन्ततः सर्वतो योजनानां शते द्वे प्रवृद्धं विस्तीर्णं रत्नमयं पर्वतम्, नित्यममृतस्रावि अमृतं वर्षत् जलेश्वरस्य वरुणस्य छत्रं चेति द्वयं स्वदोर्भ्यां गरुडे न्यधात् ।।११५।।

**जनार्दनीया–** प्रवृद्धं उन्नतं विस्तीर्णं वा ।। ११५ ।।

---

१. 'आरोपयामास बली गरुडे पक्षिणां वरे । मणिपर्वतशृङ्गं च सभार्यं च जनार्दनम् ।। उवाह लीलया पक्षी गरुडः पततां वरः ।' हरिवंशे विष्णुपर्वणि- ६४.४३-४४ । 'हिरण्यदण्डरुचिरं शीतरश्मिसमप्रभम् । ददर्श तन्महच्छत्रं वर्षमाणमिवाम्बुदम् ।। जातरूपस्य शुभ्रस्य धाराः शतसहस्रशः ।' 'वरुणादाहृतं पूर्वं नरकेणेति नः श्रुतम् ।।' हरिवंशे विष्णुपर्वणि- ६४.७. तथा ब्रह्मपुराणे- 'गरुडो वारुणं छत्रं तथैव मणिपर्वतम् । सभार्यं च हृषीकेशं लीलयैव वहन् ययौ ।।' ९४.१.

**चट्टी–** सः हरिः श्रीकृष्णः समन्ततः सर्वतः योजनानां द्वे शते प्रवृद्धं विस्तीर्णं इन्द्रस्य रत्नमयं पर्वतं नित्यममृतस्रावि अमृतं वर्षत् जलेश्वरस्य वरुणस्य छत्रं च दोर्भ्यां गरुडे न्यधात् ।।११५।।

**स्वयं च सत्यासहितः समारुहत् स चाश्रमेणैव ययौ त्रिविष्टपम् ।**
**अभिप्रयातोऽखिललोकपालैर्जनार्दनः शक्रगृहं विवेश ।।११६।।**

**वरदराजीया–** सत्यासहितः स्वयं च गरुडं समारुहत् । तावता भारेण गरुडो न श्रान्त इत्याह– **स चेति** ।। सः गरुडो अश्रमेणैव श्रमराहित्येनैव ययौ । अखिललोकपालैः इन्द्रादिभिः अभिप्रयातः समुखाभिगमनं प्रापितो जनार्दनो शक्रस्येन्द्रस्य गृहं विवेश ।।११६।।

**जनार्दनीया–** स्वयं च समारुहत्, गरुडमिति शेषः । स च गरुडः अभिप्रयातः अभिमुखं प्राप्तः ।।११६।।

**चट्टी–** सत्यासहितः स्वयं च समारुहत्, गरुडमिति शेषः । तावता भारेण गरुडो न श्रान्त इत्याह– **स इति** ।। सः गरुडश्च अश्रमेण श्रमं विनैव त्रिविष्टपं स्वर्गं प्रति ययौ । अखिलैः लोकपालैः अभिप्रयातः जनार्दनः श्रीकृष्णः शक्रगृहं विवेश ।। ११६ ।।

**सम्पूजितः सत्यभामासहायः शक्रेण शच्या सहितेन सादरम् ।**
**ददावदित्या अपि कुण्डले शुभे समस्तदेवैर्मुनिभिश्च वन्दितः ।।११७।।**

**वेदाङ्गतीर्थीया–** वन्दितश्च अभूत् ।।११७।।

**वरदराजीया–** शच्या सहितेन शक्रेण सादरं सम्पूजितः समस्तदेवादिभिः अभिवन्दितः सन् अदित्यै देव्यै शुभे कुण्डले ददौ ।।११७।।

**जनार्दनीया–** सादरं प्रीतिसहितं यथा भवति तथा देवैः मुनिभिश्च वन्दितोऽभूत् ।। ११७ ।।

**भावचन्द्रिका–** अपिशब्दात् इन्द्राय रत्नपर्वतं ददौ वरुणाय तदीयं छत्रं ददौ इति ज्ञेयम् । तथा भागवतोक्तेः ।। ११७-१२० ।।

**चट्टी–** सत्यभामासहायः श्रीकृष्णः शच्या सहितेन शक्रेण सादरं प्रीतिसहितं यथा तथा सम्पूजितः सन् समस्तदेवैः मुनिभिश्च वन्दितः सन् अदित्याः शुभे कुण्डले अपि ददौ ।।११७।।

**तमासुरावेशवशादजानती सत्यां च सर्वप्रभवौ [1]जगत्प्रभू ।**
**निर्दोषसौख्यैकतनू [2]शुभाशिषस्ताभ्यां ददौ साऽदितिरात्मपुत्रवत्।।११८।।**

---

१. 'जगद्गुरू' इति सत्याभिनवतीर्थीयपाठः ।

२. 'सा तस्याः सत्यभामायाः कृष्णप्रियचिकीर्षया । वरं प्रादाद्देवमाता सत्यायै विगतज्वरा ।। जरां न यास्यसि शुभे

**वेदाङ्गतीर्थीया–** आसुरावेशवशात् तं च कृष्णं सत्यां च सर्वप्रभवौ जगत्प्रभू निर्दोषसौख्यैकतनू अजानती सा अदितिः आत्मपुत्रवत् आत्मपुत्राभ्यामिव ।।११८-१२३।।

**सत्याभिनवतीर्थीया–** तत्रैव 'तमासुरावेशवशादजानती..' इति श्लोकः । तस्यार्थः- सा अदितिः असुरावेशवशात् आ सम्यक् असुरावेशवशात् नं कृष्णं सत्यां च अजानती आत्मपुत्रवत् ताभ्यां शुभाशिषः ददौ । कृष्णं सत्यां चाजानतीत्युक्तं विवृणोति– **सर्वप्रभवावित्यादिना** ।। सा अदितिः असुरावेशवशात् तौ सत्याकृष्णौ जगद्गुरू निर्दोषसौख्यात्मतनू इत्यजानती आत्मपुत्रवत् ताभ्यां शुभाशिषः ददाविति । एतेन सर्वप्रभवौ इत्यादीनां द्विवचनान्तानां शब्दानां तं सत्यामिति द्वितीयैकवचनान्ताभ्यां शब्दाभ्याम् अनन्वय इति शङ्का परास्ता । सा इत्यादीनामावृत्तिः । ताभ्याम् इत्यस्य अर्थवशात् तौ इति प्रथमा-द्विवचनान्तत्वम्, सर्वप्रभवौ इत्यादेः प्रथमाद्विवचनान्तत्वम्, इतिशब्दाध्याहारं च स्वीकृत्यान्वयस्य उक्तत्वात् ।।११८।।

**वरदराजीया–** सा अदितिः तं कृष्णं सत्यां चोभौ । सर्वस्य प्रभवः उत्पत्तिर्याभ्याम् । जगतः प्रभू । निर्दोषं सौख्यमेव तनुः देहो ययोस्तौ । एवम्भूतौ अजानती आत्मपुत्रवत् आत्मनः पुत्रस्य यथा ताभ्यां सत्याकृष्णाभ्यां शुभाशिषः आशीर्वादान् ददौ ।।११८।।

**अनन्तभट्टीया–** तं कृष्णं सत्याञ्च । सर्वप्रभवौ अयाचत् । अजानतः ।। ११८-११९ ।।

**जनार्दनीया–** सर्वप्रभवौ सर्वस्य उत्पादकौ । जगत्प्रभू जगति समर्थौ । निर्दोषसौख्यैकतनू निर्दोषं शुद्धम्, सौख्यमेव एका मुख्या तनुर्ययोस्तौ तथा तौ । तं कृष्णं सत्यां च असुरावेशवशादजानती सा अदितिः आत्मपुत्रवत् स्वपुत्रस्य यथा तथा ताभ्यां सत्याकृष्णाभ्यां आशिषः ददौ ।। ११८ ।।

**चट्टी–** सर्वप्रभवौ सर्वस्योत्पादकौ । जगत्प्रभू जगति समर्थौ । निर्दोषसौख्यैकतनू निर्दोषं शुद्धं, सौख्यमेवैका मुख्या तनुः ययोस्तौ तथाभूतौ तं श्रीकृष्णं सत्यां चेत्युभौ असुरावेशवशादजानती सा अदितिः आत्मपुत्रवत् स्वस्य पुत्रस्य यथा तथा ताभ्यां सत्यभामाकृष्णाभ्यां शुभाः आशिषः ददौ ।।११८।।

**अथो सदानन्दचिदात्मदेहः स नन्दनोद्यानमजोऽनुरूपया ।**
**अनन्तशक्तिः सह सत्यभामया विवेश रन्तुं प्रिययाऽखिलेश्वरः ।।११९।।**

**व्यासतीर्थीया–** 'रन्तुं विवेश' इत्युक्त्या सुखार्थित्वं प्राप्तं निवारयितुमुक्तम्– **सदानन्देति** ।। अन्योद्याने स्वस्य कथं प्रवेश इत्यत उक्तम्– **अखिलेश्वरः अनन्तशक्तिरिति** ।। ११९ ।।

---

यावत्कृष्णास्ति भूतले । सर्वगन्धगुणोपेता भविष्यसि वरानने ।। विसृज्य सत्यभामा वै पौलोमीं च सुमध्यमा । शच्यापि समनुज्ञाता ययौ कृष्णनिवेशनम् ।।' सभापर्वणि-५६.४५-४८.

**वरदराजीया–** अथ अनन्तरं सदानन्दाद्यात्मको देहो यस्य स तथा । अजः अनन्तशक्तिः अखिलेश्वरः स कृष्णः अनुरूपया सर्वानुरूपवत्या सत्यभामया प्रियया सह नन्दनोद्यानं नन्दननामकं उद्यानमुपवनं रन्तुं क्रीडां कर्तुं विवेश ।।११९।।

**जनार्दनीया–** अथो सदानन्दचिदात्मदेहः सत्यौ निर्दुष्टे, आनन्दचितौ आनन्दज्ञाने, तदात्मा देहो यस्य स तथा । स कृष्णः अनुरूपया अनुकूलरूपया सत्यभामया सह नन्दनोद्यानं नन्दनाख्योद्यानं रन्तुं क्रीडां कर्तुं विवेश ।।११९।।

**ताम्रपर्णीया–** 'रन्तुं विवेश' इत्युक्त्या प्राप्तमपूर्णत्वं वारयितुमुक्तम्– **सदानन्देति** ।। अन्योद्याने कथं प्रवेश इत्यत उक्तम्– **अखिलेति** ।। व्यापकस्य कथं प्रवेश इत्यत उक्तम्– **अनन्तशक्तिरिति** ।। **सदैवेति** ।। ११९-१२० ।।

**चट्टी–** अथो सदानन्दचिदात्मदेहः सत्यौ निर्दुष्टे, आनन्दचितौ आनन्दज्ञाने, तदात्मा देहो यस्य स तथा । अजः उत्पत्तिरहितः अनन्तशक्तिरखिलेश्वरः सः श्रीकृष्णः अनुरूपया स्वानुकूलरूपवत्या प्रियया सत्यभामया सह रन्तुं क्रीडां कर्तुं नन्दनोद्यानं नन्दनाख्योद्यानवनं विवेश ।।११९।।

**तयाऽच्युतोऽसौ कनकावदातया सुकुङ्कुमादिग्धपिशङ्गवाससा ।**
**पूर्णेन्दुकोट्यौघजयन्मुखाब्जया रेमेऽमितात्मा जगदेकसुन्दरः ।।१२०।।**

**वरदराजीया–** अमितात्मा अमितस्वरूपो जगदेकसुन्दरोऽसावच्युतः कनकावदातया गौरवर्णया सुकुङ्कुमेन आदिग्धं आलिप्तं पिशङ्गं पीतं वासो यस्याः सा तया तथा । पूर्णानां इन्दुकोटीनां ओघं समूहं जयत् मुखाब्जं यस्याः सा तथा तया सत्यभामया रेमे ।।१२०।।

**अनन्तभट्टीया–** ।। **पूर्णेन्द्विति** ।। पूर्णेन्दुकोटीनाम् ओघं जयन्मुखाब्जं यस्या इति विग्रहः ।।१२०।।

**जनार्दनीया–** असौ अच्युतः । कनकावदातया सुवर्णवद्गौरवर्णो यस्याः सा तथा । सुकुङ्कुमादिग्धपिशङ्गवाससा शोभनकुङ्कुमेन आदिग्धं आलिप्तं पिशङ्गं पीतवर्णं वासो यस्याः सा तथा तया । पूर्णेन्दुकोट्यौघजयन्मुखाब्जया पूर्णाः षोडशकलायुक्ताः, इन्दवस्तेषां कोट्यः, तासां ओघः समूहः, तं जयन् तिरस्कुर्वत् मुखाब्जं मुखलक्षणचन्द्रः कमलं वा यस्याः सा तथा तया सत्यभामया रेमे ।।१२०।।

**भावचन्द्रिका–** लक्ष्म्या गुणस्मरणार्थमाह– **कन्यकावदातयेत्यादिना** ।।१२०।।

**चट्टी–** अमितात्मा जगदेकसुन्दरः जगति मुख्यसुन्दरः असौ अच्युतः श्रीकृष्णः कनकावदातया कनकवद्गौरवर्णया सुकुङ्कुमादिग्धपिशङ्गवाससा शोभनं कुङ्कुमेनालिप्तं पिशङ्गं पिशङ्गवर्णं वासो यस्याः सा तथा तया । पूर्णेन्दुकोट्यौघजयन्मुखाब्जया पूर्णेन्दवः षोडशकलायुक्ताः, इन्दवस्तेषां कोट्यः, तासामोघाः समूहास्तान् जयत् तिरस्कुर्वत् मुखाब्जं मुखकमलं यस्याः सा तथा तया सत्यभामया रेमे ।।१२० ।।

**सर्वर्तुनित्योदितसर्ववैभवे सुरत्नचामीकरवृक्षसद्वने ।**
**सदैव पूर्णेन्दुविराजिते हरिश्चचार देव्या पवनानुसेविते ॥१२१॥**

**वरदराजीया–** सर्वेषु ऋतुषु नित्यमुदितं आविर्भूतं सर्ववैभवं सम्पत् यस्मिन् तत् तथा तस्मिन् । समीचीनं रत्नं स्वर्णमया वृक्षा यस्मिन् तच्च तद्वनं च तस्मिन् । सर्वदा पूर्णेन्दुना विराजिते । पवनेन मन्दमारुतेन सेविते देव्या सह चचार ॥१२१॥

**जनार्दनीया–** सर्वर्तुनित्योदितसर्ववैभवे सर्वर्तुषु वसन्तादिषु, नित्यमहोरात्रं, उदितं आविर्भूतं, सर्ववैभवं सर्वसम्पत् यस्मिन् तत्तथा तस्मिन् । सदैव निरन्तरं पूर्णेन्दुविराजिते पूर्णचन्द्रेण दीप्यमाने, पवनानुसेविते मन्दवायुजुष्टे । सुरत्नचामीकरवृक्षसद्वने सुरत्नचामीकराणां शोभनरत्नसुवर्णानां वृक्षं यस्मिन् तत् सुरत्नचामीकरवृक्षम्, तच्च तद् सद्वनं च सुरत्नचामीकरवृक्षसद्वनं तस्मिन् तथा । हरिः देव्या सत्यया सह चचार, इतस्तत इति शेषः ॥ १२१ ॥

**भावविवृतिः–** ॥ **सदैव पूर्णेन्दुविराजित इति** ॥ रत्नप्रभया पूर्णेन्दूदये यथा तथा विराजिते । स्वर्गे चन्द्रमण्डलावस्थितेरसम्भवात् ॥ १२१-१५३ ॥

**ताम्रपर्णीया–** ननु सर्वदा पूर्णेन्दुविराजितत्वे अहःप्रयुक्तगुणातिशयो वनस्य न स्यादिति चेन्न । सदैवाहन्यपीति व्याख्यानात् । सर्वदा तत्र सूर्यस्यापि उदितत्वेन तस्यापि भावात् । तदुक्तं यमकभारते- 'सर्वर्तुवने शशिना निशि सत्यां वासरे वने शशिन' (श्लो-३६) इति ॥ १२१ ॥

**भावचन्द्रिका–**गजेन्द्रमोक्षे 'ये मां त्वाञ्च' इत्यादिना पुण्यवृक्षज्ञानस्यावश्यकत्वोक्तेः तज्ज्ञापनायाह– **सर्वेति** ॥ १२१-१२५ ॥

**चट्टी–** सर्वर्तुनित्योदितसर्ववैभवे सर्वर्तुषु वसन्तादिषु, नित्यमहोरात्रम्, उदितमाविर्भूतम्, सर्वसम्पद्यस्मिन् तत्तथा तस्मिन् । सदैव निरन्तरं पूर्णेन्दुविराजिते पूर्णचन्द्रदीप्यमाने, पवनानुसेविते मन्दवायुजुष्टे । सुरत्नचामीकरवृक्षसद्वने सुरत्नचामीकराणां शोभनरत्नसुवर्णानां वृक्षाः यस्मिन् तत् सुरत्न-चामीकरवृक्षं तच्च तद्वनं च सुरत्नचामीकरवृक्षसद्वनं तस्मिन् । हरिः श्रीकृष्णः देव्या सत्यभामया सह चचार, इतस्तत इति शेषः ॥ १२१ ॥

**[१]विदोषसंवित्तनुरत्र सत्तरुं ददर्श सत्याऽमृतमन्थनोद्भवम् ।**
**सा पारिजातं मणिकाञ्चनात्मकं समस्तकामप्रदमार्तिहारिणम् ॥१२२॥**

**व्यासतीर्थीया–** 'सत्तरुं ददर्श' इत्युक्त्या तदानीमेव ज्ञातः न पूर्वमिति प्राप्तम् । तन्निवारयितुमुक्तम्– **विदोषेति** ॥ १२२ ॥

---

१. 'निर्दोषसंवित्' इति जनार्दनीयपाठः ।

**वरदराजीया–** विदोषा संविद् ज्ञानं तनुः देहः यस्याः सा तथा । सत्या रत्नमयं तरुं पारिजातं अमृतमन्थने उद्भवो यस्य तं ददर्श । मणिकाञ्चनात्मकं रत्नसुवर्णमयम् । समस्तान् कामान् ददातीति तथा तम् । आर्तिः दुःखं हर्तुं शीलमस्यास्तीति तथा तम् ।। १२२ ।।

**जनार्दनीया–** अत्र नन्दनवने । निर्दोषा संविद् ज्ञानं तदेव तनुर्यस्याः सा तथा । पारिजातं पारिजाताख्यं सत्तरुं सद्वृक्षं अमृतार्थं कृतक्षीरसमुद्रमथनजातमित्यर्थः ।। १२२ ।।

**ताम्रपर्णीया–** 'सत्तरुं ददर्श' इत्युक्त्या प्राप्तं पूर्वं ज्ञानाभावमपाकरोति– **विदोषेति** ।। १२२ ।।

**चट्टी–** अत्र नन्दनवने विदोषा संविद् ज्ञानं तदेव तनुः यस्याः सा तथा । सा सत्या अमृतमन्थनोद्भवममृतमन्थने उद्भवो यस्य तम् । मणिकाञ्चनात्मकं रत्नस्वर्णमयम् । समस्तान् कामान् प्रददातीति समस्तकामप्रदम् । आर्तिं दुःखं हरतीति आर्तिहारी तम् । पारिजातं पारिजाताख्यं सत्तरुं सद्वृक्षं ददर्श ।। १२२ ।।

**दृष्ट्वैव तं [१]सुस्मितचन्द्रिकास्फुरन्मुखारविन्दाऽसितलोललोचना ।**
**कपोलनिर्भातचलत्सुकुण्डला जगाद देवाधिपतिं पतिं सती ।।१२३।।**

**व्यासतीर्थीया–** चन्द्रिकेव चन्द्रिका, सुस्मिता चन्द्रिका यस्याः सा सुस्मितचन्द्रिका इति पृथक्पदम्।।

**वरदराजीया–** तं तदा पारिजातं दृष्ट्वा, सुस्मिताख्यचन्द्रिकया स्फुरत् भासमानं मुखारविन्दं यस्याः सा । असिते कृष्णे, लोले चञ्चले, लोचने यस्याः सा तथा । कपोलाभ्यां निर्भाते प्रकाशमाने चलत्कुण्डले यस्याः सा तथा । सा सत्या सती भार्या देवानां अधिपतिं भर्तारं जगाद उक्तवती ।।१२३।।

**अनन्तभट्टीया–** सुस्मितं चन्द्रिकेति भिन्नं पदमिति पूर्वतनाः ।। १२३ ।।

**जनार्दनीया–** सुस्मितचन्द्रिकास्फुरन्मुखारविन्दा सुस्मितचन्द्रिकेव तया स्फुरन्मुखारविन्दं यस्याः सा तथा । असितलोललोचना असिते कृष्णे, लोले चञ्चले, लोचने यस्याः सा तथा । कपोलाभ्यां चिल्लिकाभ्यां, निर्भाते दीप्यमाने, चलती चञ्चले, शोभने कुण्डले यस्याः सा तथा । सती पतिव्रता सत्या तं पारिजातं दृष्ट्वा, देवाधिपतिं पतिं स्वभर्तारं प्रति जगाद ।।१२३।।

**ताम्रपर्णीया–** सुस्मितचन्द्रिका इति पृथक्पदम् ।। १२३ ।।

**चट्टी–** सुस्मितचन्द्रिकास्फुरन्मुखारविन्दा सुस्मितचन्द्रिकेव तया स्फुरन्मुखारविन्दं यस्याः सा तथा । असितलोललोचना असिते कृष्णे, लोले चञ्चले, लोचने यस्याः सा तथा । कपालनिर्भातचलत्सुकुण्डला कपालाभ्यां निर्भाते दीप्यमाने, चलती चञ्चले, शोभने कुण्डले यस्याः सा तथा । सती पतिव्रता सत्या तं पारिजातं दृष्ट्वैव देवानामधिपं स्वभर्तारं जगाद ।। १२३ ।।

---

१. 'सुस्मितचन्द्रिका स्फुरन्मुखारविन्दा' इति व्यासतीर्थीय-ताम्रपर्णीयपाठः ।

**तरुर्जगज्जीवद मे गृहाङ्गणे संस्थापनीयोऽयमचिन्त्यपौरुष ।**
**इतीरितस्तां कलशोपमस्तनीमालिङ्ग्य देवस्तरुमुद्बबर्ह ॥१२४॥**

**व्यासतीर्थीया–** ननु तरुं उन्मूल्य अन्यत्र स्थापने शुष्येदित्यत उक्तम्– **जगज्जीवदेति** ॥ ननु तरून्मूलने तत्कथं तत्स्वामिनः सहेरन्नित्यत उक्तम्– **अचिन्त्येति** ॥ 'आलिङ्ग्य' इति तरून्मूलनं कृष्णाभिप्रेतमिति सूचयति ॥ १२४-१२५ ॥

**वेदाङ्गतीर्थीया–** तरुरुन्मूल्यान्यत्र नयनात् शुष्येदित्यत उक्तम्– **जगज्जीवदेति** ॥१२४-१२८॥

**वरदराजीया–** किमिति? हे जगज्जीवद! हे अचिन्त्यपौरुष! कृष्ण! अयं तरुः मे गृहाङ्गणे संस्थापनीयः इति उत्पाट्य वृक्षनयने शुष्कतापत्तिशङ्कानिवारणार्थं 'जगज्जीवद' इति सम्बोधनम् । जगतो जीवनप्रदे त्वयि वृक्षोज्जीवनं नासम्भावितमित्यर्थः । तथापि इन्द्रादिभिः सह विरोधेन युद्धे सति कथं वृक्षनयनं घटत इत्याशङ्कानिवारणार्थं 'अचिन्त्यपौरुष' इति सम्बोधनम् । अद्भुताचिन्त्यपराक्रमस्य तव देवानां जयो न दुष्कर इत्यर्थः । कलशोपमौ स्तनौ यस्याः सा ताम् । 'आलिङ्ग्य' इत्यनेन तस्यां दशायां देव्याम् अनुग्रहविशेषं दर्शयति । उद्बबर्ह उत्पाटितवान् ॥१२४॥

**अनन्तभट्टीया–** जीवद प्राणधारणप्रद । 'आलिङ्ग्य' इत्यनेन तत्कृष्णाभिप्रेतत्वं सूचयति ॥१२४॥

**जनार्दनीया–** तरुरुन्मूल्यान्यत्र नयनात् शुष्येदित्यत उक्तम्– **जगज्जीवदेति** ॥ हे जगज्जीवद! अखिलप्राणधारक । इन्द्रादिभिः रक्षितस्य वृक्षस्य नयने क शक्तिरिति शङ्कां निवारयति– **अचिन्त्य-पौरुषेति** ॥ हे अचिन्त्यपौरुष! अद्भुतपराक्रम । कलशोपमस्तनीं कलशोपमौ स्तनौ यस्याः सा ताम् । उद्बबर्ह उत्पाटयामास ॥ १२४ ॥

**ताम्रपर्णीया–** उन्मूलने तरुः शुष्येदित्यत उक्तम्– **जगज्जीवदेति** ॥ तरून्मूलने तत्स्वामिकोपेनानर्थः स्यादित्यत उक्तम्– **अचिन्त्येति** ॥ 'आलिङ्ग्य' इत्यनेन तरून्मूलनं कृष्णाभिप्रेतमिति सूचयति ॥ १२४-१२५॥

**चट्टी–** किमिति? हे जगज्जीवद! हे अचिन्त्यपौरुष! श्रीकृष्ण! अयं तरुः मे गृहाङ्गणे स्थापनीयः । इतः उत्पाट्य वृक्षस्य नयने शुष्कः स्यादिति शङ्कानिराकरणाय 'जगज्जीवद' इति सम्बोधनम् । जगतः जीवनप्रदे त्वयि वृक्षजीवनं न दुर्घटमिति भावः । तथापीन्द्रादिभिः सह विरोधे सति कथं वृक्षनयनं घटत इति शङ्कानिराकरणाय 'अचिन्त्यपौरुष' इति सम्बोधनम् । अद्भुताचिन्त्यपराक्रमस्य तव देवानां जयो न दुष्कर इत्यर्थः । देवः श्रीकृष्णः इतीरितः, सत्यभामयेति शेषः । कलशोपमौ स्तनौ यस्या सा तथा तां सत्यभामां अलिङ्ग्य तरुं उद्बबर्ह उत्पाटितवान् ॥१२४॥

**स तेन वृक्षेण[१] सहैव केशवस्तया च देव्याऽऽरुहदग्र्यपौरुषम् ।**
**खगेश्वरं तच्च निशम्य शच्या प्रचोदितो वासव आगमत् सुरैः ॥१२५॥**

**वरदराजीया–** सः कृष्णः तया देव्या च सह अग्र्यं पौरुषं उत्तमपराक्रमं तावद्भारसहनशक्तिमन्तं खगेश्वरं गरुडं आरुहत् आरुरोह । तत् पारिजातहरणं निशम्य श्रुत्वा शच्या भार्यया प्रचोदितः प्रेरितो वासवः सुरैः अशेषदिक्पालादिभिः सहागमत् ॥ १२५ ॥

**जनार्दनीया–** खगेश्वरं गरुडम् । सुरैः सह ॥ १२५ ॥

**चट्टी–** सः केशवः श्रीकृष्णः तेन वृक्षेण सहैव तया देव्या सत्यया च सह अग्र्यपौरुषमुत्तमपराक्रमं खगेश्वरं गरुडं आरुहत् आरुरोह । तत्पारिजातहरणं निशम्य श्रुत्वा शच्या भार्यया प्रचोदितः प्रेरितो वासवः सुरैः सह आगमत् ॥ १२५ ॥

**तानासुरवेशयुतान् हरेश्च बलप्रकाशाय समुद्यतान् सुरान् ।**
**न्यवारयच्छार्ङ्गशरासनच्युतैर्हरिप्रिया बाणवरैः समस्तशः ॥१२६॥**

**व्यासतीर्थीया–** कांश्चिद् बलप्रकाशाय समुद्यतानिति चशब्दसम्बन्धः ॥ १२६-१३५ ॥

**वरदराजीया–** कांश्चित् असुरावेशयुतान् कांश्चिद् हरेः बलप्रकाशायैव समुद्यतान् युद्धायोद्युक्तान् समस्तशः सर्वसुरान् हरिप्रिया सत्यभामा शार्ङ्गाख्यशरासनात् धनुषः च्युतैः निर्गतैः बाणवरैः न्यवारयत् निवारितवती ॥१२६॥

**अनन्तभट्टीया–** कांश्चिद्बलप्रकाशाय समुद्यतान् हरिः । असुरैः संवेशितानां देवानाम् ॥१२६-१२७॥

**जनार्दनीया–** हरिप्रिया सत्यभामा । तान् सुरान् । हरेर्बलप्रकाशाय । च्युतैर्न्यवारयत् । स्त्रिया मया निवारितेषु हरेर्बलं उत्तममिति किं वक्तव्यमित्यभिप्रायेण न्यवारयदिति भावः । 'कांश्चिदसुरावेशयुतान् कांश्चिद् हरेर्बलप्रकाशाय समुद्यातान्' इति केचिट्टिप्पणीकाराः । अस्मिन् प्रसङ्गे कस्यापि असुरावेशराहित्यस्य आचार्यैः अनुक्तत्वात् विचार्यम् ॥१२६॥

**ताम्रपर्णीया–** कांश्चिदसुरावेशादागतान् कांश्चिद् हरेर्बलप्रकाशाय समुद्यतानित्यर्थः ॥१२६-१३६॥

**भावचन्द्रिका–** हरेरिन्द्रस्य एषां समुद्यमोऽपि कृष्णबलप्रकाशाय जात..* ग्रन्थकारवचनं वा ॥१२६॥

**चट्टी–** हरिप्रिया सत्यभामा असुरावेशयुतान् समुद्यतान् समस्तशस्तान् सुरान् हरेश्च बलप्रकाशाय शार्ङ्गशरासनच्युतैः शार्ङ्गनामकधनुषः निसृतैः बाणवरैः न्यवारयत् । स्त्रिया मया निवारितेषु हरेर्बलं उत्तममिति किमु वक्तव्यमित्यभिप्रायेण न्यवारयदिति भावः । 'कांश्चित् असुरावेशयुतान् कांश्चिद् हरेः

१. 'गरुडं पक्षिराजानमयत्नेनैव भारत । उपस्थितो विग्रहवान् पारिजातस्स केशवम् ॥' इति हरिवंशे २.७३.१०

वलप्रकाशाय समुद्यतान्' इति केषाञ्चिद् व्याख्यानम् । अस्मिन् प्रसङ्गे कस्याप्यसुरावेशराहित्य-माचार्येणादर्शितम् ।।१२६।।

**निरायुधं वैश्रवणं चकार चिक्षेप चाब्धौ गरुडो जलेश्वरम्[१]।**
**प्रधानवायोस्तनयं तु वायुं कोणाधिपं वह्नियमादिकानपि ।।१२७।।**

**वादिराजतीर्थीया–** 'प्रधानवायोस्तनयम्' इत्यत्र प्रधानवायोस्तनयम् । वह्नियमादिकान् दिक्पालकान् प्रत्यपि असुरैरावेशितानामितरदेवानां च स्वकां तनुं विबोध्येत्यन्वयः ।। १२७-१२८ ।।

**मधुसूदनीया–** दशमस्कन्धमनुसृत्य सत्यभामायुद्धमाह– **निरायुधमिति** ।। सत्यभामायुद्धमुक्त्वा गरुडयुद्धमाह– **चिक्षेपेति** ।। कृष्णयुद्धमाह– **प्रधानवायोरित्यादिना** ।।१२७।।

**वरदराजीया–** वैश्रवणं कुवेरम् । गरुडो जलेश्वरं वरुणम् । प्रधानवायोः मुख्यप्राणस्य तनयं कोणाधिपं वायुम् । वह्न्यादीनपि कोणाधिपान् अब्धौ चिक्षेपेति सम्बन्धः ।।१२७।।

**जनार्दनीया–** सत्या वैश्रवणं कुवेरं निरायुधं चकार । गरुडो जलेशं वरुणम् । चकारात् मकरं चाब्धौ चिक्षेप । तदुक्तं भागवते दशमे- (६६.२५) 'तं पक्षकोट्या गरुडः समुद्धृत्य जलेश्वरम् । पद्भ्यां गृहीत्वा मकरं चिक्षेप वरुणालये ।।' इति । अस्यार्थः- जलेश्वरं मकरं च वरुणालये समुद्रे चिक्षेप । कथम्? तं वरुणं पक्षकोट्या उद्धृत्य, मकरं पद्भ्यां गृहीत्वेति शेषः ।तेन ल्यवन्तस्य नानन्वयः नाप्युत्तरासङ्गतिरिति।।१२७।।

**भावचन्द्रिका–** ।। **प्रधानेति** ।। हरिर्वायुं वह्न्यादीनपि विजित्य विबोध्य च अगादिति योज्यम् । अन्यथा भागवतविरोधात् ।। १२७-१५४ ।।

**चट्टी–** दशमस्कन्धमनुसृत्य सत्यभामादियुद्धमाह– **निरायुधमिति** ।। सत्या वैश्रवणं कुवेरं निरायुधं चकार । सत्यभामायुद्धमुक्त्वा गरुडयुद्धमाह– **चिक्षेप इति** ।। गरुडः जलेशं वरुणमप्यब्धौ चिक्षेप । श्रीकृष्णयुद्धमाह– **प्रधानवायोरित्यादिना** ।।१२७।।

**विबोध्य शार्ङ्गोत्थरवैः स्वकां तनुमावेशितानामसुरैरगाद्धरिः ।**
**ते बोधितास्तेन रणं विसृज्य ययुर्विदित्वा तमनादिपूरुषम् ।।१२८।।**

**वादिराजतीर्थीया–** 'शार्ङ्गोत्थरवैर्विबोध्य' इति वदता यद्यपि शरा अपि देवेषु प्रयुक्ताः तथापि स्वभक्तत्वात् यथा न म्रियेरन् तथा करुणया मन्दं लघु च प्रयुक्ताः । भीषणाय शार्ङ्गरवं तु घनगर्जितवत् करोति । अतः शरताडनात् कृष्णोऽयमिति प्रवोधो नाभूत् । किन्तु गम्भीरशार्ङ्गरवैरेव विबोधो जात इति सूचितम् । अन्यथा- 'दृष्ट्वा समीरणो युद्धादपयातं हुताशनम् । सायकाचितसर्वाङ्गमात्मानं चातिविह्वलः ।।

१. 'जलेशम्' इति जनार्दनीयचट्टीटिप्पण्योः पाठः ।

विदित्वा पुण्डरीकाक्षं संग्रामे प्रत्युपस्थितम् । न्यवर्तत कुरुश्रेष्ठ प्राणत्राणपरायणः ।।'(१०.६६.३१-३२) इति भागवतविरोधः स्यात् अत इत्थमेव योजना ।। १२९-१३६ ।।

**मधुसूदनीया–** हरिः कृष्णः असुरावेशितानामाविष्टानां मध्ये प्रधानवायोस्तनयं कोणाधिपं प्रवहाख्यं वायुं वह्नियमादिकानपि प्रति शार्ङ्गोत्थरवैः शार्ङ्गधनुष्टङ्कारैः स्वकां तनुं स्वस्वरूपं विबोध्य ज्ञापयित्वा हरिरगात् । यद्वा असुरावेशितानां कियतां सुराणां शार्ङ्गोत्थरवैः स्वकां तनुं विबोध्य प्रधानवायोस्तनयं कोणाधिपं वायुं वह्नियमादिकानपि प्रति हरिः अगादिति । ते वायुवह्न्याद्या तेन कृष्णेन बोधिताः 'अयं परं ब्रह्म' इति ज्ञापिताः सन्त इत्यर्थः । एतत्सर्वकथा दशमस्कन्धे पञ्चषष्ट्यध्यायादौ द्रष्टव्या । एतेन 'गरुडो जलेशं प्रधानवायोस्तनयं कोणाधिपं वायुं वह्नियमादिकानपि अब्धौ चिक्षेप' इति वरदराजीय-व्याख्यानं निरस्तं वेदितव्यम् । दशमस्कन्धादिविरोधात् ।।१२८-१३२।।

**वरदराजीया–** असुरैः संवेशितानां देवानां स्वकां स्वां तनुं स्वरूपं शार्ङ्गोत्थरवैः विबोध्य बोधयित्वा, असुरावेशेन स्वात्मानं अजानतां देवानां शार्ङ्गध्वनिभिः 'अहं पुरुषोत्तमः' इति विबोध्य बोधमुत्पाद्य अगादित्यर्थः । तेन कृष्णेन बोधिता ते देवाः रणं विसृज्य तं कृष्णं अनादिपूरुषं विदित्वा ययुः ।।१२८।।

**अनन्तभट्टीया–** स्वकां तनुं शार्ङ्गोत्थरवैः असुरावेशतः स्वस्वरूपमजानतां देवानां विबोध्य शार्ङ्गरवेण अहं पुरुषोत्तम इति ज्ञापयित्वेत्यर्थः ।। १२८ ।।

**लघ्वनन्तभट्टीया–** असुरावेशात् बोधितास्ते तमनादिपूरुषं विदित्वेति योज्यम् ।। १२८-१३७ ।।

**जनार्दनीया–** हरिः असुरैः आवेशितानां आवेशितान् वायुवह्नियमादिकानपि स्वकां तनुं स्वस्वरूपम्, कृष्णरूपमिति यावत् । शार्ङ्गोत्थरवैः ज्ञापयित्वा अगादित्यन्वयः । 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्मा-कर्मकाणां अणिकर्ता स णौ' (सि.कौ.५४०) इति सूत्रेण वायुमित्यादेः कर्मसञ्ज्ञा । तेन तेषां स्वतनुं विबोध्येत्यर्थः । तेन 'सङ्ग्रामे वायुपावकौ' 'तमसाधारणं मत्वा'(भागवते-१०.६६.२७-३०) इत्यादि दशमेन न विरोधः ।।१२८।।

**चट्टी–** हरिः श्रीकृष्णः असुरैरावेशितानां आविष्टानां मध्ये प्रधानवायोस्तनयं कोणाधिपं प्रवहाख्यं वायुं वह्नियमादिकान् प्रति शार्ङ्गोत्थरवैः शार्ङ्गधनुष्टङ्कारैः स्वकां तनुं स्वस्वरूपं विबोध्य ज्ञापयित्वा हरिरगात् । तेन श्रीकृष्णेन ते देवाः बोधिताः सन्तः तं श्रीकृष्णं अनादिपूरुषं विदित्वा रणं विसृज्य ययुः । एतत्सर्वकथा दशमस्कन्धे पञ्चषष्ट्यध्यायादौ द्रष्टव्या । एतेन 'गरुडो जलेशं प्रधानवायोस्तनयं कोणाधिपं वायुं वह्नियमादिकानप्यब्धौ चिक्षेप' इति व्याख्यानं दशमस्कन्धाद्यननुगुणमिति वेदितव्यम् ।।१२८ ।।

**शिवं च शक्रार्थमुपागतं हरिर्व्यद्रावयच्छार्ङ्गविनिःसृतैः शरैः ।**
**सवाहनो दूरतरे निपातितो गरुत्मना शम्भुरगाच्छराहतः ।।१२९।।**

**वेदाङ्गतीर्थीया–** भगवता शराहतः ।।१२९-१३५।।

**वरदराजीया–** शक्रार्थं शक्रसहायं कर्तुं उपागतं शिवं च व्यद्रावयत् । सवाहनो नन्दिकेश्वरेण सहितो गरुत्मता गरुडेन दूरतरे अतिदूरे निपातितः शराहतः कृष्णशराहतः ।। १२९ ।।

**जनार्दनीया–** शराहतः, कृष्णेनेति शेषः । गरुत्मता सवाहनः सनन्दी दूरतरे निपातितः ।।१२९।।

**चट्टी–** शक्रार्थं शक्रसाहाय्यं कर्तुं उपागतं शिवं च शार्ङ्गविनिःसृतैः शरैः हरिः कृष्णः व्यद्रावयत् । शराहतः, श्रीकृष्णेनेति शेषः । सवाहनः नन्दिकेश्वरेण सहितः शम्भुः गरुत्मता गरुडेन दूरतरे निपातितः सन् अगात् ।। १२९ ।।

**विद्राविते बाणगणैश्च शौरिणा हरे हरौ वज्रमवासृजद् द्रुतम् ।**
**शक्रोऽग्रहीत् तं प्रहसन् जनार्दनः करेण वामेन स चापजग्मिवान्।।१३०।।**

**वरदराजीया–** हरे शिवे विद्राविते सति शक्रो हरौ कृष्णे वज्रं अवासृजत् । तं वज्रं वामेन करेण जनार्दनोऽग्रहीत् । स च शक्रो अपजग्मिवान् परावृत्य गतः ।। १३० ।।

**अनन्तभट्टीया–** शक्रः वज्रमेवासृजत् ।। १३० ।।

**जनार्दनीया–** शौरिणा हरे रुद्रे विद्राविते सति शक्रः हरौ वज्रमवासृजत् । वज्रेणाविध्यदित्यर्थः । तं वज्रम् । स चेन्द्रः अपजग्मिवान् परावृत्य ययौ ।। १३० ।।

**चट्टी–** शौरिणा श्रीकृष्णेन बाणगणैः हरे रुद्रे विद्राविते सति शक्रः हरौ श्रीकृष्णे वज्रं द्रुतं अवासृजत् । वज्रेणाविध्यदित्यर्थः । जनार्दनः श्रीकृष्णः प्रहसन् वामेन करेण तं वज्रमग्रहीत् । सः इन्द्रश्च अपजग्मिवान् परावृत्य ययौ ।। १३० ।।

**अपाहसत् तं जगदेकसुन्दरी हरिप्रियाऽथो जगदेकमातरम् ।**
**[१]उवाच शक्रो जगतां जनित्रे प्रदर्शयामो वयमात्मशैशवम् ।।१३१।।**

**वरदराजीया–** शक्रो जगतां जनित्रे कृष्णे आत्मशैशवं स्वबाल्यम् ।। १३१ ।।

**जनार्दनीया–** जनित्रे पित्रे कृष्णाय आत्मशैशवं स्वशिशुत्वम् ।। १३१ ।।

**चट्टी–** जगदेकसुन्दरी हरिप्रिया सत्या तं शक्रं अपाहसत् । अथानन्तरं शक्रः जगतामेकमातरं जगन्मुख्यमातरं उवाच । किमिति? जगतां जनित्रे श्रीकृष्णाय वयमात्मशैशवं स्वशिशुत्वं प्रदर्शयाम इत्युवाचेति सम्बन्धः ।। १३१ ।।

---

१. 'वत्सो यथा तनुबलः सकृदेत्य मातर्यूथस्यपानसमये कुरुते विरोधम् । तद्वद् वयं च निजशैशवमप्रमेये नाथे विरुध्य पिशिताशनि दर्शयामः ।।' इति भागवते- १०.६७.२२.

**जगाम चाथो शरणं जनार्दनं सुरैर्वृतो देवपतिः क्षमापयन् ।**
**शृङ्गं च दत्वा मणिपर्वतस्य प्रणम्य देव्या सहितं जगद्गुरुम् ॥१३२॥**

**वरदराजीया–** जनार्दनं शरणं जगाम । मणिपर्वतस्य रत्नमयपर्वतस्य शृङ्गं एकदेशविशेषम् ॥१३२॥

**जनार्दनीया–** शृङ्गं शिखरम् ॥१३२॥

**चट्टी–** अथो देवपतिरिन्द्रः सुरैः देवैः वृतस्सन् जनार्दनं क्षमापयन् सन् शरणं जगाम । मणिपर्वतस्य रत्नमयपर्वतस्य शृङ्गं शिखरञ्च दत्वा देव्या सत्यया सहितं जगद्गुरुं एनं केशवं प्रणम्य नत्वा ननाम इत्यर्थः ॥१३२॥

**[१]ययाच एनं परिरक्षणाय शचीपतिः केशवमर्जुनस्य ।**
**जगाद कृष्णोऽपि धरातलस्थिते न मय्यमुं कश्चन जेष्यतीति ॥१३३॥**

**मधुसूदनीया–** ॥ **जगाद कृष्णोऽपीति** ॥ उक्तश्च- 'नार्जुनस्य रिपुः कश्चिन्ममाग्रे प्रभविष्यति' इति हरिवंशे (२.१९.९९)। 'भारावतरणे साह्यं स ते वीरः करिष्यति' इति 'संरक्षणीयो भवता यथात्मा मधुसूदन । जानामि भारते वंशे जातं पार्थं तवांशतः ॥ तमहं पालयिष्यामि यावत्स्थास्यामि भूतले ॥' इति विष्णुपुराणे च (५.१३.१८-१९) ॥ १३३-१३८ ॥

**वरदराजीया–** अर्जुनस्य परिरक्षणाय ययाचे । 'अर्जुनः परिरक्षणीयः' इति प्रार्थितवान् इत्यर्थः । कृष्णः जगाद । मयि धरातले स्थिते सति अमुं अर्जुनं कश्चन पुरुषो न जेष्यति ॥ १३३ ॥

**अनन्तभट्टीया–** अर्जुनस्य परिरक्षणाय ॥१३३॥

**जनार्दनीया–** अर्जुनस्य परिरक्षणाय । मयि धरातले स्थिते सति अमुमर्जुनं न कश्चन जेष्यति ॥१३३॥

**चट्टी–** अर्जुनस्य परिरक्षणाय शचीपतिरिन्द्रः ययाचे । मयि धरातले स्थिते सति अमुं अर्जुनं कश्चन कोऽपि न जेष्यति इति श्रीकृष्णः जगाद । तदुक्तम्- 'नार्जुनस्य रिपुः कश्चित् ममाग्रे च भविष्यति ।' इति हरिवंशे । 'भारावतरणे साहाय्यं ते वीरः करिष्यति । स रक्षणीयो भवता यथात्मा मधुसूदन ॥ जानामि भारते वंशे जातं पार्थं तवांशतः । तमहं पालयिष्यामि यावत् स्थास्यामि भूतले ॥' इति विष्णुपुराणे च ॥१३३॥

**तमर्जुनार्थं वरमाप्य वासवः पुनःपुनश्चक्रधरं प्रणम्य ।**
**प्रसन्नदृष्ट्या हरिणाऽभिवीक्षितो ययौ महाभागवतः स्वमालयम् ॥१३४॥**

---

१. 'पुत्रो मे रक्षितव्यस्ते स्यालो बीभत्सुरित्यपि । भूयो भूयः प्रार्थयित्वा कृतानुज्ञः पुरन्दरः ॥ सार्धं सकलदिक्पालैः लब्धानुज्ञः पुरं ययौ ॥' इति भागवते ६८.३६-३७। प्रसङ्गमेतत् आदिपर्वणि अर्जुनं प्रति द्रोणवचनतयोपलभ्यते। १७१.२०.-३६.

**वरदराजीया–** अर्जुनार्थं तं वरमाप्य । स्वं स्वकीयमालयं अमरावतीम् ।।१३४।।

**जनार्दनीया–** तं वरम् । युद्धकर्ता इन्द्रो वरादिकं कथं प्राप्त इत्यत आह– **महाभागवत इति**।।१३४।।

**चट्टी–** महाभागवतः वासवः इन्द्रः अर्जुनार्थमर्जुनसंरक्षणार्थं तं वरमाप्य, पुनः पुनः चक्रधरं श्रीकृष्णं प्रणम्य हरिणा श्रीकृष्णेन प्रसन्नदृष्ट्याभिवीक्षितः सन् स्वमालयं अमरावतीं प्रति ययौ । 'पुनः पुनश्चक्रधरं प्रणम्य' इत्यत्र पूर्वं गोवर्धनपर्वतोद्धरणसमये इन्द्रेण अर्जुनरक्षणरूपवरस्य याचितत्वात् तदपेक्षया एकः पुनश्शब्दः । 'शृङ्गं च दत्वा मणिपर्वतस्य प्रणम्य देव्या सहितं जगद्गुरुम्' इत्यत्र नत्वा क्षमस्वेति याचितत्वात् तदपेक्षया द्वितीयपुनश्शब्दः ।। १३४ ।।

**कृष्णोऽप्यनुज्ञाप्य पुरन्दरं पुरीं निजां व्रजन्नभ्यधिकं व्यरोचत ।**
**किरीटधारी चलकुण्डलोल्लसन्मुखाम्बुजः पीतपटः सकौस्तुभः ।।१३५।।**

**वरदराजीया–** पुरन्दरमनुज्ञाप्य निजां पुरीं द्वारकां प्रति व्रजन् गच्छन् अभ्यधिकं अत्यन्तं व्यरोचत शुशुभे । चलकुण्डलाभ्यां उल्लसन्मुखाम्बुजं यस्य सः । पीतः पटो यस्य सः । सकौस्तुभः कौस्तुभेन सहितः ।।१३५।।

**जनार्दनीया–** अभ्यधिकं अत्यन्तं व्यरोचत रेजे । व्यरोचनं दर्शयति– **किरीटेत्यादिना** ।।१३५।।

**चट्टी–** किरीटधारी चलकुण्डलाभ्यामुल्लसन्मुखाम्बुजं यस्य सः । पीतपटः पीताम्बरधारी कौस्तुभेन मणिना सहितः सकौस्तुभः श्रीकृष्णोऽपि पुरन्दरमिन्द्रमनुज्ञाप्य निजां पुरीं द्वारकां व्रजन् गच्छन् अभ्यधिकम् अत्यन्तं व्यरोचत रेजे ।। १३५ ।।

**विरोचमानस्य सदा जगत्प्रभोर्न वै विशेषः कचिदच्युतस्य ।**
**तथाऽपि तत् स्मारयितुं वचो भवेदपेक्ष्य[१] चाल्पज्ञमतिं पुराणगम्।।१३६।।**

**व्यासतीर्थीया–** 'अधिकं व्यरोचत' इत्युक्तिः कथम्? सदा भगवतो विरोचमानत्वात् इति । सत्यम्, तथापि यथा पुराणेषूक्तमिति भावेन पुराणोक्तेस्तात्पर्यमाह– **विरोचमानस्येति** ।। अल्पज्ञमतिं चापेक्ष्येति निमित्तान्तरम् ।।१३६-१४६।।

**वेदाङ्गतीर्थीया–** सदा विरोचनमानत्वेऽपि पुराणानां तद् वचः भगवानरोचत इति वचः अल्पज्ञमतिमपेक्ष्य भवेत् । तत् सदा विरोचमानत्वं स्मारयितुं विक्षिप्तचेतसां मह(त्त्व)ज्ञानिनां स्मारयितुं च भवेत् ।। १३६-१३८ ।।

**वादिराजतीर्थीया–** 'तथाऽपि तत् स्मारयितुम्' इत्यत्र अल्पज्ञमतिमवेक्ष्य यत्पुराणगं वचः तत्स्मारयितुं तत् कदाचित्कदाचित् विशेषदर्शनं भवेदिति योजना ।। १३७-१४८ ।।

---

१. 'अवेक्ष्य' इति चट्टीपाठः ।

**वरदराजीया–** अधिकं व्यरोचत इत्यस्य तात्पर्यमाह– **विरोचमानस्येति** ।। सदा विरोचमानस्य शोभमानस्य कचित् कालस्य न विशेषः । यद्यपि तथापि तत् सदा व्यरोचमानं स्मारयितुं व्यरोचतेति वचो वचनं पुराणगं भवेत् । अल्पज्ञानां मतिं चापेक्ष्य भवेदित्यर्थः ।।१३६।।

**अनन्तभट्टीया–** व्यरोचयत् इति पुराणोक्त्यनुवादरूपस्यानुपपत्तिपूर्वकं तात्पर्यमाह– **अल्पज्ञमतिमिति** ।। अल्पज्ञमपेक्ष्येति निमित्तान्तरम् ।। १३६ ।।

**जनार्दनीया–** सदा विरोचमानस्य अच्युतस्य कचित्काले न वै विशेषः । तथापि तद्विरोचमानत्वं स्मारयितुं अल्पज्ञमतिं अपेक्ष्य, पुराणगं वचो भवेत् ।। १३६ ।।

**चट्टी–** 'अधिकं व्यरोचत' इत्यस्य तात्पर्यमाह– **विरोचमानस्येति** ।। सदा विरोचमानस्य शोभमानस्य जगतां प्रभोः अच्युतस्य श्रीकृष्णस्य कचित् काले विशेषो नास्ति । यद्यपि तथापि तद्व्यरोचनं स्मारयितुं अल्पज्ञमतिमल्पज्ञानां मतिं चावेक्ष्य पुराणगं पुराणस्थं व्यरोचत इत्यादिवचः भवेत् ।।१३६।।

**प्रविश्य चेशः स्वपुरीं स यादवैः सुपूजितोऽन्तःपुरमेत्य चाङ्गणे ।**
**[1]तरुं प्रियाया न्यदधाद् गृहस्य सहैव शृङ्गेण च रत्नसद्गिरेः ।।१३७।।**

**वरदराजीया–** स्वपुरीं प्रविश्य अन्तःपुरमेत्य प्रियायाः सत्यभामायाः गृहस्याङ्गणे रत्नसद्गिरेः शृङ्गेण सहैव न्यधात् स्थापयामास ।। १३७ ।।

**अनन्तभट्टीया–** प्रियायाः गृहस्याङ्कणे । रत्नसद्गिरेः शृङ्गेण सह ।। १३७-१३८ ।।

**जनार्दनीया–** सः ईशः पुरीं प्रविश्य, यादवैः सुपूजितः सन्, अन्तःपुरमेत्य ।।१३७।।

**ताम्रपर्णीया–** ।। **सहैव शृङ्गेणेति** ।। रत्नपर्वतस्तु इन्द्राय कृष्णेन प्रागेव दत्त इति भावः । तथा च भागवते 'शक्राय प्राहिणोद् भूयः केशवो मणिपर्वतम्' (१०.६४.१५) इति ।। १३७-१४४ ।।

**चट्टी–** ईशः सः श्रीकृष्णः स्वपुरीं च प्रविश्य यादवैः सम्पूजितस्सन् अन्तःपुरमेत्य प्रियायाः सत्यभामायाः गृहस्याङ्गणे रत्नसद्गिरेः शृङ्गेण च सहैव तरुं पारिजातवृक्षं न्यदधात् ।। १३७ ।।

**प्रदाय रत्नानि च[2] सर्वसात्त्वतां यथेष्टतस्ता अपि कन्यकाः प्रभुः ।**
**उद्वाह रेमे पृथगेव रत्नप्रासादसंस्थाभिरनन्तरूपः ।।१३८।।**

---

१. 'संवत्सरं ततो याते केशिहाऽमरसत्तमः । पारिजातं पुनः स्वर्गं आनयत् सर्वभावनः ।।'इति विष्णुपर्वणि-७६.२६

२. 'निमन्त्रिता गणाः सर्वे केशवेन महात्मना । विभूतिं पारिजातस्य ददृशुः कुरुनन्दन । पाण्डवांश्चानयामास सहैव पृथया हरिः ।। द्रौपद्या च महातेजा तथैव च सुभद्रया ।' इति विष्णुपर्वणि-७६.२२-२३.

**वरदराजीया–** यथेष्टतः प्रदाय । रत्नप्रासादसंस्थाभिः शतोत्तरषोडशसहस्रसङ्ख्याकाः प्रासादेषु पृथक्पृथक् विद्यमानाभिः रेमे । अतोऽनन्तरूप इत्यर्थः ।। १३८ ।।

**लघ्वनन्तभट्टीया–** *..हेति ।। **अनन्तरूप इति** ।। तथाच शताधिकषोडशसस्त्रीरूपत्वं नाश्चर्यमिति भावः ।। १३८-२४४ ।।

**जनार्दनीया–** पृथक्प्रासादसंस्थाभिः भिन्नभिन्नप्रासादेषु संस्थाभिः ।।१३८।।

**चट्टी–** प्रभुः श्रीकृष्णः सर्वसात्वतां समस्तयादवानां च यथेष्टतः रत्नानि प्रदाय ताः पूर्वोक्ताः कन्यकाः राजकन्यका अपि उद्वाह्य पृथगेव रत्नप्रासादसंस्थाभिः भिन्नभिन्नप्रासादेषु स्थिताभिः शतोत्तरषोडश-सहस्रसङ्ख्याभिः रेमे । यतोऽनन्तरूप इत्यर्थः।। १३८ ।।

**[1]पृथक्पृथक् तासु दशैव पुत्रकानधत्त[2] कन्यामपि सर्वशः प्रभुः ।**
**प्रद्युम्नसाम्बावपि भानुचारुदेष्णौ च तेषां नितरां गुणाधिकाः ।।१३९।।**

**वेदाङ्गतीर्थीया–** एकैकस्यां एकां कन्यां सर्वशः सर्वासु ।। १३९ ।।

**मधुसूदनीया–** ।। **तेषां नितरामिति** ।। 'तेषामुद्दामवीर्याणामष्टादशमहारथाः । आसन्नुदारयशसः तेषां नामानि मे शृणु ।। प्रद्युम्नश्चारुदेष्णश्च दीप्तिमान् भानुरेव च । साम्बमित्रो बृहद्भानुः भानुविन्दो वृकोऽरुणः ।। पुष्करो देवभानुश्च शुभदेवस्सुनन्दनः । चित्रभानुर्वीरुघश्च कविर्न्यग्रोध एव च । त्रिवक्रायां विशोकश्च ।।' इत्यादि हरिवंशे (भागवत.१०.१०३.१८-२१)। तथा च कृष्णपुत्राणां मध्ये अष्टादश प्रधानाः । तेषामपि प्रद्युम्नसाम्बभानुचारुदेष्णाः प्रधाना इति भावः ।। १३९-१४९ ।।

**वरदराजीया–** तासु भार्यासु पृथक् पृथक् एकैकस्यां दश दश इत्यर्थः । सर्वशः सर्वासु कन्यासु एकैकं अधात् जनयामासेत्यर्थः । तेषां पुत्राणां मध्ये प्रद्युम्नादयो नितरां गुणैः अधिकाः ।। १३९ ।।

**अनन्तभट्टीया–** पृथक् पृथक् एकैकस्यां दश दश पुत्रकान् एकां कन्यां अधत्त जनयामास ।।१३९।।

**जनार्दनीया–** पृथक् पृथक् एकैकस्यामेव दश दश पुत्रकान्, एकैकां कन्यां सर्वशोऽपि सर्वास्वपि न्यधत्त जनयामास ।।१३९।।

**चट्टी–** प्रभुः कृष्णः पृथक् पृथक् एकैककन्यायामेव दश दश पुत्रकान् एकैककन्यां च सर्वशोऽपि सर्वानपि अधत्त जनयामास । तेषां कुमाराणां मध्ये प्रद्युम्नसाम्बावपि भानुचारुदेष्णौ च नितरां गुणाधिकाः। [3]'तेषामुद्दामविद्यानामष्टादशमहारथाः । आसन्नुदारयशसस्तेषां नामानि मे श्रुणु ।।

---

१. भागवत १०.७६.७-१९.

२. 'पुत्रकान् न्यधत्त' इति जनार्दनीयपाठः ।

३. चट्टीटिप्पण्यां मधुसूदनीयापेक्षया हरिवंशपाठे व्यत्यासो वर्तते ।

प्रद्युम्नश्चारुदेष्णश्च दीप्तिमान् भानुरेव च । साम्बमित्रौ बृहद्भानुः भानुविन्दो वृकोऽरुणः ।। पुष्करो देवभानुश्च शृतदेवः सुनन्दनः । चित्रबाहुर्वरूथश्च कविर्न्यग्रोध एव च ।। त्रिवक्रायां विशोकश्च ।' इत्यादि हरिवंशे । तथा च कृष्णपुत्राणां मध्ये अष्टादशप्रधानाः । तेषामपि प्रद्युम्नसाम्बभानुचारुदेष्णाः प्रधाना इति भावः ।।१३९।।

**विवस्वतो योऽवरजोऽदितेः सुतः ख्यातश्च नाम्ना सवितेति कृष्णात् ।**
**जातः स सत्याजठरेऽत्र नाम्ना भानुस्तु भैष्म्या अपि चारुदेष्णः ।।१४०।।**

**वेदाङ्गतीर्थीया–** प्रद्युम्नसाम्बयोः स्वरूपस्य पूर्वमुक्तत्वात् भानुचारुदेष्णयोः स्वरूपमाह– **विवस्वत इत्यादिना** ।। चारुदेष्णोऽपि भैष्मीजठरतः ।।१४०-१४२।।

**वरदराजीया–** प्रद्युम्नसाम्बयोः स्वरूपं निरूपितम् । भानुचारुदेष्णयोः स्वरूपं निरूपयति– **विवस्वत इति** ।। विवस्वतः सूर्यस्यावरजः अनुजः अदितेः सुतः नाम्ना सवितेति ख्यातः प्रसिद्धः यः सत्याया उदरे कृष्णाज्जातश्च अभूत् । नाम्ना भानुः भैष्म्या रुक्मिण्या अपि पुत्रश्च चारुदेष्णो जातः ।। १४० ।।

**अनन्तभट्टीया–** सः अदितेः सुतः सवितेति ख्यातः नाम्ना भानुः कृष्णेन जातः ।। १४० ।।

**जनार्दनीया–** प्रद्युम्नसाम्बौ कामकार्तिकेयाविति आवेशपूर्वकं स्वरूपस्य पूर्वोक्तत्वात् भानु-चारुदेष्णयोः स्वरूपमाह– **विवस्वत इत्यादिना** ।। यः विवस्वतः सूर्यस्य अवरजः अदितेः सुतः नाम्ना सवितेति ख्यातः प्रसिद्धः । स कृष्णात् सत्याजठरे सत्यभामायाः उदरे जातः । अत्र कृष्णपुत्रत्वे नाम्ना भानुः भैष्म्या अपि रुक्मिण्या अपि पुत्रो नाम्ना चारुदेष्णो जातः ।।१४०।।

**चट्टी–** प्रद्युम्नसाम्बयोः स्वरूपं निरूपितम् । भानुचारुदेष्णयोः स्वरूपं निरूपयति– **विवस्वत इत्यादिना** ।। यो विवस्वतः सूर्यस्य अवरजः अदितेः सुतः नाम्ना सवितेति ख्यातः प्रसिद्धश्च सः श्रीकृष्णात् सत्याजठरे सत्यभामायाः उदरे जातः । अत्र कृष्णपुत्रत्वे नाम्ना भानुः भैष्म्याः रुक्मिण्याः अपि पुत्रः नाम्ना चारुदेष्णो जातः ।।१४०।।

**स चारुदेष्णोऽपि हि विघ्नराजो येऽन्ये च कृष्णस्य सुताः समस्ताः ।**
**ते चैव[1] गीर्वाणगणास्तथाऽन्ये ये द्वारकायां निवसन्ति सर्वे ।।१४१।।**

**वरदराजीया–** सः चारुदेष्णोऽपि पूर्वं विघ्नराजो गणेशः । ये अन्ये कृष्णस्य सुताः ते च समस्ताः गीर्वाणगणा एव । तथान्ये ये द्वारकायां निवसन्ति ते सर्वेऽपि गीर्वाणगणा एवेत्यर्थः ।। १४१ ।।

**जनार्दनीया–** सः चारुदेष्णोऽपि पूर्वं विघ्नराजः गणेशः । येऽन्ये सुताः ते गीर्वाणगणाः देवा इत्यर्थः। ये द्वारकायां निवसन्ति तेऽपि गीर्वाणगणा एव ।।१४१।।

---

१. 'ते चापि' इति अनिविशदकागणां पाठः ।

**अतिविशद–** 'ते चापि गीर्वाणगणास्तथाऽन्ये ये द्वारकायां निवसन्ति सर्वे' इत्यत्र द्वारकानिवासिनां सर्वेषां गीर्वाणगणत्वमुच्यते । तदनुपपन्नम् । कृतवर्मणो अनुजस्य शतधन्वनः असुरत्वादिति चेन्न । ये द्वारकायां निवसन्ति ते गीर्वाणगणा इत्युत्सर्गः । पूर्वदेहे दैत्यो यतः तदाकार इति बाधस्योक्तत्वादिति ध्येयम् ।। १४१-१४९।।

**गूढवाक्यार्थविवृतिः–** 'ते चैव गीर्वाणगणास्तथाऽन्ये ये द्वारकायां निवसन्ति सर्वे' इत्यत्र द्वारकानिवासिनां सर्वेषां गीर्वाणगणत्वमुच्यते । तदनुपपन्नम् । कृतवर्मणोऽनुजस्य शतधन्वनः असुरत्वादिति चेन्न । ये द्वारकायां निवसन्ति ते गीर्वाणगणा इत्युत्सर्गः ।।१४१-२४४।।

।। इति गूढवाक्यार्थविवृतौ त्रिंशोऽध्यायः ।।

**चट्टी–** सः चारुदेष्णोऽपि पूर्वं विघ्रराजः । ये अन्ये श्रीकृष्णस्य सुताः समस्ताः ते च गीर्वाणगणाः देवा इत्यर्थः । तथा अन्ये ये द्वारकायां निवसन्ति ते सर्वेऽपि गीर्वाणगणा एव ।।१४१।।

**तस्यां समस्तैरभिपूज्यमाने देवैः स्वपुर्यां निवसत्यनन्ते ।**
**ययौ कदाचित् स तु रौक्मिणेयः साम्बेन सार्धं भुजगेन्द्रलोकम् ।।१४२।।**

**वरदराजीया–** तस्यां स्वपुर्यां द्वारकायां समस्तैः देवैः अनन्ते निवसति सति रौक्मिणेयः प्रद्युम्नः साम्बेन सार्धं भुजगेन्द्रलोकं नागलोकं ययौ ।। १४२ ।।

**जनार्दनीया–** तस्यां स्वपुर्याम् । रौक्मिणेयः प्रद्युम्नः ।।१४२।।

**चट्टी–** समस्तैः देवैरभिपूज्यमाने अनन्ते श्रीकृष्णे तस्यां स्वपुर्यां द्वारकायां निवसति सति सः रौक्मिणेयः प्रद्युम्नः साम्बेन सार्धं कदाचिद् भुजगेन्द्रलोकं नागलोकं ययौ ।। १४२ ।।

**[1]अज्ञानतस्तैरभियोधितः स जिगाय सर्वानपि वासुकिं च ।**
**विद्राव्य बाणैरथ रत्नसञ्चयान् समाददे नेमुरमुं ततस्ते ।।१४३।।**

**वेदाङ्गतीर्थीया–** अज्ञानतः कृष्णपुत्रावित्यज्ञानात् ।। १४३ ।।

**वरदराजीया–** अज्ञानतो निमित्ततो नागैः अभियोधितः युद्धं प्रापितः सर्वानपि जिगाय । वासुकिं च नागं बाणैर्विद्राव्य । अमुं प्रद्युम्नं ते नागाः ।। १४३ ।।

**जनार्दनीया–** अज्ञानतः कृष्णपुत्राविमाविति अज्ञानात् । तैर्भुजङ्गैः । ततः पराभवानन्तरं ते नागाः अमुं प्रद्युम्नं नेमुः ।।१४३।।

---

१. 'एष भोगवतीं गत्वा वासुकिं भरतर्षभ । निर्जित्य पुण्डरीकाक्षो रौक्मिणेयममोचयत् ।। एवं बहूनि कर्माणि शिशुरेव जनार्दनः । कृतवान् पुण्डरीकाक्षः सङ्कर्षणसहायवान् ।।' सभापर्वणि-६१.२३-२४.

**चट्टी–** अज्ञानतः श्रीकृष्णपुत्राविमाविति अज्ञानात् । तैर्भुजङ्गैरभियोधितः युद्धं प्रापितः सः प्रद्युम्नः सर्वान् नागान् जिगाय । वासुकिं च बाणैः विद्राव्य, अथ रत्नसञ्चयान् रत्नसमूहान् समाददे । ततः पराभवानन्तरं ते नागाः अमुं प्रद्युम्नं नेमुः ।। १४३ ।।

**[1]तैः पूजितः साम्बसहाय आशु [2]मयं च मायाविनमस्त्रवर्षैः ।**
**विजित्य रुन्धानमनेन पूजितो ययौ रथेनाम्बरगेन नाकम् ।।१४४।।**

**वेदाङ्गतीर्थीया–** मायाविनं रुन्धानं मयं च अस्त्रवर्षैः विजित्य अनेन मयेन पूजितः ।।१४४।।

**वरदराजीया–** तैर्नागैः रुन्धानं मार्गे प्रतिरुद्धानां मयं च विजित्यानेन मयेन अम्बरगेन रथेन नाकं स्वर्गम् ।।१४४।।

**अनन्तभट्टीया–** रुन्धानं मयं रौक्मिणेयः प्रद्युम्नः ।।१४४।।

**जनार्दनीया–** मायाविनं रुन्धानं मार्गरोधकं मयं च अस्त्रवर्षैः विजित्य, अनेन मयेन पूजितः ।।१४४।।

**चट्टी–** साम्बः सहायो यस्य स तथा । प्रद्युम्नः तैः नागैः पूजितः सन् रुन्धानं मार्गरोधनं कुर्वाणं मायाविनं मयं च आशु अस्त्रवर्षैः विजित्य अनेन मयेन पूजितः सन् अम्बरगेन रथेन नाकं स्वर्गं प्रति ययौ ।। १४४ ।।

**तत्रैव कृष्णेन तु पारिजाते हृते जयन्तं प्रजिगाय चाऽऽजौ ।**
**[3]संस्पर्धयाऽऽयातममुष्य चानुजं साम्बोऽजयद् वृषभं नाम शस्त्रैः ।।१४५।।**

**वेदाङ्गतीर्थीया–** तत्र नाके कृष्णेन पारिजाते हृत एव । निमित्तसप्तमी । हृतत्वान्निमित्तादेव । संस्पर्धया तु संस्पर्धयैव । आयातं जयन्तं प्रद्युम्नोऽजयत् । अमुष्य जयन्तस्य अनुजम् ।।१४५।।

**सत्याभिनवतीर्थीया–** तत्रैव 'तत्रैव कृष्णेन तु पारिजाते..' इति श्लोकः । तस्यार्थः- प्रद्युम्नः कृष्णेन पारिजाते अपहृते सति तु विशेषतः जातया स्पर्धया युक्तं अत एव युद्धाय आयान्तं जयन्तं, तत्रैव स्वर्ग

१. हरिवंशे विष्णुपर्वणि- ७६.२९-३८.

२. 'तथेत्येवाब्रवीत् कृष्णस्ततो मातरमात्मवान् । आमन्त्रयित्वा पितरौ देवराजानमब्रवीत् ।। वासुदेवो महातेजाः कालप्राप्तमिदं वचः । महादेवेन देवेश सन्दिष्टोऽस्मि महात्मना । अन्तर्भूमितले वध्यानसुरान् प्रति मानद ।। तदितो दशरात्रेण हन्ताऽहमसुरोत्तमान् । तत्रोपविष्टान् स्थातव्यं प्रवरेण महात्मना ।। जयन्तेन च वीरेण दानवानां जिघांसया । एकोऽत्र मानुषो देवो देवपुत्रस्तथा परः । अवध्याः किल ते देवैः ब्रह्मणो वरदर्पिताः। अस्माभिः किल हन्तव्या मानुषत्वमुपागतैः ।। तथेति कृष्णं स हरिः प्रीतरूपस्तथाब्रवीत् । सस्वजाते ततो देवानन्योन्यं जनमेजय ।।' हरिवंशे विष्णुपर्वणि- ७६.२९-३८.

३. 'सम्पर्धयाऽऽयान्तम्' इति सत्याभिनवतीर्थीय-वरदराजीयपाठः । 'संस्पर्धया यान्तम्' इति ताम्रपर्णीय-चट्टीपाठः ।

एव आजौ युद्धे प्रजिगाय च प्रकर्षेण जिगाय च । साम्बश्च अमुष्य जयन्तस्य अनुजं वृषभं शस्त्रैः अजयत् इति इत्येतत् नाम प्रसिद्धमित्यर्थः । एतेन प्रद्युम्नकर्तृकस्वर्गकर्मकगमनात् पूर्वमेव कृष्णकर्तृकपारिजातहरणस्य तन्निमित्तकजयन्तस्पर्धायाश्च जातत्वात् प्रद्युम्नः स्वर्गं ययौ । कृष्णेन पारिजाते हृते सति स्पर्धया आयान्तं जयन्तं जिगायेति कथनमनुपपन्नमिति दूषणस्यानवकाशः । प्रद्युम्नगमनात् पूर्वमेव पारिजातहरणेन जातया स्पर्धया युक्तं जयन्तं प्रद्युम्नस्वर्गगमनान्तरं जिगाय इत्येवोच्यते इति स्वीकरणात् । एतेनैव च शब्दो व्यर्थ इति दूषणं निरस्तम् । न केवलं प्रद्युम्नः स्वर्गं ययौ, जिगाय चेति वक्तुं चशब्द इत्यभ्युपगमात् । एतेनैव वृषभं नाम इत्येतदनन्वितमिति दूषणं परास्तम् । इत्येतदित्यस्याध्याहारेणान्वयस्योक्तत्वात् ॥ १४५-१४६ ॥

**वरदराजीया—** तत्र नाके आजौ युद्धे जयन्तमिन्द्रसुतं कृष्णेन पारिजाते हृते इति स्पर्धया तन्निमित्तस्पर्धया आयान्तं प्रतिजिगाय । अमुष्य जयन्तस्य अनुजं वृषभं नाम प्रसिद्धं साम्बोऽजयत् ॥१४५॥

**अनन्तभट्टीया—** तत्रैव नाक एव ॥ १४५ ॥

**जनार्दनीया—** तत्र नाके कृष्णेन पारिजातेऽपहृत एव, निमित्तसप्तमी । हृतत्वान्निमित्तादेव । संस्पर्धया तु स्पर्धयैव आयातं जयन्तं प्रद्युम्नः अजयत् । अमुष्य जयन्तस्य अनुजं वृषभं नाम साम्बोऽजयत्॥१४५॥

**ताम्रपर्णीया—** कृष्णेन पारिजाते हृते तन्निमित्तकसंस्पर्धया यान्तं जयन्तमिति सम्बन्धः॥१४५-१४६॥

**भावचन्द्रिका—** संस्पर्धया..* योषिता प्राक् पारिजातं हृतवानिति यावत् ॥१४५॥

**चट्टी—** तत्र नाके श्रीकृष्णेन पारिजाते हृते सति संस्पर्धया तन्निमित्तस्पर्धयैव यान्तं जयन्तं आजौ युद्धे प्रद्युम्नः प्रजिगाय । अमुष्य जयन्तस्य अनुजं वृषभं नाम प्रसिद्धं साम्बः शस्त्रैरजयत् ॥१४५॥

**अस्त्राणि [1]तावस्त्रवरैर्निहत्य तयोश्च ताभ्यां प्रतिदग्धयानौ ।**
**विद्राव्य तौ बाणवरैः सुरेन्द्रसम्पूजितौ ययतुर्वियया खे ॥१४६॥**

**वेदाङ्गतीर्थीया—** तौ प्रद्युम्नसाम्बौ । तयोः जयन्तवृषभयोः अस्त्राणि निहत्य निवार्य ताभ्यां जयन्त-वृषभाभ्यां प्रतिदग्धयानौ ॥१४६-१४८॥

**सत्याभिनवतीर्थीया—** तदनन्तरमेव 'अस्त्राणि तावस्त्रवरैर्निहत्य..' इति श्लोके 'ययतुर्वियया खे' इत्यस्य खे आकाशमार्गे वियया वियासामर्थ्येन ययतुरित्यर्थः । एतेन स्वमार्गेण ययतुरिति वक्तव्यम् । खे ययतुरिति कथनमनुपपन्नमिति चोद्यं प्रत्युक्तम् । खशब्देन स्वमार्गग्रहणम् । खे इति सप्तमी तृतीयादेश इति चाङ्गीकृत्य खमार्गेण ययतुरित्यर्थस्योक्तत्वात् ॥ १४६-१४८ ॥

---

१. 'तावस्त्रवर्षैः' इति चट्टीपाठः ।

**वरदराजीया–** तौ प्रद्युम्नसाम्बौ तयोः जयन्तवृषभयोः अस्त्राणि निहत्य परिहृत्य ताभ्यां इन्द्रसुताभ्यां प्रतिदग्धयानौ कृष्णसुतौ इन्द्रसुतौ कर्मभूतौ विद्राव्य सुरेन्द्रसम्पूजितौ सन्तौ विद्यया आकाशारोहण-विद्यया ।।१४६।।

**अनन्तभट्टीया–** तयोः इन्द्रपुत्रयोः अस्त्राणि । ताभ्यां इन्द्रपुत्राभ्याम् । प्रतिदग्धयानौ ।। १४६ ।।

**जनार्दनीया–** तौ प्रद्युम्नसाम्बौ तयोः जयन्तवृषभयोः अस्त्राणि अस्त्रवरैः निहत्य निवार्येत्यर्थः । ताभ्यां जयन्तवृषभाभ्यां प्रतिदग्धयानौ प्रद्युम्नसाम्बौ तौ जयन्तवृषभौ बाणगणैः विद्राव्य, सुरेन्द्रसम्पूजितौ सन्तौ विद्यया खे आकाशे ययतुः ।।१४६।।

**चट्टी–** तौ प्रद्युम्नसाम्बौ तयोः जयन्तवृषभयोः अस्त्राण्यस्त्रवर्षैः निहत्य निवार्येत्यर्थः । ताभ्यां जयन्तवृषभाभ्यां प्रतिदग्धयानौ सन्तौ इन्द्रसुतौ कर्मभूतौ बाणवर्षैः विद्राव्य सुरेन्द्रसम्पूजितौ सन्तौ विद्यया खे आकाशे ययतुः ।।१४६।।

**स विद्यया साम्बमुदूह्य रत्या प्रदत्तया रुक्मिणिनन्दनः पुरीम् ।**
**ययौ ततो नारद आगमद् द्रुतं ज्ञातुं हरेर्बहुभार्यासु वृत्तिम्[1] ।।१४७।।**

**व्यासतीर्थीया–** 'द्रुतमागमत्' इति दर्शनलोलुपत्वं सूचयति ।। १४७-१४८ ।।

**वरदराजीया–** साम्बं उदूह्य स्कन्धे निधाय स्वं पुरीं द्वारकां ययौ । ततः तदनन्तरं वृत्तिं वर्तनप्रकारं ज्ञातुं अगमत् ।। १४७ ।।

**जनार्दनीया–** ननु साम्बस्य आकाशारोहणविद्याया अभावात् कथं विद्यया ययतुरित्यत आह– **स विद्ययेति** ।। स रुक्मिणिनन्दनः साम्बं उदूह्य स्कन्धेन ऊढ्वा, रत्या प्रदत्तया विद्यया परशुरामदैवतविद्यया पुरीं द्वारकां प्रति ययौ । अतः विद्यया आकाशगमनमुभयोरुपपन्नमिति भावः । ततः प्रवृत्तिं वर्तनम् ।।

**ताम्रपर्णीया–** 'नारद आगमद् द्रुतम्' इति दर्शने लोलुपत्वं सूचयति ।। १४७-१४८ ।।

**चट्टी–** सः रुक्मिणीनन्दनः साम्बमुदूह्य स्कन्धेन ऊढ्वा, रत्या रतिदेव्या प्रदत्तया विद्यया परशुरामदैवतविद्यया पुरीं प्रति ययौ । अतः विद्यया आकाशगमनमुभयोरुपपन्नमिति भावः । ततस्तदनन्तरं नारदः हरेः श्रीकृष्णस्य बहुभार्यासु वृत्तिं वर्तनं ज्ञातुं द्रुतमागमत् ।।१४७।।

**तं व्यष्टसाहस्रगृहेषु दृष्ट्वा तावत्स्वरूपैर्विहरन्तमेकम् ।**
**सुविस्मितः प्रययौ तं प्रणम्य शक्रप्रस्थं पूजितश्चात्र पार्थैः ।।१४८।।**

---

१. 'प्रवृत्तिम्' इति जनार्दनीयपाठः ।

**वरदराजीया–** व्यष्टसहस्रेषु षोडशसहस्रेषु गृहेषु तावत्स्वरूपैः व्यष्टसहस्रकृष्णस्वरूपैः एकमेव विहरन्तं क्रीडन्तं दृष्ट्वा, सुविस्मितस्सन् शक्रप्रस्थं प्रययौ । अत्र इन्द्रप्रस्थे ।। १४८ ।।

**जनार्दनीया–** सहस्रं परिमाणं येषां तानि सहस्राणि, तानि च तानि गृहाणि च व्यष्टगुणितानि साहस्रगृहाणि तेषु । तावत्स्वरूपैः शतोत्तरषोडशसहस्रस्वरूपैः । अत्र शक्रप्रस्थे ।।१४८।।

**चट्टी–** सहस्रपरिमाणमेषामस्तीति सहस्राणि सहस्राणि च तानि गृहाणि च सहस्रगृहाणि व्यष्टगुणितानि सहस्रगृहाणि च व्यष्टसहस्रगृहाणि तेषु । तावत्स्वरूपैः शतोत्तरषोडशसहस्रस्वरूपैः विहरन्तं क्रीडन्तं एकमेव श्रीकृष्णं दृष्ट्वा, नारदः सुविस्मितः सन् तं श्रीकृष्णं प्रणम्य शक्रप्रस्थं प्रययौ । अत्र शक्रप्रस्थे पार्थैः पूजितः, अभूदिति शेषः ।। १४८ ।।

**स आज्ञया ब्रह्मण आह कृष्णां क्रमात् कर्तुं भीम एवैकसंस्थाम् ।**
**अन्या देवीः स्वापयित्वा शरीरे तस्या भारत्याः पूर्णभोगार्थमेव ।।१४९।।**

**व्यासतीर्थीया–** एका मुख्या संस्था यस्या सा एकसंस्था ।। १४९-१५१ ।।

**वेदाङ्गतीर्थीया–** क्रमात् कालक्रमात् । कृष्णां भीम एव एकसंस्थां केवलमेकसंस्थां कर्तुम् ।।१४९।।

**वादिराजतीर्थीया–** यद्यपि दिने दिने एकैकेन सम्भोगेऽपि भीमदिने अन्याः स्वापयित्वा सम्भोगे भारत्यास्तस्मिन् दिने सम्पूर्णभोगो भवति । तथाऽपि वत्सरमात्रं कृष्णाया एव सम्पूर्णं भोगं दातुं वत्सरकट्टलिकेति भावेनाऽऽह– **कृष्णां क्रमात् कर्तुं भीम एवैकसंस्थामिति** ।। १४९ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'स आज्ञया ब्रह्मण..' इति श्लोके 'भीम एवैकसंस्थाम्' इत्यस्य भीम एव भीमसमीप एव एकसंस्थाम् एकस्मिन् स्थाने, व्यवायस्थाने इति यावत् । सम्यक् स्थितामित्यर्थः । अनेन भीम एव संस्थाम् इत्यनेन पूर्णत्वात् एकशब्दो व्यर्थ इति दूषणं निरस्तम् । भीमसमीपमात्रस्थितत्वं व्यवायस्थाने एव न तु भोजनादिस्थाने इति वक्तुमेकशब्दः प्रयुक्त इत्यभ्युपगमात् ।। १४९ ।।

**वरदराजीया–** सः नारदो ब्रह्मणो चतुर्मुखस्याज्ञया आह, पाण्डवानिति शेषः । कृष्णां द्रौपदीं क्रमात् क्रमेण भीम एव एका मुख्या संस्थानं यस्याः सा तथाभूताम् । कर्तुं अन्याः पार्वत्यायाः शरीरे द्रौपदीशरीरे स्वापयित्वा स्वापं प्राप्य तस्याः भारत्याः तत्र स्थितायाः भारत्याः पूर्णभोगार्थं भीमेन साकं परिपूर्णभोगार्थं एव न तु प्रत्यवायपरिहारार्थमाहेति सम्बन्धः ।। १४९ ।।

**अनन्तभट्टीया–** एकसंस्थां एका मुख्या संस्था यस्या इति विग्रहः ।। १४९ ।।

**जनार्दनीया–** स नारदः क्रमाद्भीम एव केवलमेकसंस्थां एकत्वेन संस्था यस्याः सा ताम्, मुख्यत्वेन स्थितां कृष्णां द्रौपदीं कर्तुमाह, पार्थानिति शेषः । शरीरे कृष्णाशरीरे तस्याः भारत्याः कृष्णादेहस्थभारत्याः पूर्णभोगार्थमेव । भीमेन, साकमिति शेषः । न तु दोषवुद्ध्या आहेति सम्बन्धः । युधिष्ठिराद्याविष्टवायोर्भोगं हित्वा भीमेनैव अनुदिनं भोगार्थमिति भावः ।।१४९।।

**ताम्रपर्णीया–** एका मुख्या संस्था यस्याः सा एकसंस्था ताम् । यद्वा एकसंस्थां केवलसंस्थाम् ।।१४९।।

**चट्टी–** कृष्णां द्रौपदीं क्रमाद्भीम एवैकसंस्थां एका मुख्या संस्था स्थितिः यस्या सा तथाभूताम्, कर्तुं अन्याः पार्वत्याद्याः देवीः शरीरे द्रौपदीशरीरे स्वापयित्वा स्वापं प्रापयित्वा तस्याः तत्र स्थितायाः भारत्याः पूर्णभोगार्थं भीमेन साकं परिपूर्णभोगार्थमेव न तु प्रत्यवायपरिहारार्थं सः नारदः ब्रह्मणः आज्ञया आह, पाण्डवानिति शेषः । युधिष्ठिराद्याविष्टवायोः भोगं हित्वा भीमेनैवानुदिनं भोगार्थमिति भावः ।।१५०।।

**[1]सुन्दोपसुन्दौ भ्रातरौ ब्रह्मवाक्यात् परस्परादन्यतो नैव वध्यौ ।**
**तिलोत्तमार्थे निहतौ परस्परं [2]तयोर्वधार्थे सृष्टया तेन दैत्यौ ।।१५०।।**

**वेदाङ्गतीर्थीया–** भ्रातरौ सुन्दोपसुन्दौ । तेन ब्रह्मणा ।। १५० ।।

**वादिराजतीर्थीया–** 'तयोर्वधार्थे सृष्टया' इत्यत्र तयोर्वधार्थं तेन ब्रह्मणा सृष्टया तिलोत्तमया मोहितौ सन्ताविति योग्यपदाध्याहारेण योजना ।।१५०।।

**सत्याभिनवतीर्थीया–** तत्रैव 'तिलोत्तमार्थे निहतौ परस्परं..' इत्यस्ति । तस्यार्थः- दैत्यौ सुन्दोपसुन्दौ तिलोत्तमार्थे परस्परं निहतौ इत्युक्तं विवृणोति– **तयोरिति** ।। तयोः सुन्दोपसुन्दयोः वधार्थे तेन ब्रह्मणा सृष्टया तिलोत्तमया मोहितौ दैत्यौ सुन्दोपसुन्दौ परस्परं निहतावित्यर्थः । एतेन तयोः वधार्थं तेन सृष्टयेत्येतत् तिलोत्तमार्थे इत्यनेन पुनरुक्तमिति दूषणं निरस्तम् । दैत्यावित्यादेरावृत्तिं मोहितावित्यस्य शेषं चाभ्युपगम्य तिलोत्तमा का कथं तस्याः परस्परं मरणहेतुत्वम् इत्याशङ्कापरिहारार्थं तिलोत्तमार्थे इत्युक्तस्यैव विवरणं 'तिलोत्तमार्थे तेन सृष्टया' इत्यनेन क्रियते इत्यभ्युपगमात् ।। १५०-१५५।।

**मधुसूदनीया–** ।। **सुन्दोपसुन्दाविति** ।। वरदराजाचार्यास्तु 'ब्रह्मवाक्याद्वररूपात् परस्परादन्यतः अन्यस्मात् पुरुषादपि वध्यौ नैव' इति व्याचक्षते । तच्चिन्त्यम् । 'निहतौ परस्परम्' इत्युत्तरवचनविरोधात् । [3]'आवयोस्तु महाभाग शत्रुभागात्परस्परम् । परमेष्ठिनो... मृत्युरन्यदा तु भविष्यति ।। परस्परकृताद्भेदात् मृत्युरेवास्तु नौ प्रभो ।' 'त्रिषु लोकेषु यद्भूतं सर्वं स्थावरजङ्गमम् ।। सर्वस्मान्नो भयं न स्यात् ऋतेऽन्योन्यं पितामह । ब्रह्मोवाच- यत्प्रार्थितं यथोक्तश्च नूनमेतद्ददामि वाम् । मृत्योर्विधानमेतच्च यथावद्वां भविष्यति ।।' इति आदिपर्वविरोधाच्च (२२९.२४-२५) । तस्मादयमर्थः । सुन्दोपसुन्दौ भ्रातरौ ब्रह्मवाक्यात् अन्यतः अन्यस्मात् पुरुषात् नैव वध्यौ परस्परादन्योन्यं वध्यौ तिलोत्तमार्थे परस्परं निहतौ ।

---

१. 'हिरण्यकशिपोः पुत्राश्चत्वारस्तु महाबलाः । प्रह्लादः पूर्वजस्तेषामनुह्लादस्तथैव च । संह्लादश्च ह्रदश्चैव ह्रदपुत्रान्निबोधत । ह्रादो निसुन्दश्च तथा ह्रदपुत्रौ बभूवतुः । सुन्दोपसुन्दौ विक्रान्तौ निसुन्दतनयावुभौ ।।' वायुपुराणे-अध्याय-७०-७३, तथा आदिपर्वणि अध्याय-२३२.

२ 'तयोर्वधार्थेऽसृष्ट या तेन' इति ताम्रपर्णीयपाठः ।

३. उपलभ्यमानपाठे सार्धश्लोकपाठो न दृश्यते ।

यद्वा परस्परादन्यतः अन्योन्यातिरिक्तपुरुषात् नैव वध्यौ इत्यन्वयः । अन्योन्यं वध्यत्वेऽपि अन्येन वध्यौ न भवत इति भावः । तयोः सुन्दोपसुन्दयोः वधार्थे तेन ब्रह्मणा सृष्टया तिलोत्तमया मोहितौ दैत्यौ दैत्यात्मकौ सुन्दोपसुन्दौ तिलोत्तमार्थे परस्परं अन्योन्यं निहतावित्यन्वयः ।। १५०-१५६ ।।

**वरदराजीया—** किमित्याहेत्यत आह— **सुन्दोपसुन्दाविति** ।। ब्रह्मवाक्याद्वररूपात् परस्परादन्योन्यतः अन्यस्मात् पुरुषादपि वध्यौ नैव । तेन ब्रह्मणा तयोः सुन्दोपसुन्दयोः वधाय वधार्थं सृष्टया निर्मितया तिलोत्तमया तिलोत्तमार्थे तत्परिग्रहार्थं परस्परमन्योन्यं निहतौ ।। १५१ ।।

**जनार्दनीया—** किमिति? भ्रातरौ सुन्दोपसुन्दौ सुन्दोपसुन्दाविति नामानौ । ब्रह्मवाक्याद् ब्रह्मवरात् इत्यर्थः । परस्परादन्योन्यतः । अन्यपुरुषात् नैव वध्यौ, अवध्यावित्यर्थः । दैत्यौ तेन ब्रह्मणा तयोर्दैत्ययोर्वधार्थे सृष्टया । भावप्रधानो निर्देशः । सृष्टतया सृष्टत्वेनेत्यर्थः । यद्वा सृष्टं धर्मधर्मिणोरभेदात् सृष्टं सर्जनं यापयति करोतीति सृष्टया, तेन सृष्टया तेन ब्रह्मणेति । तिलोत्तमार्थे तिलोत्तमस्वीकरणार्थं परस्परमन्योन्यं निहतौ, गदाभ्यामिति शेषः । यत इति च शेषः ।।१५०।।

**ताम्रपर्णीया—** 'सुन्दोपसुन्दौ' इत्यत्र योजना । ब्रह्मवरात् परस्परादन्यतः पुरुषादवध्यौ दैत्यौ भ्रातरौ सुन्दोपसुन्दौ तयोर्वधार्थे ब्रह्मणा या तिलोत्तमा असृष्ट । तस्यास्तिलोत्तमाया अर्थे परस्परं निहताविति ।। १५०-१५१ ।।

**अतिविशद—** 'सुन्दोपसुन्दौ..दैत्यौ' इत्यत्र ब्रह्मवाक्यात् परस्परादन्यतो नैव वध्यौ सुन्दोपसुन्दौ भ्रातरौ दैत्यौ तिलोत्तमार्थे परस्परं निहतौ इत्यनेन अन्वयपूर्तेस्तयोर्वधार्थे सृष्टवान् तेन इत्येतद्भागस्य वैयर्थ्यमेव । अथवा तेन ब्रह्मणा तयोर्वधार्थे सृष्टया तिलोत्तमया निहतावित्यन्वयपूर्तेः पुनः तिलोत्तमार्थे इत्यस्य वैयर्थ्यमेवेति । अत्रैवमेकान्वयं कथयन्ति । तिलोत्तमार्थे परस्परं तयोर्वधार्थे तेन ब्रह्मणा सृष्टया ब्रह्मवाक्यात् परस्परादन्यतो नैव वध्यौ दैत्यौ भ्रातरौ सुन्दोपसुन्दौ निहताविति ब्रह्मवाक्यात् परस्परादन्यतोऽन्यस्मात् पुरुषादपि नैव वध्यौ तेन ब्रह्मणा सुन्दोपसुन्दयोर्वधार्थं सृष्टया । भावप्रधानो निर्देशः । सृष्टत्वेन । यद्वा धर्मधर्मिणोरभेदात् सृष्टं सर्गस्तन्निश्चयं वा याति करोतीत्यर्थः । सृष्टया तेन ब्रह्मणेति । त्रिषु सृष्टं तु निश्चित इति रुद्रः । तिलोत्तमस्वीकारार्थं परस्परं अन्योन्यं निहतौ, गदाभ्यामिति शेषः इति वा ।।१५०-१५९।।

**चट्टी—** किमित्याहेत्यत आह । भ्रातरौ सुन्दोपसुन्दौ सुन्दोपसुन्दनामानौ ब्रह्मवाक्याद् ब्रह्मवरादित्यर्थः । परस्पराद्यन्योन्यतः अन्यतः अन्यस्मात् पुरुषात् नैव वध्यौ अवध्यावित्यर्थः । दैत्यौ तेन ब्रह्मणा तयोः दैत्ययोः वधार्थे वधार्थं सृष्टया निर्मितया तिलोत्तमया तिलोत्तमार्थे तिलोत्तमस्वीकारार्थं परस्परमन्योन्यं निहतौ, गदाभ्यामिति शेषः ।। १५० ।।

**[1]अतः पृथग् वत्सरतो भवत्सु क्रमात् कृष्णा तिष्ठतां योऽन्ययुक्ताम् ।**
**[2]पश्येद् वोऽसौ वत्सरं तीर्थयात्रां कुर्यादिति स्माथ चक्रुस्तथा ते ।।१५१।।**

**वेदाङ्गतीर्थीया–** वत्सरतः एकैकवत्सरम् । वः युष्माकं मध्ये ।। १५१ ।।

**वादिराजतीर्थीया–** 'अन्ययुक्तां पश्येद्वोऽसौ' इत्यत्र वः युष्माकं मध्ये यः अन्ययुक्तां स्वस्मादन्येन युधिष्ठिरादिना युक्तामित्यन्वयः ।। १५१ ।।

**वरदराजीया–** यतोऽतः कृष्णा द्रौपदी वत्सरतः वत्सरक्रमात् युधिष्ठिरादिक्रमात् भवत्सु तिष्ठतां प्रथमवत्सरे युधिष्ठिरे द्वितीयवत्सरे भीमसेने इत्यादिक्रमेण तिष्ठतु इत्यर्थः । अन्यथा सुन्दोपसुन्दवदनर्थप्राप्तिशङ्का स्यादिति भावः । तत्रापि यो वा युष्माकं मध्ये अन्ययुक्तां अन्यतरयुक्तां द्रौपदीं पश्येत् सः संवत्सरं संवत्सरपर्यन्तं तीर्थयात्रां कुर्यात् इत्याहेति पूर्वत्र सम्बन्धः । अथानन्तरं ते पाण्डवाः तथा यथा नारदेनोक्तं तथा चक्रुरनुष्ठितवन्तः ।।१५१।।

**जनार्दनीया–** अतः पृथग्वत्सरतः एकैकं वत्सरं भवत्सु युष्मासु क्रमात् ज्येष्ठादिक्रमात् कृष्णा तिष्ठतां तिष्ठत्वित्यर्थः । वः युष्माकं मध्ये यः अन्ययुक्तां पश्येत् युधिष्ठिरयुक्तां भीमः पश्येत्, भीमयुक्तां युधिष्ठिरः पश्येत् अन्यो वा अनेन न्यायेन यः पश्येत्, सः पुरुषः वत्सरं वत्सरपर्यन्तं तीर्थयात्रां कुर्यादिति आहेति सम्बन्धः । अथ ते तथा चक्रुः स्म ।। १५१ ।।

**चट्टी–** यतः अतः प्रथक् प्रत्येकं वत्सरतः एकवत्सरं भवत्सु युष्मासु क्रमात् ज्येष्ठक्रमात् कृष्णा तिष्ठतां तिष्ठत्वित्यर्थः । वः युष्माकं मध्ये यः अन्ययुक्तां पश्येत् युधिष्ठिरयुक्तां भीमः भीमयुक्तां युधिष्ठिरो वा पश्येत् । अन्यो वा अनेन न्यायेन यः पश्येत्, सः असौ पुरुषः वत्सरं संवत्सरपर्यन्तं तीर्थयात्रां कुर्यादित्याहेति सम्बन्धः । अथानन्तरं ते पार्थाः तथा चक्रुः स्म ।।१५१।।

**[3]ततः कदाचिद् धर्मराजेन युक्तां शस्त्रागारे विप्रगोरक्षणार्थम् ।**
**शस्त्रादित्सुः फल्गुनोऽद्राक् स शस्त्रैर्दस्यून् हत्वा तीर्थयात्रोन्मुखोऽभूत् ।।**

**व्यासतीर्थीया–** दृशिधातोः 'सृजिदृशोर्झल्यमकिति' इत्यमागमे यणादेशे 'सिचिवृद्धिः परस्मै पदेषु' (सि.कौ-२२९७) इति वृद्धौ च कृतायां 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति अडागमे च कृते लुङ्विकरणत्वात् च सिचि प्रत्यये च 'षढोः कः सि' (सि.कौ-२९५) इति कुत्वे कृते 'इतश्च' इति इकारलोपे 'अनित्यमागमशासनम्' इति आगमाभावे हलङ्यादिलोपे च कृते अद्रा इति स्थिते 'संयोगान्तस्य लोपः' इति संयोगस्य लोपे अद्राक् इति साधु ।। १५२-१५६ ।।

---

१. 'एकैकस्य गृहे कृष्णा वसेदप्रर्थमकल्मषा । द्रौपद्या नः सहासीनानन्योन्यं योऽभिदर्शयेत् । स नो द्वादश मासानि ब्रह्मचारी वनं वसेत् ।।' आदिपर्वणि-२३२.२९.

२. 'पश्येद् वो संवत्सरम्' इति वरदराजीयपाठः स्यात् ।

३. आदिपर्वणि-२३३.७-१०.

**वेदाङ्गतीर्थीया**— अद्राक् अद्राक्षीत् ।।१५२-१५३।।

**वादिराजतीर्थीया**— 'शस्त्रादित्सुः फल्गुनोऽद्राक्' इत्यत्र 'व्यत्ययो वहुलम्' इति वचनात् अद्राक् अद्राक्षीत् ।। १५२-१५४ ।।

**वरदराजीया**— धर्मराजेन युक्तां द्रौपदीं शस्त्रागारे शस्त्रस्थापनगृहे दस्युभ्यो विप्रादिरक्षणार्थं शस्त्राणि आदातुमिच्छुः फल्गुनो अद्राक् अद्राक्षीत् । स फल्गुनो तीर्थयात्रोन्मुखः तीर्थयात्रां प्रति गतोऽभूत् ।।१५२।।

**अनन्तभट्टीया**— धर्मराजेन युक्तां द्रौपदीं अद्राक् अद्राक्षीत् । विप्राणां गाः दस्युभृताः तासां रक्षणार्थं दस्युभ्यः आनयनार्थम् ।। १५२ ।।

**जनार्दनीया**— शस्त्रागारे शस्त्रगृहे द्राग् शीघ्रं शस्त्रादित्सुः शस्त्राण्यादातुमिच्छुः शस्त्राणि अदातुकामः फल्गुनः धर्मराजेन युक्तां द्रौपदीं दृष्ट्वा, दस्यून् हत्वा, तीर्थयात्रोन्मुखोऽभूदित्यन्वयः । अद्राक् अद्राक्षीत् । दृशि धातोः लुङ् तिप् 'च्लेः सिच्' (सि.कौ.२२२२) अनित्यमागमनशासनमिति 'बहुलं छन्दसि' इति वा ईट् न भवति । 'इतश्च' (सि.कौ.२२०७) इति इकारलोपः । 'हल् ङ्याब्भ्य..' (सि.कौ.२५२) इति तकारलोपः । 'सृजिदृशोर्झल्यमकिति' (सि.कौ.२४०५) इति अमागमः, यणादेशः, 'वदव्रज..' (सि.कौ.२२६७) इति वृद्धिः, अडागमः, 'संयोगान्तस्य' (सि.कौ.५४) इति सिचो लोपः । अत्र वृधादिषत्वे प्राप्ते, किन् प्रत्यये सति, कुत्वं शस्य सः, तस्यापि जश्त्वं, 'वावसाने' (सि.कौ.२०६) इति चर्त्वं ककारः, 'पूर्वत्रासिद्धम्' (सि.कौ.१२) षत्वे कुत्वं नास्ति । प्रत्ययग्रहणसामर्थ्यात् पत्वायपवादत्वात् कुत्वस्य तेन 'अद्राक्' इति साधु ।।१५२।।

**ताम्रपर्णीया**— अद्राक् अद्राक्षीत् ।। १५२-१५३ ।।

**चट्टी**— ततोऽनन्तरं सः फल्गुनः कदाचिद् शस्त्रागारे शस्त्रगृहे धर्मराजेन युक्तां द्रौपदीं शस्त्रादित्सुः शस्त्राण्यादातुमिच्छुः, आदातुकाम इत्यर्थः । अद्राक् अद्राक्षीत् शस्त्रैः दस्यून् हत्वा तीर्थयात्रायामुन्मुखः अभूत् ।।१५२।।

**[1]युधिष्ठिरायै सौहृदाद् वारितोऽपि ययौ सत्यार्थं स कदाचिद् युनद्याम् ।**
**कुर्वन् स्नानं मायया नागवध्वा हृतो लोकं भुजगानां क्षणेन ।।१५३।।**

**वरदराजीया**— सौहृदान्निमित्तात् वारितो न गन्तव्यमिति निवारितोऽपि सत्यार्थं स्वकृतनियमस्य सत्यार्थं ययौ तीर्थयात्रां प्रति गतोऽभूत्, कर्तुमिति शेषः । सोऽर्जुनः युनद्यां गङ्गायां स्नानं कुर्वन् मायया विद्यया नागवध्वा नागस्त्रिया भुजगानां लोकं नागलोकं प्रति क्षणेन शीघ्रं हृतः नीतः ।।१५३।।

१. आदिपर्वणि २३३.३१-३४.

**[1]अतः पृथग् वत्सरतो भवत्सु क्रमात् कृष्णा तिष्ठतां योऽन्ययुक्ताम् ।**
**[2]पश्येद् वोऽसौ वत्सरं तीर्थयात्रां कुर्यादिति स्माथ चक्रुस्तथा ते ॥१५१॥**

**वेदाङ्गतीर्थीया–** वत्सरतः एकैकवत्सरम् । वः युष्माकं मध्ये ॥ १५१ ॥

**वादिराजतीर्थीया–** 'अन्ययुक्तां पश्येद्वोऽसौ' इत्यत्र वः युष्माकं मध्ये यः अन्ययुक्तां स्वस्मादन्येन युधिष्ठिरादिना युक्तामित्यन्वयः ॥ १५१ ॥

**वरदराजीया–** यतोऽतः कृष्णा द्रौपदी वत्सरतः वत्सरक्रमात् युधिष्ठिरादिक्रमात् भवत्सु तिष्ठतां प्रथमवत्सरे युधिष्ठिरे द्वितीयवत्सरे भीमसेने इत्यादिक्रमेण तिष्ठतु इत्यर्थः । अन्यथा सुन्दोपसुन्दव-दनर्थप्राप्तिशङ्का स्यादिति भावः । तत्रापि यो वा युष्माकं मध्ये अन्ययुक्तां अन्यतरयुक्तां द्रौपदीं पश्येत् सः संवत्सरं संवत्सरपर्यन्तं तीर्थयात्रां कुर्यात् इत्याहेति पूर्वत्र सम्बन्धः । अथानन्तरं ते पाण्डवाः तथा यथा नारदेनोक्तं तथा चक्रुरनुष्ठितवन्तः ॥१५१॥

**जनार्दनीया–** अतः पृथग्वत्सरतः एकैकं वत्सरं भवत्सु युष्मासु क्रमात् ज्येष्ठादिक्रमात् कृष्णा तिष्ठतां तिष्ठत्वित्यर्थः । वः युष्माकं मध्ये यः अन्ययुक्तां पश्येत् युधिष्ठिरयुक्तां भीमः पश्येत्, भीमयुक्तां युधिष्ठिरः पश्येत् अन्यो वा अनेन न्यायेन यः पश्येत्, सः पुरुषः वत्सरं वत्सरपर्यन्तं तीर्थयात्रां कुर्यादिति आहेति सम्बन्धः । अथ ते तथा चक्रुः स्म ॥ १५१ ॥

**चट्टी–** यतः अतः प्रथक् प्रत्येकं वत्सरतः एकवत्सरं भवत्सु युष्मासु क्रमात् ज्येष्ठक्रमात् कृष्णा तिष्ठतां तिष्ठत्वित्यर्थः । वः युष्माकं मध्ये यः अन्ययुक्तां पश्येत् युधिष्ठिरयुक्तां भीमः भीमयुक्तां युधिष्ठिरो वा पश्येत् । अन्यो वा अनेन न्यायेन यः पश्येत्, सः असौ पुरुषः वत्सरं संवत्सरपर्यन्तं तीर्थयात्रां कुर्यादित्याहेति सम्बन्धः । अथानन्तरं ते पार्थाः तथा चक्रुः स्म ॥१५१॥

**[3]ततः कदाचिद् धर्मराजेन युक्तां शस्त्रागारे विप्रगोरक्षणार्थम् ।**
**शस्त्रादित्सुः फल्गुनोऽद्राक् स शस्त्रैर्दस्यून् हत्वा तीर्थयात्रोन्मुखोऽभूत् ॥**

**व्यासतीर्थीया–** दृशिधातोः 'सृजिदृशोर्झल्यमकिति' इत्यमागमे यणादेशे 'सिचिवृद्धिः परस्मै पदेषु' (सि.कौ-२२९७) इति वृद्धौ च कृतायां 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति अडागमे च कृते लुङ्विकरणत्वात् च सिचि प्रत्यये च 'षढोः कः सि' (सि.कौ-२९५) इति कुत्वे कृते 'इतश्च' इति इकारलोपे 'अनित्य-मागमशासनम्' इति आगमाभावे हलङ्यादिलोपे च कृते अद्रा इति स्थिते 'संयोगान्तस्य लोपः' इति संयोगस्य लोपे अद्राक् इति साधु ॥ १५२-१५६ ॥

---

१. 'एकैकस्य गृहे कृष्णा वसेदप्रमकल्मषा । द्रौपद्या नः सहासीनानन्योन्यं योऽभिदर्शयेत् । स नो द्वादश मासानि ब्रह्मचारी वने वसेत् ॥' आदिपर्वणि-२३२.२९.

२. 'पश्येद् वो संवत्सरम्' इति वरदराजीयपाठः स्यात् ।

३. आदिपर्वणि-२३३.५-१०.

**वेदाङ्गतीर्थीया–** अद्राक् अद्राक्षीत् ।।१५२-१५३।।

**वादिराजतीर्थीया–** 'शस्त्रादित्सुः फल्गुनोऽद्राक्' इत्यत्र 'व्यत्ययो बहुलम्' इति वचनात् अद्राक् अद्राक्षीत् ।। १५२-१५४ ।।

**वरदराजीया–** धर्मराजेन युक्तां द्रौपदीं शस्त्रागारे शस्त्रस्थापनगृहे दस्युभ्यो विप्रादिरक्षणार्थं शस्त्राणि आदातुमिच्छुः फल्गुनो अद्राक् अद्राक्षीत् । स फल्गुनो तीर्थयात्रोन्मुखः तीर्थयात्रां प्रति गतोऽभूत् ।।१५२।।

**अनन्तभट्टीया–** धर्मराजेन युक्तां द्रौपदीं अद्राक् अद्राक्षीत् । विप्राणां गाः दस्युभृताः तासां रक्षणार्थं दस्युभ्यः आनयनार्थम् ।। १५२ ।।

**जनार्दनीया–** शस्त्रागारे शस्त्रगृहे द्राग् शीघ्रं शस्त्रादित्सुः शस्त्राण्यादातुमिच्छुः शस्त्राणि अदातुकामः फल्गुनः धर्मराजेन युक्तां द्रौपदीं दृष्ट्वा, दस्यून् हत्वा, तीर्थयात्रोन्मुखोऽभूदित्यन्वयः । अद्राक् अद्राक्षीत् । दृशि धातोः लुङ् तिप् 'च्लेः सिच्' (सि.कौ.२२२२) अनित्यमागमनशासनमिति 'बहुलं छन्दसि' इति वा ईट् न भवति । 'इतश्च' (सि.कौ.२२०७) इति इकारलोपः । 'हल् ड्याभ्य..' (सि.कौ.२५२) इति तकारलोपः । 'सृजिदृशोर्झल्यमकिति' (सि.कौ.२४०५) इति अमागमः, यणादेशः, 'वदव्रज..' (सि.कौ.२२६७) इति वृद्धिः, अडागमः, 'संयोगान्तस्य' (सि.कौ.५४) इति सिचो लोपः । अत्र वृधादिषत्वे प्राप्ते, किन् प्रत्यये सति, कुत्वं शस्य सः, तस्यापि जश्त्वं, 'वावसाने' (सि.कौ.२०६) इति चर्त्वं ककारः, 'पूर्वत्रासिद्धम्' (सि.कौ.१२) षत्वे कुत्वं नास्ति । प्रत्ययग्रहणसामर्थ्यात् पत्वाद्यपवादत्वात् कुत्वस्य तेन 'अद्राक्' इति साधु ।।१५२।।

**ताम्रपर्णीया–** अद्राक् अद्राक्षीत् ।। १५२-१५३ ।।

**चट्टी–** ततोऽनन्तरं सः फल्गुनः कदाचिद् शस्त्रागारे शस्त्रगृहे धर्मराजेन युक्तां द्रौपदीं शस्त्रादित्सुः शस्त्राण्यादातुमिच्छुः, आदातुकाम इत्यर्थः । अद्राक् अद्राक्षीत् शस्त्रैः दस्यून् हत्वा तीर्थयात्रायामुन्मुखः अभूत् ।।१५२।।

**[1]युधिष्ठिराद्यैः सौहृदाद् वारितोऽपि ययौ सत्यार्थं स कदाचिद् युनद्याम् ।**
**कुर्वन् स्नानं मायया नागवध्वा हृतो लोकं भुजगानां क्षणेन ।।१५३।।**

**वरदराजीया–** सौहृदान्निमित्तात् वारितो न गन्तव्यमिति निवारितोऽपि सत्यार्थं स्वकृतनियमस्य सत्यार्थं ययौ तीर्थयात्रां प्रति गतोऽभूत्, कर्तुमिति शेषः । सोऽर्जुनः युनद्यां गङ्गायां स्नानं कुर्वन् मायया विद्यया नागवध्वा नागस्त्रिया भुजगानां लोकं नागलोकं प्रति क्षणेन शीघ्रं हृतः नीतः ।।१५३।।

---

१. आदिपर्वणि २३३.३१-३४.

**अनन्तभट्टीया–** युधिष्ठिराद्यैः वारितः तीर्थयात्रां मा कुर्विति निषिद्धः । सत्यार्थं समयपालनार्थम् ।।

**जनार्दनीया–** सौहृदात् स्नेहात् मा गच्छेति वारितोऽपि सत्यार्थं स्वकृतप्रतिज्ञापालनार्थं ययौ । सः अर्जुनः नागवध्वा नागस्त्रिया मायया हृतो नीतः ।।१५३।।

**चट्टी–** सोऽर्जुनः युधिष्ठिराद्यैः सौहृदाद् स्नेहात् मा गच्छेति निवारितोऽपि सत्यार्थं स्वकृतप्रतिज्ञापालनार्थं ययौ । सोऽर्जुनः कदाचित् युनयां भागीरथ्यां स्नानं कुर्वन् नागवध्वा नागस्त्रिया मायया विद्यया क्षणेन भुजगानां सर्पाणां लोकं प्रति हृतः नीतः ।।१५३।।

**[1]तस्याः पिता गरुडेनाऽत्तपत्युः पुत्राकाङ्क्षी चोदयामास पार्थम् ।**
**[2]संवत्सरब्रह्मचर्यं तु पार्थैः कृष्णाहेतोः समये साधु बद्धम् ।।१५४।।**

**वेदाङ्गतीर्थीया–** संवत्सरब्रह्मचर्यं समये सङ्केते ।। १५४-१५७ ।।

**वादिराजतीर्थीया–** 'कृष्णाहेतोः समये साधु बद्धम्' इत्यत्र पार्थैः अन्यपार्थैः सह समये वर्षमात्रं तीर्थयात्रां करिष्यामीति सङ्केते साधु सम्यक् बद्धं व्रतबद्धमिति सम्बन्धः ।। १५४-१६० ।।

**वरदराजीया–** सुपर्णेन गरुडेन आत्तो मारितः पतिर्यस्या सा तथोक्ता तस्याः । नागवध्वाः पिता पुत्राकाङ्क्षी तस्याः पुत्रमाकाङ्क्षमाणः पार्थं चोदयामास अस्यां पुत्रमुत्पादयेति प्रार्थयामास । कथम्भूतं पार्थम्? संवत्सरब्रह्मचर्यं संवत्सरपर्यन्तं ब्रह्मचर्ये समये नियमे कृष्णाहेतोः एकान्ते धर्मराजेन साकं द्रौपदिदर्शनात् निमित्तात् अपराधात् साधु पार्थैर्बद्धं नियन्त्रितं चोदयामासेति सम्बन्धः ।। १५४ ।।

**अनन्तभट्टीया–** ।। **पत्युरिति** ।। आत्तः भक्षितः पतिः यस्या इति विग्रहः । पुत्राकाङ्क्षी सुतायाः पुत्राकाङ्क्षी ।। १५४ ।।

**जनार्दनीया–** तस्याः पिता कश्चन नागः । गरुडेन आत्तपत्युः आत्तः भक्षणार्थं स्वीकृतः पतिर्यस्याः सा । तस्याः स्वसुतायाः पुत्राकाङ्क्षी पार्थं चोदयामास । मम कन्यकायां पुत्रमुत्पादयेति प्रार्थयामासेत्यर्थः । कथं भूतं पार्थम्? कृष्णाहेतोः पार्थैः संवत्सरं ब्रह्मचर्ये विषये समये सङ्केते साधु बद्धं यन्त्रितम् । तं वत्सरपर्यन्तं ब्रह्मचर्यं निश्चितमिति भावः ।।१५४।।

**भावविवृतिः–** 'तस्याः पिता गरुडेनात्तपत्युः पुत्राकाङ्क्षी चोदयामास पार्थम्' इत्यत्र तस्याः अर्जुनं नागलोकं नीतवत्याः उलूपिकायाः गरुडेनात्तपत्युः भक्षणार्थं स्वीकृतभर्तुः पिता, तस्या इत्यस्यावृत्तिः । स्वसुतायाः पुत्राकाङ्क्षी सन् पार्थं चोदयामासेति ।। १५४-१५६ ।।

---

१. भीष्मपर्वणि ९०.७-१९.

२. 'संवत्सरब्रह्मचर्ये' इति ताम्रपर्णीय-चट्टीपाठः । 'संवत्सरं ब्रह्मचर्यं' इति जनार्दनीयपाठः ।

**ताम्रपर्णीया–** ।। **संवत्सरब्रह्मचर्ये त्विति** ।। तथा च भारते अर्जुनवाक्यम् । 'ब्रह्मचर्यमिदं भद्रे मम द्वादशमासिकम् । धर्मराजेन चादिष्टं नाहमस्मि स्वयंवशः।।' इति (आदि.२३४.२१)।।१५४-५५।।

**चट्टी–** तस्याः नागवध्वाः पिता कश्चन नागः गरुडेन आत्तपत्युः आत्तः भक्षणार्थं स्वीकृतः पतिः यस्या सा तथा । तस्याः स्वसुतायाः पुत्राकाङ्क्षी सन् कृष्णाहेतोः पार्थैः संवत्सरब्रह्मचर्ये समये सङ्केते साधु बद्धं पार्थं चोदयामास । मम कन्यकायां पुत्रमुत्पादयेति चोदयामासेत्यर्थः ।।१५४।।

**पुनःपुनर्याच्यमानः स पार्थः पुत्रार्थमस्या भुजगेन तस्याम् ।**
**उत्पादयामास सुतं कुजांशं नाम्नैरावन्तं वरुणावेशयुक्तम् ।।१५५।।**

**सत्याभिनवतीर्थीया–** तत्रैव 'पुनःपुनर्याच्यमानः स पार्थः..' इति श्लोके 'नाम्ना इरावन्तम्' इत्यस्य नामात्मकः यः इरावच्छब्दः तद्वन्तमित्यर्थः । एतेन इरावदिति नाम्ना युक्तमिति वक्तव्यम् । नाम्ना इरावन्तम् इति कथनमनुपपन्नमिति दूषणं परास्तम् । 'प्रकृत्यादिभ्यः उपसंख्यानम्' इति वचनात् नाम्नेति तृतीया अभेदार्थे, इरावच्छब्दार्थवच्छब्दात् मत्वर्थे अच्प्रत्यये कृते निष्पन्नेरावच्छब्दात् द्वितीयैकवचने छान्दसे अनुस्वारे इरावन्तमिति रूपं निष्पन्नमिति चाङ्गीकृत्य नाम्ना इरावन्तम् इत्यस्य नामात्मकेरावच्छब्दवन्तमित्यर्थः ।। १५५-१६३ ।।

**वरदराजीया–** अस्याः नागवध्वाः पुत्रार्थं पुनः पुनः भुजगेन तस्याः पित्रा याच्यमानः स पार्थः तस्यां नागवध्वां सुतमुत्पादयामास । पूर्वं कुजस्याङ्गारकास्यांशं स्वरूपांशं वरुणस्यावेशेन युक्तं नाम्ना इरावन्तं सुतमिति सम्बन्धः ।। १५५ ।।

**जनार्दनीया–** अस्याः नागकन्यकायाः पुत्रार्थम् । पूर्वं कुजांशं मङ्गलांशं अत्र नाम्ना इरावन्तम् ।।१५५।।

**भावचन्द्रिका–** प्रवृत्तिनिमित्तमाह– **वरुणावेशयुक्तमिति** ।। अभिमान्यधिकरणन्यायेन..* पदं इरापदं वरुणपरम् । इरा जलं तद्वानब्जजात ऐरावत इति प्रयोगात् ।। १५५-१५७ ।।

**चट्टी–** अस्याः नागवध्वाः पुत्रार्थं भुजगेन तस्याः पित्रा पुनः पुनः याच्यमानः पार्थस्तस्यां पूर्वं कुजांशं अङ्गारकमित्यर्थः । वरुणस्यावेशेन युक्तं नाम्ना इरावन्तं सुतमुत्पादयामास ।। १५५ ।।

**गुणाः पितुर्मातृजातिः[१] सुतानां यस्मात् सतां प्रायशस्तेन नागः ।**
**[२]बली च [३]पार्थप्रथमोद्भवत्वान्मायाविदस्त्री च सुधार्मिकश्च ।।१५६।।**

---

१. 'योऽन्वयो मातृकस्तस्य स एनमभिपेदिवान्' इति भीष्मपर्वणि-९०.७६ । 'मातृजातयः सुताः स्युः' इति नीलकण्ठः ।

२. पुत्रमुत्पादयामास स तस्यां सुमनोहरम् । इरावन्तं महाभागं महाबलपराक्रमम् ।। आदिपर्वणि-२३४.३५.

३. 'पार्थात् प्रथमोद्भवत्वात्' इति अनन्तभट्टीयपाठः स्यात् ।

**वरदराजीया–** सतां सज्जनानां सुतानां प्रायशः पितुर्गुणाः भवन्ति । प्रद्युम्नादौ दृष्टत्वात् । तथा प्रायशः मातृजातिर्भवति । हनुमदादौ तथा दृष्टत्वात् । भीष्मासत्यवतीविराटादिव्यावृत्त्यर्थं 'प्रायशः' इत्युक्तम् । विरोचनादिव्यावृत्त्यर्थं 'सताम्' इति । पृथुप्रह्लादादिव्यावृत्त्यर्थं 'प्रायशः' इति । प्रायशः इत्यस्य उभयत्र सम्बन्धः । तेन नियमेन कारणेन नागः सर्पजातिः । पार्थात् अर्जुनात् प्रथममुद्भवो यस्य स तथा तस्य भावः तत्वं तस्मात् । बली जातः मायावित् मायाविद्यावेत्ता अस्त्री अस्त्राभिज्ञः सुधार्मिकश्च जातः ।।१५६।।

**अनन्तभट्टीया–** गुणाः भवन्ति । मातृजातिः यज्जातिः मातुः तत्पुत्रश्च तज्जातिर्भवतीत्यर्थः । भीष्मादौ तन्नास्तीति 'प्रायः' इत्युक्तम् । पार्थादिति पञ्चमी उद्भवक्रियानुपादानत्वेन । ततश्चायमर्थः । पार्थाज्जातत्वात् तत्रापि प्रथमजातत्वात् ।।१५६।।

**जनार्दनीया–** सतां समीचीनानां सुतानां प्रायशः पितुर्गुणाः भवन्ति । प्रद्युम्नादौ दृष्टत्वात् । मातृजातिर्भवति हनुमदादौ दृष्टत्वात् यस्मात् । तेन कारणेन । नागः बभूवेति शेषः । सत्यवत्यादि-व्यावृत्त्यर्थं 'प्रायः' इत्युक्तम् । सृगालपौण्ड्रकादिव्यावृत्त्यर्थं 'सताम्' इत्युक्तम् । पार्थप्रथमोद्भवत्वात् अर्जुनात् प्रथमं पूर्वं उत्पन्नत्वात् बली, जात इति शेषः ।।१५६।।

**ताम्रपर्णीया–** प्रह्लादसुते विरोचने पितृगुणाभावात् 'सतां सुतानाम्' इत्युक्तम् । पितृगुणवत्वं च प्रद्युम्नादौ दृष्टम् । मातृजातिर्हनुमदादौ । भीष्मादिव्यावृत्त्यर्थं 'प्रायः' इति ।। १५६-१५७ ।।

**चट्टी–** यस्मात् सतां जनानां सुतानां प्रायशः पितर्गुणाः भवन्ति । मातृजातिः भवति । तेन कारणेन नागः, बभूव इति शेषः । सत्यवत्यादिव्यावृत्त्यर्थं 'प्रायः' इत्युक्तम् । सृगालपौण्ड्रकादिव्यावृत्त्यर्थं 'सताम्' इत्युक्तम् । पार्थप्रथमोद्भवत्वात् अर्जुनात् पूर्वमुत्पन्नत्वात् बली च, जात इति शेषः । मायाविदस्त्री अस्त्राभिज्ञः सुधार्मिकश्च जातः।। १५६ ।।

**ततो ययावर्जुनस्तीर्थयात्राक्रमेण पाण्ड्याँस्तनयोऽस्य मात्रा ।**
**सह त्यक्तो भुजगैर्देवलोके सम्पूजितो न्यवसद् दैवतैश्च ।।१५७।।**

**व्यासतीर्थीया–** भिन्नजातिना विधवायामुत्पन्नत्वेन भुजगैस्त्यक्तः अर्जुनसुतत्वेन दैवतैः सम्पूजितः ।।

**मधुसूदनीया–** अस्य अर्जुनस्य तनयः इरावान् मात्रा सह भुजगैस्त्यक्तः । विधवायां त्वमुत्पन्नः विधवा त्वन्माता पुत्रं असूत इति तं तन्मातरं च भुजगा निष्कासितवन्त इति भावः ।। १५७-१७७ ।।

**वरदराजीया–** ततस्तदनन्तरं पार्थः तीर्थयात्राक्रमेण तीर्थचरणक्रमेण पाण्ड्यान् देशान् ययौ । अर्जुनस्य तनयः इरावान् मात्रा सह भुजगैः त्यक्तः मृतभर्तृकायां विजातियोत्पन्नत्वात् परित्यक्त इति भावः । अर्जुनपुत्रत्वात् देवलोके दैवतैः सुरैः सम्पूजितो मानितो न्यवसत् ।। १५७ ।।

**अनन्तभट्टीया–** अस्यार्जुनस्य तनयः इरावान् इत्युक्तः । भिन्नजातिजात् विधवायां जातत्वात् । अर्जुनसुतत्वेन देवलोके पूजितः ।। १५७ ।।

**जनार्दनीया–** पाण्ड्यान् विषयान् । अस्य अर्जुनस्य तनयः इरावान् । मात्रा नागवध्वा सह । भुजगैस्त्यक्तः, विधवायां मनुष्योत्पन्नत्वात् त्यक्त इति भावः । सम्पूजितः सम्यङ्मानितः ।।१५७।।

**भावविवृतिः–** 'सह त्यक्तो भुजगैर्देवलोके सम्पूजितो न्यवसद्दैवतैश्च' इत्यत्र देवरेण सुतोत्पादनं युगान्तरेषु धर्ममपि कलौ यथा निन्दितं तथा बन्धुनियोगात् विधवायां सुतोत्पादनमपि मर्त्यलोके निन्दितमिति नागैस्त्यक्त इति सूचनाय चशब्दः ।। १५७-१५८ ।।

**चट्टी–** ततस्तदनन्तरं अर्जुनस्तीर्थयात्राक्रमेण तीर्थयात्राचरणक्रमेण पाण्ड्यान् देशान् ययौ । अस्यार्जुनस्य तनयः इरावान् मात्रा नागवध्वा सह भुजगैः त्यक्तः । विधवायां त्वमुत्पन्नः विधवा च त्वन्माता पुत्रमसूतेति तं तन्मातरं च भुजगाः निष्कासितवन्त इति भावः । देवलोके दैवतैः देवैः सम्पूजितः सम्यक् मानितः सन् न्यवसत् ।। १५७ ।।

**सत्यात्ययान्नैव दोषोऽर्जुनस्य तेजीयसश्चिन्तनीयः कथञ्चित् ।**
**[१]श्रेष्ठापराधान्नान्यदोषस्य लेपस्तेजीयसां निर्णयोऽयं हि शास्त्रे ।।१५८।।**

**व्यासतीर्थीया–** ब्रह्मचर्यभङ्गादर्जुनो दोषी जातः किमित्यत आह– **सत्यात्ययादिति** ।। तेजीयसां तेजस्विनां ज्ञानिनामित्यर्थः । तेजीयसां दोषान्तरलेपाभावोऽपि प्राप्तो अतो अपवादमुक्तं विवृणोति– **श्रेष्ठेति** ।। १५८ ।।

**वेदाङ्गतीर्थीया–** एवं तर्ह्यर्जुनस्य सत्यात्ययदोष इत्यत आह– **सत्यात्ययादिति** ।। तेजीयसः महाज्ञानिनः अर्जुनस्य सत्यात्ययाद् दोषः कथञ्चित् सर्वात्मना नैव चिन्तनीयः । तेजीयसां दोषलेशो नास्तीत्युक्तस्यापवादमाह– **श्रेष्ठेति** ।। तेजीयसां श्रेष्ठापराधात् स्वोत्तमानामपराधात् अन्यदोषस्य लेपो न ।। १५८ ।।

**वरदराजीया–** ननु ब्रह्मचर्यादिव्रतभङ्गात् अर्जुनस्य प्रत्यवायः प्राप्त इत्याह– **सत्यात्ययादिति** ।। सत्यस्य व्रतस्य अत्ययात् अतिक्रमादपि अर्जुनस्य दोषो नैव चिन्तनीयः । तत्र हेतुगर्भविशेषणम्– **तेजीयस इति** ।। श्रेष्ठस्येत्यर्थः । तेजीयसामुत्तमानां ज्येष्ठापराधात् स्वापेक्षया गुणाधिकं प्रत्यपराधात् अन्यदोषस्य स्वाघमापराधदोषस्य लेपो न भवति । स्वश्रेष्ठापराधदोषस्तु लेपकरः भवेदेवेत्यर्थः । इत्ययं निर्णयः शास्त्रे कृतोऽस्ति हि यस्मात् अर्जुनस्य न दोषलेप इत्यर्थः ।। १५८ ।।

**अनन्तभट्टीया–** सत्यात्ययात् ब्रह्मचर्यत्यागात् । 'तेजीयसः' इति हेतुगर्भविशेषणम् । श्रेष्ठापराधादन्यदोषस्य अल्पदोषस्येत्यर्थः । श्रेष्ठापराधस्तु महद्विकर्म इति भावः ।। १५८ ।।

---

१. 'ज्येष्ठापराधात्' इति वरदराजीयपाठः ।

**जनार्दनीया–** एवं तर्हि अर्जुनस्य सत्यात्ययाद्दोष इत्यत आह– **सत्यात्ययादिति** ।। तेजीयसः महाज्ञानिनः अर्जुनस्य सत्यात्ययात् दोषः कथञ्चित् सर्वात्मना नैव चिन्तनीयः । तेजीयसां दोषलेशो नास्तीत्युक्तस्यापवादमाह– **श्रेष्ठ इति** ।। तेजीयसां श्रेष्ठापराधात् स्वोत्तमापराधादन्यदोषस्य लेपो न ।।१५८।।

**ताम्रपर्णीया–** ननु सत्यवचनात्ययाद् ब्रह्मचर्यभङ्गादर्जुनो दोषी जातः किमित्यत आह– **सत्यात्ययादिति** ।। तेजीयसः उत्तमाधिकारिणः कथञ्चित् केनापि प्रकारेण अशुचित्वापादको वा प्राप्त० यानन्दह्रासापादको वेत्यर्थः । ननु कथं तेजीयसो द्रौणेः दुर्योधनपत्न्यामपत्योत्पादनसङ्कल्पमात्रेण ब्रह्मचर्यहानिरस्त्रोपसंहाराशक्तिश्च? कथं वा चन्द्रसुग्रीवयोः स्वोच्चदारपरिग्रहेण प्राप्तव्यहानिरभूत्? इत्यत आह– **श्रेष्ठापराधादिति** ।। १५८ ।।

**भावचन्द्रिका–** *श्रेष्ठापराधात् श्रेष्ठस्यावरापराधस्येव विग्रहः । अन्यथावर इत्युत्तरवाक्यानुपपत्तिः स्यात् । एवं सति उत्तमापराधस्यापि सङ्ग्रहो भवति ।। १५८-१६० ।।

**चट्टी–** तर्हि अर्जुनस्य सत्यात्ययः दोष इत्यत आह– **सत्यात्ययादिति** ।। तेजीयसः महाज्ञानिनः अर्जुनस्य सत्यात्ययात् दोषः कथञ्चित् सर्वात्मना नैव चिन्तनीयः । तेजीयसां श्रेष्ठापराधात् स्वोत्तमापराधाद् अन्यदोषस्य लेपो नास्ति । अयं निर्णयः शास्त्रे कृतो अस्ति हि ।। १५८-१५९ ।।

**अतिस्नेहाच्चाग्रजाभ्यां तदस्य क्षान्तं सुता पाण्ड्यराजेन दत्ता ।**
**[1]संवत्सरान्ते फल्गुनस्यानुरूपा चित्राङ्गदा वीरसेनेन तोषात् ।।१५९।।**

**व्यासतीर्थीया–** ननु ज्ञानिनः श्रेष्ठापराधाद्दोषलेपभावे अर्जुनस्यापि सत्यात्ययाद् भीमादिश्रेष्ठापराधद् दोषः प्राप्त इत्यतः तदभावे निमित्तं कथयन् पूर्वमुत्तरकथामाह– **अतीति** ।। १५९-१६५ ।।

**वेदाङ्गतीर्थीया–** तर्ह्यर्जुनस्याप्यग्रजापराधः प्राप्त इत्यत आह– **अतीति** ।। अस्य अर्जुनस्य तत् स्त्रीपरिग्रहणम् ।।१५९-१६०।।

**वरदराजीया–** किञ्च अग्रजाभ्यां युधिष्ठिरभीमसेनाभ्यां अस्य अर्जुनस्य तत् सत्यातिक्रमणं अतिस्नेहात् निमित्तात् क्षान्तं इदं अर्जुनस्य पापकारं मा भूदिति सोढुमित्यर्थः । एतच्च भीमापेक्षया श्रेष्ठापराधलेपः स्यादिति शङ्कानिरसार्थमुक्तम् । तस्मादपि हेतोः दोषलेपो नाभूदिति भावः । पाण्ड्यराजेन वीरसेनाख्येन अनुरूपा सुन्दररूपा नाम्ना चित्राङ्गदा सुता संवत्सरस्यान्ते फल्गुनस्य तोषात् सन्तोषात् दत्ता ।।१५९।।

---

१. 'स तथेति प्रतिज्ञाय तां कन्यां प्रतिगृह्य च । मासे त्रयोदशे पार्थः कृत्वा वैवाहिकीं क्रियाम् । उवास नगरे तस्मिन् मासांस्त्रीन् स तया सह ।।' आदिपर्वणि-२३५.२८.

**अनन्तभट्टीया–** ननु भीमादिभिः कृतस्य ब्रह्मचर्यलक्षणसमयस्यातिक्रमणात् श्रेष्ठापराधादर्जुनस्य दोषो जात इत्यत आह– **अतिस्नेहादिति** ।। तत् ब्रह्मचर्यातिक्रमणं जानतः इदमर्जुनस्य अनर्थकरी नाभूत् ।। १५९-१६१ ।।

**जनार्दनीया–** तर्हि अर्जुनस्यापि अग्रजाभ्यां कृतस्य ब्रह्मचर्यलक्षणसमयस्यातिक्रमणात् श्रेष्ठापराधः प्राप्त इत्यत आह– **अतीति** ।। अग्रजाभ्यां धर्मभीमाभ्यां अस्य अर्जुनस्य तद् ब्रह्मचर्यातिक्रमणं क्षान्तम् । इदमर्जुनस्य अनर्थप्रदं नाभूदिति क्षान्तमित्यर्थः । पाण्ड्यराजेन नाम्ना वीरसेनेन । अनुरूपा अर्जुनरूपस्य अनुकूलं रूपं यस्याः सा ।। १५९ ।।

**भावविवृतिः–** अपरोक्षज्ञानिनोऽर्जुनस्य विधवायामपत्योत्पादनेन स्वप्रतिज्ञातसंवत्सरब्रह्मचर्या-करणेन च दोषाभावेऽपि युधिष्ठिरभीमाभ्यां सह कृतप्रतिज्ञाया अकरणात् अर्जुने तयोः कस्मान्नाभूदित्यत आह– **अतिस्नेहादिति** ।। अग्रजाभ्यां युधिष्ठरभीमाभ्यां तस्यार्जुनस्य तत्प्रतिज्ञातब्रह्मचर्याकरणम्, चशब्दात् विधवायां अपत्योत्पादनश्च अर्जुनेऽतिस्नेहान्निमित्तात् क्षान्तं तस्मिन् कोपो न कृत इत्यर्थः ।। १५९-२२२ ।।

**ताम्रपर्णीया–** ननु भीमादिकृतसमयात्ययेन सत्यात्ययोऽपि श्रेष्ठापराध एवेत्यत आह– **अतिस्नेहादिति** ।।१५९-१७०।।

**स वीरसेनस्त्वष्टुरंशो यमस्याप्यावेशयुक् सा च कन्या शची हि ।**
**तारादेहे सूर्यजस्याङ्गसङ्गात् स्वर्गं नागादन्तरिक्षादिहाऽसीत् ।।१६०।।**

**वरदराजीया–** ननु वीरसेनः पूर्वं कः? चित्राङ्गदा च पूर्वं केत्यपेक्षायामाह– **स इति** ।। त्वष्टृदेवस्यांशो तथा यमस्य आवेशयुक् च । सा चित्राङ्गदा नाम कन्या च पूर्वं शची । तारादेहे वालिभार्यात्वेन तारारूपावतारे सूर्यजस्य सुग्रीवस्य अङ्गसङ्गात् अपराधात् स्वर्गं स्वमूलरूपं नागात् न प्राप । किं त्वन्तरिक्षे एव आसीत् । अन्तरिक्षात् पुनः इह चित्राङ्गदा आसीदित्यर्थः ।। १६० ।।

**जनार्दनीया–** त्वष्टुः त्वष्टृनाम्नः सूर्यदेवस्य अंशः । तारादेहे वालिभार्यातारारूपे सूर्यजस्य सुग्रीवस्य अङ्गसङ्गात् रमणापराधान्निमित्तात् स्वर्गं नागात् । शच्या एकीभावं न प्राप्तेति भावः । अन्तरिक्षात् भुवर्लोकात् इह पाण्ड्यराजे आसीत् ।।१६०।।

**चट्टी–** ननु स वीरसेनः पूर्वं कः चित्राङ्गदा च पूर्वं केत्यपेक्षायां आह– **स इति** ।। सः वीरसेनः त्वष्टृनाम्नो देवस्य अंशः यमस्याप्यावेशयुक् । सा चित्राङ्गदा नाम कन्या च पूर्वं शची । तारादेहे वालिभार्या तारारूपे सूर्यजस्य सुग्रीवस्य अङ्गसङ्गात् रमणापराधान्निमित्तात् स्वर्गं नागात् । शच्या एकीभावं न प्राप्तेति भावः । अन्तरिक्षाद्भुवर्लोकात् इह पाण्डुराजगृहे आसीत् ।। १६० ।।

**तेनैव हेतोर्नातिसामीप्यमासीत् तस्याः पार्थे पुत्रिकापुत्रधर्मात्[1] ।**
**तस्यां जातो बभ्रुवाहोऽर्जुनेन पूर्वं जयन्तः कामदेवांशयुक्तः ॥१६१॥**

**वेदाङ्गतीर्थीया–** हेतोः हेतुना । तृतीयार्थे पञ्चमी ॥१६१॥

**वादिराजतीर्थीया–** 'तेनैव हेतोर्नातिसामीप्यम्' इत्यत्र 'व्यत्ययो बहुलम्' इति वचनात् हेतोः हेतुना ॥ १६१-१७७ ॥

**वरदराजीया–** तेनैव तस्मादेव हेतोरङ्गसङ्गात् हेतोः तस्या चित्राङ्गदायाः पार्थे अर्जुने अतिसामीप्यं नासीत् । तस्यां चित्राङ्गदायां पुत्रिकापुत्रधर्मात् 'अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति' इति पुत्रिकापुत्रन्यायादित्यर्थः । बभ्रुवाहनो नामा अर्जुनाज्जातः ॥ १६१ ॥

**जनार्दनीया–** हेतोः हेतुना । तृतीयार्थे पञ्चमी । तेन हेतुना सुग्रीवस्याङ्गसङ्गदोषेण तस्याः चित्राङ्गदायाः पार्थे अतिसामीप्यं सन्ततसहवासः नासीत् । तस्यां चित्राङ्गदायां पुत्रिकापुत्रधर्मात् । 'अपुत्रेण मया कन्या दीयते तव भो वर । एतस्यां जायते पुत्रः स मे पुत्रो भविष्यति ॥' इति वचनोक्तप्रकारात् अर्जुनेन नाम्ना बभ्रुवाहो जातः । स पूर्वं क इत्यत आह– **पूर्वमिति** ॥ पूर्वं जयन्तः इन्द्रपुत्रः नाम्ना जयन्तः सः कामदेवांशयुक्तः सन् बभ्रुवाहो जात इति सम्बन्धः ॥ १६१ ॥

**अतिविशद–** 'तारादेहे...पुत्रिकापुत्रधर्मात्' इत्यत्र तेनैव हेतोरित्युभयोः पदयोः विभक्तिपरिणामेन तस्माद्धेतोरिति सामानाधिकरण्यं वदन्ति । [2]केचित्तु- 'सा तारादेहे सूर्यजस्याङ्गसङ्गात् स्वर्गं नागादन्तरिक्षादिहासीत् भूमावासीत् । तेनैव सुग्रीवसङ्गदोषेणैव तस्याः पार्थे अतिसामीप्यं नासीत् । तस्यामर्जुनेन पुत्रिकापुत्रधर्माद्धेतोः बभ्रुवाहो जात इति । 'धर्मात्' 'हेतोः' इत्युभयोः पञ्चमीत्वात् सामानाधिकरण्यमिति वदन्ति ॥ १६१-१७७ ॥

**भावचन्द्रिका–** ब्राह्मणब्रुव इतिवत् बलं बभ्रुवाः वयं बलिष्ठा इति ब्रुवाणा एतां न जहाति किन्तु योधय इत्येवेति बभ्रुवाहः । यद्वा मनोधैर्यबलवन्तो वयमिति ब्रुवाणानपि..* तदयुक्तत्वाच्च बभ्रुवाहः ॥१६१॥

**चट्टी–** तेनैव तस्मादेव हेतोः सुग्रीवस्य अङ्गसङ्गदोषात् तस्याः चित्राङ्गदायाः पार्थेन अतिसामीप्यं सन्ततसहवासः नासीत् । तस्यां चित्राङ्गदायां पुत्रिकापुत्रधर्मात् 'अपुत्रेण मया कन्या दीयते तव भो

---

१. तमुवाचाथ राजा स सान्त्वपूर्वमिदं वचः । राजा प्रभञ्जनो नाम कुलेऽस्मिन् सम्बभूव ह ॥ अपुत्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् । उग्रेण तपसा तेन देवदेवः पिनाकधृक् ॥ ईश्वरस्तोषितः पार्थ देवदेव उमापतिः । स तस्मै भगवान् प्रादादेकैकं प्रसवं कुले । एकैकः प्रसवस्तस्माद् भवत्यस्मिन् कुले सदा । तेषां कुमाराः सर्वेषां पूर्वेषां मम जज्ञिरे । एका च मम कन्येयं कुलस्योत्पादनी भृशम् । पुत्रो ममायमिति मे भावना पुरुषर्षभ ॥ पुत्रिकाहेतुविधिना सञ्ज्ञिता भरतर्षभ । तस्मादेकः सुतो योऽस्यां जायते भारत त्वया ॥ एतच्छुल्कं भवत्वस्याः कुलकृज्जायतामिह । एतेन समयेनेमां प्रतिगृह्णीष्व पाण्डव ॥ आदिपर्वणि-२३७.२१-२७.

२. 'अन्ये तु' इति क्वचित् ।

त्र । एतस्यां जायते पुत्रो स मे पुत्रो भविष्यति ।।' इति वचनात् अर्जुनेन नाम्ना बभ्रुवाहनो जातः । सः पूर्वं क इत्यत आह– **पूर्वमिति** ।। पूर्वं जयन्तो जयन्ताख्यः इन्द्रसुतः यः सः कामदेवांशेन युक्तः सन् बभ्रुवाहनो जातः इति सम्बन्धः ।। १६१ ।।

**पुत्रं वीरं जनयित्वाऽर्जुनोऽतो गच्छन् प्रभासं [1]शापतो ग्राहदेहाः ।**
**अमूमुचच्चाप्सरसः पञ्च[2] ताभिर्गृहीतः प्रविकृष्य तीरम् ।।१६२।।**

**वेदाङ्गतीर्थीया–** अतः पाण्ड्यविषयात् ।। १६२ ।।

**वरदराजीया–** द्विजशापेन ग्राहदेहाः जलचररूपाः पञ्चाप्सरसः शापादमुच्यत । ताभिरप्सरोभिः गृहीतस्सन् तीरं प्रति युगपत् प्रविकृष्य ।। १६२ ।।

**अनन्तभट्टीया–** अतः पाण्ड्यदेशात् गच्छन् ग्राहदेहाः जलचरदेहाः तीरं प्रविकृष्य प्रापय्य ।।१६२-१६४ ।।

**जनार्दनीया–** अतः पाण्ड्यविषयात् गच्छन् । शापतः विप्रशापात् ग्राहदेहाः ग्राहो जलचरविशेषः, तद्देहं प्राप्ता इत्यर्थः । पञ्चाप्सरसः अमूमुचन्, शापत इति शेषः । किं कृत्वा? ताभिः ग्राहदेहं प्राप्ताप्सरोभिः गृहीतः सन् तीरं प्रति प्रविकृष्य ।। १६२ ।।

**भावचन्द्रिका–** प्रभासमुद्दिश्य गच्छन् अयं मार्गे कन्यातीर्थे शापतो ग्राहदेहाः अतो जलग्रहाः मकराः युगपत् अव्यवधानेन 'एतास्तु मम ताः सख्यः चतस्रोऽन्या जले स्थिताः । एता अपि महाबाहो मुनिशापात् विमोक्षय ।।' इति भारते (१.२३७.२०) आदौ उमायाः वचनोक्तेः ।। १६२-१६४ ।।

**चट्टी–** सः अर्जुनः वीरं पुत्रं जनयित्वा अतः पाण्ड्यदेशात् प्रभासं प्रतिगच्छन् शापतो विप्रशापात् ग्राहदेहाः ग्राहो जलचरविशेषः तस्य देहं प्राप्ता इत्यर्थः । पञ्चाप्सरसः अमूमुचत्, शापादिति शेषः । किं कृत्वा? ताभिः ग्राहदेहं प्राप्ताप्सरोभिः गृहीतस्सन् तीरं प्रति प्रविकृष्य ।। १६२ ।।

**एवं हि तासां शापमोक्षः प्रदत्तो यदाऽखिला वो युगपत् सम्प्रकर्षेत् ।**
**एकस्तदा निजरूपाप्तिरेवेत्यलं तुष्टेन ब्राह्मणेनाऽनतानाम् ।।१६३।।**

---

१. '..अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया । अहं च सौरभेयी च समीची बुद्बुदा लता । यौगपद्येन तं विप्रं अभ्यगच्छाम भारत ।। गायन्त्योऽथ हसन्त्यश्च लोभयित्वा च तं द्विजम् । स च नास्मासु कृतवान् मनो वीर कथञ्चन ।। नाकम्पत महातेजाः स्थितस्तपसि निर्मले ।। सोऽशपत् कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ । ग्राहभूता जले यूयं चरिष्यथ शतं समाः ।।' आदिपर्वणि २३६.२०-२३.

२. 'अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम् । कारन्धमं प्रसन्नं च हयमेधफलं च तत् । भारद्वाजस्य तीर्थं तु पापप्रशमनं महत् । एतानि पञ्च तीर्थानि ददर्श कुरुसत्तमः ।।' आदिपर्वणि- २३६.३-४. इति पञ्चतीर्थस्थ-ग्राहरूपाः अप्सरसः शापादमुचत् ।

**वेदाङ्गतीर्थीया–** कुतस्तासां शापः? केन वा दत्तः? कथं वा शापमोक्षः? कुत्र ताः स्थिताः इत्यत आह– **एवमित्यादिना** ।। १६३ ।।

**वरदराजीया–** ननु तीरं सम्प्रकर्षणमात्रेण कथं तासां शापमोक्षः इत्यत आह– **एवं हीति** ।। यदा अखिलाः सर्वाः वो युष्मान् एक एव सम्प्रकर्षेत् तदैव निजरूपाप्तिः अप्सरसरूपप्राप्तिः भविष्यति इति शापमोक्षः आनतानां शरणागतानां तासां अलं सम्यक् तुष्टेन ब्राह्मणेन दत्तो हि ।। १६३ ।।

**जनार्दनीया–** प्रविकर्षणे निमित्तमाह– **एवमिति** ।। आनतानां शरणं प्राप्तानां तासां अप्सरसाम् । युगपत् एकदैव ।। १६३ ।।

**चट्टी–** ननु तीरं प्रति प्रविकर्षणमात्रेण कथं तासां शापमोक्ष इत्यत आह– **एवमिति** ।। यदा अखिलाः सर्वाः वो युष्मान् एक एव युगपत् सम्प्रकर्षेत् तदैव निजरूपस्याप्तिः प्राप्तिः भविष्यतीति आनतानां नम्राणां तासां अलं सम्यक् तुष्टेन ब्राह्मणेन एवं शापमोक्षः प्रदत्तो हि ।। १६३ ।।

**विप्रापहासात् कुत्सितयोनितस्ताः कन्यातीर्थे पाण्डवः सम्प्रमोच्य ।**
**प्राप्तः प्रभासं [1]वासुदेवानुजातां शुश्राव [2]रामेण सुयोधनोद्यताम् ।।१६४।।**

**वेदाङ्गतीर्थीया–** सुयोधनोद्यतां दुर्योधनाय दातुमुद्यताम् ।। १६४-१६६ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'विप्रापहासात् कुत्सितयोनितः..' इति श्लोके 'रामेण सुयोधनोद्यताम्' इत्यस्य रामकर्तृकसुयोधनसम्प्रदानकदानोद्योगविषयभूतामित्यर्थः । एतेन सुयोधनसम्प्रदानकदानोद्योग-विषयभूतामिति वक्तव्यम् । सुयोधनोद्यतामिति कथनमनुपपन्नमिति दूषणं पराकृतम् । सुयोधनशब्देन सुयोधनसम्प्रदानकदानं गृह्यते । उद्यतशब्देन उद्योगविषयत्वं गृह्यते । सुयोधनाय उद्यताम् इति विग्रह इति च स्वीकृत्य सुयोधनसम्प्रदानकदानोद्योगविषयभूतामित्यर्थ उच्यत इत्यभ्युपगमात् ।। १६४-१९१ ।।

**वरदराजीया–** ब्राह्मणशापे निमित्तमाह– **विप्रापहासादिति** ।। विप्रं प्रत्यापहासात् निमित्तात् कुत्सितयोनितः जलचरयोनितः ताः अप्सरसः कन्यातीर्थे पाण्डवोऽर्जुनः सम्प्रमोच्य मोचयित्वा, प्रभासं प्राप्य, वासुदेवस्य अनुजातां पूर्वोक्तां सुभद्रां रामेण बलभद्रेण सुयोधनोद्यतां सुयोधनाय दातुं उद्युक्तां शुश्राव अशृणोत् ।।१६४।।

---

१. 'वासुदेवानुजां ताम्' इति चट्टीपाठः ।

२. राजोवाच । ब्रह्मन् वेदितुमिच्छामः स्वसारं रामकृष्णयोः । यथोपयेमे विजयो या ममासीत् पितामही ।।१।। श्रीशुक उवाच– अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः । गतः प्रभासमशृणोत् मातुलेयीं स आत्मनः ।।२।। दुर्योधनाय रामस्तां दास्यतीति न चापरे । तल्लिप्सुः स यतिर्भूत्वा त्रिदण्डी द्वारकामगात् ।।३।। इमानि श्लोकानि गीताप्रेसद्वारामुद्रिते भागवतपुस्तके दशमस्कन्धे षडशीतितमेऽध्याये वर्तन्ते । तथा बरोडानगरमुद्रिते बहुटिप्पणीसंवलितभागवतपुस्तकेऽपि ८६ अध्याये उपलभ्यन्ते ।

**अनन्तभट्टीया–** सुयोधनोद्यतां सुयोधनाय... ।। १६४ ।।

**जनार्दनीया–** शापनिमित्तमाह– **विप्रेति** ।। पाण्डवोऽर्जुनः विप्रापहासात् विप्रं प्रत्यपहासात् निमित्तात् कुत्सितयोनितः ग्राहयोनितः ताः अप्सरसः कन्यातीर्थे सम्प्रमोच्य, प्रभासं प्राप्तः सन्, वासुदेवानुजातां कृष्णभगिनीं सुभद्रां रामेण सुयोधनोद्यतां दुर्योधनाय दातुमुद्यतां शुश्राव ।। १६४ ।।

**चट्टी–** ब्राह्मणशापनिमित्तमाह– **विप्रापहासादिति** ।। पाण्डवः अर्जुनः विप्रापहासात् विप्रं प्रत्यपहासान्निमित्तात् कुत्सितयोनितः जलचरयोनितः ताः अप्सरसः कन्यातीर्थे सम्प्रमोच्य मोचयित्वा प्रभासं प्राप्तः सन् तां वासुदेवस्य अनुजां सुभद्रां रामेण सुयोधनोद्यतां दुर्योधनाय दातुमुद्यतां शुश्राव ।। १६४ ।।

**विचिन्त्य कार्यं यतिरूपं गृहीत्वा कुशस्थलीं प्रययौ तं समीपे ।**
**प्राप्तं कृष्णः प्राहसत् संविजानन् सत्यासहायः शयनीयाधिरूढः ।।१६५।।**

**वरदराजीया–** कार्यं स्वप्रयोजनं विचिन्त्य यतिरूपं यतिवेषं गृहीत्वा स्वीकृत्य कुशस्थलीं द्वारकां प्रययौ । कृष्णः तं अर्जुनं समीपे प्राप्तं विजानन् सत्यासहायः सत्यासमेतः शयनीयं मञ्चकं अधिरूढः सन् प्राहसत् ।। १६५ ।।

**अनन्तभट्टीया–** विजानन् सुभद्रां ते प्रददानीति सत्यमिति वाक्यम् ।। १६५-१७४ ।।

**जनार्दनीया–** कार्यं विचिन्त्य स्वस्य सुभद्राप्तिर्यथा स्यात्तथा कार्यं विचिन्त्येत्यर्थः । शयनीयाधिरूढः मञ्चकारूढः, रात्राविति शेषः । समीपे प्राप्तं तमर्जुनं संविजानन् कृष्णः प्राहसत् ।। १६५ ।।

**भावचन्द्रिका–** समीपे द्वारकायाः ।। १६५-१८४ ।।

**चट्टी–** अर्जुनः कार्यं स्वप्रयोजनं विचिन्त्य स्वस्य सुभद्राप्राप्तिः यथा स्यात्तथा कार्यं विचिन्त्येत्यर्थः । यतिरूपं यतिवेषं गृहीत्वा स्वीकृत्य कुशस्थलीं द्वारकां प्रययौ । शयनीयाधिरूढः मञ्चकारूढः, रात्राविति शेषः । सत्यासहायः सत्यभामासमेतः श्रीकृष्णः समीपे प्राप्तं अर्जुनं संविजानन् प्राहसत् ।। १६५ ।।

**[१]सर्वज्ञा सा लीलया हासहेतुमपृच्छत् तं सोऽपि तस्यै बभाषे ।**
**लीलाभाजौ दर्शनार्थं पुनस्तावगच्छतां रैवतं शैलराजम् ।।१६६।।**

**व्यासतीर्थीया–** *लीलाभाजौ लीलां भजन्तौ ।। १६६-१७० ।।*

**वरदराजीया–** *सर्वज्ञा सत्या लीलया विनोदेन तं कृष्णं प्रति हासहेतुं हासकारणं किमर्थं हासः कृत इत्यपृच्छत् । सोऽपि कृष्णोऽपि तस्यै सत्यायै बभाषे । अर्जुनः यतिरूपेण समीपे आगतोऽस्तीति बभाषे इत्यर्थः । लीलां भजन्तौ इति लीलाभाजौ दर्शनार्थं, अर्जुनस्य इति शेषः । तौ सत्याकृष्णौ ।।१६६।।*

---

१. 'सर्वज्ञाना' इति चट्टीपाठः ।

**जनार्दनीया–** सा सत्या । लीलया विनोदेन । सोऽपि कृष्णोऽपि वभाषे, अर्जुनस्यागमनमिति शेषः । तौ अगच्छताम्, पार्थं द्रष्टुमिति शेषः ।। १६६ ।।

**चट्टी–** सर्वज्ञाना सत्या लीलया तं श्रीकृष्णं हासहेतुं हासकारणं अपृच्छत् । सः कृष्णोऽपि तस्यै सत्यायै वभाषे । अर्जुनः यतिरूपेण समीपे आगतः इति वभाषे इत्यर्थः । लीलाभाजौ तौ सत्याकृष्णौ पुनर्दर्शनार्थं, अर्जुनस्येति शेषः । रैवतं रैवतनामकं शैलराजमगच्छताम् ।। १६६ ।।

**आक्रीडोऽसौ वृष्णिभोजान्धकानां तत्रापश्यत् केशवः फल्गुनं तम् ।**
**स्वसुर्दाने स प्रतिज्ञां रहोऽस्मै चक्रे कृष्णोऽथाऽसदत् सर्ववृष्णीन्।।१६७।।**

**वेदाङ्गतीर्थीया–** असौ रैवतः ।। १६७-१७० ।।

**वरदराजीया–** असौ रेवतः वृष्ण्यादीनां आक्रीडः क्रीडास्थानम् । तत्र रैवते । रहः एकान्ते स्वसुः सुभद्रायाः अस्मै अर्जुनाय दाने प्रतिज्ञां चक्रे । सुभद्रां तुभ्यं दास्यामीति प्रतिज्ञां चकारेत्यर्थः ।।१६७।।

**जनार्दनीया–** असौ रैवतः आक्रीडः क्रीडास्थानम् । तत्र रैवते । अस्मै अर्जुनाय स्वसुः सुभद्रायाः दाने दानविषये । अथ दानप्रतिज्ञानन्तरम् । कृष्णः आसदत् प्राप ।। १६७ ।।

**चट्टी–** असौ रैवतः वृष्णिभोजान्धकानां आक्रीडः क्रीडास्थानं तत्र रैवते केशवः श्रीकृष्णः तं फल्गुनं अपश्यत् । सः कृष्णः अस्मै अर्जुनाय स्वसुः सुभद्रायाः दाने दानविषये रहः प्रतिज्ञां चक्रे । अथ प्रतिज्ञानन्तरं श्रीकृष्णः सर्ववृष्णीन् समस्तयादवान् आसदत् प्राप ।। १६७ ।।

**दृष्ट्वा गिरौ रौहिणेयो यतीन्द्रवेषं पार्थं ज्ञातियुक्तः प्रणम्य ।**
**चक्रे पूजां फल्गुनोऽपि प्रणामं गुणज्येष्ठोऽसीति चक्रे बलाय ।।१६८।।**

**वरदराजीया–** गिरौ रैवतके रौहिणेयो रामो यतीन्द्रस्य वेष इव वेषः यस्य तम् । दृष्ट्वा ज्ञातिभिः यादवैः युक्तः प्रणम्य पूजां चक्रे । त्वं गुणज्येष्ठोऽसीति वलाय प्रणामं चक्रे ।। १६८ ।।

**जनार्दनीया–** यतीन्द्रवेषवद्वेषो यस्य तम् । फल्गुनोऽपि गुणज्येष्ठः ज्ञानभक्त्यादिगुणैः श्रेष्ठोऽसीति । स्वावराणां गुरुत्वे प्राप्ते 'मर्यादार्थं तु ते पूज्याः' (ता.नि-१.१२६) इति जानन्नर्जुनः स्वस्य यत्याश्रमा-भावाद्गुणज्येष्ठोऽसीति व्याजेन प्रणामं चक्र इति अपिशब्दाभिप्रायः । अन्यथा 'स्वावराणाम्' इति वचनस्याप्रामाण्यापत्तिः ।। १६८ ।।

**चट्टी–** गिरौ रैवतपर्वते रौहिणेयः रामः यतीन्द्रस्य वेष इव वेषो यस्य तं पार्थं दृष्ट्वा ज्ञातिभिर्यादवैः युक्तः सन् प्रणम्य पूजां चक्रे । फल्गुनोऽपि त्वं गुणज्येष्ठः ज्ञानभक्त्यादिगुणैः ज्येष्ठः असीति वलाय प्रणामं चक्रे । स्वावराणां गुरुत्वे प्राप्ते 'मर्यादार्थं ते तु पूज्याः' इति जानन् अर्जुनः स्वस्य यत्याश्रमाभावात् गुणज्येष्ठोऽसीति व्याजेन प्रणामं चक्र इति भावः।। १६८ ।।

**सर्वज्ञं तं वाग्मिनं वीक्ष्य रामः कन्यागारे वर्षकाले निवासम् ।**
**सत्कारपूर्वं कारयेत्याह कृष्णं नैवेत्यूचे केशवो दोषवादी ।।१६९।।**

**वरदराजीया–** रामः तमर्जुनं सर्वज्ञं सर्ववेत्तारं वाग्मिनं दृष्ट्वा कन्यागारे सत्कारपूर्वं वर्षकाले वासं कारयेति कृष्णामाह । केशवः कृष्णः दोषवादी आरोपितदोषान् वदन् नैव वासयेत्यूचे ।।१६९।।

**जनार्दनीया–** कन्यागारे कन्यागृहे वासं कारयेति कृष्णमाह । दोषवादी आरोपितवादीत्यर्थः । केशवो नैवेत्यूचे ।। १६९ ।।

**चट्टी–** रामः सर्वज्ञं वाग्मिनं तं यतिं वीक्ष्य कन्यागारे कन्यागृहे सत्कारपूर्वं वर्षकाले निवासं कारयेति श्रीकृष्णमाह । दोषवादी अरोपितदोषवादीत्यर्थः । केशवः श्रीकृष्णः नैवेत्यूचे ।। १६९ ।।

**[1]युवा बली दर्शनीयोऽतिवाग्मी नायं योग्यः कन्यकागारवासम् ।**
**इत्युक्तवन्तं राम आहाऽऽप्तविद्ये[2] नास्मिञ्छङ्केत्येव लोकाधिनाथम् ।।१७०।।**

**वरदराजीया–** दोषवादीत्येतत् स्पष्टयति– **युवेत्यादिना** ।। कन्यकागारवासं प्रति न योग्य इत्युक्तवन्तं कृष्णं रामः आह । आप्तविद्येऽस्मिन् यतौ नैव शङ्केति लोकाधिनाथं कृष्णं प्राहेति सम्बन्धः ।। १७० ।।

**जनार्दनीया–** केशवोक्तदोषान् स्पष्टयति– **युवेत्यादिना** ।। दर्शनीयः रूपीत्यर्थः । कन्यागारवासं कर्तुं अयं यतिः योग्यो नेति सम्बन्धः । रामः कृष्णमाह । आप्तविद्ये आप्ता प्राप्ता विद्या तत्त्वविद्या येन तस्मिन् तथा । अस्मिन् यतौ नैव शङ्का इत्याहेति सम्बन्धः ।। १७० ।।

**चट्टी–** केशवोक्तदोषान् स्पष्टयति– **युवेत्यादिना** ।। युवा बली दर्शनीयः रूपीत्यर्थः । अतिवाग्मी अयं यतिः कन्यागारे वासं कर्तुं योग्यो नैवेति सम्बन्धः । इत्युक्तवन्तं लोकाधिनाथं श्रीकृष्णं रामः आह । किमिति? आप्तविद्ये अस्मिन् यतौ नैव शङ्केति आहेति सम्बन्धः ।। १७० ।।

**नास्मन्मते रोचते त्वन्मतं तु सर्वेषां नः पूज्यमेवास्तु तेन ।**
**इत्युक्त्वा तं केशवः सोदरायै शुश्रूषस्वेत्याह सन्तं यतीन्द्रम् ।।१७१।।**

**व्यासतीर्थीया–** सन्तं विद्वांसम् ।। १७१ ।।

---

१. 'बलवान् दर्शनीयश्च वाग्मी श्रीमान् बहुश्रुतः । कन्यापुरसमीपे तु न युक्तमिति मे मतिः ।। गुरुः शास्ता च नेता च शास्त्रज्ञो धर्मवित्तमः । त्वयोक्तं न विरुध्येहं करिष्यामि वचस्तव ।। शुभाशुभस्य विज्ञाता नान्योऽस्ति भुवि कश्चन ।।' आदिपर्वणि-२४०.२६-२८.

२. 'अयं देशातिथिः श्रीमान् सर्वधर्मभृतां वरः । धृतिमान् विनयोपेतः सत्यवादी जितेन्द्रियः ।। यतिलिङ्गधरो ह्येष को विजानाति मानसम् ।।' आदिपर्वणि-२४०.२९-३०.

**वेदाङ्गतीर्थीया–** सन्तं स्थितम् ।। १७१-१७२ ।।

**वरदराजीया–** अस्मन्मते न रोचते । त्वन्मतं तु नः सर्वेषां पूज्यमेव । तेन कारणेन अस्तु त्वयोक्तमिति तं रामं प्रत्युक्त्वा सोदरायै सुभद्रायै सन्तं सज्जनं यतीन्द्रं शुश्रूषस्वेत्याह ।।१७१।।

**जनार्दनीया–** अस्मन्मते न रोचते न प्रशस्यते । त्वन्मतं नः सर्वेषां पूज्यमेव । तेन कारणेन अस्तु वासं करोतु । केशवः तं रामं प्रति इत्युक्त्वा । सन्तं स्थितम् । यतीन्द्रं शुश्रूषस्वेति आह ।। १७१ ।।

**ताम्रपर्णीया–** सन्तं वर्षर्तौ अवस्थितम् ।। १७१-२०१ ।।

**चट्टी–** अस्मन्मते न रोचते न प्रशस्यते । त्वन्मतं तु नः सर्वेषां पूज्यमेव । तेन कारणेन अस्तु वासं करोतु । केशवस्तं रामं प्रत्युक्त्वा, सोदरायै सुभद्रायै सन्तं सज्जनं स्थितं वा यतीन्द्रं शुश्रूषस्वेत्याह ।।१७१।।

**नित्याप्रमत्ता साधु सन्तोषयेति प्रोक्ता तथा साऽकरोत् सोऽपि तत्र ।**
**चक्रे मासान् वार्षिकान् सत्कथाभिर्वासं वाक्यं श्रद्दधानो हरेस्तत् ।।१७२।।**

**वरदराजीया–** नित्याप्रमत्ता प्रमादरहिता साधु सम्यक् सन्तोषय सन्तुष्टं कुर्विति प्रोक्ता सा सुभद्रा तथा यथा कृष्णेनोक्तं तथा अकरोत् । सः अर्जुनोऽपि तत्र द्वारकायां वार्षिकान् चतुरो मासान् वासं चक्रे। हरेः श्रीकृष्णस्य तद्रहसि प्रोक्तवाक्यं श्रद्दधानो विश्वसन् ।। १७२ ।।

**जनार्दनीया–** नित्याप्रमत्ता प्रमादरहिता । हरेः कृष्णस्य तद्वाक्यं सुभद्राप्रदानविषये उक्तं वाक्यं श्रद्दधानः विश्वासं कुर्वन् सोऽपि अर्जुनः तत्र कन्यागारे वार्षिकान् मासान् श्रावणादिचतुरो मासान् सत्कथाभिः, रमयन्निति शेषः । वासं चक्रे ।।१७२।।

**चट्टी–** नित्याप्रमत्ता नित्यं अप्रमत्ता प्रमादरहिता सती साधु सम्यक् सन्तोषय सन्तुष्टं कुर्विति प्रोक्ता सा सुभद्रा तथा अकरोत् । सोऽर्जुनोऽपि तत्र द्वारकायां हरेः तद्वाक्यं सुभद्राप्रदानविषये उक्तं वाक्यं श्रद्धधानः विश्वासं कुर्वन् सन् वार्षिकान् मासान् श्रावणादिचतुरो मासान् सत्कथाभिः रमन् वासं चक्रे ।।१७२।।

**संयाचितः फल्गुनेनाऽह वाक्यं यद् वासुदेवस्तत्र जानाति कश्चित् ।**
**ऋते पित्रोर्विपृथोः सात्यकेर्वा सुभद्रां ते प्रददानीति सत्यम् ।।१७३।।**

**वेदाङ्गतीर्थीया–** फल्गुनेन संयाचितः वासुदेवः सुभद्रां ते प्रददानीति यत् सत्यं वाक्यमाह तत् कश्चित् नैव जानाति ।। १७३-१७७ ।।

**वरदराजीया–** फल्गुनेन संयाचितः प्रार्थितो वासुदेवो यद्वाक्यं सुभद्रां ते प्रददीनीत्यैतत् सत्यं इत्येवं रूपं तद्वाक्यं पित्रादीन् ऋते न कश्चिज्जानाति । वासुदेवाज्ञया एव च चत्वारो जानन्तीत्यर्थः ।।१७३।।

**जनार्दनीया–** फल्गुनेन संयाचितः वासुदेवः सुभद्रां ते प्रददानीति यत्सत्यं वाक्यमाह तत् पित्रोर्देवकीवसुदेवयोः । विपृथोः सात्यकेर्ऋते वा अन्यो वा कश्चिन्न जानाति ।। १७३ ।।

**चट्टी–** फल्गुनेन संयाचितः वासुदेवः श्रीकृष्णः सुभद्रां ते प्रददानीति यत्सत्यं वाक्यमाह तत् पित्रोः देवकीवसुदेवयोः विपृथोः सात्यकेः वा ऋते अन्यः कश्चिन्न जानाति ।।१७३।।

**[१]अस्त्रे शस्त्रे तत्त्वविद्यासु चैव शिष्यः शैनेया वासुदेवेन्द्रसून्वोः ।**
**तस्मादस्मै कथयामास कृष्णः स्वशिष्यत्वाद् विपृथोश्चापि सर्वम् ।।१७४।।**

**व्यासतीर्थीया–** विपृथुसात्यक्योः स्वाभिप्रायज्ञाननिमित्तमाह– **अस्त्र इति** ।। १७४ ।।

**वरदराजीया–** अत्र हेतुमाह– **अस्त्र इत्यादिना** ।। वासुदेवेन्द्रसून्वोः कृष्णार्जुनयोः अस्त्रादौ शैनेयः सात्यकिः शिष्यो यस्मात् तस्मादस्मै शैनेयाय कथयामास । विपृथोश्च स्वशिष्यत्वात् सर्वं कथयामासेति सम्बन्धः ।।१७४।।

**जनार्दनीया–** पित्रोः स्वकृतप्रतिज्ञाकथनं युक्तमेव । सात्यकिविपृथोः कथने कारणमाह– **अस्त्र इति** ।।१७४।।

**चट्टी–** पित्रोः स्वकृतप्रतिज्ञाकथनं युक्तमेव । सात्यकेः विपृथोः च कथनकारणमाह– **अस्त्र इति** ।। यस्मात् शैनेयः सात्यकिः अस्त्रे शस्त्रे तत्त्वविद्यासु च वासुदेवेन्द्रसून्वोः कृष्णार्जुनयोः शिष्यः तस्मादस्मै सात्यकये श्रीकृष्णः कथयामास । विपृथोश्च स्वशिष्यत्वात् सर्वमपि कथयामासेति सम्बन्धः ।।१७४।।

**[२]अन्ये सर्वे वासुदेवस्य पार्थान् प्रियान् नित्यं जानमाना अपि स्म ।**
**रामेणाऽदिष्टा उद्धवोऽथाऽहुकाद्या हार्दिक्याद्या नैव दित्सन्ति जिष्णोः ।।**

**व्यासतीर्थीया–** सात्यकिविपृथुभ्यामन्येभ्यः कस्मात् स्वाभिप्रायं नाकथयत् इत्यतो निमित्तमाह– **अन्य इति** ।। १७५-१७६ ।।

---

१. 'क्षेमं स कच्चिद् युयुधान आस्ते यः फल्गुनाल्लब्धधनूरहस्यः । लेभेऽञ्जसाऽधोक्षजसेवयैव गतिं तदीयां यतिभिर्दुरापाम् ।।' भागवते-३.१.३१ । 'यत्तत्सख्युस्तु पूर्वेण अर्जुनादुपशिक्षितम् । प्रगाढं लघु चित्रं च दर्शयन् हस्तलाघवम् ।।' भीष्मपर्वणि-७४.२ । 'ऐन्द्रमस्त्रं च वार्ष्णेयो योजयामास भारत । विजयाद्यनुप्राप्तं माधवेन यशस्विना ।।' भीष्मपर्वणि-८२.४२ । 'धनञ्जयोपदेशेन श्रेष्ठमिष्वस्त्रकर्मणि ।' द्रोणपर्वणि-१०.३६। 'अर्जुनं ये च संश्रित्य राजपुत्रा महाबलाः । अशिक्षन्त धनुर्वेदं रौरवाजिनवाससः । तत्रैव शिक्षिता राजन् कुमारा वृष्णिनन्दनाः । रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकिः । सुधर्मा चानिरुद्धश्च शैब्यश्च नरपुङ्गवः ।।' सभापर्वणि-४.३९-४१.

२. 'अन्येऽपि सर्वे' इति चट्टीपाठः ।

**वरदराजीया–** तदेवमन्येभ्योऽपि किमिति न कथयदित्यत आह– **अन्य इत्यादिना** ।। वासुदेवस्य प्रियं जानमाना अप्यन्ये सर्वे उद्धवाद्याः रामेण आदिष्टा आज्ञापिता जिष्णोः अर्जुनस्य अर्थे नैव दित्सन्ति दातुं नैवेच्छन्ति ।। १७५ ।।

**अनन्तभट्टीया–** सात्यकिविपृथुव्यतिरिक्तं किमिति नाकथयदित्यत आह– **अन्य इति** ।। दित्सन्ति दातुमिच्छन्ति, सुभद्रामिति शेषः ।।१७५।।

**जनार्दनीया–** तर्हि अन्येभ्यः किमर्थं नाकथयदित्यत आह– **अन्य इति** ।। अन्ये उद्धवादियादवाः रामेणादिष्टाः आज्ञापिताः सन्तः जिष्णोः अर्जुनस्य नैव दातुमिच्छन्ति ।। १७५ ।।

**चट्टी–** तर्हि अन्येभ्यः किमर्थं नाकथयत् इत्यत आह– **अन्य इति** ।। पार्थमर्जुनं वासुदेवस्य नित्यं प्रियं जानमाना अपि अन्ये उद्धवः अथाहुकाद्याः हार्दिक्याद्याः सर्वेऽपि रामेणादिष्टाः आज्ञापिताः सन्तः जिष्णोरर्जुनस्य नैव दित्सन्ति दातुं नेच्छन्ति स्म ।। १७५।।

**दुर्योधने दातुमिच्छन्ति सर्वे रामप्रियार्थं जानमाना हरेस्तत् ।**
**अप्यप्रियं राक्षसावेशयुक्तास्तस्मात् सर्वान् वञ्चयामास कृष्णः ।।१७६।।**

**वरदराजीया–** प्रत्युत रामप्रियार्थं सर्वे उद्धवाद्याः दुर्योधने दुर्योधनार्थं सुभद्रां दातुं इच्छन्ति । हरेः कृष्णस्य तत् दुर्योधने सुभद्रादानमप्रियं जानमाना अपि यतः राक्षसावेशयुक्ताः तस्मात् दुर्योधने दातुमिच्छन्ति तस्मात् सर्वान् उद्धवादीन् वञ्चयामासेत्यर्थः ।।१७६।।

**अनन्तभट्टीया–** सुयोधनाय सुभद्रादानम् ।।१७६।।

**जनार्दनीया–** तत् दुर्योधनस्य सुभद्राप्रदानं हरेः अप्रियं जानमाना अपि, रामप्रियार्थं दुर्योधने दुर्योधनार्थं दातुमिच्छन्ति । तत्कारणमाह– **राक्षसेति** ।। तस्मादुद्धवादीन् वञ्चयामासेत्यर्थः ।।१७६।।

**चट्टी–** तद् दुर्योधनस्य सुभद्राप्रदानं हरेः श्रीकृष्णस्य अप्रियं जानमाना अपि सर्वे राक्षसावेशयुक्ताः सन्तः रामप्रियार्थं दुर्योधने दुर्योधनार्थं दातुमिच्छन्ति । तस्मात् कृष्णः सर्वानुद्धवादीन् वञ्चयामास ।।१७६।।

**प्रद्युम्नसाम्बप्रमुखाश्च वञ्चिता ययुस्तीर्थार्थं रामयुक्ताः समग्राः ।**
**पिण्डोद्धारं तत्र महोत्सवेषु स्वावर्तयत्सु क्वचिदूचे सुभद्रा ।।१७७।।**

**व्यासतीर्थीया–** चान्द्रमते उभयपदित्वात् धातूनां वर्तत्सु इति ।। १७७ ।।

**वरदराजीया–** न केवलमुद्धवादयः किन्तु प्रद्युम्नसाम्बप्रमुखाः स्वसुताश्च वञ्चिताः । तीर्थार्थं तीर्थयात्रार्थं पिण्डोद्धारं ययुः । तत्र पिण्डोद्धारे महोत्सवेषु स्वावर्तयत्सु सम्यक् प्रवर्तमानेषु सत्सु क्वचिदेकान्ते सुभद्रा ऊचे, अर्जुनं प्रतीति शेषः ।। १७७ ।।

**जनार्दनीया–** केवलमुद्धवाद्याः वञ्चिता इति न । किन्तु प्रद्युम्नसाम्बप्रमुखाः पुत्राश्च वञ्चिताः । तीर्थार्थं तीर्थयात्रार्थं पिण्डोद्धारं प्रति ययुः । तत्र पिण्डोद्धारे स्वावर्तयत्सु सम्यक् प्रवर्तमानेषु कचित् कस्मिंश्चित् समये सुभद्रा ऊचे, यतिं प्रतीति शेषः ।।१७७।।

**चट्टी–** न केवलमुद्धवाद्या एव वञ्चिताः किन्तु प्रद्युम्नादयश्च वञ्चिता इत्याह– **प्रद्युम्न इति** ।। रामयुक्ताः प्रद्युम्नसाम्बमुखाः समग्राः सर्वे च वञ्चिताः तीर्थार्थं तीर्थयात्रार्थं पिण्डोद्धारं प्रति ययुः । तत्र पिण्डोद्धारे महोत्सवेषु स्वावर्तयत्सु सत्सु सम्यक् प्रवर्तमानेषु सत्सु कचित् कस्मिंश्चित् समये सुभद्रा ऊचे, यतीन्द्रमिति शेषः ।। १७७ ।।

## यते तीर्थानाचरन् बान्धवांस्त्वमद्राक्षीर्नः कचिदिष्टान् स्म पार्थान् ।
## कुन्तीं कृष्णां चेत्याह पृष्टः स पार्थ ओमित्येतेषामाह चानामयं सः ।।१७८।।

**वेदाङ्गतीर्थीया–** अनामयं क्षेमम् ।। १७८-१८३ ।।

**वादिराजतीर्थीया–** 'पृष्टः स पार्थ ओम्' इत्यत्र पृष्टः सः सन्यासी ओमित्याह । अहं सपार्थः पार्थैः सह वहुकालं स्थितः अस्मीति चाह । तेषामनामयं चाह । पार्थैः सह मया वहुकालं स्थितम् । तेन सर्वं जानामीति भारतकथासूचनाय 'सः पार्थः' इत्युक्तम् । अतस्तच्छब्दद्वयवैयर्थ्यशङ्काया नावकाश इति ज्ञेयम् ।। १७८-१९२ ।।

**मधुसूदनीया–** एषां पाण्डवानां अनामयं आरोग्यं प्रति च पृष्टः स पार्थः एषां अनामयं आरोग्यश्चाह । पाण्डवाः क्षेमेण आसते इत्यनुक्त्वा अनामयेनासते किमित्यतो अनामयशब्देन क्षत्रियाणां क्षेमं प्रष्टव्यमिति सूचनाय अनामयशब्दः प्रयुक्त इति बोध्यम् । तथाचोक्तम्- 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रवन्धूननामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ।।' इति कौर्मे (२.१२.२५) ।। १७८-२००।।

**वरदराजीया–** किमिति? हे यते! तीर्थान्याचरन् पर्यटन् त्वं नोऽस्माकमिष्टान् वान्धवान् पार्थान् कचिदद्राक्षीः किं दृष्टवानसि? तथा कुन्तीं कृष्णां च अद्राक्षीः किमिति पृष्टः पार्थः ओमिति दृष्टवानस्मि इत्याह । एतेषां पार्थानां अनामयं क्षेमं चाह ।। १७८ ।।

**अनन्तभट्टीया–** अनामयं क्षेमम् ।।१७८-१८४ ।।

**जनार्दनीया–** हे यते! त्वं तीर्थानि आचरन् पर्यटन् पार्थान् कचित् अद्राक्षीः किम् दृष्टवानसि? कुन्तीं कृष्णां चेति सम्वन्धः । इति पृष्टः पार्थ ओमित्याह दृष्टवानस्मीत्याह । एषां पार्थानामनामयं क्षेममाह ।।१७८।।

**अतिविशद–** 'यते तीर्थान्याचरन्...अनामयं सः' इत्यपृष्टोत्तरमुच्यते । अर्जुनेन कथमेतदसङ्गतमुच्यत इति चेन्न । इत्थमक्षरयोजना । हे यते! तीर्थान्याचरन् नः इष्टान् बान्धवान् तथा कुन्तीं कृष्णां अद्राक्षीः कच्चित् दृष्टवानसि किमित्यर्थः । कच्चिदित्यस्याप्यव्ययत्वात् कच्चिदित्यर्थः । तेन सुखेन तिष्ठन्ति किमिति प्रश्नोऽपि ज्ञातव्यः । 'तेषामाह चानामयं सः' इत्युत्तरवाक्यात् । अन्यथा अर्जुनस्यापृष्टोत्तरदानेन अकुशलत्वापत्तेः । 'नापृष्टः कस्यचित् ब्रूयात्' इत्युक्तत्वात् । इति पृष्टः स पार्थः ओमित्याह स तेषामनामयञ्चाहेति । एवञ्च नासङ्गतिरिति भावः । अथवा 'अनापृष्टमपि ब्रूयुः गुरवो दीनवत्सलाः' (भागवते-३.७.३६) इति वाक्यात् सुभद्रागुरुत्वात् अनापृष्टमुक्तमिति । अत्र कच्चिदित्यस्य कुत्रचिदिति नार्थः । तथात्वे किमित्यादेरध्याहारो अपेक्षित इति भावः ।। १७८-२४४ ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ विंशोऽध्यायः ।।

**चट्टी–** हे यते! त्वं तीर्थान्याचरन्नः इष्टान् प्रियान् बान्धवान् पार्थान् कुन्तीं च कृष्णां च कच्चिदद्राक्षीः दृष्टवानसि? इति पृष्टः सः पार्थः ओमित्याह दृष्टवानस्मि इत्याह । सः पार्थः एषां पार्थानां अनामयं आरोग्यं प्रति च पृष्टः सन् एषामनामयं आरोग्यं चाह । पाण्डवाः 'क्षेमणासते' इत्यनुक्त्वा अनामयेनासते किमित्यतः अनामयशब्देन क्षत्रियाणां क्षेमं प्रष्टव्यमिति सूचनायानामयं प्रति पृष्ट इति । अनामयशब्दः प्रयुक्त इति बोध्यम् । तथा चोक्तम्- 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् । वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ।।' इत्यादि कौर्मे ।। १७८ ।।

**भूयः साऽवादीद् भगवन्निन्द्रसूनुर्गतस्तीर्थार्थं ब्राह्मणेभ्यः श्रुतो मे ।**
**कच्चिद् दृष्टो भवतेत्योमिति स्म पार्थोऽप्यूचे केति साऽपृच्छदेनम् ।।१७९।।**

**वरदराजीया–** सा सुभद्रा भूयः अवादीत् । किमिति? हे भगवन्! यते! इन्द्रसूनुरर्जुनः तीर्थार्थं तीर्थयात्रां गतो मे मया ब्राह्मणेभ्यः श्रुतः । कच्चित् तीर्थविशेषे भवता त्वया दृष्टः किमित्यवादीदिति सम्बन्धः । पार्थोऽपि ओमिति दृष्ट इति ऊचे । सा सुभद्रा केति दृष्टः इति एनं अर्जुनं अपृच्छत् ।।१७९।।

**जनार्दनीया–** भूयः सा अवादीत् । किमिति? हे भगवन्! यते! इन्द्रसूनुः तीर्थयात्रार्थं गत इति मे मया ब्राह्मणेभ्यः श्रुतः । भवता त्वया कच्चित्तीर्थे दृष्टः किमिति सम्बन्धः । पार्थः ओमिति स्म ऊचे । सापि केति कुत्रेति एनं यतिरूपं पार्थमपृच्छत् ।। १७९ ।।

**चट्टी–** भूयः पुनः पुनः सा सुभद्रा अवादीत् । किमिति? हे भगवन् यते! इन्द्रसूनुस्तीर्थयात्रार्थं गत इति मे मया ब्राह्मणेभ्यः श्रुतः । भवता त्वया कच्चिद् दृष्टः किमिति पूर्वेण सम्बन्धः । पार्थोऽपि ओमिति दृष्ट इत्यूचे । सा सुभद्रा केति कुत्रेत्येनं यतिरूपं पार्थमपृच्छत् ।। १७९ ।।

**अत्रैवेति स्मयमानं च पार्थं पुनःपुनः पर्यपृच्छच्छुभाङ्गी ।**
**सोऽप्याहोन्मत्ते सोऽस्मि हीति स्मयँस्तां फुल्लाक्षी तं सा ददर्शातिहृष्टा।।१८०।।**

**वरदराजीया–** अत्रैव तिष्ठतीति स्मयमानं स्मितं कुर्वाणं पार्थं प्रति पुनःपुनः वारं वारं शुभाङ्गी सुभद्रा अपृच्छत् । सोऽप्यर्जुनोऽपि स्मयन् स्मितं कुर्वन् तां सुभद्रां प्रत्याह । किमिति? हे उन्मत्ते! अत्रैवेति सूचितेऽपि शीघ्रबोधरहिते! सः अर्जुनोऽहं अस्मीत्याहेति सम्बन्धः । सा सुभद्रा अतिहृष्टा अत एव फुल्लाक्षी विकसितनयना सती तं पार्थं ददर्श अवलोकितवती ।। १८० ।।

**जनार्दनीया–** शुभाङ्गी मङ्गलाङ्गी । अत्रैव दृष्ट इति स्मयमानं विस्मयप्रापकं पार्थं पुनः पुनः पर्यपृच्छत् । सोऽपि आह । किमिति? हे उन्मत्ते! ज्ञानहीने! अत्रैवेति पुनः पुनरुक्तेऽपि बोधो न भवतीति उन्मत्ते इति सम्बोधनम् । सोऽर्जुनः अहमस्मि इति स्मयन् विस्मयं कुर्वन् तां सुभद्रां आहेति सम्बन्धः । फुल्लाक्षी विकसितनेत्रा सा तमर्जुनं ददर्श । फुल्लाक्षित्वे कारणमाह– **अतिहृष्टेति** ।।१८०।।

**चट्टी–** अत्रैव दृष्ट इति स्मयमानं स्मितं कुर्वाणं च पार्थं शुभाङ्गी सुभद्रा पुनः पुनः पर्यपृच्छत् । सोऽर्जुनोऽपि आह । किमिति? हे उन्मत्ते! अत्रैवेति सूचितेऽपि शीघ्रबोधरहिते! सोऽर्जुनः सोऽहमस्मीति स्मयन् स्मितं कुर्वन् तां सुभद्रामाहेति सम्बन्धः । सा सुभद्रा अतिहृष्टा अत एव फुल्लाक्षी विकसितलोचना सती तं पार्थं ददर्श ।।१८०।।

**ततो हर्षाल्लज्जया चोत्पलाक्षी किञ्चिन्नोचे पार्थ एनामुवाच ।**
**कामाविष्टो मुख्यकालो ह्ययं [१]नावुद्वाहार्थोऽस्त्विति [२]सा चैनमाह।।१८१।।**

**वरदराजीया–** ततः उत्पलाक्षी सुभद्रा लज्जया किञ्चिदपि नोचे । एनां सुभद्रां कामाविष्ट पार्थः उवाच । किमिति? नौ अवयोः अयं मुख्यः श्रेष्ठः कालः उत्तमः । ततः उद्वाहार्थोऽस्त्विति । सा सुभद्रा एनं पार्थं ।।१८१।।

**जनार्दनीया–** ततः अयमर्जुन इति ज्ञानानन्तरं हर्षादुत्पलाक्षी । पार्थः नौ आवयोः उद्वाहार्थे कामाविष्टः कामयुक्तः अयं कालः मुख्योऽस्तु इत्याहेति सम्बन्धः । सा एनमाह ।। १८१ ।।

**चट्टी–** ततोऽनन्तरं उत्पलाक्षी सुभद्रा हर्षाल्लज्जया च किञ्चिदपि नोचे । कामाविष्टः पार्थः एनां सुभद्रां प्रति नौ आवयोरयं मुख्यकालः श्रेष्ठकालः अत उद्वाहार्थः विवाहार्थः अस्त्वित्युवाच । सा सुभद्रा एवं पार्थं आह ।। १८१ ।।

---

१. 'नावुद्वाहार्थे' इति जनार्दनीयपाठः ।

२. 'सा चैवमाह' इति चट्टीपाठः ।

**नातिक्रमो वासुदेवस्य युक्तस्तस्मात् तेन स्वपितृभ्यां च दत्ताम् ।**
**युक्तो निजैर्बन्धुभिश्चोत्सवे मां समुद्वहेत्यथ कृष्णं स दध्यौ ॥१८२॥**

**वरदराजीया–** वासुदेवस्य कृष्णस्य अतिक्रमः आज्ञोल्लङ्घनम् । तस्मात् कारणात् । तेन कृष्णेन स्वपितृभ्यां देवकीवसुदेवाभ्यां च दत्तां मां जनैः भवदीयैः वासवादिभिः बन्धुभिः युक्तः सहितः उत्सवे समुद्वह स्वीकुर्विति पूर्वेण सम्बन्धः । अथानन्तरं सोऽर्जुनः कृष्णं दध्यौ आगन्तव्यमिति मनसा ध्यातवान् ॥१८२॥

**जनार्दनीया–** अतिक्रमः उल्लङ्घनम् । तेन वासुदेवेन । समुद्वह स्वीकुरु । सोऽर्जुनः कृष्णं दध्यौ सस्मार ॥ १८२ ॥

**चट्टी–** किमिति? वासुदेवस्य श्रीकृष्णस्य अतिक्रमः उल्लङ्घनं न युक्तः । तस्मात् तेन श्रीकृष्णेन स्वपितृभ्यां देवकीवसुदेवाभ्यां च दत्तां मां त्वं च निजैर्बन्धुभिः युक्तः सन् उत्सवेन समुद्वह स्वीकुर्वित्याहेति पूर्वेण सम्बन्धः । अथानन्तरं सः पार्थः श्रीकृष्णं दध्यौ सस्मार ॥ १८२ ॥

**मातापितृभ्यां सहितोऽथ कृष्णस्तत्रैवाऽयाद् वासवश्चाथ शच्या ।**
**समं मुनीन्द्रैः फल्गुनेन [१]स्मृतः संस्तत्रैवाऽगात् प्रीतियुक्तो निशायाम्॥१८३**

**वरदराजीया–** मातापितृभ्यां देवकीवसुदेवाभ्यां शच्या मुनीन्द्रैश्च समं सह सः वासवः फल्गुनेन स्मृतो ध्यातः तत्र द्वारकामगमत् ॥१८३॥

**जनार्दनीया–** फल्गुनेन स्मृतः सन्, तत्र द्वारावतीं प्रति अगात् ॥ १८३ ॥

**चट्टी–** अथ श्रीकृष्णः मातापितृभ्यां देवकीवसुदेवाभ्यां सहितः सन् तत्र द्वारवतीं प्रत्येवायात् । वासवः इन्द्रश्च शच्या मुनीन्द्रैश्च समं सह फल्गुनेन स्मृतः ध्यातः सन् प्रीतियुक्तः सन् निशायामेव तत्र द्वारवतीं प्रत्येवागात् ॥१८३॥

**कृष्णस्ततः पुरुहूतेन साकं तयोर्विवाहं कारयामास सम्यक् ।**
**मातापितृभ्यां सात्यकिनाऽपि युक्तो महोत्सवेऽन्याविदिते[२] मुनीन्द्रैः ॥१८४**

**वेदाङ्गतीर्थीया–** मुनीन्द्रैः कारयामास ॥ १८४ ॥

**वरदराजीया–** ततस्तदनन्तरं पुरुहूतेन इन्द्रेण साकं सह तयोः सुभद्रार्जुनयोः मात्रादिभिः मुनीन्द्रैश्च युक्तः अन्यैः अविदितः महोत्सवे विवाहं कारयामास ॥ १८४ ॥

---

१. 'स्मृतः स तत्रैव' इति वरदराजीयपाठः स्यात् ।

२. 'अन्याविदितो' इति वरदराजीयपाठः ।

**अनन्तभट्टीया–** महोत्सवे विवाहं कारयामास ।। १८४ ।।

**जनार्दनीया–** कृष्णः पुरुहूतेन साकं मातापितृभ्यां सात्यकिना मुनीन्द्रैः युक्तः सन्, अन्याविदिते उक्तेभ्यो अन्यैः उग्रसेनाद्यैः अविदिते अज्ञाते महोत्सवे तयोर्विवाहं कारयमास ।। १८४ ।।

**चट्टी–** ततस्तदनन्तरं श्रीकृष्णः पुरुहूतेन इन्द्रेण साकं मातापितृभ्यां सात्यकिना मुनीन्द्रैरपि युक्तः सन् अन्याविदिते उक्तेभ्योऽन्यैरविदिते अज्ञाते महोत्सवे सम्यक् तयोः सुभद्रार्जुनयोः विवाहं कारयामास ।।१८४।।

**ततः कृष्णः स्यन्दनं फल्गुनार्थे निधाय स्वं प्रययौ तद्रजन्याम् ।**
**गते च शक्रे रथमारुरोह प्रातः पार्थः सहितो भार्ययैव ।।१८५।।**

**वेदाङ्गतीर्थीया–** तद्रजन्यां तस्यामेव रात्र्याम् ।। १८५-१८६ ।।

**वरदराजीया–** स्वं स्वकीयं स्यन्दनं रथं निधाय दत्वा तस्यां रजन्यां रात्रौ प्रययौ कृष्णः । शक्रे च गते सति भार्यया सहितः प्रातरेव रथं आरुरोह ।। १८५ ।।

**अनन्तभट्टीया–** स्वं स्वकीयं स्यन्दनम् ।। १८५ ।।

**जनार्दनीया–** स्वं स्यन्दनम् । तद्रजन्यां तस्यामेव रात्र्यां कृष्णः प्रययौ । तद्रजन्यां शक्रे गते सति, प्रातः पार्थः रथमारुरोह ।।१८५।।

**भावचन्द्रिका–** ।। **भार्ययेति** ।। त्रिजटारूपस्थिता प्रकृत्याविष्ट..* वचनात् अर्जुनभार्येति ज्ञेयम् ।। १८५-२१० ।।

**चट्टी–** ततः श्रीकृष्णः स्वं स्वकीयं स्यन्दनं रथं फल्गुनार्थे निधाय दत्वा तद्रजन्यां तस्यामेव रात्र्यां प्रययौ । अथ शक्रे च तद्रजन्यामेव गते सति पार्थः भार्यया सहित एव रथमारुरोह ।। १८५ ।।

**सर्वायुधैर्युक्तरथं समास्थिते गृहीतचापे फल्गुने द्वारवत्याम् ।**
**आसीद् रावः किं किमेतत् त्रिदण्डी कन्यां हरत्येष कोदण्डपाणिः ।।१८६।।**

**व्यासतीर्थीया–** किं किमेतदिति प्रश्नः । एषः त्रिदण्डी कोदण्डपाणिः सन् कन्यां हरतीत्यत्र।।१८६-९३।।

**वरदराजीया–** सर्वायुधैर्युक्तं रथं समास्थिते सति रावः कोलाहलः आसीत् । किं किमेतदिति केषाञ्चित् प्रश्नः । एषः त्रिदण्डी यतिः कः? कोदण्डपाणिः स तु कन्यां हरतीति केषाञ्चिदुत्तरम् ।।१८६।।

**अनन्तभट्टीया–** किमेतदिति केषाञ्चित् प्रश्नः, हरतीति केषाञ्चिदुत्तरम् ।। १८६ ।।

**जनार्दनीया–** गृहीतचापे सति द्वारवत्यां रावः कोलाहलः आसीत् । एतत्किमिदं भवति? किं भवतीति केचिदाहुः । केचिदेषः त्रिदण्डी यतिः कोदण्डपाणिः सन् दण्डं त्यक्त्वा धनुष्पाणिः सन् कन्यां हरति इति आहुरित्यर्थः ।। १८६ ।।

**चट्टी–** सर्वायुधैर्युक्तरथं समास्थिते फल्गुने अर्जुने गृहीतचापे सति द्वारवत्यां रावः कोलाहलः आसीत् । किमेतदिति केषाञ्चित् प्रश्नः । एषस्त्रिदण्डी यतिः कोदण्डपाणिः दण्डं त्यक्त्वा धनुष्पाणिः सन् कन्यां हरतीति केषाञ्चित् उत्तरम् ।। १८६ ।।

**ततस्तु तं सतनुत्रं महेन्द्रदत्ते दिव्ये कुण्डले वाससी च ।**
**दिव्यानि रत्नानि च भूषणानि दृष्ट्वा बिभ्राणं रक्षिणोऽवारयन् स्म।।१८७।।**

**वेदाङ्गतीर्थीया–** सतनुत्रं सकवचम् । रक्षिणः पुररक्षिणः ।।१८७।।

**वरदराजीया–** सतनुत्रं सकवचं महेन्द्रेण दत्तं दिव्यं कुण्डलादिकं बिभ्राणं दृष्ट्वा रक्षिणो द्वाररक्षणार्थं नियुक्ताः अवारयन् निवारितवन्तः ।। १८७ ।।

**अनन्तभट्टीया–** रक्षिणः पुररक्षिणः ।। १८७ ।।

**जनार्दनीया–** ततः कोलाहलानन्तरम् । रक्षिणः पुररक्षिणः सतनुत्रं सकवचं भूषणानि बिभ्राणं तं पार्थं अवारयन्त ।। १८७ ।।

**चट्टी–** ततः कोलाहलानन्तरं रक्षिणः पुररक्षिणः सतनुत्रं सकवचं महेन्द्रेण दत्ते दिव्ये कुण्डले वाससी वस्त्रे च दिव्यानि रत्नानि च बिभ्राणं तं पार्थमवारयन् स्म ।। १८७ ।।

**ततः स आबद्धतलाङ्गुलित्रः सतूणीरश्चापमायम्य[१] बाणैः ।**
**चक्रेऽन्तरिक्षं प्रदिशो दिशश्च निरन्तरं शिक्षया विद्यया च ।।१८८।।**

**वेदाङ्गतीर्थीया–** ।। **आबद्धतलाङ्गुलित्र इति** ।। करतलाङ्गुलीस्त्रायत इति तलाङ्गुलित्रम् । आबद्धं तलाङ्गुलित्रं येनासौ तथोक्तः । आनम्य आरोप्य ।। १८८-१९१ ।।

**वरदराजीया–** सोऽर्जुनः आबद्धं करतलं अङ्गुलित्रं च येन स तथा । सतूणीरो बद्धेषुभिः चापं धनुरायम्य अधिज्यं कृत्वा अन्तरिक्षादिकं बाणैर्निरन्तरं पूर्णं चक्रे ।। १८८ ।।

**अनन्तभट्टीया–** प्रदिशो दिशश्च निरन्तरश्च चक्रे ।। १८८ ।।

**जनार्दनीया–** तलं च अङ्गुलयश्च तलाङ्गुल्यः, ताः करतलाङ्गुलीः त्रायते तत् तलाङ्गुलित्रम्, आबद्धं तलाङ्गुलित्रं येन स तथोक्तः । सतूणीरः इषुधिसहितः । स चापमायम्य अरोप्य । निरन्तरं व्यवधानरहितम् ।।१८८।।

**चट्टी–** तलं च अङ्गुल्यश्च तलाङ्गुल्यः, तलाङ्गुलीस्त्रायत इति तलाङ्गुलित्रं, आबद्धं तलाङ्गुलित्रं येन स तथोक्तः । सतूणीरः इषुधिसहितः चापमायम्य आरोप्य बाणैः शिक्षया विद्यया चान्तरिक्षं निरन्तरं व्यवधानरहितं चक्रे । दिशः प्रदिशश्च निरन्तराश्चक्रे ।।१८८।।

---

१. 'आनम्य' इति वेदाङ्गतीर्थीयपाठः ।

**चक्रे सारथ्यं [1]केशवेनैतदर्थे सुशिक्षिता तस्य सम्यक् सुभद्रा ।**
**तया पार्थो वारितो नैव कश्चित् भिन्नत्वचं कृतवान् क्रीडमानः ॥१८९॥**

**वरदराजीया–** एतदर्थे अर्जुनार्थे केशवेन सम्यक् सुशिक्षिता सुभद्रा तस्यार्जुनस्य सारथ्यं सारथिकर्म चक्रे । तया सुभद्रया वारितो निवारितः कर्मापि न पीडयेति प्रार्थितः कश्चित् वीरं भिन्नत्वचं निर्भिन्नत्वचं नैव कृतवान् । किन्तु तैः क्रीडमान इव स्थितः ॥ १८९ ॥

**अनन्तभट्टीया–** एतदर्थे केशवेन सुशिक्षिता सुभद्रा सारथ्यं चक्रे ॥ १८९-१९३ ॥

**जनार्दनीया–** केशवेनैतदर्थं अर्जुनस्य सारथ्यार्थं सुशिक्षिता सुभद्रा तस्य पार्थस्य सारथ्यं चक्रे । तया सुभद्रया वारितः पार्थः क्रीडमानः सन् । सोऽर्जुनः शिक्षया शरौघैः तान् भटान् भीषयित्वा विद्राव्य, कश्चित् कश्चनवीरं भिन्नत्वचं भिन्ना त्वक् यस्य सः भिन्नत्वक् तं भिन्नत्वचं न कृतवान् ॥१८९॥

**चट्टी–** केशवेन श्रीकृष्णेन एतदर्थे अर्जुनसारर्थ्यर्थं सुशिक्षिता सुभद्रा तस्य पार्थस्य सम्यक् सारथ्यं च तया सुभद्रया वारितः निवारितः पार्थं कश्चित् पुरुषमपि भिन्ना त्वग् यस्य सः भिन्नत्वक् तं भिन्नत्वचं नैव कृतवान् । किन्तु क्रीडमानः सन्नेव स्थितः ॥१८९॥

**[2]स शिक्षया त्वद्भुतया शरौघैर्विद्राव्य तान् भीषयित्वैव सर्वान् ।**
**निर्गत्य पुर्या विपृथुं ददर्श रामेण पुर्या रक्षणे सन्नियुक्तम् ॥१९०॥**

**वरदराजीया–** स्वशिक्षया द्रोणात् प्राप्तस्वकीयशिक्षावलतो तान् वीरान् केवलं भीषयित्वैव विद्राव्य पुर्या द्वारकायाः सकाशात् निर्गत्य वहिर्गत्वा रामेण वलभद्रेण पुर्या द्वारकायाः संरक्षणे सन्नियुक्तं विपृथुं ददर्श ॥१९०॥

**जनार्दनीया–** सः अर्जुनः । पुर्याः निर्गत्य वहिर्गत्वा । सन्नियुक्तं आज्ञापितम् ॥१९०॥

**चट्टी–** अत्यद्भुतया सुशिक्षया शरौघैः तान् सर्वान् भटान् भीषयित्वा एव विद्राव्य पुर्याः द्वारकायाः सकाशान्निर्गत्य वहिर्गत्वा रामेण वलरामेण पुर्याः द्वारकायाः रक्षणे सन्नियुक्तं आज्ञापितं विपृथुं ददर्श ॥१९०॥

**प्रियं कुर्वन्निव रामस्य सोऽपि व्याजेन पार्थं सेनयैवाऽवृणोत् तम् ।**
**कृष्णादेशान्नैव पार्थस्य चक्रे सम्यग्रोधं युयुधे च छलेन ॥१९१॥**

---

१. 'केशवेनैतदर्थं' इति जनार्दनीयपाठः ।

२. 'स्वशिक्षया' इति वरदराजीयपाठः । 'सुशिक्षयाऽत्यद्भुतया' इति चट्टीपाठः ।

**वरदराजीया–** रामस्य प्रियं कुर्वन्निव सोऽपि विपृथुरपि व्याजेन छद्मनैव सेनया तं परित एव पार्थमेवावृणोत् । कृष्णस्य आदेशादाज्ञया पार्थस्य सम्यग् रोधं निरोधं नैव चक्रे । छलेन व्याजेनैव युयुधे च ।।१९१।।

**जनार्दनीया–** व्याजेन छद्मना । कृष्णादेशात् कृष्णाज्ञया । रोधं निरोधम् । छलेन व्याजेन ।।१९१।।

**चट्टी–** सः विपृथुरपि रामस्य बलरामस्य प्रियं कुर्वन्निव व्याजेन छद्मनैव तं पार्थं सेनया आवृणोत् । श्रीकृष्णस्य आदेशाद् आज्ञया पार्थस्य सम्यग् रोधनं निरोधनं नैव चक्रे । छलेन व्याजेनैव युयुधे ।।१९१।।

**एको ह्यसौ मरुतां सौम्यनामा शुश्रूषार्थं वासुदेवस्य जातः ।**
**तं यादवं शरवर्षैर्ववर्ष यथा क्षतं न भवेत् सव्यसाची ।।१९२।।**

**वेदाङ्गतीर्थीया–** असौ विपृथुः पूर्वं मरुतां मध्ये सौम्यनामा एकः, मरुदिति शेषः ।। १९२-१९३ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'एको ह्यसौ मरुतां सौम्यनामा शुश्रूषार्थं..' इत्यस्ति । तस्यार्थः- मरुतां मध्ये सौम्यनामा एकः असौ वासुदेवस्य शुश्रूषणार्थं जात इत्येतत् हि प्रसिद्धमिति । एतेन एकः इत्येतत् व्यर्थमिति दूषणं परास्तम् । मरुतां मध्ये एकस्यैव मरुतः सौम्यनामकत्वं नानेकेषामिति वक्तुमेकशब्दः प्रयुक्त इत्यङ्गीकारात् ।। १९२-१९९ ।।

**वरदराजीया–** असौ विपृथुः पूर्वं मरुतां मध्ये एकः सौम्यनामा मरुत् वासुदेवस्य शुश्रूषार्थं अत्र विपृथुनामा यादवो जातः । तं यादवं विपृथुं सव्यसाची अर्जुनो यथा क्षतं व्रणं न भवेत्तथा शरवर्षैः बाणवृष्टिभिः ववर्ष ।।१९२।।

**जनार्दनीया–** असौ विपृथुः मरुतां मध्ये एकः कश्चन सौम्यनामा । सव्यसाची अर्जुनः तं यादवं विपृथुं यथा क्षतं न भवेत् तथा ववर्ष ।।१९२।।

**चट्टी–** असौ विपृथुः मरुतां मध्ये एकः कश्चन सौम्यनामा मरुद्वासुदेवस्य शुश्रूषार्थं विपृथुर्नाम यादवो जातः । सव्यसाची अर्जुनः तं यादवं विपृथुं यथा क्षतं व्रणं न भवेत् तथा शरवर्षैः ववर्ष ।। १९२ ।।

**[1]निरायुधं विरथं चैव चक्रे पार्थः सेनां तस्य नैवाहनच्च ।**
**दृष्ट्वा शरांस्तस्य तीक्ष्णांस्त्वचोऽपि नच्छेदकान् विपृथुः सन्तुतोष[2] ।।१९३।।**

**वादिराजतीर्थीया–** 'निरायुधं विरथं चैव चक्रे' इत्यत्र तं विपृथुमिति योग्यपदाध्याहारः ।। १९३ ।।

---

१. 'निरायुधां विरथाम्' इति जनार्दनीये पाठान्तरम् ।
२. 'विपृथुस्तं तुतोष' इति जनार्दनीयपाठः । 'विपृथुः सन्तुतोष' इति पाठान्तरम् ।

**वरदराजीया–** तस्य विपृथोः सेनां निरायुधं छिन्नायुधं विगतरथं चक्रे । परन्तु नैव अहनत् । विपृथुः तस्यार्जुनस्य तीक्ष्णानपि शरान् त्वचः नच्छेदकान् दृष्ट्वा सन्तुतोष । नच्छेदकान् इत्येकं पदम् । नसमासत्वात् नञो नलोपः । यद्वा छेदकाः न भवन्तीति नच्छेदकाः तान् । नञर्थस्य नशब्दस्य 'सुप्सुपा' इति समासः ।।१९३।।

**जनार्दनीया–** पार्थो विरथं निरायुधं विपृथुं चक्रे । तस्य विपृथोः सेनां नैवाहनत् । 'निरायुधां विरथाम्' इति वा पाठः । विपृथुः तस्यार्जुनस्य तीक्ष्णान् त्वचोऽपि नच्छेदकान् शरान् दृष्ट्वा, तं शस्त्राभिज्ञमर्जुनं च दृष्ट्वा, तुतोष । 'सन्तुतोष' इति वा पाठः ।।१९३।।

**चट्टी–** पार्थस्तस्य सेनां विपृथोः सेनां निरायुधां छिन्नायुधां विरथां चैव चक्रे । नैवाहनच्च । विपृथुस्तस्यार्जुनस्य तीक्ष्णान् त्वचोऽपि नच्छेदकान् शरान् दृष्ट्वा सन्तुतोष । नच्छेदकान् इत्येकं पदम् ।।

**शिक्षां पार्थस्याधिकां मानयान उपेत्य पार्थं च शशंस [१]सर्वाम् ।**
**आज्ञां विष्णोः सन्नियुध्यन्निवास्मै [२]कृत्तायुधः फल्गुनेनैव पूर्वम् ।।१९४।।**

**व्यासतीर्थीया–** सन्नियुध्यन्निव द्वन्द्वयुद्धं कुर्वन्निव ।। १९४-१९८ ।।

**वेदाङ्गतीर्थीया–** पूर्वमेव फल्गुनेन कृत्तायुधः अत एव सन्नियुद्धयन्निव मुष्टियुद्धं कुर्वन्निव ।।१९४।।

**वादिराजतीर्थीया–** 'सन्नियुध्यन्निवास्मै' इत्यत्र सम्यग्द्वन्द्वयुद्धं कुर्वन्निति । विष्णोराज्ञां मदीयरथेनैवार्जुनो गच्छतु । तं रथं तस्मा एव दिश । युद्धं न कुर्वित्याज्ञाम् ।।१९४।।

**वरदराजीया–** पार्थस्य अधिकां उत्तमां शिक्षां शस्त्रशिक्षां मानयानः सम्मानयन् पार्थमुपेत्य यतः पूर्वमेव कृत्तायुधश्छिन्नायुधो अत एव सन्नियुध्यन् इव द्वन्द्वं कुर्वन् इव विष्णोः कृष्णस्य सर्वमाज्ञामस्मै पार्थाय शशंस ।।१९४।।

**अनन्तभट्टीया–** सन्नियुद्धं द्वन्द्वयुद्धम् ।। १९४-१९९ ।।

**जनार्दनीया–** पार्थस्य अधिकां उत्तमां शिक्षां मानयानः । पार्थमुपेत्य, पूर्वं फल्गुनेन कृन्तायुधः छिन्नायुधः । अत एव सन्नियुध्यन्निव मुष्टियुद्धं कुर्वन्निव । विष्णोः कृष्णस्य । सर्वां आज्ञां अस्मै पार्थाय शशंस ।। १९४ ।।

**चट्टी–** विपृथुः पार्थस्य अधिकामुत्तमां शिक्षां मानयानः सम्मानयन् पार्थमुपेत्य, पूर्वं फल्गुनेनैव कृत्तायुधः छिन्नायुधः अत एव सन्नियुध्यन्निव मुष्टियुद्धं कुर्वन्निव विष्णोः कृष्णस्य सर्वामाज्ञामस्मै पार्थाय शशंस ।। १९४ ।।

---

१. 'सर्वम्' इति वरदराजीयपाठः ।

२. 'कृन्तायुधः' इति जनार्दनीयपाठः ।

**ततः पराजितवच्छीघ्रमेत्य शशंस सर्वं हलिनेऽथ सोऽपि ।**
**प्रद्युम्नसाम्बादियुतोऽथ कोपादायात् पुरीं हन्तुकामोऽर्जुनं च ॥१९५॥**

**वादिराजतीर्थीया–** 'ततः पराजितवच्छीघ्रमेत्य' इत्यत्र अथ अर्जुनयुद्धानन्तरम् । ततः द्वारवतीपुरात् एत्य पिण्डोद्धारक्षेत्रमेत्य ॥ १९५-२०३ ॥

**वरदराजीया–** ततस्तदनन्तरं पराजितवत् अर्जुनेन पराजित इव शीघ्रमेत्य हलिने सर्वं वृत्तान्तं शशंस । सोऽपि हली प्रद्युम्नादियुतः कोपादर्जुनं हन्तुकामः पुरीं द्वारकां आयात् ॥ १९५ ॥

**जनार्दनीया–** ततः विपृथुः एत्य, पिण्डोद्धारकमिति शेषः । अथ हलिने शशंस । अथ सोऽपि रामोऽपि पुरीं प्रति आयात् ॥ १९५ ॥

**चट्टी–** ततो विपृथुः पराजितवत् शीघ्रमेत्य, पिण्डोद्धारमिति शेषः । अथ सर्वं हलिने शशंस । अथ सः रामोऽपि प्रद्युम्नसाम्बादियुतः सन् कोपात् अर्जुनं हन्तुकामः सन् पुरीं द्वारकां प्रति आयाच्च ॥१९५॥

**कृष्णोऽपि सर्वं विपृथोर्निशम्य प्राप्तः सुधर्मां विमना इवाऽसीत् ।**
**अवाङ्मुखस्तत्र यदुप्रवीराः प्रद्युम्नाद्या आहुरुच्चैर्नदन्तः ॥१९६॥**

**वरदराजीया–** सर्वं वृत्तान्तं विपृथोः सकाशान्निशम्य सुधर्मां सभां प्राप्य विमनाः व्यग्रवानिव अवाङ्मुख आसीत् । तत्र सुधर्मायां उच्चैर्नदन्तः आहुः ॥१९६॥

**अनन्तभट्टीया–** अवाङ्मुख आसीत् ॥ १९६ ॥

**जनार्दनीया–** कृष्णोऽपि विपृथोः सकाशात् सर्वं निशम्य, सुधर्मां सुधर्माख्यां सभाम् । 'डावुभाभ्यामन्यतरस्याम्' (सि.कौ.४६१) इति पक्षे डाप् । प्राप्तः सन् विमना इव व्यग्रान्तःकरण इव अवाङ्मुखः अधःकृतमुखः आसीत् । तत्र सभायाम् ॥ १९६ ॥

**चट्टी–** श्रीकृष्णोऽपि सर्वं वृत्तान्तं विपृथोः सकाशात् निशम्य, सुधर्मां सुधर्माख्यां सभां प्राप्तस्सन् विमना इव व्याग्रन्तःकरण इव अवाङ्मुखः अधःकृतमुखः आसीत् । तत्र सभायां प्रद्युम्नाद्याः यदुप्रवीराः उच्चैः नदन्तः आहुः ॥ १९६ ॥

**मायाव्रतं तं विनिहत्य शीघ्रं वयं सुभद्रामानयामः क्षणेन ।**
**इत्युक्तवाक्यानवदद् बलस्तान् कृष्णाज्ञया यान्तु न स्वेच्छयैव ॥१९७॥**

**वेदाङ्गतीर्थीया–** मायाव्रतं मायया यतिव्रतं यस्यासौ तथोक्तः (तम्) ॥ १९७-१९८ ॥

**वरदराजीया–** किमिति? मायाव्रतं छद्मवेषं तं यतिं विनिहत्य शीघ्रं वयं सुभद्रां क्षणेन आनयामः इत्युक्तवाक्यान् तान् प्रद्युम्नादीन् बलो बलभद्रोऽवदत् । किमिति? कृष्णस्याज्ञया यान्तु गच्छन्तु न तु स्वेच्छया ॥ १९७ ॥

**जनार्दनीया–** मायाव्रतं माया व्रतं यस्य स तथा तं पार्थं यान्तु गच्छन्तु ।। १९७ ।।

**चट्टी–** माया व्रतं यस्य स तथा तं पार्थं शीघ्रं विनिहत्य क्षणेन वयं सुभद्रामानयामः । इत्युक्तवाक्यान् प्रद्युम्नादीन् वलः वलभद्रः अवदत् । किमिति? श्रीकृष्णस्य आज्ञयैव यान्तु गच्छन्तु । न तु स्वेच्छया ।।१९७।।

**ज्ञातव्यमेतस्य मतं पुरस्ताद्धरेर्विरोधे न जयो भवेद् वः ।**
**इत्युक्तवाक्ये हलिनि स्म सर्वे पप्रच्छुरानम्य जनार्दनं तम् ।।१९८।।**

**वरदराजीया–** एतस्य कृष्णस्य मतमभिप्रेतं पुरस्तात् पूर्वमेव ज्ञातव्यम् । हरेः कृष्णस्य विरोधे प्राप्ते सति वो युष्माकं जयो न भवेत् । हलिनि इत्युक्तवाक्ये सति सर्वे प्रद्युम्नाद्याः तं जनार्दनं कृष्णमानम्य पप्रच्छुः ।।१९८।।

**जनार्दनीया–** एतस्य कृष्णस्य मतं अभिप्रायं पुरस्तात् पूर्वं ज्ञातव्यम् । हरेर्विरोधे कृते सति वः युष्माकं जयो न भवेत् । आनम्य नमस्कृत्य ।। १९८ ।।

**चट्टी–** एतस्य कृष्णस्य मतमभिप्रायं पुरस्तात् पूर्वं ज्ञातव्यम् । हरेर्विरोधे कृते सति वः युष्माकं जयो न भवेत् । हलिनि वलभद्रे इत्युक्तवाक्ये सर्वे प्रद्युम्नाद्याः तं जनार्दनं कृष्णं आ सम्यक् नमस्कृत्य पप्रच्छुः ।। १९८ ।।

**अथाब्रवीद् वासुदेवोऽमितौजाः शृण्वन्तु सर्वे वचनं मदीयम् ।**
**पुरैवोक्तं तन्मया कन्यकाया मायाव्रतोऽसौ नार्हति सन्निधिस्थितिम्।।१९९।।**

**व्यासतीर्थीया–** अमितौजा यदुवीराक्रमणशक्तोऽपि ।। १९९-२०० ।।

**वेदाङ्गतीर्थीया–** मया तत् पुरैवोक्तम् । तदिति किमित्यत आह– **कन्यकाया इत्यादिना** ।।१९९।।

**वरदराजीया–** अमितौजाः अमितपराक्रमः । यद्वृत्तं तन्मया पुरा एव पूर्वमेवोक्तम् । कन्यकायाः सन्निधौ स्थितिं अवस्थानं असौ यतिः नार्हति यतः मायाव्रतः छद्मवेष इत्यर्थः ।।१९९।।

**जनार्दनीया–** मया पुरैव तत् उक्तम् । तत्किम्? असौ मायाव्रतः कन्यकायाः सन्निधिस्थितिं सन्निधौ समीपे स्थितिं अवस्थानं नार्हति, कर्तुमिति शेषः ।।१९९।।

**चट्टी–** अमितौजाः अमितपराक्रमः सः वासुदेवः श्रीकृष्णश्च अब्रवीत् । किमिति? सर्वे मदीयं वचनं शृण्वन्तु । मया पूर्वमेव तदुक्तं तत्किमित्यत आह । असौ मायाव्रतः कन्यकायाः सन्निधिस्थितिं सन्निधौ समीपे स्थितिं अवस्थानं नार्हति, कर्तुमिति शेषः ।। १९९ ।।

**तां मे वाचं नाग्रहीदग्रजोऽयं बहून् दोषान् व्याहरतोऽप्यतो मया ।**
**अनुल्लङ्घ्यत्वादग्रजोऽनुप्रवृत्तः कन्यागृहे वासने कूटबुद्धेः ।।२००।।**

**वेदाङ्गतीर्थीया–** अतः मद्वाक्यस्यागृहीतत्वात् ।। २०० ।।

**वरदराजीया–** बहून् दोषान् व्याहरतो मे तां वाचं अयं अग्रजो आर्यो नाग्रहीत् । अतोऽग्रजत्वादेव अनुल्लङ्घ्यत्वात् उल्लङ्घयितुमशक्यात् कूटवुद्धेः यतेः कन्यागृहे वासने विषये अनुप्रवृत्तः ।। २०० ।।

**अनन्तभट्टीया–** व्याहरतो मे वाचम् । वासने अवस्थानविषये । मया अग्रजो अनुप्रवृत्तः ।।२००।।

**जनार्दनीया–** अयमग्रजो रामः बहून् दोषान् व्याहरतः ब्रुवतः मे तां वाचं नाग्रहीयतः अतः अनुल्लङ्घ्यत्वात् उल्लङ्घयितुमशक्यत्वात् । मयापि कूटवुद्धेः कपटवुद्धेः कन्यागृहे वासने अवस्थानविषये अग्रजः अनुप्रवृत्तः ।।२००।।

**चट्टी–** अयमग्रजः रामः बहून् दोषान् व्याहरतः ब्रुवतोऽपि मे तां वाचं नाग्रहीत् । यतः अतः अग्रजः अनुल्लङ्घ्यत्वात् उल्लङ्घयितुमशक्यत्वात् कूटवुद्धेः यतेः कन्यागृहे वासने अवस्थानविषये अनुप्रवृत्तः ।।२००।।

**अतीतश्चायं कार्ययोगोऽसमक्षं हृता कन्या नोऽत्र का मानहानिः ।**
**भूयस्तरां मानिनस्तस्य सा स्याज्ज्ञाता च वो विपृथोः पार्थताऽस्य ।।२०१।।**

**व्यासतीर्थीया–** प्रसह्य कन्यापहरणे नो मानहानिः प्राप्तेत्यत उक्तम्– **असमक्षमिति** ।। २०१ ।।

**वेदाङ्गतीर्थीया–** असमक्षं अस्माभिरविज्ञातं यथा भवति तथा । अतः असमक्षं कन्याहरणात् । कोऽयं भूयस्तरां मानीत्यतस्तत्स्वरूपं युष्माभिरविज्ञातं किमित्याह– **ज्ञाता चेति** ।। २०१ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'अतीतश्चायं कार्ययोगो..' इति श्लोके अतीतश्चायं कार्ययोग इत्यस्य अयं कार्ययोगः कन्याऽऽनयनादिकार्ययोगः अतीतश्च अनुष्ठातुमशक्यं एवेत्यर्थः । एतेन उत्पन्नस्यैव नाशः इति नियमेन कार्योपायस्यानुत्पन्नत्वेन नाशायोगात् कार्ययोग अतीत इति कार्योपायस्य नष्टत्वकथन-मनुपपन्नमिति चोद्यं प्रत्युक्तम् । अत्र अतीतशब्देन नष्टत्वं नोच्यते, किं तु नष्टवत् अनुष्ठातुमशक्यत्वमेवोच्यते इति स्वीकरणात् ।। २०१-२०८ ।।

**मधुसूदनीया–** कन्यां च समक्षं अस्मत्समक्षं नो हृता नापहृता । अस्मत्समक्षं कन्याहरणे खलु अस्माकं मानहानिः स्यात् । नचास्मत्समक्षं सा हृता अस्माभिः पिण्डोद्धारकं प्रति गतत्वात् इति भावः । तस्य चौर्येण कन्यां हृतवतोऽर्जुनस्यैव सा मानहानिः । नन्वयमर्जुन इति कथं ज्ञातव्यमित्यत आह– **ज्ञातेति** ।। मया (तमागच्छता) अर्जुनमिति शेषः ।। २०१-२०४ ।।

**वरदराजीया–** इदानीं तु कार्ययोगः कार्योपायः अतीतश्च असमक्षं परोक्षं कन्या हृता । अतः कारणात् अत्र विषये नोऽस्माकं का मानहानिः । न कोऽपीत्यर्थः । भूयस्तरां अतितरां मानिनः अहङ्कारिणो वा तस्य अर्जुनस्य मानहानिः स्यात् । न वयं तथा मानिनः इति भावः । यद्वा अतिमानयुक्तस्य अर्जुनस्य सा सुभद्रा स्यात् भार्या भवत्वित्यर्थः । विपृथोः सकाशात् अस्य यतेः पार्थतार्जुनता च वः युष्माकं ज्ञाता च ।। २०१ ।।

**अनन्तभट्टीया–** मानिनः वीरत्वमानिनः । वीरंमन्यस्येत्यर्थः । अस्य यतेः ॥२०१॥

**जनार्दनीया–** अयं कार्ययोगः सुभद्राऽऽनयनलक्षणकार्ययोगः अतीतः अतिक्रान्तः । नोऽस्माकं असमक्षं परोक्षं कन्या हृता यतः अतः अत्र अस्मिन्विषये नोऽस्माकं का मानहानिः? मानभङ्गो न कोऽपीत्यर्थः । भूयस्तरां अतितरां मानिनः स्वस्य वीरत्वमानिनः तस्य पार्थस्य सा मानहानिः स्यात् । विपृथोः सकाशात् अस्य यतेः पार्थता अर्जुनता वः युष्माकं युष्माभिः ज्ञाता ॥२०१॥

**चट्टी–** अयं कार्ययोगः सुभद्राऽऽनयनलक्षणयोगः अतीतः अतिक्रान्तः । कन्या च समक्षम् अस्मत्समक्षं नो हृता नापहृता यतः अतः अत्रास्मिन् विषये अस्माकं का मानहानिः मानभङ्गः न कोऽपीत्यर्थः । अस्मत्समक्षं कन्याहरणं खलु अस्माकं मानहानिः स्यात् । न चास्मत्समक्षं सा हृता । अस्माभिः पिण्डोद्धारं प्रति गतत्वादिति भावः । भूयस्तरामतितरां मानिनः स्वस्य वीरत्वमानिनः तस्य पार्थस्य सा मानहानिः स्यात् । नन्वयमर्जुन इति कथं ज्ञातमित्यत आह– **ज्ञातेति** ॥ विपृथोः सकाशादस्य यतेः पार्थता अर्जुनता वः युष्माकं ज्ञाता नः इति पदविभागेन..*। अस्माकमसमक्षं कन्याहृतेत्यर्थः ॥२०१॥

**देया च कन्या नास्ति पार्थेन तुल्यो वरोऽस्माकं कौरवेयश्च पार्थः ।**
**पौत्रश्च कृष्णस्य सुपूर्णशक्तेः पैतृष्वसेयो[1] वीरतमो गुणाढ्यः ॥२०२॥**

**व्यासतीर्थीया–**'कौरवेयः' इतिकुलीनत्वंसूचयति ।'पौत्रश्च' इत्यादिनापिवरसम्पत्तिरुच्यते ॥२०२॥

**वेदाङ्गतीर्थीया–** अस्त्वयं पार्थोऽस्माभिर्ज्ञात इति तथापि सुभद्रामानयाम इत्यतस्तदयुक्तमित्याह– **देयेत्यादिना** ॥ कन्या च देया । दातुं प्राप्तकाल इति भावः । 'कौरवेयश्च' इति कुलीनत्वमाह । 'पौत्रश्च' इत्यादिना वरस्य गुणान्तराण्याह । 'पैतृष्वसेयः' इति सम्बन्धयोग्यतामाह ॥ २०२ ॥

**वरदराजीया–** यतः पार्थेन तुल्यो वरोऽस्माकं नास्ति । अतो अस्मै कन्या देया च । कौरवेयः कुरोर्गोत्रापत्यम् । कृष्णस्य वेदव्याससस्य पौत्रश्च । पाण्डोः पुत्रः पैतृष्वसेयः पितृष्वसुः कुन्त्याः पुत्रः । वीरतमो अतिशयेन वीरः गुणादिभिः आढ्यः ॥ २०२ ॥

**अनन्तभट्टीया–** कृष्णस्य व्यासस्य पौत्रः ॥२०२॥

**जनार्दनीया–** 'सुभद्रामानयामः' इति यदुक्तं तदयुक्तमित्याह– **देयेत्यादिना** ॥ कन्या देया च अन्यस्मै दातव्यैव । तर्हि अस्माकं पार्थेन तुल्यः वरो नास्ति । अतुल्यत्वं विवृणोति– **कौरवेय इत्यादिना** ॥ 'पार्थः कौरवेयश्च' कुरुकुलोत्पन्न इति कुलीनत्वमाह । कृष्णस्य श्रीवेदव्यासस्य 'पौत्रः' इत्यादिना वरस्य गुणान्तराण्याह । 'पैतृष्वसेयः' इति सम्बन्धयोग्यत्वमाह ॥ २०२ ॥

**ताम्रपर्णीया–** 'पौत्रश्च' इत्यनूचानत्वं अर्जुनस्योक्तम् ॥ २०२-२०३ ॥

---

१. 'पितृष्वसेयः' इति चट्टीपाठः ।

**चट्टी–** 'सुभद्रामानयामः' इति यदुक्तं तदयुक्तमित्याह– **देयेत्यादिना** ।। कन्या देया च अन्यस्मै दातव्यैव । तर्हि अस्माकं पार्थेन तुल्यो वरो नास्ति । अतुल्यत्वं विवृणोति– **कौरवेय इत्यादिना** ।। 'पार्थः कौरवेयश्च' कुरुकुलोत्पन्न इति कुलीनत्वमाह । सुपूर्णशक्तेः कृष्णस्य वेदव्यासस्य 'पौत्रः' इति वरस्य गुणान्तराण्याह । 'पितृष्वसेयः' इति सम्बन्धयोग्यत्वमाह । वीरतमः अतिशयेन वीरः गुणैः ज्ञानादिभिराढ्यः ।। २०२ ।।

**अर्थ्योऽस्माभिः स्वयमेवाहरत् स शक्रात्मजो नात्र नः कार्यहानिः ।**
**[1]अनुद्रुत्यैनं यदि वः स्यात् पराजयो हानिर्दृढं यशसो वो भवेत ।।२०३।।**

**व्यासतीर्थीया–** मायाव्रतं निहत्य इत्यादेरुत्तरमाह– **अनुद्रुत्येति** ।। अनुद्रुत्यैनं युध्यताम् ।।२०३।।

**वेदाङ्गतीर्थीया–** नात्र मानहानिः स्यादित्युक्तेरभिप्रायमाह– **अर्थ्योऽस्माभिरिति** ।। २०३ ।।

**वरदराजीया–** अस्माभिरर्थ्योऽर्थनीयः सः शक्रात्मजः अर्जुनः स्वयमेव अप्रार्थित एव कन्यामपाहरत् । अतोऽत्र विषये नोऽस्माकं कार्यहानिर्नास्ति । एवं अर्जुनं अनुद्रुत्य अनूद्दिश्य गतानां वो युष्माकं यदि पराजयः तर्हि वो यशसो हानिः दृढं निश्चितं स्यात् ।। २०३ ।।

**अनन्तभट्टीया–** दृढं सत्यम् ।। २०३-२०५ ।।

**जनार्दनीया–** अत एव ईदृशो वरः अस्माभिः अर्थ्यः अर्थनीयः सः शक्रात्मजः स्वयमेवाहरत्, कन्यामिति शेषः । अत्र कन्याहरणविषये नोऽस्माकं कार्यहानिः न काऽपीत्यर्थः । एनमर्जुनं अनुद्रुत्य अनुगम्य यदि वः युष्माकं पराजयः स्यात् तर्हि वः यशसः हानिः स्यात् । दृढं सत्यम् ।।२०३।।

**चट्टी–** अत एवेदृशो वरोऽस्माभिः अर्थ्यः अर्थनीयः सः शक्रात्मजः स्वयमेवाहरत्, कन्यामिति शेषः । अत कन्याहरणविषये नोऽस्माकं कार्यहानिः नास्ति । एनमर्जुनं अनुसृत्य अनुगम्य वो युष्माकं यदि पराजयः स्यात् तर्हि वो यशोहानिः भवेत । दृढं सत्यम् ।। २०३ ।।

**जित्वा ययेनं कन्यका चाऽहृता चेत् परामृष्टां नैव [2]कश्चिद्धि लिप्सेत् ।**
**अतो न मे रोचते वोऽनुयानमित्यूचिवानास तूष्णीं परेशः ।।२०४।।**

**व्यासतीर्थीया–** कश्चिदपि पुमान् ।। २०४-२१५ ।।

**वेदाङ्गतीर्थीया–** 'एनं यदि जित्वा' इत्यनेनार्जुनजयोऽशक्य इति सूचयति । कथञ्चिज्जित्वा आहृता चेत् ।। २०४ ।।

---

१. 'अनुसृत्यैनम्' इति चट्टीपाठः ।

२. 'कश्चिद् विलिप्सेत्' इति वादिराजतीर्थानां पाठः ।

**वादिराजतीर्थीया–** 'नैव कश्चिद् विलिप्सेत्' इत्यत्र विशेषेण लब्धुमिच्छेत् विलिप्सेत् ।।२०४-५।।

**वरदराजीया–** एनमर्जुनं जित्वा कन्या आहृता चेत् परामृष्टां कन्यकां कश्चिदपि नैव लिप्सेत् इच्छेत् । अतः कारणादर्जुनस्य अनुयानं पृष्ठतो गमनं मह्यं न रोचते इत्यूचिवान् ब्रुवाणः परेशः तूष्णीमास ।।२०४।।

**जनार्दनीया–** 'एनं यदि जित्वा' इत्यनेनार्जुनजयः अशक्य इत्याह । कथञ्चिज्जित्वा कन्यका आहृता चेत् परामृष्टां कश्चिन्नैव लिप्सेत् नेच्छेत् । मे मह्यम् न रोचते न शोभते न प्रशस्यते, मनसीति शेषः । नेष्टम् ।।२०४।।

**ताम्रपर्णीया–** ।। **कन्यका चाहृता चेदिति** ।। अत्र चेच्छब्दो तर्हीत्यर्थे ।। २०४ ।।

**चट्टी–** एनं यदि जित्वा कन्यका आहृता चेत् तर्हि परामृष्टां कश्चिन्नैव लिप्सेत् नेच्छेत् अतः कारणात् वो युष्माकं अनुयानमर्जुनस्य अनुयानं पृष्ठतो अनुगमनं मे मह्यं न रोचते न प्रशस्यते इत्यूचिवान् ब्रुवाणः परेशः श्रीकृष्णः तूष्णीमास ।। २०४ ।।

**श्रुत्वा हली कृष्णवाक्यं बभाषे मा यात चित्तं विदितं मयाऽस्य ।**
**अस्यानुवृत्तिर्विजयाय नः स्याच्छुभाय शान्त्यै परतश्च मुक्त्यै ।।२०५।।**

**वेदाङ्गतीर्थीया–** शान्त्यै बुद्धेः हरिनिष्ठतायै ।। २०५ ।।

**मधुसूदनीया–** अस्य कृष्णस्य चित्तं विदितं ज्ञातम् । कृष्ण एव एतावत्कपटं कृत्वाऽर्जुनाय सुभद्रां दत्तवानित्यूच इति भावः ।। २०५ ।।

**वरदराजीया–** हली रामः अस्य श्रीकृष्णस्य चित्तं मनो मया विदितं ज्ञातम् । अतो मा यात न गच्छध्वम् । अस्य कृष्णस्य अनुवृत्तिरानुकूल्येन वर्तनं इह नोऽस्माकं विजयाय विजयार्थं स्यात् । परतः परत्र च मुक्त्यै मोक्षाय स्यात् ।। २०५ ।।

**जनार्दनीया–** अस्य कृष्णस्य चित्तं विदितं मनोऽभिप्राय ज्ञात इत्यर्थः । मा यात मा गच्छध्वम् । अस्य कृष्णस्य अनुवृत्तिः अनुकूलत्वेन वर्तनं नः विजयाय शुभाय शान्त्यै बुद्धेः निर्दुष्टतायै, स्यादिति शेषः । परतश्च मुक्त्यै ।।२०५।।

**ताम्रपर्णीया–** शान्त्यै अनिष्टशान्त्यै ।।२०५-२१०।।

**चट्टी–** हली बलभद्रः श्रीकृष्णस्य वाक्यं श्रुत्वा बभाषे । किमिति? अस्य श्रीकृष्णस्य चित्तं मनो मया विदितं ज्ञातम् । अतो मा यात मा गच्छध्वम् । अस्य कृष्णस्यानुवृत्तिरानुकूल्यवर्तनं नः विजयाय शुभाय शान्त्यै बुद्धेर्निर्दुष्टतायै स्यात्, इहेति शेषः । परतः परत्र च मुक्त्यै मोक्षाय स्यात् ।। २०५ ।।

**चट्टी–** 'सुभद्रामानयामः' इति यदुक्तं तदयुक्तमित्याह– **देयेत्यादिना** ।। कन्या देया च अन्यस्मै दातव्यैव । तर्हि अस्माकं पार्थेन तुल्यो वरो नास्ति । अतुल्यत्वं विवृणोति– **कौरवेय इत्यादिना** ।। 'पार्थः कौरवेयश्च' कुरुकुलोत्पन्न इति कुलीनत्वमाह । सुपूर्णशक्तेः कृष्णस्य वेदव्यासस्य 'पौत्रः' इति वरस्य गुणान्तराण्याह । 'पितृष्वसेयः' इति सम्बन्धयोग्यत्वमाह । वीरतमः अतिशयेन वीरः गुणैः ज्ञानादिभिराढ्यः ।। २०२ ।।

**अर्थ्योऽस्माभिः स्वयमेवाहरत् स शक्रात्मजो नात्र नः कार्यहानिः ।**
**[1]अनुद्रुत्यैनं यदि वः स्यात् पराजयो हानिर्दृढं यशसो वो भवेत ।।२०३।।**

**व्यासतीर्थीया–** मायाव्रतं निहत्य इत्यादेरुत्तरमाह– **अनुद्रुत्येति** ।। अनुद्रुत्यैनं युध्यताम् ।।२०३।।

**वेदाङ्गतीर्थीया–** नात्र मानहानिः स्यादित्युक्तेरभिप्रायमाह– **अर्थ्योऽस्माभिरिति** ।। २०३ ।।

**वरदराजीया–** अस्माभिरर्थ्योऽर्थनीयः सः शक्रात्मजः अर्जुनः स्वयमेव अप्रार्थित एव कन्यामपाहरत् । अतोऽत्र विषये नोऽस्माकं कार्यहानिर्नास्ति । एवं अर्जुनं अनुद्रुत्य अनूद्दिश्य गतानां वो युष्माकं यदि पराजयः तर्हि वो यशसो हानिः दृढं निश्चितं स्यात् ।। २०३ ।।

**अनन्तभट्टीया–** दृढं सत्यम् ।। २०३-२०५ ।।

**जनार्दनीया–** अत एव ईदृशो वरः अस्माभिः अर्थ्यः अर्थनीयः सः शक्रात्मजः स्वयमेवाहरत्, कन्यामिति शेषः । अत्र कन्याहरणविषये नोऽस्माकं कार्यहानिः न काऽपीत्यर्थः । एनमर्जुनं अनुद्रुत्य अनुगम्य यदि वः युष्माकं पराजयः स्यात् तर्हि वः यशसः हानिः स्यात् । दृढं सत्यम् ।।२०३।।

**चट्टी–** अत एवेदृशो वरोऽस्माभिः अर्थ्यः अर्थनीयः सः शक्रात्मजः स्वयमेवाहरत्, कन्यामिति शेषः । अत कन्याहरणविषये नोऽस्माकं कार्यहानिः नास्ति । एनमर्जुनं अनुसृत्य अनुगम्य वो युष्माकं यदि पराजयः स्यात् तर्हि वो यशोहानिः भवेत । दृढं सत्यम् ।। २०३ ।।

**जित्वा ययेनं कन्यका चाऽहृता चेत् परामृष्टां नैव [2]कश्चिद्धि लिप्सेत् ।**
**अतो न मे रोचते वोऽनुयानमित्यूचिवानास तूष्णीं परेशः ।।२०४।।**

**व्यासतीर्थीया–** कश्चिदपि पुमान् ।। २०४-२१५ ।।

**वेदाङ्गतीर्थीया–** 'एनं यदि जित्वा' इत्यनेनार्जुनजयोऽशक्य इति सूचयति । कथञ्चिज्जित्वा आहृता चेत् ।। २०४ ।।

---

१. 'अनुसृत्यैनम्' इति चट्टीपाठः ।

२. 'कश्चिद् विलिप्सेत्' इति वादिराजतीर्थानां पाठः ।

**वादिराजतीर्थीया–** 'नैव कश्चिद् विलिप्सेत्' इत्यत्र विशेषेण लब्धुमिच्छेत् विलिप्सेत् ।।२०४-५।।

**वरदराजीया–** एनमर्जुनं जित्वा कन्या आहृता चेत् परामृष्टां कन्यकां कश्चिदपि नैव लिप्सेत् इच्छेत् । अतः कारणादर्जुनस्य अनुयानं पृष्ठतो गमनं मह्यं न रोचते इत्यूचिवान् ब्रुवाणः परेशः तूष्णीमास ।।२०४।।

**जनार्दनीया–** 'एनं यदि जित्वा' इत्यनेनार्जुनजयः अशक्य इत्याह । कथञ्चिज्जित्वा कन्यका आहृता चेत् परामृष्टां कश्चिन्नैव लिप्सेत् नेच्छेत् । मे मह्यम् न रोचते न शोभते न प्रशस्यते, मनसीति शेषः । नेष्टम् ।।२०४।।

**ताम्रपर्णीया–** ।। **कन्यका चाहृता चेदिति** ।। अत्र चेच्छब्दो तर्हीत्यर्थे ।। २०४ ।।

**चट्टी–** एनं यदि जित्वा कन्यका आहृता चेत् तर्हि परामृष्टां कश्चिन्नैव लिप्सेत् नेच्छेत् अतः कारणात् वो युष्माकं अनुयानमर्जुनस्य अनुयानं पृष्ठतो अनुगमनं मे मह्यं न रोचते न प्रशस्यते इत्यूचिवान् ब्रुवाणः परेशः श्रीकृष्णः तूष्णीमास ।। २०४ ।।

**श्रुत्वा हली कृष्णवाक्यं बभाषे मा यात चित्तं विदितं मयाऽस्य ।**
**अस्यानुवृत्तिर्विजयाय नः स्याच्छुभाय शान्त्यै परतश्च मुक्त्यै ।।२०५।।**

**वेदाङ्गतीर्थीया–** शान्त्यै बुद्धेः हरिनिष्ठतायै ।। २०५ ।।

**मधुसूदनीया–** अस्य कृष्णस्य चित्तं विदितं ज्ञातम् । कृष्ण एव एतावत्कपटं कृत्वाऽर्जुनाय सुभद्रां दत्तवानित्यूच इति भावः ।। २०५ ।।

**वरदराजीया–** हली रामः अस्य श्रीकृष्णस्य चित्तं मनो मया विदितं ज्ञातम् । अतो मा यात न गच्छध्वम् । अस्य कृष्णस्य अनुवृत्तिरानुकूल्येन वर्तनं इह नोऽस्माकं विजयाय विजयाद्यर्थं स्यात् । परतः परत्र च मुक्त्यै मोक्षाय स्यात् ।। २०५ ।।

**जनार्दनीया–** अस्य कृष्णस्य चित्तं विदितं मनोऽभिप्राय ज्ञात इत्यर्थः । मा यात मा गच्छध्वम् । अस्य कृष्णस्य अनुवृत्तिः अनुकूलत्वेन वर्तनं नः विजयाय शुभाय शान्त्यै बुद्धेः निर्दुष्टतायै, स्यादिति शेषः । परतश्च मुक्त्यै ।।२०५।।

**ताम्रपर्णीया–** शान्त्यै अनिष्टशान्त्यै ।।२०५-२१०।।

**चट्टी–** हली बलभद्रः श्रीकृष्णस्य वाक्यं श्रुत्वा बभाषे । किमिति? अस्य श्रीकृष्णस्य चित्तं मनो मया विदितं ज्ञातम् । अतो मा यात मा गच्छध्वम् । अस्य कृष्णस्यानुवृत्तिरानुकूल्यवर्तनं नः विजयाय शुभाय शान्त्यै बुद्धेर्निर्दुष्टतायै स्यात्, इहेति शेषः । परतः परत्र च मुक्त्यै मोक्षाय स्यात् ।। २०५ ।।

**ततोऽर्जुनो यत्र [1]तिष्ठन् न कश्चित् पराजयं याति कृष्णाज्ञयैव ।**
**रथेन तेनैव ययौ सभार्यः शक्रप्रस्थं चाविशद् भ्रातृगुप्तम् ॥२०६॥**

**वेदाङ्गतीर्थीया–** ततोऽनन्तरम् अर्जुनः सभार्यो ययौ ॥ २०६-२०९ ॥

**वादिराजतीर्थीया–** 'ततोऽर्जुनो यत्र तिष्ठेत्' इत्यत्र अर्जुनः यत्र तिष्ठेत् ततः तत्र । 'कृष्णाज्ञयैव' इति वदता 'यत्र योगेश्वरः कृष्णः यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥'(गी-१८.७८) इति व्यासात्मकृष्णोक्तगीतावाक्यं स्मारयति । कृष्णो व्यासः तस्याज्ञयेत्यर्थः ॥२०६-२१६॥

**मधुसूदनीया–** यत्र कृष्णदत्तरथे तिष्ठन् कश्चिदपि तिष्ठन् सन् पराभवं न याति । ततः अर्जुनोऽपि यत्र रथे तिष्ठन् पराभवं न याति ॥ २०६-२१६ ॥

**वरदराजीया–** ततस्तदनन्तरं तेनैव रथेन सभार्योऽर्जुनः ययाविति सम्बन्धः । यत्र रथे तिष्ठन् कश्चिदपि वीरः कृष्णाज्ञया पराजयं न याति । तेनैव रथेनेत्यर्थः । भ्रातृभिः युधिष्ठिरादिभिः गुप्तं रक्षितं शक्रप्रस्थं इन्द्रप्रस्थं आविशच्च ॥ २०६ ॥

**अनन्तभट्टीया–** यत्र रथे तिष्ठन् कश्चिदपि पराजयं न याति । तेन रथेन ॥२०६॥

**जनार्दनीया–** ततोऽर्जुनः यत्र यस्मिन् कृष्णरथे कश्चित् पुरुषः तिष्ठन् सन्, कृष्णाज्ञया पराजयं नैव याति । तेनैव रथेन ययौ । सभार्यः शक्रप्रस्थं आविशत् ॥२०६॥

**चट्टी–** ततस्तदनन्तरं अर्जुनः यत्र यस्मिन् कृष्णरथे तिष्ठन् सन् कश्चित् पुरुषः कृष्णाज्ञयैव पराजयं न याति । तेनैव रथेन सभार्यः सन् ययौ भ्रातृगुप्तं शक्रप्रस्थं चाविशत् ॥ २०६ ॥

**सम्भावितो भ्रातृभिश्चातितुष्टैरूचेऽथ सर्वं तेषु यच्चाऽऽत्मवृत्तम्[2] ।**
**शान्तेषु वाक्यादात्मनो यादवेषु कृष्णो युक्तो हलिनाऽगाच्च पार्थान्॥२०७॥**

**वरदराजीया–** अतितुष्टैः भ्रातृभिः तेषु भ्रातृषु आत्मवृत्तिं प्रवृत्तिम् । आत्मनः स्वस्य वाक्यात् शान्तेषु युद्धोद्यमान्निवृत्तेषु सत्सु हलिना बलभद्रेण युक्तः ॥२०७॥

**जनार्दनीया–** आत्मवृत्तं स्वप्रवृत्तिम् । आत्मनः कृष्णस्येत्यर्थः ॥ २०७ ॥

**चट्टी–** अर्जुनोऽतितुष्टैः भ्रातृभिः सम्भावितः सन् अथ तेषु भ्रातृषु यदात्मवृत्तं तत् समस्तं च ऊचे । श्रीकृष्णः आत्मनः वाक्यात् यादवेषु शान्तेषु सत्सु युद्धोद्यमान्निवृत्तेषु सत्सु हलिना बलदेवेन युक्तः सहितः सन् पार्थान् प्रत्यगाच्च ॥ २०७ ॥

---

१. 'तिष्ठेत्' इति वादिराजतीर्थीयपाठः ।

२. 'आत्मवृत्तिम्' इति वरदराजीयपाठः ।

**सार्धं ययौ शकटै रत्नपूर्णैः शक्रप्रस्थं पूजितस्तत्र पार्थैः ।**
**ददौ तेषां तानि रामेण युक्तस्तथा कृष्णायै भूषणानि स्वसुश्च ॥२०८॥**

**वरदराजीया—** कृष्णः रत्नपूर्णैः शकटैः अनोभिः सह । तत्र शक्रप्रस्थे । तेषां तेभ्यः पाण्डवेभ्यः । तानि रत्नानि सहानीतानि । तथाशब्दः समुच्चये । कृष्णायै द्रौपद्यै च स्वसुः सुभद्रायाश्च ॥ २०८ ॥

**अनन्तभट्टीया—** तेषां तेभ्यः । शकटैः सार्धम् ॥२०८॥

**जनार्दनीया—** शकटैः सार्धं शक्रप्रस्थमगादिति सम्बन्धः ॥ २०८ ॥

**चट्टी—** श्रीकृष्णः रत्नपूर्णैः शकटैः सार्धं शक्रप्रस्थं ययौ । रामेण युक्तः श्रीकृष्णः तत्र शक्रप्रस्थे पार्थैः पूजितः सन् तानि रत्नानि तेषां तेभ्यः पाण्डवेभ्यः ददौ । तथा कृष्णायै द्रौपद्यै स्वसुः सुभद्रायाश्च भूषणानि ददौ ॥ २०८ ॥

**मासानुषित्वा कतिचिद् रौहिणेयो ययौ पुरीं स्वां केशवोऽत्रावसच्च ।**
**बहून् वर्षान् पाण्डवैः पूज्यमानः प्रीतिं तेषामादधानोऽधिकां स्वाम् ॥२०९॥**

**सत्याभिनवतीर्थीया—** तत्रैव 'मासानुषित्वा कतिचिद्रौहिणेयो..' इति श्लोके 'प्रीतिं तेषामादधानोऽधिकां स्वाम्' इत्यस्य तेषां पाण्डवानां स्वां स्वकीयत्वहेतुकीं अधिकां प्रीतिं आदधान इत्यर्थः । एतेन प्रीतिमादधान इत्यनेनैव प्रीतेः स्वकीयत्वस्य प्राप्तत्वात् स्वामित्येतत् व्यर्थमिति चोद्यस्यानवकाशः । प्रीतौ द्रव्यादिकं निमित्तं न भवति किं तु स्वभक्तत्वरूपं स्वकीयत्वमेव निमित्तमिति वक्तुं स्वामित्युक्तमित्यभ्युपगमात् ॥२०९-२१०॥

**वरदराजीया—** कतिचिन्मासान् काँश्चित् मासानुषित्वा स्थित्वा स्वां स्वकीयां पुरीं द्वारकां प्रति रौहिणेयो ययौ । केशवः कृष्णश्च इन्द्रप्रस्थेऽवसत् । वलभद्रं द्वारकां प्रेषयित्वा स्वयमत्रैव बहून् वर्षान् स्थित इत्यर्थः । तेषां तेषु पाण्डवेषु अधिकां प्रीतिं आदधानः कुर्वन् ॥ २०९ ॥

**जनार्दनीया—** अत्र शक्रप्रस्थे । आदधानः कुर्वन् ॥२०९॥

**भारतश्री—** बहून् वर्षान् प्रायः पाण्डवपुरे उवासेति ज्ञेयम् । भारते तथोक्तेः ॥ २०९-२१० ॥

**चट्टी—** रौहिणेयो वलभद्रः कतिचिन्मासान् उषित्वा स्वां पुरीं द्वारकां प्रति ययौ । केशवः श्रीकृष्णः अत्र इन्द्रप्रस्थे पाण्डवैः पूजितः सन् तेषु पाण्डवेष्वधिकां स्वां प्रीतिमादधानः कुर्वन् अवसच्च ॥ २०९ ॥

**आसन् कृष्णायाः पञ्च सुता गुणाढ्या विश्वेदेवाः पञ्चगन्धर्वमुख्यैः ।**
**आविष्टास्ते चित्ररथाभिताम्रकिशोरगोपालबलैः क्रमेण ॥२१०॥**

**वेदाङ्गतीर्थीया–** पूर्वं पञ्च विश्वेदेवाः कृष्णाया गुणाढ्याः पञ्च सुता आसन् ।। २१०-२११ ।।

**वरदराजीया–** कृष्णायाः द्रौपद्याः पञ्च गुणाढ्याः सुता आसन् । ते पूर्वं पञ्च विश्वेदेवाः चित्ररथादि-बलान्तैः पञ्चभिः गन्धर्वमुख्यैराविष्टाः ।। **क्रमेणेति** ।। आद्यः आद्येनाविष्टः द्वितीयो द्वितीयेनेत्येवं क्रमेणेत्यर्थः ।। २१० ।।

**अनन्तभट्टीया–** चित्ररथाभिताम्रकिशोरगोपालवलैः तदाख्यैः ।।२१०।।

**जनार्दनीया–** कृष्णायाः पूर्वं पञ्च विश्वेदेवाः ये ते सुता आसन् । चित्ररथाद्यैर्गन्धर्वमुख्यैः क्रमेण आविष्टाः ।।२१०।।

**चट्टी–** कृष्णायाः पूर्वं पञ्च विश्वेदेवाः ये ते गुणाढ्याः सुता आसन् । ते चित्ररथाभिताम्रकिशोर-गोपालवलैः पञ्च गन्धर्वमुख्यैः क्रमेण आविष्टाः ।। २१० ।।

**प्रतिविन्ध्यः [१]सुतसोमः श्रुताख्यकीर्तिः शतानीक उत श्रुतक्रियः ।**
**युधिष्ठिराद्यैः क्रमशः प्रजातास्तेषां द्वयोश्चावरजोऽभिमन्युः ।।२११।।**

**सत्याभिनवतीर्थीया–** तत्रैव 'प्रतिविन्ध्यः श्रुतसोमः श्रुताख्यकीर्तिः..' इति श्लोके अर्जुनपुत्रस्य श्रुताख्यकीर्तिशब्दवाच्यत्वमुक्तम् । तदयुक्तम् । भागवते नवमस्कन्धे- अर्जुनाच्छ्रुतकीर्तिस्तु (२९.२९) इति अर्जुनपुत्रस्य श्रुतकीर्तिशब्दवाच्यत्वस्योक्तत्वात् । भारते आदिपर्वणि- 'अर्जुनाच्छ्रुतकर्माणम्' (२४८.७५) इति अर्जुनपुत्रस्य श्रुतकर्मशब्दवाच्यत्वोक्तेरिति चेन्न । अर्जुनपुत्रस्य श्रुताख्यकीर्तिः श्रुतकीर्तिः श्रुतकर्मेति नामत्रयमित्यभ्युपगमात् । एवमन्यत्रापि द्रष्टव्यम् ।। २११-२१६ ।।

**वरदराजीया–** आद्यो युधिष्ठिराज्जातः, द्वितीयो भीमसेनात् इत्यादि क्रमशः प्रतिविन्ध्यादयः प्रजाताः । तेषां मध्ये द्वयोः युधिष्ठिरभीमसेनसुतयोः प्रतिविन्ध्यसुतसोमाख्ययोः अभिमन्युः अवरजः अनुजः । आदौ सुभद्रायां अभिमन्युरुत्पन्नः इति भावः । अनन्तरं द्रौपद्यां श्रुतकीर्त्यादयः उत्पन्नाः इति भावः ।।२११।।

**अनन्तभट्टीया–** द्वयोर्धर्मजभीमसुतयोः ।।२११।।

**जनार्दनीया–** अत्र नाम्ना प्रतिविन्ध्यादयः युधिष्ठिराद्यैः क्रमशः प्रजाताः । तेषां पञ्चानां मध्ये द्वयोः युधिष्ठिरभीमपुत्रयोः प्रतिविन्ध्यश्रुतसोमयोः अवरजः अभिमन्युः । अभिमन्योरुत्पत्त्यनन्तरं श्रुताख्यकीर्तिः अर्जुनात् कृष्णायां उत्पन्न इति भावः ।।२११।।

**ताम्रपर्णीया–** तेषां मध्ये द्वयोः प्रतिविन्ध्यसुतसोमयोरवरजोऽनन्तरजः । श्रुतकीर्त्युत्तमः इति भावः ।। २११-२१८ ।।

---

१. 'श्रुतसोमः' इति जनार्दनीय-चट्टीपाठः ।

**भावचन्द्रिका–** विन्ध्यसमत्वात् प्रतिविन्ध्यः । स्तुतः अभिष्टुतः सोमलताविशेषो येन काले स सुतः सोमः । श्रुतकर्मेति नाम । कर्मत्वेन श्रुतत्वलाभे श्रुतशब्दवैयर्थ्यपरिहाराय श्रुतशब्दः कीर्तिपर इत्याह– **श्रुताख्यकीर्तिरिति** ।। श्रुतिः कीर्तिमानिति महत्कर्म कृत्वा कीर्तिमानिति यावत् । शतानीको नाम कश्चित् राजर्षिः तत्समः । श्रुतसेन इति नाम श्रुता क्रिया वहुत्वात् सेनेति यस्येति श्रुतक्रिय इति । अभिमानात् अभिः विषयव्याप्तौ वहुज्ञः शत्रुषु मन्यमानश्च इत्यभिमन्युः । तदुक्तम्- 'शास्त्रतः प्रतिविन्ध्यं तं ऊचुर्विप्रा युधिष्ठिरम् । श्रुतसोमं महाश्वेतं सोमार्कसमतेजसम् ।। सुतसोमं महेश्वासं सुषुवे भीमसेनतः। श्रुतं कर्म महत्कृत्वा निवृत्तेन किरीटिना ।। जातः पुत्रस्तथेत्येवं श्रुतकर्मा ततोऽभवत् । शतानीकस्य राजर्षेः कौरव्यस्य महात्मनः ।। चक्रे पुत्रं सनामानं नकुलः कीर्तिवर्धनम् । ततस्त्वजीजनत् कृष्णा नक्षत्रे वह्निदैवते ।। सहदेवात्सुतं तस्मात् श्रुतसेनेति तं विदुः ।।'(१.२४७.७७-८१)। 'अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम् । अभिमन्युरिति प्राहुरार्जुनिं ब्राह्मणर्षभाः ।।' इति(१.२४७.६३)भारते।।२११-२३६।।

**भारतश्री–** द्वयोः प्रतिविन्ध्यसुतसोमयोः ।। २११-२२२ ।।

**चट्टी–** अत्र नाम्ना प्रतिविन्ध्यः श्रुतसोमः श्रुताख्यकीर्तिः शतानीकः उतानन्तरं श्रुतविक्रमः इति । एते युधिष्ठिराद्यैः क्रमशः प्रजाताः, तेषां पञ्चानां मध्ये द्वयोः युधिष्ठिरभीमपुत्रयोः प्रतिविन्ध्यश्रुतसोमनाम्नोः अवरजः अभिमन्युः, अभिमन्योरुत्पत्त्यनन्तरं श्रुताख्यकीर्तिः अर्जुनात् कृष्णायामुत्पन्नः ।। २११ ।।

**[1]चन्द्रांशयुक्तोऽतितरां बुधोऽसौ जातः सुभद्राजठरेऽर्जुनेन ।**
**धर्मेरशक्रांशयुतोऽश्विनोश्च तथैव कृष्णस्य च सन्निधानयुक् ।।२१२।।**

**वरदराजीया–** असौ अभिमन्युः स्वयं बुधः अतितरां अत्यन्तं चन्द्रांशेन युक्तः । सुभद्रायाः जठरे अर्जुनेन जात उत्पादितः । धर्मस्य यमस्य, ईरस्य वायोः, शक्रस्य च अंशैयुक्तः अश्विनोरंशयुक्तः इत्यर्थः । कृष्णस्य देवकीनन्दनस्य सन्निधानेन विशेषावेशन युक्तः ।। २१२ ।।

**जनार्दनीया–** असौ अभिमन्युः पूर्वं बुधः । अतितरामत्यन्तं चन्द्रांशेन युक्तः सुभद्राजठरे अर्जुनेन जातः उत्पादितः । धर्मस्य यमस्य, ईरस्य वायोः, शक्रस्य चांशैर्युतः । अश्विनोश्चांशयुक्त इत्यर्थः । कृष्णस्य च देवकीनन्दनस्य च सन्निधानेन विशेषावेशेन युक्तः ।।२१२।।

**चट्टी–** असावभिमन्युः पूर्वं बुधः नितरामत्यन्तं चन्द्रांशेन युक्तः सुभद्रायाः जठरे अर्जुनेन जातः उत्पादितः । धर्मस्य, ईरस्य वायोः, शक्रस्य चांशैर्युक्तः । अश्विनोश्चांशेन युतः, तथैव श्रीकृष्णस्य सन्निधानेन विशेषावेशेन युक् युक्तः ।। २१२ ।।

---

१. 'चन्द्रांशयुक्तो नितरां' इति चट्टीपाठः । 'चन्द्रांशोऽप्यभिमन्युश्च ।' इति ब्रह्मवैवर्ते चतुर्थखण्डे- ६.१७९.

**सर्वेऽपि ते वीर्यवन्तः सुरूपा भक्ता विष्णोः सर्वशास्त्रेष्वभिज्ञाः ।**
**मोदं ययुः पाण्डवास्तैः सुतैश्च विशेषतः सात्त्वतीनन्दनेन ॥२१३॥**

**वेदाङ्गतीर्थीया–** अभिज्ञाः सम्यक् परिचयवन्तः ॥ २१३ ॥

**वरदराजीया–** चन्द्राद्यावेशफलमाह– **सर्वेऽपीति** ॥ सात्त्वतीनन्दनेन सुभद्रातनयेन अभिमन्युना विशेषतो मोदं ययुः ॥ २१३ ॥

**अनन्तभट्टीया–** सात्त्वतीनन्दनेन सुभद्रासुतेन ॥२१३॥

**जनार्दनीया–** चन्द्राद्यावेशफलमाह– **सर्वेऽपीति** ॥ अभिज्ञाः सम्यक् परिचयवन्तः । सात्त्वतीनन्दनेन सात्त्वतां यादवानां स्त्र्यपत्यत्वात् सात्त्वती सुभद्रा, तस्याः नन्दनेनाभिमन्युना ॥२१३॥

**चट्टी–** ते सर्वे च वीर्यवन्तः सुरूपाः विष्णोर्भक्ताः सर्वशास्त्रेषु अभिज्ञाः सम्यक् परिचयवन्तः । पाण्डवाश्च तैः सुतैर्मोदं सन्तोषं ययुः । सात्त्वतीनन्दनेन सात्त्वतां यादवानां अपत्यत्वात् सात्त्वती सुभद्रा तस्याः नन्दनेन अभिमन्युना विशेषतो मोदं ययुः ॥ २१३ ॥

**ततः कदाचित् खाण्डवं कृष्णपार्थौ चिक्रीडिषू सत्यभामासुभद्रे ।**
**आदाय यातौ परिचारकैश्च रथेन गन्धर्ववरानुगीतौ ॥२१४॥**

**वेदाङ्गतीर्थीया–** रथेन यातौ ॥ २१४ ॥

**वरदराजीया–** खाण्डववनं चिक्रीडिषू क्रीडां कर्तुकामौ । सत्यभामा च सुभद्रा च ते सत्यभामा-सुभद्रे आदाय परीचारकैः रथेन च सह तौ गतौ ॥ २१४ ॥

**जनार्दनीया–** चिक्रीडिषू क्रीडां कर्तुकामौ । रथेन यातौ ॥ २१४ ॥

**चट्टी–** ततः कदाचित् कृष्णपार्थौ चिक्रीडिषू क्रीडां कर्तुकामौ सत्यभामासुभद्रे आदाय रथेन परिचारकैश्च सहितौ गन्धर्ववरैरनुगीतौ सन्तौ खाण्डवं वनं प्रति यातौ ॥ २१४ ॥

**स्वैरं तयोस्तत्र चिक्रीडतोश्च स्त्रीरत्नाभ्यां मन्दवातानुजुष्टे ।**
**वने प्रसूनस्तबकोरुराजिते जले च तिग्मद्युतिकन्यकायाः ॥२१५॥**

**वेदाङ्गतीर्थीया–** तत्र वने ॥ २१५ ॥

**वरदराजीया–** स्त्रीरत्नाभ्यां सत्यभामासुभद्राभ्यां सह तत्र खाण्डववने मन्दवातेन अनुजुष्टे सेविते प्रसूनस्तवकैः पल्लवैश्च उरु राजिते वने इति सम्बन्धः । तिग्मद्युतेः सूर्यस्य कन्यकायाः यमुनायाः जले च स्वैरं स्वेच्छया चिक्रीडतोः क्रीडां कुर्वतोः ॥ २१५ ॥

**जनार्दनीया–** तयोः कृष्णार्जुनयोः स्त्रीरत्नाभ्यां स्वैरं स्वेच्छया मन्दवातानुजुष्टे मन्दवायुसेविते । प्रसूनस्तवकैः पुष्पगुच्छकैः उरु राजिते । 'स्याद् गुच्छकस्तु स्तवकः कुड्मलो मुकुलोऽस्त्रियाम्' इत्यमरः। अत्र वने । तिग्मद्युतिः सूर्यः, तस्य कन्यका यमुना, तस्याः जले चिक्रीडतोः सतोः ।।२१५।।

**चट्टी–** तयोः कृष्णार्जुनयोः स्त्रीरत्नाभ्यां स्वैरं स्वेच्छया मन्दवातानुजुष्टे मन्दवायुना सेविते प्रसूनस्तवकोरुराजिते तत्र वने तिग्मद्युतेः सूर्यस्य कन्यकायाः यमुनायाः जले क्रीडतोः क्रीडां कुर्वतोः सतोः ।।२१५।।

**भूत्वा विप्रस्तौ ययाचेऽन्नमेत्य कृशानुरूचेऽनुमते[1] रमेशितुः ।**
**पार्थः कीदृक् तेऽन्नमिष्टं वदेति स चावादीद् वह्निरहं वनार्थी ।।२१६।।**

**व्यासतीर्थीया–** रमेशितुः मते पार्थमूचे । पार्थश्च वदेत्यूचे ।। २१६ ।।

**वेदाङ्गतीर्थीया–** कृशानुः विप्रो भूत्वा तौ उपेत्य अन्नं ययाचे । मते मतेन ।। २१६ ।।

**वरदराजीया–** कृशानुः प्रधानोऽग्निः विप्रो भूत्वा तौ कृष्णार्जुनौ एत्य आगत्यान्नं ययाचे । रमेशितुः कृष्णस्यानुमते तदनुमत्या पार्थः ऊचे । किमिति? ते तुभ्यं कीदृक् कीदृशमन्नं इष्टं वदेत्यूचे इति सम्बन्धः । स चाग्निरवादीत् । अहं वह्निः वनार्थी, आगत इति शेषः ।। २१६ ।।

**अनन्तभट्टीया–** कृशानुः विप्रो भूत्वा तावुपेत्यान्नं ययाचे । पार्थः रमेशितुर्मते मतेन । सत्यं दास्यामीति प्रतिज्ञां कुर्विति, कृष्णेनानुज्ञां च दत्तायामित्यर्थः । वदेत्यूचे ।।२१६।।

**जनार्दनीया–** कृशानुः अग्निः विप्रो भूत्वा तौ एत्य अन्नं ययाचे । पार्थः रमेशितुः अनुमतेः अनुमतेन ऊचे । किमिति? ते तव कीदृगन्नं इष्टं वदेति सम्बन्धः । स चाग्निः अहं वह्निः वनार्थीत्यवादीत् ।।२१६।।

**ताम्रपर्णीया–** रमेशितुर्मतेन वदेति पार्थमूचे इत्यन्वयः ।। २१६ ।।

**चेट्टी–** कृशानुः अग्निः विप्रो भूत्वा तौ कृष्णार्जुनौ एत्य अन्नं ययाचे । पार्थः रमेशितुः श्रीकृष्णस्य अनुमते अनुमत्या ते कीदृगन्नं इष्टं वदेत्यूचे । स च विप्रः अहं वह्निः वनार्थी इत्यवादीत् ।।२१६।।

**[2]प्रयाजान् देवाननुयाजांश्च शुल्कं हविर्दाने देवतानामयाचिषम् ।**
**बलह्रासस्तव भूयादिति स्म शस्त्वैव ते तांश्च ददुः पुरा मम ।।२१७।।**

---

१. 'कृशानुरूचे च मते' इति वेदाङ्गतीर्थीयपाठः स्यात् । अनन्तभट्टीयपाठोऽपि तथैवेति भाति ।

२. देवा समेत्य चान्योन्यं विचारं चक्रिरे पुरा । अस्माभिः प्रार्थितो ब्रह्मा यज्ञभागमकल्पयत् ।। मनुष्यैः दीयमानांस्तान् दत्तांश्च प्राप्नुमः कथम् । इति चिन्तातुरान् देवान् बृहस्पतिरभाषत । अग्निं दूतं वृणीमहे स भागान् प्रार्थयिष्यति। अग्निर्मुखं हि देवानां भोक्ष्यामस्तन्मुखेन हि । विचार्यैवं तदा देवा अग्निं कार्यार्थमाययुः । कुर्मस्त आयुरजरं यदग्ने

**व्यासतीर्थीया–** अन्नप्रार्थने निमित्तमाह– **प्रयाजानित्यादिना** ।। २१७-२१८ ।।

**वेदाङ्गतीर्थीया–** प्रयाजाननुयाजांश्च आहुतिविशेषान् ।।२१७-२१८।।

**वादिराजतीर्थीया–** 'प्रयाजान् देवाननुयाजान्' इत्यत्र देवतानां हविर्दाने स्वस्मिन् हुतहविर्दाने प्रयाजाननुयाजांश्च आहुतिविशेषान् शुल्कं वेतनं देवान् प्रति अयाचिषम्, शप्त्वा अस्माकमन्नदाने वेतनमयाचिषमिति कोपात् शप्त्वा तान् आहुतिविशेषान् ।। २१७-२१९ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'प्रयाजान् देवाननुयाजांश्च शुल्कं..' इति श्लोके वहुकालमारभ्य वल-ह्रासदुःखमस्तीति ज्ञापनार्थं 'पुरा शप्त्वा' इत्युक्तम् । अन्यथा पुरा इत्येतद्वयर्थं स्यादिति द्रष्टव्यम् ।।२१७।।

**मधुसूदनीया–** देवतानां हविर्दाने निमित्ते देवान् शुल्कं वेतनमयाचिषम् । किं वेतनं याचितमित्यत आह– **प्रयाजानिति** ।। प्रयाजाननुयाजांश्च हविर्भागान् शुल्कमयाचिषमिति सम्बन्धः । ततस्ते देवाः तव वलह्रासो भूयादिति मां शप्त्वैव मम तान् प्रयाजाऽनुयाजान् ददुः ।। २१७-२२३ ।।

**वरदराजीया–** किमर्थं वनमर्थयसे इत्यत आह– **प्रयाजानित्यादिना** ।। प्रयाजान् पञ्च अनुयाजांश्चतुरो अर्हदेवान् प्रति शुल्कं वेतनमयाचिषम् । किमर्थम्? वेतनदेवतानां हविर्दाने विषये स्वमुखेन हविर्गृहीत्वा देवताभ्यो दातुं वेतनत्वेन प्रयाजादीन् अयाचिषमित्यर्थः । ते देवाः तव वलह्रासो भूयादिति मां शप्त्वा तान् प्रयाजादीन् मम मह्यं पुरा पूर्वं ददुः ।। २१७ ।।

**अनन्तभट्टीया–** प्रयाजाननुयाजांश्च तदाख्यान्यागान् । शुल्कं वेतनम् । देवतानां हविर्दाने ।।२१७।।

**जनार्दनीया–** वनार्थित्वं विविच्याह– **प्रयाजानित्यादिना** ।। अहं देवतानां हविर्दाने विषये प्रयाजाननुयाजान् चतुरो आहुतिविशेषान् शुल्कं वेतनमयाचिषम् । ते देवाः । तान् आहुतिविशेषान् ।।

**ताम्रपर्णीया–** शुल्कं वेतनम् ।। २१७-२१८ ।।

**चट्टी–** किमर्थं वनमर्थयसीत्यत आह– **प्रयाजानित्यादिना** ।। देवतानां हविर्दाने विषये देवान् प्रयाजाननुयाजांश्च प्रयाजानुयाजाख्यहविर्भागान् शुल्कमयाचिषम् । ततस्ते देवाः तव वलह्रासः भूयादिति मां शप्त्वैव ते देवाः पुरा मम तान् प्रयाजानुयाजान् हविर्भागान् ददुः ।। २१७ ।।

**पुनः पूर्तिः केन मे स्याद् बलस्येत्यब्जोद्भवं पृष्टवानस्मि नत्वा ।**
**यदा वनं खाण्डवं हि त्वमत्सि तदा बलं ते भवतीति सोऽब्रवीत् ।।२१८।।**

---

प्रार्थयाम ते । सुकरं कार्यमस्माकं कुरुष्व व्रज भूतलम् । अग्रे पूर्वे भ्रातरो नस्तस्मात् कुरु समीहितम् । इत्यर्थितोऽग्निस्तान् वव्रे प्रयाजांश्चानुयाजकान् । रमायै विष्णुना दत्ताः सरस्वत्यै रमा त्वदात् । स्नुषादिभ्यः उमादिभ्यस्त्वतिस्नेहात् तु सा ददौ । प्रार्थयित्वा च ता देवाः कार्यार्थमग्रये ददुः । ततः प्रभृति देवान् वै उद्दिश्याग्नौ प्रहूयते । अग्नौ दत्तं समायाति देवान् प्रति दिवि स्थितान् ।। इति विधानपारिजाते तृतीयस्तवके पत्र.८६-८७

**सत्याभिनवतीर्थीया–** तदनन्तरमेव 'पुनः पूर्तिः केन मे स्याद्बलस्य..' इति श्लोके पूर्वं वलपूर्तिः स्वभावत एवाभूत् । तद्विवक्षया 'पुनः पूर्तिः' इत्युक्तमिति ज्ञातव्यम् । एतेन पूर्वं बलहासपूर्त्योरभावात् पुनः पूर्तिः इति कथनमनुपपन्नमिति दूषणस्यानवकाशः । केवलपूर्तिविवक्षयैव पुनः पूर्तिः इत्युक्तमित्यभ्युपगमात् ।। २१८-२२२ ।।

**वरदराजीया–** अहं अब्जोद्भवं चतुर्मुखं नत्वा केन कारणेन मे बलस्य पूर्तिः पूर्णता स्यादिति पृष्टवानस्मि । सोऽब्जोद्भवोऽब्रवीत् । किमिति? त्वं यदा खाण्डववनं अत्सि तदा ते बलं भवति पूर्णं भविष्यतीति ।।२१८।।

**जनार्दनीया–** अत्सि भक्षयिष्यसि । भवति भविष्यति ।। २१८ ।।

**चट्टी–** अहमब्जोद्भवं चतुर्मुखं नत्वा मे बलस्य पूर्तिः पूर्णता पुनः केन स्यादिति पृष्टवानस्मि । सोऽब्जोद्भवः अब्रवीत् । किमिति? त्वं यदा खाण्डववनमत्सि भक्षयसि तदा ते बलं भवति भविष्यति इत्यब्रवीत् इति सम्बन्धः ।। २१८ ।।

**शक्रस्येदं खाण्डवं तेन विघ्नं करोत्यसौ तेन वां प्रार्थयामि ।**
**इत्युक्ते तं पार्थ ऊचे यदि स्याद् रथो धनुश्चाथ शक्रं निरोत्स्ये ।।२१९।।**

**व्यासतीर्थीया–** आवयोः प्रार्थने किं निमित्तमित्यत आह– **शक्रस्येति** ।। २१९ ।।

**वेदाङ्गतीर्थीया–** तर्हि वनं भक्षय । किमावयोः प्रार्थनं क्रियत इत्यत आह– **शक्रस्येति** ।।२१९-२२०।।

**वरदराजीया–** तर्ह्यस्मत्प्रार्थनं किमर्थमित्यत आह– **शक्रस्येति** ।। तेन कारणेन । असौ शक्रः । वां भवन्तौ प्रार्थयामि । तमग्निम् । रथो धनुश्च यदि स्यात् तर्हि शक्रं निरोत्स्ये निरुद्धं करिष्ये ।।२१९।।

**जनार्दनीया–** तर्हि वनं भक्षयामीति किमर्थमावयोः प्रार्थनं क्रियते इति तत्राह– **शक्रस्येति** ।। येन कारणेन इदं खाण्डवं शक्रस्य तदीयमित्यर्थः । तेन कारणेन असाविन्द्रो विघ्नं करोति । तेन कारणेन वां भवन्तौ प्रार्थयामि । अथ तर्हि रथधनुषोः प्राप्त्यनन्तरं शक्रं निरोत्स्ये ।।२१९।।

**ताम्रपर्णीया–** आवयोः प्रार्थने किं निमित्तमित्यत आह– **शक्रस्येति** ।। विघ्नं वृष्ट्यादिना ।।२१९।।

**चट्टी–** तर्हि अस्मत्प्रार्थना किमर्थं क्रियत इत्यत आह– **शक्रस्येति** ।। येन कारणेन इदं खाण्डवं वनं शक्रस्य सम्बन्धीत्यर्थः । तेन कारणेन असौ शक्रः विघ्नं करोति । तेन कारणेन वां भवन्तौ प्रार्थयामि इत्युक्तः पार्थः तमग्निमूचे । रथो धनुश्च मम यदि स्यात् तर्हि अथानन्तरं शक्रं निरोत्स्ये इत्यूचे ।।२१९।।

**नरावेशादन्नदानप्रतिश्रवात् स्वस्यापि शक्रस्य विरोधमैच्छत् ।**
**पार्थः कृष्णस्य प्रेरणाच्चैव वह्निः पार्थं ययाचे शक्रविरोधशान्त्यै ।।२२०।।**

**व्यासतीर्थीया–** स्वयमिन्द्रत्वात्पार्थः शक्रविरोधं कस्मादैच्छदित्यत आह– **नरेति** ।। कृष्णस्य मतेन पार्थं कस्माद्ययाचे वह्निरित्यत आह– **कृष्णस्येति** ।। २२० ।।

**वादिराजतीर्थीया–** 'नरावेशादन्नदानप्रतिश्रवात्' इत्यत्र नरावेशात् करणात् कृष्णस्य प्रेरणान्निमित्ताच्च कृतादन्नदानप्रतिश्रवादिति योजना । स्वस्यापि स्वाभिन्नस्यापि ।। २२० ।।

**वरदराजीया–** ननु इन्द्रादभिन्नः अर्जुनः कथं स्वात्मानमेव निरोद्धुमैच्छदित्यत आह– **नरावेशात् इत्यादिना** ।। नरस्य नारायणसखस्य आवेशनिमित्तात् तथा ते अन्नं दास्यामीति प्रतिश्रवात् प्रतिज्ञायाः अन्नदानप्रतिज्ञालब्धपुण्यातिशयात् स्वस्यापि स्वाभिन्नस्यापि शक्रविरोधं पार्थः ऐच्छत् । कृष्णस्य प्रेरणात् पार्थं ययाचे । ननु कृष्णस्तथा किमर्थं प्रेरयामासेत्यत उक्तम्– **शक्रेति** ।।२२०।।

**अनन्तभट्टीया–** पार्थः स्वस्यापि स्वाभिन्नस्यापीत्यर्थः । कृष्णस्य मतेन वह्निः पार्थं कस्माद्ययाचे इत्यत आह– **कृष्णस्येति** ।।२२०।।

**जनार्दनीया–** पार्थ आत्मनो मूलरूपेणेन्द्रेण कथं विरोधमैच्छदित्यत आह– **नरावेशादिति** ।। 'नरावेशात्' इत्यनेन रोधनसामर्थ्यं सूचितम् । अन्नदानप्रतिश्रवात् सत्पात्रे अन्नदानान्महत्फलं सूचितम् । स्वस्यापि स्वमूलरूपस्यापि विरोधमैच्छत् । शक्रस्य विरोधे अन्यत्कारणं दर्शयति– **कृष्णस्येति** ।। पार्थः कृष्णस्य प्रेरणाच्चैव विरोधमैच्छदिति सम्बन्धः । 'वह्निः कृष्णस्य प्रेरणात् पार्थं ययाचे' इति टिप्पणीकाराः । तेषां मते 'नाप्रेरितो विष्णुना तस्य रोधं पार्थः कुर्यात्' इति उत्तरश्लोकविरोधो दृश्यते । प्रकृतमनुसरति– **वह्निरिति** ।।२२०।।

**ताम्रपर्णीया–** स्वात्मकशक्रविरोधेच्छायां हेत्वन्तरमाह– **कृष्णस्य प्रेरणाच्चेति** ।। कृष्णार्जुनयोः उभयोरपि प्रार्थने किं निमित्तमित्यतस्तावदर्जुनप्रार्थने निमित्तमाह– **वह्निरिति** ।।२२०।।

**चट्टी–** नन्विन्द्राभिन्नोऽर्जुनः कथं स्वात्मानमेव निरोद्धुं ऐच्छदित्यत आह– **नरावेशादिति** ।। नरस्य आवेशान्निमित्तात् तथा अन्नदानप्रतिश्रवात् श्रीकृष्णस्य प्रेरणाच्चैव पार्थः स्वस्यापि स्वमूलरूपस्यापि शक्रस्य विरोधमैच्छत् । 'वह्निः श्रीकृष्णस्य प्रेरणात् पार्थं ययाचे' इति व्याख्याने 'नाप्रेरितो विष्णुना तस्य रोधं पार्थः कुर्यात्' इत्युत्तरश्लोकविरोधो दृश्यते । प्रकृतमनुसरति– **वह्निरिति** ।। वह्निः शक्रविरोधशान्त्यै पार्थं ययाचे ।। २२० ।।

**नहि स्वदत्तस्य पुनः स वैरं शक्रः कुर्यात् स्वयमिन्द्रो हि पार्थः ।**
**नाप्रेरितो विष्णुना तस्य रोधं पार्थः कुर्यादिति कृष्णं ययाचे ।।२२१।।**

**व्यासतीर्थीया–** पार्थप्रार्थनया च कथं शक्रविरोधशान्तिरित्यत आह– **नहीति** ।। स्वदत्तं कथं येन विरोधाकरणमित्यत उक्तम्– **स्वयमिति** ।। प्रार्थने किं निमित्तमित्यत उक्तम्– **नाप्रेरित इति** ।।

**वेदाङ्गतीर्थीया–** अथ तर्हि श्रीकृष्णार्जुनयोरुभयोरपि प्रार्थने निमित्तमाह– **नेति** ।। स शक्रः स्वदत्तस्य पुनर्वैरं न कुर्यादिति पार्थं ययाचे इत्यत्रापि योज्यम् । तस्य शक्रस्य रोधम् ।। २२१ ।।

**वादिराजतीर्थीया–** 'नहि स्वदत्तस्य पुनः स वैरम्' इत्यत्र तात्कालिकवैरकरणेऽपि अर्जुनदत्तं स्वदत्तमेवेति विचार्य पश्चाद् वैरं न करिष्यतीति भावेन 'पुनः' इत्युक्तम् ।। २२१-२२३ ।।

**वरदराजीया–** तदेव विवृणोति– **न हीति** ।। वैरं विघ्नम् । पार्थदत्तं कथं स्वदत्तमित्यत उक्तम्– **स्वयमिति** ।। तर्हि किमर्थं कृष्णं ययाचे इत्यतः पार्थप्रेरणार्थमित्याह– **नाप्रेरित इति** ।। तस्य इन्द्रस्य ।।२२१।।

**अनन्तभट्टीया–** पार्थप्रार्थनया कथं शक्रविरोधशान्तिरित्यत आह– **नहीति** ।। कृष्णप्रार्थने किं निमित्तमित्यत आह– **नाप्रेरित इति** ।।२२१।।

**जनार्दनीया–** कृष्णार्जुनयोरुभयोः प्रार्थने निमित्तमाह– **न हीति** ।। स शक्रः स्वदत्तस्य पुनः वैरं न कुर्यात् हि यस्मात् पार्थः स्वयमिन्द्रः तस्मादिति सम्बन्धः । विष्णुना अप्रेरितः पार्थः तस्य शक्रस्य विरोधं न कुर्यादिति कृष्णं ययाचे । विष्णुरेव कृष्ण इति निबोद्धव्यम् ।। २२१ ।।

**ताम्रपर्णीया–** पार्थयाचने कथं शक्रविरोधपरिहार इत्यत आह– **न हीति** ।। स्वदत्तस्य वनस्य भक्षणतो निमित्तेन शक्रः पुनर्वैरं न कुर्यादित्यर्थः । कृष्णयाचने निमित्तमाह– **नेति** ।। २२१ ।।

**चट्टी–** तदेव विवृणोति– **न हीति** ।। सः शक्रः स्वदत्तस्य पुनः वैरं विरोधं न कुर्यात् । पार्थदत्तं कथं स्वदत्तमित्यत उक्तम्– **स्वयमिति** ।। हि यस्मात् पार्थः स्वयमिन्द्रः तस्मादिति सम्बन्धः । तर्हि श्रीकृष्णं किमर्थं ययाचे इत्यतः पार्थप्रेरणार्थमित्याह– **नाप्रेरित इति** ।। विष्णुना अप्रेरितः पार्थः शक्रस्य विरोधं न कुर्यादिति श्रीकृष्णं ययाचे । विष्णुरेव कृष्ण इति बोद्धव्यम् ।। २२१ ।।

**नचायुक्तः केशवेनैष शक्त इति स्म कृष्णादाप भूयोऽप्यनुज्ञाम् ।**
**ययौ समीपं च हरेर्बदर्यामादाय चक्रं चामुतः केशवेऽदात् ।।२२२।।**

**व्यासतीर्थीया–** पुनरपि कृष्णे किं निमित्तं ययाच इत्यत आह– **न चायुक्त इति** ।। याचितोऽपि चक्रं केशवे अदात् ।। २२२ ।।

**वेदाङ्गतीर्थीया–** कृष्णप्रार्थने निमित्तान्तरं चाह– **नचेति** ।। एषः पार्थः कृष्णेन अयुक्तः तत्सहाय-रहितः । अर्जुनप्रेरणार्थं पूर्वं याचितत्वात् पुनः सहायकरणार्थं याचनाद् 'भूयः' इत्युक्तम् । वनदाहानुज्ञाम् ।। २२२-२२३ ।।

**वरदराजीया–** तर्हि पार्थप्रतिज्ञानन्तरं पुनः पुनः कृष्णप्रार्थनं भारतादौ कथमित्यतः तस्य तात्पर्यमाह– **न चायुक्त इति** ।। एषः पार्थः कृष्णेनायुक्तः तद्रहितो नैव शक्त इति हेतोः भूयोऽपि कृष्णादनुज्ञां आप । बदर्यां बदरिकाश्रमे हरेः श्रीनारायणस्य समीपं ययौ । अमुतः हरेः चक्रमादाय केशवे कृष्णायादात् ।।२२२।।

**अनन्तभट्टीया–** हरेर्नारायणस्य ।। २२२ ।।

**जनार्दनीया–** शक्रस्य रोधने कृष्णप्रार्थने निमित्तान्तरं चाह– **न चेति** ।। केशवेन कृष्णेन अयुक्तः कृष्णसहायरहितः एष पार्थः न वै शक्तः, रोद्धुमिति शेषः । इति कृष्णं भूयोऽपि ययाचे स्मेति सम्बन्धः । कृष्णस्यार्जुनप्रेरणार्थं पूर्वं याचितत्वात् पुनः सहायकरणार्थं याचनाद् 'भूयः' इत्युक्तम् । कृष्णादनुज्ञामाप, वनभक्षणार्थमिति शेषः । बदर्यां स्थितस्य हरेः । अमुतः नारायणात् । केशवे कृष्णाय ।। २२२ ।।

**ताम्रपर्णीया–** न केवलं कृष्णमन्नं याचितवान् किन्तु वनभक्षणसमये पुनरनुज्ञामापेति सनिमित्तक-माह– **न चेति** ।। एषः पार्थः कृष्णसहायरहितश्चेत् खाण्डवदाहे न शक्तः अतः कृष्णसाहाय्यसम्पादनार्थं कृष्णे भारं निधातुं अग्निरनुज्ञामापेति भावः ।।२२२-२२३।।

**चट्टी–** शक्रस्य रोधने श्रीकृष्णस्य प्रार्थने निमित्तान्तरमाह– **नचेति** ।। केशवेन श्रीकृष्णेन अयुक्तः कृष्णसहायरहितः एषः पार्थः नैव शक्तः, रोद्धुमिति शेषः । इति श्रीकृष्णात् भूयोऽप्यनुज्ञामाप । बदर्यां विद्यमानस्य हरेः श्रीनारायणस्य च समीपं प्रति ययौ । अमुतः श्रीमन्नारायणाच्चक्रं आदाय केशवे श्रीकृष्णाय अदात् ।। २२२ ।।

**[1]चक्रं गोमन्ते [2]कृष्णमापापि पूर्वं भक्त्या वह्निः केशवेऽदात् पुनस्तत् ।**
**चक्रं च विष्णोर्बहुधा व्यवस्थितं तदग्निदत्तं प्राक्तनं चैकधाऽऽसीत् ।।२२३।।**

**व्यासतीर्थीया–** ननु पूर्वमेतत् चक्रं गोमन्ते प्राप्तमस्ति पुनः किमर्थमदादित्यत आह– **चक्रमिति** ।। गोमन्ते गरुडदत्तमेकं चक्रमग्निदत्तमेकमिति कति चक्राणि सन्ति विष्णोरित्यत आह– **चक्रं चेति** ।।२२३।।

**सत्याभिनवतीर्थीया–** तत्रैव 'चक्रं च विष्णोर्बहुधा..' इत्यस्ति । तस्यार्थः- विष्णोः चक्रं बहुधा बहुप्रकारेण व्यवस्थितम् । तत् तत्र बहुधा व्यवस्थितचक्रमध्ये अग्निदत्तं प्राक्तनं च चक्रमेकधा एकप्रकारेण युक्तमिति वक्तव्यम् । एतेन एकप्रकारेण युक्तमित्यर्थलाभार्थम् एकधा युक्तमिति वक्तव्यम् । एकधा इत्येतावन्मात्रकथनमनुपपन्नमिति दूषणं निरस्तम् । युक्तमित्यस्य शेषेण एकप्रकारेण युक्तमित्यर्थ-स्योक्तत्वात् ।। २२३-२२४ ।।

**वरदराजीया–** ननु इतः पूर्वमेव गोमन्ते गरुडेन दत्तं चक्रमास कृष्णेन युक्तमतः पुनः कथं तत्प्राप्तिः इत्यत आह– **चक्रमिति** ।। गोमन्ते चक्रं सुदर्शनं कृष्णमायाद्धि यद्यपि तथापि तत् तदेव चक्रं पुनः वह्निः भक्त्या केशवे अदात् । तर्हि कृष्णस्य चक्रद्वयं प्राप्तमित्यत आह– **चक्रमिति** ।। बहुधा बहुरूपतया प्राक्तनं गोमन्ते प्राप्तमग्निदत्तं च एकधा एकरूपमेवासीत् ।।२२३।।

---

१. हरिवंशे विष्णुपर्वणि- ३०.५६-६०, ३६-३०, ४३.७-१०, ४६.१२-१३.

२. 'कृष्णमायाद्धि' इति वरदराजीयपाठः ।

**अनन्तभट्टीया–** भक्त्या अदात् । गरुडदत्तमेकं चक्रं, अग्निदत्तमेकं, एवं कतिचक्राणि सन्तीत्यत आह– **चक्रमिति** ।। एकधा एकप्रकारम् ।। २२३ ।।

**जनार्दनीया–** अग्निदत्तं तं चक्रम्, प्राक्तनं च गोमन्ते प्राप्तं च एकधा एकमासीत् ।।२२३।।

**भावविवृतिः–** 'चक्रश्च विष्णोः' इत्यत्र 'चक्रं बहुधा व्यवस्थितम्' इत्यनेनैव पूर्तौ विष्णोरित्युक्त्या तदितरेषां कालचक्रजगच्चक्रशिंशुमारचक्राणां व्यावृत्तिः सूचिता । इतरेषां बहुत्वाभावात् । विष्णुचक्रस्य बहुत्वमंशत एव न स्वरूपत इति सूचनायैकीभावकथनम् । चशब्देन शुद्धसत्वगुणनिर्मितं मुख्यतो दुर्गाभिमन्यमानं अमुख्यतः कामाद्यभिमन्यमानं इत्यादि विशेषो ज्ञातव्यः । उक्तञ्च- 'पूर्वं हरेश्चक्रमभूद्धि दुर्गा' (ता.नि-३.७६) इत्यादि । 'वराद्रथाङ्गत्वमवाप कामः'(ता.नि-३.७८) इति च ।।२२३-२४४।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ विंशोऽध्यायः ।।

**भारतश्री–** न केवलं चक्रं किन्तु धनुरादिकमपि तथा ।। २२३-२३३ ।।

**चट्टी–** नन्वितः पूर्वं गोमन्तपर्वते गरुडेन दत्तं चक्रं कृष्णेनाप्तम् इत्युक्तम् । अतः पुनः कथं तत्प्राप्तिरित्यत आह– **चक्रमिति** ।। पूर्वं गोमन्ते पर्वते चक्रं सुदर्शनं कृष्णमाप । अपि यद्यपि तथापि तदेव चक्रं पुनर्वह्निः भक्त्या केशवे अदात् । तर्हि श्रीकृष्णस्य चक्रद्वयं प्राप्तमित्यत आह– **चक्रं चेति** ।। विष्णोश्चक्रं च बहुधा बहुरूपेण व्यवस्थितं तदा अग्निदत्तं गोमन्ते प्राप्तं च चक्रमेकधा एकमासीत् ।।२२३।।

**[1]धनुश्च गाण्डीवमथाब्जजस्य करोति येनाखिलसंयतिं सः ।**
**अंशेन दत्तं तदुमापतेश्च शक्रस्य सोमस्य जलेशितुश्च ।।२२४।।**

**व्यासतीर्थीया–** अब्जजस्य गाण्डीवं धनुरर्जुने अदादित्युत्तरत्र सम्बन्धः । तस्य यशोवैभवं निरूपयति– **करोतीत्यादिना** ।। २२४ ।।

**वेदाङ्गतीर्थीया–** गाण्डीवस्वरूपमाह– **करोतीत्यादिना** ।। श्रीब्रह्मणा तद् गाण्डीवधनुः उमापत्यादीनां अंशेन दत्तमित्यनेन विष्णोश्चक्रस्यापि बाहुरूप्यमुक्तम् । क्रमश एभ्यो दत्तम् ।। २२४ ।।

**वादिराजतीर्थीया–** 'अंशेन दत्तम्' इत्यत्र तत् ब्रह्मकरस्थगाण्डीवं धनुः अंशेन एकांशेन उमापतेर्दत्तमिति योजना । देवायुधानां बहुरूपग्रहणशक्तिरप्यस्तीति ज्ञेयम् ।। २२४-२२५ ।।

---

१. 'एष गाण्डीमयश्चापो लोकसंहारसम्भृतः । रक्ष्यते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः ।। एष कृत्ये समुत्पन्ने तत्तद्धारयते फलम् । सहस्रशतसङ्ख्येन प्राणेन सततं ध्रुवः ।।' उद्योगपर्वणि- ९८.१९-२०. 'गाण्डी खड्गाख्यः पशुविशेषः । तस्य विकारो गाण्डीमयः । गाण्डीमयत्वादेव तत् गाण्डीवं नाम धनुरभूत् । 'गाण्डी वज्रग्रन्थी तन्मयः इत्यन्ये' इति नीलकण्ठः । 'गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा तु वासुकिम् । स्थानं कृत्वा तु वैशाखं विष्णुं कृत्वा शरोत्तमम् ।।' इति पाद्मे स्वर्ग.१९.३ । इति पद्मपुराणे त्रिपुरासुरसंहारकाले रुद्रो गाण्डीवं दधार इति ज्ञायते ।

**मधुसूदनीया–** ।। **धनुश्च गाण्डीवमिति** ।। ब्रह्मणि वर्षसहस्रम्, रुद्रे चतुःषष्टिवर्षपर्यन्तम्, शक्रे पञ्चोत्तराऽशीतिवर्षपर्यन्तम्, सोमे पञ्चशतवर्षपर्यन्तम्, वरुणे शतवर्षपर्यन्तम्, अग्नौ चतुःशतवर्षपर्यन्तम्, पार्थे पञ्चषष्टिवर्षपर्यन्तं गाण्डीवं स्थितमिति ज्ञातव्यम् । तथाचोक्तमर्जुनेनोत्तरं प्रति- [१]'एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् । ततोऽनन्तरमेवैतद्धनुरत्नमधारयत् ।। प्रजापतिः चतुष्षष्टिं शक्रोऽशीतिं च पञ्च च । समाः पञ्चशतं सोमो वर्षाणि वरुणः शतम् ।। तस्माच्च वरुणादग्निः प्रेम्णा चारु चतुःशतम् । अदाच्च गाण्डिवं दिव्यं पार्थायाद्भुतकर्मणे ।। अग्निना प्रातिभाव्येन दत्तं पार्थाय गाण्डिवम् । पार्थः पञ्च च षष्टिश्च कौन्तेयो धारयिष्यति ।। एवं दिव्यं धनुः पार्थो वारुणं चाप्यदर्शनम् ।।' इत्यादि विराटपर्वणि (४२.५-८) ।।२२४।।

**वरदराजीया–** अथानन्तरं गाण्डीवधनुश्च अब्जजस्य विद्यमानं अदादिति सम्बन्धः । सोऽब्जजः अखिलस्य संयतिं नियमनं येन गाण्डीवेन करोति । ननु गाण्डीवं शिवस्य शक्रस्य सोमस्य वरुणस्येति वा कुत्रचिदुक्तिः तत्कथं अब्जोद्भवस्य इत्युच्यत इत्यतः तात्पर्यमाह– **अंशेनेति** ।। तद्धनुरंशेन एकदेशेन । तदंशयुक्तं धनुरन्तरमित्यर्थः ।।२२४।।

**जनार्दनीया–** अथेत्यनन्तरं अब्जजस्य गाण्डीवं धनुश्च पार्थाय, अदादिति शेषः । स ब्रह्मा येनाखिल-संयतिं अखिलस्य जगतः संयमनं करोति । अग्निना गाण्डीवं वरुणादानीतमिति ग्रन्थान्तरोक्तिः । तत् ब्रह्मणः कथं इत्यत आह– **अंशेनेति** ।। तद्गाण्डीवं अंशेन एकांशेन उमापत्यादीनां दत्तम्, ब्रह्मणेति शेषः ।।२२४।।

**ताम्रपर्णीया–** ।। **धनुश्चेति** ।। सोऽब्जजः अखिलसंयतिं येन धनुषा करोति । तदब्जजस्य धनुश्च उमापत्यादेरंशेन दत्तमित्यर्थः । यद्वा- अथानन्तरमब्जजस्य धनुर्गाण्डीवं चार्जुनेऽदादित्युत्तरत्र सम्बन्धः। तस्य धनुषो वैभवं निरूपयति– **करोतीति** ।। सोऽर्जुनः । ननु गाण्डीवं वारुणं अर्जुनेऽग्निरदादिति ग्रन्थान्तरे उक्तम् । कथमब्जजस्य तदित्यत आह– **अंशेनेति** ।। २२४ ।।

**चट्टी–** अथानन्तरं अग्निः अब्जजस्य ब्रह्मणः गाण्डीवं धनुश्च पार्थाय, अदादिति शेषः । सः ब्रह्मा येन गाण्डीवेन अखिलस्य जगतः संयतिं नियमनं करोति । ननु गाण्डीवं शिवस्य, शक्रस्य, सोमस्य, वरुणस्येति वा कुत्रचिदुक्तिः । अतः अब्जोद्भवस्य धनुरिति कथमुच्यते इत्यत आह– **अंशेनेति** ।। तद्गाण्डिवं अंशेनैकांशेनोमापतेः रुद्रस्य शक्रस्य सोमस्य जलेशितुः वरुणस्य च दत्तम्, ब्रह्मणा इति शेषः ।

'धनुश्च गाण्डिवम्' इत्यत्र ब्रह्मणा वर्षसहस्रम्, रुद्रे चतुःषष्टिवर्षपर्यन्तम्, शक्रे पञ्चोत्तराशीति वर्षपर्यन्तम्, सोमे पञ्चशतवर्षपर्यन्तम्, वरुणे शतवर्षपर्यन्तम्, अग्नौ चतुःशतवर्षपर्यन्तम्, पार्थे च पञ्चषष्टीवर्षपर्यन्तं गाण्डीवं स्थितमिति ज्ञातव्यम् । तथाचोक्तं अर्जुनेनोत्तरं प्रति- 'एतद्वर्षसहस्रं तु ब्रह्मा

१. एते श्लोकाः उपलब्धकोशेषु व्यत्यासेन दृश्यन्ते ।

पूर्वमधारयत् । ततोऽनन्तरमेवैतद्धनुरत्नमधारयत् ।। प्रजापतिश्चतुःषष्टिं शक्रोऽशीतिं च पञ्च च । समाः पञ्चशतं सोमो वर्षाणि वरुणः शतम् ।। तस्माच्च वरुणादग्निः प्रेम्णा चापे चतुःशतम् । अदाच्च गाण्डिवं दिव्यं पार्थायाद्भुतकर्मणे ।। पार्थः पञ्च च षष्टिं च कौन्तेयो धारयिष्यति । एवं दिव्यं धनुः पार्थो वारुणं चारु दर्शनम् ।।' इति विराटपर्वणि ।।२२४।।

**तेनैव ते जिग्युरथो जगत्त्रयं [1]प्रसादतस्ते क्रमशोऽब्जयोनेः ।**
**अनन्यधार्यं विजयावहं च [2]भारेण लक्षस्य समं शुभावहम् ।।२२५।।**

**व्यासतीर्थीया–** भारो नाम द्वात्रिंशत्सहस्रनिष्कः । भारेण भारस्य ।। २२५ ।।

**वेदाङ्गतीर्थीया–** अथो तेनैव जगत्त्रयं जिग्युः । 'प्रसादतस्तु क्रमशोऽब्जयोनेः' इति च क्वचित् पाठः । भारो नाम विंशतितुलः । भारेण लक्षस्य समं लक्षभारसममिति यावत् । अत अनन्यधार्यं तद्धनुरिति सम्बन्धः ।।२२५-२२६।।

**सत्याभिनवतीर्थीया–** तत्रैव 'तेनैव ते जिग्युरथो जगत्त्रयम्..' इति श्लोके 'भारेण लक्षस्य समम्' इत्यस्य लक्षस्य भारेण लक्षसंख्यासम्बन्धिभारपरिमाणोपेतपदार्थेन सममित्यर्थः । एतेन लक्षसंख्याक-भारपरिमाणोपेतपदार्थेन सममिति वक्तव्यम् । लक्षस्य भारेण सममिति कथनमनुपपन्नमिति चोद्यं परास्तम् । भारपरिमाणस्य लक्षसंख्यासम्बन्धित्वोक्त्या भारपरिमाणस्य लक्षसंख्याकत्वमुक्तं भवति । भारपरिमाणवाचकात् भारशब्दात् मत्त्वर्थे अच्प्रत्ययं कृते भारशब्देन भारपरिमाणोपेतपदार्थ उच्यते । ततश्च भारेण लक्षस्य समम् इत्यनेन लक्षसङ्ख्याकभारपरिमाणोपेतपदार्थेन सममित्यर्थो लभ्यते इत्यभ्युपगमात् ।। २२५-२३० ।।

**वरदराजीया–** ते रुद्राद्याः । तेन ब्रह्मणा दत्तेन धनुषा जगत्त्रयं क्रमशो जिग्युः । अन्यैः धार्यं न भवति इति तथा । विजयावहं विजयप्रदम् । लक्षस्य द्वात्रिंशत्सहस्रनिष्कात्मकभारेण लक्षेण समभारमित्यर्थः । शुभावहं शुभप्रापकम् ।। २२५ ।।

**अनन्तभट्टीया–** भारो नाम एकविंशतिसहस्रनिष्कः ।।२२५।।

**जनार्दनीया–** अथो धनुःप्राप्त्यनन्तरं येभ्यो येभ्यो दत्तं ते ते शिवाद्याः तेनैव गाण्डीवेनैव अब्जयोनेः प्रसादतः जगत्त्रयं जिग्युः । 'प्रसादतस्तु क्रमशः' इति क्वचित् पाठः । लक्षभारेण लक्षसंख्याभारेण समम् । भारो नाम विंशति तुलाः । '..गुञ्जाः पञ्चाद्यमाषकः । ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् । तुला

---

१. 'प्रसादतस्तु' इति वेदाङ्गतीर्थीय-जनार्दनीये पाठान्तरम् ।

२. 'एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् । चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्णमव्रणम् ।।' आदि.२५१.८ । भारो नाम विंशतिः तुलाः । लौकिकव्यवहारे २०० ग्राम् इत्युच्यते । एवं लक्षभार इत्युक्ते लौकिकव्यवहारे २०.००० के.जि भवति ।

स्त्रियां पलशतं भारः स्याद् विंशतिस्तुलाः ।।' इत्यमरः । अत एव अनन्यधार्यं विजयावहं विजयप्रदं शुभावहं धनुरिति सम्बन्धः ।। २२५ ।।

**ताम्रपर्णीया–** ।। **प्रसादतस्त्विति** ।। क्रमशो विद्यमानात् प्रसादतः क्रमशो जगत्त्रयं जिग्युरित्यर्थः । भारो नाम विंशति तुला । अत एवानन्यधार्यम्, धनुरिति शेषः ।। २२५ ।।

**चट्टी–** यतः एतत्क्रमशः एभ्यो ब्रह्मणा दत्तं अथो एते शिवाद्याः तेनैव गाण्डीवेनैवाब्जयोनेः प्रसादतः जगत्त्रयं जिग्युः । भारेण लक्षस्य भारस्य समं समभारमिति यावत् । भारो नाम विंशतितुलाः । '..गुञ्जाः पञ्चाद्यमाषकः । ते षोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयम् । तुला स्त्रियां पलशतं भारः स्याद् विंशतिस्तुलाः ।।' इत्यमरः । अत एव अनन्यधार्यं विजयावहं विजयप्रदं शुभावहं शुभप्रापकम् । अदादिति सम्बन्धः ।।२२५।।

**[१]रथं च शुभ्राश्वयुतं जयावहं तूणौ तथाचाक्षयसायकौ शुभौ ।**
**ध्वजं च रामस्य हनूमदङ्कमादाय सर्वं वरुणादर्जुनेऽदात् ।।२२६।।**

**व्यासतीर्थीया–** 'शुभ्राश्वयुतम्' इत्यनेन अर्जुनस्य श्वेतवाहनसंज्ञित्वे निमित्तं सूचयति ।। २२६ ।।

**वादिराजतीर्थीया–** 'ध्वजं च रामस्य हनूमदङ्कम्' इत्यत्र रामस्य युद्धकाले हनूमदङ्कम् । यदा रामः इन्द्रदत्तमिममेव रथमारुह्य रावणं प्रति युद्धं चक्रे तदा हनुमान् ध्वजाग्रे अङ्कतया स्थितः । स एव रथः अर्जुनार्थमिन्द्रेण वरुणवशे दत्तोऽभूदिति भावः ।। २२६-२३० ।।

**मधसूदनीया–** ।। **ध्वजं च रामस्य इति** ।। हनूमदङ्कं हनुमत्प्रतिमाङ्कम् । 'स वानरवरो राजन् विश्वकर्मकृतो महान् । ननाद सुमहानादं नृत्यन्निव विभीषयन् ।।' इति (४८.९) कर्णपर्वणि । हनूमतो विश्वकर्मकृतत्त्वस्योक्तत्वेन तस्य प्रतिमात्वे एव सम्भवात् । अन्यथा तदसम्भवात् ।। २२६ ।।

**वरदराजीया–** रथं चाददिति सम्बन्धः । अक्षयसायकौ तूणीरं चादात् । हनूमदङ्कं कपिध्वजं रामस्य श्रीरामचन्द्रस्य ध्वजं चादात् । सर्वं गाण्डीवादिकं वरुणाददाय अर्जुनाय अग्निरदात् ।। २२६ ।।

**जनार्दनीया–** हनूमदङ्कं रामस्य श्रीरघुपतेर्ध्वजं च सर्वं गाण्डीवादि वरुणादादाय, अर्जुने अर्जुनाय अदात् ।।२२६।।

**चट्टी–** शुभ्राश्वयुतं जयावहं रथं च । तथा अक्षयसायकावुभौ तूणी च । हनूमदङ्कं हनुमत्प्रतिमाङ्कं श्रीरामस्य रघुपतेः ध्वजं चेति सर्वं वरुणादादाय अर्जुने अर्जुनाय अदात् । 'हनूमदङ्कम्' इत्यत्र 'स वानरवरो राजन् विश्वकर्मकृतो महान् । ननाद सुमहानादं भीषमाणो ननाद च ।।' इति कर्णपर्वणि । हनुमतो विश्वकर्मकृतस्योक्तत्वेन तस्य प्रतिमात्वे एव सम्भवादन्यथा तदसम्भवात् ।। २२६ ।।

---

१. ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः । तमास्थाय गतौ कृष्णौ न तयोः विद्यते भयम् ।। इति द्रोणपर्वणि १२७.१ । इति रथस्यापि अतिपुरातनत्वं प्रजगौ ।

**विशेषतो ध्वजसंस्थे हनूमत्यजेयता स्याज्जयरूपो यतोऽसौ ।**
**सर्वं च तद्दिव्यमभेद्यमेव विद्युत्प्रभा ज्या च गाण्डीवसंस्था ॥२२७॥**

**व्यासतीर्थीया–** ज्यां वर्जयित्वा तत्सर्वमभेद्यम् । द्रौणिना ज्याच्छेदनस्य कृतत्वात् ॥ २२७ ॥

**वेदाङ्गतीर्थीया–** तद् धनुरादि । गाण्डीवस्य ज्या च विद्युत्प्रभा । अभेद्यत्वं ज्यां वर्जयित्वेति ज्ञातव्यम् । 'गुरोः सुतः चिच्छेद च ज्यां युधि गाण्डिवस्य' इति (ता.नि-२७-५२) वक्ष्यमाणत्वात् ॥२२७॥

**मधुसूदनीया–** ॥ **सर्वं चेति** ॥ सर्वं तद्धनुरथाश्वादिकं अभेद्यम् । ननु गाण्डीवस्य ज्यापि किं अभेद्येत्यतो नेत्याशयेनाह– **विद्युत्प्रभेति** ॥ तेनोत्तरत्र आश्वत्थाम्ना गाण्डीवस्य ज्याखण्डनेऽपि नैतद्विरोध इति ज्ञेयम् ॥ २२७-२२९ ॥[१]

**वरदराजीया–** गाण्डीवादिषु ध्वजस्य असाधारण्यमाह– **विशेषत इति** ॥ हनूमति ध्वजसंस्थे सति अस्य रथिनः अजेयता । यतोऽसौ हनूमान् जयरूपः । तत्सर्वं दिव्यं लौकिकविलक्षणम् । अत एवाभेद्यम् । गाण्डीवसंस्था ज्या च विद्युत्प्रभा आसीत् । तत्सर्वमभेद्यमित्युक्त्यनन्तरं ज्यायाः कथनं तस्या अभेद्यत्व-नियमाभावसूचनार्थम् । द्रौणिना छिन्नत्वस्य वक्ष्यमाणत्वादिति द्रष्टव्यम् ॥ २२७ ॥

**अनन्तभट्टीया–** ज्यां वर्जयित्वा तत्सर्वमभेद्यम् । ज्याया द्रौणिना छिन्नत्वात् ॥२२७॥

**जनार्दनीया–** गाण्डीवादिभ्यो ध्वजस्य हेतुपूर्वकविशेषं दर्शयति– **विशेषत इति** ॥ हनूमति ध्वजसंस्थे सति रथस्य विशेषतः जयप्रदत्वम् । गाण्डीवादिभ्यो विशेषात् अजेयता स्यात् । अतः यतो हनूमान् जयरूपः तत्सर्वं दिव्यं लोकविलक्षणम् । अत एव अभेद्यम् । गाण्डीवस्थज्या च विद्युत्प्रभा । अभेद्यत्वं च ज्यां वर्जयित्वेति ज्ञातव्यम् । 'गुरोः सुतः चिच्छेद च ज्यां युधि गाण्डिवस्य' इति अग्रे वक्ष्यमाणत्वात् ॥२२७॥

**भारतश्री–** धनुरादिकं ज्या च विद्युत्प्रभा अभेद्येति व्यत्ययेनान्वयः ॥ २२७-२३३ ॥

**ताम्रपर्णीया–** ॥ **सर्वं चेति** ॥ ज्यां वर्जयित्वा तत्सर्वमभेद्यम् । द्रौणिना ज्याछेदस्य क्रियमाणत्वात् ॥२२७-२३०॥

**चट्टी–** गाण्डीवादिभ्यः ध्वजस्य विशेषं हेतुपूर्वकं दर्शयति– **विशेषत इति** ॥ हनूमति ध्वजसंस्थे सति विशेषतः गाण्डीवादिभ्यो विशेषादजेयता स्यात् । यतः हनूमान् जयरूपः तत्सर्वं दिव्यं लोकविलक्षणम् । अत एव अभेद्यम् । गाण्डिवसंस्था ज्या च विद्युत्प्रभा । अभेद्यत्वं च ज्यां वर्जयित्वेति ज्ञातव्यम् । 'अश्वत्थाम्ना ज्याऽपनुत्ता' इति वक्ष्यमाणत्वात् ॥ २२७ ॥

---

१. मधुसूदनीया– ॥ ज्या चेति ॥ पृथग् ज्याग्रहणेन धनुरादेरेव अभेद्यत्वं नतु ज्याया अपीति सूचयति । अत उत्तरत्र अश्वत्थाम्ना गाण्डीवस्य ज्याखण्डनेऽपि न विरोधः इति भावः ॥२२७-२२९॥ इति मातृकान्तरपाठः ।

**गाण्डीवमप्यास कृष्णप्रसादाच्छक्यं धर्तुं पाण्डवस्याप्यधार्यम् ।**
**देवैश्च तैर्ब्रह्मवराद् धृतं तद् ब्रह्मैव साक्षात् प्रभुरस्य धारणे ॥२२८॥**

**व्यासतीर्थीया–** नन्वनन्यधार्यं गाण्डीवं कथमर्जुनधार्यं जातमित्यत आह– **गाण्डीवमिति** ।। नन्वस्त्वर्जुनधार्यं उमापत्यादिधार्यं कथमित्यत आह– **देवैरिति**।। २२८ ।।

**वेदाङ्गतीर्थीया–** अनन्यधार्यमर्जुनः कथं धत्त इत्यत आह– **गाण्डीवमिति** ।। ब्रह्मवरात् तैः देवैः शिवाद्यैः धृतम् । साक्षाद् धारणे ब्रह्मैव प्रभुरिति भावः ।। २२८ ।।

**वरदराजीया–** देवैरप्यधार्यं तद्गाण्डीवं कृष्णस्य प्रसादात् पाण्डवस्य अर्जुनस्य धर्तुं शक्यमास । तैर्देवैः पूर्वं तद्गाण्डीवं ब्रह्मणः वरादेव धृतम् । अस्य धनुषो धारणे ब्रह्मैव साक्षात् प्रभुः ।। २२८ ।।

**जनार्दनीया–** अन्यैरधार्यं चेत् अर्जुनेन कथं धृतमित्यत आह– **गाण्डीवमिति** ।। अधार्यमपि, ब्रह्मणोऽन्यैरिति शेषः । गाण्डीवं तैर्देवैः शिवाद्यैः । प्रभुः समर्थः ।। २२८ ।।

**चट्टी–** गाण्डीवमधार्यमपि, ब्रह्मणोऽन्यैरिति शेषः । श्रीकृष्णप्रसादात् पाण्डवस्य अर्जुनस्यापि धर्तुं शक्यमास । तर्हि शिवादिदेवैः कथं धृतमित्यत आह– **देवैरिति** ।। तैर्देवैः शिवाद्यैश्च ब्रह्मवरात् तद् गाण्डीवं धृतम् । ब्रह्मैवास्य गाण्डीवस्य धारणे साक्षात् प्रभुरतिसमर्थः ।। २२८।।

**इन्द्रस्य दत्तश्च वरः स्वयम्भुवा तेनापि पार्थस्य बभूव धार्यम् ।**
**इन्द्रो ह्यसौ फल्गुनत्वेन जातस्ततः सोऽस्त्रैः शरशालां चकार ॥२२९॥**

**व्यासतीर्थीया–**साक्षादनन्यापेक्षया अर्जुनधार्यत्वेऽपि निमित्तान्तरमाह– **इन्द्रस्येति** ।।२२९-२३०।।

**वेदाङ्गतीर्थीया–** अर्जुनेनैकधार्यत्वे निमित्तान्तरमप्याह– **इन्द्रस्येति** ।। ततः धनुरादिप्राप्त्यनन्तरम् ।।

**वरदराजीया–** स्वयम्भुवा अत्र ब्रह्मणा इन्द्रस्य वरो दत्तः । तेनापि कारणेन पार्थस्य अर्जुनस्य धार्यं बभूव । हि यस्मात् असौ इन्द्रः फल्गुनत्वेन जातः । ततोऽनन्तरं सोऽर्जुनोऽस्त्रैः मन्त्रैः शरशालां चकार ।।

**जनार्दनीया–** अर्जुनस्य धार्यत्वे निमित्तान्तरमाह– **इन्द्रस्येति** ।। तेन कारणेन पार्थस्यापि । ततः धनुरादिप्राप्त्यनन्तरम् । अस्त्रैर्मन्त्रैः शरशालां वासस्थानम् । 'वासः कुटी द्वयोः शाला सभा' इत्यमरः ।।२२९।।

**चट्टी–** अर्जुनस्य धार्यत्वे निमित्तन्तरमाह– **इन्द्रस्येति** ।। स्वयम्भुवा ब्रह्मणा इन्द्रस्य च वरो दत्तः। तेन कारणेन अस्यापि पार्थस्य अर्जुनस्य धार्यं बभूव । हि यस्मादसाविन्द्रः फल्गुनत्वेन जातः । ततः धनुरादिप्राप्त्यनन्तरं सोऽर्जुनः अस्त्रैः मन्त्रैः शरशालां शरजालावासस्थानम्, शरगृहमिति यावत् । चकार। 'वासः कुटी द्वयोः शाला सभा' इत्यमरः ।। २२९ ।।

**आ योजनद्वादशकाभिविस्तृतं पुरं चकाराऽशु पुरन्दरात्मजः ।**
**हुताशनोऽप्याशु वनं प्रगृह्य प्रभक्षयामास समुद्धतार्चिः ॥२३०॥**

**वेदाङ्गतीर्थीया–** पुरं मन्दिरम् ।। २३० ।।

**मधुसूदनीया–** ।।**प्रभक्षयामास समुद्धतार्चिरिति** ।। एकविंशतिदिनपर्यन्तं इति शेषः । 'अहोभिरेक-विंशद्भिर्विरराम दृढव्रतः' इत्यादिपर्वोक्तेः (२६०.१५)[१]।। २३० ।।

**वरदराजीया–** तदेव विशदयति– **आ योजनेति** ।। आ समन्तात् योजनद्वादशकेनाभिविस्तृतं पुरं चकार । हुताशनोऽग्निरपि आशु वनं प्रगृह्य स्वीकृत्य समुद्धतार्चिः भूत्वा भक्षयामास ।। २३० ।।

**जनार्दनीया–** तदेव विशदयति– **आ योजन इति** ।। योजनद्वादशकेभ्यः आ मर्यादीकृत्य । अभितः समन्तात् विस्तृतं पुरं समुद्धताः वृद्धाः अर्चिषः ज्वाला यस्य स तथा ।।२३०।।

**चट्टी–** तदेव विशदयति– **आयोजन इति** ।। पुरन्दरात्मजोऽर्जुनः आ योजनद्वादशकं आसमन्तात् योजनद्वादशेनाभिविस्तृतं पुरमाशु चकार । हुताशनोऽग्निरपि आशु वनं प्रगृह्य स्वीकृत्य समुद्धतार्चिः सम्यगुद्धताः प्रवृद्धाः अर्चिषः ज्वालाः यस्य स तथा भूतः सन् प्रभक्षयामास ।।२३०।।

[२]**प्रभक्षमाणं निजकक्षमीक्ष्य सन्धुक्षयामास तदाऽऽशुशुक्षणिम् ।**
**अक्षोपमाभिर्बहुलेक्षणोऽम्भसां धाराभिराक्षुब्धमनाः क्षयाय ॥२३१॥**

**व्यासतीर्थीया–** धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु । अत्र क्लेशलक्षणविरोधार्थः ।। २३१-२३३ ।।

**वेदाङ्गतीर्थीया–** सन्धुक्षयामास क्लेशयामास । निरोधमकरोदिति भावः । 'धुक्ष धिक्ष सन्दीपक्लेशन-जीवनेषु' इति धातुः ।। २३१-२३३ ।।

**वादिराजतीर्थीया–** 'सन्धुक्षयामास तदाऽऽशुशुक्षणिम्' इत्यत्र सन्धुक्षयामास क्लेशयामास । 'धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु' इति धातुः । अक्षोपमाभिः रथचक्रधारकदारूपमाभिः ।। २३१-२३३ ।।

**सत्याभिनवतीर्थीया–** तत्रैव 'प्रभक्षमाणं निजकक्षमीक्ष्य..' इति श्लोके 'सन्धुक्षयामास' इत्यस्य संसेचयामासेत्यर्थः । एतेन अग्निक्षयस्य जलसेचनकार्यत्वात् अग्नेः क्षयाय अम्भसां धाराभिः आशुशुक्षणिं सेचयामासेति वक्तव्यम् । सन्धुक्षयामासेति कथनमनुपपन्नमिति दूषणं परास्तम् । धातूनामनेकार्थत्वात् संधुक्षयामासेत्यस्य सेचयामासेत्यर्थ इत्यभ्युपगमात् ।। २३१-२३९ ।।

---

१. 'तद्वनं पावको धीमान् दिनानि दश पञ्च च । ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात् ।।' आदिपर्वणि २५४.४६. इति इदानीमुपलभ्यमानपाठः ।

२. 'प्रभक्ष्यमाणम्' इति चट्टीपाठः ।

**मधुसूदनीया—** अक्षोपमाभिः अक्षः शकटरथयोः चक्ररथयोर्मध्यस्थदारुविशेषः तत्सदृशाभिः ।।२३१-४४

।। इति श्रीविद्याधीशतीर्थपूज्यपादानां शिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे विंशोऽध्यायः ।।

**वरदराजीया—** आ समन्तात् क्षुब्धं क्षोभयुक्तं मनो यस्य स तथा । बहुलानि ईक्षणानि नेत्राणि यस्य सः इन्द्रो निजं कक्षं वनं प्रभक्षमाणं वीक्ष्य दृष्ट्वा आशुशुक्षणिं अग्निं अम्भसां जलानां धाराभिः । कथम्भूताभिः? अक्षोपमाभिः रथं चक्रं रन्ध्राविष्टकाष्ठविशेषेण अक्षेणोपमीयन्ते स्थौल्य इति अक्षोपमाः धाराः ताभिः । क्षयाय नाशाय सन्धुक्षयामास क्षोभयामास ।। २३१ ।।

**अनन्तभट्टीया—** धाराभिः क्षयाय नाशाय सन्धुक्षयामास बबाधेत्यर्थः । अक्षः रथरन्ध्राविष्टकाष्ठविशेषः ।।

**जनार्दनीया—** कक्षं वनम् । आशुशुक्षणिं वह्निं ईक्ष्य । बहुलेक्षणः सहस्राक्षः । आक्षुब्धमनाः सन् आ ईषत् क्षुब्धं क्षोभितं मनो यस्य स तथा । अक्षोपमाभिः अक्षः रथचक्ररन्ध्राविष्टकाष्ठविशेषः, तेन उपमाभिः स्थौल्येन सदृशाभिः अम्भसां धाराभिः क्षयाय नाशाय, उद्धतज्वालायाः इति शेषः । न तु अग्नेः । अत एव 'आ ईषत्' इत्युक्तम् । सन्धुक्षयामास क्लेशयामास, निरोधमकरोदिति भावः । 'धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु' इति धातुः ।। २३१ ।।

**ताम्रपर्णीया—** सन्धुक्षयामास क्लेशयुक्तमकरोत् । 'धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु' इति धातोः ।।२३१-३२।।

**चट्टी—** निजं कक्षं वनं प्रभक्ष्यमाणं वीक्ष्य बहुलानि ईक्षाणि नेत्राणि यस्य स तथा बहुलेक्षणः इन्द्रः ईषत् क्षुब्धं मनो यस्य स तथा आक्षुब्धमनाः सन् आशुशुक्षणिं अग्निं अक्षोपमाभिः अक्षः रथचक्ररन्ध्राविष्टकाष्ठविशेषः तेनोपमाभिः स्थौल्येन सदृशाभिः अम्भसां धाराभिः क्षयाय नाशाय, उद्धतज्वालाय इति शेषः । न त्वग्नेः । सन्धुक्षयामास क्लेशयामास, निरोधमकरोदिति भावः । 'धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु' इति धातुः ।। २३१ ।।

**अस्त्रैस्तु वृष्टिं विनिवार्य कृष्णः पार्थश्च शक्रं सुरपूगयुक्तम् ।**
**अयुध्यतां सोऽपि पराजितोऽभूत् प्रीतश्च दृष्ट्वा बलमात्मनस्तत् ।।२३२।।**

**वरदराजीया—** अस्त्रैः वाय्वाद्यैः वृष्टिं विनिवार्य कृष्णः पार्थश्च सुरपूगयुक्तं प्रत्युध्यताम् । सः शक्रोऽपि पराजितोऽभूत् । आत्मनो अर्जुनात्मकस्य स्वस्य तद्बलं दृष्ट्वा प्रीतश्च ।। २३२ ।।

**जनार्दनीया—** कृष्णः पार्थश्च उभौ अस्त्रैर्वृष्टिनिवारकवायव्याद्यैर्वृष्टिं विनिवार्य, सुरपूगयुक्तं सुरसमूहयुक्तं शक्रमयुध्यताम् । सोऽपीन्द्रोऽपि पराजितः सन्, आत्मनः पार्थात्मकस्य स्वस्य तद्विशिष्टं बलं दृष्ट्वा, प्रीतोऽभूत् ।।२३२।।

**चट्टी—** श्रीकृष्णः पार्थश्चोभौ वृष्टिनिवारकवाय्वादिमन्त्रैः वृष्टिं विनिवार्य सुराणां पूगेन समूहेन युक्तं शक्रमयुध्यताम् । सः इन्द्रोऽपि पराजितः सन्नात्मनः पार्थात्मकस्य स्वस्य तद्बलं दृष्ट्वा प्रीतोऽभूत् ।।२३२।।

**स्नेहं च कृष्णस्य तदार्जुने धृतं विलोक्य पार्थस्य बलं च तादृशम् ।**
**निवर्त्य मेघानतितुष्टचित्तः प्रणम्य कृष्णं तनयं समाश्लिषत् ।।२३३।।**

**वरदराजीया—** अर्जुने धृतं कृष्णस्य स्नेहं च विलोक्य पार्थस्य तादृशं पूर्वोक्तं बलं च विलोक्य अतितुष्टचित्तः सन् मेघान् निवर्त्य कृष्णं प्रणम्य नत्वा तनयं अर्जुनं च समाश्लिषत् ।। २३३ ।।

**जनार्दनीया—** तादृशं पूर्वोक्तं बलम् ।। २३३ ।।

**चट्टी—** अर्जुने धृतं श्रीकृष्णस्नेहं च तादृशं पूर्वोक्तं पार्थस्य बलं च विलोक्य तदा अतितुष्टचित्तः सन् मेघान् निवार्य श्रीकृष्णं प्रणम्य तनयमर्जुनं समाश्लिषत् ।।२३३।।

**विष्णुश्च शक्रेण सहैत्य केशवं समाश्लिषन्निर्विशेषोऽप्यनन्तः ।**
**स केवलं क्रीडमानः [1]सशक्रः स्थितो हि पूर्वं युयुधे न किञ्चित् ।।२३४।।**

**व्यासतीर्थीया—** विष्णुः वामनः ।। २३४-२३५ ।।

**वेदाङ्गतीर्थीया—** विष्णुः उपेन्द्रः पूर्वं शक्रार्जुनयुद्धसमये केवलं क्रीडमानः स्थितः । केवलम् इत्यस्यार्थमाह— **न किञ्चिदपि युयुध इति** ।। २३४ ।।

**वादिराजतीर्थीया—** 'विष्णुश्च चक्रेण सह' इत्यत्र स्वर्गस्थितः इन्द्रावरजो वामनरूपी विष्णुः अत्र विष्णुपदेनोच्यत इति ज्ञेयम् ।। २३४-२४५ ।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां विंशोऽध्यायः ।।

**वरदराजीया—** विष्णुः वामनः शक्रेण सह केशवं कृष्णं एत्य अनन्तः परिच्छेदरहितः अत एव निर्विशेषः बलज्ञानादिभिः विशेषरहितोऽपि समाश्लिषत् आलिङ्गितवान् । तर्हि पूर्वं कथं कृष्णेन युयुधे इत्यत आह— **स इति** ।। स वामनः शक्रेण सह वर्तमानः किञ्चिदपि न युयुधे युद्धं न कृतवान् । किन्तु क्रीडमान इव स्थितः ।। २३४ ।।

**जनार्दनीया—** निर्विशेषः आनन्दादिगुणैर्विशेषरहितः, कृष्णादिति शेषः । एक एवेति भावः । अनन्तः देशादिपरिच्छेदशून्यो विष्णुः उपेन्द्रः । केशवं कृष्णम् । पूर्वं शक्रार्जुनयुद्धसमये । केवलं क्रीडमानः सशक्रः स वामनः स्थितो हि । केवलमित्यस्यार्थः— **न किञ्चिदपि युयुध इति** ।। २३४ ।।

---

१. 'स शक्रः' इति चट्टीपाठः ।

**ताम्रपर्णीया–** विष्णुः निर्विशेषोऽपीन्द्रार्जुनवद् विशेषरहितोऽप्यैश्वर्यवशेन समाश्लिषत् । अनन्तोऽपि समाश्लिषत् । आश्लेषे स्वस्यापि कृष्णबाहुमध्यगतत्वप्राप्तेः देशतो अनवधिकस्य बाहुमध्यगमनरूपपरिष्वङ्गोऽलौकिक इति भावः । तथा चोक्तं भगवत्पादैः- 'अनन्तमन्तवदिव भुजयोरन्तरं गतम्' (द्वा.स्तो-१.५) इति । यद्वा- निर्विशेषत्वमुपपादयति– **अनन्त इति** ।। 'पूर्णमदः पूर्णमिदम्' इत्युक्तरीत्या निरवधिकद्रव्यादिपूर्तिसद्भावादिति भावः ।।२३४-२३६।।

**भारतश्री–** विष्णुरादित्यः ।। २३४-२३६ ।।

**चट्टी–** सः शक्रः शक्रेण सह वर्तमानः सः उपेन्द्रः पूर्वं शक्रार्जुनयुद्धसमये केवलं क्रीडमानः स्थितो हि । केवलमित्यस्यार्थः– **न किञ्चियुयुधे इति** ।। निर्विशेषः आनन्दादिगुणैर्निर्विशेषरहितः, कृष्णादिति शेषः । एक एवेति भावः । अनन्तः परिखेदरहितः विष्णुः उपेन्द्रश्च शक्रेण सह केशवं कृष्णं एत्य समाश्लिषत् ।। २३४ ।।

**ब्रह्मा च शर्वश्च समेत्य कृष्णं प्रणम्य पार्थस्य च कृष्णनाम ।**
**सञ्चक्रतुश्चापि शिक्षाप्रकर्षाच्चक्रुः[1] सर्वे स्वास्त्रदाने प्रतिज्ञाम् ।।२३५।।**

**वेदाङ्गतीर्थीया–** शिक्षाप्रकर्षात् कृष्णनाम सञ्चक्रतुः । शिक्षया प्रकृष्टत्वात् कृष्णनामानं चक्रतुरित्यर्थः ।। २३५ ।।

**वरदराजीया–** ब्रह्मा च शर्वश्चोभौ कृष्णं प्रति समेत्य पार्थस्य अर्जुनस्य कृष्ण इति नाम सञ्चक्रतुः । अर्जुने कृष्णनाम प्रवृत्तिनिमित्तमुक्तम्– **शिक्षेति** ।। प्रकृष्टत्वात् कृष्णः । शिक्षायोग्यतासम्बन्धः इत्यर्थः। सर्वे देवाः स्वास्त्रदाने स्वे देवताकमन्त्रदाने स्वास्त्राणि समयविशेषे दास्याम इति प्रतिज्ञां चक्रुः ।।२३५।।

**जनार्दनीया–** पार्थस्य शिक्षाप्रकर्षात् शिक्षातिशयात् कृष्णनाम चक्रतुः । सर्वे ब्रह्माद्याः स्वास्त्रदाने स्वेषां अस्त्रदाने प्रतिज्ञां चक्रुः, पार्थायेति शेषः ।। २३५ ।।

**चट्टी–** ब्रह्मा च शर्वश्चोभौ श्रीकृष्णं प्रणम्य पार्थस्य च शिक्षाप्रकर्षात् शिक्षाप्रकृष्टत्वात् कृष्णनामानं चक्रतुः । सर्वे ब्रह्माद्याः स्वास्त्रदाने स्वेषामस्त्रदाने प्रतिज्ञां च चक्रुः, अर्जुनायेति शेषः ।।२३५।।

**अनुज्ञातास्ते प्रययुः केशवेन क्रीडार्थमिन्द्रो युयुधे हि तत्र ।**
**प्रीत्या कीर्तिं दातुमप्यर्जुनस्य ततस्तुष्टः सह देवैर्ययौ स्वः[2] ।।२३६।।**

**व्यासतीर्थीया–** अज्ञानेनागत्येन्द्रो युयुधे किमिति जिज्ञासायामाह– **क्रीडार्थमिति** ।। २३६ ।।

१. 'चक्रुश्च सर्वे' इति चट्टीपाठः ।
२. 'ययौ सः' इति चट्टीपाठः ।

**वेदाङ्गतीर्थीया–** ते ब्रह्मेन्द्रादयः ।।२३९।।

**वरदराजीया–** ते ब्रह्माद्याः केशवेन कृष्णेन अनुज्ञाताः प्रययुः । पारिजातहरणादौ असुरावेशेन इन्द्रेण युद्धं कृतम्, तद्वदत्र न मन्तव्यमित्याह– **क्रीडार्थमिति** ।। तत्र खाण्डवदाहे इन्द्रः यद्युयुधे तत्क्रीडार्थमेव । क्रीडापि कुतः? प्रीत्या स्वावतारार्जुनप्रीत्या अर्जुनस्य कीर्तिं दातुम् । ततोऽनन्तरं तुष्टस्सन् देवैः सह स्वः स्वर्गलोकं प्रययौ ।। २३६ ।।

**जनार्दनीया–** ते ब्रह्मेन्द्रादयः केशवेन अनुज्ञाताः सन्तः प्रययुः । ननु पूर्वमिन्द्रः स्वदत्तस्य विरोधं न कुर्यादित्युक्तम्, तर्हि कृष्णार्जुनाभ्यां कथं युद्धं कृतवानित्यत आह– **क्रीडार्थमिति** ।। इन्द्रः अत्र खाण्डवदाहे क्रीडार्थं केशवेन युयुधे । न त्वसुरावेशेनेति भावः । प्रीत्या अर्जुनस्यापि कीर्तिं दातुमर्जुनेन युयुध इति सम्बन्धः । ततः परजयानन्तरम् । स्वः स्वर्लोकम् ।। २३६ ।।

**चट्टी–** ते ब्रह्मादयः केशवेन अनुज्ञाताः सन्तः प्रययुः । पारिजातहरणसमये इन्द्रेणासुरावेशेन युद्धं कृतम्, तद्वदत्र न मन्तव्यमित्याह– **क्रीडार्थमिति** ।। इन्द्रः अत्र खाण्डवदाहे क्रीडार्थं केशवेन युयुधे । न त्वसुरावेशेनेति भावः । प्रीत्या अर्जुनस्य कीर्तिं दातुं अर्जुनेनापि युयुधे इति सम्बन्धः । ततः पराजयानन्तरं स इन्द्रः देवैः सह तुष्टः सन् ययौ ।। २३६ ।।

**दैत्याश्च नागाश्च पिशाचयक्षा हताः सर्वे तद्वनस्था हि ताभ्याम् ।**
**ऋते चतुष्पक्षिणश्चाश्वसेनं मयं च नान्यत् किञ्चिदासात्र मुक्तम् ।।२३७।।**

**वरदराजीया–** ताभ्यां कृष्णार्जुनाभ्यां तद्वनस्था दैत्यादयः सर्वे हताः । सर्वे हता इत्यस्यापवादमाह– **ऋत इति** ।। चत्वारश्च ते पक्षिणश्च चतुष्पक्षिणः तान् तथा । अश्वसेनाख्यं नागं मयं चेति षड्ढते अन्यत् किञ्चित् अत्र खाण्डवे मुक्तं प्राणदानेन परित्यक्तं नास न बभूव ।। २३७ ।।

**जनार्दनीया–** ताभ्यां कृष्णार्जुनाभ्याम् ।। **ऋते इति** ।। चत्वारश्च ते पक्षिणश्च चतुष्पक्षिणः तान् । तथा अश्वसेनाख्यं नागम् मयं चेति षड्ढते । अन्यत् किञ्चित् अत्र खाण्डवे मुक्तं प्राणदानेन परित्यक्तं नास न बभूव ।।२३७।।

**ताम्रपर्णीया–** ।। **चतुष्पक्षिण इति** ।। जरिता-सारिसृक्त-स्तम्बमित्र-द्रोणाख्यान् पक्षिण इति भावः ।।२३७।।

**भावचन्द्रिका–** ।। **दैत्याश्चेति** ।। एवञ्च द्रौपद्युपद्रवपरिहारार्थं...* इति ज्ञेयम् । पक्षिरूपर्षिणा मन्दपालनाम्ना अहताश्चत्वारः पक्षिरूपाः अप्रजातपक्षाः ऋषयः..* द्रोणनामानः ।। २३७-२४४ ।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां
भावचन्द्रिकायां विंशोऽध्यायः।।

**भारतश्री–** चतुष्पक्षिणः मन्दपालस्य ऋषेः पुत्रा जरितारिसारिसृक्वद्रोणस्तम्भमित्रप्रभृतयः । अश्वसेनं तक्षकपुत्रम् ।।२३७-२४४।।

।। इति डम्वलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां विंशोऽध्यायः ।।

**चट्टी–** ताभ्यां कृष्णार्जुनाभ्यां तद्वनस्थाः दैत्याश्च नागाश्च पिशाचाश्च यक्षाश्च पिशाचयक्षाश्चेति सर्वे हताः । उक्तस्यापवादमाह– **ऋते इति** ।। चत्वारश्च ते पक्षिणश्च चतुष्पक्षिणः तान् । अश्वसेनं अश्वसेनाख्यं नागं च मयं चेति षड्ते अन्यत् किञ्चिदत्र खाण्डवे मुक्तं प्राणदानेन परित्यक्तं नास न बभूव ।। २३७ ।।

**अयमग्ने जरितेत्यादिमन्त्रैः स्तुत्वा वह्निं पक्षिणो नैव दग्धाः ।**
**[1]अश्वसेनः पुत्रकस्तक्षकस्य मात्रा ग्रस्तः प्रातिलोम्येन कण्ठे ।।२३८।।**

**व्यासतीर्थीया–** पक्ष्यादिमोचने निमित्तमाह– **अयमिति** ।।२३८-२४०।।

**वेदाङ्गतीर्थीया–** तेषां केन केन प्रकारेण मोक्षोऽभूदित्यत आह– **अयमग्ने इत्यादिना** ।। प्रातिलोम्येन अवाक् शिरस्त्वेन ।।२३८।।

**वरदराजीया–** षण्णामेव परित्यागे कारणमाह– **अयमग्ने इति** ।। 'अयमग्ने' (ऋ.सं-१०.१४२) इत्यादि वह्निदेवताकमन्त्रैः वह्निं स्तुत्वा तत्प्रसादात् चत्वारः पक्षिणः नैव दग्धाः । स चाश्वसेनो नागः तक्षकस्य पुत्रः मात्रा स्वमात्रा सर्पिण्या प्रातिलोम्येन ग्रस्तः मातुः कण्ठप्रदेशे अश्वसेनस्य पुच्छमासीदिति भावः ।।२३८।।

**अनन्तभट्टीया–** प्रातिलोम्येन मातुः कण्ठभागे अस्य पुच्छमासीदिति भावः । कण्ठे मातुः कण्ठे छिन्ने ।।२३८।।

**जनार्दनीया–** तेषां केन प्रकारेण मोक्षोऽभूदित्यत आह– **अयमग्ने इत्यादिना** ।। प्रातिलोम्येन प्राणसम्बन्धरूपोत्पत्तेः प्रायः शिरःपूर्वकत्वेन प्राणवियोगरूपनाशस्य पादपूर्वकत्वेन ग्रसनस्यापि नाश-प्रतिनिधित्वात् तत्प्रातिलोम्येन शिरःप्रभृतिग्रस्त इत्यर्थः । यद्वा । इत्थम्भूतलक्षणे तृतीया । यथा मातुः कण्ठप्रदेशे अश्वसेनस्य पुच्छं भवति, अस्य कण्ठप्रदेशे मातुः पुच्छं भवति तथा ग्रस्तः ।।२३८।।

---

१. 'स चाश्वसेनः' इति वरदराजीयपाठः । 'अश्वसेनोऽभवत् तत्र तक्षकस्य सुतो बली । स यत्नमकरोत् तीव्रं मोक्षार्थं जातवेदसः। न शशाक स निर्गन्तुं निरुद्धोऽर्जुनपत्रिभिः। मोक्षयामास तं माता निगीर्य भुजगात्मजा । तस्य पूर्वं शिरो ग्रस्तं पुच्छमस्य निगीर्यत । निगीर्य सोर्ध्वमक्रामत् सुते नागी मुमुक्षया । तस्याः शरेण तीक्ष्णेन पृथुधारेण पाण्डवः। शिरश्चिच्छेद गच्छन्त्यास्तामपश्यच्छचीपतिः। तं मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम् । मोहयामास तत्कालमश्वसेनस्त्वमुच्यत ।।' आदिपर्वणि- २७३.७-९.

**ताम्रपर्णीया**— ।। **अयमग्ने जरितेत्यादिमन्त्रैरिति** ।। अष्टभी ऋग्भिरित्यर्थः ।।२३८।।

**चट्टी**— तेषां षण्णां केन कारणेन मोक्षोऽभूदित्यत आह– **अयमग्न इत्यादिना** ।। 'अयमग्ने जरिता' इत्यादिभिः वह्निदेवताकैः मन्त्रैः वह्निं स्तुत्वा तत्प्रसादाद् पक्षिणः चत्वारो नैव दग्धाः । तक्षकस्य पुत्रकः स चाश्वसेनो नागः मात्रा प्रातिलोम्येन ग्रस्तः मातुः कण्ठप्रदेशे अश्वसेनस्य पुच्छमासीत् । अश्वसेनस्य कण्ठप्रदेशे मातुः पुच्छमासीदिति भावः ।।२३८।।

**छिन्नेऽर्जुनेनान्तरिक्षे पतन्त्यास्तस्याः शक्रेणावितश्छिन्नपुच्छः ।**
**वधान्मातुः पुच्छभङ्गाच्च रोषाद्धन्तुं पार्थं कर्णतूणीरगोऽभूत् ।।२३९।।**

**वेदाङ्गतीर्थीया**— कर्णतूणीरगः बाणान्तर्गतत्वेन । 'ययौ बाणगतश्च नागः'(ता.नि-२७.१७५) इति वक्ष्यति ।। २३९ ।।

**वरदराजीया**— अन्तरिक्षे पतन्त्याः तस्याः मातुः कण्ठे गले अर्जुनेन छिन्ने सति, छिन्नपुच्छः अश्वसेनः शक्रेणावितोऽपि रक्षितोऽपि मातुः वधात् स्वपुच्छभङ्गाच्च निमित्तजात् रोषात् कोपात् पार्थं हन्तुं कर्णतूणीरगः कर्णस्य तूणीरगः इषुधिस्थितोऽभूत् ।।२३९।।

**जनार्दनीया**— अन्तरिक्षे पतन्त्याः उत्पतन्त्याः तस्याः तक्षकभार्यायाः अर्जुनेन कण्ठे छिन्ने सति, छिन्नपुच्छः अश्वसेनः शक्रेण आवितो रक्षितः तूणीरगः इषुधिस्थितोऽभूत् । इषुधिगतबाणेषु कस्मिंश्चिद् बाणे गतोऽभूदिति भावः । 'बाणगतश्च नागः' इति वक्ष्यमाणत्वात् ।।२३९।।

**ताम्रपर्णीया**— ।। **शक्रेणेति** ।। 'तां मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम् । मोहयामास तत्काले ह्यश्वसेनस्त्वमुच्यत' इति (आदिपर्वणि-२५३.९) भारतोक्तरीत्येति भावः ।। **कर्णतूणीरगत इति** ।। बाणप्रयोगकाले बाणगतो भविष्यतीति 'ययौ बाणगतश्च नागराट्' इति न वक्ष्यमाणविरोधः ।।२३९।।

**चट्टी**— अन्तरिक्षे पतन्त्याः उत्पतन्त्याः तस्याः तक्षकभार्यायाः कण्ठे अर्जुनेन छिन्ने सति, छिन्नपुच्छः अश्वसेनः शक्रेणावितः रक्षितोऽपि मातुः वधात् स्वपुच्छभङ्गाच्च निमित्तात् रोषात् कोपात् हन्तुं कर्णस्य तूणीरगः इषुधिस्थितोऽभूत् । इषुधिगतबाणेषु कस्मिंश्चित् बाणे स्थितो अभूदिति भावः । 'बाणगतश्च नागः' इति वक्ष्यमाणत्वात् ।।२३९।।

**मयः कृष्णेनाऽऽत्तचक्रेण दृष्टो ययौ पार्थं शरणं जीवनार्थी ।**
**पार्थार्थमेनं न जघान कृष्णः [१]स्वभक्तश्चेत्यतिमायं परेशः ।।२४०।।**

---

१. 'मत्सङ्गेन तु दैतेया यातुधाना मृगाः खगाः । गन्धर्वाप्सरसो नागाः सिद्धाश्चारणगुह्यकाः ।। विद्याधरा मनुष्येषु वैश्याः शूद्राः स्त्रियोऽन्त्यजाः । रजस्तमः प्रकृतयस्तस्मिंस्तस्मिन् युगेऽनघ ।। बहवो मत्पदं प्राप्ता त्वाष्ट्रका-वन्त्यकादयः । वृषपर्वा बलिर्बाणो मयश्चाथ विभीषणः ।।' इति भागवते-११.१२.३-५.

**वेदाङ्गतीर्थीया—** कृष्णेन आत्मानं हन्तुं (आत्तचक्रेण दृष्टः) ।। २४० ।।

**सत्याभिनवतीर्थीया—** तत्रैव 'पार्थार्थमेनं न जघान कृष्णः..' इति श्लोकोऽस्ति । तस्यार्थः- परेशः कृष्णः अतिमायं एनं मयं पार्थार्थं पार्थसन्तोषार्थं न जघान । अनेन पार्थप्रियत्वादेनं न जघानेत्युक्तं भवति । हेत्वन्तरं चाह— **स्वभक्तश्चेतीति** ।। एतेन मयहननाभावे हेत्वन्तरस्यानुक्तत्वात् स्वभक्तश्च इति समुच्चयोऽनुपपन्न इति दूषणं पराकृतम् । पार्थार्थमेनं न जघान इति वाक्यतात्पर्यविषयीभूतपार्थप्रियत्व-रूपहेतुना स्वभक्तत्वरूपहेतोः समुच्चयार्थं स्वभक्तश्च इत्युक्तमित्यभ्युपगमात् ।। २४०-२४४ ।।

**वरदराजीया—** मयश्च आत्तचक्रेण कृष्णेन दृष्टो जीवनार्थी सन् पार्थं शरणं ययौ । कृष्णः, अत्यन्तं माया यस्य स तथा तम् । एनं मयं पार्थार्थं न जघान । स्वभक्तश्च इति हेतोः न जघान ।।२४०-२४१।।

**जनार्दनीया—** कृष्णः अतिमायं मयमेनं पार्थार्थं न जघान । स्वभक्तश्च इति कारणान्न जघान ।।२४०।।

**ताम्रपर्णीया—** ।। **अतिमायमिति** ।। अनेन चक्रादाने निमित्तमुक्तमिति ज्ञेयम् ।। २४०-२४३ ।।

**चट्टी—** मयश्च आत्तचक्रेण श्रीकृष्णेन दृष्टः जीवनार्थी सन् पार्थं शरणं ययौ । परेशः श्रीकृष्णः अतिमायमेनं मयं पार्थार्थं न जघान । स्वभक्त इति कारणाच्च न जघान ।। २४० ।।

**देवारिरित्येव मयि प्रकोपः कृष्णस्य तेनाहमिमं पुरन्दरम्[1] ।**
**पार्थात्मकं शरणं यामि तेन कृष्णप्रियः स्यामिति तस्य बुद्धिः ।।२४१।।**

**व्यासतीर्थीया—** कृष्णे आत्महनन उद्युक्ते पार्थं शरणं जगाम इत्यपि कथं जीवनं स्यादित्यतः तस्य भावमाह— **देवारिरिति** ।। कृष्णस्य देवारिरित्येव मयि कोपः न त्वभक्त इति ।। २४१-२४२ ।।

**वेदाङ्गतीर्थीया—** पार्थं शरणं गच्छतस्तस्याभिप्रायमाह— **देवारिरिति** ।। २४१-२४२ ।।

**वरदराजीया—** जीवनार्थं अर्जुनं शरणं गतस्य मयस्य अभिप्रायमाह— **देवारिरिति** ।। देवारिरित्येव मयि कोपो न त्वभक्तत्वात् । तेन कारणेन पार्थात्मकममुं पुरन्दरं शरणं यामि । तेन देवेशशरणप्राप्त्या देवारित्वे गते तन्निमित्तकोपस्यापगमे अहं कृष्णप्रियः स्याम् । ततो मां मोक्ष्यतीति मयस्य बुद्धिनिश्चयः ।।२४१।।

**अनन्तभट्टीया—** अहं देवारिरित्येव मयि कोपः । न त्वभक्त इति भावः ।।२४१।।

**जनार्दनीया—** पार्थं शरणं गच्छतस्तस्याभिप्रायमाह— **देवारिरिति** ।। मयि कृष्णप्रकोपः देवारिरित्येव, न त्वभक्त इति भावः । तेन कारणेन अहं पार्थात्मकं इमं पुरन्दरं इन्द्रं शरणं यामि । तेन देवारित्वापगमेन कृष्णस्य प्रियः स्यामिति तस्य बुद्धिरभिप्राय इत्यन्वयः ।।२४१।।

---

१. 'तेनाहममुम्' इति वरदराजीयपाठः ।

**चट्टी—** पार्थं शरणं गतस्य मयस्याभिप्रायमाह— **देवारिरिति** ।। अहं देवारिरित्येव श्रीकृष्णस्य मयि कोपः न त्वभक्तः इति भावः । तेन कारणेन पार्थात्मकमिमं पुरन्दरं अहं शरणं यामि । तेन देवारित्वापगमेन श्रीकृष्णस्य प्रियः स्यामिति तस्य मयस्य वुद्धिः ।। २४१ ।।

**प्राणोपकृत् प्रत्युपकारमाशु किं ते करोमीति स पार्थमाह ।**
**कृष्णप्रसादाद्धि भवान् विमुक्तस्तस्मै करोत्वित्यवदत् स पार्थः ।।२४२।।**

**वरदराजीया—** स मयः पार्थमाह— **किमिति** ।। त्वं प्राणोपकृत् । अतस्त्वं प्रति उपकारं किं करोमीति । यद्वा प्राणोपकृतस्तव प्रत्युपकारमित्येकंपदम् । हि यस्मात् कारणात् कृष्णप्रसादाद्भवान् मुक्तः तस्मात् तस्मै कृष्णायोपकारं भवान् करोत्विति स पार्थोऽवदत् ।। २४२ ।।

**अनन्तभट्टीया—** ते प्राणोपकृत् ते प्रत्युपकारं अथवा प्राणोपकृतः प्रत्युपकार इति समस्तपदम् ।।

**जनार्दनीया—** अहं प्राणोपकृत् प्रत्युपकारं प्राणोपकृतः प्राणरक्षणलक्षणोपकारस्य प्रत्युपकारम् । ते किं करोमीति पार्थमाह । स पार्थः इत्यवदत्, मयमिति शेषः । किमिति? भवान् कृष्णप्रसादाद्विमुक्तः हि यस्मात् तस्मात् तस्मै कृष्णाय करोतु, उपकारमिति शेषः ।।२४२।।

**चट्टी—** अभिप्रायः सः मयः पार्थमाह— **किमिति** ।। त्वं प्राणोपकृत् अतस्तव प्रत्युपकारं किं करोमीति । यद्वा प्राणोपकृत्प्रत्युपकारमित्येकंपदम् । प्राणोपकृतः प्राणरक्षणरूपोपकारकृतस्ते प्रत्युपकारं किं करोमीति पार्थमाहेति सम्वन्धः । सः पार्थः इत्यवदत्, मयमिति शेषः । हि यस्मात् कृष्णस्य प्रसादात् भवान् विमुक्तः तस्मात् तस्मै श्रीकृष्णाय, उपकारमिति शेषः । करोत्वित्यवददिति सम्वन्धः ।।२४२।।

**कृष्णोऽपि [१]राज्ञोऽतिविचित्ररूपसभाकृतावादिशत्[२] तां स चक्रे ।**
**अनिर्गमं प्राणिनामर्थितौ तौ हुताशनेनाथ विधाय जग्मतुः ।।२४३।।**

**व्यासतीर्थीया—** राज्ञः युधिष्ठिरस्य ।। २४३-२४४ ।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपत्रिकायां विंशोऽध्यायः ।।

**वरदराजीया—** राज्ञो युधिष्ठिरस्यार्थे अतिविचित्ररूपसभायाः कृतौ निर्माणे कृष्णः आदिशत् आज्ञां कृतवान् । सः मयः तां सभां चक्रे कृतवान् । अन्ये प्राणिनः किमर्थं न मुक्ता इत्यत आह—

---

१. 'राज्ञे' इति चट्टीपाठः ।

२. 'सभाकृतावदिशत्' इति जनार्दनीयपाठः ।

**अनिर्गममिति** ।। हुताशनेन तत्रस्थप्राणिनां अनिर्गमं निर्गमाभावं प्रार्थितौ कृष्णार्जुनौ विधाय, प्राणिनामनिर्गममिति शेषः । जग्मतुः इन्द्रप्रस्थं प्रति गतौ ।। २४३ ।।

**अनन्तभट्टीया–** तां सभाम् । हुताशनेन प्राणिनां निर्गमने अर्थितौ । विधाय, प्राण्यनिर्गमनमिति शेषः ।।२४३-२४४।।

।। इति श्रीमद्विद्वच्छिखामणिनरसिंहाचार्यसुतेन अनन्ताख्येन कृतायां तन्त्रमालायां विंशोऽध्यायः ।।

**जनार्दनीया–** कृष्णोऽपि राज्ञे धर्मजाय सभाकृतौ सभायाः करणे अदिशत् दिदेश । स मयः तां सभां चक्रे । अन्ये किमर्थं हता इत्यत आह– **अनिर्गममिति** ।। हुताशनेन प्राणिनामनिर्गमनं निर्गमनाभावं प्रार्थितौ तौ कृष्णार्जुनौ विधाय जग्मतुः, अनिर्गममिति शेषः ।। २४३ ।।

**चट्टी–** श्रीकृष्णोऽपि राज्ञे धर्मराजाय अतिविचित्ररूपसभायाः कृतौ निर्माणे आदिशत् दिदेश । सः मयस्तां सभां चक्रे । अन्ये प्राणिनः किमर्थं न मुक्ताः इत्यत आह– **अनिर्गममिति** ।। तौ कृष्णार्जुनौ हुताशनेन प्राणिनामनिर्गमं निर्गमनाभावं अर्थितौ प्रार्थितौ सन्तौ अथ विधाय, अनिर्गममिति शेषः । जग्मतुः इन्द्रप्रस्थं प्रति ययतुः ।। २४३ ।।

**दृष्ट्वा च तौ पाण्डवाः सर्व एव महामुदं प्रापुरेतन्निशम्य ।**
**कृष्णोऽपि पार्थैर्मुमुदेऽनन्तशक्तिः सुखज्ञानप्रभवौदार्यवीर्यः[१] ।।२४४।।**

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णये विंशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** प्राभवं प्रभुत्वम् । औदार्यं दातृत्वम् ।। २४४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमन्महाभारततात्पर्यनिर्णयव्याख्यायां
श्रीवेदाङ्गतीर्थविरचितायां तात्पर्यदीपिकायां विंशोऽध्यायः ।।

**वरदराजीया–** तौ कृष्णार्जुनौ दृष्ट्वा तत् वह्नेः खाण्डवदहनादिकं निशम्य सर्वे एव पाण्डवाः महामुदं परमानन्दं प्रापुः । अनन्ता शक्तिर्यस्य स तथा । प्रभवं प्रभुत्वम्, सुखज्ञानादिगुणात्मकमित्यर्थः । इत्यशेषमति मङ्गलम् ।। २४४ ।।

इति श्रीमन्महाभारततात्पर्यनिर्णयाध्याय एव हि ।
विंशतिर्व्याकृतिस्तावत् प्रीत्यै माधवमध्वयोः ।।

**जनार्दनीया–** एतद्वनदहनम् । प्रभवः प्रभुत्वम् । औदार्य दातृत्वम् ।।२४४।।

---

१. 'प्राभवौदार्यवीर्यः' इति वेदाङ्गतीर्थीयपाठः ।

यं गङ्गा जमदग्निजान्वयभवाद्विदद्धिरण्याभिधात्
पुत्रं प्राप जनार्दनं शमदमस्वाध्यायसम्पद्युतात् ।
पूर्तिस्तस्य कृतौ सतां सुखकरोऽध्यायः शुभो विंशकः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।२०।।

।। इति श्रीमद्भारततात्पर्यनिर्णयटीकायां जनार्दनभट्टविरचितायां पदार्थदीपिकायां विंशोऽध्यायः ।।

**ताम्रपर्णीया–** प्रभवः प्रभुत्वम् ।।२४४।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना
श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) विंशोऽध्यायः ।।

**चट्टी–** सर्वे पाण्डवाः तौ कृष्णार्जुनौ दृष्ट्वा, एवं वनदाहादिवृत्तान्तं च निशम्य महामुदं परमानन्दं प्रापुः । अनन्ता शक्तिः यस्य स तथा । प्रभवः प्रभुत्वम् । औदार्यं दातृत्वम् । सुखज्ञाने प्रभवौदार्यवीर्याणि च यस्य स तथा । श्रीकृष्णोऽपि पार्थैः पाण्डवैः मुमुदे ।। २४४ ।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितस्य श्रीमन्महाभारततात्पर्यनिर्णयस्य टीकायां
चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां विंशोऽध्यायः ।।

★★★

# अथ एकविंशोऽध्यायः

**जनार्दनाज्ञया मयः[१] समस्तकौतुकोत्तराम्[२] ।**
**सभां विधाय भूभृते ददौ गदां वृकोदरे ॥१॥**

**वरदराजीया–** ॥ **जनार्दनाज्ञयेति** ॥ जनार्दनस्य कृष्णस्य आज्ञया समस्तैः कौतुकैः विचित्रैः कृतिविशेषैः उत्तमां सभां भूभृते धर्मराजाय वृकोदरे वृकोदराय गदां ददौ ॥१॥

**अनन्तभट्टीया–** ॥ **समस्तकौतुकोत्तरामिति** ॥ समस्तैः कौतुकैः विचित्रैः कृतिविशेषैः, उत्तराम् उत्कृष्टाम् ॥ १ ॥

**जनार्दनीया–** समस्तैः कौतुकैः आश्चर्यकरैः कृतिविशेषैः, श्रेष्ठाम् ॥ १ ॥

**ताम्रपर्णीया–** ॥ **ददौ गदामिति** ॥ विन्दुसरसि मुचुकुन्दनिहितां गदां ददावित्यर्थः । तथा च सभापर्वणि मयवाक्यम् । 'अस्ति विन्दुसरस्येव गदा श्रेष्ठा कुरूद्वह । निहिता यौवनाश्वेन राज्ञा हत्वा रिपून् रणे' (सभापर्वणि-३.६) इति ॥ १-८ ॥

**अतिविशद–** 'ददौ गदां वृकोदरे' इत्यत्र न दानं मुख्यतः अतः सप्तमी । अन्यथा चतुर्थी स्यात् । गदाया मुख्यतो दानाभावस्तु 'स वायुधारितां गदां हि यौवनाश्वभूभृता । प्रसादतोऽस्य लम्भिताम्' इत्यनेन ज्ञायते ॥ १-४२ ॥

**भावचन्द्रिका–** ॥ **जनार्दनेति** ॥ इन्द्रप्रस्थ एव दशसहस्रपरिमितदेशं चतुरस्रं कृत्वा मयः सभां चकारेति भारते ॥ १-१४ ॥

**चट्टि–** ॥ **जनार्दनाज्ञया इत्यादिना** ॥ जनार्दनस्य श्रीकृष्णस्याज्ञया मयः समस्तैः आश्चर्यकर्मभिः कृतिविशेषैः श्रेष्ठां सभां विधाय भूभृते धर्मराजाय वृकोदराय गदां च ददौ ॥ १ ॥

---

१. अत्र प्रसङ्गात् पुराणेषु तत्रतत्रोक्तं मयसभायाः कौतुकोपेतं इतिवृत्तं लिख्यते । इयं मयसभा कृष्णप्रपौत्र-वज्रावस्थानपर्यन्तं भुवि आसीत् । पश्चात् मयभृत्याः इमां सभां हिमालयं अनयन् । तथाहि विष्णुधर्मोत्तरे- 'दानवेन्द्रो मयः पूर्वं फाल्गुनेन प्रयास्यता । महाप्रस्थानमित्युक्तो राजंस्तत्प्रियकाम्यया ॥ यावद्वज्रो महीं भुङ्क्ते खाण्डवप्रस्थमाश्रितः । तावत्सभेयं संरक्ष्या त्वया मदुपरोधतः ॥ सेयं संरक्ष्यते तेन प्रतिज्ञाय धनञ्जये । त्वयि नाकमनुप्राप्ते सभेयं मयशासनात् ॥ हिमाचलं तु नेष्यन्ति यत्र विन्दुसरस्सरः । राक्षसाः किङ्करा नाम यत्तस्मान्निर्मिता पुरा ॥' इति विष्णुधर्मोत्तरे खं-१.१५-१८. कृष्णप्रपौत्रवज्रं प्रति मार्कण्डेयवचनम् ।

२. 'समस्तकौतुकोत्तमाम्' इति वरदराजीयपाठः स्यात् ।

**स वायुधारितां गदां हि यौवनाश्वभूभृता ।**
**प्रसादतोऽस्य लम्भितामवाप्य मोदमाप ह ॥२॥**

**व्यासतीर्थीया–** यौवनाश्वो मुचुकुन्दः । अस्य वायोः ॥ २-८ ॥

**वेदाङ्गतीर्थीया–** काऽसौ गदेत्यत आह– **स वायुधारितामिति** ॥ अस्य वायोः प्रसादतः यौवनाश्वभूभृता मुचुकुन्देन लम्भितां प्राप्तां गदाम् ॥ २-६ ॥

**मधुसूदनीया–** ॥ **स वायुधारितामिति** ॥ हिशब्देन अस्मिन्नर्थे प्रमाणप्रसिद्धिं दर्शयति । तथाचोक्तम्- 'अस्ति विन्दुसरस्युग्रा गदा च कुरुनन्दन । निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून् ॥' (३.६) इति । 'तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च । गदामष्टौ सहस्राणि किङ्करा नाम राक्षसा ॥' इति च सभापर्वणि (३.३१) ॥ २-२० ॥

**वरदराजीया–** स वृकोदरः पूर्वं वायुना धृतां धारितां उत्तरां उत्कृष्टां यौवनाश्वेन मुचुकुन्देन भूभृता राज्ञा अस्य वायोः प्रसादतो लम्भितां प्राप्तां गदामवाप्य मोदमाप मुमुदे ॥२॥

**अनन्तभट्टीया–** अस्य वायोः प्रसादतः । यौवनाश्वभूभृता मुचुकुन्देन लम्भिताम् ॥ २-८ ॥

**जनार्दनीया–** काऽसौ गदेत्यत आह– **स इति** ॥ स भीमः । अस्य वायोः प्रसादतः यौवनाश्वभूभृता मुचुकुन्दराजेन लम्भितां प्राप्ताम् ॥२॥

**भारतश्री–** ॥ **वायुधारितां गदामिति** ॥ पुरा मुचुकुन्दः अनया गदया दैत्यान् निहत्य निद्रया मुषितमतिः एनां गदां विन्दुसरसि निक्षिप्तवान् । तदा मयो दृष्टवान् तां गदामादाय दत्तवानितीयं कथा सभापर्वणि विस्तरोक्तास्ति ॥ २-९ ॥

**चट्टि–** का सा गदेत्यत आह– **स इति** ॥ सः भीमः पूर्वं वायुधारितां वायुना धृतां अस्य वायोः प्रसादात् यौवनाश्वभूभृता मुचुकुन्देन लम्भितां प्राप्तां गदां अवाप्य मोदमाप । हिशब्देन अस्मिन्नर्थे प्रमाणप्रसिद्धिं दर्शयति । तथाचोक्तम्- 'अस्ति विन्दुसरस्युग्रा गदा च कुरुनन्दन । निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून् ॥' 'तां तत्र च मयेनोक्ता रक्षन्ति च वहन्ति च । गदामष्टौ सहस्राणि किङ्करा नाम राक्षसाः ॥' इति सभापर्वणि ॥२॥

**पुनश्च [१]वत्सरद्वयं समुष्य केशवो ययौ ।**
**समर्चितस्य पाण्डवैर्वियोजनेऽस्य चाक्षमैः ॥३॥**

---

१. 'तर्पयित्वा खाण्डवेन वह्निं पाण्डवसंयुतः । मोचयित्वा मयं येन राज्ञो दिव्या सभाऽऽहृता ॥ उवास कतिचिन्मासान् राज्ञः प्रियचिकीर्षया । विहरन् रथमारुह्य फल्गुनेन भटैर्वृतः ॥' भागवते-१०.७९.४३-४४.

**वरदराजीया–** पुनश्च वनदाहानन्तरम् । अस्य कृष्णस्य वियोजने अक्षमैः असमर्थैः पाण्डवैः ।। ३ ।।

**जनार्दनीया–** अस्य कृष्णस्य वियोजने वियोगे अक्षमैः असमर्थैः ।।३।।

**चट्टि–** केशवः श्रीकृष्णः । अस्य श्रीकृष्णस्य वियोजने अक्षमैः असमर्थैः पाण्डवैः समर्चितः सन् पुनश्च वनदाहानन्तरं अपि वत्सरद्वयं समुष्य ययौ ।। ३ ।।

**ततो वसन् स्वपुर्यजः क्वचिद् रविग्रहे हरिः ।**
**सदारपुत्रबान्धवः स्यमन्तपञ्चकं ययौ ।।४।।**

**वरदराजीया–** स्वपुरि द्वारकायाम् । क्वचित् कदाचित् रविग्रहे सूर्योपरागे स्यमन्तपञ्चकं कुरुक्षेत्रम्।।४।।

**जनार्दनीया–** स्यमन्तपञ्चकं कुरुक्षेत्रम् ।। ४ ।।

**चट्टि–** ततोऽजः श्रीकृष्णः स्वपुरि द्वारकायामवसत् । हरिः श्रीकृष्णः क्वचित् कदाचित् रविग्रहे सूर्योपरागे सदारपुत्रबान्धवः सन् स्यमन्तपञ्चकं कुरुक्षेत्रं प्रति ययौ ।। ४ ।।

**[1]पृथासुताश्च सर्वशः सदारपुत्रमातृकाः ।**
**क्षितीश्वराश्च सर्वशः [2]प्रियाप्रिया हरेश्च ये ।।५।।**

**वरदराजीया–** पृथायाः कुन्त्याः सुताः पाण्डवाः हरेः कृष्णस्य प्रियाः अप्रियाश्च ये ते सर्वे ययुः ।।५।।

**जनार्दनीया–** हरेः प्रियाप्रियाः प्रियाः भक्ताः, अप्रियाः अरयः, मध्यमाश्च । ते च ययुः ।। ५ ।।

**चट्टि–** सदारपुत्रमातृकाः सर्वशः पृथासुताश्च सर्वशः सर्वे क्षितीश्वराश्च हरेः श्रीकृष्णस्य ये प्रियाः अप्रियाश्च ते सर्वे समीयुरित्युत्तरेणान्वयः । यद्वा प्रियाः प्रियासम्बन्धिनः प्रियाः विवाहबान्धवश्चेति ।।५।।

---

१. 'भीष्मो द्रोणोऽम्बिकापुत्रो गान्धारी ससुता तथा । सदाराः पाण्डवाः कुन्ती सञ्जयो विदुरो कृपः ।। कुन्तिभोजो विराटश्च भीष्मको नग्नजिन्महान् । पुरुजिद् द्रुपदः शैब्यो धृष्टकेतुश्च काशिराट् ।। दमघोषो विशालाक्षो मैथिलो मद्रकेकयाः । युधामन्युः सुशर्मा च ससुता बाह्लिकादयः । राजानोऽन्ये च..।' भागवते-१०.७०.३३-३६ अत्र गान्धारी ससुता इत्युक्तः दुर्योधनादयोऽपि आगताः । ते हरेः अप्रियाः तथा सुशर्मा पाण्डवद्वेषी हरेरप्रियः ।

२. 'प्रियाः प्रियाः' इति चट्टीपाठः । तथा सर्वदशराजाः आजग्मुरित्यत्र प्रमाणं भागवते (१०.७०.२२-२३) मत्स्योशीनरकौसल्यविदर्भकुरुसृञ्जयान । काम्बोजकेकयान् मद्रान् कुन्तिगान्धारकेरलान् ।। अन्यांश्चैवात्म-पक्षीयान् परांश्च शतशो नृपान् । नन्दादीन् सुहृदो गोपान् गोपीश्चोत्कण्ठिताश्चिरम् ।। पुनः भागवते (१०.७३.२९) 'द्रोणो भीष्मोऽङ्गराजश्च बाह्लीकविदुरादयः । सपुत्रो धृतराष्ट्रश्च जग्मुः स्वं स्वं निकेतनम् ।।' इति द्रोणादीनां कुरुक्षेत्रात् स्वदेशगमनवचनबलेन तत्रागमनं सिद्ध्यति ।

**तथैव नन्दगोपकः [1]सदारगोपगोपिकः ।**

**[2]मुनीश्वराश्च सर्वशः समीयुरत्र च प्रजाः ॥६॥**

**वरदराजीया–** सदारगोपगोपिकाभिः दारैः गोपैः गोपिकाभिः सह वर्तमानो नन्दगोपश्च ययौ । मुनीश्वराः प्रजाश्चात्र कुरुक्षेत्रं समीयुः समाययुः ।। ६ ।।

**जनार्दनीया–** सदारगोपगोपिकः दाराः यशोदा, गोपाः गोपालकाः, गोपिकाः गोपस्त्रियः, ताभिः सहितो नन्दगोपकः । अत्र कुरुक्षेत्रे । प्रजाः नानादेशस्थजनाः ।। ६ ।।

**चट्टि–** तथैव सदारगोपगोपिकः दाराः यशोदा गोपाः गोपिकाः गोपस्त्रियः ताभिश्च सहितो नन्दगोपश्च सर्वशः सर्वे मुनीश्वराश्च प्रजाः नानादेशस्थजनाश्च अत्र कुरुक्षेत्रे समीयुः ।। ६ ।।

**प्रियाश्च ये रमेशितुर्हरिं त्रिरूपमेत्य ते ।**

**वसिष्ठवृष्णिनन्दनौ [3]भृगूत्तमं तथाऽर्चयन्[4] ॥७॥**

**वेदाङ्गतीर्थीया–** वसिष्ठवृष्णिनन्दनौ तथा भृगूद्वह इति त्रिरूपं हरिमित्यर्थः ।।७-८।।

**सत्याभिनवीया–** 'प्रियाश्च ये रमेशितुर्हरिं त्रिरूपमेत्य..' इति श्लोकः । तस्यार्थः- ये रमेशितुः प्रियाः ते त्रिरूपं हरिमेत्य आर्चयन् । एतदेव विवृणोति– **वसिष्ठवृष्णिनन्दनाविति** ।। वसिष्ठवृष्णिनन्दनौ तथा भृगूत्तमम् आर्चयन्निति । एतेन त्रिरूपम् इति द्वितीयैकवचनस्य वसिष्ठवृष्णिनन्दनौ इति द्वितीयाद्विवचनान्तेन भृगूत्तमम् इति द्वितीयैकवचनान्तेन चानन्वय इति दूषणं परास्तम् । त्रिरूपम् इत्यनेनोक्तत्रिरूपत्वं कथमित्याशङ्कापरिहारार्थं त्रिरूपमार्चयन् इत्यस्य विवरणं वसिष्ठवृष्णिनन्दनौ इत्यादिना क्रियत इत्यङ्गीकारत् ।। ७-८ ।।

**वरदराजीया–** त्रिरूपं व्यासात्मकं वसिष्ठनन्दनो व्यासः वृष्णिनन्दनो कृष्णः भृगूत्तमः परशुरामः । तथाशब्दः समुच्चये ।।७।।

**जनार्दनीया–** रमेशितुः ये प्रियाः हरिभक्ताः ते व्यासकृष्णपरशुरामात्मकं त्रिरूपं हरिं एत्य, वसिष्ठवृष्णिनन्दनौ भृगूत्तमं रामम् । तथाशब्दः समुच्चये । अर्चयन् ।।७।।

---

१. 'नन्दस्तत्र यदून् प्राप्तान् श्रुत्वा कृष्णपुरोगमान् । तत्रागमत् वृतो गोपैः तरसा तद्दिदृक्षया ।।' भागवते-१०.७०.४१

२. 'ऋषयश्च महात्मानो विख्याताः संशितव्रताः । सोपाध्यायाः साग्निहोत्राः स्नातका गृहमेधिनः ।।' भागवते-१०.७०.१५.

३. 'भृगूद्वहं' इति वेदाङ्गतीर्थानां पाठः स्यात् ।

४. 'आर्चयन्' इति सत्याभिनवतीर्थीयपाठः ।

**चट्टि–** रमेशितुः प्रिया हरिभक्ताः ये ते च त्रिरूपं हरिं एत्य वसिष्ठवृष्णिनन्दनौ भृगूत्तमम् । तथाशब्दः समुच्चये । अर्चयन् ।। ७ ।।

**कृतार्थतां च ते ययू रमेशपाददर्शनात् ।**
**रविग्रहे समाप्लुता भृगूद्वहोत्थतीर्थके ।।८।।**

**वरदराजीया–** ते आगताः भृगूद्वहोत्थतीर्थके परशुरामनिर्मिततीर्थके कुरुक्षेत्रगतरामह्रदे ।। ८ ।।

**जनार्दनीया–** भृगूद्वहोत्थतीर्थके रविग्रहे समाप्लुताः ते नृपाद्याः रमेशपाददर्शनात् कृतार्थतां कृतकृत्यतां ययुः ।।८।।

**चट्टि–** ते नृपाद्याः रविग्रहे सूर्योपरागे भृगूद्वहोत्थतीर्थके कुरुक्षेत्रगतरामह्रदे समाप्लुताः सन्तः रमेशपाददर्शनाच्च कृतार्थतां कृतकृत्यतां ययुः ।। ८ ।।

**अनुग्रहं विधाय स स्वकेषु केशवस्त्रिवृत् ।**
**अयाजयच्च शूरजं मखैः समाप्तदक्षिणैः ।।९।।**

**व्यासतीर्थीया–** त्रिवृत् त्र्यात्मकः । समाप्तं सम्पूर्णम् ।। ९ ।।

**वेदाङ्गतीर्थीया–** स्वकेषु जनेषु त्रिवृत् त्रेधा वर्तत इति त्रिवृत् । समाप्तदक्षिणैः सम्पूर्णदक्षिणैः।।९-१०।।

**सत्याभिनवीया–** तत्रैव 'अनुग्रहं विधाय स..' इति श्लोके 'केशवः त्रिवृत्' इत्यस्य त्रित्वेन विशिष्टो वर्तते इति त्रिवृत् केशवः इत्यर्थः । कृष्णस्य त्रित्वं वेदव्यासपरशुरामाभ्यां सहेति द्रष्टव्यम् । एतेन कृष्णो द्वाभ्यां सह वर्तत इति द्विवृत् इति वक्तव्यम् । त्रिवृदिति कथनमयुक्तमिति दूषणं निराकृतम् । त्रिशब्दस्य भावप्रधानत्वमङ्गीकृत्य त्रित्वेन विशिष्टो वर्तते इत्यर्थस्योक्तत्वात् ।। ९-१५ ।।

**वरदराजीया–** सः केशवः सर्वेषु स्वभक्तेषु त्रिवृत् त्रिवारं समाप्तदक्षिणैः पूर्णदक्षिणैः मखैः शूरजं वसुदेवमयाजयत् ।। ९ ।।

**अनन्तभट्टीया–** त्रिवृत् त्र्यात्मकः । समाप्तदक्षिणैः सम्पूर्णदक्षिणैः ।। ९ ।।

**जनार्दनीया–** त्रिवृत् त्रिभिर्वर्तत इति त्रिवृत् व्यासादिरूपवान् केशवः कृष्णः स्वकेषु देवक्यादिषु । अनुग्रहं विशदयति– **अयाजयदिति** ।। समाप्तदक्षिणैः सम्पूर्णदक्षिणैः ।।९।।

**ताम्रपर्णीया–** त्रिवृत् त्रेधा वर्तत इति त्रिवृत् ।। ९-१० ।।

**चट्टि–** त्रिवृत् त्रिभिर्वर्तते इति त्रिवृत् व्यासादिरूपवान् सः केशवः श्रीकृष्णः स्वकेषु भक्तेषु अनुग्रहं विधाय समाप्तदक्षिणैः सम्पूर्णदक्षिणैः मखैः शूरजं वसुदेवं अयाजयच्च ।।९।।

**समस्तलोकसंस्थितात्मभक्तिमज्जनस्य सः ।**
**सुकालदर्शनात् [1]परं व्यधादनुग्रहं हरिः ॥१०॥**

**व्यासतीर्थीया–** परं अनुग्रहमुपदेशम् ॥ १० ॥

**वादिराजतीर्थीया–** 'सुकालदर्शनात्' इत्यत्र सुकाले ग्रहणपुण्यकाले इत्यर्थः ॥ १० ॥

**वरदराजीया–** समस्तलोकसंस्थितश्चासौ आत्मभक्तिमज्जनश्च तस्य । सुकाले सूर्योपरागपुण्यकाले स्वस्य दर्शनात् परमनुग्रहं व्यधात् ॥ १० ॥

**अनन्तभट्टीया–** समस्तलोकसंस्थितश्चासौ आत्मभक्तिमज्जनश्च तस्य । सुकालदर्शनात् रविग्रह-पुण्यकालदर्शनात् । अनुग्रहं उपदेशम् ॥ १० ॥

**जनार्दनीया–** समस्तलोकसंस्थितश्चासौ आत्मा च, समस्तलोकसंस्थितात्मनि भक्तिमांश्चासौ जनश्च तस्य । सुकालदर्शनात् रविग्रहाख्यपुण्यकालदर्शनात् परं उत्कृष्टं मोक्षाख्यं अनुग्रहं व्यधात् । 'समस्त-लोकसंस्थितः' इत्यनेन माहात्म्यज्ञानं सूचितम् । 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथा ॥' (ता.नि-१.८५) इति वचनात् । कृष्णः भक्तजनस्य मुक्तिं ददावित्यर्थः ॥ १० ॥

**भारतश्री–** 'सूर्योपरागः सुमहानासीत् कल्पक्षये यथा' इति भागवतोक्तेः (१०.७०.१) तादृशसूर्य-ग्रहणानन्तरं क्षामादिना लोकनाशः प्राप्तः किं नेत्याह– **सुकालेति** ॥ तथापि कृष्णः सुकालदर्शनात्..* ॥१०-२८॥

**चट्टि–** सः हरिः श्रीकृष्णः समस्तलोकसंस्थितश्चासौ आत्मभक्तिमज्जनश्च तस्य । सुकाले सूर्योपरागरूपे पुण्यकाले दर्शनात् वरमनुग्रहं व्यधात् । यद्वा समस्तलोकसंस्थितश्चासौ आत्मा च समस्तलोकसंस्थितात्मा तस्मिन् भक्तिमांश्चासौ जनश्च तस्य । सुकालदर्शनात् वरमुत्कृष्टं मोक्षाख्यं अनुग्रहं व्यधात् । 'समस्तलोक-संस्थितः' इत्यनेन माहात्म्यज्ञानं सूचितम् । 'माहात्म्यज्ञानपूर्वस्तु सुदृढस्सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तः तया मुक्तिर्न चान्यथा ॥' इति वचनात् श्रीकृष्णः भक्तजनस्य मुक्तिं ददावित्यर्थः ॥१०॥

**[2]ततो ययौ स्वकां पुरीं पृथासुतैः सहाच्युतः ।**
**[3]चकार तत्र चाऽह्निकं क्रतुं महाश्वमेधिकम् ॥११॥**

---

१. 'वरं व्यधात्' इति चट्टीपाठः ।

२. भागवतं-१०.१००.११-७०

३. 'ततः कदाचिद् धर्मात्मा दीक्षितो मधुसूदनः । एकाह्नेन महाबाहुः शास्त्रदृष्टेन कर्मणा ॥' इति विष्णुपर्वणि-१११.७ 'कदाचिद् वाजिमेधेन यष्टुमुद्यम्य केशवः । महीं प्रदक्षिणं कर्तुं प्राहिणोत् प्रोक्षितं हयम् ॥' इति भागवते- १०. १००.१

**वेदाङ्गतीर्थीया–** आह्निकं एकाह्ना निर्वर्त्यम् ।। ११-१३ ।।

**वादिराजतीर्थीया–** 'चकार तत्र चाह्निकम्' इत्यत्र एकस्मिन्नह्नि क्रियमाणं आह्निकम् ।। ११ ।।

**वरदराजीया–** पृथासुतैः सह ययौ । आह्निकमेकस्मिन्नह्नि परिसमाप्यम् ।। ११ ।।

**जनार्दनीया–** आह्निकं एकाहनिर्वर्त्यम् ।। ११ ।।

**ताम्रपर्णीया–** अह्निकं एकस्मिन्नह्नि निर्वर्त्यम् ।। ११-१६ ।।

**चट्टि–** अच्युतः श्रीकृष्णः पृथासुतैः पाण्डवैः सह ततः कुरुक्षेत्रात् स्वकां पुरीं द्वारकां ययौ । तत्र पुर्यामाह्निकं एकाह्निकृत्यं महाश्वमेधिकं क्रतुं चकार ।।११।।

**हयं सभीमफल्गुना हरे रथं समास्थिताः ।**
**व्यचारयन् [1]हरेः सुता दिनस्य पादमात्रतः ।।१२।।**

**व्यासतीर्थीया–** व्यचारयन् भरतखण्डः किं योजनकः ।। १२-१३ ।।

**वादिराजतीर्थीया–** 'दिनस्य पादमात्रतः' इत्यत्र सार्धं सप्तघटिकाः पाद इत्युच्यते ।। १२ ।।

**वरदराजीया–** भीमफल्गुनाभ्यां सह वर्तमानाः हरेः सुता हयं दिनस्य पादमात्रतो याममात्रेण व्यचारयन् प्रवर्तयामासुः ।। १२ ।।

**अनन्तभट्टीया–** सभीमफल्गुनाः हरेः सुताः तैः हरेः सुतैः ।। १२ ।।

**जनार्दनीया–** दिनस्य पादमात्रतः एकयामात् ।।१२।।

**चट्टि–** हरेः श्रीकृष्णस्य सुताः प्रद्युम्नादयः भीमफल्गुनाभ्यां सहिताः सन्तः हरेः रथं समास्थिताः सन्तः हयमेकदिनस्य पादमात्रतः एकयामाद् व्यचारयन् ।।१२।।

**जिताः समस्तभूभृतो जरासुतादयः क्षणात् ।**
**[2]वृकोदरादिभिस्तु तैर्हयश्च दिव्य आययौ ।।१३।।**

**वादिराजतीर्थीया–** 'वृकोदरादिभिः सुतैः' इत्यत्र वृकोदरः आदिः मूलबलं एषां ते तैः सुतैः।।१३-१८

**वरदराजीया–** वृकोदरादिभिः क्षणाज्जिताः । हयश्च दिव्यत्वादाययौ ।। १३ ।।

**जनार्दनीया–** तैः कृष्णपुत्रैः । हयः दिव्यः दिव्यत्वात् लोकविलक्षणत्वात् आययौ, यामादिति शेषः ।।१३।।

---

१. भागवतं १०.१००.१-४.

२. 'वृकोदरादिभिः सुतैः' इति वादिराजतीर्थानां पाठः । तथा चट्टीटिप्पण्यां पाठान्तरञ्च ।

**चट्टि–** वृकोदरादिभिः तैः प्रद्युम्नाद्यैश्च जरासुतादयः समस्तभूभृतः क्षणाज्जिताः । हयश्च दिव्यत्वात् लोकविलक्षणत्वात् आययौ, यामादिति शेषः । 'वृकोदरादिभिः सुतैः' इति पाठे वृकोदरः आदिः मूलबलं येषां ते तैरित्यर्थः ।।१३।।

**हयः स कृष्णनिर्मितो दिनेन लक्षयोजनम् ।**
**क्षमो हि गन्तुमञ्जसा दिनाश्वमेधसिद्धये ।।१४।।**

**वेदाङ्गतीर्थीया–** दिनाश्वमेधसिद्धये कृष्णनिर्मितः स हयः ।। १४-१७ ।।

**वरदराजीया–** पादमात्रतः दिनेन दिनमात्रेण लक्षयोजनं गन्तुं क्षमः समर्थः स हयः कृष्णनिर्मितः । कुतः? दिनाश्वमेधसिद्धये ।। १४ ।।

**अनन्तभट्टीया–** दिनाश्वमेधसिद्धये दिनेन सत्यलोक इत्यर्थः ।।१४।।

**जनार्दनीया–** दिनाश्वमेधसिद्धये कृष्णनिर्मितो हयः ।।१४।।

**चट्टि–** दिनेन लक्षयोजनं गन्तुमञ्जसा क्षमः समर्थः सः हयः दिनाश्वमेधसिद्धये श्रीकृष्णेन निर्मितः।।१४।।

**पराशरात्मजो हरिर्हरिं यदा त्वदीक्षयत् ।**
**तदाऽऽससाद ह [1]द्विजस्तृणावहो रुराव च ।।१५।।**

**वरदराजीया–** पराशरात्मजो व्यासः हरिः कृष्णं यदा अदीक्षयत् तदा तु तृणावहः तृणपाणिः रुराव अरोदीत् ।। १५ ।।

**जनार्दनीया–** हरिं कृष्णम् । तृणावहः तृणपाणिरित्यर्थः । रुराव अरोदीत् ।।१५।।

**भावचन्द्रिका–** दीर्घवेणुदण्डतृणान्यावध्य तद्वतः ।। १५-३६ ।।

**चट्टि–** पराशरात्मजः हरिः श्रीव्यासः तदा हरिं श्रीकृष्णं अदीक्षयत् । तदा तृणावहो तृणपाणिः द्विजः आससाद । रुराव च अरोदीत् ।।१५।।

**व्रजन्ति जन्मनोऽनु मे सदा सुता अदृश्यताम् ।**
**इतीरितेऽर्जुनोऽब्रवीदहं हि पामि ते सुतान् ।।१६।।**

**सत्याभिनवीया–** तत्रैव 'इतीरितेऽर्जुनोऽब्रवीदहं हि..' इति सार्धश्लोकः । तस्यार्थः- ब्राह्मणेन इतीरिते अर्जुनः अब्रवीत् । अत्र एषु रामकृष्णादिषु मध्ये ते सुतान् अहं हि अहमेव पामि । त्वत्पुत्रपरिपालने

---

१. 'तृणमूलधरः कश्चिद् ब्राह्मणोऽभ्येत्य सत्वरः । चुक्रोश आर्त उद्बाहुः यज्ञवाटमुखे स्थितः ।।' इति भागवते- १०.१००.१३.

अहमेव समर्थः न कृष्णरामादयः इति भावः । सः द्विजः अमुं अर्जुनं प्रति मे सुताः सकृष्णरामकार्ष्णिभिः कृष्णरामाभ्यां सहितैः कृष्णपुत्रैः प्रद्युम्नादिभिः पालिता न भविष्यन्ति । मत्पुत्रपरिपालने शक्ता न भवन्तीति यावत् । अत्र मत्पुत्रपालने ते शक्तिरस्तीति क कुतः प्रमाणात् ज्ञातव्यम् इति जगादेति । एतेन 'सकृष्णरामकार्ष्णिभिः सुता न मेऽत्र पालिताः' इत्यत्र अत्र इत्येतद् व्यर्थमिति दूषणं निराकृतम् । अत्र इत्यस्य अहं हि पामीत्यनेनान्वयमङ्गीकृत्य अर्थस्योक्तत्वात् । एतेनैव कृष्णरामादयः मत्पुत्रपरिपालने शक्ता न भवन्तीति वक्तव्यम् । कृष्णरामादिभिः मत्पुत्रा न पालिताः इति कथनमसङ्गतमिति दूषणं परास्तम् । 'सकृष्णरामकार्ष्णिभिः सुता न मेऽत्र पालिताः' इत्यस्य भविष्यन्तीत्यध्याहारेण मे सुताः पालिता न भविष्यन्तीत्यर्थः । कृष्णादयो मत्पुत्रपरिपालने शक्ता न भवन्तीति तात्पर्यार्थ इत्यभ्युपगमात् ।।१६-२०।।

**वरदराजीया–** जन्मनो अनु जन्मानन्तरमेव अदृश्यतां व्रजन्ति । पामि रक्षिष्यामि[1] ।।१६।।

**जनार्दनीया–** जन्मनः जननस्य । अनु अनन्तरम् । पामि रक्षिष्यामि ।।१६।।

**चट्टि–** जन्मनो जननस्य अन्वनन्तरं मे सुताः सदा अदृश्यतां व्रजन्ति । इतीरिते सति, विप्रेणेति शेषः । अर्जुनस्ते सुतान् पामि रक्षिष्यामीत्यब्रवीत्, विप्रमिति शेषः ।। १६ ।।

**[2]सकृष्णरामकार्ष्णिभिः सुता न मेऽत्र पालिताः ।**
**क तेऽत्र शक्तिरित्यमुं जगाद सोऽर्जुनं द्विजः ।।१७।।**

**वरदराजीया–** स द्विजोऽमुमर्जुनं जगाद । किमिति? कार्ष्णिः प्रद्युम्नः । कृष्णप्रद्युम्नादिभिः सह वर्तमानैः सर्वैः । अत्र पालने क शक्तिरिति जगादेति सम्बन्धः ।। १७ ।।

**जनार्दनीया–** कार्ष्णयः प्रद्युम्नाद्याः, कृष्णरामाभ्यां सहिताः सकृष्णरामाः, सकृष्णरामाश्च ते कार्ष्णयश्च तैः । अत्र अदर्शनात् । न पालिताः । ते अत्र अदर्शनाद्रक्षणे शक्तिः केति स द्विजः अमुमर्जुनं जगाद ।।१७।।

**ताम्रपर्णीया–** ।। न कृष्णेति ।। कृष्णादिभिः पालयिष्याम इत्यप्रतिज्ञाता इत्यर्थः ।।१७-२४।।

**चट्टि–** सः द्विजः अमुमर्जुनं जगाद । किमिति? कार्ष्णयः प्रद्युम्नाद्याः कृष्णरामाभ्यां सहिताः सकृष्णरामाः ते च ते कार्ष्णयश्च सकृष्णरामकार्ष्णयः तैश्च मे सुताः अत्रादर्शनान्न पालिताः । ते अत्र अदर्शनाद् रक्षणे शक्तिः केति जगादेति सम्बन्धः ।।१७।।

---

१. 'रक्षयामि' इति क्वचित् कोशेषु ।

२. 'न कृष्णरामकार्ष्णिभिः' इति ताम्रपर्णीयपाठः ।

**तदा जगाद फल्गुनोऽसुरैर्विदूषितात्मना ।**
**न विप्र तादृशोऽस्म्यहं यथैव केशवादयः ॥१८॥**

**वेदाङ्गतीर्थीया—** असुरैः विदूषितात्मना विदूषितमनसा । करणे तृतीया ॥१८-२१॥

**वरदराजीया—** असुरैः विदूषितेनात्मना मनसा उपलक्षितः । हे विप्र! यथा यादृशाः केशवादयः तादृशोऽहं नास्मि इति जगाद ॥ १८ ॥

**जनार्दनीया—** असुरैर्विदूषितात्मना विदूषितान्तःकरणेन जगाद । यथा यादृशाः ॥१८॥

**चट्टि—** फल्गुनो असुरैर्विदूषितेनात्मना मनसा उपलक्षितः सन् हे विप्र! केशवादयो यथैव यादृशाः अहं तादृशो नास्मि इति तदा जगाद ॥१८॥

**मया जिता हि खाण्डवे सुरास्तथाऽसुरानहम् ।**
**निवातवर्मनामकान् विजेष्य उत्तरत्र हि ॥१९॥**

**वादिराजतीर्थीया—** निवातवर्मनामकान् निवातकवचनामकानित्यर्थः ॥ १९-२६ ॥

**वरदराजीया—** हि यस्मात् निवातवर्मनामकान् निवातकवचनामकान् असुरान् उत्तरत्र विजेष्ये ॥१९॥

**जनार्दनीया—** उत्तरत्र अग्रे निवातवर्मनामकान् असुरान् विजेष्ये ॥१९॥

**चट्टि—** मया खाण्डवे सुराः जिताः तथा उत्तरत्र निवातवर्मनामकान्निवातकवचनामकान् असुरान् विजेष्ये ॥ १९ ॥

**उदीर्य चेति केशवं स ऊचिवान् व्रजाम्यहम् ।**
**इतीरितोऽवदद्धरिस्तवात्र शक्यते नु किम् ॥२०॥**

**वरदराजीया—** इत्येवमुदीर्य केशवं च 'अहं व्रजामि' इत्यूचिवान् । तव अत्र विप्रबालकरक्षणे शक्यते किम्? इति हरिरवदत् ॥ २० ॥

**जनार्दनीया—** इत्युदीर्य स पार्थः । तव अत्र रक्षणे शक्यते नु किम्? शक्तिः स्यात् किम्? न वेति वितर्कः ॥२०॥

**चट्टि—** इत्युदीर्य, विप्रमिति शेषः । सोऽर्जुनः केशवं श्रीकृष्णं प्रति 'अहं व्रजामि' इत्यूचिवान् । इतीरितः हरिः श्रीकृष्णः, हे अर्जुन! इति शेषः । तवात्र शिशुरक्षणे शक्यते नु किम्? शक्तिः स्यात् किं न वेति वितर्कः अवदत् ॥ २० ॥

**[1]विलज्जमानमीक्ष्य तं जगाद केशवोऽरिहा ।**
**व्रजेति स प्रतिश्रवं चकार हाप्यरक्षणे[2] ॥२१॥**

**सत्याभिनवीया–** तत्रैव 'विलज्जमानमीक्ष्य तम्..' इति श्लोके विलज्जमानमीक्ष्य इत्यस्य लज्जारहित-मीक्ष्येत्यर्थः । एतेन लज्जारहितमीक्ष्येति वक्तव्यम् । विशेषेण लज्जमानमीक्ष्येति कथनमयुक्तमिति चोद्यं परास्तम् । विशब्दो नञर्थ इत्यङ्गीकृत्य लज्जारहितमीक्ष्येत्यर्थस्योक्तत्वात् ॥ २१-३५ ॥

**वरदराजीया–** विलज्जमानं वीरसभायां स्वशक्तिविषये सन्देहरकरणादिति भावः । वीक्ष्य, व्रजेति जगाद । अरक्षणेऽपि प्रतिश्रवं प्रतिज्ञामपि चकार । न केवलं रक्षणे इत्यपेरर्थः ॥ २१ ॥

**भावविवृतिः–** विलज्जमानं लज्जारहितं तं अर्जुनं दृष्ट्वेत्यर्थः ॥ २१-२७ ॥

**जनार्दनीया–** विलज्जमानम्, कृतप्रतिज्ञा भवेद्वा न वेति शेषः । सोऽर्जुनोऽपि अरक्षणे विषये रक्षणा-भावविषये प्रतिश्रवं प्रतिज्ञां चकार ॥ २१ ॥

**चट्टि–** अरिहा केशवः श्रीकृष्णः विलज्जमानम्, कृतप्रतिज्ञा भवेद् वा न वेति शेषः । तं पार्थमीक्ष्य व्रजेति जगाद । सोऽर्जुनोऽपि अरक्षणे विषये रक्षणाभावे विषये प्रतिश्रवं प्रतिज्ञां चकार । 'चकार हास्य रक्षणे' इति पाठे अस्य शिशोः रक्षणे अशक्तश्चेद् वह्निं प्रवेक्ष्ये इत्युत्तरेणान्वयः ॥ २१ ॥

**वह्निं प्रवेक्ष्येऽशक्तश्चेदित्युक्त्वा सर्वयादवैः।**
**ययौ न रामप्रद्युम्नावनिरुद्धं च केशवः ।**
**न्ययोजयत् [3]तत्साहाय्ये यशस्तेष्वभिरक्षितुम् ॥२२॥**

**वेदाङ्गतीर्थीया–** सर्वयादवैः सह ययौ ॥ २२ ॥

**वरदराजीया–** प्रतिश्रवमेव दर्शयति– **वह्निमिति** ॥ अशक्तश्चेद् रक्षणे । सर्वयादवैः सह ययौ । रामादीन् रामं प्रद्युम्नं अनिरुद्धं च केशवः तस्यार्जुनस्य सहाये न न्ययोजयत् न प्रेषितवान् ॥२२॥

**जनार्दनीया–** प्रतिज्ञां दर्शयति– **वह्निमिति** ॥ अशक्तश्चेत् । यादवैः सह ययौ । तत्साहाय्ये पार्थसहायार्थम् । रामादीन्न न्ययोजयत् । तेषु रामादिषु ॥२२॥

**चट्टि–** प्रतिज्ञां दर्शयति– **वह्निमिति** ॥ 'अशक्तश्चेत् वह्निं प्रवेक्ष्ये' इत्युक्त्वा सर्वयादवैः सह ययौ । केशवः श्रीकृष्णः तत्साहाय्ये पार्थसहायार्थं रामप्रद्युम्नानिरुद्धं च तेषु रामादिषु यशोऽभिरक्षितुं न न्ययोजयत् ।

---

१. 'इत्युक्तः स स्मितं कृत्वा मामुवाच जनार्दनः । रक्षसीत्येवमुक्तस्तु व्रीडितोऽस्मि नराधिप ॥' हरिवंशे विष्णुपर्वणि-१११.१५.

२. 'चकार हास्य रक्षणे' इति चट्टीटिप्पण्यां पाठान्तरम् ।

३. 'तत्सहाये' इति वरदराजीयपाठः ।

**प्रियो हि नितरां रामः कृष्णस्यानु च तं सुतः ।**
**अनिरुद्धः कार्ष्णिमनु प्रद्युम्नाद् योऽजनिष्ट हि ।**
**[१]रुक्मिपुत्र्यां रुक्मवत्यामाहृतायां स्वयंवरे ॥२३॥**

**वेदाङ्गतीर्थीया–** यः अनिरुद्धः स्वयंवरे आहृतायां रुक्मवत्यां प्रद्युम्नादजनिष्ट, सः कार्ष्णिमनु प्रद्युम्नमनु कृष्णस्य प्रियः ॥ २३ ॥

**वरदराजीया–** तेषु रामादिषु हि यस्माद् रामः नितरां प्रियः । तं राममनु सुतः प्रद्युम्नः । कार्ष्णिमनु प्रद्युम्नमनु यो अनिरुद्धः अजनिष्ट जातः । कुत्र? रुक्मिपुत्र्यां रुक्मवत्यां तन्नामिकायाम् ॥ २३ ॥

**जनार्दनीया–** तमनु राममनु सुतः प्रद्युम्नः । अनिरुद्धः कार्ष्णिमनु प्रद्युम्नमनु प्रियः । योऽनिरुद्धः प्रद्युम्नात् स्वयंवरे आहृतायां रुक्मिपुत्र्यां रुक्मवत्यां अजनिष्ट जातः सः कृष्णस्य प्रिय इति सम्बन्धः ॥२३॥

**चट्टि–** हि यस्मात् रामः नितरां श्रीकृष्णस्य प्रियस्तं राममनु सुतः प्रद्युम्नः प्रियः । कार्ष्णिं कृष्णपुत्रं प्रद्युम्नमनु अनिरुद्धः प्रियः योऽनिरुद्धः प्रद्युम्नात् स्वयंवरे आहृतायां रुक्मिपुत्र्यां रुक्मवत्यां अजनिष्ट जातः सः कृष्णस्य प्रिय इति सम्बन्धः ॥२३॥

**रतिरेव हि या तस्यां जातोऽसौ कामनन्दनः ।**
**पूर्वमप्यनिरुद्धाख्यो विष्णोस्तन्नाम्न एव च ।**
**आवेशयुक्तो बलवान् रूपवान् सर्वशास्त्रवित् ॥२४॥**

**वेदाङ्गतीर्थीया–** रुक्मवती पूर्वं केत्यत आह– **रतिरिति** ॥ तस्यां रुक्मवत्यां जातोऽसौ पूर्वमप्यनिरुद्धाख्यः कामनन्दनः ॥ २४ ॥

**वरदराजीया–** या रुक्मवती पूर्वं रतिरेव तस्यामसौ कामनन्दनोऽनिरुद्धो जातः । पूर्वं कामपुत्रत्वेऽपि अनिरुद्धाख्यः । कुतः? यतस्तन्नाम्नोऽनिरुद्धनामकस्य विष्णोरावेशयुक्तः विशेषावेशयुक्तः । अत एव च बलादिमानित्यर्थः ॥ २४ ॥

**लघ्वनन्तभट्टीया–** पूर्वमपि कामनन्दनः ॥ २४-३० ॥[२]

---

१. भागवते.१०.७६. यद्यप्यनुस्मरन् वैरं गिरिशस्य स्मरन् वचः । वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तया ॥ राज्ञः समेतान् निर्जित्य जहारैकरथो युधि । अनिरुद्धो रुक्मवत्यां तस्यां जज्ञे महारथः ॥३०-३१॥ तथा विष्णुपुराणे ५.२८.६-७.

२. 'इदं अनन्तभट्टीयव्याख्यानं प्रथमश्लोकमारभ्य षष्टिश्लोकपर्यन्तं तञ्जापुरीयमूलकोशे गलितम् ।

**जनार्दनीया–** रुक्मवती पूर्वं केत्यत आह– **रतिरिति** ।। या रुक्मवती पूर्वं रतिरेव तस्यां रुक्मवत्यां अनिरुद्धः जातः । असौ पूर्वमपि अनिरुद्धाख्यः कामनन्दनः तन्नाम्नः अनिरुद्धनाम्नः विष्णोरावेशयुक्तः यस्मात् तस्मात् बलादिगुणवान् ।। २४ ।।

**ताम्रपर्णीया–** पूर्वमपि कामनन्दनः अनिरुद्धाख्यः ।।२४-२८।।

**चट्टि–** रुक्मवती पूर्वं का इत्यत आह– **रतिरिति** ।। या रुक्मवती सा पूर्वं रतिरेव तस्यां रुक्मवत्यां अनिरुद्धो जातः । असौ पूर्वमपि अनिरुद्धाख्यः कामनन्दनः तन्नाम्नः अनिरुद्धनाम्न एव विष्णोः आवेशयुक्तश्च यस्मात् तस्मात् बलवान् रूपवान् सर्वशास्त्रवित् ।। २४ ।।

**तस्मात् तांस्त्रीनृते [1]कृष्णः पार्थसाहाय्यकारणात् ।**
**न्ययोजयत् सूतिकाले ब्राह्मण्याः स च फल्गुनः ।।२५।।**

**वेदाङ्गतीर्थीया–** तस्मात् आत्मप्रियत्वात् ।। २५-३१ ।।

**वरदराजीया–** तान् रामादीन् त्रीन् ऋते अन्यान् न्ययोजयत् । ब्राह्मण्याः सूतिकाले प्रसूतिसमये ।।

**जनार्दनीया–** तस्मादात्मप्रियत्वात् तान् रामादीन् ऋते न्ययोजयत्, अन्यानिति शेषः । सूतिकाले प्रसूतिकाले ।।२५।।

**चट्टि–** तस्मात् आत्मप्रियत्वात् तान् रामादीन् ऋते श्रीकृष्णः पार्थसाहाय्यकारणात् न्ययोजयत्, अन्यानिति शेषः । सः फल्गुनश्च ब्राह्मण्याः सूतिकाले प्रसूतिसमये ।। २५ ।।

**[2]अस्त्रैश्चकार दिग्बन्धं कुमारोऽथापि तत्क्षणात् ।**
**अदर्शनं ययौ पार्थो विषण्णः सह यादवैः ।**
**[3]अधिक्षिप्तो ब्राह्मणेन ययौ [4]यत्र श्रियःपतिः ।।२६।।**

---

१. 'त्वत्पुरंगाश्च रक्षन्तु वृष्ण्यन्धकमहारथाः । ऋते रामं महाबाहुं प्रद्युम्नं च महाबलम् ।।' हरिवंशे-१.१११.१७.

२. 'न्यरुणत्सूतिकागारं शरैर्नानास्त्रयोजितैः । तिर्यगूर्ध्वमधःपार्थः चकारशरपञ्जरम् ।। ततः कुमारो सञ्जातः विप्रपत्न्या रुदन् मुहुः । सद्योऽदर्शनमापेदे सशरीरो विहायसा ।' भागवते-१०.१००.४७-४६.

३. 'अथाक्षिप्तः' इति मधुसूदनीयपाठः ।

४. 'एवं शपति विप्रर्षौ विद्यामास्थाय वैष्णवीम् । ययौ संयमिनीं वीरो यत्रास्ते भगवान् यमः । विप्रापत्यमचक्षाणः तत ऐन्द्रीं अगात्पुरीम् । आग्नेयीं नैर्ऋतीं सौम्यां उदीचीं वारुणीं तथा । रसातलं नाकपृष्ठं धिष्ण्यान्यन्या-न्युदायुधः । ततोऽलब्ध्वा द्विजसुतमनिस्तीर्णप्रतिश्रवः । अग्निं विविक्षुः कृष्णेन प्रद्युम्नेन निषेधितः ।।' हरिवंशे विष्णुपर्वणि-११२.२३-२६

**मधुसूदनीया—** तत्क्षणादुत्पत्त्यनन्तरक्षणादित्यर्थः । पूर्वमुत्पत्त्यनन्तरं भूमौ कियत्क्षणपर्यन्तं तिष्ठन्ति । इदानीं तु उत्पत्त्यव्यवहितक्षण एवादर्शनं यातः । शिशुरिति भावः । यादवैस्सह विषण्णः सन् तेन ब्राह्मणेन अथ आक्षिप्तस्सन् । 'तदाऽऽह विप्रो विजयं विनिन्दन् कृष्णसन्निधौ । मौढ्यात्पश्य तवाहं वै श्रद्दधे क्लीबकत्थनम् ।। न प्रद्युम्नोऽनिरुद्धो वा न रामो न च केशवः । यस्य शेकुः परित्रातुं कोऽन्य-स्तदधिकेश्वरः ।। धिगर्जुनं वृथा वाचं धिगात्मश्लाघिनो धनुः । दैवोपसृष्टयोर्मौढ्यात्....।।' इत्यादि भागवते दशमे (१००.४७-४९)। यत्र श्रियःपतिः कृष्णः तत्र पार्थो ययौ ।। २६ ।।

**वरदराजीया—** अस्त्रैर्दिग्बन्धं चकार । अथापि दिग्बन्धे कृतेऽपि कुमारो अदर्शनमप्रत्यक्षतां ययौ । यादवैः सह पार्थः विषण्णः विषादं प्राप्तः ब्राह्मणेनाधिक्षिप्तः तिरस्कृतश्च यत्र श्रियःपतिः कृष्णः तत्र ययौ ।।

**जनार्दनीया—** विषण्णः श्रान्तः दुःखी बभूवेत्यर्थः । अधिक्षिप्तः तिरस्कृतः । श्रियःपतिः कृष्णः ।।२६।।

**चर्ट्टि—** अस्त्रैः दिग्बन्धं चकार । अथापि दिग्बन्धे कृतेऽपि । तत्क्षणादुत्पत्त्यनन्तरक्षणादित्यर्थः । कुमारः अदर्शनमप्रत्यक्षतां ययौ । पूर्वमुत्पत्त्यनन्तरं भूमौ कियत्क्षणपर्यन्तं तिष्ठति । इदानीं तु उत्पत्त्यव्यवहितक्षण एवादर्शनं यातः । शिशुरिति भावः । पार्थः यादवैः सह विषण्णः विषादं प्राप्तः ब्राह्मणेनाधिक्षिप्तः तिरस्कृतः सन् श्रियःपतिः श्रीकृष्णः यत्र तत्र ययौ । 'तदाऽऽह विप्रो विजयं निन्दन् कृष्णस्य सन्निधौ । मौढ्याद् यस्य तवाहं वै श्रद्दधे क्लीबकत्थनम् ।। न प्रद्युम्नोऽनिरुद्धो वा न रामो न च केशवः । यस्य शेकुः परित्रातुं कोऽन्यस्तदधिकेश्वरः ।। धिगर्जुनं वृथा वाचं धिगात्मश्लाघिनो धनुः । दैवोपसृष्टयोर्मौढ्यात्..।।' इत्यादि भागवते ।। २६ ।।

**[1]वह्निं विविक्षन्तममुं निवार्य ययौ सविप्रः सहफल्गुनो हरिः ।**
**[2]आशामुदीचीं बृहता रथेन क्षणेन तीर्त्वैव च सप्तवारिधीन् ।।२७।।**

**वादिराजतीर्थीया—** 'आशामुदीचीं बृहता रथेन' इत्यत्र 'सहैव रथमास्थाय प्रतीचीं दिशमाविशत्' इति (१०.८९.४७) भागवतोक्त्या विरोध इति चेन्न । उत्तरोत्तरगतेरूर्ध्वगतेश्च मुक्तित्वेन मुक्तितया अभिमतानन्तासनलोकोऽपि उत्तरस्यामेव दिशि वक्तव्यः । अतस्तात्पर्यनिर्णयकारोक्तमेव तात्पर्यम् । भागवतोक्तिस्तु— 'व्यत्यासः प्रातिलोम्यं च' (ता.नि-९.१३५) इति वचनात् दिग्व्यत्यासेन उदीचीमेव प्रतीचीमित्याह इति परिहारसम्भवात् । प्रत्यक्पुरुषः स्वमूलरूपी अनन्तासनो नारायणः प्रत्यगित्युच्यते । तस्य सम्बन्धिनी प्रतीचीति व्युत्पत्त्या उदीच्येव प्रतीचीत्युच्यते । अतोऽपि न विरोधः । यद्वा वायव्यां दिशि अनन्तासनो लोकः । सा च दिक् यथेशानी दिक् प्रागुदीचीत्युच्यते । तथा प्रत्यगुदीचीत्युच्यते । कोणदिशामुभयरूपत्वात् । अत उभयथाऽपि प्रयोगो न दोषायेति ज्ञेयम् ।। २७-२८ ।।

१. 'अग्निं' इति मधुसूदनीय-चर्ट्टिपाठः ।

२. 'ततः समास्थाय रथं कृष्णोऽहं ब्राह्मणः स च । प्रयाताः स्म दिशं सौम्यां उदीचीं कौरवर्षभ ।।' हरिवंशे-२.११२.३०

**मधुसूदनीया–** अग्निं विविक्षन्तं प्रवेष्टुकामं अमुमर्जुनं हरिः कृष्णः निवार्य, सविप्रः सन् सफल्गुनः सन् उदीचीमाशां ययौ । वृहता रथेन दारुकानीतेन रथेन क्षणेन सप्तवारिधीन्, जलस्तम्भं कृत्वेति शेषः । तीर्त्वा उदीचीं आशां ययाविति पूर्वेणान्वयः । 'आरोप्य ब्राह्मणं कृष्णोऽप्यवरोप्य च दारुकम्' इत्यादि हरिवंशोक्तेः (२.११२.२९)। 'ब्राह्मणार्थेऽस्मदर्थे च कुरु सागर मद्वचः । मदृते न पुमान् कश्चिदन्यस्त्वां धर्षयिष्यति ।। मया दत्तो वरः पूर्वं न शोषं यास्यतीति हि । मानुषास्ते न जानीयुः विविधान् रत्नसञ्चयान् ।। जलं स्तम्भय साधो त्वं ततो यास्याम्यहं रथी ।।' इति च हरिवंशवचनात् (२.११३.७-१०) । 'समुद्रःस्तब्धतोयोऽहमहं स्तम्भयिता जलम् । अहं ते पर्वता सप्त ये दृष्टा विविधास्त्वया ।। पङ्कभूतं हि तिमिरं दृष्टवानसि यद्धि तत् । अहं तमो घनीभूतमहमेव च पाटकः ।।' इति कृष्णवचनात् हरिवंशे (२.११६.१२-१४)।। २७ ।।

**वरदराजीया–** वह्निं विविक्षन्तं प्रवेष्टुमिच्छन्तं अमुमर्जुनम् । बृहता महता रथेन । उदीचीमुत्तरां आशां दिशं ययौ । क्षणेनैव सप्तवारिधीन् तीर्त्वा ययौ ।। २७ ।।

**जनार्दनीया–** विविक्षन्तं प्रवेष्टुमिच्छन्तम् । उदीचीमाशामुत्तरां दिशम् ।। २७ ।।

**चट्टि–** अग्निं विविक्षन्तं प्रवेष्टुकामं अमुमर्जुनं हरिः श्रीकृष्णः निवार्य, सविप्रः सन् सहफल्गुनः सन् वृहता रथेन दारुकानीतरथेन क्षणेनैव सप्तवारिधीन्, जलस्थम्भं कृत्वेति शेषः । तीर्त्वा उदीचिमाशां ययावित्यन्वयः । 'आरोप्य ब्राह्मणं कृष्णोऽप्यवरोप्य च दारुकम्' इत्यादि हरिवंशे । 'ब्राह्मणार्थे मदर्थे च कुरु सागर मद्वचः । मामृते न पुनः कश्चिदन्यस्त्वां धर्षयिष्यति ।। मया दत्तो वरः पूर्वं न शोषं यास्यतीति हि । मानुषास्ते न जानीयुः विविधान् रत्नसञ्चयान् ।। जलं स्तम्भय साधो त्वं ततो यास्याम्यहं रथी ।।' इति च हरिवंशवचनात् । 'समुद्रःस्तब्धतोयोऽहमहं स्तम्भयिता जलम् । अहं ते पर्वताः सप्त ये दृष्टा विविधास्त्वया ।। पङ्कभूतं हि तिमिरं दृष्टवानसि यद्धि तत् । अहं तमोघनीभूतमहमेव च पाटकः ।।' इति श्रीकृष्णवचनात् हरिवंशे ।। २७ ।।

**ददृश्च मार्गं गिरयोऽब्धयस्तथा विदार्य चक्रेण तमोऽन्धमीशः ।**
**घनोदकं चाप्यतितीर्य तत्र ददर्श धाम स्वमनन्तवीर्यः ।।२८।।**

**मधुसूदनीया–** ।। **तमश्च मार्गमिति** ।। अन्धं अन्धयतीति अन्धन्तमः । हिमवद्घनीभूतगाढान्धकारम् । तथाचोक्तम्- 'अथ पर्वतभूतं तत् तिमिरं समपद्यत । तदासाद्य महाराज निष्प्रयत्ना हयाः स्थिताः ।। ततश्चक्रेण गोविन्दः पाटयित्वा तमस्तथा ।।' इत्यादि हरिवंशे (२.११३.२२-२३)। तच्च तमस्त्रिविधम्– 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् । श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् ।। तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तम ।।' (सू.भा.३.१.२३) इति कौर्मवचनात् ।। २८-३२ ।।

**वरदराजीया–** गिर्यादयो मार्गं ददुः । अन्धन्तमश्चक्रेण विदार्य परिहृत्य, घनोदकमप्यतितीर्य, स्वं धाम अनन्तासनाख्यं ददर्श यतोऽनन्त इत्यर्थः ।। २८ ।।

**भावविवृतिः—** 'घनोदकं चाप्यतितीर्य तत्र ददर्श धाम स्वमन्तवीर्यः' इत्यत्र घनोदकमतितीर्य तीर्त्वा तत्र घनोदकानन्तरप्रदेशे स्वधाम अनन्तासनात्मकं ददर्शेत्यर्थः ।। २८-३० ।।

**जनार्दनीया—** अन्धन्तमः विदार्य भित्वा । अतितीर्य तीर्त्वा । स्वं धाम अनन्तासनम् ।।२८।।

**चट्टि—** गिरयः पर्वताः अब्धयः समुद्राश्च मार्गं ददुः । अनन्तं वीर्यं यस्य स तथा । ईशः श्रीकृष्णः चक्रेण अन्धंतमश्च अन्धयति इत्यन्धःतमः हिमवद्घनीभूतगाढान्धकारं विदार्य विनाश्य । तथाचोक्तम्- 'अथ पर्वतभूतं तु तिमिरं समपद्यत । तदासाद्य महाराजन् निष्प्रयत्ना हया स्थिताः ।। ततश्चक्रेण गोविन्दः पाटयित्वा तमस्तथा ।।' इत्यादि हरिवंशवचनात् । तच्च तमस्त्रिविधम्- 'महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् । श्रवणादेव मूर्च्छादिरधरस्य यतो भवेत् ।। तस्मान्न विस्तरेणैतत् कथ्यते राजसत्तम ।।' इति कौर्मवचनात् । घनोदकं चाप्यतितीर्य तीर्त्वा, तत्र स्वं धामानन्तासनं ददर्श ।। २८ ।।

**[1]संस्थाप्य दूरे सरथं सविप्रं पार्थं स्वरूपे द्विचतुष्कबाहौ[2] ।**
**समस्तरत्नोज्ज्वलदिव्यभूषणे विवेश नित्योरुगुणार्णवे प्रभुः ।।२९।।**

**वादिराजतीर्थीया—** 'प्रलम्बचार्वष्टभुजम्' इति (१०.१००.६३) भागवतोक्तेः 'द्विचतुष्कबाहौ' इत्युक्तम् ।। २९-३० ।।

**वरदराजीया—** स कृष्णः दूरे अमुक्तस्थाने रथं सविप्रं विप्रेण सह वर्तमानं पार्थं संस्थाप्य, स्वस्य रूपे मूलरूपे विवेश प्रविष्टवान् । स्वरूपं विशिनष्टि- **द्विचतुष्केत्यादिना** ।। अष्टभुजैः समस्तैः रत्नैः उज्ज्वलानि दीप्यमानानि भूषणानि यस्य तस्मिन् । नित्यैः उरुभिर्गुणैरर्णव इव तस्मिन् ।। २९ ।।

**जनार्दनीया—** दूरे सरथं सविप्रं पार्थं संस्थाप्य, मुक्तस्थानं प्रवेष्टुमयोग्यत्वात् संस्थापयामासेति भावः । स्वरूपे स्वमूलरूपे विवेश । स्वरूपं विशिनष्टि- **द्विचतुष्केति** ।। द्विचतुष्कबाहौ द्वाभ्यां गुणितं चतुष्कं बाहवो यस्य तत्तथा तस्मिन् । समस्तरत्नैः उज्ज्वलानि दिव्यानि भूषणानि यस्य तत्तथा तस्मिन् । नित्यैरुरुभिर्गुणैरर्णव इव तथा तस्मिन् ।। २९ ।।

**ताम्रपर्णीया—** दूरे अमुक्तस्थाने ।। २९-३० ।।

**भारतश्री—** अनेनैषां तत्र बहिरवस्थाने योग्यता तावतीति सूचितम् ।। २९-३० ।।

**चट्टि—** प्रभुः श्रीकृष्णः दूरे अमुक्तस्थले सरथं सविप्रं पार्थं संस्थाप्य, मुक्तस्थानं प्रवेष्टुमयुक्तत्वादिति भावः । स्वरूपे स्वमूलरूपे विवेश प्रविष्टवान् । स्वरूपं विशिनष्टि- **द्विचतुष्केति** ।। द्वाभ्यां गुणितं

१. 'तं प्रविष्टो हृषीकेशः दीप्तं तेजोनिधिं तदा । रथेव स्थितश्चाहं स च ब्राह्मणसत्तमः ।।' हरिवंशे-२.११३.२६.

२. 'महामणिव्रातकिरीटकुण्डलत्विषा परिष्वक्तसहस्रकुन्तलम् । प्रलम्बचार्वष्टभुजं सकौस्तुभं श्रीवत्सवक्षं वनमालया- वृतम् ।।' भागवते-१०.१००.६३

चतुष्कं बाहवो यस्य तत् तथा तस्मिन् । अष्टभुज इत्यर्थः । समस्तरत्नैः उज्वलानि दिव्यानि भूषणानि यस्य स तथा तस्मिन् । नित्यैरुरुभिः गुणैः अर्णव इव तथा तस्मिन् ।। २९-३० ।।

**सहस्रमूर्धन्युरुशेषभोग आसीनरूपेऽमितसूर्यदीधितौ ।**
**रमासहाये तटिदुज्ज्वलाम्बरे मुक्तैर्विरिञ्चादिभिरर्चिते सदा ।।३०।।**

**वरदराजीया–** सहस्रमूर्ध्नि सहस्रशिरसि । उरौ विस्तीर्णे शेषस्य भोगे शरीरे आसीनं रूपं यस्य तस्मिन् । अमितसूर्याणां दीधितिरिव दीधितिर्यस्य स तथा तस्मिन् । रमासहाये रमासहिते । तटिद्वत् उज्वलं दीप्यमानमम्बरं यस्य तस्मिन् । विरिञ्चादिभिः मुक्तैः सदा अर्चिते ।। ३० ।।

**जनार्दनीया–** सहस्रं मूर्धानो यस्य स सहस्रमूर्धा तस्मिन् । उरुश्चासौ शेषभोगश्च तथा तस्मिन् । आसीनं रूपं यस्य तत् तथा तस्मिन् । अमितसूर्याणां दीधितिरिव दीधितिर्यस्य तत् तथा तस्मिन् । रमायाः सहाये । तडिद्वत् उज्वले अम्बरे यस्य तत् तथा तस्मिन् । मुक्तैर्विरिञ्चादिभिः सदार्चिते ।।३०।।

**चट्टि–** सहस्रं मूर्धानो यस्य तत् तथा तस्मिन् । उरुश्चासौ शेषभोगश्च तस्मिन् । आसीनं रूपं यस्य तत् तथा तस्मिन् । अमितसूर्याणां दीधितिर्यस्य तत्तथा तस्मिन् । रमायाः सहाये । तटिद्वत् उज्वले अम्बरे यस्य तत् तथा तस्मिन् । मुक्तैर्विरिञ्चादिभिः सदार्चिते ।। ३०-३१ ।।

**[1]स्थित्वैकरूपेण मुहूर्तमीश्वरो विनिर्ययौ विप्रसुतान् प्रगृह्य ।**
**सुनन्दनन्दादय एव पार्षदास्ते वैष्णवा भूमितले प्रजाताः ।।३१।।**

**वेदाङ्गतीर्थीया–** एकरूपेण एकरूपत्वेन । भूमितले विप्रसुतत्वेन जाताः ते सुनन्दनन्दादयः वैष्णवाः पार्षदाः ।।३१-३४।।

**वादिराजतीर्थीया–** 'विप्रसुतान् प्रगृह्य' इत्यत्र प्रगृह्य जयविजयादिवत् अमुक्तगम्यमुक्तिस्थान-द्वारपालकतया स्थितान् विप्रसुतान् प्रगृह्येत्यर्थः ।। ३१-३५ ।।

**वरदराजीया–** ईश्वरः कृष्णः मुहूर्तं घटिकाद्वयपर्यन्तं एकरूपेण मूलरूपैक्येन स्थित्वा, विप्रस्य सुतान् प्रगृह्यादाय विनिर्ययौ विनिर्गतवान् । ते विप्रसुताः सुनन्दनन्दादयो वैष्णवा विष्णुसम्बन्धिनः पार्षदा एव भूमितले प्रजाताः ।। ३१ ।।

**भावविवृतिः–** 'सुनन्दनन्दादय एव पार्षदाः ते वैष्णवा भूमितले प्रजाताः' इत्यत्र ते विप्रसुता वैष्णवाः सुनन्दनन्दादय एव प्रारब्धकर्मणा विप्रसुतास्सन्तः भूमौ जाता इत्यर्थः । 'विष्णुलोकस्थिताश्चैव वरशापादियोगिनः' (भा.ता-७.१.३८) इत्युक्तेः ।। ३१ ।।

---

१ 'समुहूर्तात् ततः कृष्णो निश्चक्राम तदा प्रभुः । चतुरो बालकान् गृह्य ब्राह्मणस्यात्मजान् तदा ।' हरिवंशे-२.११३.२७

**अनन्तभट्टीया–** वैष्णवाः पार्षदाः ।। ३१-४० ।।

**जनार्दनीया–** ईश्वरः श्रीकृष्णः एकरूपेण स्वमूलरूपैक्येन मुहूर्तं स्थित्वा, विप्रस्य सुतान् प्रगृह्य आदाय विनिययौ । ते विप्रकुमाराः पूर्वं सुनन्दादयः वैष्णवाः विष्णुसम्बन्धिनः पार्षदा एव भूमितले जाताः ।। ३१ ।।

**ताम्रपर्णीया–** एकरूपेण एकरूपत्वेन ।। ३१ ।।

**भारतश्री–** मुहूर्तं स्थित्वा, जनवश्चनार्थमिति ज्ञेयम् । प्रगृह्य स्वोदरे संगृह्य, तदन्तरेव स्वोदरे परिगृह्येति वक्तव्यम् । अन्यथा तेषां बहिरवस्थानयोग्यतायाम् अर्जुनस्य अप्रवेशे निमित्तं चिन्त्यं स्यादिति । मुक्तस्थले अमुक्ताः कथमवसन्निति चेत्? यतः त एव गतव्यमित्युक्तम् । प्रजाताः, स्वप्रारब्धेनेति शेषः ।। ३१ ।।

[1]दर्पं निहन्तुं हरिरर्जुनस्य समानयद् विप्रसुतान् परेशः ।
[2]प्रीतिर्महत्येव यतोऽर्जुने हरेः संशिक्षयामास ततः स एनम् ।।३२।।

**वरदराजीया–** तर्हि किमर्थं स्वलोकं प्रत्यानीता इत्यत आह– **दर्पमिति** ।। अर्जुनस्य दर्पमहङ्कारं निहन्तुं परिहर्तुम् । दर्पपरिहारोऽपि कुतः कर्तव्य इत्यत आह– **प्रीतिरिति** ।। यतः कारणाद् हरेः अर्जुने महत्येव प्रीतिः ततः कारणात् स कृष्ण अर्जुनं संशिक्षयामास उद्बोधयामासेत्यर्थः ।। ३२ ।।

**भावविवृतिः–** 'समानयद् विप्रसुतान् परेशः' इति स्वस्वमूलरूपादेकैकांशेन प्रकृतिभागैः विप्रसुतदेह-सहितदेहयुक्तान् कृत्वा समानयदिति वक्तव्यम् । पूर्वोत्पन्नविप्रकुमारदेहानामत्रैव नष्टत्वात् ।।३२-४०।।

**जनार्दनीया–** तान् पार्षदान् किमर्थमानयदित्यत आह– **दर्पमिति** ।। हरेर्महती प्रीतिरर्जुने अस्ति यतः अतः स कृष्णः एनमर्जुनं संशिक्षयामास बोधयामासेत्यर्थः ।।३२।।

**ताम्रपर्णीया–** यदि विष्णुपार्षदा भूमितले प्रजाताः । तर्हि किमर्थं स्वलोकं प्रत्यानीता इत्यत आह– **दर्पमिति** ।। दर्पपरिहारेण शिक्षणे हेतुमाह– **प्रीतिरिति** ।। ३२ ।।

**चट्टि–** श्रीकृष्णः पार्षदान् किमर्थं स्वलोकमनयदित्यत आह– **दर्पमिति** ।। परेशो हरिः श्रीकृष्णः अर्जुनस्य दर्पमहङ्कारं निहन्तुं परिहर्तुं विप्रसुतान् समानयत् । दर्पपरिहारोऽपि कुतः कर्तव्य इत्यत आह– **प्रीतिरिति** ।। यतो हरेः महती प्रीतिः अर्जुनेऽस्ति ततः कृष्णः एनमर्जुनं संशिक्षयामास बोधयामासेत्यर्थः ।।३२।।

---

१. तदाकर्ण्यार्जुनो मानी समुत्थाय वरासनात् । अपृच्छत् स्वयमासाद्य ब्राह्मणं केशवान्तिकात् ।। इति भगवान् वेदव्यासः भागवते (१०.१००.१८) 'मानी' इत्यर्जुनविशेषणेन अर्जुनस्य तदानीं दर्पयुक्तत्वं आह ।

२. 'प्रियस्तेऽहं महाबाहो प्रियो मेऽसि धनञ्जय ।।' हरिवंशे- २.११४.१८.

**अप्राकृतात् सदनाद् वासुदेवो निस्सृत्य सूर्याधिकलक्षदीधितेः ।**
**रथं समारुह्य सपार्थविप्र आगात् सुतांश्चैव ददौ द्विजाय ॥३३॥**

**मधुसूदनीया–** ॥ **सपार्थविप्र इति** ॥ अगात्, द्वारकामिति शेषः । द्वारकाप्राप्त्यनन्तरं द्विजाय सुतान् ददौ । 'ततः स्म द्वारकां प्राप्ताः क्षणेन नृपसत्तम । सपुत्रं भोजयित्वा तु द्विजं कृष्णो महायशाः । धनेन तर्पयित्वा च गृहं प्रास्थापयत्तथा ॥' इति च (हरिवंशे-२.११३.३१-३२) । 'विप्राय ददतुः पुत्रान् यथारूपं प्रसूयताम्' इति चान्यत्र (भागवते-१०.१०१.६९)॥ ३३-३६ ॥

**वरदराजीया–** अप्राकृतात् चिद्रूपात् सदनात् स्वलोकात् अत एव लक्षाधिकानां सूर्याणां दीधितिरिव दीधितिर्यस्य तत् तस्माद् । निस्सृत्य निर्गत्य पार्थविप्राभ्यां सह वर्तमानो रथं समारुह्य आगात् आगमत् । द्विजाय सुतान् ददौ च ॥ ३३ ॥

**जनार्दनीया–** लक्षादधिकाः इति अधिकलक्षाः, अधिकलक्षाश्च ते सूर्याश्चेति सूर्याधिकलक्षाः, तेषां दीधितिरिव दीधितिर्यस्य तत्तथा तस्मात् लक्षाधिकसूर्याणां प्रकाशवत् प्रकाशवतः । अधिकं च तत् लक्षं च तथा, सूर्याणामधिकलक्षं वा । अप्राकृतात् चेतनप्रकृतिस्वरूपात् सदनात् निःसृत्य निर्गत्य सपार्थविप्रः पार्थविप्राभ्यां सहितः द्वारकामगात् । द्विजाय सुतान् चतुःसङ्ख्याकान् ददौ । तदुक्तं हरिवंशे-'चतुरो बालकान् गृह्य ब्राह्मणस्यात्मजांस्तथा । प्रददौ ब्राह्मणायाशु पुत्रान् सर्वान् जनार्दनः ॥ त्रयः पूर्वं हृता ये च सद्योजातश्च वालकः ॥'(विष्णुपर्व.११३.२७-२८) इति च ॥३३॥

**ताम्रपर्णीया–** ॥ **अप्राकृतादिति** ॥ वासुदेवो रथं सपार्थविप्रः समारुह्य अप्राकृतात्सदनात् निर्गत्य अगादित्यर्थः । ननु 'विनिर्ययौ विप्रसुतान् प्रगृह्य' इत्यनेन ते भगवत्समीपस्था इति ज्ञायते । तदयुक्तम् । अमुक्तानां मुक्तस्थानान्वयायोगात् । मुक्तैः विरिञ्चादिभिः इति मुक्तस्थानत्वं चोक्तमिति चेन्न । 'विनिर्ययौ विप्रसुतान् प्रगृह्य' इत्यत्र अमुक्तस्थानगतानादायेत्युपपत्तेः । तेषां मुक्तस्थानन्वयाभावात् ॥३३-३९॥

**चट्टि–** लक्षादधिकाः अधिकलक्षास्ते च ते सूर्याश्चेति सूर्याधिकलक्षाः तेषां दीधितिरिव दीधितिर्यस्य तत्तथा तस्मात् लक्षाधिकसूर्याणां प्रकाशवत् प्रकाशवतः । अधिकं च तल्लक्षं च अधिकलक्षं सूर्याणामधिकलक्षं वा । अप्राकृताच्चेतनप्रकृतिस्वरूपात् सदनान्निस्सृत्य निर्गत्य, सपार्थविप्रः पार्थविप्राभ्यां सहितः वासुदेवः श्रीकृष्णः रथं समारुह्यागात्, द्वारकामिति शेषः । द्वारकाप्राप्त्यनन्तरं द्विजाय सुतांश्चैव ददौ । 'ततः स्म द्वारकां प्राप्ताः क्षणेन नृपसत्तम । सपुत्रं भोजयित्वा तं द्विजं कृष्णो महायशाः ॥ धनेन तर्पयित्वा तं गृहं प्रास्थापयत् तथा ॥' इति च । 'आदाय ददतुः पुत्रान् यथापुत्रं प्रसूयताम्' इति चान्यत्र ॥ ३३ ॥

**[1]लोकशिक्षार्थमेवासौ प्रायश्चित्तं च चालने ।**
**चक्रे सार्धमुहूर्तेन समागम्य पुनर्मखम् ॥३४॥**

**वरदराजीया–** चालने मखं मुक्त्वा गमननिमित्ते सति प्रायश्चित्तं चकार । तदपि लोके शिक्षणार्थमेव न तु प्राप्तप्रत्यवायपरिहारार्थमित्यर्थः । सार्धं मुहूर्तेन घटिकात्रयेण समागम्य पुनर्मखं चक्रे ॥३४॥

**जनार्दनीया–** असौ कृष्णः । सार्धमुहूर्तेन अर्धमुहूर्तेन सहितैकमुहूर्तेन घटिकात्रयेणेत्यर्थः । 'मुहूर्तमल्पकाले स्याद् घटिकाद्वितयेऽपि च' इति शब्दार्णवे । समागम्य, द्वारकामिति शेषः । लौकिक-शिक्षार्थमेव न तु प्रत्यवायपरिहारार्थम् । चालने मखं हित्वा अन्यत्र गमनविषये प्रायश्चित्तं चक्रे । पुनः मखं च चक्रे ॥३४॥

**चट्टि–** असौ श्रीकृष्णः सार्धमुर्हूतेन घटिकात्रयेण समागम्य, द्वारकामिति शेषः । लोकशिक्षार्थमेव न तु प्रत्यवायपरिहारार्थम् । चालने मखं हित्वा अन्यत्र गमनविषये प्रायश्चित्तं चक्रे । पुनः मखं यज्ञं च चक्रे ॥ ३४ ॥

**ब्रह्मादीनागतांश्चैव सदा स्वपरिचारकान् ।**
**पूजयित्वाऽभ्यनुज्ञाय ब्राह्मणानप्यपूजयत्[2] ॥३५॥**

**वरदराजीया–** आगतान् स्वसेवार्थमागतान् ब्रह्मादीन् न केवलमत्रेदानीं किन्तु सदा स्वपरिचारकान् स्वसेवकान् पूजयित्वा मानयित्वा अभ्यनुज्ञाय अनुज्ञां दत्वा ब्राह्मणान् ऋत्विगादीन् अपूजयत् ॥३५॥

**जनार्दनीया–** स्वपरिचारकान् स्वसेवकान् अभ्यनुज्ञाय अनुज्ञां दत्वा ॥ ३५ ॥

**चट्टि–** सदैव स्वपरिचारकान् स्वसेवकानागतान् ब्रह्मादींश्च पूजयित्वा अभ्यनुज्ञाय अनुज्ञां दत्वा ब्राह्मणांश्च अभ्यपूजयत् ॥ ३५ ॥

**[3]सस्नाववभृथं कृष्णः सदारः ससुहृज्जनः ।**
**आयान्तं द्वारकां कृष्णं दन्तवक्रो रुरोध ह ॥३६॥**

**वादिराजतीर्थीया–** 'सस्नाववभृथं कृष्णः' इत्यत्र उद्यापनस्नानहेतोः 'यमुनातीरमागतम्' इति भागवतोक्तेः । यमुनायां सस्नाविति योग्यपदाध्याहारेण योजना । अत एव 'आयान्तं द्वारकां कृष्णम्' इत्युक्तम् ॥३६-३८॥

१. नारद उवाच- 'नित्यशुद्धश्च मुक्तश्च बुद्धश्चैव भवान् सदा । सच्चिदानन्दरूपश्च परमात्मा सनातनः ॥ पुण्यं पापश्च ते नास्ति कृष्ण यादवनन्दन । तथापि लोकशिक्षार्थं भवता गरुडध्वज ॥ प्रायश्चित्तं तु कर्तव्यं विधिनानेन माधव । लोकसङ्ग्रहणं तावत् कर्तव्यं भवताधुना ॥' इति स्कान्दे ब्रह्मखण्डे- २७.८९-९२.

२. 'अभ्यपूजयत्' इति चट्टीपाठः ।

३. 'यमुनायां महानद्यां कृत्वाऽवभृथमज्जनम् ॥' भागवते-१०.१००.७४.

**सत्याभिनवीया–** तत्रैव 'सस्नाववभृथं कृष्णः सदारः..' इति श्लोके 'सस्नाववभृथम्' इत्यस्य यज्ञस्नानं चक्रे इत्यर्थः । एतेन अवभृथशब्दस्य यज्ञस्नानवाचित्वात् अवभृथं चक्रे इति वक्तव्यम् । अवभृथं सस्नाविति कथनमनुपपन्नमिति चोद्यं पराकृतम् । सस्नौ इत्यस्य चक्रे इत्येवार्थः । न तु स्नानं चक्रे इत्यभ्युपगमात् ।। ३६-३९ ।।

**मधुसूदनीया–** ।। दन्तवक्र इति ।। सविदूरथ इति शेषः । 'श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्रः सहानुजः' इति भागवतोक्तेः (१०.१०१.१) । 'भ्रातरं निहतं दृष्ट्वा दन्तवक्रं विदूरथः' इति च (भागवते-१०. १०१.१७) ।।३६-४०।।

**वरदराजीया–** दारैः सह वर्तमानः सुहृज्जनैः सह वर्तमानश्च कृष्णोऽवभृथं मखसमाप्त्यङ्गभूतस्नानं सस्नौ कृतवान् । स्नात्वा द्वारकां प्रत्यायान्तं कृष्णं दन्तवक्रो रुरोध न्यरुणत् ।।३६।।

**जनार्दनीया–** आयान्तम्, स्नात्वेति शेषः ।।३६।।

**चट्टि–** श्रीकृष्णः सदारः सन् ससुहृज्जनः सन् अवभृथं सस्नौ अवभृथस्नानं कृतवान् । द्वारकामायान्तम्, स्नात्वेति शेषः । श्रीकृष्णं दन्तवक्रः, सविदूरथः इति शेषः । रुरोध । 'श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्रः सहानुजः' इति भागवतोक्तेः । 'भ्रातरं निहतं दृष्ट्वा दन्तवक्रं विदूरथः' इति च ।। ३६ ।।

**जघान गदया कृष्णस्तं क्षणात् सविदूरथम् ।**
**विदूरथस्तमोऽगच्छद् दन्तवक्रे च योऽसुरः ।।३७।।**

**वरदराजीया–** तत्क्षणाज्जघान । सविदूरथं विदूरथाख्येन स्वभ्रात्रा सह वर्तमानं दन्तवक्रं जघान । विदूरथः असुरत्वात् तमोऽगच्छत् । दन्तवक्रे च योऽसुरः आविष्ट आसीत् सोऽपि तमोऽगच्छदित्यर्थः ।।३७।।

**जनार्दनीया–** सविदूरथं विदूरथाख्यभ्रात्रा सह वर्तमानं दन्तवक्रम् । विदूरथः तमः अगच्छत् । दन्तवक्रे यः असुरः अभूत्, सोऽपि तमोऽगच्छदिति सम्बन्धः । 'भ्रातरं निहतं दृष्ट्वा दन्तवक्रं विदूरथम्' इति भागवते ।। ३७ ।।

**भावचन्द्रिका–** विदूरथो नाम दन्तवक्रभ्राता ।। ३७-४० ।।

**चट्टि–** श्रीकृष्णः सविदूरथं विदूरथाख्यभ्रात्रा सह वर्तमानं दन्तवक्रं गदया क्षणाज्जघान । विदूरथः तमः अगच्छत् । दन्तवक्रे योऽसुरः अभूत्, सोऽपि तमः अगच्छदिति सम्बन्धः ।। ३७ ।।

**हरेः पार्षदः क्षिप्रं हरिमेव समाश्रितः ।**
**कृष्णे प्राप्ते स्वलोकं च निस्सृत्यास्मात् स्वरूपतः ।**
**एकीभावं स्वरूपेण द्वारपेण गमिष्यति ।।३८।।**

**वरदराजीया–** हरेः पार्षदो विजयाख्यः क्षिप्रं हरिमेव समाश्रितः । कृष्णे स्वलोकं प्राप्ते सति अस्मात् कृष्णात् स्वरूपतः निर्गत्य निःसृत्य स्वरूपेण मूलरूपेण विजयाख्येन एकीभावमेकत्वं गमिष्यति ।।३८।।

**जनार्दनीया–** पार्षदो विजयः । हरिं कृष्णमेव । अस्मात् कृष्णात् स्वरूपतः विजयरूपेण निःसृत्य वहिर्निर्गत्य, स्वरूपेण स्वस्य रूपं यस्य स तथा तेन । द्वारपेण द्वारपालकविजयेन एकीभावं ऐक्यं गमिष्यति ।।३८।।

**चट्टि–** हरेः पार्षदः विजयः क्षिप्रं हरिमेव समाश्रितः । श्रीकृष्णे स्वलोकं प्राप्ते सति अस्मात् कृष्णात् स्वरूपतः विजयस्वरूपेण निस्सृत्य बहिर्निर्गत्य स्वरूपेण स्वस्वरूपं यस्य स तथा तेन । द्वारपेण द्वारपालकविजयेनैकीभावमैक्यं गमिष्यति ।। ३८ ।।

**ततः कृष्णः पुरीमेत्य बोधयामास फल्गुनम् ।**
**किमेतद् दृष्टमित्येव तेन पृष्टो रमापतिः ।।३९।।**

**वेदाङ्गतीर्थीया–** ततः रमापतिः कृष्णः पुरीमेत्य, दृष्टमेतत् किम्? इति तेन पृष्टः फल्गुनं बोधयामास ।।३९।।

**वादिराजतीर्थीया–** रमापतिः श्रीकृष्णः पुरीमेत्य, एतद्दृष्टम् किम्? इति तेन अर्जुनेन पृष्टः फल्गुनं बोधयामासेत्यन्वयः ।। ३९-४० ।।

**वरदराजीया–** पुरीं द्वारकामेत्य, तेन फल्गुनेन किमेतन्मार्गे दृष्टम्? इति पृष्टो रमापतिः कृष्णः फल्गुनं बोधयामास ज्ञापयामास ।।३९।।

**जनार्दनीया–** ततः दन्तवक्रवधानन्तरं रमापतिः कृष्णः पुरीमेत्य, दृष्टमेतत् किम्? इति तेन पार्थेन पृष्टः सन् फल्गुनं बोधयामास ।।३९।।

**चट्टि–** ततो दन्तवक्रवधानन्तरमेव रमापतिः श्रीकृष्णः पुरीमेत्य, दृष्टमेतत् किम्? इति तेन पार्थेन पृष्टस्सन् फल्गुनं बोधयामास ।। ३९ ।।

**अयं द्वीपः सागरश्च लक्षयोजनविस्तृतौ ।**
**तदन्ये तु क्रमेणैव द्विगुणेनोत्तरोत्तराः ।।४०।।**

**वेदाङ्गतीर्थीया–** अयं द्वीपः जम्बूद्वीपः । अयं सागरश्च ।। ४० ।।

**सत्याभिनवीया–** तत्रैव 'तदन्ये तु क्रमेणैव..' इत्यस्ति । तस्यार्थः- तदन्ये उत्तरोत्तराः क्रमेण द्विगुणेन परिमाणेन युक्ता इति । अनेन द्विगुणेत्येतत् अनन्वितमिति दूषणं परास्तम् । परिमाणेन युक्ता इत्याध्याहृतेनान्वयस्योक्तत्वात् ।। ४०।।

**सत्याभिनवीया—** तत्रैव 'सस्नाववभृथं कृष्णः सदारः..' इति श्लोके 'सस्नाववभृथम्' इत्यस्य यज्ञस्नानं चक्रे इत्यर्थः । एतेन अवभृथशब्दस्य यज्ञस्नानवाचित्वात् अवभृथं चक्रे इति वक्तव्यम् । अवभृथं सस्नाविति कथनमनुपपन्नमिति चोद्यं पराकृतम् । सस्नौ इत्यस्य चक्रे इत्येवार्थः । न तु स्नानं चक्रे इत्यभ्युपगमात् ।। ३६-३९ ।।

**मधुसूदनीया—** ।। दन्तवक्र इति ।। सविदूरथ इति शेषः । 'श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्रः सहानुजः' इति भागवतोक्तेः (१०.१०१.१) । 'भ्रातरं निहतं दृष्ट्वा दन्तवक्रं विदूरथः' इति च (भागवते-१०. १०१.१७) ।।३६-४०।।

**वरदराजीया—** दारैः सह वर्तमानः सुहृज्जनैः सह वर्तमानश्च कृष्णोऽवभृथं मखसमाप्त्यङ्गभूतस्नानं सस्नौ कृतवान् । स्नात्वा द्वारकां प्रत्यायान्तं कृष्णं दन्तवक्रो रुरोध न्यरुणत् ।।३६।।

**जनार्दनीया—** आयान्तम्, स्नात्वेति शेषः ।।३६।।

**चट्टि—** श्रीकृष्णः सदारः सन् ससुहृज्जनः सन् अवभृथं सस्नौ अवभृथस्नानं कृतवान् । द्वारकामायान्तम्, स्नात्वेति शेषः । श्रीकृष्णं दन्तवक्रः, सविदूरथः इति शेषः । रुरोध । 'श्रुत्वा तूर्णं कलिङ्गेशो दन्तवक्रः सहानुजः' इति भागवतोक्तेः । 'भ्रातरं निहतं दृष्ट्वा दन्तवक्रं विदूरथः' इति च ।। ३६ ।।

**जघान गदया कृष्णस्तं क्षणात् सविदूरथम् ।**
**विदूरथस्तमोऽगच्छद् दन्तवक्रे च योऽसुरः ।।३७।।**

**वरदराजीया—** तत्क्षणाज्जघान । सविदूरथं विदूरथाख्येन स्वभ्रात्रा सह वर्तमानं दन्तवक्रं जघान । विदूरथः असुरत्वात् तमोऽगच्छत् । दन्तवक्रे च योऽसुरः आविष्ट आसीत् सोऽपि तमोऽगच्छदित्यर्थः ।।३७।।

**जनार्दनीया—** सविदूरथं विदूरथाख्यभ्रात्रा सह वर्तमानं दन्तवक्रम् । विदूरथः तमः अगच्छत् । दन्तवक्रे यः असुरः अभूत्, सोऽपि तमोऽगच्छदिति सम्बन्धः । 'भ्रातरं निहतं दृष्ट्वा दन्तवक्रं विदूरथम्' इति भागवते ।। ३७ ।।

**भावचन्द्रिका—** विदूरथो नाम दन्तवक्रभ्राता ।। ३७-४० ।।

**चट्टि—** श्रीकृष्णः सविदूरथं विदूरथाख्यभ्रात्रा सह वर्तमानं दन्तवक्रं गदया क्षणाज्जघान । विदूरथः तमः अगच्छत् । दन्तवक्रे योऽसुरः अभूत्, सोऽपि तमः अगच्छदिति सम्बन्धः ।। ३७ ।।

**हरेः पार्षदः क्षिप्रं हरिमेव समाश्रितः ।**
**कृष्णे प्राप्ते स्वलोकं च निस्सृत्यास्मात् स्वरूपतः ।**
**एकीभावं स्वरूपेण द्वारपेण गमिष्यति ।।३८।।**

**वरदराजीया–** हरेः पार्षदो विजयाख्यः क्षिप्रं हरिमेव समाश्रितः । कृष्णे स्वलोकं प्राप्ते सति अस्मात् कृष्णात् स्वरूपतः निर्गत्य निःसृत्य स्वरूपेण मूलरूपेण विजयाख्येन एकीभावमेकत्वं गमिष्यति ।।३८।।

**जनार्दनीया–** पार्षदो विजयः । हरिं कृष्णमेव । अस्मात् कृष्णात् स्वरूपतः विजयरूपेण निःसृत्य वहिर्निर्गत्य, स्वरूपेण स्वस्य रूपं यस्य स तथा तेन । द्वारपेण द्वारपालकविजयेन एकीभावं ऐक्यं गमिष्यति ।।३८।।

**चट्टि–** हरेः पार्षदः विजयः क्षिप्रं हरिमेव समाश्रितः । श्रीकृष्णे स्वलोकं प्राप्ते सति अस्मात् कृष्णात् स्वरूपतः विजयस्वरूपेण निस्सृत्य वहिर्निर्गत्य स्वरूपेण स्वस्वरूपं यस्य स तथा तेन । द्वारपेण द्वारपालकविजयेनैकीभावमैक्यं गमिष्यति ।। ३८ ।।

**ततः कृष्णः पुरीमेत्य बोधयामास फल्गुनम् ।**
**किमेतद् दृष्टमित्येव तेन पृष्टो रमापतिः ।।३९।।**

**वेदाङ्गतीर्थीया–** ततः रमापतिः कृष्णः पुरीमेत्य, दृष्टमेतत् किम्? इति तेन पृष्टः फल्गुनं बोधयामास ।।३९।।

**वादिराजतीर्थीया–** रमापतिः श्रीकृष्णः पुरीमेत्य, एतद्दृष्टम् किम्? इति तेन अर्जुनेन पृष्टः फल्गुनं बोधयामासेत्यन्वयः ।। ३९-४० ।।

**वरदराजीया–** पुरीं द्वारकामेत्य, तेन फल्गुनेन किमेतन्मार्गे दृष्टम्? इति पृष्टो रमापतिः कृष्णः फल्गुनं बोधयामास ज्ञापयामास ।।३९।।

**जनार्दनीया–** ततः दन्तवक्रवधानन्तरं रमापतिः कृष्णः पुरीमेत्य, दृष्टमेतत् किम्? इति तेन पार्थेन पृष्टः सन् फल्गुनं बोधयामास ।।३९।।

**चट्टि–** ततो दन्तवक्रवधानन्तरमेव रमापतिः श्रीकृष्णः पुरीमेत्य, दृष्टमेतत् किम्? इति तेन पार्थेन पृष्टस्सन् फल्गुनं बोधयामास ।। ३९ ।।

**अयं द्वीपः सागरश्च लक्षयोजनविस्तृतौ ।**
**तदन्ये तु क्रमेणैव द्विगुणेनोत्तरोत्तराः ।।४०।।**

**वेदाङ्गतीर्थीया–** अयं द्वीपः जम्बूद्वीपः । अयं सागरश्च ।। ४० ।।

**सत्याभिनवीया–** तत्रैव 'तदन्ये तु क्रमेणैव..' इत्यस्ति । तस्यार्थः- तदन्ये उत्तरोत्तराः क्रमेण द्विगुणेन परिमाणेन युक्ता इति । अनेन द्विगुणेत्येतत् अनन्वितमिति दूषणं परास्तम् । परिमाणेन युक्ता इत्याध्याहृतेनान्वयस्योक्तत्वात् ।। ४०।।

**मधुसूदनीया– ।। अयं द्वीप इति ।।** अयं द्वीपः जम्बूद्वीपः सागरः लवणसागरश्च लक्षयोजनविस्तृतौ (१,००,०००)। अयं भावः। मण्डलाकारजम्बूद्वीपमध्ये षोडशसहस्रयोजनविस्तारेण मेरुरस्ति (१६,०००)। मेरोः परितो नवसहस्रयोजनविस्तारं (९,०००) चतुरस्रं इलावृतं वर्षम्। मेरोर्दक्षिणभागे ततो द्विसहस्रयोजनविशालो (२,०००) रेखारूपेण लक्षयोजनतः पूर्वपश्चिमसमुद्रावधिः निषधाख्यमर्यादागिरिः। ततो नवसहस्रयोजनविस्तारवत् (९,०००) रेखारूपेण लक्षयोजनतः (१,००,०००) पूर्वपश्चिमसमुद्रावधिः हरिवर्षम्। ततो द्विसहस्रयोजनविस्तारो (२,०००) रेखारूपेण नवतिसहस्रयोजनतः (९०,०००) पूर्वपश्चिमसमुद्रावधिः हेमकूटगिरिः। ततो नवसहस्रयोजनविस्तारं (९,०००) रेखारूपेण नवतिसहस्रयोजनतः (९०,०००) पूर्वपश्चिमसमुद्रावधिः किम्पुरुषवर्षम्। ततो द्विसहस्रयोजनविस्तारो (२,०००) रेखारूपेण अशीतिसहस्रयोजनतः (८०,०००) पूर्वपश्चिमसमुद्रावधिः हिमवत्पर्वतः। ततो नवसहस्रयोजनविस्तारवत् (९,०००) रेखारूपेण अशीतिसहस्रयोजनतः (८०,०००) पूर्वपश्चिमसमुद्रावधिः भरतवर्षम्। एवं मेरोरुत्तरभागे रमणकहिरण्मयकुरुसञ्ज्ञकवर्षाणि नवसहस्रयोजनविशालानि (९,०००) क्रमेण रेखारूपेण लक्षनवत्यशीतिसहस्रयोजनतः (१,००,०००-९०,०००-८०,०००) पूर्वपश्चिमसमुद्रावधिकानि सन्ति। तथा द्विसहस्रयोजनविशालाः (२,०००) क्रमेण रेखारूपेण लक्षनवत्यशीतिसहस्रयोजनतः (१,००,०००-९०,०००-८०,०००) पूर्वपश्चिमसमुद्रावधयो नीलश्वेतशृङ्गाचलाः सन्ति। मेरोः पूर्वभागे रेखारूपेण इलावृताऽनन्तरं द्विसहस्रयोजनविशालो (२,०००) चतुस्त्रिंशत्सहस्रयोजनतो (३४,०००) रेखारूपेण नीलनिषधायतो गन्धमादनः। ततो एकत्रिंशत्सहस्रयोजनविशालः (३१,०००) भद्राश्वाख्यं वर्षमस्ति। मेरोः पश्चिमभागे इलावृतानन्तरं द्विसहस्रयोजनविशालो (२,०००) रेखारूपेण नीलनिषधायतो माल्यवद्गिरिः। ततः एकत्रिंशत्सहस्रयोजनविशालं (३१,०००) केतुमालाख्यं वर्षमस्ति। मेरोर्दक्षिणभागमारभ्य सागरपर्यन्तं चतुर्णामिलावृतादिखण्डानां षट्त्रिंशत्सहस्रयोजनानि (३६,०००) त्रयाणां मर्यादागिरीणां षट्सहस्रयोजनानि च (६,०००) मेर्वधिष्ठितषोडशसहस्रयोजनमध्ये (१६,०००) अष्टसहस्रयोजनग्रहणात् (८,०००) अष्टसहस्रयोजनानि च (८,०००) इति पञ्चाशत्सहस्रं (५०,०००) योजनानि सिद्ध्यन्ति। एवं मेरोरुत्तरप्रदेशेऽपि द्रष्टव्यम्।

मेरोः पूर्वभागमारभ्य सागरपर्यन्तं मेर्वधिष्ठितषोडशसहस्रयोजनमध्ये (१६,०००) अष्टसहस्रयोजनग्रहणात् (८,०००) अष्टसहस्रयोजनानि (८,०००) इलावृतस्य नवसहस्रयोजनानि (९,०००) गन्धमादनस्य द्विसहस्रयोजनानि च (२,०००) भद्राश्वखण्डस्य एकत्रिंशत्सहस्रयोजनानि च (३१,०००) इति मिलित्वा पञ्चाशत्सहस्रयोजनानि (५०,०००) सिद्ध्यन्ति। एवं पश्चिमभागेऽपि द्रष्टव्यम्। एवं मिलित्वा लक्षयोजनविस्तारो जम्बूद्वीप इति।

तथाचोक्तम्–'यस्मिन्नववर्षाणि नवसहस्रयोजनायामानि अष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति। एषां मध्ये इलावृतं नाम आभ्यन्तरवर्षं यस्य नाभ्यां अवस्थितः सौवर्णः कुलगिरिराजो मेरुः

द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रं तावतान्तर्भूम्यां प्रविष्टः । उत्तरोत्तरेणेलावृतात् नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां [१]वर्षाणां मर्यादागिरयः प्रागायताः उभयतः क्षारोदावधयो द्विसहस्रपृथवः एकैकशः पूर्वस्मात्पूर्वस्मादुत्तरोत्तरात् दशांशेन दैर्घ्ये एव ह्रसन्ति । (जम्बूद्वीपस्य विस्तारः शतसाहस्रसम्मितदैर्घ्ये एव ह्रसन्ति) । एवं दक्षिणेनेलावृतात् निषधो हेमकूटो हिमाचल इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधाः हरिवर्षकिम्पुरुषभारतानां यथासङ्ख्यं मर्यादागिरयः । तथैवेलावृतं अपरेण पूर्वेण च माल्यवद्गन्धमादनौ आनीलनिषधायतौ द्विसहस्रवृद्धौ केतुमालभद्राश्वयोः सीमानं विदधाते ।' (५.१६.६-१०) इत्यादि भागवते ।

'जम्बूद्वीपस्समस्तानामेतेषां मध्यसंस्थितः । तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः ।
चतुराशीतिसाहस्रो योजनैरस्य चोच्छ्रयः । प्रविष्टः षोडशाधस्तात् द्वात्रिंशन्मूर्ध्नि विस्तृतः ।।
मूले षोडशसाहस्रो विस्तारस्तस्य भूभृतः । भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः ।।
हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ।।
लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथा परे । सहस्रद्वितयोच्छ्रायाः तावद्विस्तारिणश्च ते ।।
भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् । हरिवर्षं तथैवान्यं मेरोर्दक्षिणतो द्विज ।।
रम्यकं चोत्तरं वर्षं तस्यैवान्ते हिरण्मयम् । उत्तराः कुरवश्चैव यथा वै भारतं तथा ।।
नवसाहस्रमेकैकमेतेषां द्विजसत्तम । इलावृतं च तन्मध्ये [२]तन्मध्ये मेरुरुच्छ्रितः ।।
मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् । इलावृतं महाभाग चत्वारश्चात्र पर्वताः ।।
विष्कम्भारचिता मेरोर्योजनायुतमुच्छ्रिताः । पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ।।
विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः । (विष्णुपुराणे-२.२.७-१८)
आनीलनिषधायामौ माल्यवद्गन्धमादनौ ।
तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः।।' (२.३७) इत्यादि विष्णुपुराणे च ।

लक्षप्रमाणेत्यादेरर्थस्तु- द्वौ नीलनिषधौ पर्वतौ प्राक्पश्चिमतो दैर्घ्यौ लक्षप्रमाणौ । एतदुक्तम् वाराहे- 'द्वीपस्य मण्डलीभावाद् ह्रासवृद्धी प्रकीर्त्यते' (७५.२८) इति । तथा वै भारतमिति द्वीपमण्डलप्रान्तवर्तित्वात् कुरुवर्षं धनुराकारमित्यर्थः । एतेषां भारतादीनां मध्ये एकैकवर्षं विस्तरतः नवसहस्रयोजनप्रमाणं इलावृतं तथैव च नवसहस्रयोजनविस्तारसाम्येऽपि इलावृते विशेषमाह- **तन्मध्य इति** ।। तदाह वायुपुराणे- 'धनुःसंस्थे च विज्ञेये द्वे वर्षे दक्षिणोत्तरे । [३]दीर्घाणि तत्र चत्वारि चतुरस्रमिलावृतम् ।।' (पूर्वार्धे-३४.३१) इति । विष्कम्भाः मेरोश्चतुर्दिशं दार्ढ्यार्थं अवष्टम्भपर्वता इति ।। **तदन्ये इति** ।। 'जम्बूप्लक्षाह्वयौ द्वीपौ

---

१. 'त्रयाणां' इति प्र.पाठः ।
२. 'सौवर्णो मेरुरुच्छ्रितः' इति प्र. पाठः ।
३. 'दीर्घाणि तत्र चत्वारि मध्यमन्तादिलावृतम्' इति प्र.पाठः ।

शाल्मलिश्चापरो द्विज । कुशक्रौञ्चौ तथा शाकः पुष्करश्चैव सप्तमः ।। एते द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः । लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ।।' इति विष्णुपुराणोक्ताः(२.२.५-६)सागराः अन्यद्वीपाः क्रमेण द्विगुणेनोत्तरोत्तराः ।। ४० ।।

**वरदराजीया–** ज्ञापनप्रकारमेव दर्शयति– **अयं द्वीप इत्यादिना** ।। अयं सन्निहितो जम्बूद्वीपः तदावरणभूतो लवणरससमुद्रश्चोभौ लक्षयोजनविस्तृतौ । द्वीपो लक्षयोजनविस्तृतः (१,००,०००) तद्वत् तदावरणभूतो सागरोऽपि लक्षयोजनायाम (१,००,०००) इत्यर्थः । तदन्ये प्लक्षादिद्वीपाः तदावरणभूता इक्षुरसादिसागराश्च क्रमेण द्विगुणेन उत्तराः द्विगुणेन उत्तरोत्तराः पूर्वस्मात् पूर्वस्मादुत्तरा विस्तृता इत्यर्थः । प्लक्षद्वीपो लक्षद्वययोजनविस्तृतः (२,००,०००) तद्वत्तदावरणभूतो इक्षुरससागरोऽपि लक्षद्वययोजनायामः (२,००,०००) इत्यर्थः । एवं शाल्मलीद्वीपोऽपि लक्षचतुष्टययोजनविस्तृतः (४,००,०००) तद्वत् तदावरणभूतः सुरोदःसमुद्रोऽपि लक्षचतुष्टययोजनविस्तृतः (४,००,०००) इत्यादिक्रमेण द्विगुणपरिमाण-विस्तृता इत्यर्थः ।। ४० ।।

**भावविवृतिः–** 'अयं द्वीपस्सागरश्च लक्षयोजनविस्तृतौ' इति चशब्दो लवणसमुद्रस्य विस्तृति-समगाम्भीर्यत्वसूचकः । 'सप्तानां तु समुद्राणां गाम्भीर्यं विस्तृतेः समम्' इत्युक्तेः ।। ४० ।।

**जनार्दनीया–** अयं द्वीपः जम्बूद्वीपः सागरश्च लवणसमुद्रः एतौ लक्षयोजनविस्तृतौ विशालौ । तदन्ये ताभ्यां जम्बूद्वीपलवणसागराभ्यां अन्ये प्लक्षादयः षट्द्वीपाः इक्षुसुरासमुद्रादिषट्समुद्राः क्रमेणैव द्विगुणेन उत्तरोत्तराः प्लक्षात् शाल्मलः, इक्षुसमुद्रात् सुरासमुद्रः, अनेन प्रकारेण उत्तरा विस्तीर्णा इत्यर्थः ।।४०।।

**ताम्रपर्णीया–** तदन्ये द्वीपाः प्लक्षकुशक्रौञ्चशाकशाल्मलपुष्करा द्विगुणोत्तरोत्तराः । तदन्ये सागराः इक्षुसुरासर्पिर्दधिपयःशुद्धोदाः द्विगुणोत्तरोत्तराः । तथा च द्वीपपरिमाणं सप्तविंशल्लक्षाधिककोटियोजनम् (१,२७,००,०००) । सागरपरिमाणमपि तावदिति भावः । बाह्यतः सप्तसमुद्रबाह्यतो विद्यमानं हैमं स्थलं चतुःषष्टिलक्षयोजनपरिमितान्त्यसमुद्रापेक्षयाधिकार्धस्थलयुक्तम् (६४,००,०००) । षण्णवति-लक्षयोजनपरिमितस्वर्णभूमिरिति भावः (९६,००,०००) । न च 'यावन्मानसोत्तरमेर्वोरन्तरा तावती भूमिः काश्चन्यादर्शतलोपमा' इति भागवतविरोध (५.२०.३४) इति वाच्यम् । तत्रान्तरशब्देन तदन्तस्थ-द्वीपमात्रस्य विवक्षितत्वात् ।। ४० ।।

**चट्टि–** किमिति बोधयामासेत्यत आह– **अयमिति** ।। अयं द्वीपः जम्बूद्वीपः सागरः लवणसागरश्च लक्षयोजनविस्तृतौ । अयं भावः । मण्डलाकारजम्बूद्वीपमध्ये षोडशसहस्रयोजनविस्तारेण मेरुरस्ति । मेरोः परितो नवसहस्रयोजनविस्तारं चतुरस्रं इलावृतं वर्षम् । रेखारूपेण लक्षयोजनतः पूर्वपश्चिमसमुद्रावधिः निषधाख्यमर्यादागिरिः । ततो नवसहस्रयोजनविस्तारवत् रेखारूपेण लक्षयोजनतः पूर्वपश्चिमसमुद्रावधिः हरिवर्षाख्यं वर्षम् । ततो द्विसहस्रयोजनविस्तारो रेखारूपेण नवतिसहस्रयोजनतः पूर्वपश्चिमसमुद्रावधिः हेमकूटमर्यादागिरिः । ततो रेखारूपेण नवतिसहस्रयोजनतः पूर्वपश्चिमसमुद्रावधिः किम्पुरुषवर्षम् । ततो

द्विसहस्रयोजनविस्तारो रेखारूपेण अशीतिसहस्रयोजनतः पूर्वपश्चिमसमुद्रावधिः हिमवत्पर्वतः । ततो नवसहस्रयोजनविस्तारवत् रेखारूपेण अशीतिसहस्रयोजनतः पूर्वपश्चिमसमुद्रावधिः भरतवर्षम् । एवं मेरोरुत्तरभागे रमणकहिरण्मयकुरुसञ्ज्ञकवर्षाणि नवसहस्रयोजनविशालानि क्रमेण रेखारूपेण लक्ष-नवत्यशीतिसहस्रयोजनतः पूर्वपश्चिमसमुद्रावधिकानि सन्ति । तथा द्विसहस्रयोजनविशालाः क्रमेण रेखारूपेण लक्षनवत्यशीतिसहस्रयोजनतः पूर्वपश्चिमसमुद्रावधयो नीलश्वेतशृङ्गाचलाः सन्ति । मेरोः पूर्वभागे रेखारूपेण इलावृताऽनन्तरं द्विसहस्रयोजनविशालो चतुस्त्रिंशत्सहस्रयोजनतो रेखारूपेण नीलनिषधायतो गन्धमादनः । ततो एकत्रिंशत्सहस्रयोजनविशालः भद्राश्वाख्यं वर्षमस्ति । मेरोः पश्चिमभागे इलावृतानन्तरं द्विसहस्रयोजनविशालो रेखारूपेण नीलनिषधायतो माल्यवद्गिरिः । ततः एकत्रिंशत्सहस्रयोजनविशालं केतुमालाख्यं वर्षमस्ति । मेरोर्दक्षिणभागमारभ्य सागरपर्यन्तं चतुर्णाम् इलावृतादिखण्डानां त्रिंशत्सहस्रयोजनानि त्रयाणां मर्यादागिरीणां षट्सहस्रयोजनानि च मेर्वधिष्ठित-षोडशसहस्रयोजनमध्ये अष्टसहस्रयोजनग्रहणात् अष्टसहस्रयोजनानि च इति पञ्चाशत्सहस्रं योजनानि सिद्ध्यन्ति । एवं मेरोरुत्तरप्रदेशेऽपि द्रष्टव्यम् । मेरोः पूर्वभागमारभ्य सागरपर्यन्तं मेर्वधिष्ठित-षोडशसहस्रयोजनमध्ये अष्टसहस्रयोजनग्रहणात् अष्टसहस्रयोजनानि इलावृतस्य नवसहस्रयोजनानि गन्धमादनस्य द्विसहस्रयोजनानि च भद्राश्वखण्डस्य एकत्रिंशत्सहस्रयोजनानि च इति मिलित्वा पञ्चाशत्सहस्रयोजनानि सिद्ध्यन्ति । एवं पश्चिमभागेऽपि द्रष्टव्यम् । एवं मिलित्वा लक्षयोजनविस्तारो जम्बूद्वीप इति । तथाचोक्तम्– 'यस्मिन् नववर्षाणि नवसहस्रयोजनायामानि अष्टभिर्मर्यादागिरिभिः सुविभक्तानि भवन्ति । एषां मध्ये इलावृतं नाम आभ्यन्तरवर्षं यस्य नाभ्यां अवस्थितः सौवर्णः कुलगिरिराजो मेरुः द्वीपायामसमुन्नाहः कर्णिकाभूतः कुवलयकमलस्य मूर्धनि द्वात्रिंशत्सहस्रयोजनविततो मूले षोडशसहस्रं तावताऽन्तर्भूम्यां प्रविष्टः । उत्तरोत्तरणेलावृतात् नीलः श्वेतः शृङ्गवानिति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्यादागिरयः प्रागायताः उभयतः क्षारोदावधयो द्विसहस्रपृथवः एकैकशः पूर्वस्मात्पूर्वस्मादुत्तरोत्तरात् दशांशेन दैर्घ्ये एव ह्रसन्ति । (जम्बूद्वीपस्य विस्तारः शतसाहस्रसम्मितदैर्घ्ये एव ह्रसन्ति) । एवं दक्षिणेनेलावृतात् निषधो हेमकूटो हिमाचल इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधाः हरिवर्षकिम्पुरुषभारतानां यथासङ्ख्यम् । तथैवेलावृतं अपरेण पूर्वेण च माल्यवद्गन्धमादनौ आनीलनिषधायतौ द्विसहस्रवृद्धौ केतुमालभद्राश्वयोः सीमानं विदधाते ।' इत्यादि भागवते । 'जम्बूद्वीपस्समस्तानां एतेषां मध्यसंस्थितः । तस्यापि मेरुर्मैत्रेय मध्ये कनकपर्वतः । चतुराशीतिसाहस्रो योजनैरस्य चोच्छ्रयः । प्रविष्टः षोडशाधस्तात् द्वात्रिंशन्मूर्ध्नि विस्तृतः ।। मूले षोडशसाहस्रो विस्तारस्तस्य सर्वशः । भूपद्मस्यास्य शैलोऽसौ कर्णिकाकारसंस्थितः ।। हिमवान् हेमकूटश्च निषधश्चास्य दक्षिणे । नीलः श्वेतश्च शृङ्गी च उत्तरे वर्षपर्वताः ।। लक्षप्रमाणौ द्वौ मध्यौ दशहीनास्तथा परे । सहस्रद्वितयोच्छ्रायाः तावद्विस्तारिणश्च ते ।। भारतं प्रथमं वर्षं ततः किम्पुरुषं स्मृतम् । हरिवर्षं तथैवान्यं मेरोर्दक्षिणतो द्विज ।। रम्यकं चोत्तरं वर्षं तस्यैवान्ते हिरण्मयम् । उत्तराः कुरवश्चैव यथा वै

भारतं तथा ।। नवसाहस्रमेकैकमेतेषां द्विजसत्तम । इलावृतं च तन्मध्ये तन्मध्ये मेरुरुच्छ्रितः ।। मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम् । इलावृतं महाभाग चत्वारश्चात्र पर्वताः ।। विष्कम्भारचिता मेरोर्योजनायुतमुच्छ्रिताः । पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः ।। विपुलः पश्चिमे पार्श्वे सुपार्श्वश्चोत्तरे स्थितः । आनीलनिषधायामौ माल्यवद्गन्धमादनौ । तयोर्मध्यगतो मेरुः कर्णिकाकारसंस्थितः।।' इत्यादि विष्णुपुराणे च । 'जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज । कुशक्रौञ्चौ तथा शाकः पुष्करश्चैव सप्तमः। एते द्वीपाः समुद्रैस्तु सप्तसप्तभिरावृताः । लवणेक्षुसुरासर्पिदधिदुग्धजलैः समम् ।।' इति विष्णुपुराणोक्ताः सागराः अन्यद्वीपाः क्रमेण द्विगुणेनोत्तरोत्तराः ।। ४० ।।

**अन्त्याध्यर्धस्थलं हैमं बाह्यतो [१]वाज्रलेपिकम् ।**
**एतत् सर्वं लोकनाम ह्येतस्माद् द्विगुणं तमः ।**
**अन्धं यत्र पतन्त्युग्रा मिथ्याज्ञानपरायणाः ।।४१।।**

**वेदाङ्गतीर्थीया–** अन्त्याध्यर्धस्थलम् । अन्त्यात् समुद्रात् परत अध्यर्धस्थलम् । अर्धादपि पुनरधिकयुक्तं स्थलं हैमम् । बाह्यतः ततोऽर्वाक् स्थलं वज्रलेपसम्बन्धि । एतत्सर्वं तमसोऽर्वाक् अयं द्वीप इत्याद्युक्तं सकलं लोकनाम लोकसञ्ज्ञकं हि प्रसिद्धम्, पुराणादाविति शेषः । एतस्मात् उक्तद्वीपसमुदायात्, अन्धं तमः द्विगुणम् ।।४१।।

**वादिराजतीर्थीया–** 'अन्त्याध्यर्धस्थलं हैमम्' इत्यत्र वर्तुलतया स्थितान्त्यसमुद्रस्य भागद्वये मिलित्वा यत्परिमाणं अष्टाविंशोत्तरं शतलक्षयोजनात्मकम् । ततोऽर्धं चतुःषष्ठिलक्षयोजनानि । तानि च अधि यत्किञ्चिदधिकसंख्यया अष्टाविंशत्सहस्राख्यसहितद्विलक्षोत्तरचत्वारिंशल्लक्षपरिमितया सहितमधिकमध्यर्धं स्थलमित्यर्थः । बाह्यतो वज्रलेपिकं वज्रलेपस्थलसहितम् । हैमं सुवर्णमयम् । तत्र सुवर्णभूमिस्तु अर्धपदोक्तचतुःषष्ठिलक्षयोजनपरिमिता उर्वरिता । अष्टाविंशत्सहस्राख्यांशेन सहितद्विलक्षोत्तरचत्वारिंशल्लक्षपरिमितं वज्रलेपस्थलमिति विवेकः । तावत्तदर्धं च इत्यर्थकथने भूगोलस्य पञ्चाशत्कोटितोऽप्याधिक्यं स्यात् । तच्च 'आण्डकोशाद्बहिरयं[२] पञ्चाशत्कोटिविस्तृतः' इति (३.१२.३९) भागवतोक्तिविरुद्धम् । तस्मात् शब्दस्य कामदुघत्वेन अर्थस्य च व्यत्यासायोगात् उक्तैव योजना।।४१-२।।

**मधुसूदनीया–** ।। **अन्त्याध्यर्धस्थलमिति** ।। अन्त्यस्य चतुःषष्ठिलक्षयोजनप्रमाणविशालस्य शुद्धोदकस्य सागरस्य यः अधिकः द्वात्रिंशल्लक्षयोजनप्रमाणविशालत्वलक्षणः । स च ततोऽप्यधिकं चतुःषष्ठिलक्षयोजनप्रमाणपरिणाहश्च तावत्प्रमाणविस्तीर्णस्थलं षण्णवतिलक्षयोजनविस्तीर्णं हैमस्थल-

---

१. 'वज्रलेपिकम्' इति वादिराजतीर्थानां पाठः तथा वरदराजीयपाठः । 'वज्रलेपकम्' इति जनार्दनीयं तथा भावविवृतिकाराणां पाठः ।

२. 'अण्डकोशं बहिरयं' इति प्र.पाठः ।

मित्यर्थः। तथाचोक्तम्- 'लक्षषण्णवतिर्हैमयोजनानां ततः क्षितिः। दशयोजनलक्षं त्वधोर्ध्वयोरुभयोरपि ।। नानावर्णैर्महारत्नैः खचिता भूमिरूर्जिता ।।' इति वाराहे ।। **एतत्सर्वमिति** ।। एतत्सर्वं जम्बूद्वीपादिकमारभ्य लोकालोकपर्यन्तस्थलं लोकनाम सूर्यप्रकाशवत्वादिति भावः । जम्बूद्वीपादिमारभ्य लोकालोकपर्यन्तं पञ्चाशल्लक्षोत्तरकोटित्रयं तमः तद्विगुणं लोकाद् द्विगुणं सप्तकोटियोजनविस्तीर्णमिति यावत् । घनोदकं तद्विगुणं तमोद्विगुणं चतुर्दशकोटियोजनविस्तीर्णमिति यावत् ।। ४१-४२ ।।

**वरदराजीया–** एवं शुभोदकसमुद्रान्तप्रदेशपरिमाणमुक्त्वा तत्परतः लोकालोकपर्वतादर्वाक्प्रदेशपरिमाणमाह– **अन्त्येति** ।। अन्त्यस्य समुद्रस्य अध्यर्धं अर्धाधिकतत्परिमाणात्मकं स्थलम् । तच्च हैमं हेममयम् । हैमस्थलं षण्णवतिलक्षयोजनविस्तृतमिति यावत् । वाह्यतो वाह्यप्रदेशे वज्रलेपिकं वज्राख्यरत्नघटितं हैमस्थलमित्यर्थः । एतत्सर्वं जम्बूद्वीपादिकं हैमस्थलान्तं पूर्वमुक्तं सर्वं सार्धकोटित्रययोजनपरिमाणं लोकनाम लोकशब्दवाच्यम् । एतस्मात् लोकशब्दवाच्याद् द्विगुणं द्विगुणपरिमाणयुक्तं सप्तकोटियोजनपरिमाणं अन्धन्तमः तिष्ठतीत्यर्थः । यत्रान्धे तमसि मिथ्याज्ञानपरायणाः ब्रह्मैक्यादिज्ञानवन्तो अत एव चोग्राः असुराः पतन्ति तत् अन्धन्तम इत्यर्थः । अन्धयतीत्यन्धम् ।।४१।।

**भावविवृतिः–** ।। **वाह्यतो वज्रलेपकमिति** ।। वाह्यतः सुवर्णभूमेरुभयपार्श्वतः वज्रलिप्तप्रदेशोऽस्ति । वज्रलिप्तोभयपार्श्वमध्ये शुद्धसुवर्णभूमिरित्यर्थः । एतत्सर्वं लोकनाम ह्येतस्माद्विगुणं तम इति जम्ब्वादिद्वीपसप्तकं सुवर्णभूमिरित्येतत् पूर्वोक्तं त्रिविधप्रदेशं लोकालोकोपत्यकाम् ।। **हीति** ।। सर्वमपि लोकनाम लोकनामकं सूर्यप्रकाशस्य तावत्परिमितत्वात् । तथाच मेरोरुभयपार्श्वतः गणने सप्तकोटियोजनं भवति । इदं परिमाणं तु युगपुरुषमानविवक्षया इति सूचनाय हिशब्दः । त्रेतायुगादिपुरुषमानेन अधिकपरिमाणकथनात् । तदेतदुक्तं वृहद्भाष्ये– 'सप्तकोटिश्च लक्षाणां चतुर्दश च नित्यशः । अष्टाविंशत्सहस्रञ्च सप्तांशशतपञ्चकम् ।। सौरो रथस्त्वहोरात्रात् परियादिदिवि स्थितः । तत्त्रिभागाधिकं चक्रं मानसोत्तरगं चरेत् ।। नृणां कार्तयुगानां तु योजना मानतो भवेत् । यावत्सूर्यरथो याति दिवारात्रेण पार्श्वयोः ।। सूर्यस्य तावदेव स्यात् प्रकाशं सर्वतस्तथा ।।' (५.३.भुज्युब्राह्मणम्) इति ।

भावबोधे च- एतत्परिमाणं केषां मानेन इत्यत आह– **नृणामिति** ।। तुशब्दोऽवधारणे । कृतयुगपुरुषमानेनैवेत्यर्थः । सप्तांशशतपञ्चकं शतपञ्चकस्य सप्तमांशमिति । तथाच अस्य वाक्यस्यायमर्थः । सप्तमांशमित्येतत् आवर्तनीयमिति सूचनाय चशब्दः । कोटिसप्तकं चतुर्दशलक्षाणां सप्तमांशं अष्टाविंशत्सहस्रमित्येतत् द्वितीया षष्ठ्यर्थे । चतुर्दशलक्षाणां सप्तमांशं शतपञ्चकं शतपञ्चकस्य सप्तमांशमित्यन्वयः । एवं सति कोटिसप्तकं लक्षद्वयं चतुस्सहस्रं सार्धैकसप्ततिसङ्ख्याको भवति । मेरुं प्रदक्षिणीकुर्वतः सूर्यरथस्य सञ्चारप्रदेशः सूर्यप्रकाशवत्प्रदेशश्च तावत्सङ्ख्याको भवति । तथात्वे एतत्सर्वं लोकनामेति सप्तकोटिपरिमितत्वं कथमिति चेत्? सत्यम् । मेरुमध्यभागमारभ्य लोकालोकोपत्यकाभूपर्यन्तं भूमिस्पृष्टतया गणने सार्धत्रिकोटियोजनमुभयपार्श्वतः सप्तकोटियोजनं भवतीति निर्णय-

वाक्याभिप्रायः । वृहद्सङ्ख्याभिप्रायस्तु भूम्यस्पृष्टतया उपरिभाग एव परितो वलयाकारेणावस्थित-लोकगिरेरुभयाधिकभूमिपर्यन्तं गणने सति उक्तसङ्ख्या भवतीति । तावत्सङ्ख्यापर्यन्तं सूर्यप्रकाशस्य सत्वात् । लोकालोकपर्वतस्याधोभागे पञ्चाशत्सहस्रसहितपञ्चाशल्लक्षविस्तृतत्वे ऊर्ध्वभागे तावद्विस्तृतेर-भावात् । एवं सूर्यरथसञ्चरणप्रदेशस्य सूर्यालोकप्रदेशस्य च सङ्ख्यामुक्त्वा मानसोत्तरगिरौ भ्रमतः कालचक्रस्य सङ्ख्यामाह– **तत्त्रिभागाधिकमिति** ।। सूर्यरथसञ्चारप्रदेशो यावत्सङ्ख्याकः तत्तृतीय-भागाधिकसञ्चारवन्मानसोत्तरगतं चक्रमित्यर्थः । एवं सति कोटिनवकं षड्विंशल्लक्षाणि पञ्चसहस्रं सार्धाष्टाविंशत्युत्तरचतुःशतसङ्ख्याकं भवति ।

ननु भागवते सूर्यरथसञ्चारप्रदेशस्य कोट्यष्टकं षोडशलक्षकं एकोनविंशतिसहस्रं द्विशतयोजन-परिमितमित्युक्तम् । किञ्च मानसोत्तरगिरौ चक्रपरिभ्रमणप्रदेशस्य कोटिनवकं एकपञ्चाशल्लक्षयोजन-परिमितमित्युक्तेः कथमत्र अल्पपरिमितमित्युक्तिस्तदपेक्षया इत्यत आह– **नृणामिति** ।। अत्रोक्तसङ्ख्या कृतयुगपुरुषाङ्गुलपरिमाणविवक्षया, भागवतोक्तसङ्ख्या तु कलियुगपुरुषाङ्गुलपरिमाणविवक्षया उक्तिरिति ज्ञेयमित्यर्थः ।

'एतस्माद्विगुणं तमः' इत्यत्र एतस्मान्मेरुमध्यमारभ्य वज्रलिप्तप्रदेशपर्यन्तं पञ्चाशत्सहस्रहस्रोनसार्ध-कोटियोजनं भवति । ततो द्विगुणपरिमाणं लक्षोनसप्तकोटियोजनमित्यर्थः ।।४१।।

**अनन्तभट्टीया–** बाह्यतः सप्तसमुद्रात् बाह्यतः ।। ४१-४२ ।।

**जनार्दनीया–** अन्त्यात् शुद्धोदकाख्यसागरात् परतः अध्यर्धस्थलं अध्यर्धं अर्धेन अधिकं पूर्वोक्तचतुःषष्ठिलक्षयोजनानां (६४,००,०००) अर्धेन द्वात्रिंशल्लक्षयोजनपरिमाणेन (३२,००,०००) अधिकं चतुःषष्ठिलक्षयोजनपरिमाणं स्थलं हैमं सुवर्णमयम् । षण्णवतिलक्षयोजनविस्तीर्णं (९६,००,०००) हैमस्थलमित्यर्थः । बाह्यतः वहिर्भागे वज्रलेपकं वज्राख्यरत्नसम्वन्धिहैमस्थलम् । बाह्यतः रत्नप्रचुरमित्यर्थः । चतुःपञ्चाशल्लक्षाधिककोटिद्वययोजनसङ्ख्याकाः (२,५४,००,०००) सर्वेऽपि द्वीपसमुद्राः, षण्णवतिलक्षयोजनविस्तीर्णहैमस्थलम् (९६,००,०००) । एवं सर्वं मिलित्वा सार्धकोटि-त्रयपरिमाणमुक्तम् (३,५०,००,०००) । मेरोः जम्बुद्वीपमध्यस्थत्वात् । 'पञ्चविंशत्कोटयो मेरुपर्वतात्' इति (श्लो-४४) वक्ष्यमाणत्वात् । एतत्सर्वं तमसोऽर्वाक् 'अयं द्वीपः' इत्यायुक्तं लोकनाम लोकसञ्ज्ञकम् । सर्वं हि प्रसिद्धम्, पुराणादाविति शेषः । एतस्माल्लोकशब्दवाच्यात् । द्विगुणं अन्धतमः । लक्षोनसप्त-कोटियोजनपरिमाणं (६,९९,००,०००) विस्तीर्णं अन्धःतमः । यत्र अन्धेतमसि ।।४१।।

**ताम्रपर्णीया–** ननु तथात्वेऽपि पुनर्विरोधः द्वीपमात्रविवक्षायामपि सपञ्चाशत्सहस्रचतुर्नवति-लक्षयोजनत्वप्राप्तेरित्यत आह– **वाह्यत इति** ।। वाह्यतः वहिः प्रदेशे वज्रलेपयुक्तं हैमं षण्णवतिलक्षयोजनं वज्रलिप्तभागाविवक्षया भागवतप्रवृत्तिरतो न विरोध इत्याशयः ।। **एतत्सर्वमिति** ।। सार्धकोटि-त्रयात्मकमेतत्सर्वमित्यर्थः । द्विगुणं सप्तकोटियोजनम् ।। ४१ ।।

**भावचन्द्रिका– ।। एतदिति ।।** एतदुक्तं सङ्ख्या सर्वं जम्बुद्वीपादिकं लोकनाम एतत्समा पञ्चाशल्लक्षाधिककोटित्रयरूपसङ्ख्यानात् द्विगुणं द्विगुणसङ्ख्योपेतम् । सप्तकोटिसङ्ख्यानं तम इत्यर्थः । एतस्माल्लोकादित्यर्थोऽर्घोनलक्षपरिमाणजम्बूद्वीपं तर्हि तस्य लोकनामकत्वमुक्तं मेरुं मध्यीकृत्य चतुर्दिक्षु पञ्चविंशत्कोट्यो वक्तव्याः । एवञ्च लोकादित्युक्तेर्मेर्वपरभागस्थपञ्चाशत्सहस्रपरित्यागेन पञ्चाशल्लक्षोत्तर-कोटित्रयसङ्ख्या...* तावद्दूरत्वप्राप्त्या द्विगुणत्वोक्तौ तु लक्षोनसप्तकोटित्वं तमसः प्राप्तम् । द्विलक्षोनत्वं घनोदकस्य । एवं त्रिलक्षोने पञ्चविंशत्कोट्य इति स्यात् । वादीन्द्रतीर्थस्वामिभिस्तु– भूगोलसंग्रहाध्याये त्रिलक्षोनत्वमेवोक्तम् । भूमेरुपरिष्टाच्छतयोजनपरिमितप्रदेशे मेघमण्डलं शतयोजनोच्छ्रिते भूमण्डले मेघमण्डलमध्ये हंसश्येनसुपर्णादयश्चरन्ति ।मेघमण्डलादुपरिष्टदशसहस्रयोजनपर्यन्तं विद्याधरसिद्धचारणानां सदनानि तिष्ठन्ति । भूम्यपेक्षया नवतिसहस्रयोजनपरिमितप्रदेशे राहुमण्डलं, लक्षयोजनमुच्छ्रितमिति लक्षयोजने सूर्यमण्डलं, द्विलक्षयोजने चन्द्रमण्डलं, त्रिलक्षयोजने अश्विन्यादिनक्षत्रमण्डलं, पञ्चलक्षयोजने शुक्रमण्डलं, सप्तलक्षयोजने बुधमण्डलं, नवलक्षयोजने अङ्गारकमण्डलं, एकादशलक्षयोजने वृहस्पतिमण्डलं, त्रयोदशलक्षयोजने शनैश्चरमण्डलं, चतुर्विंशतिलक्षयोजने सप्तर्षिमण्डलं, सप्तविंशल्लक्षयोजने ध्रुवमण्डलं, तदुपरिष्टात् त्रयोदशलक्षयोजनपरिमितप्रदेशः स्वर्गवाह्यप्रदेशः । तस्यैव 'उपस्वर्ग' इति नाम साङ्कल्पिकस्वर्ग इति नाम च । तदुपरिष्टाद्विमानश्रेणीसङ्कुलः अर्धकोटिपरिमितप्रदेशः स्वर्ग इत्युच्यते । एवञ्च लक्षयोजन-परिमितप्रदेशो भुवर्लोकः । षड्विंशद्योजनपरिमितं ज्योतिर्मण्डलं, त्रयोदशलक्षपरिमितः उपस्वर्गः, पञ्चाशल्लक्षपरिमितः प्रधानस्वर्गः । एतत्सर्वं मिलित्वा कोटियोजनपरिमितम् । अन्तरिक्षप्रमाणे भागवतोक्तज्योतिर्मण्डलप्रमाणे च विरोधो नास्ति । अन्तरिक्षादुपरितनश्च स्वर्गलोकः । 'मोक्षः साङ्कल्पिकस्वर्गः'(१७.४) इत्यादि गीतातात्पर्यवचनात् उपस्वर्गश्च प्रमितः । वक्ष्यमाणरीत्या महदादि-परिमाणं वचनार्थत्वेनावगम्यते । अन्तरिक्षं लक्षयोजनपरिमितम् । एवं सति अवशिष्टा लक्षोनकोटि-वक्तव्या । तत्र ज्योतिर्मण्डलपरिमाणं भागवते सिद्धम् । 'विमानावलिसङ्कुलः' इति विशेषणमङ्गीक्रियते । तथा सम्प्रदायात् । तथाच पञ्चाशल्लक्षपरिमितप्रधानस्वर्ग अवशिष्टत्रयोदशलक्षपरिमाणस्य स्वरूपतः प्रमिते उपस्वर्गे विनियोगः कल्प्यते । एवञ्च वक्ष्यमाणरीत्या पञ्चविंशत्कोटयो लभ्यन्ते । अन्यथा तदुपपादनमशक्यमेव भाति । महर्लोकः सार्धकोटियोजनपरिमितः द्विकोटियोजनपरिमितो जनोलोकः, सार्धयोजनाधिकद्विकोटिपरिमितः तपोलोकः, तदेतदुक्तम्– 'महर्जनस्तपश्चैव क्रमादध्यर्धयोजनाः' (ता. नि-२१.५२) इत्युक्तपरिमाणवत्त्वे सति अर्धाधिकत्वं अस्य वाक्यस्यार्थः ।सङ्ख्यापूर्तिः लयोक्तप्रकारपरिमाणं कोटिर्गृह्यते । आदावध्यर्धेत्यत्र विशेषस्यानुक्तेः महदादिषु त्रिषु कोट्यर्धाधिकत्वमुच्यत इति । अत एव अर्धकोटीति कोटिसङ्ख्यायाश्च ग्रहणं द्विकोट्यौ तु जनोलोक इति विष्णुपुराणवचनं च । षट्कोटियोजनपरिमितः सत्यलोकः । तदेतदुक्तम्– 'यावन्त एते मिलिताः तत्प्रमाणमितीरितः । सत्याख्यः' (ता.नि-२१.५३) इति । एते महदादयः । द्वादशकोटियोजनपरिमितो विष्णुलोकः । तदेतदुक्तं 'ततस्तु द्विगुणः प्रोक्तो विष्णुलोकः सनातनः' (ता.नि-२१.५४) इति । तत..* मेरुमारभ्य

ब्रह्माण्डकटाहपर्यन्तं ऊर्ध्वं पञ्चविंशत्कोटयो भवन्ति । अन्तरिक्षादिलोका..* वचनविशेषाज्ज्ञेयः । तदुक्तं पञ्चरात्रे– 'अन्तरिक्षस्ततो लोको भूतप्रेताधिपो मतः । ततः स्वर्गो महालोको देवेन्द्राद्यैरधिष्ठितः ।। विराड्क्षः स्थितावेतौ ग्रीवायाश्च महामते । अनिरुद्धस्ततः प्राणः तत्र लोकाधिपौ मतौ ।। ललाटगस्तपो लोको मुख्यवायुः प्रभुः स्मृतः । छन्दोमयस्तथा वीन्द्रो रुद्रस्स निटिलोद्भवः ।। अधिपाश्च इमे ज्ञेया..' इति । अन्यलोकाधिपा भागवतादौ स्फुटा इति नोक्ताः ।।४१-५४ ।।

**भारतश्री–** अन्त्याद्ध्यर्धस्थलं हैमं अन्त्यात् शुद्धोदकात् अधि अधिकं अर्धं यस्य तच्च षण्णवति (लक्ष)योजनमित्यर्थः ।। **एतत् सर्वं लोकनाम इति** ।। पञ्चाशत्सहस्रोनसार्धकोटित्रयं लोकनामेत्यर्थः । हिशब्दात् लोकालोकाचलस्य यः एतत् सम्बद्धो भागः पञ्चाशत्सहस्राख्यः तस्यापि लोकनामत्वं ज्ञायते । 'तुहिशब्दौ विशेषार्थौ हेत्वर्थौ चोऽवधारणे' इति वागुरिः । आहत्य अर्धकोटित्रयं जातम् । एतस्माद्द्विगुणं सप्तकोटिसङ्ख्याकम् । तद्द्विगुणं चतुर्दशकोटिसङ्ख्याकम् । तुरेव पञ्चाशल्लक्षविस्तृतप्रदेश एव लोकालोक इत्युच्यते । उर्वरित...* ।। ४१ ।।

**चट्टि–** ।। **अन्त्याद्ध्यर्धस्थलमिति** ।। अन्त्यस्य चतुःषष्ठिलक्षयोजनप्रमाणविशालस्य शुद्धोदकस्य सागरस्य यः अधिकः द्वात्रिंशल्लक्षयोजनप्रमाणविशालत्वलक्षणः । स च ततोऽप्यधिकं चतुःषष्ठिलक्षयोजन-प्रमाणपरिणाहश्च तावत्प्रमाणविस्तीर्णस्थलं षण्णवतिलक्षयोजनविस्तीर्णं हैमस्थलमित्यर्थः । बाह्यतः वहिर्भागे वाज्रलेपिकं वज्राख्यरत्नसम्बन्धिहैमस्थलं बाह्यतः रत्नप्रचुरमित्यर्थः । तथाचोक्तम्- 'लक्षषण्णवतिर्हैमयोजनानां ततः क्षितिः । दशयोजनलक्षं त्वधोर्ध्वयोरुभयोरपि ।। नानावर्णैर्महारत्नैः खचिता भूमिरूर्जिता ।।' इति वाराहे ।। **एतत्सर्वमिति** ।। एतत्सर्वं जम्बूद्वीपादिकमारभ्य लोकालोकपर्यन्तस्थलं लोकनाम सूर्यप्रकाशवत्वादिति भावः । जम्बूद्वीपादिमारभ्य लोकालोकपर्यन्तं पञ्चाशल्लक्षोत्तरकोटित्रयं अन्धंतमः एतस्मात् लोकशब्दवाच्यप्रदेशात् द्विगुणं, सप्तकोटियोजनविस्तीर्णमिति यावत् । यत्र अन्धन्तमसि मिथ्याज्ञानपरायणाः उग्राः पुरुषाः पतन्ति ।। ४१ ।।

**घनोदकं तद्द्विगुणं तदन्ते धाम मामकम् ।**
**यत्तद् दृष्टं त्वया पार्थ तत्र मुक्तैरजादिभिः ।**
**सेव्यमानः स्थितो नित्यं सर्वैः परमपूरुषः ।।४२।।**

**वेदाङ्गतीर्थीया–** तद्द्विगुणम् तस्मात् तमसो द्विगुणम् । हे पार्थ! तदन्ते घनोदकात् परतः त्वया यद् दृष्टं तत् मामकं धाम ।। ४२ ।।

**वरदराजीया–** तस्मात् द्विगुणं तद्द्विगुणम् । तस्मादन्धन्तमसः द्विगुणं चतुर्दशकोटियोजनात्मकं घनोदकमस्ति, तदन्ते घनोदकस्यान्ते अन्तिमभागे मामकं मम विद्यमानं धाम गृहं अनन्तासनाख्यं तिष्ठतीत्यर्थः । हे पार्थ! त्वया यत्तत्प्रसिद्धं धाम दृष्टं तत्र धाम्नि अजादिभिः सर्वैर्मुक्तैः सेव्यमानः परमपुरुषो नारायणः स्थितः ।। ४२ ।।

**भावविवृतिः**– घनोदकं तद्विगुणं द्विलक्षोनचतुर्दशकोटियोजनपरिमाणं तदन्ते धाम मामकम् । तयोः घनोदकाण्डखर्परयोर्मध्ये मामकं मदीयं धामानन्तासनाख्यं स्थानं त्रिलक्षयोजनविशालमित्यर्थः ।। ४२।।

**जनार्दनीया**– तद्विगुणं तमसो द्विगुणम् । द्विलक्षन्यूनचतुर्दशकोटियोजनविस्तीर्णं (१३,९८,००,०००) घनोदकम् । हे पार्थ! तदन्ते घनोदकस्यान्ते, अन्त्यप्रदेशे इत्यर्थः । त्वया यद् दृष्टं तत् मामकं मदीयं धाम अनन्तासनाख्यं स्थानम् । तत्र धाम्नि सेव्यमानः परमपुरुषः स्थितः, अहमिति शेषः ।।४२।।

**ताम्रपर्णीया**– तदन्ते घनोदकान्ते, उत्तरब्रह्माण्डखर्परसन्निहितप्रदेश इति यावत् । 'परतः तदन्ते' इत्येके ।। ४२ ।।

**चट्टि**– घनोदकं तद्विगुणं च तमसो द्विगुणम्, चतुर्दशकोटियोजनविस्तीर्णमिति यावत् । हे पार्थ! तदन्ते घनोदकस्यान्ते, अन्त्यप्रदेशे इत्यर्थः । त्वया यत् दृष्टं तन्मामकं मदीयं धाम अनन्तासनाख्यं स्थानं तत्र धाम्नि मुक्तैरजादिभिः सर्वैर्नित्यं सेव्यमानः सन् परमपुरुषः, अहमिति शेषः । स्थितः ।।४२।।

**लोकालोकप्रदेशस्तु पञ्चाशल्लक्षविस्तृतः ।**
**सपञ्चाशत्सहस्रश्च तस्यापि गणनं तथा ।।४३।।**

**व्यासतीर्थीया**– तमसोऽर्वाक् अमुक्तप्रदेशप्रमाणमाह– **लोकेति** ।। ननु लोकालोको भारतादौ पञ्चाशल्लक्षयोजनो वर्ण्यते । कथं सपञ्चाशत्सहस्रश्चातिरिच्यते इत्यत आह– **तस्यापीति** ।। अस्यार्थः । तस्यापि पञ्चाशत्सहस्रस्यापि तथा गणनं पञ्चाशल्लक्षयोजनत्वेन गणनं घटते । षडर्धयोजनाधिकस्यापि दशयोजनस्य ग्रामादेः दशयोजनमितः स इति लोकव्यवहारदर्शनात् ।। ४३-४५ ।।

**वेदाङ्गतीर्थीया**– लोकालोकपर्वतप्रमाणमाह– **लोकालोकेति** ।। पञ्चाशल्लक्षविस्तृतः सपञ्चाशत्सहस्रश्च। अपि तथापि पञ्चाशल्लक्षादुपरि पञ्चाशत्सहस्रयोजनपरिमितत्वेऽपि तस्य पर्वतस्य गणनं परिमाणगणनं तथा पञ्चाशल्लक्षपरिमितः, इति भागवतादौ श्रूयते इति शेषः । भागवतादौ अधिकपरिमाणस्य न्यून-परिमाणतया गणनं कथं घटत इति चेत् दशयोजनाद्यधिकस्यापि ग्रामादेः दशयोजनादिव्यवहारस्य लोके दर्शनाद् युज्यते । अस्य तात्पर्यग्रन्थत्वाद् यथावस्तु कथनमेव कृतमिति भावः ।। ४३ ।।

**वादिराजतीर्थीया**– 'लोकालोकप्रदेशस्तु' इत्यत्र वज्रलेपान्धतमसोर्मध्यवर्ती लोकालोकपर्वतः । अर्धे सूर्यालोकसञ्चारोऽस्ति । पुनरर्धे तमःसमीपस्थत्वात् तम एवेति भावेन 'लोकालोक' इत्युक्तम्।।४३-५१।।

**मधुसूदनीया**– लोकालोकप्रदेशः पञ्चाशल्लक्षविस्तृतः सपञ्चाशत्सहस्रश्च । ननु लोकालोकप्रदेशस्य ग्रन्थान्तरे पञ्चाशल्लक्षमात्रविस्तृतत्वोक्तेः कथं सपञ्चाशत्सहस्रपञ्चाशल्लक्षयोजनविस्तृतत्वोक्तिः इत्यत आह– **तस्यापीति** ।। तस्यापि पञ्चाशल्लक्षयोजनस्यापि गणनं युज्यते । लक्षयोजनविस्तृत-जम्बूद्वीपमध्यस्थितमेरोः दक्षिणादिभागमारभ्य लोकालोकप्रदेशपर्यन्तं गणने प्रागुक्तसार्धकोटित्रये

पञ्चाशत्सहस्रयोजनानि न्यूनानि भवन्ति । लक्षयोजनविस्तृतसमग्रजम्बूद्वीपमादाय समग्रगणने तु पञ्चाशत्सहस्रयोजनानि पूर्णानि च भवन्ति । तथाच लोकालोकस्य स्वभावतः सपञ्चाशत्सहस्र-पञ्चाशल्लक्षयोजनविस्तृतत्वेन लक्षयोजनविस्तृतजम्बूद्वीपार्धमादाय लोकालोकस्य पञ्चाशत्सहस्रयोजनानि लोकालोकादर्वाक् मेलयित्वा गणनं कर्तव्यम् । अन्यथागणने पञ्चाशत्सहस्रयोजनानां आधिक्यापत्तेरिति ग्रन्थान्तरोक्तिरित्यतो न विरोधः । तथाचोक्तम्– 'आलोकालोकयोर्मध्ये लोकालोको महाचलः । लक्षद्वयं योजनानां उच्चता तस्य कीर्तिता ।। उपत्यका तु तस्यास्ति योजनायुतपञ्चकम् । योजनानां तु लक्षाणां पञ्चाशत्तस्य विस्तृतिः ।।' इति वाराहे । तस्य लोकालोकाचलस्य योजनायुतपञ्चकम्, पञ्चाशत्सहस्र-मित्यर्थः । उपत्यका आसन्नभूमिरित्यर्थः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः (२. शैलवर्ग) । शिष्टं स्पष्टमिति वाराहवचनार्थः ।। ४३ ।।

**वरदराजीया–** हेमस्थलात् परतः तमसो अर्वागनुक्तस्यापि परिमाणमाह– **लोकालोकेति** ।। पञ्चाशत्सहस्राधिकपञ्चाशल्लक्षयोजनविस्तृतो लोकालोकपर्वतप्रदेशोऽस्तीत्यर्थः । ननु ग्रन्थान्तरे लोका-लोकपर्वतः पञ्चाशल्लक्षयोजनो [1]वर्ण्यते, तत्कथं पञ्चाशत्सहस्राधिकपञ्चाशल्लक्षणोक्तिरित्यत आह– **तस्यापीति** ।। पञ्चाशत्सहस्राधिकपञ्चाशल्लक्षयोजनविस्तृतस्यापि तस्य तथागणनं पञ्चाशल्लक्षयोजनत्वे गणनं ग्रन्थान्तरे घटते । यथा किञ्चिदधिकदशयोजनपरिमितस्यापि ग्रामादेः दशयोजनपरिमितोऽयं ग्राम इति लोकव्यवहारदर्शनादिति भावः । एवञ्च लक्षयोजनं जम्बूद्वीपार्धप्रदेशमारभ्यान्धन्तमःपर्यन्तं पञ्चाशत्सहस्रयोजनोनसार्धकोटित्रयं योजनानां भवतीत्युक्तं भवति । लोकालोकपर्वतपरिमाणसाहित्ये सति योजनानां कोटिचतुष्टयं पूर्णम्, तमो घनोदकपरिमाणे एकविंशतिकोटियोजनात्मके मिलिते सति मेरुपर्वतात् पञ्चविंशतिकोटयो भवति ।।४३।।

**अनन्तभट्टीया–** ।। **तस्यापीति** ।। तस्यापि लोकालोकप्रदेशपरिगणनस्यापि शास्त्रे यथा तथा गणनं हेमस्थलानन्तरं गणनं कार्यम् । नतु घनोदकानन्तरं कार्यम् । तस्यापि पञ्चाशत्कोटियोजनसिद्ध्यर्थं द्वीपादिपरिगणनवत् गणितमिति यावत् । व्यवधानेनोक्तिस्तु एतस्मादिति सप्तद्वीपसप्तसमुद्रहैमपरिमाण-परामर्शसौकर्याभिप्रायेणेति भावः । टीकासु तु तस्यापि सपञ्चाशत्सहस्रपञ्चाशल्लक्षत्वे कथं भागवतादौ पञ्चाशल्लक्षविस्तृतत्वोक्तिरित्यत आह– **तस्यापीति** ।। यथा किञ्चिदधिकशतयोजनयामस्य शतयोजनत्व-व्यवहारः । तथा तस्यापि पञ्चाशल्लक्षत्वेन गणनमित्युक्तम् । तथाच मेरुपर्वताद्वीपाः कोटियोजनाः । सपञ्चाशत्सहस्रषड्विंशल्लक्षयोजनाश्च समुद्राः । कोटियोजनाश्च सप्तविंशल्लक्षयोजनाश्च । हैमं षण्णवति-लक्षयोजनम् । लोकालोकपरिमाणं स्पष्टः । एवञ्च द्वीपादयो मिलित्वा चतुष्कोटियोजनाः । तमः सप्त-कोटियोजनम् । घनोदकं चतुर्दशकोटियोजनम् । एवं चतुर्दिक्षु पञ्चविंशतिकोटियोजनाः द्रष्टव्याः ।। ४३-४४ ।।

---

१. गण्यते इति क्वचित् ।

**भावविवृतिः–** 'लोकालोकप्रदेशस्तु पञ्चाशल्लक्षविस्तृतः। स पञ्चाशत्सहस्रस्य तस्यापि गणनं तथा ॥' इति पुरोभागे सूर्यालोकवत्त्वात् अपरभागे तदभावात् लोकालोकनाम तत्पर्वतवर्तिप्रदेशस्तु पञ्चाशल्लक्षविस्तृतः। उपत्यकाभूमिं विना औन्नत्यविवक्षया। उपत्यकाभूमिस्तु पञ्चाशत्सहस्रसङ्ख्याका। 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यभिधानात्। तथाच उपत्यकासहितलोकपर्वतवर्तिप्रदेशस्य पञ्चशत्सहस्राधिकपञ्चाशल्लक्षपरिमितमित्यर्थः। ननु ग्रन्थान्तरेऽस्य पञ्चाशल्लक्षपरिमाणेति मात्रोक्तेः अत्र पञ्चाशत्सहस्रत्वोक्तिः कथमित्यत आह– **तस्यापीति** ॥ ग्रन्थान्तरे पञ्चाशल्लक्षत्वेनोक्तेरपि गणनं तथा सपञ्चाशत्सहस्रत्वेनैव कार्यमित्यर्थः। ग्रन्थान्तरे उपत्यकां विना अस्यौन्नत्यविवक्षया उक्तत्वादिति भावः। यद्वा तस्यापि लोकालोकपर्वतस्यापि तथा गणनं सुवर्णभूमिपरिगणनानन्तरमवस्थितिरिति परिगणनं कार्यमित्यर्थः। अस्य व्यवधानेनोक्तिस्तु तम आदे द्विगुणत्वोक्तिसौकर्यायेति भावः॥४३-४४॥

**जनार्दनीया–** हैमस्थलतमसोर्मध्यस्थलपरिमाणं पूर्वमनुक्तत्वात् तदाह– **लोकालोकेति** ॥ लोकालोकप्रदेशस्तु सपञ्चाशत्सहस्रः पञ्चाशत्सहस्रयोजनैः सहितः। पञ्चाशल्लक्षविस्तृतः पञ्चाशल्लक्षयोजनैः विस्तीर्णः विशालः (५०,५०,०००)। अपि तथापि; पञ्चाशल्लक्षादुपरि पञ्चाशत्सहस्रयोजनपरिमितत्वेऽपि। तस्य लोकालोकपर्वतस्य गणनं परिगणनं तथा पञ्चाशल्लक्षपरिमितः इति, भागवतादौ श्रूयत इति शेषः। भागवतादौ अधिकपरिमाणस्य ऊनपरिमाणतया गणनं कथं घटत इति चेत्। दशयोजनात् किञ्चिदधिकस्यापि ग्रामादेर्दशयोजनादिव्यवहारस्य लोके दर्शनात् पञ्चाशल्लक्षविस्तृत इति घटते। अस्य तु तात्पर्यग्रन्थत्वात् यथावस्तु कथनमेव कृतमिति भावः ॥४३॥

**ताम्रपर्णीया–** लोकालोकप्रदेशः लोकालोकपर्वताक्रान्तो भूभागः। नन्वेवं सति 'योजनानां पञ्चविंशत्कोटयो मेरुपर्वतात्' (श्लो-४४) इति नियमभङ्गः। पंचाशत्सहस्राधिक्यप्राप्तेरित्यत आह– **तस्यापीति** ॥ तस्य वृद्धिसन्निहितस्य मेरुभागान्तरस्यापि तथा पञ्चविंशत्कोटियोजनत्वेन गणनं कार्यम्। तद्घटनं च जम्बूद्वीपस्य समग्रस्य 'अयं द्वीपः' इत्यादिना गणनेन स्यात्। भागान्तरे पञ्चाशत्सहस्रन्यूनतापत्तेः। अतो जम्बूद्वीपस्य अर्धभागमारभ्य गणने एकस्मिन् भागे आधिक्यं भागान्तरे न्यूनत्वं च न स्यादिति भावः। यद्वा तस्यापि लक्षयोजनत्वेनोक्तस्यापि जम्बूद्वीपस्य तथा पञ्चाशत्सहस्रत्वेन गणनं कार्यम्। 'एतस्माद् द्विगुणं तमः' इति परामर्शसौकर्याय। अयं द्वीपो लक्षयोजनविस्तृत इति जम्बूद्वीपसमग्रपरिमाणं प्रागुक्तमिति भावः ॥ ४३ ॥

**अतिविशद–** 'लोकालोकप्रदेशस्तु...गणनं तथा' इत्यस्मिन् श्लोके 'तस्यापि गणनं तथा' इत्यस्येवं अर्थमाहुः। ननु भवद्भिर्लोकालोकप्रदेशविस्तारः पञ्चाशत्सहस्राधिकः पञ्चाशल्लक्षपरिमितत्वेन गणनं कथं घटते। किञ्चिदधिकदशयोजनपरिमितस्यापि ग्रामस्य दशयोजनपरिमितोऽयं ग्राम इति लोकव्यवहार-दर्शनात् इति केचित्। केचित्तु– 'पञ्चाशत्सहस्राधिकस्यापि तथा पञ्चाशल्लक्षपरिमित उच्यते। पुराणादौ पञ्चाशल्लक्षपरिमित एव उच्यते। एवञ्च तद्विरोधः स्यादित्यतः तस्यापि पुराणादौ उक्तस्यापि तथा

पञ्चाशल्लक्षपरिमित एकपञ्चाशल्लक्षपरिमितत्वेन विस्तृतः लोकालोकप्रदेशः इत्युक्तः । तदुच्छ्रयस्तु कथम्भूत इत्यतः तस्यापि पुराणादौ उक्तस्यापि तथा पञ्चाशल्लक्षपरिमितैकपञ्चाशल्लक्षपरिमितत्वेन विस्तृतः लोकालोकप्रदेश इत्युक्तः । तदुच्छ्रयस्तु कथम्भूत इत्यतः तस्यापि उपरिगतपरिमाणस्यापि तथा गणनम्' इति वदन्ति । किमुक्तं भवति । यावद्विस्तृतः तावानूर्ध्वमपीति ।। ४३-७५ ।।

**चट्टि–** हेमस्थलतमसोः मध्यप्रदेशपरिमाणस्य पूर्वमनुक्तत्वात् तत्परिमाणमाह– **लोकालोकेति** ।। लोकालोकप्रदेशः पञ्चाशल्लक्षविस्तृतः सपञ्चाशत्सहस्रश्च । ननु लोकालोकप्रदेशस्य ग्रन्थान्तरे पञ्चाशल्लक्षमात्रविस्तृतत्वोक्तेः कथं सपञ्चाशत्सहस्रपञ्चाशल्लक्षयोजनविस्तृतत्वोक्तिः इत्यत आह– **तस्यापीति** ।। तस्यापि पञ्चाशल्लक्षयोजनस्यापि गणनं युज्यते । लक्षयोजनविस्तृतजम्बूद्वीपमध्यस्थितमेरोः दक्षिणादिभागमारभ्य लोकालोकप्रदेशपर्यन्तं गणने प्रागुक्तसार्धकोटित्रये पञ्चाशत्सहस्रयोजनानि न्यूनानि भवन्ति । लक्षयोजनविस्तृतसमग्रजम्बूद्वीपमादाय समग्रगणने तु पञ्चाशत्सहस्रयोजनानि पूर्णानि च भवन्ति । तथाच लोकालोकस्य स्वभावतः सपञ्चाशत्सहस्रपञ्चाशल्लक्षयोजनविस्तृतत्वेन लक्षयोजनविस्तृतजम्बूद्वीपार्धमादाय लोकालोकस्य पञ्चाशत्सहस्रयोजनानि लोकालोकादर्वाक् मेलयित्वा गणनं कर्तव्यम् । अन्यथागणने पञ्चाशत्सहस्रयोजनानामाधिक्यापत्तेरिति ग्रन्थान्तरोक्तिरित्यतो न विरोधः ।।४३।।

**गूढकर्तृक–** 'लोकालोकप्रदेशस्तु पञ्चाशल्लक्षविस्तृतः । सपञ्चाशत्सहस्रश्च तस्यापि गणनं तथा ।।' इत्यस्मिन् श्लोके 'तस्यापि गणनं तथा' इत्यस्य एवमर्थमाहुः । कथम्? ननु भवद्भिः लोकालोकप्रदेशविस्तारः पञ्चाशत्सहस्राधिकः पञ्चाशल्लक्षपरिमित उच्यते । पुराणादौ पञ्चाशल्लक्षयोजनपरिमित उच्यते । एवञ्च तद्विरोधः स्यादित्यर्थः । तस्यापि पुराणादावुक्तस्यापि तथा पञ्चाशल्लक्षपरिमित्वेन गणनं घटते । किञ्चिदधिकदशयोजनपरिमितस्यापि ग्रामस्य दशयोजनपरिमितोऽयं ग्राम इति लोकव्यवहारदर्शनादिति भावः । केचित्तु- 'पञ्चाशत्सहस्राधिकः पञ्चाशल्लक्षपरिमितत्वेन विस्तृतः लोकालोकप्रदेश इत्युक्तम् । तदुच्छ्रयस्तु कथम्भूत इत्यतः तस्यापि तथा गणनम्' इति वदन्ति । यावद्विस्तृतः तावानूर्ध्वमपीति ।। ४३-१७१ ।।

**योजनानां पञ्चविंशत्कोटयो मेरुपर्वतात् ।**
**चतसृष्वपि दिक्षूर्ध्वमधश्चाण्डं प्रकीर्तितम् ।।४४।।**

**मधुसूदनीया–** ।। **मेरुपर्वतादिति** ।। चतुर्षु दिक्ष्वधोभागमादाय गणने मेरुपर्वतादित्यस्य मेरुपर्वतमध्यादित्यर्थः । अन्यथा पञ्चविंशतिकोटौ अष्टसहस्रन्यूनतापत्तेः । मेरुपर्वतादितिसामान्योक्तेस्तु ऊर्ध्वभागमादाय गणने मेरुमादायेति द्योतनायेति वोध्यम् । तदुक्तम्- 'पञ्चायुतविहीनं तु सार्धकोटित्रयं त्विदम् । योजनानां मेरुमध्यात् गणना परिकीर्तिता ।।' इति वाराहे ।। **योजनानामिति** ।। जम्बूद्वीपं लक्षयोजनं, प्लक्षं द्विलक्षं, शाल्मलं चतुर्लक्षं, कुशमष्टलक्षं, क्रौञ्चं षोडशलक्षं, शाकं द्वात्रिंशल्लक्षं, पुष्करं

चतुष्षष्टिलक्षं, सर्वं मिलित्वा सप्तविंशतिलक्षोत्तरकोटिसङ्ख्याकं भवति । एवं समुद्रगणनं द्रष्टव्यम् । सुवर्णभूमिः षण्णवतिलक्षयोजनविस्तृता । सर्वं मिलित्वा सार्धकोटित्रयम् । ततस्तु द्विगुणं सप्तकोटियोजनं तमः । तद्विगुणं घनोदकं चतुर्दशकोटियोजनम् । लोकालोकस्सपञ्चाशत्सहस्रपञ्चाशल्लक्षयोजनः । एवं मिलित्वा मेरुपर्वतात् मेरुमारभ्य योजनानां पञ्चविंशत्कोटय इति चतसृष्वपि दिक्षूर्ध्वं अधश्चाण्डं प्रकीर्तितम् । समग्रजम्बूद्वीपमादाय गणने सति पञ्चाशत्सहस्रयोजनाधिक्येऽपि जम्बूद्वीपमध्यस्थ-मेरुमध्यमारभ्य गणने तु आधिक्यं नास्तीति सूचनाय 'मेरुपर्वतात्' इत्युक्तमिति बोध्यम् ।। ४४ ।।

**वरदराजीया–** एतदेवाह– **योजनानामिति** ।। मेरुपर्वतात् मेरुपर्वतमारभ्य समन्तादधः ऊर्ध्वं चाण्डं ब्रह्माण्डं पञ्चविंशत्कोटयस्तावत्परिमाणं प्रकीर्तितं भवतीत्यर्थः ।।४४।।

**जनार्दनीया–** जम्बूद्वीपस्य मध्य एव मेरुपर्वतस्तिष्ठति । मेरोः सकाशाच्चतुर्दिक्षु जम्बूद्वीपः पञ्चाशत्सहस्रयोजनविस्तीर्णः । अत एव मेरुपर्वतादन्धतमः पर्यन्तं लोकालोकपर्वतपरिमाणेन सह कोटिचतुष्टयं (४,००,००,००) भवति । लक्षन्यूनं कोटिसप्तकपरिमाणं तमः (६,९९,००,०००)। द्विलक्षन्यूनं चतुर्दशकोटिपरिमाणं (१३,९८,००,०००) घनोदकम् । त्रिलक्षपरिमाणं (३,००,०००) अनन्तासनम् । एवं मेरुपर्वतमारभ्य अण्डपर्यन्तं पञ्चविंशत्कोटयो भवन्ति । तदेवाह– **योजनानामिति** ।।४४।।

**ताम्रपर्णीया–** कुतो वा जम्बूद्वीपस्य पञ्चाशत्सहस्रत्वेन गणनं कार्यमित्यत आह– **योजनानामिति** ।। अन्यथा तत्र स्यादिति भावः । यद्वा लोकालोकप्रदेशस्यापि शास्त्रं यथा तथैव गणनं कार्यम् । हेमस्थलानन्तरं परिगणनं कार्यम् । नत्वस्मदुक्तिक्रमेण घनोदकानन्तरमित्यर्थः । व्यवधानेनोक्तिस्तु सप्तद्वीपादिपरिमाणपरामर्शसौकर्याभिप्रायेणेति भावः । टीकायां तु- 'ननु लोकालोको भारतादौ पञ्चाशल्लक्षयोजनो वर्ण्यते । कथं स पञ्चाशत्सहस्रश्चेत्युक्तिरित्यत आह– **तस्यापीति** ।। सपञ्चाशत्सहस्रस्यापि तथा पञ्चाशल्लक्षयोजनत्वेन गणनं घटते । अल्पत्वादविवक्षयेति भावः' इत्युक्तम् । अवग्रीरेत्यादौ पृथिव्यनुक्तिर्दशोत्तरत्वोक्तिसौकर्यार्थम् । अन्यथा 'अण्डात्तु द्विगुणा पृथ्वी' इति प्रमाणविरोधात् । मितैरप्यमितकार्योत्पाद ईश्वरशक्त्योपपद्यते । अत एव सुधायां समयचरणे गुणत्रयमितत्वे इदमेव प्रमाणत्वेनोदाहृत्य एतच्छङ्कापनुत्तये 'अस्माकं त्वीशशक्त्योपपद्यते ' (रचनाधिकरणे- पृ. ३२६७) इत्युक्तमिति ज्ञेयम् । ननु गुणत्रयस्य परस्परं दशगुणोत्तरत्वे 'तमसो रजस्तु द्विगुणं रजसः सत्वमेव च । परिमाणत एवं स्युस्त्रयः प्रकृतिजा गुणाः' (३.११.१४) इति भागवततात्पर्यविरोधः । न च गुणत्रयं मिलित्वा महत्तत्वाद्दशोत्तरतयाऽत्र विवक्षितमिति वाच्यम् । 'गिरिशगरुडौ महत्तत्वावरणेन तद्दशोत्तरेण तमोगुणेन परिमितदेशपर्यन्तमेव स्थितं विष्णुं पश्यतः' इति सन्यायरत्नावली विरोधादिति चेन्न । 'तमसो रज' इति वाक्यस्य कार्यानुप्रविष्टगुणत्रयभागपरत्वादस्यावरणपरत्वेन भिन्नविषयत्वात् । यद्यपि चतुर्विंशतितत्वान्यपि अण्डावरणानि । तदुक्तं सन्न्यायरत्नावल्याम्- 'तमो गुणात् परिमाणतो दशहीनेन

महत्तत्वेन महत्तत्वात् परिमाणतो दशहीनेनाहंकारतत्वेन ततः परिमाणतो हीनेन बुद्धितत्वेन बुद्धितत्वात् परिमाणतो हीनेन मनस्तत्वेनाकाशदिभिः क्रमेण हीनैः' इत्यादि । तथापि दशोत्तरैरित्युक्तिसौकर्यार्थं तदनुक्तिः ।। ४४-४५ ।।

**चट्टि–** ।। **योजनानामिति** ।। जम्बूद्वीपं लक्षयोजनं, प्लक्षं द्विलक्षं, शाल्मलं चतुर्लक्षं, कुशमष्टलक्षं, क्रौञ्चं षोडशलक्षं, शाकं द्वात्रिंशल्लक्षं, पुष्करं चतुष्षष्ठिलक्षं, सर्वं मिलित्वा सप्तविंशतिलक्षोत्तरकोटिसङ्ख्याकं भवति । एवं समुद्रगणनं द्रष्टव्यम् । सुवर्णभूमिः षण्णवतिलक्षयोजनविस्तृता । सर्वं मिलित्वा सार्धकोटित्रयम् । ततस्तु द्विगुणं सप्तकोटियोजनं तमः । तद्विगुणं घनोदकं चतुर्दशकोटियोजनम् । लोकालोकस्सपञ्चाशत्सहस्रपञ्चाशल्लक्षयोजनः । एवं मिलित्वा मेरुपर्वतात् मेरुमारभ्य योजनानां पञ्चविंशत्कोटय इति चतसृष्वपि दिक्षूर्ध्वं अधश्चाण्डं प्रकीर्तितम् । समग्रजम्बूद्वीपमादाय गणने सति पञ्चाशत्सहस्रयोजनाधिक्येऽपि जम्बूद्वीपमध्यस्थमेरुमध्यमारभ्य गणने तु आधिक्यं नास्तीति सूचनाय 'मेरुपर्वतात्' इत्युक्तमिति बोध्यम् ।।४४।।

**अवग्नीरनभोहङ्कन्महत्तत्वगुणत्रयैः ।**
**[1]क्रमाद् दशोत्तरैरेतदावृतं परतस्ततः ।।४५।।**

**मधुसूदनीया–** ।। **अवग्नीरेति** ।। पञ्चाशत्कोटिविस्तारब्रह्माण्डान्तार्गतभूम्यपेक्षया ब्रह्माण्डखर्परं द्विगुणम् । शतकोटियोजनदलं तद्दशगुणिता आपः एवमुत्तरत्रापि द्रष्टव्यम् । तथाचोक्तम्- 'सूक्ष्मत्वात् आवृणोत्यण्डं द्विगुणा तु दशोत्तरा । अवादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृता ।।' इति (१२.४०) तृतीयस्कन्धतात्पर्ये ।। **परतस्तत इति** ।। ततः गुणत्रयाऽनन्तरम्, विरजानदीति शेषः । ततः विरजाऽनन्तरं अहं व्याप्तः । तथाचोक्तमावरणप्रस्थाने- 'प्रधानपरमव्योम्नोरन्तरा विरजानदी । देवाङ्गस्वेदजनिता तोयैर्विस्तारिता शुभा ।।' (पाद्मे-उ.खं.२२७.५८-५९)। [2]"विरजायाः परं व्योम्नोरन्तरं केवलं स्मृतम् । तत्स्थानमुपभोक्तव्यमव्यक्तब्रह्मसेविनाम् ।।' इति पाद्मे (उ.खं.२२८.८)। विरजानद्यनन्तरं किं वर्तत इत्यतः सर्वव्यापकनारायणाख्यरूपेणाऽहं वर्तेत्याह– **परतस्तत इत्यादिना** ।। ४५।।

**वरदराजीया–** पृथिव्याः ब्रह्माण्डखर्पररूपत्वात् [3]परतो नवावरणमाह– **अवग्नीति** ।। अप्तेजोवाय्वाकाशाहङ्कारमहत्तत्त्वसत्त्वरजस्तमोगुणैः क्रमात् दशोत्तरैः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरं दशगुणैः दशगुणाधिकपरिमाणैरावृतमण्डमिति सम्बन्धः । ततः सावरणाद् ब्रह्माण्डात् परतो व्याप्तोऽहं तिष्ठामीत्यर्थः ।। ४५ ।।

---

१. 'क्रमाद् दशोत्तरैरेतदावृतं' इति जनार्दनीय-चट्टिपाठः ।
२. 'विरजा परमव्योम्नोरन्तरं केवलं स्मृतम्' इति उपलभ्यमानपाठः ।
३. 'परितः' इति क्वचित् ।

**भावविवृतिः—** 'अवग्रीरनभोऽहंकृत्..परतस्ततः' इति अण्डान्तःपरिमाणं पञ्चाशत्कोटियोजनम्, कटाहपरिमाणश्च तावदेव । तद्विगुणपरिमाणं आवरणभूमेः । 'अण्डात्तु द्विगुणा पृथ्वी' इत्युक्तेः । तद्दशोत्तरमापः, तद्दशोत्तरं तेजः, तद्दशोत्तरं वायुः, तद्दशोत्तरं नभः, तद्दशोत्तरं अहङ्कारतत्त्वम्, तद्दशोत्तरं महत्तत्वम्, तद्दशोत्तरं तमोगुणः, तद्दशोत्तरं रजोगुणः, तद्दशोत्तरं सत्वगुणः । एकैकं पूर्वपूर्वतत्वापेक्षया उत्तरोत्तरं दशगुणाधिकेनावृतमित्यर्थः । 'क्रमात्' इत्युक्त्या सर्वेषां दशोत्तरस्यैव वक्तव्यत्वात् । नच वाच्यं 'तमसो रजस्तु द्विगुणं रजसस्सत्वमेव च' (भा.ता.३.११.१४) इति तमसः महत्तत्वापेक्षया दशगुणितत्वात् तद्विगुणाधिकत्वं रजसः विंशतिगुणाधिकत्वमित्यर्थः । रजसस्तमोगुणापेक्षया यावत्परिमाणमुक्तं तद्विगुणपरिमाणं सत्वस्येति ।रजोगुणापेक्षया सत्वगुणस्य विंशतिगुणाधिकत्वमित्यर्थः । दशोत्तरत्वोक्तिस्तु- 'शते पञ्चाशत्' इति न्यायेन सम्भावनाभिप्रायेणेति तृतीयतात्पर्यप्रकाशिकायामुक्तम् । अत्र पृथिव्या अनुक्तिः अवादीनां दशोत्तरत्वोक्तिसौकर्यायेति ज्ञातव्यम् । नच वाच्यं पृथिव्या आवरणत्वं नास्तीति । 'मह्यादिभिश्चावरणैः अष्टभिर्बहिरावृतम्' इति (भागवते-२.१०.३३) 'रजस्तमस्सत्वगुणै रजसाहङ्कृतेन च । खानिलानलनीरेळापश्चकेन समावृतम् ।।' इति जयद्रथयामले चोक्तेः । अत्रायं विशेषो ज्ञातव्यः । अण्डकटाहपृथिव्यावरणयोर्मध्ये किञ्चित्परिमाणोपेतं अण्डसृष्ट्यर्थं हरिणा सृष्टं संसृष्टमुदकं आवरणतयास्तीति वक्तव्यम् । 'सुषाव सैवाण्डमधोक्षजस्य शुभ्रं हिरण्यात्मकमम्बुमध्ये' (ता.नि-२.२४) इत्युक्तेः । 'अप एव ससर्जादौ तासु वीर्यमवासृजत् । शयानस्त(त्र) भगवान् निर्ममेऽहं महत्तमम् ।।' इति च ।। 'संसृष्टमण्डं तद्गश्च' (तत्त्वसंख्याने-१०) इति तस्मिन् ब्रह्माण्डे गं गतं समस्तं जगत् संसृष्टम् । किञ्च तद्गतं तेन सह गं गतं विद्यमानमुदकं च संसृष्टमिति सूचनाय चशब्दः । 'वामपादाङ्गुष्ठनखनिर्भिन्नोर्ध्वाण्डकटाहविवरेणान्तःप्रविष्टा या बाह्यजलधारा' (भागवते-५.१७.१) इति अङ्गुष्ठनखाग्रेण कटाहनिर्भेदमात्रेण उदकप्रवेशोक्तेश्च संसृष्टोदकाद्बहिरावरणतया पृथिवी शतकोटियोजनं ततो गन्धं, ततो जलं, ततो रसः, तेजः, रूपं, वायुः, स्पर्शः, आकाशः, शब्दः, अहङ्कारतत्वम्, तस्मिन्नेवान्तर्भावः मनोबुद्धीन्द्रियाणां, ततो महत्तत्वं, तमोरजस्सत्वमिति क्रमात् आवरणानि ततो विरजानदी । 'प्रधानपरमव्योम्नोरन्तरा विरजानदी । देवाङ्गस्वेदजनिता तोयैर्विस्तारिता शुभा ।।' 'विरजायाः परं व्योम्नोरन्तरं केवलं स्मृतम् । तत्स्थानमुपभोक्तव्यं अव्यक्तब्रह्मसेविनाम् ।।' इति ।

ननु 'वैकुण्ठपरिखाभूता महालक्ष्मीःस्वरूपिणी' इत्यादि वैकुण्ठे मुक्तामुक्तस्थलविभाजिका विरजा तिष्ठति इत्युक्तेः कथमत्रावस्थितिरिति चेदुच्यते । ब्रह्माण्डसृष्ट्यनन्तरं महाप्रलयपर्यन्तं वैकुण्ठ एव स्थितत्वात् महाप्रलये प्रसक्ते तत्र गच्छतीति । यद्वा अंशेन आगत्य वैकुण्ठे स्थिता प्रलये तत्र गत्वा एकीभवतीति । परतस्ततः विरजायाः परतः अहं तिष्ठामीत्यर्थः ।। ४५ ।।

**अनन्तभट्टीया—** अवग्रीत्यादौ पृथिव्यनुक्तिः दशोत्तरैः इत्युक्तिसौकर्यार्थं इति द्रष्टव्यम् ।।४५-५०।।

**जनार्दनीया–** अण्डावरणमाह– **अबग्नीति** ।। अप् जलं, अग्निः, तेजः, ईरो वायुः, नभः आकाशः, अहंकृत् अहङ्कारतत्वं, महत्तत्वं, तमोरजःसत्वमिति गुणाः, एतैर्नवावरणैः क्रमात् दशोत्तरैः दशगुणपरिमाणाधिकैः एतद् ब्रह्माण्डं आवृतं आवरणत्वेन युक्तमित्यर्थः । ब्रह्माण्डान्तर्गतपरिमाणात् द्विगुणपरिमाणं अण्डखर्परम् । सैवावरणभूता भूरित्युच्यते । भूमेर्दशगुणा आपः । अद्भ्यो दशगुणं तेजः । इत्याद्यवगन्तव्यम् । तदुक्तं मात्स्ये- 'शतार्धकोटिविस्तारा पृथिवी कृत्स्नशः स्मृता । लोकविस्तारमात्रं तु पृथिव्यर्धं तु बाह्यतः ।। अण्डाद्बहिः समन्तात्तु उदकेनावृतं महत् । भूमेर्दशगुणाः ह्यापः समन्तात् प्लावयन् महीम् ।। अद्भ्यो दशगुणश्चाग्निः सर्वतो धारयत्यपः ।।' इत्यादि । यद्वा दशलक्षयोजनपरिमितं खर्परं भिन्नम् । तद्भिन्ना तदावरणभूता शतकोटिविस्तृता भूः । ततो दशगुणा आपः इत्यादि ज्ञेयम् । तदुक्तं वाराहे- 'दशलक्षं योजनानां कटाहघनता स्मृता' इति । तृतीयस्कन्धतात्पर्ये- पृथिवी आवरणत्वेनास्तीत्युक्तम् । अत्राकथने तु दशगुणत्वाभावात् । तथाहि- 'पृथिवीं विशेष इत्याहुः शब्दादीनां बहुत्वतः । सा सूक्ष्मत्वात् वृणोत्यण्डं द्विगुणात्तु दशोत्तरा ।। अवादयः प्रकृत्यन्ताः..।।' इति । तदेवोक्तं तत्वसङ्ख्याने- 'असंसृष्टं महानहम् । बुद्धिर्मनःखानि दश मात्रा भूतानि पञ्च च ।। संसृष्टमण्डं तद्वं च समस्तं परिकीर्तितम् ।। इति । प्राकृतायंशैरुपचयमात्रतद्राहित्येऽसंसृष्टसंसृष्टशब्दार्थत्वेनाभिमते तदर्थं विशेषाविशेषाभ्यां अधाराधेयभावं चाह मात्स्ये- 'महांस्ततो ह्यनन्तेनाव्यक्तेनैव तु धार्यते । एवं परस्परोत्पन्नाः धार्यन्ते च परस्परम् ।। आधाराधेयभावेन विकारास्ते विकारिणः । पृथ्व्यादयो विकारास्ते परिच्छिन्नाः परस्परम् ।।यत्प्रविष्टाश्च तेऽन्योन्यं तस्मात्ते स्थिरतां गताः ।आसँस्ते ह्यविशेषास्तु विशेषान्योन्यवेशनात् ।। पृथिव्यादयस्तु बाह्यन्तःपरिच्छिन्नास्तु तत्र ताः ।।'[1] (१२३.५२-५६) इति । अत एव खर्परपरिमाणमागमादावनेकधोक्तम् । ततः परतः सावरणब्रह्माण्डाद्बहिरित्यर्थः ।।४५।।

**भारतश्री–** ।। **अबग्नीरेति** ।। दशोत्तराणां....* निवीवोक्ता तस्याः ब्रह्माण्डापेक्षया द्विगुणत्वात् पृथिव्यपेक्षया दशोत्तरत्वात्.....* ।। ४५-५० ।।

**चट्टि–** अण्डावरणान्याह– **अबग्नीरेति** ।। पञ्चाशत्कोटिविस्तारब्रह्माण्डान्तार्गतभूम्यपेक्षया ब्रह्माण्डखर्परं द्विगुणम् । शतकोटियोजनदलं तद्दशगुणिता आपः । एवमुत्तरत्रापि द्रष्टव्यम् । तथाचोक्तम्- 'सूक्ष्मत्वात् आवृणोत्यण्डं द्विगुणा तु दशोत्तरा । अवादयः प्रकृत्यन्ता अष्टप्रकृतयः स्मृताः ।।' इति तृतीयस्कन्धतात्पर्ये । एतैः आवरणैरावृतम् । ततः आवरणपरतः गुणत्रयाऽनन्तरम्, विरजानदीति शेषः । ततः विरजाऽनन्तरं अहं व्याप्तः । तथाचोक्तं आवरणप्रस्थाने– 'प्रधानपरमव्योम्नोरन्तरा विरजानदी । देवाङ्गस्वेदजनिता तोये विद्राविता शुभा ।। विरजायाः परं व्योम्नोरन्तरं केवलं स्मृतम् । तत्स्थानमुपभोक्तव्यं अव्यक्तब्रह्मसेविनाम् ।।' इति पाद्मे ।

जनार्दनभट्टास्तु एवं व्याचक्षते । अण्डावरणमाह– **अबग्नीति** ।। अप् जलं, अग्निः तेजः, ईरो वायुः, नभः आकाशः, अहंकृत् अहङ्कारतत्वं, महत्तत्वं, तमोरजःसत्वमिति गुणाः, एतैर्नवावरणैः । क्रमात्

१. उपलभ्यमानपाठे किञ्चिद्व्यत्यासो दृश्यते ।

दशोत्तरैः दशगुणपरिमाणाधिकैः एतद् ब्रह्माण्डम् आवृतं आवरणत्वेन युक्तमित्यर्थः । ब्रह्माण्डान्तर्गत-परिमाणात् द्विगुणपरिमाणं अण्डखर्परं सौवर्णभूता भूरित्युच्यते । पञ्चाशत् कोट्यपेक्षया दशगुणिताः आपः इत्यादिज्ञातव्यम् । ततः परतः सावरणब्रह्माण्डाद्बहिरित्यर्थः ।। ४५ ।।

**व्याप्तोऽहं [१]सर्वगोऽनन्तोऽनन्तरूपो निरन्तरः ।**
**अनन्तशीर्षोऽनन्ताक्षोऽनन्तपादकरोरुकः ।**
**अनन्तगुणमाहात्म्यश्चिदानन्दशरीरकः ।।४६।।**

**व्यासतीर्थीया–** सर्वगत्वं न मूर्तद्रव्यसंयोगेनेत्युक्तम्– **व्याप्त इति** ।। एकरूपेण व्याप्तिमुक्त्वा वहुरूपेण व्याप्तिमाह– **अनन्तरूप इति** ।। रूपाणां वहुत्वेऽपि न परस्परं तेषां भेद इत्याह– **निरन्तर इति** ।। नच तेषां रूपाणां नाशश्चेत्याह– **अनन्त इति** ।। ४६ ।।

**वेदाङ्गतीर्थीया–** अनन्तः देशतः कालतश्च गुणतश्च नाशरहित इति भावः । अनन्तरूपः असङ्ख्यातरूपः। निरन्तरः अनन्तरूपत्वेऽपि परस्परं भेदरहितः । पुनश्च स्वरूपमाह– **अनन्तशीर्ष इत्यादिना** ।।४६।।

**मधुसूदनीया–** अनन्तः महागुणः । 'महद्गुणत्वाद्यमनन्तमाहुः' इति (१.१८.१९) भागवतोक्तेः । यद्वा परिच्छेदत्रयशून्यः । अनन्तरूपः अनन्तसौन्दर्यवान् । 'रूपशब्दो पशौ क्लेशे ग्रन्थावृत्तौ हितादिषु । सौन्दर्ये च स्वभावे च...।' इति यादवः । निरन्तरः स्वावताराभिन्नः । 'अभेदात् स्वावतारेषु निरन्तर उदाहृतः' इति (भा.ता-३.२६.१७) वचनात् । एतेन रूपान्तराणां सर्वत्रव्याप्तत्वे विभक्तवुद्ध्यवतारार्थं भगवदचिन्त्यैश्वर्यात् देशतः अव्याप्तत्वं चास्ति । ब्रह्माण्डवहिष्ठनारायणरूपस्य तु नास्तीत्युक्तं भवतीति वेदितव्यम् । तथाचोक्तम्-

'कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः । देशकोटिविहीनत्वं देशानन्त्यं तथैव च ।।
गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः । आनन्त्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ।।
तस्य सर्वस्वरूपेषु ह्यानन्त्यं तु त्रिलक्षणम् । तथाऽपि देशतस्तस्य परिच्छेदोऽपि विद्यते ।।
परिच्छेदस्तथा व्याप्तिरेकरूपेऽपि युज्यते । तस्याचिन्त्याद्भुतैश्वर्याद् व्यवहारार्थमेव च ।।
गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् । व्याप्तत्वं देशतोऽप्यस्ति सर्वभूतेषु यद्यपि ।।
न च भेदः क्वचित्तेषां अणुमात्रेऽपि विद्यते । अणुत्वं च महत्त्वञ्च यस्मादैश्वर्ययोगतः ।।
तस्माद्बुध्यवतारार्थमव्याप्तत्वं च युज्यते । यत्तस्य व्यापकं रूपं परं नारायणाऽभिधम् ।।
शून्यं ब्रह्मेति तत्प्राहुः द्वितीयं स्रष्टृ यत्ततः । परमः पुरुषो नाम मितं तद्देशतो विभोः ।।
तृतीयं वासुदेवाख्यं जगदावरकं मितम् । देशतो जगदाऽविष्टं तुरीयं विष्णुनामकम् ।।'

इति ब्रह्मतर्के तृतीयतात्पर्ये (१२.२) । उक्तं च द्वितीयस्कन्धतात्पर्ये(६.४१) 'यः शेते प्रलये विष्णुः शून्यनामा महाकृतिः । स तु नारायणो नाम नराणामयनत्वतः ।।' इति तन्त्रमालायाम् ।।४६-५०।।

---

१. 'सर्वतः' इति वरदराजीयकोशान्तरपाठः ।

**वरदराजीया–** व्याप्तिश्च परमाणूनामिव न मन्तव्येत्याह– **सर्वग इति** ।। अनन्तो देशतः कालतो गुणतश्च परिच्छेदरहितः । अनन्तानि रूपाणि यस्य स तथा । निरन्तरो देहभेदरहितः सन् सर्वगो व्याप्त इत्यर्थः । अनन्तानि पादादीनि यस्य स तथा । अनन्तगुणा एव माहात्म्यं यस्य स तथा । चिदानन्दात्मकशरीरवान् ।। ४६ ।।

**भावविवृतिः–** अहं तादृशगुणस्सन् तिष्ठमीत्याह– **अनन्त इति** ।। अनन्तो महागुणः । 'महागुणत्वाद्यमनन्तमाहुः' इति भागवते । अनन्तसौन्दर्यवान् । 'रूपं शब्दे च शौक्ल्ये च गन्धावृत्तौ हितादिषु । सौन्दर्ये च स्वभावे च..।।' इति यादवः । निरन्तरः स्वावताराभिन्नः । 'अभेदात् स्वावतारेषु निरन्तर उदाहृतः' इति वचनात् । यद्वा अनन्तः परिच्छेदत्रयशून्यः ।

> 'कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः । देशकोटिविहीनत्वं देशानन्त्यं तथैव च ।।
> गुणानामप्रमेयत्वं वस्त्वानन्त्यं विदो विदुः । आनन्त्यं त्रिविधं ज्ञेयं हरेर्नान्यस्य कस्यचित् ।।
> तस्य सर्वस्वरूपेषु ह्यानन्त्यं तु त्रिलक्षणम् । तथापि देशतस्तस्य परिच्छेदोऽपि विद्यते ।।
> परिच्छेदस्तथा व्याप्तिः एकरूपेऽपि विद्यते । तस्याचिन्त्याद्भुतैश्वर्यात् व्यवहारार्थमेव च ।।
> गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् । व्याप्तत्वं देशतोऽप्यस्ति सर्वरूपेषु यद्यपि ।।
> नच भेदः क्वचित्तेषां अणुमात्रेऽपि विद्यते । अणुत्वं च महत्त्वञ्च यस्मादैश्वर्ययोगतः ।।
> तस्माद्बुध्यवतारार्थमव्याप्तत्वञ्च भण्यते । यत्तस्य व्यापकं रूपं परं नारायणाभिधम् ।।
> शून्यं ब्रह्मेति तत्प्राहुः द्वितीयं स्रष्टृ यत्ततः । परमः पुरुषो नाम मितं तद्देशतो विभोः ।।
> तृतीयं वासुदेवाख्यं जगदावरकं मितम् । देशतो जगदाविष्टं तुरीयं विष्णुनामकम् ।।'
>
> इति तृतीयतात्पर्ये ।। ४६-१२२ ।।

**जनार्दनीया–** सर्वगः सर्वत्रान्तर्यामित्वेन विद्यमानः। अनन्तः कालतो गुणतश्च नाशरहितः । अनन्तरूपः निरन्तरं अनन्तरूपत्वेऽपि परस्पररूपभेदरहितः । पुनश्च पुरुषसूक्तप्रतिपाद्यरूपमाह– **अनन्तशीर्ष इत्यादिना** ।। अनन्तगुणाः माहात्म्यं यस्य स तथा । चिदानन्दौ शरीरं यस्य स तथा । स्वार्थे कप्रत्ययः । ईदृशोऽहं व्याप्तः । द्वीपादिचेतनात्मकं सर्वं व्याप्तः सन् तिष्ठामीत्यर्थः । 'यत्पर्वतादिकं दृष्टं तत्सर्वमहमेव' इति हरिवंशोक्तार्थस्य (विष्णुपर्वणि-११४.१३-१५,२०-२३) तात्पर्यं 'व्याप्तोऽहम्' इत्यादिना आहेति भावः ।।४६।।

**ताम्रपर्णीया–** ततस्सावरणाद् ब्रह्माण्डान्तरतोऽहं व्याप्तः व्याप्तिश्च नोपचारितेत्याह– **सर्वग इति** ।। सर्वत्र यावदव्याकृताकाशे निश्छिद्रतयैकरूपेण विद्यमान इत्यर्थः । यद्वा व्याप्तत्वं नाकाशादिवदित्याह– **सर्वग इति** ।। आकाशकालतदंशवेदवर्णप्रकृतिषु सर्वत्र नियामकतया स्थित इत्यर्थः । नाकाशादौ व्याप्तिमात्रेण परिमाणसाम्यं मन्तव्यमित्याह– **अनन्त इति** ।। निरतिशयपरिमाणवानित्यर्थः । यद्वा परिच्छिन्नतया प्रतीतस्य तव कथं सर्वगत्वमित्यत आह– **अनन्त इति** ।। एवमेकेन रूपेण व्याप्तिमुक्त्वा

वहुरूपेणाप्याह– **अनन्तरूप इति** ।। नैतावता भेदो मन्तव्य इत्याह– **निरन्तर इति** ।। भेदाभावेऽपि नेन्द्रार्जुनादाविव कश्चन विशेष इत्याह– **अनन्ततेति** ।। सर्वरूपेष्वपि अनन्तगुणाख्यमाहात्म्योपेत इत्यर्थः । तथा चोक्तम्- 'अतोऽशेषगुणोन्नद्धं निर्दोषं यावदेव हि । तावदेवेश्वरो नाम तत्र भेदोऽपि न क्वचित्' (अनु.३.२.उपमाधिकरण) इति । न विग्रहविरहिणी भगवतो व्याप्तिरिति भावेन विग्रहवत्त्वे अनित्यत्वं स्यादित्यत आह– **चिदिति** ।। न भगवच्छरीरं शरीर्यतिरिक्तम् । नापि शीर्यत्वप्रवृत्तिनिमित्तेन शरीरशब्दवाच्यमिति कुत्सनार्थः कप्रत्ययः ।। ४६ ।।

**चट्टि–** सर्वगः सर्वत्रान्तर्यामित्वेन विद्यमानः । अनन्तः कालतो गुणतश्च नाशरहितः । अनन्तरूपः असङ्ख्यातरूपः । निरन्तरं अनन्तरूपत्वेऽपि परस्पररूपभेदरहितः । पुनश्च पुरुषसूक्तप्रतिपाद्यरूपमाह– **अनन्तशीर्ष इत्यादिना** ।। अनन्तगुणाः माहात्म्यं यस्य स तथा । चिदानन्दौ शरीरं यस्य स तथा । स्वार्थे कप्रत्ययः । ईदृशोऽहं व्याप्तः । द्वीपादिचेतनात्मकं सर्वं व्याप्तः सन् तिष्ठामीत्यर्थः । 'यत्पर्वतादिकं दृष्टं तत्सर्वमहमेव' इति हरिवंशोक्तार्थस्य तात्पर्यं 'व्याप्तोऽहम्' इत्यादिना आहेति भावः ।। ४६ ।।

**मद्वशा एव सर्वेऽपि त्वं चान्ये च धनञ्जय ।**
**मत्प्रसादाद् बलं चैव विजयश्चाखिला गुणाः ।**
**तस्मान्न विस्मयः कार्यो न दर्पश्च त्वयाऽनघ ॥४७॥**

**व्यासतीर्थीया–** यदर्थमेतद् द्वीपादियोजनपरिगणनं कृतं तदाह– **मद्वशा एवेति** ।। ४७-४९ ।।

**वेदाङ्गतीर्थीया–** यदर्थमयं द्वीप इत्याद्युक्तं तदाह– **मद्वशा एव इत्यादिना** ।। सर्वे लोका लौकिकास्तद्धर्माश्च । तस्मात् सर्वस्य मदधीनत्वात् त्वया विस्मयः, त्वद्विषयेऽन्यत्र चाश्चर्यबुद्धिः, न कार्यः । दर्पश्च अहं जितवानस्मि जेष्ये चेत्यहङ्कारश्च न कार्यः ।। ४७ ।।

**वरदराजीया–** त्वं चान्ये च जीवा मद्वशा मदधीनाः । कथमित्यत आह– **मत्प्रसादादिति** ।। तवान्येषां च बलं विजयोऽखिलाः ज्ञानभक्त्याद्याश्च गुणाश्च मत्प्रसादाद् भवन्ति । तस्मात् सर्वबलादेर्मदधीनत्वात् त्वया विस्मयो न कार्यः । दर्पोऽहङ्कारश्च न कार्यः ।। ४७ ।।

**जनार्दनीया–** यदर्थमयं द्वीप इत्याद्युक्तं तदाह– **मद्वशा इति** ।। सर्वे लोकास्तद्धर्माश्च त्वं च अन्ये च जीवसङ्घाश्च मद्वशा एव । हे धनञ्जय! बलं विजयश्च अखिलगुणाश्च मत्प्रसादादेव, सर्वेषां भवन्तीति शेषः । यस्मात् तस्मात् सर्वस्य मदधीनत्वात् हे अनघ! त्वया विस्मयः त्वद्विषये अन्यविषये वाश्चर्यबुद्धिः न कार्या । दर्पश्च अहं जितवानस्मि जेष्ये चेत्यहङ्कारश्च न कार्यः ।।४७।।

**ताम्रपर्णीया–** विस्मयः आश्चर्यबुद्धिः । यद्वा स्मयो नामाहंकारः, दर्पो मदाद्गीतेरदृष्टिश्च न कार्य इत्यर्थः । 'मया जिता हि खाण्डवः' इत्युक्तरीत्या इत्यहङ्कारः, 'न विप्र तादृशोऽस्म्यहम्' इत्युक्तरीत्या दर्पश्च न कार्यः । उत्तमद्रोहेण मद्द्रोहेण । महाभयकारणप्राप्तेरिति भावः ।। ४७-५० ।।

**चट्टि–** यदर्थमयं द्वीप इत्याद्युक्तं तदाह– **मद्वशा इति** ।। सर्वे लोकाः तद्धर्माश्च त्वं च अन्ये च जीवसङ्घाश्च मद्वशा एव । हे धनञ्जय! बलं विजयश्च अखिलगुणाश्च मत्प्रसादादेव, सर्वेषां भवन्तीति शेषः । यस्मात् तस्मात् सर्वस्य मदधीनत्वात् हे अनघ! त्वया विस्मयः त्वद्विषये अन्यविषये वाश्चर्यबुद्धिः न कार्या । दर्पश्च अहं जितवानस्मि जेष्ये चेत्यहङ्कारश्च न कार्यः ।। ४७ ।।

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।**
**इत्युक्तः प्रणिपत्यैनं क्षमस्वेत्याह फल्गुनः ।।४८।।**

**वेदाङ्गतीर्थीया–** पुनश्च तं शिक्षयति– **मन्मना इत्यादिना** ।। ४८ ।।

**वरदराजीया–** तस्मादेव मयि मनो यस्य स तथा मन्मनाः । मन्मनस्कत्वादिना मामेवैष्यसि मामेव प्राप्तो भविष्यसि । यतो मे प्रियोऽसि । अत एव सत्यं प्रतिजाने सत्यप्रतिज्ञां करोमीत्यर्थः । इत्युक्तः फल्गुनः एनं कृष्णं प्रणिपत्य क्षमस्वेत्याह ।। ४८ ।।

**जनार्दनीया–** पुनस्तं शिक्षयति– **मन्मना इत्यादिना** ।। यतः मे प्रियोऽसि अतः ते तुभ्यं सत्यं प्रतिजाने प्रतिज्ञां करोमीत्यर्थः ।। ४८ ।।

**चट्टि–** पुनस्तं शिक्षयति– **मन्मना इत्यादिना** ।। मयि मनो यस्य स मन्मनाः भव । मयि भक्तिर्यस्य सः मद्भक्तः सन् मां यजतीति मद्याजी सन् मां नमस्कुरु । यतः मे प्रियोऽसि अतस्ते तुभ्यं सत्यं मामेवैष्यसि इति प्रतिजाने, इति श्रीकृष्णः आहेति शेषः । इत्युक्तः फल्गुनः एनं श्रीकृष्णं प्रणिपत्य क्षमस्वेत्याह ।। ४८ ।।

**उषित्वा कतिचिन्मासान् ययुः सर्वेऽपि पाण्डवाः ।**
**अनुज्ञाताः केशवेन भक्तिनम्रधियोऽच्युते ।**
**सम्भाविताः केशवेन सौहार्देनाधिकेन च ।।४९।।**

**वरदराजीया–** ततः कतिचिन्मासान् द्वारावत्यां उषित्वा स्थित्वा सर्वे पाण्डवाः ययुः, इन्द्रप्रस्थमिति शेषः । अच्युते भक्त्या नम्रधियः । अधिकेन सौहार्देन सम्भाविताश्च ।। ४९ ।।

**जनार्दनीया–** उषित्वा स्थित्वा ययुः, इन्द्रप्रस्थमिति शेषः । अधिकेन सौहार्देन स्नेहेन केशवेन सम्भाविताः सम्मानिताः पाण्डवाः ।।४९।।

**चट्टि–** केशवेन श्रीकृष्णेन अधिकेन सौहार्देन स्नेहेन सम्भाविताः सम्मानिताः अच्युते भक्तिनम्रधियः सर्वेऽपि पाण्डवाः कतिचिन्मासान् उषित्वा केशवेन अनुज्ञाताः सन्तः ययुः, इन्द्रप्रस्थमिति शेषः ।।४९ ।।

**[1]ततः कदाचित् प्रवरे सभातले धर्मात्मजो राजभिर्भ्रातृभिश्च ।**
**वृतो [2]निशम्यैव सभाः सुराणां यथा स्थिता नारदमन्वपृच्छत् ॥५०॥**

**व्यासतीर्थीया–** राजसूयकरणं प्रसक्तिपूर्वमाह– **ततः कदाचिदित्यादिना** ।। यथास्थिता येनैव प्रकारेण स्थिताः तथा तेनैव प्रकारेण ।। ५०-५१ ।।

**वेदाङ्गतीर्थीया–** राजसूयकरणं वक्ष्यन् तदुपयुक्तं प्रस्तावान्तरमुपक्रमते– **तत इत्यादिना** ।। यथा स्थिताः तथा नारदोक्ताः निशम्य, उक्तानुवादपूर्वकं नारदं हरिश्चन्द्रो नृप ऐन्द्रं सभातलं कथं प्राप्तः? अस्मत्पिता पाण्डुः कथं न प्राप्तः? (श्लो-६४) इत्यपृच्छत् इत्युत्तरत्र सम्बन्धः ।। ५० ।।

**वरदराजीया–** इन्द्रप्रस्थं प्रति गमनानन्तरं तत्र प्रवृत्तमाह– **तत इत्यादिना** ।। ततः कदाचित् धर्मराजः नारदं निशाम्य दृष्ट्वा सुराणां सभाः यथास्थिताः तथा नारदाच्छ्रुत्वा पुनर्नारदमन्वपृच्छत् ।।५०।।

**जनार्दनीया–** राजसूयकरणं वक्ष्यन् तदुपयुक्तप्रस्तावान्तरं उपचक्रमे– **तत इत्यादिना** ।। धर्मात्मजः यथा स्थिताः विस्तरादिना यथावस्थिताः सुराणां सभाः निशम्य, नारदादिति शेषः । अनु उक्तानुवादपूर्वकं नारदं 'हरिश्चन्द्रः ऐन्द्रसभातलं कथं प्राप्तः? अस्मत्पिता पाण्डुः कथं न प्राप्तः?' इत्यपृच्छत् इत्युत्तरेण सम्बन्धः ।।५०।।

**चट्टि–** राजसूयकरणं वक्ष्यन् तदुपयुक्तं प्रस्तावान्तरमुपक्रमते– **तत इत्यादिना** ।। ततः कदाचित् प्रवरे श्रेष्ठे सभातले धर्मात्मजे राजभिः भ्रातृभिश्च वृतः सन् यथास्थिता विस्तारादिना यथावस्थिताः सुराणां सभाः निशम्यैव, नारदादिति शेषः । अनु उक्तानुवादपूर्वकं नारदं 'हरिश्चन्द्रः ऐन्द्रं सभातलं कथं प्राप्तः? अस्मात्पिता पाण्डुः कथं न प्राप्तः?' इत्यपृच्छत् इत्युत्तरेण सम्बन्धः।। ५० ।।

**अन्तरिक्षं त्वया प्रोक्तं लक्षयोजनमुच्छ्रितम् ।**
**[3]अर्धकोट्युच्छ्रितः स्वर्गो विमानावलिसङ्कुलः ॥५१॥**

**वेदाङ्गतीर्थीया–** उच्छ्रितम्, भुव इति शेषः । अर्धकोट्युच्छ्रितः अत्रापि भुव इति योज्यम् ।। ५१ ।।

**मधुसूदनीया–**।। **अन्तरिक्षमिति** ।। त्वया अन्तरिक्षं अन्तरिक्षलोकः लक्षयोजनमुच्छ्रितं लक्षयोजनोन्नतमिति प्रोक्तमित्यर्थः । विमानावलिसङ्कुलः स्वर्गः अर्धकोट्युच्छ्रितः पञ्चाशल्लक्षयोजनोन्नतः ।। ५१ ।।

---

१. 'नारदं प्रत्युवाचेदं धर्मराजो महामनाः । सभाः कथय ताः सर्वाः श्रोतुमिच्छामहे वयम् । किं द्रव्याः ता सभा ब्रह्मन् किं विस्ताराः किमायताः ।। पितामहं च के तस्यां सभायां पर्युपासते ।। वासवं देवराजं च यमं वैवस्वतं च के । वरुणं च कुबेरं च सभायां पर्युपासते ।।' सभापर्वणि- ६.१५-१७.

२. 'निशाम्यैव' इति वरदराजीयपाठः ।

३. 'अर्ध! कोट्युच्छ्रितः' इति भारतश्रीपाठे पदविभागः कृतः ।

**वरदराजीया–** पृष्टं श्रुतानुवादं तावत्करोति– **अन्तरिक्षमिति** ।। उच्छ्रितं उन्नतम् । इतो लक्षयोजनोपरि तिष्ठतीत्यर्थः । अर्धकोट्युच्छ्रितः स्वर्गः तावत् ऊर्ध्वदेशे तिष्ठतीत्यर्थः ।। ५१ ।।

**अनन्तभट्टीया–** उच्छ्रितम्, भूमिमवधीकृत्य अन्तं इति शेषः । 'अर्धकोट्युच्छ्रितः स्वर्गः' इत्यत्रापि भूमिमवधीकृत्य इति योज्यम् ।। ५१ ।।

**जनार्दनीया–** अन्तरिक्षं लक्षयोजनमुच्छ्रितं लक्षयोजनैरुच्छ्रितम् (१,००,०००) । उन्नतम्, भूम्या इति शेषः । उन्नतत्वे लक्षयोजनप्रमाणमित्यर्थः । 'भूमिसूर्यान्तरं यत्तु मुनिसिद्धनिषेवितम् । भुवर्लोकस्तु सोऽप्युक्तो द्वितीयो मुनिसत्तम ।।' इति विष्णुपुराणे (२अंश.७अ) । अर्धकोट्युच्छ्रितः (५०,००,०००) अत्रापि भूम्या इति योज्यम् ।।५१।।

**ताम्रपर्णीया–** ।। **अन्तरिक्षमित्यादि** ।। अन्तरिक्षं भूमिमवधीकृत्य लक्षयोजनमुच्छ्रितं स्वर्गः अर्धकोट्युच्छ्रितः ततः परं विमानावलीसंकुलश्च स्वर्गो अर्धकोट्युच्छ्रितः ।।५१।।

**भारतश्री–** 'विमानावलिसङ्कुलः' इति विशेषणात् वैमानिकः स्वर्गः अर्धकोट्युच्छ्रितः..* स्वर्गः कोट्युच्छ्रित इति ज्ञेयम् । यद्वा अर्ध! इति नारदसम्बोधनम् । एन (अनामक)विष्णुना ऋद्धः वृद्धः विष्णुज्ञानेन वृद्धेत्यर्थः । कोट्युच्छ्रितः स्वर्गः विमानावलिसङ्कुलः ।।५१।।

**चट्टि–** अन्तरिक्षं अन्तरिक्षलोकः त्वया लक्षयोजनमुच्छ्रितं लक्षयोजनैरुन्नतमिति प्रोक्तम्, भूम्या इति शेषः । विमानावलिसङ्कुलः स्वर्गः अर्धकोट्युच्छ्रितः पञ्चाशल्लक्षयोजनोन्नतः । अत्रापि भूम्या इति योज्यम् ।।५१।।

**भुवः स्वर्गश्च कोट्यैव योजनानां [१]प्रविस्तृतौ ।**
**महर्जनस्तपश्चैव क्रमादध्यर्धयोजनाः ।**
**पञ्चाशत्कोटिविस्तारा [२]योजनानां समस्तशः ।।५२।।**

**व्यासतीर्थीया–** भुवः अन्तरिक्षम् । योजनानां कोट्यैव विस्तृतौ । समस्तशः सर्वेषाम् ।। ५२ ।।

**वेदाङ्गतीर्थीया–** भुवः भुवोलोकः अन्तरिक्षलोकः । महर्जनस्तप इति ये लोकाः क्रमात् स्वर्गादिक्रमात् अध्यर्धयोजनाः पूर्वपूर्वलोकेभ्य उत्तरोत्तरलोकाः पूर्वलोकपरिमाणात् पुनश्च तदर्धपरिमाणोच्छ्रिताः । समस्तशः महरादयः ।। ५२ ।।

**वादिराजतीर्थीया–** 'भुवः स्वर्गश्च' इत्यत्र भुवः अन्तरिक्षलोकः । 'क्रमादध्यर्धयोजना' इत्यत्र अध्यर्धयोजना अधिकमर्धं यस्य पूर्वप्रमाणस्य तदध्यर्धम् । तावद्योजनैरुत्तरोत्तरोच्छ्रावयन्तः । स्वर्गलोकात्

१. 'प्रविस्तृतं' इति भारतश्रीपाठः ।
२. 'योजनानां च सर्वशः' इति ताम्रपर्णीपाठः स्यात् ।

महर्लोकः पञ्चोत्तरसप्ततिलक्षोत्तुङ्ग इत्यर्थः । महर्लोकादुपरि जनोलोकः सार्धद्वादशलक्षोत्तरकोटियोजनोत्तुङ्ग इत्यर्थः । जनोलोकात् तपोलोकोऽपि कोटियोजनादुपरि अष्टोत्तरषष्टिलक्षादुपरि पञ्चसप्ततिसहस्र-योजनोत्तुङ्गः । समस्तशः लोकत्रयसमूहः । मिलित्वा सङ्ख्यायां पञ्चाशत्कोटिविस्तारः । एवं च प्रत्येकं गणनायां षोडशकोटिभ्यः उपरि किञ्चिदूनत्रिसप्ततिलक्षयोजनप्रमाणेन एकैकस्य विस्तारो ज्ञेयः ।। ५२।।

**मधुसूदनीया–** तयोर्विस्तारमाह– **भुव इति** ।। भुवः अन्तरिक्षलोकः स्वर्गश्च योजनानां कोट्यैव विस्तृतो कोटियोजनविस्तारवानित्यर्थः । महर्जनतपोलोकोनामौन्नत्यमाह– **महर्जन इत्यादिना** ।। अस्यार्थः- महर्लोकः पञ्चसप्ततिलक्षयोजनोन्नतः । जनः जनोलोकः पञ्चाशत्सहस्रद्वादशलक्षोत्तरैककोटि-योजनोन्नतः । तपस्तपोलोकः पञ्चसप्ततिसहस्रोत्तराष्टोत्तरषष्टिलक्षोत्तरकोटियोजनोच्छ्रितः । एवं त्रयाणाम् औन्नत्यमुक्त्वा विस्तारमाह– **पञ्चाशदिति** ।। समस्तशः महर्जनस्तपःप्रदेशः योजनानां पञ्चाशत्कोटि-विस्तारवानित्यर्थः ।।५२।।

**वरदराजीया–** भुवः स्वर्गश्च अन्तरिक्षस्वर्गे उभौ योजनानां कोट्या कोटियोजनेन प्रविस्तृतौ विशालावित्यर्थः । स्वर्गादुपरि महरादयस्त्रयो लोका क्रमादध्यर्धयोजनाः अर्धाधिकपूर्वलोकपरिमाणे च प्रदेशे तिष्ठन्तीत्यर्थः । महर्लोकः स्वर्लोकापेक्षया पञ्चविंशल्लक्षसहितार्धकोट्युच्छ्रितप्रदेशे तिष्ठति । एवं महर्लोकापेक्षया जनलोकोऽर्धाधिकमहर्लोकपरिमाणोच्छ्रितप्रदेशे तिष्ठति । एवं तपोलोकोऽपीत्यर्थः । महरादीनां समस्तशः सर्वेषां योजनानां पञ्चाशत्कोटिविस्तारो ज्ञातव्यः इत्यर्थः ।। ५२ ।।

**अनन्तभट्टीया–** क्रमादध्यर्धयोजनेति कोटिशब्दो अध्यर्धेत्यत्र परामृश्यते । तस्यैव प्रकृतत्वात् । नान्यथा तददृष्टेः । तथाच महरादयः सर्वेऽपि कोटियोजनाः । क्रमेण अधिकार्धकोटियोजनाश्च । महर्लोकः सपञ्चाशल्लक्षकोटियोजनश्च । जनोलोकः कोटिद्वययोजनः । तपोलोकः सपञ्चाशल्लक्षकोटिद्वययोजन इत्यर्थः ।। ५२-५३ ।।

**जनार्दनीया–** भुवः अन्तरिक्षलोकः, स्वर्गश्चोभावपि योजनानां कोट्या प्रविस्तृतौ कोटियोजन-विस्तीर्णौ । महर्जनस्तपश्च त्रयो लोकाः क्रमात् अध्यर्धयोजनाः स्वर्गलोकपरिमाणात् पञ्चविंशल्लक्षयोजन-परिमाणाधिको (२५,००,०००) महर्लोकः, पञ्चसप्ततिलक्षयोजनोच्छ्रितो (७५,००,०००) महर्लोकः स्वर्गादिति शेषः । एवं महर्लोकपरिमाणात् अर्धाधिको जनोलोकः । अनेन क्रमेण तपोलोकः । समस्तशः महदादिलोकत्रयाणां पञ्चाशत्कोटिविस्तारः, उक्त इति शेषः । महदादयः पञ्चाशत्कोटियोजनविस्तीर्णा इत्यर्थः ।।५२।।

**ताम्रपर्णीया–** अन्तरिक्षं स्वर्गश्च मिलित्वा कियदित्यत आह– **भुव इति** ।। कोट्या कोटियोजनेनो-च्छ्रितावित्यर्थः । 'सहस्रधनुषस्तूर्ध्वं युशब्देनापि भण्यते' (भा.ता.२.७.२७) इति तन्त्रमालोक्तेः । अन्तरिक्षस्यापि अन्तरिक्षं लक्षयोजनं विमानावलिरहितः स्वर्गः ततः परं एकोनपञ्चाशल्लक्षयोजनः

उभयमपि युशब्दवाच्यम् । 'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते' इति वचनात् । ततः परं देवताविमानावलिप्रचुरः स्वर्गः अर्धकोट्युच्छ्रितस्ततश्च भुवः स्वर्गश्च कोटियोजनेनोच्छ्रिताविति भावः । यद्वा एवमन्तरिक्षस्वर्गोच्छ्रयमुक्त्वा विस्तारमाह– **भुव इति** ।। महर्जनस्तपश्चेति महरादयो लोकाः पूर्वपूर्वलोकापेक्षया अधिकार्धकोटियोजना इत्यर्थः । महर्लोकः सपञ्चाशल्लक्षकोटियोजनः, जनोलोकः कोटिद्वययोजनः, तपोलोकः सपञ्चाशल्लक्षकोटिद्वययोजन इति भावः । महरादीनां विस्तारमाह– **पञ्चाशदिति** ।। एते महरादयः । यद्वा एते अन्तरिक्षादयः । अत एव 'सर्वशः' इत्युक्तम् ।। ५२।।

**भारतश्री–** 'भुवः' इति वा 'स्वर्गः' इत्यस्य वा स्वरूपकथनपरं विशेषणम् । प्रविस्तृते विस्तारिते । कोटियोजनपरिमितस्वर्गस्य कोटियोजनविस्तारः भोगभूमिविवक्षया । ब्रह्माण्डखर्परसम्बद्धस्य स्वर्गस्य कोटियोजनविस्ताराभावात् । अधि अधिकमर्धयोजनं येषां ते तथा ।। ५२।।

**चट्टि–** तयोर्विस्तारमाह– **भुव इति** ।। भुवः अन्तरिक्षलोकः, स्वर्गश्चोभावपि योजनानां कोट्या प्रविस्तृतौ कोटियोजनविस्तीर्णौ । महर्जनतपोलोकानामौन्नत्यमाह– **महर्जन इति** ।। महर्जनः तपश्चैव त्रयो लोकाः क्रमात् अध्यर्धयोजनाः, महर्लोकः पञ्चसप्ततिलक्षयोजनोन्नतः (७५,००,०००) । जनः जनोलोकः पञ्चाशत्सहस्रद्वादशलक्षोत्तरैककोटियोजनोन्नतः । (१,१२,५०,०००) तपस्तपोलोकः पञ्च-सप्ततिसहस्रोत्तराष्टोत्तरषष्टिलक्षोत्तरकोटियोजनोन्नतः (१,६८,७५,०००) एवं त्रयाणामौन्नत्यं उक्त्वा विस्तारमाह– **पञ्चाशदिति** ।। समस्तशः महर्जनस्तपोलोकप्रदेशः योजनानां पञ्चाशत्कोटिविस्तारवान् इत्यर्थः ।। ५२ ।।

**यावन्त एते मिलितास्तत्प्रमाण उदीरितः ।**
**सत्याख्यो ब्रह्मलोकस्तु यत्र ब्रह्मा विराजते ।।५३।।**

**वादिराजतीर्थीया–** एते अन्तरिक्षादयो लोकाः । विस्तारस्तु सत्यलोकादेरपि पृथगनुक्तेः महर्लोकादिवदेव ज्ञेयः ।। ५३-६४ ।।

**मधुसूदनीया–** सत्यलोकस्यौन्नत्यविस्तारावाह– **यावन्त इति** ।। एते स्वर्गान्तरिक्षाद्याः मिलिताः यावन्तः यावत्प्रमाणवन्तः सत्याख्यो ब्रह्मलोकः तावत्प्रमाणः पञ्चविंशतिसहस्रोत्तरषल्लक्षोत्तरचतुष्कोटि-योजनोन्नतः पञ्चाशत्कोटिविस्तारश्च । विष्णुलोकः वैकुण्ठः ततः सत्यलोकात् द्विगुणः पञ्चाशत्सहस्रोत्तर-द्वादशलक्षोत्तराष्टकोटियोजनोन्नत इत्यर्थः । एवं भूलोकमारभ्य गणने पञ्चविंशतिलक्षोत्तरषोडशकोटि-योजनानि सम्पन्नानि । तन्न्यूनयोजनानि तु एवं मेलयितव्यानि । स्वर्गभूकन्दं अर्धलक्षम्, महर्लोकभूकन्दं पञ्चविंशतिलक्षोत्तरकोटियोजनम्, जनसत्यतपोलोकानां भूकन्दं प्रत्येकशः पञ्चाशल्लक्षोत्तरकोटियोजनं, त्रयाणां लोकानां मिलित्वा पञ्चाशल्लक्षोत्तरचतुष्कोटियोजनानि सम्पन्नानि । वैकुण्ठभूदलं पञ्चाशत्सहस्रोन-कोटित्रयम् । सर्वं मिलित्वा पञ्चसप्ततिलक्षोत्तराष्टकोटिसङ्ख्याकं सम्पन्नम् । तथा च मेरुमारभ्य

वैकुण्ठान्तानां लोकानामुच्चत्वं पञ्चविंशतिलक्षोत्तरषोडशकोटियोजनयुक्तम् । स्वर्गादिवैकुण्ठानां भूदलानि तु पञ्चसप्ततिलक्षोत्तराष्टकोटियोजनानि । एवं मिलित्वा पञ्चविंशतिकोटियोजनानि सम्पन्नानीति बोध्यम् । तथाचोक्तम्-

'एवं चोपरिलोकानां अन्तरा भूर्भुवो भवेत् । पञ्चविंशतिकोट्यश्च तत्सङ्ख्यानं वदाम्यहम् ।।
अर्धकोट्युच्छ्रितः स्वर्गो विमानावलिसङ्कुलः । महर्जनस्तपश्चैव क्रमादध्यर्धयोजनाः ।।
तथोच्चाः परिकीर्त्यन्ते तावद्धै ब्रह्मणः पदम् । ब्रह्मलोकाद् द्विगुणितो वैकुण्ठः परिकीर्तितः ।।
षण्णां चैव तु लोकानां अन्तरालापि या क्षितिः । स्वर्गस्यैव तु भूकन्दमर्धलक्षेण सम्मितम् ।।
सपादकोटिसंयुक्तं महर्लोकस्य भूदलम् । सार्धकोटिजनो लोके भूकन्दं परिकीर्तितम् ।।
एवं वै तपसः प्रोक्तं सत्यस्यापि तथैव च । सार्धद्विकोटिसंयुक्तमूनं लक्षार्धतः क्रमात् ।।
वैकुण्ठस्यार्धकोट्या च श्रीलोकः परिकीर्तितः । पञ्चविंशतिकोट्यश्च विज्ञेया मानवादिभिः ।।
सार्धकोट्या च भूकन्दं दुर्गया परिपालितम् । एवं कोट्युच्छ्रितं कन्दं धरया परिपालितम् ।।
लक्ष्म्यात्मको महालोकः त्वर्धकोट्या च सम्मितः । एवं त्रिकोटिसंयुक्तं वैकुण्ठस्य च भूदलम् ।।
लक्ष्म्यात्मकेन लोकेन संयुक्तं लोकपञ्चकम् । पञ्चविंशतिकोट्या च उच्छ्रितं परिकीर्तितम् ।।
दुर्गात्मके च भूभागे अर्धलक्षबिलं भवेत् । सप्तावरणसंयुक्तं विमानाऽवलिराजितम् ।।
गम्यते सृतिगैस्सर्वैर्वैकुण्ठस्याऽपि चोच्यते । अनाप्तलिङ्गभङ्गा ये वैकुण्ठपुरवासिनः ।।
भूम्यात्मके मध्यखण्डे विमानाऽवलिसङ्कुले । प्राकारसप्तकयुते तावन्मायां पुरे हरेः ।।
तिष्ठन्ति ब्रह्मकल्पान्ते ब्रह्मणा सह मुक्तिगाः। त्यक्तलिङ्गाश्च ये जीवाः खण्डे चैवान्तिमे स्थिताः।।
लक्ष्म्यात्मके महालोके सच्चिदानन्दरूपके । न तत्र गमनं क्वापि सृतिस्थानां कथञ्चन ।।
विना ब्रह्माणमेवैकं सोऽपि याति क्वचित्कचित् । एवं धामत्रयस्यापि खण्डत्रयमुदाहृतम् ।।
खण्डद्वयस्य वैकुण्ठे लयस्तु ब्रह्मणा सह । अन्त्यखण्डस्य नास्त्येव प्रलयः क्वापि केन हि ।।
सर्वत्राऽप्यन्त्यखण्डस्य लयो नास्ति न संशयः । भस्मीभूते च ब्रह्माण्डे कारणे च लयं गते ।।
जलपूर्णं भवेत्सर्वं तत्र धामत्रयं शुभम् । अन्तर्जले च लक्ष्म्या च विष्णुना चाप्यधिष्ठितम् ।।'

इत्यादि ब्रह्माण्डे । विष्णुलोकस्सनातन इत्येतल्लक्ष्म्याख्यखण्डस्य नाशाभावाभिप्रायेणेति बोध्यम् ।। ५३-५५ ।।

**वरदराजीया–** एतेऽन्तरिक्षादयो मिलिता यावत्परिमाणाः तावत्परिमाणोच्छ्रिते देशे सत्याख्यो ब्रह्मलोक उदीरितः । यत्र सत्याख्ये लोके ।।५३।।

**जनार्दनीया–** एते अन्तरिक्षादयो लोकाः मिलिताः युक्ताः सन्तः यावन्तः यावत्परिमाणाः तत्परिमाणः तेषामन्तरिक्षादिपञ्चलोकानां प्रमाणः परिमाणोच्छ्रयः सत्याख्यः सत्यलोक उदीरितः । यत्र सत्यलोके ।।५३।।

**ताम्रपर्णीया–** एते महरादयः मिलिता यावन्तस्तत्प्रमाण उदाहृतः सत्यलोकः । ननु स्वरादयोऽपि ब्रह्मलोका एव किं विशिष्य सत्यस्य ब्रह्मलोकत्वमुच्यत इत्यत उक्तम्– **यत्रेति** ।। विराजते विशेषेण राजते । अन्यत्रावान्तरेश्वरसद्भावात् । सत्यस्य केवलहिरण्यगर्भेश्वरकत्वाद् ब्रह्मलोकत्वमिति भावः।।५३।।

**भारतश्री–** एते महरादयः तत्प्रमाण कोटि षट्कोटियोजनप्रमाणः। ततश्च द्विगुणः द्वादशकोटियोजनः । यद्वा 'अर्धकोट्युच्छ्रितस्स्वर्गः' इत्यादेः..* अन्तरिक्षं लक्षयोजनमुच्छ्रितं लक्षयोजन..मन्तरिक्ष इत्युक्तम् । भूमेः उपरि अन्तरिक्षपर्यन्तं लक्षयोजनपरिमितो देशः भुवर्लोक इत्युच्यते । अत्रैव मेघादीनां सञ्चारः । भुवर्लोकः..* इति वचनात् । अन्तरिक्षे भूम्यपेक्षया लक्षयोजने सूर्यमण्डलं एकोनपञ्चाशल्लक्षयोजनपर्यन्तं अन्तरिक्षलोक एव । अन्तरिक्षं त्वया प्रोक्तं लक्षयोजनमुच्छ्रितं ततो अन्तरिक्षादिति वक्तव्यम् । अर्धकोट्युच्छ्रितः स्वर्गः लक्षयोजनो भुवर्लोकः एकोनपञ्चाशल्लक्षयोजनो अन्तरिक्षलोकः तदुपरि अर्धकोट्युच्छ्रितः स्वर्गः । आहत्य भूम्यपेक्षया स्वर्गः कोटियोजनोच्छ्रितः । तदुक्तम्- **'भुवःस्वर्गश्च कोट्यैव योजनानां प्रविस्तृतौ' इति** ।। स्वर्गश्च भुवः सकाशात् प्रविस्तृते उच्छ्रिते विषये योजनानां कोट्यैव परिमितः इति योजना । शेषं पूर्ववत् । स्वर्गादीनां सकंदानामेवेयं योजना गणना । स इति शेषः । ब्रह्माण्डपुराणवचनादवगन्तव्यः ।। ५३ ।।

**चट्टि–** सत्यलोकस्यौन्नत्यविस्तारमाह– **यावन्त इति** ।। एते अन्तरिक्षादयो लोकाः मिलिताः युक्ताः सन्तः यावन्तः यावत्प्रमाणवन्तः सत्याख्यो ब्रह्मलोकः तत्प्रमाण उदीरितः । पञ्चविंशतिसहस्रोत्तरषल्लक्षोत्तर-चतुष्कोटियोजनोन्नतः (४,०६,२५,०००) पञ्चाशत्कोटिविस्तारश्च यत्र सत्यलोके ब्रह्मा विराजते ।।५३।।

**ततश्च द्विगुणः प्रोक्तो विष्णुलोकः सनातनः ।**
**उत्तरोत्तरतः सर्वे सुखे शतगुणोत्तराः ।।५४।।**

**वेदाङ्गतीर्थीया–** सनातनः शश्वदेकप्रकारः ।। ५४ ।।

**वरदराजीया–** ततो सत्यलोकाद् द्विगुणोच्छ्रिते प्रदेशे विष्णुलोको वैकुण्ठलोकः । इतरलोकापेक्षयात्र विशेषमाह– **सनातन इति** ।। नित्य इत्यर्थः । भुवमारभ्योत्तरोत्तरः सर्वे लोकाः सुखे सुखविषये शतगुणैरुत्तराः उत्कृष्टा इत्यर्थः ।। ५४ ।।

**अनन्तभट्टीया–** ।। **ततश्चेति** ।। अत्र सत्यलोकस्य सपञ्चाशल्लक्षषट्कोटियोजनत्वेऽपि पञ्चाशल्लक्ष-योजनानां विवक्षा न कार्या । चशब्दस्य न्यूनार्थकत्वप्रसिद्धेः । तथाच अन्तरिक्षादयस्तपोन्ता सार्धषट्-कोटियोजनाः तावत्परिमाणस्सत्यलोकः । द्वादशकोटियोजनो विष्णुलोक इति पञ्चविंशत्कोटयो द्रष्टव्याः।

अथवा क्रमादध्यर्धयोजनात् इत्यादेरयमर्थः । स्वर्गापेक्षया अध्यर्धयोजनो महर्लोकः, तदपेक्षया अध्यर्धयोजनो जनोलोकः, तदपेक्षया अध्यर्धयोजनस्तपोलोकः इति । 'ततश्च' इत्यत्र ततः शब्देन

स्वर्गादिसत्यानां परामर्शः । चशब्दो भिन्नक्रमः अनुक्तसमुच्चये । ततश्च विष्णुलोकः स्वर्गादिकेभ्यो द्विगुणः सपञ्चाशल्लक्षषोडशकोटियोजनः । चशब्दः सपञ्चाशत्सहस्रद्विषष्टियोजनश्चेति पञ्चविंशत्कोटयो द्रष्टव्याः ।

यद्वा अन्तरिक्षं लक्षयोजनमुच्छ्रितं विमानावलिसङ्कुलः स्वर्गः अर्धकोट्युच्छ्रय इत्यर्थः । तत्रान्तरिक्षादुपरि तेन एकोनपञ्चाशल्लक्षयोजनो विमानावलिररितः । 'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते' इति तन्त्रमालोक्तः द्युशब्दवाच्यश्च देशोऽस्तीत्यभिप्रेत्याह— **भुवःस्वर्गश्चेति** ।। मिलित्वेति शेषः । विस्तृतौ इत्यूर्ध्वाधरीभाव एव विवक्षितः । तत्र सप्तविंशल्लक्षयोजनपरिमितं ज्योतिर्मण्डलम्, त्रयोदशलक्षयोजन-परिमितस्वर्गवाह्यदेश इति ज्ञेयम् । महरादयस्तु सार्धकोट्यादियोजना । 'यावन्त एते मिलिताः' इत्यत्र एतच्छब्देन महरादिपरामर्श इति द्रष्टव्यम् । यद्यपि 'ततश्च द्विगुणः' इत्यत्र ततःशब्देन सत्यलोकपरामर्शः प्रतीयते । तथाच 'पञ्चाशत्कोटिविस्तारा' इत्युत्तरत्र वाक्यास्वारस्येन 'भुवः स्वर्गश्च' इत्यत्र कोटियोजन-विशालत्वं प्रतीयते इत्याद्यपक्ष एव स्वरसो भगवत्पादाभिप्रेतश्च । तथापि सम्भावनामात्रेणान्यदुक्तिः । लक्षयोजनान्तरं उन्नतमन्तरिक्षं वर्तते । 'अर्धकोट्यनन्तरं स्वर्गः' इत्यादिप्रकारेण वरदराजीये व्याख्यातम् । पञ्चविंशत्कोटिगणनाप्रकारस्तु सर्वास्वपि टीकासु नोक्तः । केचित्तु गणनाप्रकारमवज्ञाय-

'अर्धकोट्युच्छ्रितः स्वर्गो विमानावलिसङ्कुलः । महर्जनस्तपश्चैव क्रमादध्यर्धयोजनाः ।।
तपोन्ताः परिकीर्त्यन्ते तावद्वै ब्रह्मणः पदम् । ब्रह्मलोकाद् द्विगुणतो वैकुण्ठः परिकीर्तितः ।।
षण्णां चैव तु लोकानामन्तराला तु या क्षितिः । स्वर्गस्यैव तु भूकन्दं पादलक्षणसम्मितम् ।।
सपादकोटिसंयुक्तं महर्लोकस्य भूदलम् । सार्धकोटिर्जनोलोको भूकन्दं परिकीर्तितः ।।
एवं वै तपसः प्रोक्तं सत्यस्यापि तथैव च । सार्धद्विकोटिसंयुक्तं भूकन्दं परिकीर्तितम् ।।
वैकुण्ठस्यार्धकोट्या च श्रीलोकः परिकीर्तितः । पञ्चविंशतिकोटिश्च विशेषो मानवादिभिः ।।'

इत्यादिश्लोकान् प्रकल्प्य ब्रह्माण्डपुराणगमित्याहुः । सपादषोडशकोटियोजनं लोकपरिमाणं पादोन-नवकोटियोजनानि तन्मध्यभूकन्दानीति तेषां श्लोकानां तात्पर्यार्थः ।। ५४-५५ ।।

**जनार्दनीया—** ततः सत्यलोकात् । सनातनः शश्वदेकप्रकारः ।।५४।।

**ताम्रपर्णीया—** ततश्च तत एव, सत्यलोकादेव । वैकुण्ठलोको द्विगुण इत्यर्थः । तथा च स्वर्गलोकः कोटियोजनः । महरादयः षट्कोटियोजनाः सत्यलोकः षट्कोटियोजनः वैकुण्ठलोको द्वादशकोटियोजन इति पञ्चविंशत्कोटयो द्रष्टव्याः । यद्वा भूमिमवधीकृत्य अर्धकोट्युच्छ्रितः स्वर्गः 'क्रमादध्यर्ध' इत्यत्र कोटिशब्दः परामृश्यते । तस्यैव प्रकृतत्वात् तथा च महरादयः सर्वेऽपि कोटियोजनाः क्रमेणाधिकार्ध-कोटियोजनाश्च 'यावन्त एते मिलिताः' इत्यत्र एतच्छब्देन स्वर्गादिपरमर्शः, 'ततश्च' इत्यत्र सत्यलोका-द्विष्णुलोकश्च द्विगुणः न्यूनद्विगुणः कोटिषट्कस्यैव द्विगुणता विवक्षिता । न पञ्चाशल्लक्षस्यपीति भावः । 'समुच्चये तथाधिक्ये न्यूनत्वे चः प्रयुज्यते ' इति (गी.तात्पर्य-१८.६७) वचनात् । ततश्चान्तरिक्षस्य स्वर्गान्तर्गतत्वेनान्तरिक्षादयस्तपोऽन्ताः सपञ्चाशल्लक्षषट्कोटियोजनाः (६,५०,००,०००) सत्यश्च तथा

(६,५०,००,०००) विष्णुलोको द्वादशकोटियोजन इति पञ्चविंशत्कोटयो द्रष्टव्याः । अथवा पूर्वोक्तैव योजना । 'यावन्त' इत्यत्र एतच्छब्देन महरादिपरामर्शः, 'ततश्च द्विगुणः' इत्यत्र चशब्दोऽनुक्त-पञ्चाशल्लक्षसमुच्चये तथा च पञ्चविंशत्कोटयो द्रष्टव्याः । अथवा स्वर्गलोकः अर्धकोटियोजनः (५०,००,०००) महरादयः पूर्वपूर्वलोकपरिमाणात् क्रमेणाधिकार्धयोजनाः । तथा च महर्लोकः पञ्चसप्ततिलक्षयोजनः (७५,००,०००) । जनस्तु कोटियोजनः सपञ्चाशत्सहस्रद्वादशलक्षयोजनश्च (१,१२,५०,०००) । तपोलोकस्तु कोटियोजनः अष्टषष्ठिलक्षयोजनः पञ्चसप्ततिसहस्रयोजनश्च (१,६८,७५,०००) । तथा च स्वर्गाद्या मिलित्वा चतुष्कोटयः सपञ्चविंशत्सहस्रषड्लक्षयोजनाश्च (४,०६,२५,०००) । सत्यलोकश्च तथा । तथा च स्वर्गादयः सत्यान्ताः सपञ्चाशत्सहस्रद्वादश-लक्षोत्तराष्टकोटियोजनाः (८,१२,५०,०००) । विष्णुलोकस्तु ततस्स्वर्गादेः द्विगुणः । सपञ्चविंशल्लक्ष-षोडशकोटियोजनः (१६,२५,००,०००) च शब्दात् सपञ्चाशत्सहस्रद्वाषष्ठिलक्षयोजनश्चेति (६२,५०,०००) । पञ्चविंशत्कोटयो द्रष्टव्याः । यद्यप्यत्र प्रथमपक्षे 'अर्धकोट्युच्छ्रितः स्वर्गो विमानावलिसंकुलः' इत्यत्र स्वर्गद्वैविध्यकल्पनम्, 'यावन्त एते' इत्यत्र महरादिमात्रपरामर्शे 'एते' इति वहुवचनेनैव लोकत्रयलाभेन मिलितपदास्वारस्यम्, तृतीय पक्षे च शब्दस्याधिक्यपरत्वं मिलितपदास्वारस्यम्, तुरीयपक्षे 'ततश्च द्विगुणः' इत्यत्र अव्यवधानेन प्रकृतसत्यपरमर्शं विहाय स्वर्गादिपरामर्शत्वानुपपत्तिः प्रतीयते । तथापि एतेषु पक्षेषु द्वितीयपक्ष एव स्वलक्षणत्वाद् भगवत्पादाभिप्रेतो ज्ञायते । सम्भावनामात्रेणान्यदुक्तिः । न च तत्रापि चशब्दस्य न्यूनत्वार्थकत्वं कल्प्यमिति वाच्यम् । च शब्दस्य न्यूनार्थकत्वस्य प्रमितत्वात् । केचित्तु- लक्षयोजनानन्तरं अन्तरिक्षं वर्तते । अर्धकोट्यनन्तरं स्वर्ग इत्यादिक्रमेणार्थमाहुः । अन्ये तु- 'अर्धकोट्युच्छ्रितः स्वर्गः क्रमादध्यर्धयोजनाः । तपोऽन्ताः परिकीर्त्यन्ते तावद्वै ब्रह्मणः पदम् । ब्रह्मलोकाद् द्विगुणितो वैकुण्ठः परिकीर्तितः । षण्णां चैव तु लोकानामन्तराला तु या क्षितिः । स्वर्गस्यैव तु भूकन्दं पादलक्षेण संमितम् । सपादकोटिसंयुक्तं महर्लोकस्य भूतलम् । अर्धकोटिर्जनोलोको भूकन्दं परिकीर्तितम् । एवं वै तपसः प्रोक्तं सत्यस्यापि तथैव च । सार्धद्विकोटिसंयुक्ते भूकन्दं परिकीर्तितम् । पञ्चविंशत्कोटयश्च विज्ञेया मानवादिभिः ।।' इति ब्रह्माण्डपुराणोक्तेः सपञ्चविंशल्लक्ष-षोडशकोटियोजनं (१६,२५,००,०००) लोकपरिमाणम् । पादोननवकोटियोजनं (८,७५,००,०००) तन्मध्यगतभूकन्दपरिमाणम् इत्याहुः ।। ५४ ।।

**भारतश्री—** शतगुणोत्तराः शतशब्दो अत्र वहुत्ववाची ।। ५४ ।।

**चट्टि—** सनातनः शश्वदेकप्रकारः । विष्णुलोकः वैकुण्ठः । ततः सत्यलोकाच्च द्विगुणः प्रोक्तः । पञ्चाशत्सहस्रोत्तरद्वादशलक्षोत्तराष्टकोटियोजनोन्नत इत्यर्थः (८,१२,५०,०००) । एवं भूलोकमारभ्य गणने पञ्चविंशतिलक्षोत्तरषोडशकोटियोजनानि सम्पन्नानि । तन्न्यूनयोजनानि तु एवं मेलयितव्यानि । स्वर्गभूकन्दं अर्धलक्षम्, महर्लोकभूकन्दं पञ्चविंशतिलक्षोत्तरकोटियोजनम्, जनसत्यतपोलोकानां भूकन्दं

प्रत्येकशः पञ्चाशल्लक्षोत्तरकोटियोजनम्, त्रयाणां लोकानां मिलित्वा पञ्चाशल्लक्षोत्तरचतुष्कोटियोजनानि सम्पन्नानि । वैकुण्ठभूदलं पञ्चाशत्सहस्रोनकोटित्रयम् । सर्वं मिलित्वा पञ्चसप्ततिलक्षोत्तराष्टकोटिसङ्ख्याकं सम्पन्नम् । तथा च मेरुमारभ्य वैकुण्ठान्तानां लोकानामुच्चत्वं पञ्चविंशतिलक्षोत्तरषोडशकोटियोजनयुक्तम् । स्वर्गादिवैकुण्ठानां भूदलानि तु पञ्चसप्ततिलक्षोत्तराष्टकोटियोजनानि । एवं मिलित्वा पञ्चविंशतिकोटियोजनानि सम्पन्नानीति बोध्यम् । तथाचोक्तम्–

'एवं चोपरिलोकानां अन्तरा भूर्भुवो भवेत् । पञ्चविंशतिकोट्यश्च तत्सङ्ख्यानं वदाम्यहम् ।।
अर्धकोट्युच्छ्रितः स्वर्गो विमानावलिसङ्कुलः। महर्जनस्तपश्चैव क्रमादध्यर्धयोजनाः ।।
तथोच्चाः परिकीर्त्यन्ते तावद्वै ब्रह्मणः पदम् । ब्रह्मलोकाद् द्विगुणितो वैकुण्ठः परिकीर्तितः ।।
षण्णां चैव तु लोकानां अन्तरालापि या क्षितिः । स्वर्गस्यैव तु भूकन्दमर्धलक्षेण सम्मितम् ।।
सपादकोटिसंयुक्तं महर्लोकस्य भूदलम् । सार्धकोटिजनो लोके भूकन्दं परिकीर्तितम् ।।
एवं वै तपसः प्रोक्तं सत्यस्यापि तथैव च । सार्धद्विकोटिसंयुक्तमूनं लक्षार्धतः क्रमात् ।।
वैकुण्ठस्यार्धकोट्या च श्रीलोकः परिकीर्तितः । पञ्चविंशतिकोट्यश्च विज्ञेया मानवादिभिः ।।
सार्धकोट्या च भूकन्दं दुर्गया परिपालितम् । एवं कोट्युच्छ्रितं कन्दं धरया परिपालितम् ।।
लक्ष्म्यात्मको महालोकः त्वर्धकोट्या च सम्मितः । एवं त्रिकोटिसंयुक्तं वैकुण्ठस्य च भूदलम् ।।
लक्ष्म्यात्मकेन लोकेन संयुक्तं लोकपञ्चकम् । पञ्चविंशतिकोट्या च उच्छ्रितं परिकीर्तितम् ।।
दुर्गात्मके च भूभागे अर्धलक्षविलं भवेत् । सप्ताऽवरणसंयुक्तं विमानाऽवलिराजितम् ।।
गम्यते सृतिगैस्सर्वैर्वैकुण्ठस्याऽपि चोच्यते । अनाप्तलिङ्गभङ्गा ये वैकुण्ठपुरवासिनः ।।
भूम्यात्मके मध्यखण्डे विमानाऽवलिसङ्कुले । प्राकारसप्तकयुते तावन्मायां पुरे हरेः ।।
तिष्ठन्ति ब्रह्मकल्पान्ते ब्रह्मणा सह मुक्तिगाः । त्यक्तलिङ्गाश्च ये जीवाः खण्डे चैवान्तिमे स्थिताः।।
लक्ष्म्यात्मके महालोके सच्चिदानन्दरूपके । न तत्र गमनं क्वापि सृतिस्थानां कथञ्चन ।।
विना ब्रह्माणमेवैकं सोऽपि याति कचित्कचित् । एवं धामत्रयस्यापि खण्डत्रयमुदाहृतम् ।।
खण्डद्वयस्य वैकुण्ठे लयस्तु ब्रह्मणा सह । अन्त्यखण्डस्य नास्त्येव प्रलयः क्वापि केन हि ।।
सर्वत्राऽप्यन्त्यखण्डस्य लयो नास्ति न संशयः । भस्मीभूते च ब्रह्माण्डे कारणे च लयं गते ।।
जलपूर्णं भवेत्सर्वं तत्र धामत्रयं शुभम् । अन्तर्जले च लक्ष्म्या च विष्णुना चाप्यधिष्ठितम् ।।'

इत्यादि ब्रह्माण्डे । 'विष्णुलोकः सनातनः' इत्येतल्लक्ष्म्याख्यखण्डस्य नाशाभावाभिप्रायेणेति बोध्यम् । सर्वे भुवो लोकादिषल्लोकाः उत्तरोत्तरतः सुखे सुखविषये शतगुणैः उत्तरा उत्कृष्टाः ।। ५४ ।।

**[१]अनन्तजनसम्पूर्णा अपि ते हीच्छया हरेः ।**
**अवकाशवन्तो दिव्यत्वात् पूर्यन्ते न कदाचन ।**
**सर्वकामसुखैः पूर्णा दिव्यस्त्रीपुरुषोज्ज्वलाः ।।५५।।**

---

१. 'अनन्तजनसङ्कीर्णाः' इति वेदाङ्गतीर्थीय-ताम्रपर्णीयपाठः ।

**व्यासतीर्थीया–** दिव्यत्वात् विचित्रत्वादित्यर्थः ।। ५५-५८ ।।

**वेदाङ्गतीर्थीया–** ते लोकाः पूर्वमनन्तजनसङ्कीर्णा अपि अवकाशवन्तः । कदाचन न पूर्यन्ते । तत् कथमिति तत्र निमित्तमाह– **हरेरिच्छया दिव्यत्वादिति** ।। ५५ ।।

**वरदराजीया–** अनन्तजनैः सम्पूर्णा अपि लोका ते हरेरिच्छयाऽचिन्त्यशक्त्या अवकाशवन्त एव तिष्ठन्ति । कुतः? दिव्यत्वादलौकिकत्वात् । अत एव कदाचिदपि न पूर्यन्ते । अवकाशवन्त एवेत्यर्थः । सर्वकामैरिच्छाभिः पूर्णाः दिव्यस्त्रीभिः पुरुषैश्च उज्ज्वला देदीप्यमाना इत्यर्थः ।। ५५ ।।

**अनन्तभट्टीया–** दिव्यत्वात् विचित्रत्वात् न पूर्यन्ते । जनशून्यत्वावकाशरहिता न भवन्तीत्यर्थः।।५५।।

**जनार्दनीया–** सर्वे भुवर्लोकादिषड्लोकाः सुखे विषये । अनन्तजनसम्पूर्णा अपि हरेरिच्छया अवकाशवन्तः । दिव्यत्वात् कदाचन न पूर्यन्ते पूर्णा न भवन्ति । उज्ज्वलाः प्रकाशवन्तः ।।५५।।

**ताम्रपर्णीया–** ननु लोकानां मितत्वे कथं मुक्तामुक्तानन्तसंकीर्णत्वं तत्राह– **अनन्तेति** ।। अपि परिमितत्वेऽपि ईश्वरेच्छया अनन्तजनसङ्कीर्णाः । ननु अनन्तजनसङ्कीर्णत्वे प्रतिकल्पं मुक्तानन्तजनानां वैकुण्ठादिगमने तेषामवकाशाभावः स्यात् पूर्णत्वादित्यत आह– **अनन्तेति** ।। अनन्तजनसङ्कीर्णा निविडापि वैकुण्ठादिलोकाः कदाचन न पूर्यन्ते । कुतः? हरीच्छया दिव्यत्वादलौकिकत्वादवकाशवन्तो यत इत्यर्थः ।। ५५ ।।

**भावचन्द्रिका–** ।। **दिव्येति** ।। 'सप्ततिस्तु सहस्राणि द्विजोच्छ्रायोऽपि कथ्यते' इति (२.५.१) विष्णुपुराणवचनात् भूलोकपरिमाणं ज्ञेयम् । अतलादिपरिमाणं तु-

भूमेरधो भूतलं तु लक्षयोजनमात्रकम् । दशसाहस्रसङ्ख्याकयोजना..संयुताः ।।
द्विसहस्रास्तपोपेता अतलाद्याः प्रकीर्तिताः । तथा षोडशसाहस्रयोजनोच्छ्रयसंयुताः ।।
दशकोट्यस्तु विस्तीर्णो ...नानालयो महान् । नरकाख्यो महालोकः पातालादध इष्यते ।।
तत्र योजनसाहस्रषोडशेषु चतुष्टयम् । यातनाभूतलं ज्ञेयं तच्च शेषस्य मूर्धनि ।।

इति पञ्चरात्रागमवचनात् ज्ञेयम् । एवञ्च मेरोरध..* लक्षं विना..* द्वीपेष्विति । अनेन भूलोक उक्तः ।। ५५-७५ ।।

**भारतश्री–** दिव्यत्वात् । देवनिर्मितत्वात् ।। ५५-६० ।।

**चट्टि–** अनन्तजनसम्पूर्णाः अपि ते लोकाः हरेरिच्छया अचिन्त्यशक्त्या अवकाशवन्त एव तिष्ठन्ति । दिव्यत्वात् अलौकिकत्वात् कदाचन न पूर्यन्ते पूर्णा न भवन्ति । सर्वकामसुखैः पूर्णाः दिव्यस्त्रीपुरुषैरुज्ज्वलाः प्रकाशवन्तः ।। ५५ ।।

**दिव्यरत्नसमाकीर्णं तथा पातालसप्तकम् ।**
**अधस्ताच्छेषदेवेन बलिना समधिष्ठितम्** ॥५६॥

**वेदाङ्गतीर्थीया–** भूमेरधस्तनलोकस्वरूपमाह– **दिव्येति** ॥ ५६ ॥

**मधुसूदनीया–** ॥ **अधो पातालसप्तकमिति** ॥ एकैकस्य पातालस्य विलमयुतयोजनम् । मर्यादाभूतभूदलं तु द्विसहस्रयोजनम् । एवं सप्तपातालानां चतुरुत्तराऽशीति सहस्रयोजनानि सम्पन्नानि भवन्ति । सप्तपातालाधोस्थिताऽष्टमस्य नरकाख्यलोकस्य द्वादशसहस्रयोजनं विलं मर्यादाभूतं तद्दलं तु चतुस्सहस्रयोजनम् । ततश्च पातालसप्तकस्य चतुरुत्तराशीतिसहस्रयोजनानि । नरकस्य षोडशसहस्रयोजनानि च मिलित्वा लक्षसहस्रयोजनानि सम्पन्नानि इति बोध्यम् । तदधः लक्षयोजनोनपञ्चविंशतिकोटियोजनं जलमिति च बोध्यम् । तथाचोक्तम्–

'भूमेरधो लक्षमात्रं भूकन्दं परिकीर्तितम् । लोकानामन्तरालं तु भानुसङ्ख्यासहस्रकम् ॥
विलानां सप्तलोकानां अयुतं च पृथक्पृथक् । लोकस्याधो द्विसाहस्रमेकैकस्य दलं भवेत् ॥
एवं द्वादशसाहस्रमेकैकस्योच्छ्रयो भवेत् । एते लोका विलाः स्वर्गाः देवदानवसेविताः ॥
अतलं वितलं चैव सुतलं च महातलम् । तलातलं रसातलं पातालमिति सप्तकम् ॥
सप्तलोकादधः प्रोक्तो नरकाख्यो महामते । उच्छ्रयं भानुसङ्ख्यातः सहस्रं परिकीर्तितम् ॥
चतुस्सहस्रसङ्ख्यातं नरकस्य च भूदलम् । पापिभिः सेव्यमानोऽयं नरकस्तु सुदारुणः ॥
एवं लक्षमिदं प्रोक्तं भूकन्दं जलमध्यगम् । ततो जलेन सम्पूर्णं ब्रह्माण्डं परिकीर्तितम् ॥
पञ्चविंशतिकोट्यश्च लक्षोनजलमिश्रितम् । अष्टानामपि लोकानां विस्तारो भूमिवद्भवेत् ॥'

इति च ब्रह्माण्डे । बलिना बलिचक्रवर्तिना च । 'तत्रासतो मे पाताले भागं ब्रूहि सुरेश्वर' (हरिवंशे-३.७२.४५) इति बलिवचनात् । 'मुक्तो निवस पाताले सपुत्रजनबान्धवः । इतस्त्वया न गन्तव्यं गव्यूतिमपि दानव ॥' इति वामनवचनाच्च हरिवंशे (३.७२.९०-९१)। 'अनन्तेन च संयुक्तं मुचुकुन्देन धीमता । नृपेण बलिना चैव पातालस्वर्गवासिना ॥' इति (प्रथमभागे-४२.१७) कौर्मे च । यद्वा 'शेषदेवेन समधिष्ठितम्' इत्यत्र शेषदेवेन समधिष्ठितपातालसप्तकं इत्युक्ते वासुकेरपि प्रशेषसञ्ज्ञकत्वेन प्रसिद्धत्वे शेषदेवपदेन वासुकेरपि प्राप्त्या (कक्षां)निवारयितुं 'बलिना' इति विशेषणम् । तथाच- 'मृत्युः संकर्षणः शेषः शेतानन्तस्तथैव च । बलिर्महाविषश्चेति भूधरश्चेति कथ्यते ॥' इत्यभिधानात् (वृ.भा.३.५)। बलिसञ्ज्ञकशेषः सङ्कर्षण एवेति नान्यः प्रापेति भावः ॥ ५६ ॥

**वरदराजीया–** दिव्यैः रत्नैः समाकीर्णाः पूर्णा त्वया प्रोक्ता इत्यर्थः । तथा पातालसप्तकं पातालादिसप्तकं अधस्तात् सर्वाधस्तात् बलिना बलाधिकेन शेषदेवेन समधिष्ठितम् सम्यक् अधिष्ठितम् ॥ ५६ ॥

**अनन्तभट्टीया–** बलिना बलवतेत्यर्थः ॥ ५६-६४ ॥

**जनार्दनीया–** तथा यथा अन्तरिक्षादय उक्तास्तथा पातालसप्तकम्, त्वयोक्तमिति शेषः । अधस्थात्, पातालसप्तकस्येति शेषः । शेषदेवेन समधिष्ठितम् । शेषस्य सर्वलोकधारणे क शक्तिरित्यत आह– **बलिनेति** ।। बलमस्यास्तीति बली तेन बलिना ।।५६।।

**ताम्रपर्णीया–** बलिना बलवता ।। ५६-६० ।।

**चट्टि–** यथा अन्तरिक्षादयो लोकाः उक्ताः तथा दिव्यरत्नसमाकीर्णं पातालसप्तकम्, त्वयोक्तमिति शेषः । एकैकस्य पातालस्य बिलमयुतयोजनम् । मर्यादाभूतभूदलं तु द्विसहस्रयोजनम् । एवं सप्तपातालानां चतुरुत्तराऽशीतिसहस्रयोजनानि सम्पन्नानि भवन्ति । सप्तपातालाधोस्थिताऽष्टमस्य नरकाख्यलोकस्य द्वादशसहस्रयोजनं बिलं मर्यादाभूतं तद्दलं तु चतुस्सहस्रयोजनम् । ततश्च पातालसप्तकस्य चतुरुत्तराशीतिसहस्रयोजनानि । नरकस्य षोडशसहस्रयोजनानि च मिलित्वा लक्षसहस्रयोजनानि सम्पन्नानि इति बोध्यम् । तदधः लक्षयोजनोनपञ्चविंशतिकोटियोजनं जलमिति च बोध्यम् । तथाचोक्तम्-

'भूमेरधो लक्षमात्रं भूकन्दं परिकीर्तितम् । लोकानामन्तरालं तु भानुसङ्ख्यासहस्रकम् ।।
बिलानां सप्तलोकानां अयुतं च पृथक्पृथक् । लोकस्याधो द्विसाहस्रमेकैकस्य दलं भवेत् ।।
एवं द्वादशसाहस्रमेकैकस्योच्छ्रयो भवेत् । एते लोका बिलाः स्वर्गाः देवदानवसेविताः ।।
अतलं वितलं चैव सुतलं च महातलम् । तलातलं रसातलं पातालमिति सप्तकम् ।।
सप्तलोकादधः प्रोक्तो नरकाख्यो महामते । उच्छ्रयं भानुसङ्ख्यातः सहस्रं परिकीर्तितम् ।।
चतुस्सहस्रसङ्ख्यातं नरकस्य च भूदलम् । पापिभिः सेव्यमानोऽयं नरकस्तु सुदारुणः ।।
एवं लक्षमिदं प्रोक्तं भूकन्दं जलमध्यगम् । ततो जलेन सम्पूर्णं ब्रह्माण्डं परिकीर्तितम् ।।
पञ्चविंशतिकोट्यश्च लक्षोनजलमिश्रितम् । अष्टानामपि लोकानां विस्तारो भूमिवद्भवेत् ।।

इति च ब्रह्माण्डे । अधस्तात्, पातालसप्तकस्येति शेषः । शेषदेवेन बलिना बलिचक्रवर्तिना च समधिष्ठितम् । 'वसतो मम पाताले भागं ब्रूहि सुरेश्वर' इति बलिवचनात् । 'मुक्तो निवस पाताले सपुत्रजनबान्धवः । इतस्त्वया न गन्तव्यं गव्यूतिमपि दानव ।।' इति वामनवचनाच्च हरिवंशे । 'अनन्तेन च संयुक्तं मुचुकुन्देन धीमता । नृपेण बलिना चैव पातालस्वर्गवासिना ।।' इति कौर्मे च । सप्तद्वीपेषु जम्बुद्वीपादिसप्तद्वीपेषु इत्यर्थः ।। ५६ ।।

**कामभोगसमायुक्ता बहुवर्षसहस्रिणः ।**
**सप्तद्वीपेषु पुरुषा नार्यश्चोक्ताः सुरूपिणः ।।५७।।**

**मधुसूदनीया–** सप्तद्वीपेषु जम्बूद्वीपादिसप्तद्वीपेष्वित्यर्थः । यत्तु 'सप्तद्वीपेषु भूविवरेषु' इति वरदराजीयव्याख्यानं 'अधश्च लोकेषु' इत्यनन्तभट्टीयव्याख्यानश्च तदुभयमपि चिन्त्यम् । अपदार्थत्वात् । जलान्तर्गतप्रदेशस्यैव द्वीपशब्दवाच्यत्वेन भूविवराणामुभयपार्श्वयोर्जलान्तरितत्वात् यथावस्थितग्रहणे बाधकभावाच्च ।। ५७-७२ ।।

**वरदराजीया—** सप्तभूविवरेषु सप्तद्वीपेषु च कामभोगसमायुक्ता अपेक्षितसर्वभोगसमायुक्ताः पुरुषादय उक्ताः । बहुवर्षसहस्रिणः ।। ५७ ।।

**अनन्तभट्टीया—** सप्तद्वीपेषु अधस्तनलोकेष्वित्यर्थः ।।५७।।

**जनार्दनीया—** सप्तद्वीपेषु अधस्थसप्तलोकेषु : तत्र जम्बुद्वीपे भरतखण्डे युगानुसारेण आयुभोगाल्पत्वात् । तदतिरिक्तेष्विति ज्ञातव्यम् । कामभोगसमायुक्ताः इच्छाभोगसमायुक्ताः । वर्षाणां सहस्राणि वर्षसहस्राणि बहूनि वर्षसहस्राणि विद्यन्ते येषां ते तथा । बहुवर्षसहस्रायुष इत्यर्थः । सुरूपिणः पुरुषाः नार्यश्चोक्ताः ।।५७।।

**चट्टि—** यद्वा सप्तद्वीपेषु अधस्थसप्तलोकेषु विद्यमानाः पुरुषाः नार्यश्च कामभोगसमायुक्ताः इच्छाभोगसमायुक्ताः वर्षाणां सहस्राणि वर्षसहस्राणि बहूनि वर्षसहस्राणि एषां सन्तीति ते तथा । बहुवर्षसहस्रायुष इत्यर्थः । सुरूपिणश्चेत्युक्ताः ।। ५७ ।।

**एषां च सर्वलोकानां धाता नारायणः परः ।**
**विष्णुलोकस्थितो मुक्तैः सदा सर्वैरुपास्यते ।।५८।।**

**वरदराजीया—** एषां सर्वलोकानां च परो नारायण एव धाता धारकः ।। ५८ ।।

**जनार्दनीया—** एषां प्राणिनाम् । सर्वलोकानां च धाता धारकः पोषकः । विष्णुलोकस्थितः स एव । उपास्यते पूज्यते ।।५८।।

**चट्टि—** एषां प्राणिनां सर्वलोकानां च धाता धारकः पोषकः परः श्रीनारायणः विष्णुलोकस्थितस्सन् सदा सर्वैः मुक्तैरुपास्यते पूज्यते ।। ५८ ।।

**सेवका ब्रह्मणश्चैव [1]देवा [2]वेदाश्च [3]सर्वशः ।**
**शक्रस्य मुनयः सर्वे [4]हरिश्चन्द्रश्च भूमिपः ।।५९।।**

---

१. आदित्या वसवो रुद्रा मरुतश्चाश्विनावपि । मरुतो विश्वकर्मा च वसवश्चैव भारत । तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ।। सभापर्वणि-११.३१ । पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः । महादेवः सहोमोऽत्र सदा गच्छति सर्वशः ।। महासेनश्च राजेन्द्रः सदोपास्ते पितामहम् । देवो नारायणस्तस्यां तथा देवर्षयश्च ये ।। सभापर्वणि-११.५१,५२.

२. 'ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव । अथर्ववेदश्च तथा सर्वशास्त्राणि चैव ह । इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः । ..सामानि स्तुतिशस्त्राणि गाथाश्च विविधास्तथा । भाष्याणि तर्कयुक्तानि देहवन्ति विशाम्पते ।। नाटका विविधाः काव्याः कथाख्यायिककारिकाः । तत्र तिष्ठन्ति ते पुण्याः..' सभापर्वणि-११.३२-३६.

३. 'यच्च किञ्चित् त्रिलोकेऽस्मिन् दृश्यते स्थाणुजङ्गमम् । सर्वं तस्यां मया दृष्टं इति विद्धि नराधिप।।'सभापर्वणि-११.५३

४. 'हविष्मांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिवः ।' सभापर्वणि-७.१३.

**व्यासतीर्थीया–** हरिश्चन्द्रश्च इन्द्रानुगः ।। ५९ ।।

**वरदराजीया–** वेदाभिमानिनः सर्वशः सर्वे देवाश्च ब्रह्मणः सेवकाः । सर्वे मुनयः हरिश्चन्द्रश्च शक्रस्य सेवकाः प्रोक्ताः ।। ५९ ।।

**अनन्तभट्टीया–** मुनयः हरिश्चन्द्रश्च शक्रस्य इत्यन्वयः ।।५९।।

**जनार्दनीया–** वेदाः वेदाभिमानिनः । सर्वशः सर्वे देवाश्च । मुनयः हरिश्चन्द्रश्च शक्रस्य सेवकाः।।५९।।

**चट्टि–** वेदाः वेदाभिमानिनः सर्वशः सर्वे देवाश्च ब्रह्मणः सेवकाः उक्ताः सर्वे मुनयः भूमिपः राजा हरिश्चन्द्रश्च शक्रस्य सेवकाः प्रोक्ताः ।। ५९ ।।

**अखिला अपि राजानः [1]पाण्डुश्चास्मत्पिता मुने ।**
**यमस्यैवानुगाः प्रोक्ता राजर्भिस्तैर्यमेन च ।।६०।।**

**व्यासतीर्थीया–** 'यमस्यैव' इति प्रश्नकारणं मनःखेदं द्योतयति ।। ६०-६५ ।।

**अनन्तभट्टीया–** राजानः पाण्डुश्च ।। **यमस्येति** ।। हरिरुपास्य इति शेषः ।।६०।।

**लघ्वनन्तभट्टीया–** ननु पाण्डोः वरुणादिलोकप्राप्तिमनभिधाय यमलोकप्राप्तिः कथमित्यत आह– **यमस्यैवानुगाः प्रोक्ताः इत्यनेन** ।। कुत इति चेत्? उच्यते । यमलोकस्य राजप्राप्यत्वात् । यथोक्तम्- 'राज्ञां हृदयसंस्थो यः इन्द्रो नाम जनार्दनः । स एवेन्द्रे यमे चैव स प्राप्यो मुक्तराजभिः ।।' (बृ.भा-६.३ कूर्चब्राह्मणम्) ।।६०-१५७।।

**वरदराजीया–** अखिलराजानो अस्मत्पिता पाण्डुश्चेत्येते यमस्यैवानुगाः प्रोक्ता ।। ६० ।।

**जनार्दनीया–** अखिला अपि राजानः अस्मत्पिता पाण्डुश्च यमस्यैवानुगाः ।।६०।।

**चट्टि–** अखिला अपि राजानः अस्मत्पिता पाण्डुश्च हे मुने! नारद! यमस्यैवानुगाः प्रोक्ताः तैः राजभिः यमेन च भगवान् श्रीरामः रघुपतिः यमसभातले उपास्यमान इत्युक्तः ।। ६० ।।

**उपास्यमानो भगवान् रामो यमसभातले ।**
**उक्त इन्द्रेण चोपास्यो वामनात्मा जनार्दनः ।।६१।।**

**वरदराजीया–** यमस्य सभातले तैः राजभिर्यमेन च भगवान् राम उपास्यमानः उक्तः । वामनात्मा जनार्दन इन्द्रेण उपास्य उक्तः ।। ६१ ।।

---

१. 'शान्तनुश्चैव राजेन्द्र पाण्डुश्चैव पिता तव । ...एते राजर्षयः पुण्याः कीर्तिमन्तो बहुश्रुताः । तस्यां सभायां राजेन्द्र वैवस्वतमुपासते ।।' सभापर्वणि- ८.२५-२८.

**जनार्दनीया–** रामो रघुपतिः ।।६१।।

**ताम्रपर्णीया–** रामः परशुरामो रघुरामश्च ।। ६१-६५ ।।

**भारतश्री–** 'रामो दाशरथिश्चापि दृष्टो यमसभातले'[१] इति (सभापर्वणि-८.१८) भारतोक्तेर्भावमाह–**उपास्यमानो भगवान् राम इति** ।।६१।।

**चट्टि–** वामनात्मा जनार्दनश्च इन्द्रेणोपास्य इत्युक्तः ।। ६१ ।।

**प्रादुर्भावाश्च निखिला ब्रह्मणोपासिताः सदा ।**
**वरुणस्यानुगा [२]नागास्तत्र मत्स्याकृतिर्हरिः ।**
**[३]गन्धर्वा धनदस्यापि तत्र कल्की हरिः प्रभुः ।।६२।।**

**वरदराजीया–** निखिलाः प्रादुर्भावा अवताररूपाणि ब्रह्मणा चतुर्मुखेन सत्यलोके उपासिताः पूजिता प्रोक्ताः । नागाः वरुणस्यानुगाः प्रोक्ताः । तत्र वरुणालये मत्स्याकृतिः हरिरुपास्यः । गन्धर्वाः धनदस्यानुगाः प्रोक्ताः । तत्र धनदालये प्रभुः कल्की हरिरुपास्यः ।। ६२ ।।

**जनार्दनीया–** प्रादुर्भावाः हरेरवताररूपाणि । तत्र वरुणसभातले । मत्स्याकृतिः मीनरूपः । गन्धर्वाः धनदस्यापि अनुगाः ।।६२।।

**चट्टि–** निखिलाः हरेः प्रादुर्भावाः अवताररूपाणि ब्रह्मणा सदा उपासिताः इति प्रोक्ताः । नागाः वरुणस्य अनुगास्तत्र वरुणसभातले मत्स्याकृतिः मीनस्वरूपः हरिरुपास्यः । गन्धर्वाः धनदस्यानुगाः प्रोक्ताः तत्र धनदालये प्रभुः कल्की हरिरुपास्यः ।। ६२ ।।

**रुद्रस्योग्राणि भूतानि नृसिंहात्मा शिवेन च ।**
**उपास्यते सदा विष्णुरित्याद्युक्तं त्वयाऽनघ ।**
**सर्वरत्नस्थलान् दिव्यान् देवलोकान् प्रभाषता ।।६३।।**

**वरदराजीया–** उग्राणि भूतानि रुद्रस्यानुगानि प्रोक्तानि । नृसिंहात्मा विष्णुः शिवेन उपास्यते इत्यादि त्वयोक्तम् । कथम्भूतेन त्वया सर्वरत्नस्थलान् दिव्यान् देवानां लोकान् उक्तरीत्या प्रभाषता ।। ६३ ।।

**जनार्दनीया–** हे अनघ! दोषरहित नारद! इत्यादि पूर्वोक्तम् । सर्वरत्नमयानि स्थलानि येषु ते तथा तान् । प्रभाषता यत्त्वयोक्तम् ।।६३।।

---

१. 'रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्दनः ।' इति उपलभ्यमानपाठे व्यत्यासो दृश्यते ।

२. 'वासुकिप्रमुखाश्चैव सर्वे प्राञ्जलयः स्थिताः । अनुज्ञाताश्च शेषेण यथार्हमुपविश्य च ।।' इति सभापर्वणि-९.१४.

३. 'उपतिष्ठन्ति धनदं गन्धर्वाप्सरसां गणाः । अनिशं दिव्यवादित्रैः नृत्यगीतैश्च सा सभा ।।' सभापर्वणि-१०.१४.

**चट्टि–** उग्राणि भूतानि रुद्रस्यानुगानि । नृसिंहात्मा विष्णुः शिवेन च सदा उपास्यते । हे अनघ! दोषशून्य नारद! सर्वाणि रत्नस्थलानि येषु ते तथा तान् । दिव्यान् देवलोकान् प्रभाषता त्वया इत्यादिपूर्वोक्तम् ।। ६३ ।।

**[१]तत्र मे संशयो भूयान् हरिश्चन्द्रः कथं नृपः ।**
**ऐन्द्रं सभातलं प्राप्तः पाण्डुर्नास्मत्पिता मुने ।।६४।।**

**वेदाङ्गतीर्थीया–** तत्र शक्रस्य हरिश्चन्द्रः सेवकः, यमस्यास्मत्पिता पाण्डुः सेवक इत्यत्र मे भूयान् महान् संशयो जातः ।। ६४ ।।

**वरदराजीया–** ततः किमित्यत आह– **तत्रेति** ।। भूयान् महान् । तत्रेत्युक्तं विशदयति– **हरिश्चन्द्र इति** ।। ऐन्द्रमिन्द्रस्य विद्यमानं सभातलं हरिश्चन्द्रः कथं प्राप्तः? अस्मत्पिता पाण्डुश्च कथं न प्राप्तः?।।६४।।

**चट्टि–** तत्र तथापि मे भूयान् संशयः, भवतीति शेषः । संशयं दर्शयति– हे मुने! नारद! हरिश्चन्द्रो नृपः इन्द्रं सभातलं कथं प्राप्तः? । अस्मत्पिता पाण्डुः कथं न प्राप्तः? ।। ६४ ।।

**इत्युक्तो नारदः प्राह [२]राजसूयकृतोन्नतिम् ।**
**हरिश्चन्द्रस्य [३]तां दृष्ट्वा [४]पिता यमसभातले ।**
**स्थितस्त्वामवदत् पाण्डू रामद्वयसुदैवते[५] ।।६५।।**

**वेदाङ्गतीर्थीया–** इत्युक्तः इति पृष्टः नारदः 'पाण्डुस्त्वां इत्यवदत्' इति प्राह । राजसूयकृता उन्नतिः राजसूयकृतोन्नतिः । हरिश्चन्द्रः कथमैन्द्रसभातलं प्रापेत्युक्तम् । पाण्डुस्तदकरणान्न प्रापेति चोक्तं भवति ।।६५-७०।।

**वादिराजतीर्थीया–** रामद्वयसुदैवते रामद्वयं परशुरामरघुरामाख्यरामद्वयम् । शोभनदेवतावत्पूज्यं यत्र तस्मिन् सभातले ।। ६५-६८ ।।

---

१. 'एक एव तु राजर्षिः हरिश्चन्द्रो महामुने । कथितस्ते सभायां वै देवेन्द्रस्य महात्मनः ।। किं कर्म तेनाचरितं तपो वा नियतव्रत । येनासौ सह शक्रेण स्पर्धते सुमहायशाः ।।' सभापर्वणि-१२.६,७.

२. 'स निर्जित्य महीं कृत्स्नां सशैलवनकाननाम् । आजहार महाराज राजसूयं महाक्रतुम् । ..एतस्मात् कारणात् राजन् हरिश्चन्द्रो विराजते । तेभ्यो राजसहस्रेभ्यः तद्विद्धि भरतर्षभ । ये चान्ये च महीपालाः राजसूयं महाक्रतुम् । यजन्ते ते सहेन्द्रेण मोदन्ते भरतर्षभ ।।' सभापर्वणि-१२.१६,२३,२५.

३. 'तं दृष्ट्वा' इति ताम्रपर्णीये पाठान्तरम् ।

४. 'पिता मां प्राह पाण्डवः । करोतु' इति पाठान्तरमिति अनन्तभट्टताम्रपर्णिटिप्पण्योः अस्ति । व्याख्यानानुसारेण विचार्यमाणे वादिराजतीर्थातिरिक्तानां टिप्पणीकाराणां सम्मतः अयं पाठः इति भाति ।

५. 'रामद्वयसुदैवतं' इति पाठान्तरमिति अनन्तभट्टीय-ताम्रपर्णिटिप्पण्याम् । 'जामदग्न्यश्च रामश्च नाभागसगरौ तथा' सभापर्वणि-८.१८,१९.

**वरदराजीया–** इत्युक्तो नारदो हरिश्चन्द्रकृतराजसूयेन कृतां प्रापिताम् उन्नतिं हरिश्चन्द्रस्योत्कर्षं तत्र कारणत्वेन प्राप्तम् । अत एव तां राजसूयकृतां उन्नतिं दृष्ट्वा त्वत्पिता पाण्डुः मां प्राह ।।६५।।

**अनन्तभट्टीया–** पाण्डुः तव पिता हरिश्चन्द्रस्य तां राजसूयकृतोन्नतिं दृष्ट्वेति सम्बन्धः ।।६५।।

**लघ्वनन्तभट्टीया–** हरिश्चन्द्रस्य राजसूयोन्नतिं प्राह । कचित् 'पिता यमसभातले । स्थितस्त्वामवदत् पाण्डू रामद्वयसुदैवतम् । करोतु' इति पाठः । 'पिता मां प्राह पाण्डवः । करोतु' इति कचित्पाठः ।।६५।।

**जनार्दनीया–** इत्युक्तो नारदः प्राह, धर्मात्मजमिति शेषः । किमिति? पिता तवेति शेषः । पाण्डुः हरिश्चन्द्रस्य तां राजसूयकृतोन्नतिं राजसूयमखेन कृताम्, उन्नतिं इन्द्रलोकप्राप्तिलक्षणोत्कर्षं दृष्ट्वा मां प्रति प्राह ।।६५।।

**ताम्रपर्णीया–** हरिश्चन्द्रस्य राजसूयकृतोन्नतिं प्राहेति योजना । अत्र हरिश्चन्द्रस्येत्यनन्तरं 'तं दृष्ट्वा पिता यमसभातले । स्थितस्त्वामवदत् पाण्डू रामद्वयसुदैवते । करोतु राजसूयम्' इति कचित्पाठः । कचित्तु 'तां दृष्ट्वा पिता मां प्राह पाण्डव । करोतु राजसूयं मे' इति पाठः ।। ६५-७५ ।।

**भारतश्री–** रामद्वयसुदैवते, सभातले इति शेषः । 'जामदग्न्यश्च रामोऽथ' इति (सभापर्वणि- ८.१९) भारतोक्तेः ।। ६५-७४ ।।

**चट्टि–** इत्युक्तो नारदः प्राह, धर्मात्मजमिति शेषः । हे पाण्डव! पिता, तवेति शेषः । पाण्डुर्हरिश्चन्द्रस्य तां राजसूयकृतोन्नतिं राजसूयमखेन कृतामुन्नतिं इन्द्रलोकप्राप्तिलक्षणोत्कर्षं दृष्ट्वा मां प्रति प्राह ।। ६५ ।।

**[1]करोतु राजसूयं मे पुत्रो ज्येष्ठोऽनुजार्चितः ।**
**पालितो वासुदेवेन किं तस्यासाध्यमत्र हि ।।६६।।**

**व्यासतीर्थीया–** 'पालितः' इति राजसूयकरणे सामर्थ्यं द्योतयति ।।६६-६८।।

**वरदराजीया–** किमिति? मज्ज्येष्ठपुत्रो युधिष्ठिरो राजसूयं करोतु । यतोऽनुजैः भीमसेनादिभिरर्चितः वासुदेवेन श्रीकृष्णेन पालितश्च । तस्मादत्र राजसूयकरणे किं तस्य असाध्यम् । तस्य राजसूयः सुकर एवेत्यर्थः । तस्मात् करोत्विति सम्बन्धः ।।६६।।

**अनन्तभट्टीया–** राजसूयं करोत्विति सम्बन्धः ।। ६६।।

**चट्टि–** किमिति? मे ज्येष्ठः पुत्रः वासुदेवेन श्रीकृष्णेन पालितः सन् अनुजार्चितः सन् राजसूयं करोत्विति । अत्र राजसूयकरणे तस्य असाध्यं किं न किमपीत्यर्थः ।। ६६ ।।

---

१. 'विज्ञाय मानुषं लोकमायान्तं मां नराधिप । प्रोवाच प्रणतो भूत्वा वदेथास्त्वं युधिष्ठिरम् ।। समर्थोऽसि महीं जेतुं भ्रातरस्ते स्थिता वशे । राजसूयं क्रतुश्रेष्ठमाहरस्वेति भारत ।।' सभापर्वणि-१२.२९-३०.

**एतच्छ्रुत्वा धर्मसुतो भ्रातृभिः सहितो वशी ।**
**अवाप्तिं राजसूयस्य मन्त्रयामास धर्मवित् ॥६७॥**

**वरदराजीया–** वशी समर्थः राजसूयस्यावाप्तिं भ्रातृभिः सहितो मन्त्रयामास विचारयामास ।। ६७ ।।

**जनार्दनीया–** वशी सर्वं वशे तिष्ठतीत्यर्थः । वशविषये अनुजार्चितत्वादिति हेतुर्ज्ञातव्यः ।। ६७ ।।

**चट्टि–** वशी सर्वं वशे तिष्ठतीति वशी वशत्वे अनुजार्चितत्वादिति हेतुः ज्ञातव्यः । धर्मविद् धर्मज्ञः धर्मसुतः एतन्नारदवाक्यं श्रुत्वा भ्रातृभिः सहितः सन् राजसूयस्य अवाप्तिं प्रति मन्त्रयामास ।। ६७ ।।

**सुकार्यमेतदित्यलं निशम्य सोदरोदितम् ।**
**अयातयत् स्वसारथिं स केशवाय भूपतिः ॥६८॥**

**वरदराजीया–** एतत्कार्यं सुकार्यमिति सोदरैर्भीमसेनादिभिः उक्तमलं निशम्य केशवाय स्वसारथिं अयातयत् प्रेषयामास ।। ६८ ।।

**जनार्दनीया–** अयातयत् प्रेषयामास ।।६८।।

**चट्टि–** सः भूपतिः धर्मात्मजः एतत्कार्यमलमत्यन्तं सुकार्यमिति सोदरैः भीमसेनादिभिरुक्तं निशम्य केशवाय श्रीकृष्णाय स्वसारथिमयातयत् ।। ६८ ।।

**तदैव केशवस्य याः स्त्रियस्तदीयतातकैः ।**
**सहोदरैश्च यापितः स दूत आप माधवम् ॥६९॥**

**व्यासतीर्थीया–** याः षोडशसहस्रस्त्रियः ।। ६९-७५ ।।

**वादिराजतीर्थीया–** 'तदैव केशवस्य याः स्त्रियः' इत्यत्र केशवस्य स्त्रियः षोडशसहस्रराजकन्याः । तदीयतातकैः जरासन्धेन बन्धीकृतैः तासां पितृभूतराजकैः तासां सहोदरैश्चेत्यर्थः ।। ६९ ।।

**वरदराजीया–** तदैव युधिष्ठिरसारथ्यागमनसमये केशवस्य याः स्त्रियः शताधिकषोडशसहस्रसङ्ख्याकाः तदीयैः तत्स्त्रीसम्बन्धिभिः तातकैः पितृभिः तदीयसहोदरैश्च यापितः प्रेषितो यः दूतः सोऽपि माधवं कृष्णं प्रत्याप आगतः ।। ६९ ।।

**अनन्तभट्टीया–** याः षोडशसहस्रस्त्रियः ।।६९।।

**जनार्दनीया–** तदैव तस्मिन्नेव काले । केशवस्य याः स्त्रियः शताधिकषोडशसहस्रस्त्रीषु मध्ये राजकुलोत्पन्नाः याः स्त्रियः तदीयतातकैः तासां तातकैः जनकैः सहोदरैश्च, तासामिति शेषः । यापितः प्रेषितः । काश्चिद्गन्धर्वादिषु जातास्तत्पितृव्यावृत्त्यर्थं 'याः' इत्युक्तम् ।।६९।।

**चट्टि–** तदैव तस्मिन्नेव काले केशवस्य याः स्त्रियः शताधिकषोडशसहस्रस्त्रीषु मध्ये राजकुलोत्पन्नाः तदीयतातकैः तासां तातकैः सहोदरैश्च यापितः प्रेषितः सः दूतः माधवं श्रीकृष्णमाप ।। ६९ ।।

**प्रणम्य केशवं वचः स आह मागधेन ते ।**
**विवाहबान्धवा रणे विजित्य रोधिता गिरौ ।।७०।।**

**वादिराजतीर्थीया–** 'विवाहवान्धवा रणे' इत्यत्र स्वपुत्रीविवाहेन वान्धवा विवाहबान्धवाः । श्वशुरा इत्यर्थः ।। ७०-७४ ।।

**वरदराजीया–** स दूतः केशवं प्रणम्य वचः आह । किमिति? ते विवाहबान्धवाः विवाहनिमित्तकसुहृदः श्वशुराद्याः मागधेन जरासन्धेन रणे विजित्य गिरौ गिरिद्रोण्यां रोधिताः निरोधं प्रापिताः ।। ७० ।।

**जनार्दनीया–** ते विवाहवान्धवाः श्वशुराद्याः मागधेन गिरौ पर्वतलिङ्गे रोधिताः ।।७०।।

**चट्टि–** सः दूतः केशवं श्रीकृष्णं प्रणम्य वचः आह । किमिति? ते विवाहवान्धवाः श्वशुराद्याः मागधेन रणे विजित्य गिरौ पर्वतगिरौ पर्वतलिङ्गे रोधिताः ।। ७० ।।

**नृपायुतद्वयेन सोऽष्टविंशकैः शतैरपि ।**
**यियक्षुरुग्ररूपिणं [१]त्रिलोचनं त्वयि स्थिते ।।७१।।**

**वेदाङ्गतीर्थीया–** अष्टविंशकैः शतैः द्विसहस्रादुपरि अष्टशतैः ।। ७१ ।।

**वरदराजीया–** किमिति? नृपाणां अयुतद्वयेन विंशतिसहस्रेण तथा अष्टविंशकैः शतैरपि अष्टशताधिकद्वाविंशत्सहस्रसङ्ख्याकैः नृपैरित्यर्थः । यियक्षुर्यागं कर्तुमिच्छुरस्तीत्यर्थः । त्वयि स्थिते सत्येव अहो तस्य धाष्ट्र्यमित्यर्थः ।। ७१ ।।

**जनार्दनीया–** हे प्रभो! त्वयि स्थितेऽपि प्रभौ त्वयि सत्यपीत्यर्थः । नृपायुतद्वयेन नृपाणामयुतद्वयेन अष्टविंशकैः शतैः अष्टशताधिका द्वाविंशतिसहस्रसङ्ख्याकैः नृपैरित्यर्थः । त्रिलोचनं यियक्षुः यष्टुमिच्छुः सन्, स आस्त इति शेषः ।।७१।।

**चट्टि–** हे प्रभो! त्वयि स्थितेऽपि प्रभौ त्वयि सत्यपि इत्यर्थः । नृपायुतद्वयेन नृपाणामयुतद्वयेन अष्टविंशकैः शतैरप्यष्टशताधिकद्वाविंशतिसहस्रसंख्याकैः नृपैरित्यर्थः । उग्ररूपिणं त्रिलोचनं यियक्षुः यष्टुमिच्छुस्सन्, सः आस्त इति शेषः ।। ७१ ।।

---

१. 'आशासितार्थे राजेन्द्र संरुरोध विनिर्जितान् । पार्थिवैस्तैर्नृपतिभिर्यक्ष्यमाणः समृद्धिमान् । देवश्रेष्ठं महादेवं कृत्तिवासं त्रियम्बकम् ।।' सभापर्वणि-२३.३५-३६.

**विमोचयस्व तान् प्रभो निहत्य मागधेश्वरम् ।**
**अवैदिकं मखं च तं विलुम्प धर्मगुप्तये ।।७२।।**

**वरदराजीया–** तान् नृपान् । अवैदिकं वेदविरुद्धं तं मखं यागं धर्मगुप्तये वैदिकधर्मरक्षार्थं विलुम्प नाशय ।। ७२ ।।

**जनार्दनीया–** मागधेश्वरं निहत्य, तान् नृपान् विमोचयस्व । अवैदिकं वेदोक्तकर्मबाह्यं विलुम्प नाशय ।।७२।।

**चट्टि–** मागधेश्वरं निहत्य तान् नृपान् विमोचयस्व । धर्मगुप्तये अवैदिकं वेदोक्तकर्मबाह्यं तं मखं च विलुम्प नाशय ।।७२।।

**इतीरितोऽथ सारथिं निशाम्य धर्मजस्य च ।**
**निशम्य तद्वचस्तदा जगाम पाण्डवालयम् ।।७३।।**

**मधुसूदनीया–** ।। **इतीरित इति** ।। तस्य चोत्तरं दत्वेति शेषः । 'राज्ञां दूतमुवाचेदं भगवान् प्रियया गिरा । मा भैष्ट दूत भद्रं वो घातयिष्यामि मागधम् ।। इत्युक्तः प्रस्थितो दूतो यथावदवदन् नृपान् ।।' इति [1]सभापर्वोक्तेः ।। **निशम्य तद्वचन इति** ।। तस्येन्द्रसेनाख्यसारथेः वचः । 'धर्मराजो हृषीकेश धौम्यव्यासादिभिस्सह । पाञ्चालमात्स्यसहितैः भ्रातृभिश्चैव सर्वशः । त्वद्दर्शनं महाबाहो काङ्क्षते स युधिष्ठिरः ।।' इत्यादि सभापर्वोक्तं वाक्यमित्यर्थः (१३.४८-४९)।। ७३-७४ ।।

**वरदराजीया–** इतीरितः कृष्णो धर्मजस्य सारथिं च निशाम्य दृष्ट्वा, तस्य सारथेर्वचांसि वचश्च निशम्य पाण्डवालयमिन्द्रप्रस्थं जगाम ।। ७३ ।।

**जनार्दनीया–** निशाम्य दृष्ट्वा । तद्वचः सारथिवचः ।।७३।।

**चट्टि–** इतीरितः श्रीकृष्णः तस्योत्तरं, दत्वेति शेषः । 'राज्ञां दूतमुवाचेदं भगवान् प्रियया गिरा । मा भैष्ट दूतमुग्रं वो घातयिष्यामि मागधम् ।। इत्युक्तः प्रस्थितो दूतो यथावदवदन् नृपान् ।।' इति सभापर्वोक्तेः । अथ श्रीकृष्णः धर्मजस्य सारथिं च निशाम्य दृष्ट्वा, तद्वचः तस्येन्द्रसेनाख्यसारथेर्वचो निशम्य तदा पाण्डवालयं प्रति जगाम । 'धर्मराजो हृषीकेश धौम्यव्यासादिभिर्वृतः । पाञ्चालमत्स्यसहितो भ्रातृभिश्चैव सर्वशः ।। त्वद्दर्शनं महाबाहो काङ्क्षते स युधिष्ठिरः ।।' इत्यादि सभापर्वणि ।। ७३ ।।

**स पाण्डवैः समर्चितो मखाय धर्मजेन च ।**
**प्रपृष्ट आह माधवो वचो जगत्सुखावहम् ।।७४।।**

**वेदाङ्गतीर्थीया–** मखाय मखार्थम् । मखसिद्ध्यर्थमिति यावत् ।। ७४ ।।

---

१. इमौ श्लोकौ भागवते (१०.७०.१७-१८) उपलभ्येते । न तु सभापर्वणि ।

**वरदराजीया–** स कृष्णः पाण्डवैः अर्चितः तैः पृष्टः मखाय राजसूयार्थं पृष्टश्च जगत्सुखावहं जगतः सुखकरं वचः आह ।। ७४ ।।

**जनार्दनीया–** मखाय मखार्थम् ।।७४।।

**चट्टि–** सः माधवः श्रीकृष्णः पाण्डवैः समार्चितः सन् मखाय मखार्थं धर्मजेन पृष्टः सन् जगतां सुखावहं वचश्चाह ।। ७४ ।।

**क्रतुर्यथाविधानतः कृतो हि पारमेष्ठ्यकम् ।**
**पदं नयेत तत्पदे सुयोग्यमेव नान्यथा ।।७५।।**

**वादिराजतीर्थीया–** 'क्रतुर्यथाविधानतः' इत्यत्र यथाविधानतः यथोक्तविधानेन कृतः । एषः क्रतुः राजसूययागः । तत्पदे ब्रह्मणः पट्टबन्धे सुयोग्यं ऋजुगणस्थमिति यावत् । पारमेष्ठ्यकं परमेष्ठिनः सम्बन्धि पदं नयेत ।। ७५ ।।

**सत्याभिनवीया–** तत्रैव 'क्रतुर्यथाविधानतः..' इति श्लोकः । तस्यार्थः- विधानतः कृतः एषः क्रतुः तत्पदे ब्रह्मपदे सुयोग्यं पारमेष्ठ्यकं पदं नयेत, अन्यथा विधानतः अन्यथाकृतः अन्यथास्थितं तत्पदे अयोग्यं पारमेष्ठ्यकं पदं न नयेतेति । एतेन किम्? 'अन्यथा' इत्यस्य अन्यथाकृत इत्यर्थः । किं वा अन्यथा स्थितमित्यर्थः । नाद्यः । अन्यथा स्थितमित्यर्थस्यानुक्तिप्रसङ्गात् । न द्वितीयः । अन्यथाकृत इत्यर्थस्यानभिधानप्रसङ्गात् इति दूषणं परास्तम् । अन्यथा इत्यस्य आवृत्तिमङ्गीकृत्य अर्थद्वयमुच्यते इत्यङ्गीकारात् ।। ७५-७९ ।।

**मधुसूदनीया–** ।। **क्रतुर्यथाविधानत इति** ।। यथा विधानत इति यथाविधानतः कृतः क्रतुः पारमेष्ठ्यकं पदं ब्रह्मपदं नयेदिति पूर्वेणान्वयः । ननु ब्रह्मपदायोग्येन साङ्गमाचरितोऽप्ययं क्रतुर्ब्रह्मपदं न प्रापयति चेत् तर्हि वैफल्यप्रसङ्ग इत्यत आह– **नयेतेति** । ननु यैः यैः अयं क्रतुः क्रियते तांस्तान् सर्वानप्ययं क्रतुः ब्रह्मपदं नयेत् किमित्यत आह– **तत्पदे सुयोग्यमेवेति** ।। तत्पदे ब्रह्मपदे सुयोग्यमेव पुरुषं पारमेष्ठ्यपदं नयेदिति पूर्वेणाऽन्वयः । ब्रह्मपदयोग्येनैव कृतोऽयं क्रतुस्तादृशमेव ब्रह्मपदं प्रापयेदिति यावत् । अन्यथा न ब्रह्मपदायोग्येन कृतश्चेत् तं ब्रह्मपदं न प्रापयेदित्यर्थः ।। ७५ ।।

**वरदराजीया–** किं तद्वच इत्यत आह– **क्रतुरिति** ।। यथाविधानतः विधानमनतिक्रम्य कृतः क्रतुः राजसूययज्ञः तत्पदे पारमेष्ठ्यपदे सुयोग्यमेव पारमेष्ठ्यं पदं नयेत प्रापयेत् । नान्यथा अयोग्यं धातृपदं न नयेत ।। ७५ ।।

**अनन्तभट्टीया–** तत्पदे पारमेष्ठ्यपदे ।। ७५ ।।

**जनार्दनीया–** जगत्सुखकरं वचो दर्शयति– **क्रतुरित्यादिना** ।। यथा विधानतः विधानमनतिक्रम्य कृतः क्रतुः यागः तत्पदे ब्रह्मपदे सुयोग्यमेव अधिकारयोग्यमेव पारमेष्ठ्यकं पदं नयेत । अन्यथा अयोग्यं न प्रापयेदित्यर्थः ।।७५।।

**भारतश्री–** हरिश्चन्द्रव्यावृत्त्यर्थमाह– **सुयोग्यमिति** ।। ७५ ।।

**चट्टि–** जगत्सुखावहं वचो दर्शयति– **क्रतुरित्यादिना** ।। विधानमनतिक्रम्य यथाविधानतः कृतः क्रतुर्यागः तत्पदे ब्रह्मपदे सुयोग्यमेव अधिकारयोग्यमेव पारमेष्ठ्यकं पदं ब्रह्मपदं नयेत । अन्यथा न प्रापयेत् ब्रह्मपदायोग्येन कृतश्चेत् तं ब्रह्मपदं न प्रापयेदित्यर्थः ।। ७५ ।।

**[1]अयोग्यकान्महापदे विधातुरेष हि क्रतुः ।**
**समानयोग्यतागणात् करोति मुक्तिगं वरम्[2] ।।७६।।**

**व्यासतीर्थीया–** महापदे इत्यस्य हि यस्मादेषः क्रतुः विधातुः विधातृपदयोग्यस्य । महापद इत्युक्तं विवेकेनाह– **समानेति** ।। ७६-७७ ।।

**वेदाङ्गतीर्थीया–** 'अयोग्यकान्महापदे' इत्यत्र अयोग्यकादिति च्छेदः । एष क्रतुः विधातुः क्रमात् पदेऽयोग्यं राजसूयस्य, कर्तारमिति शेषः । मुक्तिगं विधातुः महापदे अयोग्यकात् समानयोग्यतागणात् वरं आधिक्ययुक्तं करोति हि ।। ७६ ।।

**वादिराजतीर्थीया–** विधातुः महापदे अयोग्यकात् अयोग्यदेवचक्रवर्त्यादिगणात् । ल्यब्लोपनिमित्ता पञ्चमी । अयोग्यगणं यजमानीकृत्येत्यर्थः । कृतः एषः क्रतुः राजसूयः । तं यज्ञकर्तारम् । मुक्तिगं मुक्तिगतं सन्तं समानयोग्यतागणात् राजसूययागकरणे शक्त्यभावेन तदकरणेऽपि, समाना ज्ञानभक्त्यादौ सदृशी योग्यता येषां ते तेषाम् । आसमन्तात् स्थिताद्गणात् प्रतिकल्पं मुक्तगणात् वरं श्रेष्ठं अभ्युत्थानप्रियसम्भाषणादिना सत्कारयोग्यं करोति । समानषड्रसान्नभोजिनां पङ्क्तौ यथा किञ्चिद्वृद्धमग्रे स्थापयन्ति तथेत्यर्थः । योग्यतासाम्ये आनन्दतारतम्यायोगात् । उक्तविधयैव वरत्वम् ।। ७६ ।।

**मधुसूदनीया–** तदेव विवृणोति– **अयोग्यकानिति** ।। एषः क्रतुः राजसूयः विधातुः चतुर्मुखस्य महापदे महच्च तत्पदं च उत्कृष्टपदमित्यर्थः । तस्मिन् अयोग्यकान् योग्यतारहितान् पुरुषान् पारमेष्ठ्यकं पदं न नयेदिति पूर्वेणान्वयः । ननु ब्रह्मपदायोग्येन साङ्गमाचरितोऽप्ययं क्रतुः ब्रह्मपदं न प्रापयति चेत् तर्हि वैफल्यप्रसङ्ग इत्यत आह– **समानयोग्यतागणादित्यादिना** ।। एषः क्रतुः मुक्तिगं राजसूयकर्तारं मुक्तिस्थितपुरुषं वरं श्रेष्ठं करोति । किमपेक्षयेत्यत आह– **समानेति** ।। समानयोग्यतापुरुषवद्गणात् वरं करोतीत्यर्थः ।

---

१. 'अयोग्यकम्' इति वरदराजीयपाठः । 'अयोग्यकम्' इति पाठान्तरमिति मधुसूदनीय-जनार्दनीय-चट्टिटिप्पण्याम्। मधुसूदनीये ताम्रपर्णीये तथा चट्टिटिप्पण्यां 'अयोग्यकान्' इति पदविभागश्च कृतः । वेदाङ्गतीर्थीय-वादिराजीय-जनार्दनीय-ताम्रपर्णीये 'अयोग्यकात्' इति पदं छिन्दन्ति ।

२. 'मुक्तिगं परम्' इति अनन्तभट्टीयपाठः ।

'अयोग्यकम्' इति पाठे तु- ननु साङ्गानुष्ठितेनापि राजसूयेन ब्रह्मपदप्राप्त्यभावे साङ्गाद्वैदिककर्मणः फलावश्यम्भावनियमादिति नियमभङ्गप्रसङ्ग इत्यत आह– **अयोग्यकमिति** ।। एषः क्रतुः विधातुर्महापदे अयोग्यकं योग्यतारहितं मुक्तिगं मुक्तिस्थितं पुरुषं समानयोग्यतागणात् वरं करोति । तथाच पूर्वं सर्वमपि समानमेव तन्मध्ये केनचिद्ब्रह्मपदायोग्येन राजसूयः कृतश्चेत् तत् स्वसमानानां मध्ये मुक्तौ श्रेष्ठं करोतीति भावः । वेदाङ्गतीर्थास्तु- 'अयोग्यकान्महापदे' इत्यत्र अयोग्यकादिति पदच्छेदः । एषः क्रतुः महापदे अयोग्यकम्, राजसूयकर्तारमिति शेषः । मुक्तिगं विधातुः महापदे अयोग्यकात् समानयोग्यतागणात् परमाधिक्ययुक्तं करोति' इति व्याचक्षते । तच्चिन्त्यम् । उक्तरीत्या योजनोपपत्तौ कुसृष्टिगौरवात् पदद्वयाऽध्याहारे च गौरवाच्च ।। ७६ ।।

**वरदराजीया–** विधातुः ब्रह्मणो पदे महापदे चतुर्मुखस्य योग्यपारमेष्ठ्यपदे अयोग्यकं पुरुषं मुक्तिगं समानयोग्यतायुक्तात् गणात् वरं श्रेष्ठं आनन्दातिशयोपेतं करोति ।।७६।।

**अनन्तभट्टीया–** विधातुर्महापद इति सम्बन्धः । पदमिति स्थानम् । समानयोग्यतायुक्तो गणः, समानयोग्यतागण इत्यर्थः । मुक्तिगं परमिति सम्बन्धः ।। ७६-७७ ।।

**जनार्दनीया–** विधातृपदायोग्यैः कृतस्य क्रतोः फलमाह– **अयोग्यकान्महापदे इति** ।। अत्र अयोग्यकादिति पदच्छेदः । एषः महाक्रतुः विधातुः महापदे अयोग्यकात् समानयोग्यतागणात् समानयोग्यतया युक्तश्चासौ गणश्च तथा तस्मात् । स्वस्य समानयोग्यगणादित्यर्थः । स्वकर्तारं पुरुषं मुक्तिगं मुक्तौ वरं आविर्भूतानन्दाधिक्ययुक्तं करोति । क्वचित् 'अयोग्यकम्' इति द्वितीयैकवचनान्तः पाठः ।।७६।।

**ताम्रपर्णीया–** ।। **अयोग्यकादिति** ।। हि यस्मादेषः क्रतुः विधातुर्महापदे अयोग्यकात् समानयोग्यतागणात् समानयोग्यतापन्नगणात् मुक्तिगं स्वकर्तारं वरं करोति । अयोग्यकानिति द्वितीया वा । तथात्वे अयोग्यकमिति वचनव्यत्ययः कार्यः । ननु साम्ये आधिक्यायोगः सति चाधिक्ये न साम्यं तथा च कथं समानयोग्यत्वगणादाधिक्यमुच्यत इति चेत् उच्यते । अपरोक्षज्ञानव्यङ्ग्यप्रचुरानन्देन साम्यं तदुत्तरभाविराजसूयादिप्रयत्नाधिक्येनानन्दातिशय इत्युभयोपपत्तेः । तदुक्तं बृहदारण्यकभाष्ये- 'मनुष्याणां योग्यतया स्वसमेभ्यः प्रयत्नादाधिक्यं मुक्तौ प्राप्तुं शक्यत इत्यत समृद्धमित्युक्तम्' (६.३.ज्योतिर्ब्राह्मण) इति । ऋग्भाष्यटीकायां च-(सू-३५.मं-११) 'रक्षाधिकान् ब्रूहि मोघो समेभ्य' इत्यत्र हीनेभ्योऽधिकत्वस्य सिद्धत्वात् अधिकेभ्यस्त्वप्राप्यत्वात् 'समेभ्यः' इत्युक्तम् । एतद्धटनं चान्यत्र द्रष्टव्यमित्युक्तम् । नन्वस्तु मनुष्याणां ऋषीणां राज्ञां च समानादाधिक्यं तेषां वृद्धिहासभाक्त्वात् । बृहद्भाष्ये मनुष्यपदप्रयोगाच्च । 'रक्षा चनो अधि च ब्रूहि देव' इति ऋचो हिरण्यस्तूपवाक्यत्वाच्च देवानामेतत्कथं स्यात् । 'वृद्धिहासौ विमुक्तिगौ । नृणां सुराणां मुक्तौ तु सुखं क्लृप्तं यथाक्रमम्' (ब्रह्मसूत्राणुभाष्यम्-३.७) इत्युक्तेरिति चेन्न । 'मरुतश्च समाः सर्वे सप्त तेषु प्रधानकाः' (भा.ता-१०.९४.११) इत्युक्तरीत्या मरुत्ववसुत्वादिसमानयोग्यतापन्नगणात् मुक्तिगं वरं करोतीत्युपपत्तेः । अत एव वक्ष्यति । 'पिता तव मरुद्गणोत्तमः'

(ता.नि-२१.७९) इति । न च मरुत्सु केषाञ्चिन्मुक्तावाधिक्यं क्लृप्तं कथं राजसूयेन तल्लाभ इति वाच्यम् । क्लृप्तस्यापि साधनव्यङ्ग्यत्वात् । न च युधिष्ठिरस्य राजसूयेन कथं समानादाधिक्यमिति वाच्यम् । 'द्वित्रिपञ्चादिगुणतः स्वस्वजात्या परस्परम्' (बृ.भा.३.५.अव्याकृतब्राह्मणम्) इत्युक्तरीत्या देवताजात्यां वरुणाद्यपेक्षया आधिक्यस्य विवक्षितत्वात् । अत एव वक्ष्यति- 'भवद्भिरप्यवाप्यते स्वयोग्यताऽमुनाऽखिला' (ता.नि-२१.८२) इति । यद्वा राजसूयेन युधिष्ठिरस्य मुक्तौ समेभ्यः आधिक्यं लभ्यत एव । न च साम्यविरोधः । सूर्यादीनां साधनान्तरेण साम्यसम्पादनोपपत्तेः । यद्वा इन्द्रगणे युधिष्ठिरस्य प्रविष्टत्वेन तत्प्रविष्टयोः भीमार्जुनयोः राजसूयित्वेन तदुत्तमत्वस्य वक्तुमशक्यत्वात् इतरेन्द्राख्यसमानयोग्यतागणाधिक्योपपत्तेः । नकुलसहदेवयोरप्येवमिति । तदुक्तमैतरेयभाष्ये- 'य एवं वेत्ति तद्विष्णुं उपास्ते चाऽपरोक्षतः । स मुक्तः समजातीनां आश्रयश्च भविष्यति । स्वजातीनामुत्तमत्व-पदयोग्या हि ये सुराः । ब्रह्मेन्द्राद्यास्ते हि योग्याः साक्षादस्मिन्नुपासने'(प्रघ-२.अ-२.) इति । तथा च न काचिदनुपपत्तिरित्यलं प्रपञ्चेन ।।७६-८३।।

**अतिविशद–** 'अयोग्यकान्महापदे विधातुरेष हि क्रतुः । समानयोग्यतागणात् करोति मुक्तिगं वरम् ।।' इत्येकः पाठः । 'अयोग्यकं महापदम्' इति द्वितीयः । आद्यपाठे- 'अयोग्यकान्महापदे' इत्यत्र अयोग्यकादिति पदच्छेदः । तेन नान्वयानुपपत्तिः । तथाच विधातुर्महापदे अयोग्यकात् समानयोग्यतागणात् एषः क्रतुः मुक्तिगं वरं करोतीति योजनोक्ता भवति इति । सुराणां सुखस्य क्लृप्तत्वात् कथं मुक्तिगं वरं करोतीत्युच्यत इत्यतः एतत्समानेन राजसूयाकरणेऽपि एतत्समानान्यधर्मकरणात् क्लृप्तत्वमुपपन्नमिति केचित् । राजसूयादिना उन्नाहाङ्गीकारात् क्लृप्तत्वानुपपत्तिरित्यपरे । एवं 'तेषां वृद्धिः स्यात् पाण्डवार्थे हतानां मोक्षेऽपि सौख्यस्य' (ता.नि-१५.१३) इत्यस्यार्थो ज्ञातव्य इति कुत्रापि नानुपपत्तिरिति द्वितीयः सुकर एव ।। ७६-१२० ।।

**भावचन्द्रिका– ।। अयोग्यकादिति ।।** अयोग्यकगणात् समानयोग्यतागणात् अयोग्यम्, राजसूय-कर्तारमिति शेषः । ननु यदि समं तर्हि श्रैष्ठ्यं स्यादिति चेन्न । सजतीयविजातीय- व्यावृत्तिः लक्षणस्य प्रयोजनमिति तत्सर्वस्यापि वस्तुत्वेन साजात्ये तदसाधारणधर्मेण वैजात्ये उभयाभाव इत्याशङ्क्य लक्ष्यतावच्छेदकाधिकवृत्तिधर्मेषु न्यूनधर्मेण साजात्यं तदभावे वैजात्यं चाङ्गीकृतम् । एवञ्च प्रकृतेऽपि ये इन्द्राद्याः स्वरूपोत्तमं तन्निष्ठइन्द्रत्वाद्यतिरिक्तवृत्तिषु देवचेतनोत्तमत्वादिषु देवत्वेन समानानां सकाशात् इन्द्रादीनामुत्तमत्वं भवतीति भावः । नच यत्समानत्वेन पूर्तेर्योग्यतापदवैयर्थ्यमिति वाच्यम् । योग्यतास्वभावत्वक्ष्यमाणत्वात् । औपाधिकसाम्यव्युदासाय योग्यतापदम् । ननु सिद्धस्वभावस्य किं साधनापेक्ष इति चेत् । अभिव्यक्त्यर्थत्वात् । अत एव वक्ष्यति 'भवद्भिः' इति । अत एवाचार्यैरन्यत्र- 'समानानां भवति' इति ऐतरेयवाक्यावसरे– 'स मुक्तः सजातीनामाश्रयश्च भविष्यति ।' सजातीनां देवत्वादिसमानजातीनां मध्ये उत्तमत्वमेव पदं उत्तमत्वपदं तद्योग्या युक्ताः ।। ७६-७९ ।।

**भारतश्री–** महापदे चतुर्मुखपदे । 'मुक्तिगं वरम्' इति समुदायैकवचनम् । अयोग्यकान् इति वहुवचनात् । वरं आनन्दातिशयवन्तम् ।। ७६ ।।

**चट्टि–** ब्रह्मपदायोग्येन साङ्गमाचरितोऽपि क्रतुः ब्रह्मपदं न प्रापयति चेत् तर्हि तस्य वैफल्यप्रसङ्ग इत्यत आह– **अयोग्यकानिति** ।। एषः क्रतुः राजसूयः विधातुश्च चतुर्मुखस्य महापदे महांश्च तत्पदं च उत्कृष्टपदमित्यर्थः । तस्मिन्नयोग्यकान् योग्यतारहितान् पुरुषान् पारमेष्ठ्यं पदं न नयेदिति पूर्वेणान्वयः । ननु ब्रह्मपदयोग्येन साङ्गमाचरितोऽप्ययं क्रतुः ब्रह्मपदं न प्रापयति चेत्? तर्हि वैफल्यप्रसङ्ग इत्यत आह– **समानयोग्यतागणादित्यादिना** ।। एषः क्रतुः मुक्तिगं राजसूयकर्तारं मुक्तिस्थितं पुरुषं वरं श्रेष्ठं करोति । किमपेक्षयेत्यत आह– **समानेति** ।। समानयोग्यतावत् पुरुषगणात् वरं करोतीत्यर्थः । 'अयोग्यकम्' इति पाठे तु ननु साङ्गानुष्ठितेनापि राजसूयेन ब्रह्मपदप्राप्त्यभावे साङ्गात् वैदिककर्मणः फलावश्यम्भावि-नियमादिति नियमभङ्गप्रसङ्ग इत्यत आह– **अयोग्यकमिति** ।। एषः क्रतुः विधातुर्महापदे अयोग्यकं योग्यतारहितं मुक्तिगं मुक्तिस्थितं पुरुषं समानयोग्यतागणात् परं करोति । तथा च पूर्वं सर्वेऽपि समाना एव । तन्मध्ये केनचित् ब्रह्मपदायोग्येन राजसूयः कृतश्चेत् तं समाननां मध्ये मुक्तौ श्रेष्ठं करोतीति भावः ।। ७६ ।।

**पुरा तु मुक्तितोऽधिकं स्वजातितः करोति च ।**
**अतस्त्रिशङ्कुपुत्रको नृपानतीत्य वर्तते ।।७७।।**

**वादिराजतीर्थीया–** पुरा तु मरणात्प्राक् । स्वजातितः अधिकं करोति स्वजातौ अभ्युत्थानादिना सत्कारयोग्यं करोति । चशब्देन समानपदस्थितात् उच्चशक्रादिपदस्थितं करोतीति सूचितम् ।।७७-७९।।

**मधुसूदनीया–** ।। **पुरा त्विति** ।। मुक्तितः पुरा मोक्षप्राप्तेः प्राक् स्वजातितः अधिकं करोति । अयं भावः । येन राजसूयः क्रियते तं पुरुषं मुक्तेः प्राक् स्वयं यज्जातीयः तज्जातावधिकं करोति । मुक्त्यनन्तरं तु मुक्तौ स्वसमानेषु श्रेष्ठं करोतीति । उपसंहरति– **अत इति** ।। त्रिशङ्कुपुत्रकः त्रिशङ्कोः त्रीणि शङ्कूनि पित्रपरितोषणगुरुगोहननाप्रोक्षितान्नभक्षणलक्षणानि यस्य स तथोक्तः तस्येत्यर्थः । पुत्रो हरिश्चन्द्रः । तथाच तादृशदोषित्रिशङ्कुपुत्रत्वेऽपि हरिश्चन्द्रस्य राजसूयकारित्वात् आधिक्यं प्राप्तं इति सूचयितुं 'त्रिशङ्कुपुत्रः' इत्युक्तम् । अतः राजसूयकारित्वादित्यर्थः । तथाचोक्तम्- 'पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ।। एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः । त्रिशङ्कुरिति होवाच वसिष्ठो मुनिसत्तमः ।।' इति हरिवंशे (१.१३.१८-१९)।। ७७ ।।

**वरदराजीया–** यतः मुक्तिप्राप्तेः पुरा संसारदशायां स्वजातितः स्वसमानयोग्यतायुक्तात् अधिकं करोति । अतो हेतोः त्रिशङ्कुपुत्रको हरिश्चन्द्रो नृपान् स्वसमानयोग्यतायुक्तान् अतीत्य अतिक्रम्य वर्तते ।।७७।।

**जनार्दनीया–** मुक्तितः पुरा मुक्तिप्राप्तेः पूर्वं स्वजातितः स्वसमानयोग्यतागणात् अधिकं उत्तमलोकं प्राप्तं करोति यतः अतः त्रिशङ्कुपुत्रः हरिश्चन्द्रः नृपान् स्वसमानयोग्यतायुक्तान् अतीत्य अतिक्रम्य वर्तते । यमलोकस्थान् नृपानतिक्रम्य स्वर्गे तिष्ठतीति भावः ।।७७।।

**ताम्रपर्णीया–** मुक्तितः पुरा तु राजत्वादिस्वजातितोऽधिकं करोति । अतस्त्रिशंकुपुत्रक इत्यन्वयः।।७७।।

**भारतश्री–** त्रिशङ्कुपुत्रकः हरिश्चन्द्रः ।। ७७-८१ ।।

**चट्टि–** मुक्तितः पुरा तु मोक्षप्राप्तेः प्राक् स्वजातितः अधिकं करोति । अयं भावः । येन राजसूयः क्रियते तं पुरुषं मुक्तेः पूर्वं स्वयं यज्जातियस्तज्जातावधिकं करोति । मुक्त्यनन्तरं मुक्तौ स्वसमानेषु श्रेष्ठं करोति च । उपसंहरति– **अत इति** ।। त्रिशङ्कुपुत्रः त्रीणि शङ्कूनि पित्रपरितोषणगुरुगोहननाप्रोक्षितान्न-भक्षणलक्षणानि यस्य स तथोक्तः तस्येत्यर्थः । पुत्रो हरिश्चन्द्रः अतः राजसूयकारित्वात् नृपान् स्वसमानयोग्यतायुक्तान् अतीत्यातिक्रम्य वर्तते यमलोकस्थान् नृपानतिक्रम्य स्वर्गे तिष्ठतीति भावः । तथाचोक्तम्- 'पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः ।। एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः । त्रिशङ्कुरिति होवाच वसिष्ठो मुनिसत्तमः ।।' इति हरिवंशे ।।७७।।

**सुरांशकोऽपि ते पिता विना हि राजसूयतः ।**
**न शक्ष्यति त्रिशङ्कुजाद् वरत्वमाप्तुमद्य तु ।।७८।।**

**व्यासतीर्थीया–** ननु सुरांशत्वात् मत्पिता राजसूयाकरणेऽपि हरिश्चन्द्रमतीत्य वर्तयितुं शक्तः । कथं तदवरो वर्तते? इत्यतो निमित्तं वक्तुमनुवदति– **सुरेति** ।। ७८ ।।

**मधुसूदनीया–** अद्य तु यावत्पर्यन्तं राजसूयो न क्रियते तावत्कालपर्यन्तमित्यर्थः । यत्तु 'अद्य संसारावस्थायां न शक्ष्यति । शक्तो न भविष्यति' इति वरदराजीयव्याख्यानम् । तन्न । 'राजसूयतः त्रिशङ्कुजाऽधिको भवान् । अत्राप्स्यति स्वकां तनुम्'(८१) इत्युत्तरग्रन्थे संसारावस्थायामेव राजसूयकरणे हरिश्चन्द्राऽधिक्यप्राप्तिकथनात् तद्विरोधात् ।। ७८ ।।

**वरदराजीया–** ननु पाण्डोः देवत्वात् स्वत एव हरिश्चन्द्रमतीत्य वृत्तिरस्त्वित्यत आह– **सुरांशक इति** ।। ते तव पिता पाण्डुः सुरांशकोऽपि मरुत्स्वरूपत्वेन देवांशोऽपि राजसूयात् विना त्रिशङ्कुजाद्वरत्वं श्रेष्ठत्वं आप्तुं प्राप्तुं अद्य संसारावस्थायां न शक्ष्यति शक्तो न भविष्यति ।। ७८ ।।

**अनन्तभट्टीया–** पाण्डोः देवत्वेन हरिश्चन्द्राधिकस्यापि तदनतिक्रमे निमित्तमाह– **सुरेति** ।।७८।।

**जनार्दनीया–** राजसूयतः राजसूयं विना त्रिशङ्कुजाद्वरत्वमाप्तुं अद्य न शक्ष्यति समर्थो न भविष्यति ।।७८।।

**चट्टि–** ननु पार्थिवत्वात् स्वत एव हरिश्चन्द्रमतीत्य वृत्तिरस्त्वित्यत आह– **सुरांशक इति** ।। ते तव पिता पाण्डुः सुरांशकोऽपि मरुत्स्वरूपत्वेन देवांशोऽपि राजसूयतः राजसूयं विना त्रिशङ्कुजाद् वरत्वमाप्तुं अद्य तु इदानीमेव न शक्ष्यति समर्थो न भविष्यति । किन्तु कालान्तरे राजसूयकरणात् समर्थो भविष्यतीति भावः ।। ७८ ।।

**तपश्चरन् समागते शचीपतौ पिता तव ।**
**मरुद्गणोत्तमः पुरा नतूत्थितः शशाप सः ।।७९।।**

**व्यासतीर्थीया–** निमित्तमाह– **तपश्चरन्निति** ।। ७९-८२ ।।

**मधुसूदनीया–** ननु मानुषत्वेन जातानां देहिनां मरणानन्तरं स्वरूपप्राप्तिः मत्पितुरपि देवांशत्वात् मरणानन्तरं मूलरूपप्राप्तिसम्भवात् । मूलरूपस्य च हरिश्चन्द्रादप्यधिकत्वेन त्रिशङ्कुजाद्वरत्वं आप्तुं न शक्ष्यति इति कथमुच्यते इत्यतो मूलरूपप्राप्तिरेव नास्तीति वक्तुं तत्र तावन्निमित्तमाह– **तपश्चरन्नित्यादिना** ।। ७९ ।।

**वरदराजीया–** तत्र कारणमाह– **तप इति** ।। तव पिता पाण्डुः तपश्चरन् शचीपतौ इन्द्रे समागते, स्वसमीपमिति शेषः । नोत्थितः अभ्युत्थानादिकं न कृतवान् । स इन्द्रः शशाप शापं दत्तवान् ।।७९।।

**अनन्तभट्टीया–** मरुत् गणोत्तममिति ।। ७९-८० ।।

**जनार्दनीया–** समर्थः कुतो न भविष्यतीत्यत आह– **तप इति** ।। न उत्थितः अभ्युत्थानं न चकारेत्यर्थः । स इन्द्रः शशाप ।। ७९ ।।

**चट्टि–** इदानीमेव कुतः समर्थो न भविष्यति इत्यत आह– **तप इति** ।। पुरा मरुद्गणोत्तमः तव पिता तपश्चरन् शचीपतौ इन्द्रे समागते सति नोत्थितः अभ्युत्थानं न चकारेत्यर्थः । सः इन्द्रः शशाप ।। ७९ ।।

**व्रजस्व मानुषीं तनुं ततो मृतः पुनर्दिवम् ।**
**गतोऽपि न स्वकां तनुं प्रवेष्टुमत्र नेशसे ।।८०।।**

**वेदाङ्गतीर्थीया–** शापप्रकारमाह– **व्रजस्वेति** ।। मानुषीं तनुं व्रजस्व । ततः मानुष्यप्राप्त्यनन्तरं मृतः पुनर्दिवं गच्छसीति क्रियाध्याहारः कर्तव्यः । गतोऽपि पुत्रकगुणादिकारणविशेषवशाद् दिवं गतोऽपि अत्र दिवि स्वकां तनुं प्रवेष्टुं नेशसे न समर्थो भविष्यसि ।। ८० ।।

**वादिराजतीर्थीया–** 'प्रवेष्टुमत्र नेशसे' इत्यत्र 'ईश ऐश्वर्ये' इति धातोः, शब्विकरणेऽपि सत्वात् ईशसे इति साधुः ।। ८० ।।

**सत्याभिनवीया–** तत्रैव 'व्रजस्व मानुषीं तनुं..' इति श्लोके अत्र इत्यस्य अस्मादनुत्थानादित्यर्थः । एतेन अत्रेत्येतत् व्यर्थमिति दूषणम् निरस्तम् । दिवंगतोऽपि स्वकां तनुं प्रवेष्टुं नेशसे इत्यादिशापेऽनुत्थानमात्रं निमित्तं न भवति किन्तु निमित्तान्तरं चास्ति इति भ्रान्तिवारणायानुत्थानस्यैव निमित्तत्वं नान्यस्येति वक्तुं अत्र इत्युक्तं इति स्वीकरणात् ।। ८०-८१ ।।

**मधुसूदनीया–** दिवं न, गच्छतीति शेषः । गतोऽपि, यत्किञ्चित्कारणविशेषादिति शेषः ।।८०-८३।।

**वरदराजीया–** किमिति? मानुषीं तनुं देहं व्रजस्व । ततस्तदनन्तरं मृतः दिवङ्गतोऽपि पुनः स्वकां तनुं परावहं मरुत्स्वरूपं प्रवेष्टुं अत्र दिवि नेशसे शक्तो न भवसि ।। ८० ।।

**जनार्दनीया–** किमिति? मानुषीं तनुं व्रजस्व । ततः मनुष्यदेहप्राप्त्यनन्तरं मृतः सन् पुनर्दिवं न गमिष्यसि इति क्रियाध्याहारः । गतोऽपि पुत्रकगुणादिकारणविशेषात् दिवङ्गतोऽपि अत्र दिवि स्वकां तनुं मरुत्स्वरूपं पुनः प्रवेष्टुं नेशसे न समर्थो भविष्यसि ।।८०।।

**भावचन्द्रिका–** 'दिवम्' इत्युक्त्या यमसभा स्वर्गस्थैरविवक्षिता इति ज्ञायते । *..पश्यतां नाम ।। ८०-११७ ।।

**चट्टि–** किमिति? मानुषीं तनुं व्रजस्व । ततः मानुष्यदेहप्राप्त्यनन्तरं मृतः सन् पुनर्दिवं न, गच्छसि इति शेषः । गतोऽपि यत्किञ्चित्कारणविशेषाद् दिवंगतोऽपि अत्र दिवि स्वकां तनुं मरुत्स्वरूपं पुनः प्रवेष्टुं नेशसे समर्थो न भविष्यसि ।। ८० ।।

> **तदाऽधिकस्त्रिशङ्कुजो भविष्यतु त्वदित्यथ ।**
> **क्षमापितश्च वासवो जगाद राजसूयतः ।**
> **त्रिशङ्कुजाधिको भवानवाप्स्यति[१] स्वकां तनुम् ।।८१।।**

**वेदाङ्गतीर्थीया–** तदा स्वमूलरूपप्रवेशाभावदशायाम् । त्वत् त्वत्तः । अथ शापप्राप्त्यनन्तरम् ।।८१।।

**वादिराजतीर्थीया–** त्रिशङ्कुजः हरिश्चन्द्रः ।। ८१ ।।

**वरदराजीया–** तदा तस्यां दशायां त्रिशङ्कुजः त्वत्सकाशादधिको भविष्यति । अथानन्तरं क्षमापितः प्रसन्नीकृतः स वासवो जगाद । किमिति? राजसूयतः राजसूययज्ञकरणसकाशात् त्रिशङ्कुजाधिको भूत्वा स्वकां तनुं मूलरूपमवाप्स्यति ।। ८१ ।।

**अनन्तभट्टीया–** अनुत्थाने निमित्तं सूचयति–..* त्वत् त्वत्तः.. राजसूयतः, कारितादिति शेषः ।।८१

---

१. 'अवाप्स्यसि' इति चट्टीपाठः ।

**जनार्दनीया—** तदा स्वस्वरूपप्रवेशाभावदशायां त्वत् त्वत्तः त्रिशङ्कुजः अधिको भविष्यतीति । अथ शापप्राप्त्यनन्तरं क्षमापितो वासवो जगाद । किमिति? राजसूयतः राजसूयकरणात् भवान् त्रिशङ्कुजाधिकः सन् स्वकां तनुं मूलस्वरूपं अवाप्स्यति प्राप्स्यति यतः ।।८१।।

**चट्टि—** तदा त्रिशङ्कुजो हरिश्चन्द्रः त्वत्सकाशात् अधिको भविष्यतीति शशापेति पूर्वेणान्वयः । अथ शापप्राप्त्यनन्तरं क्षमापितो वासवः जगाद । किमिति? राजसूयतः राजसूयकरणेन भवान् त्रिशङ्कुजाधिकस्सन् स्वकां तनुं मूलरूपमवाप्स्यसि प्राप्स्यसि ।।८१।।

**अतः सुकार्य एव ते युधिष्ठिर क्रतूत्तमः ।**
**भवद्भिरप्यवाप्यते स्वयोग्यताऽमुनाऽखिला ।।८२।।**

**वादिराजतीर्थीया—** 'स्वयोग्यतामुनाऽखिला' इत्यत्र स्वयोग्यता स्वस्वपदवीयोग्यता ।। ८२-८३ ।।

**सत्याभिनवीया—** तत्रैव 'भवद्भिरप्यवाप्यते..' इत्यस्ति । तस्यार्थः- अमुना क्रतूत्तमेन भवद्भिरपि अखिला स्वयोग्यता योग्यतानुसारिफलमवाप्यते इत्यर्थः । एतेन अखिलस्वयोग्यतानुसारिफलमवाप्यते इति वक्तव्यम् । अखिला स्वयोग्यता अवाप्यते इति कथनमनुपपन्नमिति दूषणं प्रत्युक्तम् । अखिला स्वयोग्यतेत्यनेन अखिलस्वयोग्यतानुसारिफलस्यैव ग्रहणात् ।। ८२-८६ ।।

**वरदराजीया—** एवं श्रीकृष्णो राजसूयस्येह परत्र च महाफलत्वेनावश्यकर्तव्यत्वमुक्त्वा निगमयति– **अत इति** ।। हे युधिष्ठिर! क्रतूत्तमो राजसूयः सुकार्य एवावश्यं कर्तव्य एव । न केवलं पाण्डोरेवायं क्रतुः फलप्रदः किन्तु भवतामपि फलप्रद इत्याह– **भवद्भिरिति** ।। अमुना क्रतुना भवद्भिरपि अखिला पूर्णा योग्यता स्वस्वयोग्यतानुसारिफलमवाप्यते ।। ८२ ।।

**अनन्तभट्टीया—** अमुना क्रतुना अवाप्यते ।।८२।।

**जनार्दनीया—** अतः ते त्वया सुकार्य एव विधिपूर्वकं कर्तव्य एव । अमुना राजसूयेन भवद्भिरपि युष्माभिरपि अखिला स्वयोग्यता सम्पूर्णयोग्यताऽवाप्यते ।। ८२ ।।

**भारतश्री—** स्वयोग्यता, मुक्ताविति शेषः ।। ८२-८७ ।।

**चट्टि—** यतः अतः हे युधिष्ठिर! ते त्वया क्रतूत्तमः सुकार्य एव विधिपूर्वकं कर्तव्य एव न केवलं पाण्डोरेव फलप्रदोऽयं क्रतुः किन्तु भवतामपि फलप्रद इत्याह– **भवद्भिरिति** ।। अमुना राजसूयेन भवद्भिरपि युष्माभिरपि अखिला पूर्णा स्वयोग्यतानुसारिफलमप्यवाप्यते ।। ८२ ।।

**उदीर्य चैवमीश्वरः क्रतोरमुष्य योग्यता ।**
**वृकोदरे यतोऽखिला चतुर्मुखत्वयोग्यतः ।।८३।।**

**व्यासतीर्थीया–** 'सुकार्य एव' इत्युक्त्या विरुद्ध 'क राजसूयं' इत्यादेः वक्ष्यमाणस्य कृष्णवचसः तात्पर्यमाह– **उदीर्येत्यादिना** ।। अखिला सम्पूर्णा ।। ८३-८५ ।।

**वेदाङ्गतीर्थीया–** ईश्वरः एवमुदीर्य युधिष्ठिरं वचो जगाद । किं कर्तुम्? अमुष्य क्रतोः अखिला योग्यता सम्पूर्णा योग्यता मुख्याधिकारित्वं वृकोदरे, अस्तीति शेषः । चतुर्मुखत्वयोग्यतया मुख्याधिकारित्वात्।।८३।।

**वरदराजीया–** एवं सफलत्वेऽपि भारते राजसूयस्याशक्यानुष्ठानत्वमुक्त्वा युधिष्ठिरस्य क्रतोः निवृत्तिरपि उदिता कृष्णेन । कुतः इत्यतस्तात्पर्यमाह– **उदीर्येत्यादिना** ।। एवं सफलत्वमुदीर्य, पुनरिति वचो जगादेति सम्बन्धः । कुतः? अमुष्य क्रतोः राजसूयस्य सम्बन्धिनी योग्यताऽखिला पूर्णा, मुख्याधिकार इति यावत् । वृकोदरेऽस्ति । तदपि कुतः? चतुर्मुखत्वयोग्यतः उत्तरब्रह्मकल्पे वृकोदरस्य चतुर्मुखत्वयोग्यत्वादित्यर्थः ।। ८३ ।।

**अनन्तभट्टीया–** 'क राजसूयं' इत्यादेः कृष्णवचसस्तात्पर्यमाह– **उदीर्येति** ।। क्रतोः योग्यता क्रतुकरणे मुख्याधिकारित्वमित्यर्थः ।।८३।।

**जनार्दनीया–** ईश्वरः एवं पूर्वमुक्तमुदीर्य, युधिष्ठिरं प्रति तु पुनः इदं वक्ष्यमाणं वचो जगाद । किं कर्तुम्? अमुष्य क्रतोः राजसूयस्य अखिलयोग्यता मुख्याधिकारित्वं वृकोदरे, तिष्ठतीति शेषः । यतः मुख्याधिकारित्वे हेतुमाह– **चतुर्मुखत्वेति** ।। चतुर्मुखत्वयोग्यतः भाविचतुर्मुखपदाधिकारयोग्यत्वात् ।।

**चट्टि–** ईश्वरः श्रीकृष्णः एवं पूर्वोक्तमुदीर्य, युधिष्ठिरं प्रति तु पुनः इदं वक्ष्यमाणं वचो जगाद । किं कर्तुम्? अमुष्य क्रतोः राजसूयस्य अखिलायोग्यता मुख्याधिकारित्वं यतः वृकोदरे, तिष्ठतीति शेषः । मुख्याधिकारित्वे हेतुमाह–**चतुर्मुखेति** ।।चतुर्मुखत्वयोग्यतःभाविचतुर्मुखपदाधिकारयोग्यत्वात् ।।८३।।

**ततः सुपूर्णमस्य तत् फलं विधातुमञ्जसा ।**
**जगाद वायुवाहनो वचो युधिष्ठिरं त्विदम् ।।८४।।**

**वेदाङ्गतीर्थीया–** अस्य वृकोदरस्य तत् फलं अञ्जसा पूर्णं विधातुम् ।।८४।।

**वादिराजतीर्थीया–** भीमसेने अधिकप्रीतिसूचनाय 'वायुवाहनः' इत्युक्तम् । जीवानामुत्क्रमणसमये वायुर्वाहनं यस्य इति विग्रहः । 'प्राज्ञेनात्मानान्वरूढ उत्सर्जयाति' इति श्रुतेः । 'दक्षिणस्कन्धे परमात्मानम्, वामस्कन्धे जीवञ्चारोप्य देहाद्देहान्तरं गच्छति' इति प्रसिद्धेः वायुवाहन इति भगवतः पुण्यनाम । 'वरदो वायुवाहनः' इति सहस्रनामसु पाठाच्च ।। ८४-८६ ।।

**मधुसूदनीया–** वायुवाहनः वायुर्वाहनं यस्य स तथोक्तः । विष्णुवाहनत्वन्तु जीवस्य देहोत्क्रमणकाले प्रसिद्धम् । 'आरुह्य वायुसुतम्' (ता.नि-८.१) इत्यादिना रामावतारेऽपि प्रसिद्धम् ।[1] यत्तु 'वायुवाहनः

१. श्लोकारम्भमारभ्य एतावत्पर्यन्तं वाक्यानि क्वचित् कोशेषु नोपलभ्यते ।

वायोरपि प्रणेता' इति वरदराजीयव्याख्यानम् । तन्न । षष्ठीतत्पुरुषाङ्गीकारे वाहनशब्दस्य नपुंसकलिङ्गत्वेन वायुवाहनमित्यापातात् । 'सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणम् । परम्परावाहनं यत्तद्वैनीतकम्..।।' इत्यमरसिंहाद्यैः वाहनशब्दस्य नपुंसकलिङ्गे च अभिधानात् ।। ८४-९३ ।।

**वरदराजीया–** ततः सुपूर्णं मुख्यं तत्फलं राजसूयफलं चतुर्मुखत्वप्राप्तिरूपं वृकोदरे अञ्जसा विधातुं जगाद इति सम्बन्धः । वायुवाहनः वायोरपि प्रणेता ।।८४।।

**अनन्तभट्टीया–** वायुवाहनः वायुप्रणेता ।।८४।।

**जनार्दनीया–** ततः अस्य भीमस्य सुपूर्णफलं ब्रह्मपदाधिकाररूपफलं अञ्जसा विधातुम् । वायुवाहनो वायुप्रणेता ।। ८४ ।।

**ताम्रपर्णीया–** ।। **वायुवाहन इति**।। कृष्णावतारे भगवतः सर्वदा वाय्वारूढतयैवावस्थानादिति भावः । तदुक्तं भगवत्पादैर्यमकभारते– 'सोऽवनि मध्ये रंगत्वरिदरयुग्वालरूपमध्येरं गन्' (श्लो-१३) इति । व्याख्यातं च कृष्णलीलाप्रकाशिकायाम्- 'स चारिदरयुग्विष्णुः बालरूपं समीरणम् । अधिरुह्य समन्ताद् गच्छन्' इति । स्कान्दे च- 'वैकुण्ठाधिपतेर्वायुः कचिद्वाहनतां व्रजेत् । कदाचिदङ्गतां याति कदाचिच्छत्त्रतां व्रजेत्' इति । अनेन वायोर्भगवत्परमप्रियत्वात् तस्य सुपूर्णफलं विधातुं जरासुतवधाय जगामेत्युक्तं भवति ।। ८४ ।।

**चट्टि–** वायुवाहनः वायुः वाहनं यस्य स तथोक्तः । वायोः वाहनत्वं तु जीवस्य देहोत्क्रमणकाले प्रसिद्धम् । 'आरुह्य वायुसुतम्' इत्यादिना श्रीरामावतारेऽपि प्रसिद्धम् । ततोऽस्य भीमस्य सुपूर्णं तस्य राजसूयस्य फलं ब्रह्मपदाधिकाररूपं अञ्जसा विधातुं जगादेति सम्बन्धः ।। ८४ ।।

**[1]क राजसूयमद्य ते जरासुते तु जीवति ।**
**जयेत् क एव तं युधा मृतो न योऽपि सीरिणा ।।८५।।**

**वेदाङ्गतीर्थीया–** केत्याक्षेपे । क एव जयेत्, न कोऽपीति भावः ।।८५।।

**वरदराजीया–** तत्किं वच इत्यत आह– **क राजसूयमिति** ।। अद्य ते राजसूयता क? जरासुते जीवति सति तव राजसूयः कथं सेत्स्यति? ननु जरासन्धजये सेत्स्यति इत्यत आह । युधा युद्धेन तं जरासन्धं क एव जयेत् न कोऽपीत्यर्थः । कुतः? येन कारणेन सीरिणा बलभद्रेणापि न मृतः हन्तुमशक्यः ।।८५।।

**अनन्तभट्टीया–** केत्याक्षेपे । मृतः हत इत्यर्थः ।। ८५ ।।

**जनार्दनीया–** कृष्णः किमिति जगादेत्यत आह– **केति** ।। क एव कः पुरुषः युधा युद्धेन तं जयेत् । न कोऽपीत्यर्थः । तत्कुतः? यो मागधः सीरिणापि बलभद्रेणापि न मृतः न मारितः । बलोऽपि हन्तुं न समर्थ इति भावः ।। ८५ ।।

---

१. 'न तु शक्यं जरासन्धे जीवमाने महाबले । राजसूयस्त्वयाऽवाप्तुमेषा राजन् मतिर्मम ।।' सभापर्वणि-१४.७२.

**ताम्रपर्णीया–** केत्याक्षेपे ।। ८५-८७ ।।

**चट्टि–** श्रीकृष्णः किमिति जगादेत्यत आह– **केति** ।। जरासुते जरासन्धे जीवति सति अद्य ते राजसूयं क कथं सिद्ध्यति । 'राजसूयं वाजिपेयम्' इत्यमरः । क एव कः पुरुषः युधा युद्धेन तं जयेत्, न कोऽपि इत्यर्थः । तत्कुतः? यो मागधः सीरिणा बलभद्रेणापि न मृतः, बलोऽपि तं हन्तुं न समर्थः इति भावः ।। ८५ ।।

**[1]विरिञ्चशर्ववाक्यतः समस्तलोकजायिनि ।**
**स्थिते तु ते जरासुते न सेत्स्यति क्रतूत्तमः ।।८६।।**

**व्यासतीर्थीया–** सेत्स्यति सिद्ध्यति ।। ८६-८७ ।।

**वरदराजीया–** कुत इत्यत आह– **विरिञ्चेति** ।। ब्रह्मशर्वयोः वररूपाद् वाक्यादित्यर्थः । अत एव समस्तलोकजायिनि जरासुते स्थिते सति क्रतूत्तमो न सेत्स्यति सिद्धिं न प्राप्स्यति ।। ८६ ।।

**अनन्तभट्टीया–** विरिञ्चशर्ववाक्यतः तद्वरतः इत्यर्थः । न सिद्धिं प्राप्स्यति ।।८६।।

**जनार्दनीया–** समस्तलोकजायिनि सर्वलोकजयनशीले । ते तव । न सेत्स्यति न सिद्ध्यति ।।८६।।

**चट्टि–** विरिञ्चवाक्यतः समस्तलोकजायिनि जयशीले जरासुते स्थिते सति ते तव क्रतूत्तमः न सेत्स्यति न सिद्ध्यति ।।८६।।

**[2]इतीरिते रथाङ्गिना जगाद धर्मनन्दनः ।**
**निवर्तितं मनः क्रतोरलं ममामुना प्रभो ।।८७।।**

**वादिराजतीर्थीया–** 'क्रतोरलं ममामुना' इत्यत्र अमुना त्वदीयवचनेन । त्वदुक्तजरासन्धाख्यकारणेन वा ।। ८७ ।।

**सत्याभिनवीया–** तत्रैव 'इतीरितो रथाङ्गिना जगाद..' इति श्लोके 'अलं ममामुना प्रभो' इत्यस्य हे प्रभो! मम अमुना यागेन साध्यं प्रयोजनं अलं मास्तु इत्यर्थः । एतेन अमुना इत्येतत् अनन्वितमिति दूषणं परास्तम् । साध्यं प्रयोजनमिति पदयोः शेषेणान्वयस्योक्तत्वात् ।। ८७-१०५ ।।

---

१. 'अथ मगधाधिपः कंसवधानन्तरं द्विषन्नेव यादवान् सदा पीडयामास । ते दुःखिताः कृष्णमूचुः ।। स च भीमार्जुनावाहूय संमन्त्रयामास । कृष्णः अनेन रुद्रः पूजितस्तत्प्रसादात् शस्त्रैरवध्यः परं केनापि प्रकारेण हन्तव्य इति ।।' पद्म.उ.का.२७२.१-२ । तथा सभापर्वणि.१४ 'स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः । अभिषिक्तः स राजन्यैः सहस्रैरुत चाष्टभिः ।। महादेवं महात्मानमुमापतिमरिन्दम । आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः ।।' ७४-७० ।।

२. 'इतीरितो रथाङ्गिना' इति सत्याभिनवतीर्थीयपाठः ।

**वरदराजीया–** रथाङ्गिना चक्रधरेण कृष्णेनेरिते सति हे प्रभो! क्रतोः सकाशात् मे मनो निवर्तितम् । अत एवामुना क्रतुना अलम् ।। ८७ ।।

**जनार्दनीया–** क्रतोः सकाशात् मनो निवर्तितम् । अमुना क्रतुना अलं पूर्णमित्यर्थः ।।८७।।

**चट्टि–** रथाङ्गिना चक्रधारिणा श्रीकृष्णेन इत्यरिते सति धर्मनन्दनः जगाद । किमिति? हे प्रभो! क्रतोः सकाशात् मे मनो निवर्तितम् । अमुना क्रतुना अलं पूर्णमित्यर्थः ।। ८७ ।।

**[१]बभूवुरेव भूभृतो न चाऽधिराज्यमापिरे ।**
**यदा च चक्रवर्तिनस्तदेदृशा न शत्रवः ।।८८।।**

**व्यासतीर्थीया–** आधिराज्यं सम्पूर्णराज्यम् ।। ८८-८९ ।।

**वेदाङ्गतीर्थीया–** आधिराज्यं चक्रवर्तित्वं नापिरे, बाहुल्येनेति शेषः । यदा चक्रवर्तिनः, ये केचनेति शेषः ।। ८८ ।।

**वादिराजतीर्थीया–** 'वभूवुरेव भूभृतः' इत्यत्र वहवो भूभृतो वभूवुरेव । ते अधिराज्यं नापिरे । राजसूयं कृत्वा राजस्सु आधिक्यं न लेभिरे इत्यर्थः । यदा चक्रवर्तिनः हरिश्चन्द्राद्याः अधिराज्यमापिरे तदा ईदृशाः शत्रवः न सन्ति स्म इत्यन्वयः ।। ८८-९१ ।।

**वरदराजीया–** भूभृतो भूपा वभूवुः पूर्वमभूवन् । अधिराज्यं सम्पूर्णं राज्यं नापिरे सामर्थ्याभावान्न आपुः । तर्हि हरिश्चन्द्रादिभिः अधिराज्यं कथं प्राप्तमित्यत आह– यदेति ।। यदा चक्रवर्तिनः अभूवन् तदा ईदृशाः जरासन्धसदृशाः ।। ८८ ।।

**अनन्तभट्टीया–** अधिराज्यं सम्पूर्णराज्यम् । मागधस्तु बलेन सर्वान् वशीकृत्य अधिराज्यं प्राप्तवान् । अतो राजसूयेन अलमिति भावः ।। ८८-८९ ।।

**लघ्वनन्तभट्टीया–** अधिराज्यं सम्पूर्णराज्यम् । अमुना अलम् ।।८८।।

**जनार्दनीया–** पुरा भूभृतो वभूविरे वभूवुः । आधिराज्यं चक्रवर्तित्वं पदं नापिरे न प्रापुः, प्राय इति शेषः । यदा च केचन चक्रवर्तिनः अभूवन्, तदा ईदृशाः जरासन्धसदृशाः शत्रवो न वभूवुः ।।८८।।

**ताम्रपर्णीया–** आधिराज्यं सम्पूर्णराज्यम् । मागधस्तु बलेन सर्वान् वशीकृत्य आधिराज्यं प्राप्तवानतो राजसूयेनालमिति भावः ।।८८।।

**भारतश्री–** चक्रवर्तिनः हरिश्चन्द्रादयः ।। ८८-९० ।।

**चट्टि–** पूर्वं भूभृतो राजानः वभूविरे वभूवुः । आधिराज्यं चक्रवर्तित्वं नापिरे न प्रापुः । यदा च केचन चक्रवर्तिनः अभूवन्, तदा ईदृशाः जरासन्धसदृशाः शत्रवो न वभूवुः ।। ८८ ।।

---

१. 'वभूविरे च' इति चट्टीपाठः ।

**इतीरितेऽमुनाऽवदत् प्रधानमारुतात्मजः ।**
**पदं चतुर्मुखस्य वा सुसाध्यमेव यत्नतः ॥८९॥**

**वेदाङ्गतीर्थीया–** चतुर्मुखस्य पदं वा पदमपि यत्नतः सुसाध्यमेव सम्यक् साधयितुं शक्यमेव ॥८९॥

**वरदराजीया–** अमुना युधिष्ठिरेण इतीरिते सति प्रधानमारुतस्य मुख्यप्राणस्यात्मजो भीमो अवदत् । किमिति? चतुर्मुखस्य ब्रह्मणोऽपि पदं यत्नतः प्रयत्नेन सुसाध्यमेव, अस्माकमिति शेषः ॥ ८९ ॥

**जनार्दनीया–** अमुना युधिष्ठिरेण । चतुर्मुखस्य पदं वा ब्रह्मपदमपि प्रयत्नतः सुसाध्यमेव सम्यक् साधयितुं शक्यमेव ॥ ८९ ॥

**ताम्रपर्णीया–** चतुर्मुखस्यापि ॥ ८९ ॥

**चट्टि–** अमुना युधिष्ठिरेणेतीरिते सति प्रधानमारुतात्मजः भीमः अवदत् । किमिति? चतुर्मुखस्य पदं वा ब्रह्मपदमपि यत्नतः सुसाध्यं सम्यक् साधयितुं शक्यमेव ॥ ८९ ॥

**निजानुभाववर्जिता हरेरनुग्रहोज्झिताः ।**
**[१]महाप्रयत्नवर्जिता जना न जग्मुरुन्नतिम् ॥९०॥**

**व्यासतीर्थीया–** पदमित्याद्युक्तं विवृणोति– **निजेति** ॥ अनुभावः सामर्थ्यम् ॥ ९०-९१ ॥

**वेदाङ्गतीर्थीया–** निजानुभाववर्जिताः स्वरूपसामर्थ्येन रहिताः ॥ ९० ॥

**वरदराजीया–** निजानुभावः स्वसामर्थ्यं तेन वर्जिताः रहिताः एतादृशाः ये पुरुषाः ते हरेरनुग्रहेण उज्झिताः रहिताः । हर्यनुग्रहरहिताः एतादृशा ये पुरुषाः ते उन्नतिं उत्कर्षं न जग्मुः न प्राप्नुवन् ॥ ९० ॥

**अनन्तभट्टीया–** चतुर्मुखस्य चतुर्मुखस्यापि दोषादिना तत्पदप्राप्त्यभावे हेतुमाह– **निजानुभावेति** ॥ स्वरूपयोग्यतारहिता इत्यर्थः । तत्र हेतुः– **हरेरिति** ॥ योग्याश्च सर्वेऽपि कुतो न प्राप्ता इत्यत आह– **महेति** ॥ ९०-१४४ ॥

**जनार्दनीया–** निजानुभाववर्जिताः स्वरूपसामर्थ्यरहिताः । उज्झिताः रहिताः । महाप्रयत्नवर्जिताः पुरुषस्य कर्तव्यमहाप्रयत्नरहिताः जनाः उन्नतिं उत्कर्षं न जग्मुः ॥९०॥

---

१. भीम उवाच– 'अनारम्भपरो राजा वल्मीक इव सीदति । दुर्बलश्चानुपायेन बलिनं योऽधितिष्ठति ॥ अतन्द्रितश्च प्रायेण दुर्बलो बलिनं रिपुम् । जयेत्सम्यक् प्रयोगेण नीत्याऽर्थानात्मनो हितान् । कृष्णे नयं मयि बलं जयः पार्थे धनञ्जये । मागधं साधयिष्यामः इष्टिं त्रय इवाग्नयः ॥ त्वद्बुद्धिबलमाश्रित्य सर्वं प्राप्स्यति धर्मराट् । जयोऽस्माकं हि गोविन्द येषां नाथो भवान् सदा ॥' इति कृष्णं प्रति वचनम् ॥

'अनिर्वेदेन दीर्घेण निश्चयेन ध्रुवेण च । देवदेवप्रसादाच्च क्षिप्रं फलमवाप्यते ॥' इति शान्तिपर्वणि-१५२.११८.

**ताम्रपर्णीया–** शेषादीनां तत्पदप्राप्त्यभावे हेतुमाह– **निजेति** ।। स्वरूपयोग्यतारहिता इत्यर्थः । तत्र हेतुः– **हरेरिति** ।। योग्याश्च सर्वे ऋजवः, इदानीमेव कुतो न योग्यता इत्यत आह– **महाप्रयत्नेति** ।। 'ऋजूनामेक एवास्ति परमोत्साहवर्जनम्' इत्यनुव्याख्याने (३.३.अनुवन्धाद्यधिकरणम्) ।।९०-९१।।

**चट्टि–** निजानुभाववर्जिताः स्वरूपसामर्थ्यरहिताः हरेरनुग्रहेणोज्झिताः रहिताः महाप्रयत्नेन वर्जिताः रहिताः जनाः उन्नतिं उत्कर्षं न जग्मुः ।। ९० ।।

**स्थिरोऽनुभाव एव मे महाननुग्रहो हरेः ।**
**प्रयत्नमेकमग्रतो निधाय भूतिमाप्नुमः ।।९१।।**

**वरदराजीया–** मे मम स्थिरो अचलः एवानुभावः सामर्थ्यमस्ति । हरेर्महानुग्रहश्चास्ति । इदानीं प्रयत्नमेकमेवाग्रतो निधाय भूतिमैश्वर्यमाप्नुमः ।। ९१ ।।

**जनार्दनीया–** मे स्थिरोऽनुभाव एव निश्चलसामर्थ्यं एव, अस्तीति शेषः । अनुग्रहोऽस्ति । भूतिं ऐश्वर्यम् ।। ९१ ।।

**अनन्तभट्टीया–** अनुभावः सामर्थ्यम् ।।९१।।

**भारतश्री–** अनुभावः सामर्थ्यम् ।।९१-९३।।

**चट्टि–** स्थिरो निश्चलः अनुभावः सामर्थ्यमेव मे, अस्तीति शेषः । हरेर्महाननुग्रहश्च अस्ति, एवं प्रयत्नमग्रतः निधाय भूतिमैश्वर्यमाप्नुमः ।। ९१ ।।

**इतीरितेऽमुना हरिः समुद्यमात् प्रधानतः ।**
**स्थिते हि यज्ञकारणे वृकोदरे [१]जगाद ह ।।९२।।**

**व्यासतीर्थीया–** प्रधानतः समुद्यमात् ।। ९२-१०१ ।।

**वेदाङ्गतीर्थीया–** अमुना वृकोदरेण प्रधानतः समुद्यमात् प्रधानप्रयत्नात् इतीरिते सति, तस्मिन् वृकोदरे यज्ञकारणभूते स्थिते सत्येव ।। ९२ ।।

**वादिराजतीर्थीया–** 'समुद्यमात्प्रधानतः' इत्यत्र समुद्यमात् सम्यक्प्रयत्नात् । प्रधानतः प्रधाने।९२-३

**वरदराजीया–** अमुना भीमेन इतीरिते सति, प्रधानतः मुख्यात् समुद्यमात् भीमकृतात् अथवा प्रधानतः समुद्यमात् । ल्यब्लोपे पञ्चमी । प्रधानमुद्यमं प्रयत्नमवलम्ब्य इत्यर्थः । असाधारणे यज्ञकारणे वृकोदरे स्थिते सति हरिः जगादेति सम्बन्धः ।। ९२ ।।

---

१. 'जगाद हि' इति जनार्दनीयपाठः ।

**अनन्तभट्टीया—** प्रधानतः समुद्यमात् । ल्यब्लोपे पञ्चमी । प्रधानं मुख्यमुद्यममवलम्ब्येत्यर्थः ।।९२।।

**जनार्दनीया—** अमुना वृकोदरेण इतीरिते सति, हरिः प्रधानतः मुख्यतः समुद्यमात् प्रधानयत्नात् । ल्यब्लोपे पञ्चमी । प्रधानं उद्यममवलम्ब्य इत्यर्थः । यज्ञकारणे यज्ञकारणभूते वृकोदरे स्थिते सत्येव । हि प्रसिद्धत्वेनेत्यर्थः । जगाद ।। ९२ ।।

**ताम्रपर्णीया—** ।। प्रधानत इति ।। प्रधानतस्समुद्यमात् प्रधानप्रयत्नात् प्राधान्येन यज्ञकारणे वृकोदरे स्थिते सिद्धेऽपि युधिष्ठिरस्याशक्तिं भीमस्य शक्तिं स्फुटयितुं हरिर्जगादेत्यर्थः ।।९२-१०५।।

**चट्टि—** अमुना वृकोदरेण ईरिते सति, प्रधानतः समुद्यमात् प्रधानयत्नात् यज्ञकारणे यज्ञकारणभूते वृकोदरे स्थिते सत्येव हरिर्जगाद ह ।। ९२ ।।

**स एक एव पूरुषो जरासुतोऽद्य वर्तते ।**
**समस्तसद्विरोधिनां बलं कलेरनन्तरः ।।९३।।**

**वरदराजीया—** किमिति जगाद? कलेर्दैत्यस्यानन्तरः दुष्टत्वेन अनन्तरं गणितः समस्तानां सद्विरोधिनां सज्जनविरोधिनां बलं बलभूतो जरासुतो अद्य इदानीं एक एव वर्तते ।। ९३ ।।

**अनन्तभट्टीया—** समस्तसद्विरोधिनां बलम् । एतद्बलेन समस्तदुर्जनाः बलवन्त इत्यत आह— कलेरनन्तर इति ।। दुष्टत्वे इति भावः ।।९३।।

**जनार्दनीया—** अद्य इदानीं समस्तसद्विरोधिनां बलं सर्वे असुराः मागधबलाश्रया इत्यर्थः । कलेरनन्तरः तमसि दुःखभोक्तृत्व इत्यर्थः ।।९३।।

**चट्टि—** समस्तसद्विरोधिनां सकलदुष्टानां बलं सर्वे असुराः मागधबलाश्रया इत्यर्थः । कलेः दैत्यस्य अनन्तरः दुष्टत्वे अनन्तरं गणितः सः जरासुताख्यः पुरुषः अद्येदानीमेक एव वर्तते ।। ९३ ।।

**तथा सतां समाश्रयो यदुद्भवाः सतां गुणाः।**
**स एक एव तादृशस्त्वया विचिन्त्य यात्यताम् ।।९४।।**

**वेदाङ्गतीर्थीया—** यथा जरासुतः तथा सतां समाश्रयः स एक एव ।। ९४ ।।

**वादिराजतीर्थीया—** 'तथा सतां समाश्रयः' इत्यत्र यथा जरासन्धः असतां समाश्रयः तथा यः सतां समाश्रयः सतां गुणाश्च । यदुद्भवाः यस्मिन् उद्भवो येषां ते तथोक्ताः । तादृशः स एक एवेति सम्बन्धः ।। ९४-९६ ।।

**मधुसूदनीया—** ।। तथेति ।। तथा सतां समाश्रयो भवेत् । सतां सज्जनानां गुणाः ज्ञानभक्तिवैराग्यादयो यदुद्भवाः यत्पुरुषोद्भवाः स एतादृग्गुणविशिष्टः एक एव तादृशः जरासन्धसमः स पुरुषः त्वया विचिन्त्य विचार्य यात्यतां जरासन्धं प्रति प्रेष्यताम् ।। ९४-१०३ ।।

**वरदराजीया–** तथा तद्वत् तद्वधाय यः सतां समाश्रयः सज्जनानां समाश्रयो गुणाः वलज्ञानभक्त्याद्याः यदुद्भवाः यस्माद् उद्भवो एषां ते तथा । तादृशः एक एव त्वया विचिन्त्य प्रविचार्य यात्यतां प्रेषणीयो भवेत् ।। ९४ ।।

**अनन्तभट्टीया–** सतां गुणाः यदुद्भवाः यस्मात् उद्भवो येषां ते तथोक्ताः ।। ९४ ।।

**जनार्दनीया–** यथा जरासुतः तथा सतां समाश्रयः सतां गुणाः ज्ञानभक्त्यादयो गुणाः यदुद्भवाः यस्मादुद्भवो येषां ते तथा । भीमादुत्पन्ना इति भावः । तादृशः स एक एव विचिन्त्य विचार्य यात्यतां प्रेषणीयः ।। ९४ ।।

**भारतश्री–** स भीमः । तादृशः तद्धननसमर्थः । यात्यतां प्रेष्यताम्, जरासन्धवधं प्रतीति शेषः ।। ९४-९६ ।।

**चट्टि–** यथा जरासुतः असतामाश्रयस्तथा सतां समाश्रयः यः भवेत् । सतां सज्जनानां ज्ञानभक्त्यादयो गुणाः यदुद्भवाः यस्मादुद्भवो येषां ते तथा । तादृशः सः एक एव पुरुषः त्वया विचिन्त्य विचार्य यात्यतां जरासन्धं प्रति प्रेष्यताम् ।। ९४ ।।

**यदि स्म तेन मागधो निहन्यते सतां जयः ।**
**विपर्ययेण चासतामिति स्म विद्धि नान्यथा ।।९५।।**

**वरदराजीया–** तेन तादृशेन पुरुषेण मागधो निहन्यते यदि तर्हि सतां जयः स्यात्, तस्य सदाश्रयत्वादित्यर्थः । विपर्ययेण असतां जयं स्यात्, तस्यासदश्रयत्वात् । अन्यथा प्रकारान्तरं नेत्यर्थः ।।९५।।

**अनन्तभट्टीया–** विपर्ययेण मागधजयेन असतां जय इति विद्धि ।।९५।।

**जनार्दनीया–** तेन पुरुषेण । विपर्ययेण जरासन्धजयेन असतां असुराणाम्, जयः इति शेषः । इति स्म विद्धि । हे भूप! त्वमिति शेषः । अन्यथा न प्रकारान्तरं न ।। ९५ ।।

**चट्टि–** यदि तेन पुरुषेण मागधो निहन्यते तर्हि सतां जयः स्यात् । विपर्ययेण जरासन्धजयेन असतां असुराणां जयः स्यात् इति स्म विद्धि । हे भूप! अन्यथा प्रकारान्तरं नेत्यर्थः ।। ९५ ।।

**स पारमेष्ठ्यसत्पदं प्रयात्यसंशयं युधि ।**
**य एव हन्ति मागधं [1]स वेदधर्मपालकः ।।९६।।**

**वरदराजीया–** य एव पुरुषो युधि युद्धे मागधं हन्ति, स एव पारमेष्ठ्याख्यं सत्पदं ब्रह्मपदं असंशयं याति, स एव वेदधर्मपालको भवति ।। ९६ ।।

---

१. 'स एव धर्मपालकः' इति जनार्दनीयचट्टीटिप्पण्योः पाठः ।

**अनन्तभट्टीया–** वेदश्च धर्मश्च वेदधर्मौ, तयोः पालकः ।।९६।।

**जनार्दनीया–** य एव हन्ति सः असंशयं यथा भवति तथा सत्पदं प्रयाति । स एव धर्मपालकः । 'वेदधर्मपालकः' इति क्वचित्पाठः । वेदाश्च धर्माश्च वेदधर्माः, तेषां पालकः ।।९६।।

**चट्टि–** य एव युद्धे मागधं हन्ति सः असंशयं यथा भवति तथा पारमेष्ठ्यं सत्पदं प्रयाति । स एव धर्मपालको भवति । 'वेदधर्मपालकः' इति क्वचित्पाठः । वेदाश्च धर्माश्च वेदधर्माः तेषां पालकः ।। ९६ ।।

**निहन्ति मागधेश्वरं य एष वैष्णवं जगत् ।**
**करोति शर्वपालितो यतः स बार्हद्रथः ।।९७।।**

**वादिराजतीर्थीया–** 'निहन्ति मागधेश्वरम्' इत्यत्र यः मागधेश्वरं निहत्य जगद्वैष्णवं करोति । स एव वेदधर्मपालक इति पूर्वेणान्वयः ।। ९७ ।।

**वरदराजीया–** य एव मागधेश्वरं हन्ति, स एव जगद्वैष्णवं विष्णुभक्तं करोति । कुतः? यतः स एव बार्हद्रथो बृहद्रथस्य पुत्रो जरासन्धः शर्वपालितोऽस्ति ।। ९७ ।।

**अनन्तभट्टीया–** स तथा जगद्वैष्णवं करोति । यतः बार्हद्रथः शर्वपालितः अतः ।।९७।।

**जनार्दनीया–** यः निहन्ति स एव वैष्णवं जगत् विष्णुभक्तियुक्तमित्यर्थः । यतः सः शर्वपालितः शैव इत्यर्थः ।। ९७ ।।

**भारतश्री–** करोति रक्षति । राज्यं करोतीतिवत् ।। ९७-१०१ ।।

**चट्टि–** य एव मागधेश्वरं निहन्ति स एव जगत् वैष्णवं विष्णुभक्तियुतं करोति । यतः सः बार्हद्रथः शर्वपालितः शैव इत्यर्थः ।। ९७ ।।

**निहन्ति शैवनायकं [1]य एष वैष्णवाग्रणीः ।**
**इति स्म भावसंयुते वदत्यजेऽबिभेन्नृपः ।।९८।।**

**वेदाङ्गतीर्थीया–** भावसंयुते एतादृशस्यान्यस्याभावाद्भीम एव प्रेषणीय इत्यभिप्रायसंयुते ।।९८-१०१।।

**वादिराजतीर्थीया–** यः शैवनायकं निहन्ति । यत्तदोर्नित्यसम्बन्धात् स एव वैष्णवाग्रणीरिति सम्बन्धः । अबिभेदिति लङि प्रथमपुरुषैकवचनम् ।। ९८-१०१ ।।

**वरदराजीया–** अतो यः शैवानां शिवभक्तानां शिव एव सर्वोत्तम इति ज्ञानवतां नायकं प्रवर्तकं हन्ति, स एव वैष्णवानामग्रणीर्भवति इत्युक्तरीत्या भावसंयुतं गूढाभिसन्धिसंयुक्तं यथा भवति तथा । अजे कृष्णे वदति सति भीमेनैव जरासन्धो हन्तव्य इति भावेन वदति स्म सतीत्यर्थः । नृपो युधिष्ठिरो अबिभेद् भयं प्राप्तः ।। ९८ ।।

---

१. 'स एव' इति चट्टीपाठः ।

**अनन्तभट्टीया–** शैवनायकं यो हन्ति एष वैष्णवाग्रणीः । भावसंयुते भीमो मागधवधायैव प्रेषणीय इत्यभिप्रायगर्भित इत्यर्थः ।।९८-१०१।।

**जनार्दनीया–** य एव शैवानां नायकं श्रेष्ठम् । स एषः वैष्णवाग्रणीः वैष्णवेषु मुख्यः । भावसंयुते भीम एव जरासन्धवधाय प्रेषणीय इत्यभिप्रायगर्भिते अजे कृष्णे इति वदति उक्तवति सति नृपः अविभेत् भययुक्तोऽभूदित्यर्थः ।। ९८ ।।

**चट्टि–** यः शैवनायकं शैवानां नायकं श्रेष्ठं निहन्ति स एव वैष्णवाग्रणीः वैष्णवेषु मुख्यः । भावसंयुते भीम एव जरासन्धवधाय प्रेषणीय इत्यभिप्राययुते अजे श्रीकृष्णे इति वदति सति नृपः अविभेत् स्म भययुक्तोऽभूत् ।। ९८ ।।

**युधिष्ठिरे ब्रुवत्यजं मखेन मे त्वलं त्विति ।**
**तमाह मारुतात्मजो निहन्मि मागधं रणे ।।९९।।**

**वरदराजीया–** मे मखेनालमिति युधिष्ठिरे ब्रुवति सति तं युधिष्ठिरं प्रति इति भीम आह । किमित्याह? युधि मागधं निहन्मि इति भीमेनेरिते सति हरिरवदत् ।। ९९ ।।

**जनार्दनीया–** मे मखेनालं पूर्णमित्यर्थः । मखं न करोमीति भावः ।। ९९ ।।

**चट्टि–** मे मखेनालं पूर्णमित्यर्थः । मखं न करोमीति भावः । इति युधिष्ठिरे अजं श्रीकृष्णं प्रति ब्रुवति सति मारुतात्मजो भीमः अहं रणे मागधं निहन्मीति तं युधिष्ठिरमाह ।। ९९ ।।

**इतीरितेऽवदद्धरिर्व्रजामहे वयं त्रयः ।**
**अहं च भीमफल्गुनौ निहन्तुमेव मागधम् ।।१००।।**

**वरदराजीया–** त्रय इत्यस्य विवरणम्– **अहं च भीमफल्गुनाविति** ।।१००।।

**जनार्दनीया–** अहं च भीमफल्गुनौ इति वयं त्रयः व्रजामहे गच्छामः ।। १०० ।।

**चट्टि–** इतीरिते, भीमेन इति शेषः । अहं भीमफल्गुनाविति वयं त्रयश्च मागधं निहन्तुमेव व्रजामहे गच्छामः इति हरिः अवदत्, युधिष्ठिरमिति शेषः ।। १०० ।।

**वृकोदरेण हन्यते यदि स्म मागधाधिपः ।**
**मखश्च सेत्स्यते ध्रुवं जगच्च ते वशे भवेत् ।।१०१।।**

**वरदराजीया–** यदि मागधाधिपः वृकोदरेण निहन्यते तर्हि मखः सेत्स्यति सिद्धिं प्राप्स्यति, जगच्च ते तव वशे भवेत् ।। १०१ ।।

**जनार्दनीया–** सेत्स्यते सिद्ध्यति ।। १०१ ।।

**भारतश्री–** मखे मखार्थम्[१] ।।१०१।।

**चट्टि–** वृकोदरेण मागधाधिपः यदि हन्यते तर्हि मखश्च ध्रुवं सेत्स्यते सिद्धिं प्राप्स्यते जगच्च ते वशे भवेत् ।। १०१ ।।

**इतीरिते तु शौरिणा जगाद धर्मनन्दनः ।**
**स शूरसेनमण्डलप्रहाणतो हरेस्त्रसन् ।।१०२।।**

**व्यासतीर्थीया–** हरेः शूरसेनमण्डलप्रहाणतः कारणात् त्रसन् ।। १०२-१०५ ।।

**वेदाङ्गतीर्थीया–** हरेः शूरसेनमण्डलप्रहाणतः शूरसेनविषयपरित्यागात् निमित्तात् त्रसन् जरासुतस्य वलाधिक्यं मत्वा त्रसन् ।। १०२ ।।

**वादिराजतीर्थीया–** 'शूरसेनमण्डलप्रहाणतो हरेः' इत्यत्र हरेः शूरसेनविषयपरित्यागान्निमित्तात् । त्रसन् ।। १०२-१०५ ।।

**वरदराजीया–** शौरिणा कृष्णेन इतीरिते सति, स धर्मनन्दनः त्रसन् भयं प्राप्तः जगाद । कुतः? हरेः यस्य भयेन शूरसेनमण्डलप्रहाणतः जरासन्धभयेन मधुरां हित्वा सागरं प्रति गमनात् हेतोः भयं प्राप्त इत्यर्थः ।। १०२ ।।

**अनन्तभट्टीया–** हरेः शूरसेनमण्डलप्रहाणतः मागधभयात् हरिणा शूरसेनमण्डलस्य त्यागनिमित्तात् त्रसन् ।। १०२-१०४ ।।

**जनार्दनीया–** शौरिणा कृष्णेन इतीरिते सति, हरेः शूरसेनमण्डलप्रहाणतः हरिकृतशूरसेनविषय-परित्यागान्निमित्तात् जरासुतस्य कृष्णादपि वलाधिक्यं मत्वा, त्रसन् स धर्मनन्दनो जगाद ।। १०२ ।।

**भारतश्री–** स धर्मनन्दनः त्रसन् जगादेत्यन्वयः । 'शूरसेनमण्डलप्रहाणतः' इति ल्यब्लोपनिमित्ता पञ्चमी ।। १०२-१०६ ।।

**चट्टि–** शौरिणा श्रीकृष्णेन इतीरिते सति, हरेः श्रीकृष्णस्य शूरसेनमण्डलप्रहाणतः हरिकृतशूरसेनविषय-परित्यागान्निमित्तात् जरासुतस्य श्रीकृष्णादपि वलाधिक्यं मत्वा, त्रसन् सः धर्मनन्दनः जगाद ।।१०२।।

**भयाद्धि यस्य माधुरं विहाय मण्डलं गताः ।**
**भवन्त एव सागरं ततो बिभेम्यहं रिपोः ।।१०३।।**

**वरदराजीया–** किमिति जगाद? यस्य भयाद्भवन्तो यूयं माधुरं मण्डलं देशं विहाय सागरं प्रति गताः, ततः कारणादहं रिपोर्जरासन्धाद् बिभेमि भयं प्राप्तोऽस्मि ।। १०३ ।।

---

१. यद्यपि इदं पदं मूले न दृश्यते । तथापि- 'मखे च सेत्स्यते' इति पाठे मखे मखार्थं मागधाधिपः वृकोदरेण यदि हन्यते तर्हीत्यर्थः । इति स्यात् ।

**जनार्दनीया–** किमिति? भवन्त एव यूयमपि यस्य मागधस्य भयात् माथुरं मथुरासम्बन्धि मण्डलं विषयं विहाय हित्वा सागरं प्रति गताः। यतः अतः अहं रिपोः सकाशात् मागधस्य सकाशाद् बिभेमि इति जगादेति सम्बन्धः ॥१०३॥

**चट्टि–** किमिति? भवन्त एव यूयमपि यस्य मागधस्य भयात् माथुरं मथुरासम्बन्धि मण्डलं विषयं विहाय सागरं प्रति गताः। यतस्ततः अहं रिपोर्मागधस्य सकाशाद् बिभेमि इति जगादेति सम्बन्धः ॥१०३॥

**[1]इमौ हि भीमफल्गुनौ ममाक्षिणी सदा प्रभो।**
**मनोनिभो भवान् सदा न वो [2]विनाऽस्म्यहं पुमान् ॥१०४॥**

**मधुसूदनीया–** वः त्रीन् युष्मान् विनाऽहं पुमानिति न स्मृतः। मनश्चक्षुरिन्द्रियाऽभावे जडत्वदर्शनादिति भावः ॥ १०४-१११ ॥

**वरदराजीया–** नन्वत एव त्वां भीतं विहाय वयं त्रयो व्रजाम इत्युक्तं तत्राह– **इमाविति** ॥ ममाक्षिणी नेत्रस्थानीयौ। भवान् मनोनिभः प्राणस्थानीयः। अत एव तस्माद् वो युष्मांस्त्रीन् विहायाहं पुमान् पुरुषो नास्मि ॥ १०४ ॥

**जनार्दनीया–** इमौ भीमार्जुनौ अक्षिणी नयनस्थानीयौ। मनोनिभः जीवसदृशः अन्तःकरणनिभ इति वा। वो विनाऽहं पुमान्नास्मि यतः ॥ १०४ ॥

**चट्टि–** हे प्रभो! सदा इमौ भीमफल्गुनौ ममाक्षी नयनस्थाने भवान् सदा मनोनिभः वः युष्मान् त्रीन् विना अहं पुमानिति न स्मृतः। मनश्चक्षुरिन्द्रियाभावे जडत्वदर्शनादिति भावः ॥ १०४ ॥

**अतो न जीवितात् प्रियानहं रिपोर्बलीयसः।**
**सकाशमात्महेतुतः प्रयातयामि वो विभो ॥१०५॥**

**वरदराजीया–** हे विभो! हे कृष्ण! अतः कारणाज्जीविताज्जीवनादपि प्रियान् वो युष्मानात्महेतुतः स्वार्थनिमित्ततो बलीयसः बलाधिकस्य रिपोर्जरासन्धस्य सकाशं न प्रयातयामि प्रेषयामि ॥ १०५ ॥

**अनन्तभट्टीया–** अतो भगवतो मनोरूपत्वात् प्रियानहं पुमानस्मि ॥१०५॥

**जनार्दनीया–** अतः जीविताज्जीवनात् प्रियान् वः युष्मान् बलीयसः बलिष्ठस्य आत्महेतुतः स्वाभीष्टहेतोः न यातयामि न प्रेषयामि ॥ १०५ ॥

---

१. 'इमौ च' इति वरदराजीयपाठः। 'भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम्। मनश्चक्षुर्विहीनश्च कीदृशं जीवितं भवेत् ॥' सभापर्वणि-१६.२.

२. 'विनास्म्यतः पुमान्' इति वरदराजीयपाठः।

**चट्टि–** हे विभो! अतः जीवितात् जीवनात् प्रियान् वः युष्मान् वलीयसः वलिष्ठस्य रिपोः शत्रोः सकाशं आत्महेतुतः स्वाभीष्टहेतोरहं न प्रयातयामि न प्रेषयामि ।। १०५ ।।

**इतीरितेऽवदत् पुनर्वृकोदरोऽरिकक्षभुक् ।**
**यदीयनेतृका रमाविरिञ्चिशर्वपूर्वकाः ।।१०६।।**

**व्यासतीर्थीया–** यदीयनेतृकं नयनं प्रेरणं येषां ते यदीयनेतृकाः ।। १०६-११५ ।।

**वेदाङ्गतीर्थीया–** अरिकक्षभुक् शत्रूणामग्निरिव । रमाविरिञ्चिशर्वपूर्वकाः यदीयनेतृकाः यदीयप्रेरणायुक्ताः ।।१०६।।

**वादिराजतीर्थीया–** 'यदीयनेतृकाः' इत्यत्र इतस्ततः जनं नयतीति नेतृ प्रेरणं, यदीयं नेतृ प्रेरणं येषां ते यदीयनेतृकाः । यद्वा यदीयाः यत्सम्बन्धिन इति हेतोः नेतृकाः जगन्नायकाः । यदाज्ञया जगन्नेतार इत्यर्थः ।। १०६ ।।

**सत्याभिनवीया–** तत्रैव 'यदीयनेतृका रमाविरिञ्च..' इत्यस्ति । तस्यार्थः- रमाविरिञ्चिशर्वपूर्वकाः यदीयनेतृकाः यदीयमिच्छादिकं नेतृ प्रेरकं येषां ते तथोक्ताः । इति भगवतो नेतृत्वे वक्तव्ये भगवदिच्छादेः नेतृत्वोक्तिः स्वातन्त्र्यज्ञापनार्था ।। १०६-११६ ।।

**वरदराजीया–** इति युधिष्ठिरेणेरिते सति, अरिकक्षभुक् वैरिलक्षणवनदाहको वृकोदरः पुनरवदत् । किमिति? रमा च विरिञ्चिश्च शर्वश्च ते तथा ते पूर्वा येषां ते तथा । यदीयनेतृकाः यस्य स्वरूपभूतं नेतृ नियामकमन्तर्यामिरूपं येषां ते तथा । रमाद्या अन्तर्यामिभूतयत्प्रेरणानियता इत्यर्थः ।। १०६ ।।

**अनन्तभट्टीया–** अरिकक्षभुक् शत्रुलक्षणवनच्छेदक इत्यर्थः । यदीयं नेतृकं प्रेरणं येषां ते तथोक्ताः ।।१०६।।

**जनार्दनीया–** इति युधिष्ठिरेण ईरिते सति अरिकक्षभुक् शत्रुलक्षणवनभुक्, अग्निरूप इत्यर्थः । रमाविरिञ्चिशर्वपूर्वकाः यदीयनेतृकाः यदीयं श्रीविष्णुसम्बन्धीच्छादिकं, नेतृकं प्रेरकं येषां ते तथोक्ताः ।।१०६।।

**ताम्रपर्णीया–** ।। **यदीयनेतृका इति** ।। यदीयं नेतृकं नयनं प्रेरणं येषां ते यदीयनेतृकाः । यद्वा यदीयं यत्स्वरूपभूतं नेतृ नियामकरूपं येषां ते यदीयनेतृकाः । यद्वा नेतृकमिति भावप्रधानम् । यदीयं यदधीनं नेतृत्वं सर्वजगन्नियामकत्वं येषां ते यदीयनेतृकाः ।।१०६-१०७।।

**चट्टि–** इतीरिते सति, युधिष्ठिरेणेति शेषः । अरिकक्षभुक् शत्रुलक्षणवनभक्षकः, शत्रूणां वह्निप्राय इत्यर्थः । वृकोदरः पुनरवदत् । किमिति? रमाविरिञ्चिशर्वपूर्वकाः यदीयनेतृकाः यदीयं यस्य विष्णोः इच्छादिकं नेतृकं प्रेरकं येषां ते तथोक्ताः । यदीयप्रेरणायुक्ताः इत्यर्थः ।। १०६ ।।

**वशे च यस्य तद् बलं सुरासुरोरगादिनाम् ।**
**स एष केशवः प्रभुः क चास्य बार्हद्रथः ॥१०७॥**

**वेदाङ्गतीर्थीया–** 'तद् बलम्' इत्यत्र तदिति प्रसिद्धमित्यर्थः ॥ १०७ ॥

**वादिराजतीर्थीया–** 'वशे च यस्य तद्बलम्' इत्यत्र तत् पूर्वोक्तं बलमित्यर्थः । 'व्रीह्यादिभ्यश्च' (सि.कौ.१९२३) इति वचनात् । सुरासुरोरगाः आदयः येषां वर्तन्ते इति सुरसुरोरगादीनि जगन्ति तेषाम् ॥ १०७-११७ ॥

**वरदराजीया–** सुरासुरादीनां यत्प्रसिद्धं बलं यस्य तच्च वशे यदधीनं स एषः प्रभुः केशवः कृष्णः अस्य पुरतो बार्हद्रथः क? अतस्त्वया 'भयाद्धि यस्य' इत्याद्युक्तं असम्बन्धमेवेति भावः ॥ १०७ ॥

**अनन्तभट्टीया–** तत् प्रसिद्धम् । सुरासुरोरगादिनां बलं यस्य वशे । अस्य, पुरतः इति शेषः ॥१०७-१११॥

**जनार्दनीया–** सुरासुरोरगादिनां तत् प्रसिद्धं बलं यस्य वशे, अस्तीति शेषः ॥ १०७ ॥

**भारतश्री–** तद् बलं सुरासुरोरगादिनाम् । 'स वै बलं बलिनां चापरेषाम्' (७.८.८) इति भागवतोक्तेः ॥ १०७-११६ ॥

**चट्टि–** सुरासुरोरगादिनां तत्प्रसिद्धं बलं यस्य वशे, अस्तीति शेषः । प्रभुः सः श्रीमन्नारायणः एषः केशवः श्रीकृष्णः अस्य, पुरतः इति शेषः । बार्हद्रथः क ॥ १०७ ॥

**अधृष्यमस्ति मे बलं हरिप्रणायकस्य च ।**
**समस्तलोकनेतरि प्रभौ हि सर्वशक्तिता ॥१०८॥**

**वेदाङ्गतीर्थीया–** स्वातन्त्र्यं किं न स्यादित्यत आह– **समस्तेति** ॥ सर्वशक्तिता सर्वविषयशक्तिमत्वम् ॥१०८॥

**वरदराजीया–** हरिः प्रणायको प्रवर्तकः यस्य मेऽधृष्यमसह्यं बलमस्ति । समस्तलोकस्य नेतरि प्रवर्तके हरौ सर्वशक्तिता पूर्णशक्तितास्तीति किमु वक्तव्यमिति हिशब्दार्थः ॥ १०८ ॥

**जनार्दनीया–** हरिप्रणायकस्य हरिः प्रणायकः प्रेरको यस्य स तथा तस्य । मे अधृष्यमसह्यम् । नेतरि प्रेरके प्रभौ समर्थे कृष्णे सर्वशक्तिता सर्वविषयशक्तिमत्वम् ॥ १०८ ॥

**ताम्रपर्णीया–** ॥ **अधृष्यमिति** ॥ यदेश्वरनियम्यं मद्बलमप्यधृष्यम् । तदा रमादिसर्वजगन्नियामके पूर्णशक्तित्वं किमु वाच्यमिति भावः ॥१०८-१११॥

**चट्टि–** हरिः प्रणायको प्रेरको यस्य सः हरिप्रणायकस्तस्य मे अधृष्यमसह्यं बलमस्ति । समस्तलोकानां नेतरि प्रेरके प्रभौ समर्थे श्रीकृष्णे सर्वशक्तिता सर्वविषयशक्तिमत्वं अस्ति हि ।। १०८ ।।

**अजेयता तथाऽर्जुने हरेर्वरोद्भवाऽस्ति हि ।**
**अतो वयं त्रयोऽद्य तं प्रयाम मागधं रिपुम् ।।१०९।।**

**वेदाङ्गतीर्थीया–** हरेर्वरोद्भवा 'धरातलस्थिते न मय्यमुं कश्चन जेष्यति' इति ।। १०९ ।।

**वरदराजीया–** तथा अर्जुने च हरेः कृष्णस्य वरोद्भवा वरेण प्राप्ता अजेयतास्ति हि । अतो 'इमौ च' (१०४) इत्याद्युक्तमपि युक्तमेवेति । अतः कारणादद्येदानीं तं जरासन्धं प्रति त्रयोऽपि प्रयामः ।। १०९ ।।

**जनार्दनीया–** 'धरातले स्थिते मय्यमुं कश्चन न जेष्यति' इति हरेर्वरोद्भवा अजेयतास्ति हि यतः अतः प्रयामः ।।१०९।।

**चट्टि–** तथा अर्जुने 'धरातले स्थिते न मय्यमुं कश्चन जेष्यति' इति हरेर्वरोद्भवा अजेयतास्ति हि यतः अतः वयं त्रयः अद्य तं रिपुं मागधं प्रयामः ।। १०९ ।।

**हनिष्य एव मागधं हरेः पुरो न संशयः ।**
**इतीरितेऽमुना हरिर्जगाद धर्मनन्दनम् ।।११०।।**

**वरदराजीया–** हरेः कृष्णस्य पुरः पुरत एव मागधं निहनिष्ये एव । अतो हनिष्यति न वेति संशयो न कार्यः । अमुना भीमेन ।। ११० ।।

**जनार्दनीया–** पुरः अग्रे । हनिष्य एव, अहमिति शेषः ।। ११० ।।

**चट्टि–** हरेः श्रीकृष्णस्य पुरः अग्रेऽहं मागधं हनिष्य एव । अतः हनिष्यति न वेति संशयो न कार्यः । अमुना भीमेन इतीरिते सति हरिः श्रीकृष्णः धर्मनन्दनं जगाद ।। ११० ।।

**वयं त्रयः समेत्य तं प्रयातयाम मृत्यवे ।**
**हनिष्यति स्फुटं रणे [१]वृकोदरो जरासुतम् ।।१११।।**

**वरदराजीया–** मृत्यवे यमाय प्रयातयामः प्रेषयामः । भीमः तं स्फुटं हनिष्यति सर्वथा हनिष्यतीत्यर्थः ।।

**जनार्दनीया–** प्रयातयामः प्रेषयामः ।।१११।।

**चट्टि–** किमिति? वयं त्रयः तं मागधं समेत्य मृत्यवे यमाय प्रयातयामः प्रेषयामः । वृकोदरेण जरासुतः स्फुटं हनिष्यति ।।१११।।

---

१. 'अलं तस्य महाबाहुः भीमसेनो महाबलः । लोकस्य समुदीर्णस्य निधनायान्तको यथा ।।' सभापर्वणि-२०.६.

**भयं न कार्यमेव ते मया हतः स नेति ह ।**
**[1]मया हि नीतिहेतुतः स्वयं न हन्यते रिपुः ॥११२॥**

**वेदाङ्गतीर्थीया–** भयं न कार्यम् । मया न हत इति भयं न कार्यमेव । स्वयं आत्मना ॥ ११२ ॥

**मधुसूदनीया–** ॥ **मया हीति** ॥ स्वयं रिपुः मम रिपुरित्यर्थः । 'निहत्य कृष्णस्य रिपुं स भीमः'(१५६) इत्याद्युत्तरवाक्यात् । यद्वा मया रिपुः जरासन्धः स्वयं साक्षात्, अव्यवधानेनेति यावत् । न हन्यते । तत्र हेतुमाह– **नीतिहेतुत इति** ॥ यत्तु 'स्वयं मयैव न निहन्यत' इति वरदराजीयव्याख्यानम् । तन्न । मया इत्यनेनैव स्वयम् इत्यस्य लाभेन पुनः स्वयमित्यस्य पौनरुक्त्यापातात् ॥ ११२-११४ ॥

**वरदराजीया–** सः जरासन्धो मया न हत इति भयं न कार्यम् । मया नीतिहेतुतः नीतिनिमित्ततः स्वयं रिपुः नैव निहन्यते ॥ ११२ ॥

**अनन्तभट्टीया–** सः जरासन्धो मया न हत इति ते भयं न कार्यमित्यन्वयः ॥११२॥

**जनार्दनीया–** स जरासुतः मया न हत इति ते त्वया भयं न कार्यमेव । स्वयमात्मना मया नीतिहेतुतः रिपुः न हन्यते ॥११२॥

**ताम्रपर्णीया–** भवतां सामर्थ्ये मधुरां प्रति पुनःपुनरागतो मागधः कुतो न हत इत्यत आह– **भयमिति** ॥ भटो भटेनैव हन्तव्यः इति नीतिप्रकाशनार्थं मया न हन्यत इत्यर्थः । स्वयं साक्षात् । अन्तर्यामिरूपेण मयैव हन्यत इति भावः ॥११२-११५॥

**चट्टि–** सः जरासुतः मया न हत इति ते त्वया भयं न कार्यमेव । मया रिपुः जरासन्धः स्वयं साक्षात् अव्यवधानेनेति यावत् । न हन्यते ॥११२॥

**स शर्वसंश्रयाग्रणीर्मदाश्रयोत्तमेन तु ।**
**निहन्यते यदा तदा प्रकाशितं हि मे बलम् ॥११३॥**

**वरदराजीया–** अतः जरासन्धः शर्वसंश्रयाणां शैवानामग्रणीः अतः मदाश्रयेषु उत्तमेन यदा निहन्यते तदा मे ममैव बलं प्रकाशितं स्यात् ॥ ११३ ॥

**अनन्तभट्टीया–** मदाश्रयेषूत्तमेन ॥ ११३-११५ ॥

**जनार्दनीया–** नीतिं दर्शयति– **स इति** ॥ स मागधः शर्वसंश्रयाग्रणीः मदाश्रयोत्तमेन मद्भक्तोत्तमेन। प्रकाशितम्, स्यादिति शेषः ॥ ११३ ॥

---

१. 'मया न नीतिहेतुतः स्वयं निहन्यते रिपुः' इति वरदराजीयपाठः स्यात् ।

**चट्टि–** अग्रणीः श्रेष्ठः सः मागधः मदाश्रयोत्तमेन मद्भक्तोत्तमेन यदा निहन्यते तदा मे मम बलं प्रकाशितम्, स्यादिति शेषः ।। ११३ ।।

**अतो न शङ्कितं मनः कुरुष्व [1]भूपते क्वचित् ।**
**प्रदर्शयामि तेऽनुजौ निहत्य मागधेश्वरम् ।।११४।।**

**वेदाङ्गतीर्थीया–** क्वचित् मद्विषये भीमार्जुनविषये च । शङ्कितं मरिष्यन्ति वा जेष्यन्ति वेति ।।११४।।

**वरदराजीया–** अतः क्वचित् कस्मिंश्चिदपि विषये शङ्कितं शङ्कायुक्तं मनो न कुरुष्व । भूपतिं मागधेश्वरं निहत्य हत्वा ते अनुजौ भीमार्जुनौ प्रदर्शयिष्यामि ।। ११४ ।।

**जनार्दनीया–** क्वचित् कदाचित् मद्विषये भीमार्जुनविषये च मरिष्यन्ति वा जेष्यन्ति वेति शङ्कितं शङ्कायुक्तं मनः न कुरुष्व ।।११४।।

**चट्टि–** अतः हे भूपते! क्वचित् कदाचित् मद्विषये भीमार्जुनविषये च मरिष्यन्ति वा जेष्यन्ति वा इति शङ्कायुक्तं मनः न कुरुष्व । मागधेश्वरं निहत्य ते अनुजौ प्रदर्शयिष्यामि ।। ११४ ।।

**इतीरितः स विष्णुना [2]विचार्य तद्गुणान् परान् ।**
**तथेति चाऽह ते त्रयः प्रतस्थुराशु मागधान् ।।११५।।**

**मधुसूदनीया–** तद्गुणान् तस्य कृष्णस्य गुणान् पूतनानरककंसचाणूरादिवधादिगुणान् ।।११५-११७।।

**वरदराजीया–** विष्णुना कृष्णेनेतीरिते सति तस्य कृष्णस्य परान् पूर्णशक्त्यादीन् गुणान् विचार्य संस्मृत्य तथेति तथास्त्वित्याह । ते श्रीकृष्णादयो मागधान् देशान् प्रतस्थुः निर्गताः ।। ११५ ।।

**जनार्दनीया–** विचार्य, मनसीति शेषः । तथेति तथास्त्विति । प्रतस्थुः जग्मुः ।।११५।।

**चट्टि–** विष्णुना श्रीकृष्णेन इतीरिते सति सः युधिष्ठिरः परानुत्तमान् तस्य श्रीकृष्णस्य गुणान् पूर्णशक्त्यादिगुणान् पूतनानरककंसचाणूरादिवधादिगुणांश्च विचार्य, मनसा इति शेषः। तथेति तथास्त्वित्याह । ते त्रयो मागधान् देशान् प्रत्याशु प्रतस्थुः जग्मुः ।।११५।।

**समेत्य मागधांस्तु ते शिवोरुलिङ्गमित्यलम् ।**
**सुमाल्यवस्त्रभूषणैः समर्चितं गिरिं ययुः ।।११६।।**

---

१. 'भूपतिं' इति वरदराजीयपाठः ।

२. 'निहतश्च जरासन्धो मोक्षिताश्च महीक्षितः । राजसूयश्च मे लब्धो निदेशे तव तिष्ठतः ।। क्षिप्रमेव यथा त्वेतत् कार्यं समुपपद्यते । अप्रमत्तो जगन्नाथ तथा कुरु नरोत्तम ।।' सभापर्वणि-२०.११-१२.

**व्यासतीर्थीया–** ।। **शिवोरुलिङ्गमिति** ।। इतिशब्दो नामद्योतकः ।। ११६-११७ ।।

**वेदाङ्गतीर्थीया–** अलं समर्चितम् ।। ११६ ।।

**वरदराजीया–** शिवोरुलिङ्गमिति प्रसिद्धं गिरिं ययुः । कथम्भूतं सुमाल्यादिभिः समर्चितम् ।।११६।।

**अनन्तभट्टीया–** ।। **शिवोरुलिङ्गमिति** ।। शिवोरुलिङ्गनामकमित्यर्थः ।।११६ ।।

**भावविवृतिः–** 'समेत्य मागधांस्तु ते शिवोरुलिङ्गमित्यलम्' इत्यत्र वैष्णवधर्मप्रतिष्ठात्रा भीमेन कथं वैष्णवाधिष्ठानभूतगिरिभेदनं कृतमिति चेदुच्यते । जरासुतेन स्वबुद्ध्या इदं शिवाधिष्ठानमिति पूजितत्वात् । शास्त्रतस्तद्गिरेः शिवाधिष्ठानाभावात् तद्गिरेः लिङ्गाकारत्वाभावाच्च तन्न दोषायेति ।।११६-१६१।।

**जनार्दनीया–** शिवोरुलिङ्गं इदं शिवस्योरुलिङ्गमिति लिङ्गाकारं गिरिं ययुः । कथम्भूतम्? अलं अर्चितम् ।।११६।।

**ताम्रपर्णीया–** 'शिवोरुलिङ्गमिति बुद्ध्या माल्यादिभिरर्चितं गिरिम्' इत्यनेन वस्तुतो न शिवलिङ्गत्वमिति सूचयति ।।११६-११७।।

**चट्टि–** ते कृष्णादयः मागधान् समेत्य सुमाल्यवस्त्रभूषणैः अलं समर्चितं शिवोरुलिङ्गं शिवस्योरुलिङ्गमिति प्रसिद्धं लिङ्गाकारगिरिं ययुः ।।११६।।

**[१]स्वशीर्षतोऽपि चाऽदृतं जरासुतेन ते गिरिम् ।**
**न्यपातयन्त बाहुभिस्तमस्य चोत्तमाङ्गवत् ।।११७।।**

**सत्याभिनवीया–** तत्रैव 'स्वशीर्षतोऽपि चादृतं..' इति श्लोकः । तस्यार्थः- ते कृष्णाद्याः बाहुभिश्च बाहुभिरेव जरासुतेन स्वशीर्षतोऽपि अतिशयेन च अतिशयेनैव आदृतं तं गिरिं न्यपातयन्त । पतितोऽपि गिरिः अस्य जरासन्धस्य उत्तमाङ्गवत् पतितोत्तमाङ्गवत् अदृश्यतेति । एतेन स्वशीर्षतोऽपीत्येतत् अनन्वितमिति दूषणं परास्तम् । अध्याहृतेन अतिशयेनेत्येतेनान्वय इत्यङ्गीकारात् । एतेनैव उत्तमाङ्गवत् इत्येतदनन्वितमिति दूषणं परिहृतम् । अदृष्यतेत्यस्य शेषमङ्गीकृत्य तेनान्वय इत्यभ्युपगमात् ।।११७- १३२।।

**वरदराजीया–** जरासुतेन स्वशीर्षतोऽपि स्वमस्तकादपि आदृतं मानितं तं गिरिं स्वबाहुभिः न्यपातयन्त । कथमिव? अस्य जरासन्धस्योत्तमाङ्गवत् जरासन्धशिरो यथा तथा तं गिरिं न्यपातयन्तेत्यर्थः ।।११७।।

**अनन्तभट्टीया–** आदृतं सत्कृतम् ।।११७।।

---

१. 'शिरसीव समाघ्नन्तो जरासन्धं जिघांसवः । स्थिरं सुविपुलं शृङ्गं सुमहत्तत्पुरातनम् ।। अर्चितं गन्धमाल्यैश्च सततं सुप्रतिष्ठितम् । विपुलैर्बाहुभिर्वीरास्तेऽभिहत्याभ्यपातयन् ।। ततस्ते मागधं हृष्टाः पुरं प्रविविशुस्तदा ।।' इति सभापर्वणि-२१.२३-२५.

**जनार्दनीया–** आदृतं मानितम् । ते कृष्णादयः तं गिरिं अस्य जरासन्धस्य उत्तमाङ्गवत् मस्तकवत् न्यपातयन्त ।। ११७ ।।

**भारतश्री–** दूर्वाससः शापेन शिवसन्निधानहीनं पर्वतलिङ्गं न्यपातयन्त । तदुक्तम्- 'दूर्वासस्तु सहंसेन डिभिकेन निराकृतः । जरासन्धं समागम्य जहि तावित्युवाच ह ।। उपेक्षिते तेन कार्ये शिष्याविति तपोधनः । शशाप मागधं रोषात् त्यक्षतीशः पुरं तव ।। त्वदर्चितं च लिङ्गं वै पर्वतं विफलं भवेत् ।।' इति भारते ।। ११७ ।।

**चट्टि–** ते कृष्णादयः जरासुतेन स्वशीर्षतोऽपि आदृतं मानितं तं गिरिश्च अस्य जरासन्धस्य उत्तमाङ्गवत् शिर इव बाहुभिर्न्यपातयन्त ।। ११७ ।।

**अद्वारतस्ते नगरं प्रविश्य माषस्य नालेन कृतास्त्रिभेरीः ।**
**[1]पुष्टिप्रदा बिभिदुस्तस्य कीर्तिशास्त्रोपमा न्यकृतमागधेशाः ।।११८।।**

**व्यासतीर्थीया–** माषस्य माषनाम्नो वृक्षस्य नालेन मूलेन, माषनाम्नो असुरस्य नालेन कण्ठनालेन वा । कीर्तिशास्त्रोपमाः कीर्तिकरा इत्यर्थः ।। ११८-११९ ।।

**वेदाङ्गतीर्थीया–** न्यकृतमागधेशाः ते माषस्य माषनाम्नोऽसुरस्य नालेन कण्ठनालेन । पुष्टिप्रदाः यावद्देशं स्वनादः प्रसरति तावद्देशे पुष्टिप्रदाः । तस्य जरासुतस्य कीर्तिशास्त्रोपमाः कीर्तिप्रतिपादक-गद्यपद्यस्वरूपनिबन्धनसदृशाः कीर्तिशास्त्रवत् तत्प्रसिद्धिकरा इति भावः ।। ११८ ।।

**वादिराजतीर्थीया–** 'कीर्तिशास्त्रोपमाः' इत्यत्र शास्त्रं शैवशास्त्रं शास्त्रं शासनं च । 'निदेशग्रन्थयोः शास्त्रम्' इत्यनुशासनम् । तेषामुपमा यासां ताः । माषस्य कृतास्त्रिभेरीरिति सम्बन्धः । आकस्मिक-माषनाळेन निर्मिता इत्यर्थः ।। ११८-१२० ।।

**मधुसूदनीया–** माषस्य माषनाम्नोऽसुरस्य नालेन कण्ठनालेन । 'यत्र मांसादमृषभमाससाद वृहद्रथः । तं हत्वा [2]मांसनालाभिः तिस्रो भेरीरकारयत् ।। स्वपुरे स्थापयामास तेन चानह्य चर्मणा । यत्र ताः प्रणदन् भेर्यो दिव्यपुष्पावचूर्णिता ।।' इत्यादि सभापर्वणि (२१.२०-२१)। व्यासतीर्थास्तु- 'माषस्य माषनाम्नो वृक्षस्य नालेन मूलेन' इति व्याचक्षते । तच्चिन्त्यम् । भेरीकरणयोग्यमाषाख्यवृक्षस्याप्रसिद्धेः । उक्तमानविरोधाच्च ।। ११८ ।।

**वरदराजीया–** ते कृष्णाद्यास्त्रयः । कथम्भूताः? न्यकृतमागधेशाः न्यकृतः निराकृतो मागधेशो यैस्ते तथा । अद्वारतः पुरद्वारं विहाय प्राकारभित्तिप्रपातनेन मार्गान्तरं विधाय, तेन मार्गेण नगरं प्रविवेशेत्यर्थः । माषस्य माषनाम्नोऽसुरस्य नालेन कृता निर्मितास्त्रिभेरीः भेरीत्रयं मुष्टिप्रदानाद् विभिदुः मुष्टिप्रहारेण

---

१. 'मुष्टिप्रदानात् विभिदुः' इति वरदराजीयपाठः । 'मुष्टिप्रदाः' इति जनार्दनीय-चट्टीपाठान्तरम् ।

२. 'मांसनालाभिः' इति प्र.पाठः । 'मांसनालाभिः' 'मापनालेभ्यः' इति BORI पाठे सभापर्वणि. पत्र-१०५.

भेदितवन्त इत्यर्थः । कथम्भूतास्त्रिभेरीः ? तस्य जरासन्धस्य कीर्तिशास्त्रोपमाः ख्यापकप्रबन्धरूपशास्त्रोपमां शास्त्रतुल्यां कीर्तिम्, प्रबन्धेन कीर्तिर्यथा ख्याप्यते तथा स्वध्वनिभिस्तत्कीर्तिख्यातिकरीः इत्यर्थः ।।११८।।

**अनन्तभट्टीया–** माषस्य माषनाम्नोऽसुरस्य नालेन कण्ठनालेन । मुष्टिप्रदाः विभिदुः मुष्टिभिर्विभिदुरित्यर्थः । कीर्तेः शास्त्रनिबन्धः तदुपमः ख्यातिकार्य इत्यर्थः ।।११८।।

**जनार्दनीया–** ते कृष्णादयः । अद्वारतः भित्तिं पातयित्वेति भावः । नगरं प्रविश्य, न्यक्कृतमागधेशाः न्यक्कृतः तिरस्कृतः, मागधेशो यैस्ते तथा ते सन्तः । माषस्य माषनाम्नोऽसुरस्य नालेन कण्ठनालेन कृताः । 'यत्र मांसादमृषभमाससाद वृहद्रथः । तं हत्वा माषनालेभ्यः तिस्रो भेरीरकारयत् ।। आनय चर्मणा तेन स्थापयामास चैत्यके ।।' इति सभापर्वणि । चैत्यके पर्वते । पुष्टिप्रदाः यावद्देशं स्वनादः तावद्देशे प्रजासु पुष्टिप्रदाः पुष्टिकरा इत्यर्थः । तस्य मागधस्य कीर्तिशास्त्रोपमाः कीर्तिप्रतिपादकगद्यपद्यरूपनिबन्धसदृशाः । कीर्तिशास्त्रवत् मागधप्रसिद्धिकरा इति भावः । त्रिभेरीः विभिदुः भेदितवन्त इत्यर्थः । 'मुष्टिप्रदाः' इति पाठे मुष्टिं प्रददन्तीति मुष्टिप्रदा इति कृष्णादीनां विशेषणम् । मुष्टिभिः विभिदुरिति भावः ।।११८।।

**ताम्रपर्णीया–** माषस्य माषनाम्नोऽसुरस्य नालेन देहेन, त्वचेति यावत् । तदुक्तं सभापर्वणि- 'यत्र मांसादमृषभमाससाद वृहद्रथः । तं हत्वा माषनालांश्च तिस्रो भेरीश्चकार ह । आनह्य चर्मणा तेन स्थापयामास चैत्यके ।। यत्र ताः प्रणदन्भेर्यो दिव्यपुष्पाभिपूजिताः । मागधानां सुचरितम्' इति । टीकायां तु- 'माषस्य माषनाम्नो वृक्षस्य नालेन मूलेन' इत्युक्तम् । कीर्तिशास्त्रोपमाः कीर्तिख्यापकप्रबन्धतुल्याः । कीर्तिप्रबन्धे यथा कीर्तिः ख्याप्यते तथा स्वध्वनिभिः कीर्तिख्यातिकरीरित्यर्थः ।।११८-११९।।

**भावचन्द्रिका–** 'वृक्षनालेन मूलेन' इति व्यासतीर्थीये । 'यत्र मांसादमृषभमाससाद वृहद्रथः । तं हत्वा माषनालेभ्यः तिस्रो भेर्यश्चकार ह ।। आनय चर्मणा तेन स्थापयामास चैत्यके ।।' इति भारतवचनविरोध इति चेन्न ।वृक्षमूलेनान्तकोटर..* विशेषान् कृत्वा चर्मणा..* इत्यर्थसम्भवात् ।।११८।।

**भारतश्री–** ।। **माषस्य नालेनेति** ।। माषस्य माषनामकस्य । तदुक्तम्- 'वृषभाकारमसुरं माषनामानमाहनत् । आनह्य चर्मणा तेन तिस्रो भेर्यः चकार ह ।।' इति भारतोक्तेः । 'नालेन कण्ठचर्मणा' इति व्याचक्षते ।। ११८-१२० ।।

**चट्टि–** ते श्रीकृष्णादयः अद्वारतः प्राकारभित्तिं पातयित्वेति भावः । नगरं प्रविश्य, न्यक्कृतः तिरस्कृतः मागधेशो यैस्ते न्यक्कृतमागधेशाः सन्तः । माषस्य माषनाम्नोऽसुरस्य नालेन कण्ठनालेन कृताः पुष्टिप्रदाः यावद्देशं स्वनादः तावद्देशे प्रजासु पुष्टिप्रदाः पुष्टिकरा इत्यर्थः । तस्य मागधस्य कीर्तिशास्त्रोपमाः कीर्तिप्रतिपादकगद्यपद्यरूपनिबन्धनसदृशाः, कीर्तिशास्त्रवत् मागधप्रसिद्धिकरा इत्यर्थः । त्रिभेरीः विभिदुः भेदितवन्त इत्यर्थः । 'मुष्टिप्रदाः' इति पाठे मुष्टिं प्रददातीति मुष्टिप्रदाः इति कृष्णादीनां विशेषणम् । मुष्टिभिर्विभिदुः इति भावः । तदुक्तम्- 'यत्र मांसादमृषभमाससाद वृहद्रथः । तं हत्वा मांसनालाभिः

तिस्रो भेरीरकारयत् ।। स्वपुरे स्थापयामास तेन चानह्य चर्मणा । यत्र ताः प्रणदन् भेर्यो दिव्यपुष्पावचूर्णिता ।।' इत्यादि सभापर्वणि ।। ११८ ।।

**तथाऽऽपणेभ्यो बहुमाल्यगन्धान् प्रसह्य सङ्गृह्य [1]शुभांश्च दध्रुः ।**
**[2]अद्वारतस्तस्य गृहं च सस्रुर्भोशब्दतस्तं च नृपं प्रसस्रुः ।।११९।।**

**मधुसूदनीया–** ।। **अद्वारत इति** ।। 'अद्वारेण रिपोर्गेहे द्वारेण सुहृदो गृहान् । प्रविशन्ति नरा धीरा द्वाराण्येतानि धर्मतः ।।' इति सभापर्ववचनादिति भावः (२१.६०)।। ११९-१४७ ।।

**वरदराजीया–** तथा आपणेभ्यो बहुमाल्यगन्धान् माल्यानि पुष्पाणि गन्धाश्च तान् । प्रसह्य बलात्कारेणापहृत्य शुभान्येव माल्यादीन् दध्रुः धारितवन्तः । तस्य जरासन्धस्य गृहं चाद्वारतो द्वारं विहाय मार्गान्तरेणैव सस्रुः गताः । तं नृपं जरासन्धं च भोशब्दतः भो जरासन्ध! इति सम्बोध्य इत्यर्थः । प्रसस्रुः प्राप्ताः ।। ११९ ।।

**अनन्तभट्टीया–** शुभान् सेव्यानित्यर्थः । भोशब्दतः भो जरासन्धेति वदन्त इत्यर्थः ।।११९।।

**जनार्दनीया–** तथा आपणेभ्यो बहुमाल्यगन्धान् माल्यानि पुष्पाणि, गन्धाश्च तान् बहून् प्रसह्य बलात्कारेण सङ्गृह्य अपहृत्य शुभान् मालादीन् दध्रुः धारितवन्तः । गृहं च सस्रुः प्रापुः । भोशब्दतः भो जरासन्धेति वदन्तः तं प्रसस्रुः प्रापुः । 'सृ गतौ' इति धातुः ।।११९।।

**भावचन्द्रिका–** चैत्यके पर्वते । केशव..* तान् दृष्ट्वा यदा नमश्चकार..* इति प्रसस्रुः । क्षत्रियेषु बलाधमस्य शिष्यत्वात् जरासन्धस्य मानिनः शिष्यस्य ज्ञापनाय जरासन्ध! भो इति वदन्त इत्यर्थः । 'आयुष्मान् भव सौम्येति भवेद्विप्राभिवादने । विजयं बाहुजे ब्रूयात् वैश्येऽनष्ट इतीरयेत् ।। आरोग्यं पादजे ब्रूयात् शत्रौ भोशब्दमीरयेत् ।।' इति (BORI- सभापर्व.पृ-१०७ ) भारतवचनात् ।। ११९ ।।

**चट्टि–** तथा आपणेभ्यो बहुमाल्यगन्धान् माल्यानि पुष्पाणि गन्धाश्च तान् बहु प्रसह्य बलात्कारेण सङ्गृह्य अपहृत्य शुभाश्च माल्यादीन् दध्रुः । तस्य जरासन्धस्य गृहं च अद्वारतः द्वारं विहाय मार्गान्तरेण सस्रुः प्रापुः । भोशब्दतः भो जरासन्धेति वदन्तः तं नृपं जरासन्धं च प्रसस्रुः प्रापुः ।। ११९ ।।

**[3]तान् विप्रवेषान् स निशाम्य राजा महाभुजान् स्नातकवेषयुक्तान् ।**
**द्वितीयवर्णान् प्रविचिन्त्य बाहून् ज्याकर्कशान् वीक्ष्य बभाष एतान् ।।१२०।।**

---

१. 'राजमार्गेण गच्छन्तः कृष्णभीमधनञ्जयाः । बलाद् गृहीत्वा माल्यानि मालाकारात् महाबलाः ।। कर्पूरशृङ्गं कोष्ठं च सफलं चान्तरापणं । वैश्यात् बलाद् गृहीत्वा ते विहृत्य च महारथाः ।।' सभापर्वणि- २१.३०-३१.

२. 'व्यूढोरस्कान् मागधानां विस्मयः समपद्यत । अद्वारेणाभ्यवस्कन्द्य विविशुर्मागधालयम् ।।' सभापर्वणि- २१.३५.

३. 'विगर्हमाणः कौरव्य वेषः ग्रहणवैकृतान् । न स्नातकव्रता विप्रा बहिर्माल्यानुलेपनाः । भवन्तीति नृलोकेऽस्मिन् विदितं मम सर्वशः । के यूयं पुष्पवन्तश्च भुजैर्ज्याकृतलक्षणैः । बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ । एवं

**व्यासतीर्थीया–** प्रविचिन्त्य ज्ञात्वा । द्वितीयवर्णत्वज्ञाने निमित्तद्वयमाह– **महाभुजान् ज्याकर्कशान् इति** ।। १२०-१२१ ।।

**वेदाङ्गतीर्थीया–** स्नातकवेषयुक्तान् स्नातकः तीर्थयात्राव्रतधरः । प्रविचिन्त्य ज्ञात्वा ।। १२० ।।

**वरदराजीया–** विप्राणां वेष इव वेषः येषां ते तथा तान् । राजा जरासन्धो निशाम्य दृष्ट्वा स्नातकवेषयुक्तानपि तान् महाभुजान् ज्याकर्कशान् मौर्व्या कठिणान् बाहूंश्च वीक्ष्य, द्वितीयवर्णान् क्षत्रियान् प्रविचिन्त्य निश्चित्य एतान् प्रति बभाषे ।। १२० ।।

**अनन्तभट्टीया–** प्रविचिन्त्य निश्चित्य ।।१२०।।

**जनार्दनीया–** स्नातकवेषयुक्तान् स्नातकः समावृतः तीर्थयात्राव्रतधरः, तस्य वेषवद्वेषः तेन युक्तान् द्वितीयवर्णान् क्षत्रियान् प्रविचिन्त्य ज्ञात्वा । द्वितीयवर्णत्वज्ञाने निमित्तमाह– **ज्येति** ।। ज्याकर्कशान् ज्यया मौर्व्या, कर्कशान् कठिणान् बाहून् वीक्ष्य, एतान् कृष्णादीन् बभाषे ।।१२०।।

**ताम्रपर्णीया–** स्नातकवेषयुक्तान् विवाहात्पूर्वं वाराणसीयात्रोपयुक्तान् नववस्त्रगन्धमाल्यादिवेष-युक्तान् ।। १२० ।।

**भावचन्द्रिका–** उत्तरत्र विप्रवेषाभिप्रायस्यैव वक्ष्यमाणत्वात् स्नातकवेषाभिप्रायस्यानुक्त्या तथेति पूर्वार्धे माल्यगन्धानुलेपनोक्त्यैव स्नातकवेष इत्युक्तम् ।। १२०-१४९ ।।

**चट्टि–** विप्राणां वेष इव वेषो येषां ते तथा तान् । महाभुजौ स्नातकवेषयुक्तान् स्नातकः तीर्थयात्रा-व्रतधरः तस्य वेषेण युक्ताः तान् । सः राजा जरासन्धः निशाम्य दृष्ट्वा, ज्याकर्कशान् ज्यया मौर्व्या, कर्कशान् कठिनान् बाहून् वीक्ष्य, द्वितीयवर्णान् क्षत्रियान् प्रविचिन्त्य ज्ञात्वा, एतान् कृष्णादीन् बभाषे ।। १२० ।।

**[1]के ष्ठाथ किंहेतुत आगताश्च कुतश्च मे पर्वतलिङ्गभेदनम् ।**
**कृतं भवद्भिः कुत एव दुर्नयाः कृतास्तथाऽन्ये द्विजवर्यवेषैः ।।१२१।।**

**व्यासतीर्थीया–** सुषामेत्यादिवत् के ष्ठेति षत्वं द्रष्टव्यम् ।।१२१।।

---

विरागवसना बहिर्माल्यानुलेपनाः । क्षत्रिया एव लोकेऽस्मिन् विदिता मम सर्वशः । सत्यं वदत के यूयं सत्यं राजसु शोभते । चैत्यकस्य गिरेः शृङ्गं भित्वा किमिह सद्मनि । अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्बिषात् । वदध्वं वाचि वीर्यं च ब्राह्मणस्य विशेषतः । कर्म चैतद्विलिङ्गस्थं किं वोऽद्य प्रसमीक्षितम् । एवं च मामुपास्थाय कस्माच्च विधिनार्हणाम् । प्रणीतां नानुगृह्णीत कार्यं किं वाऽस्मदागमे ।।' सभापर्वणि-२१.४८-५४.

'स्वैरराकृतिभिस्तांस्तु प्रकोष्ठैर्ज्याहतैरपि । राजन्यबन्धून् विज्ञाय दृष्टपूर्वानचिन्तयत् ।।' इति भागवते-१०.८०.२२.

१. 'के स्थाथ' इति वेदाङ्गतीर्थीय-वादिराजीयपाठः ।

**वेदाङ्गतीर्थीया–** के स्थ यूयं के भवथ । अन्ये दुर्नयाः अन्यायाः ।। १२१ ।।

**वादिराजतीर्थीया–** 'के स्थाथ किम्' इत्यत्र 'अस भुवि' इति धातोः, स्थेति लटि मध्यमपुरुष-बहुवचनम् । के किं जातीयाः ।। १२१-१२२ ।।

**वरदराजीया–** किमिति? यूयं के ष्ठ? अस्तेः धातोर्लण्मध्यमपुरुषबहुवचनमेतत् । सुषामादिषु परिगणितत्वात् षत्वं ष्टुत्वं च द्रष्टव्यम् । किं हेतुतः? कस्माद्धेतोरागताश्च? कुतश्च कारणात् मे मम विद्यमानस्य पर्वतलिङ्गस्य पर्वताकारलिङ्गस्य भेदनं विदारणं कृतम्? द्विजवर्यवेषैः भवद्भिरन्ये दुर्नयाः माल्यापहारादयः कुत एव कृताः? ।। १२१ ।।

**अनन्तभट्टीया–** ।। के ष्ठेति ।। अस्तेर्लण्मध्यमपुरुषबहुवचनम् । सुषामादिषु षत्वं ष्टुत्वे ।।१२१।।

**जनार्दनीया–** के ष्ठ? यूयं के भवथ? अस्तेर्धातोर्लण्मध्यमपुरुषबहुवचनम् । सुषामादिषु परिगणितत्वात् षत्वं ष्टुत्वं च । किं हेतुतः? कस्माद्धेतोः आगताः? कुतश्च मे पर्वतलिङ्गभेदनम्? पर्वताकारलिङ्गस्योत्पाटनं कृतं भवद्भिः । तथा अन्ये दुर्नयाः अन्यायाः कुतः कृताः? ।।१२१।।

**ताम्रपर्णीया–** के ष्ठ के स्थ । अस्तेर्धातोर्लटि मध्यमपुरुषबहुवचनमेतत् । सुषामादिषु परिगणितत्वात् षत्वं ष्टुत्वं च द्रष्टव्यम् । अन्ये अद्वारगमनादयः ।। १२१ ।।

**अतिविशद–** 'के ष्ठाथ किं हेतुत आगताश्च' इत्यत्र 'के स्थ अथ' इति पदत्रयं द्रष्टव्यम् । तेन पदच्छेदे न काठिण्यम् । अस्तेर्धातोर्लट् मध्यमपुरुषबहुवचनम् । सुषामादिषु परिगणितत्वात् षत्वं ष्टुत्वं च । केष्ठा नरश्रेष्ठा मा इत्यत्रेव । 'कुतश्च मे पर्वतलिङ्गभेदनम्' इत्यत्र शिवप्रतिमाभेदनस्याकार्यत्वात् कथं कृतमित्याशङ्का शिवस्य शापकृतपर्वतजन्मनिवृत्तिः कृष्णादिभिः त्रिभिः भेदनेनैव भविष्यतीति पुराणकथया निराकृता ज्ञेया ।। १२१-१४९ ।।

**भारतश्री–** ।। क इति ।। यूयं के स्थः, केति शेषः । कुत्रत्या इत्यर्थः । सत्यं वदथ । के यूयं कुत्रत्याः किमिहागता इति च । अन्ये भेरीभेदनादयः ।। १२१-१२३ ।।

**चट्टि–** यूयं के ष्ठ के भवथ । अस्तेः धातोः लण्मध्यमपुरुषबहुवचनमेतत् । सुषामादिषु परिगणितत्वात् षत्वं ष्टुत्वं च द्रष्टव्यम् । तथा किं हेतुतः कस्माद् हेतोः मे पर्वतलिङ्गभेदनं पर्वताकारस्य लिङ्गस्य भेदनं विदारणं कुतश्च कस्मात् कारणात् कृतम्? । द्विजवर्यवेषैः भवद्भिः अन्ये च दुर्नयाः माल्यापहारणाद्यन्यायाः कृताः ।। १२१ ।।

> **इति ब्रुवाणं भगवानुवाच कार्यं हि शत्रोरखिलं प्रतीपम् ।**
> **इत्युक्त ऊचे [1]नहि विप्रशत्रुरहं कुतो वो मम शत्रुता भवेत् ।।१२२।।**

---

१. 'न च विप्रशत्रुरहं' इति वेदाङ्गतीर्थीयपाठः । चट्टिपाठोऽपि तथैव ।

**व्यासतीर्थीया–** 'कुतश्च मे' इत्यादेरुत्तरमाह– **कार्यं हीति** ।। १२२ ।।

**वेदाङ्गतीर्थीया–** 'कुतश्च मे पर्वतलिङ्गभेदनं कृतम्' इत्यादेरुत्तरमाह– **कार्यं हीति** ।। महाभुजत्वादि-लिङ्गाभ्यां ज्ञातमपि क्षत्रियत्वं निगूह्य आह– **अहं च न विप्रशत्रुरिति** ।। कुत इत्याक्षेपः ।। १२२ ।।

**वरदराजीया–** इति ब्रुवाणं जरासन्धं शत्रोः निखिलं विरुद्धमेव कार्यं हि प्रसिद्धमित्युक्तो जरासन्धः तानाह । विप्राणां शत्रुरहं नास्मि । वो युष्माकं मम शत्रुता मन्निरूपिता शत्रुता कुतो भवेत्? शत्रुताया उभयनिरूप्यत्वादित्यर्थः ।। १२२ ।।

**अनन्तभट्टीया–** अहं विप्रशत्रुर्न । अतो वः प्रति मम शत्रुता कुतो भवेत् ।।१२२-१२३।।

**जनार्दनीया–** उत्तरमाह । कुतः कस्मात् वः युष्माकं मम शत्रुता भवेत् ।। १२२ ।।

**ताम्रपर्णीया–** 'कुतश्च मे' इत्यादेः परिहारमाह– **कार्यमिति** ।। अखिलं लिङ्गभेदनाद्वारगमन-भेरीभेदाद्यखिलम् । तदुक्तं सभापर्वणि- 'अद्वारेण रिपोर्गेहं द्वारेण सुहृदो गृहम् । प्रविशन्ति सदा सन्तो द्वारं नो वर्जितं ततः' इति ।।१२२।।

**चट्टि–** 'आगताः मे' इत्यादेरुत्तरमाह– **कार्यमिति** ।। इति ब्रुवाणं जरासन्धं भगवान् श्रीकृष्णः शत्रोरखिलं प्रतीपं कार्यं हि कार्यमेव इत्युवाच । श्रीकृष्णेन इत्युक्तः जरासन्धः ऊचे । अहं विप्रशत्रुः नहि वः युष्माकं मम च शत्रुता कुतः कस्मात् भवेत्? इत्यूच इति सम्बन्धः ।।१२२।।

**इत्युक्तवाक्यं नृपतिं जगाद जनार्दनो नैव हि तादृशा द्विजाः ।**
**[1]अहं रिपुस्तेऽस्मि हि वासुदेव इमौ च भीमार्जुननामधेयौ ।।१२३।।**

**व्यासतीर्थीया–** 'के स्थ' इत्यस्योत्तरमुक्तं भवति– **रिपुरिति** ।। १२३ ।।

**वेदाङ्गतीर्थीया–** ये द्विजास्तव वैरविषया न भवन्ति तादृशा द्विजा न । 'के स्थ' इत्यस्योत्तरमाह– **रिपुरित्यादि** ।। १२३ ।।

**वादिराजतीर्थीया–** 'अहं रिपुस्तेऽस्मि हि वासुदेवः' इत्यत्र हिशब्देन 'दैत्यारिः पुण्डरीकाक्षः' इत्यनुशासनेऽपि पाठात् स्वस्य दैत्यारित्वं सुप्रसिद्धमित्याह ।। १२३-१२४ ।।

**वरदराजीया–** इत्युक्तं वाक्यं येन सः तथा तम् । जनार्दनः जगाद । वयं तादृशाः यादृशाः विप्राः त्वं मन्यस इत्यर्थः । किन्तु अहं वासुदेवो वसुदेवस्यापत्यं कृष्णः तव रिपुरस्मि हि । इमौ भीमार्जुननामधेयौ ।।

**जनार्दनीया–** जनार्दनः जगाद । ये द्विजाः तव वैरविषयाः न भवन्ति तादृशाः द्विजाः नैव । **'के स्थ'** इत्यस्योत्तरमाह– **अहमित्यादिना** । वासुदेवः कृष्णः । इमौ च भीमार्जुनौ ।।१२३।।

---

१. 'शौरिरस्मि हृषीकेशः नृवीरौ पाण्डवाविमौ । अनयोर्मातुलेयं च कृष्णं मां विद्धि ते रिपुम् । त्वामाह्वयावहे राजन् स्थिरो युध्यस्व मागध । मुञ्च वा नृपतीन् सर्वान् गच्छ वा त्वं यमक्षयम् ।।' सभापर्वणि-२२.२५-२६.

**ताम्रपर्णीया–** 'के ष्ठ' इत्यस्योत्तरम्– **अहमिति** ।।१२३।।

**चट्टि–** इत्युक्तवाक्यं नृपतिं जरासन्धं जनार्दनः श्रीकृष्णः जगाद । किमिति? ये द्विजाः तव वैरविषया न भवन्ति न वयं तादृशाः द्विजाः नैव । 'के ष्ठ' इत्यस्योत्तरमाह– **अहमित्यादिना** ।। अहं ते तव रिपुः वासुदेवः कृष्णः अस्मि । इमौ च भीमार्जुननामधेयौ ।। १२३ ।।

**यद् बान्धवान् नः पिशिताशिधर्मतो [१]रौद्रे मखे कल्पयितुं पशुत्वे ।**
**इच्छस्यरे वेदपथं विहाय तं त्वां बलाच्छास्तुमिहाऽगता वयम् ।।१२४।।**

**व्यासतीर्थीया–** 'किं हेतुतः' इत्यस्य उत्तरमाह– **यद्बान्धवानिति** ।। १२४-१२६ ।।

**वेदाङ्गतीर्थीया–** 'केन हेतुना आगताः' इत्यस्योत्तरं वक्तुं प्रसङ्गमाह– **यद्बान्धवान्न इति**।।१२४-७।।

**वरदराजीया–** 'यूयं के ष्ठ' इति प्रश्नस्योत्तरं दत्वा, 'किं हेतुना आगताः' इत्यस्योत्तरमाह हरिरित्याह– **यद्बान्धवानिति** ।। यद्यस्मान्नोऽस्माकं बान्धवान् पिशिताशिधर्मतो राक्षसवृत्त्या रौद्रे रुद्रदेवताके मखे यज्ञे पशुत्वे कल्पयितुमिच्छसि । किं कृत्वा? वेदपथं वैदिकमार्गं विहाय त्यक्त्वा । अरे जरासन्ध! तं त्वां शास्तुं शिक्षयितुं इह वयमागताः ।। १२४ ।।

**अनन्तभट्टीया–** यद्यस्मात् निदर्शिता । अधर्मतः राक्षसधर्मेण ।।१२४-१२७।।

**जनार्दनीया–** 'किं हेतुत आगताः' इत्यस्योत्तरं वक्तुं प्रसङ्गमाह– **यद्बान्धवान्न इति** ।। यत् यस्मात् नः बान्धवान् श्वशुरादीन् पिशिताशिधर्मतः पिशितं मांसमश्नन्ति भक्षयन्ति ते पिशिताशिनः, राक्षसास्तेषां धर्मतः धर्मेण रौद्रे रुद्रदैवते मखे वेदपथं विहाय अवैदिकं मार्गमङ्गीकृत्येत्यर्थः । पशुत्वे कल्पयितुमिच्छसि, त्वमिति शेषः । तस्मात् हे अरे! शत्रो! वयं तं वेदविरुद्धाचरणं त्वां बलाच्छास्तुं शिक्षयितुं इहागता इत्यन्वयः ।। १२४ ।।

**ताम्रपर्णीया–** 'किं हेतुतः' इत्यस्योत्तरम्– **यद्बान्धवानिति** ।।१२४-१२५।।

**भारतश्री–** बान्धवान् विवाहबान्धवान् । 'विवाहबान्धवान् (रणे विजित्य रोधिता गिरौ' इति पूर्वो)क्तेः ।। १२४-१३२९ ।।

---

१. 'त्वया चोपहृता राजन् क्षत्रिया लोकवासिनः । तदागः क्रूरमुत्पाद्य मन्यसे किमनागसम् ।। राजा राज्ञः कथं साधून् हिंस्यान्नृपतिसत्तम । तद्राज्ञः सन्निगृह्य त्वं रुद्रायोपजिहीर्षसि ।। अस्मांस्तदेनोपगच्छेत् कृतं बार्हद्रथ त्वया । वयं हि शक्ता धर्मस्य रक्षणे धर्मचारिणः ।। तस्मादद्योपगच्छामः तव बार्हद्रथान्तिकम् । मनुष्याणां समालम्भो न च दृष्टः कदाचन । स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करम् ।। सवर्णो हि सवर्णानां पशुसञ्ज्ञां करिष्यसि । कोऽन्य एवं यथा हि त्वं जरासन्ध वृथामतिः । यस्यां यस्यामवस्थायां यद्यत्कर्म करोति यः । तस्यां तस्यामवस्थायां तत्फलं समवाप्नुयात् । ये त्वां ज्ञातिक्षयकरं वयमार्तानुसारिणः । ज्ञातिवृद्धिनिमित्तार्थं विनिहन्तुमिहागताः ।।' सभापर्वणि-२२.८-१४.

**चट्टि–** 'किं हेतुत आगताः' इत्यस्योत्तरं वक्तुं प्रसङ्गमाह– **यद्बान्धवानिति** ।। यद्यस्मान्नः बान्धवान् श्वशुरादीन् पिशिताशिधर्मतः पिशितं मांसमश्नन्ति भक्षयन्तीति पिशिताशिनः राक्षसास्तेषां धर्मतः धर्मेण रौद्रेण रौद्रे रुद्रदैवते मखे वेदपथं विहाय अवैदिकं मार्गमङ्गीकृत्य इत्यर्थः । पशुत्वे कल्पयितुमिच्छसि । तस्माद्रे! जरासन्ध! वयं तं वेदविरुद्धाचरणं त्वां बलाच्छास्तुं शिक्षयितुमिहागता इत्यन्वयः ।।१२४।।

**विमोक्षयामः स्वजनान् यदि त्वं न मोचयस्यद्य निगृह्य च त्वाम् ।**
**मुञ्चाथवा तानभियाहि वाऽस्मान् रणाय [1]मर्तुं कृतनिश्चयोऽत्र ।।१२५।।**

**वादिराजतीर्थीया–** 'निगृह्य च त्वाम्' इत्यत्र यदि त्वं न मोचयसि तर्हि त्वां निगृह्य च मोचयाम इति सम्बन्धः ।। १२५ ।।

**वरदराजीया–** यदि स्वजनान् अस्मद्बान्धवान् न मोचयसि तर्ह्यद्यैव त्वां निगृह्य बध्वापि विमोचयाम इत्यर्थः । तान् नः बान्धवान् मुञ्च, अथवा न मुञ्चयसि चेत्? तर्हि अस्मान् प्रति रणाय युद्धायाभियाहि । कथम्भूतः सन्? अत्र युद्धे मर्तुं कृतनिश्चयः सन्नित्यर्थः ।। १२५ ।।

**जनार्दनीया–** यदि त्वमद्य तान् न मोचयसि तर्हि त्वां निगृह्य बध्वेत्यर्थः । विमोक्षयामः । तान् मुञ्च, अथवा न मोचयसि चेत्? मर्तुं कृतनिश्चयः सन् अभियाहि ।। १२५ ।।

**चट्टि–** यदि त्वमद्य स्वजनान् न मोचयसि तर्हि त्वां निगृह्य बध्वेत्यर्थः । विमोक्षयामः । तान् मुञ्च, अथवा न मोचयसि चेदत्र मर्तुं कृतनिश्चयः सन् अस्मान् प्रति रणायाभियाहि ।। १२५ ।।

**इतीरितोऽसौ मगधाधिपो रुषा जगाद नाहं शिवयागयुक्तान् ।**
**मोक्ष्ये पशून् युगपद् वा क्रमेण योत्स्ये च वोऽथापि चमूसहायात्।।१२६।।**

**वादिराजतीर्थीया–** शिवयागयुक्तान् शिवयागे नियुक्तान् ।। १२६-१३० ।।

**वरदराजीया–** रुषा कोपेन जगाद । किमिति? शिवयागयुक्तान् कल्पितान् पशून् अहं न मोक्ष्ये । युगपत् त्रिभिः सहैव एकदैव योत्स्ये । क्रमेण एकैकेन वा योत्स्ये । अथापि अथवा चमूसहायान् सैन्ययुक्तान् वो युष्मान् प्रति योत्स्ये ।। १२६ ।।

**जनार्दनीया–** शिवयागयुक्तान् शिवमुद्दिश्य कर्तव्ययागे युक्तान् कल्पितानित्यर्थः । युगपदेकदैव योत्स्ये, त्रिभिः सहेति शेषः । क्रमेण एकैकेन वा योत्स्ये । अथापि अथवा चमूसहायान् चमूः सेना सहायो येषां ते तथा तान् । वो युष्मान् योत्स्ये इति रुषा जगाद ।।१२६।।

---

१. 'किं गर्जसि जरासन्ध कर्मणा तत्समाचर । मम निर्देशकर्तृभ्यां पाण्डवाभ्यां नृपाधम । सामात्यं ससुतं चाद्य यातयिष्याम्यहं रणे । न कथञ्चन जीवन्वै प्रवेक्ष्यसि पुरोत्तमम् ।।' सभापर्वणि-२२.३५-३६.

**चट्टि–** इतीरितोऽसौ मगधाधिपः रुषा जगाद । किमिति? शिवयागयुक्तान् शिवमुद्दिश्य कर्तव्ये यागे युक्तान् कल्पितानित्यर्थः । पशून् न मोक्ष्ये । अहं युगपदेकदैव योत्स्ये, त्रिभिः सहेति शेषः । क्रमेण एकैकेन वा योत्स्ये । अथापि अथवा चमूसहायान् चमूः सेना सहायो येषां ते तथा तान् । वः युष्मान् योत्स्ये इति जगादेति सम्बन्धः ।। १२६ ।।

**[१]निरायुधः सायुधो वा युष्मदिष्टायुधेन वा ।**
**एकोऽपि सकलैर्योत्स्ये ससेनो वा ससैनिकान् ।।१२७।।**

**वरदराजीया–** अनुक्तकथनेनोक्तमेव पुनरुक्तं करोति– **निरायुध इत्यादिना** ।। युष्माकमिष्टेनापि ईप्सितेनायुधेन एकोऽपि एक एव सकलैर्योत्स्ये । सेनया सहितः अहं ससैनिकान् प्रति योत्स्ये ।।१२७।।

**जनार्दनीया–** अनुक्तार्थकथनप्रसङ्गेनोक्तार्थं पुनः कथयति– **निरायुध इति** ।। युष्मदिष्टायुधेन युष्माकं यदिष्टं प्रियं तेनायुधेन वा ।।१२७।।

**चट्टि–** अनुक्तार्थकथनप्रसङ्गेनोक्तार्थं कथयति– **निरायुध इति** ।। निरायुध आयुधरहितः सायुधो वा, युष्मदिष्टायुधेन युष्माकं यदिष्टं तेनायुधेन वा, एकोऽप्येक एव सकलैः योत्स्ये । ससेनः सेनया सहितो वा ससैनिकान् योत्स्ये ।। १२७ ।।

**इत्युक्तवन्तमवददजितोरुबलो[२] हरिः ।**
**एह्येकमेको वाऽस्मासु ससैन्यो वा रणे नृप ।।१२८।।**

**व्यासतीर्थीया–** ससैन्यो वा ससैनिकमेहि ।। १२८-१२९ ।।

**वेदाङ्गतीर्थीया–** ससैन्यो वा एकमेव ।। १२८ ।।

**वरदराजीया–** अमितश्चासावुरुबलश्चेति विग्रहः । अस्मासु मध्ये एकं प्रति एक एव एहि । ससैन्यो वा एकं प्रत्येहि ।। १२८ ।।

**जनार्दनीया–** अजितोरुबलः अजितश्चासौ उरुबलश्चेति । अस्मासु मध्ये एकस्त्वं एकं प्रति रणे एहि । ससैन्यो वा एकमेवेहीति योजना ।। १२८ ।।

**अनन्तभट्टीया–** अस्मासु एकं रणे एको वा एहि ।।१२८।।

**ताम्रपर्णीया–** अस्मासु मध्ये एकं प्रति एक एवैहि । ससैन्यो वा एकं प्रत्येहि ।। १२८ ।।

**चट्टि–** इत्युक्तवन्तं मागधमजितोरुबलः अजितश्चासौ उरुबलश्चेति विग्रहः । हरिः श्रीकृष्णः अवदत् । किमिति? अस्मासु मध्ये एकं प्रत्येकस्त्वं रणे एहि । हे नृप! ससैन्यो वा एकमेवेहीति योजना ।।१२८।।

---

१. 'सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः । द्वाभ्यां त्रिभिर्वा योत्स्येऽहं युगपत्पृथगेव वा ।।' सभापर्वणि-२२.४०.

२. 'अमितोरुबलः' इति वरदराजीयपाठः ।

**येन कामयसे योद्धुं तं न आसादय द्रुतम् ।**
**निरायुधः सायुधो वा त्वदभीष्टायुधेन वा ।**
**इत्याऽह भगवाञ्छत्रुं यशो [१]भीमे विवर्धयन् ॥१२९॥**

**वेदाङ्गतीर्थीया–** नः अस्माकं मध्ये । स्वशत्रुं तं भीमेन घातयित्वा भीमे यशः अभिवर्धयन् ॥१२९॥

**वरदराजीया–** 'एकम्' इत्यत्रापि येनैकेन योद्धुं कामयसे नो मध्ये त्वमेकमासादय स्वीकुरु । त्वदभीष्टायुधेन वा आसादयेति सम्बन्धः । भीमे यशो विवर्धयन् भगवानित्याहेति सम्बन्धः ॥१२९॥

**अनन्तभट्टीया–** नो मध्ये येन योद्धुं कामयसे तं आसादय । अथवा येन आयुधेन नो अस्माकं तदायुधमादाय । आदेहीत्यर्थः ॥ १२९-१३३ ॥

**जनार्दनीया–** नोऽस्माकं मध्ये येनैकेन पुरुषेण योद्धुं कामयसे तमेकं पुरुषमासादयागच्छ । यद्वा येन आयुधेन । नोऽस्मान् तदायुधं आसादय स्वीकुरु । त्वदभीष्टायुधेन वा एकं प्रति एक एहीति सम्बन्धः । भगवान् स्वशत्रुं भीमेन घातयित्वा, भीमे यशो विवर्धयन् सन् ॥ १२९ ॥

**ताम्रपर्णीया–** 'एकम्' इत्यत्रापि येनैकेन योद्धुं मन्यसे नो मध्ये तमेकमासादय स्वीकुरु॥१२९-१३३॥

**चट्टि–** अस्माकं मध्ये येन केन पुरुषेण योद्धुं कामयसे तमेकं पुरुषं द्रुतमासादयागच्छ । निरायुधः सायुधो वा त्वदभीष्टायुधेन वा । एकमासादयेति सम्बन्धः । भगवान् स्वशत्रुं भीमेन घातयित्वा भीमे यशो विवर्धयन् सन् ॥ १२९ ॥

**घातयित्वा स्वशत्रुं च भीमेनानुग्रहं परम् ।**
**भीमस्य कर्तुमिच्छंश्च [२]भक्तिज्ञानादिवर्धनम् ॥१३०॥**

**व्यासतीर्थीया–** अनुग्रहेण शक्तिज्ञानादिवर्धनं कर्तुमेवमाहेति भावः ॥ १३० ॥

**वेदाङ्गतीर्थीया–** भीमस्य परमानुग्रहं च कर्तुमिच्छन्, अनुग्रहेण च भक्तिज्ञानाभिवर्धनं च कर्तुमिच्छन् इत्याहेति सम्बन्धः ॥ १३० ॥

**वरदराजीया–** भीमेन स्वशत्रुं घातयित्वा भीमस्य परमानुग्रहं कर्तुम् । भीमस्य भक्तिज्ञानादिवर्धनमिच्छन् च ॥ १३० ॥

**जनार्दनीया–** भीमस्य परमानुग्रहं च कर्तुमिच्छन् सन्, अनुग्रहेण च भक्तिज्ञानाभिवर्धनं कर्तुमिच्छंश्च । इति एह्येकमित्यादि आहेति सार्धश्लोकस्यान्वयः ॥ १३० ॥

---

१. 'भीमेऽभिवर्धयन्' इति वेदाङ्गतीर्थीयपाठः ।

२. 'भक्तिज्ञानाभिवर्धनम्' इति जनार्दनीयपाठः ।

**भारतश्री–** भक्तिज्ञानादिवर्धनरूपमनुग्रहम् ।। १३० ।।

**चट्टि–** भीमस्य परमानुग्रहं च कर्तुमिच्छन् सन् अनुग्रहेण भक्तिज्ञानादिवर्धनं कर्तुमिच्छंश्च शत्रुं जरासन्धं प्रति, इति एह्येकमित्यादि आहेति सार्धश्लोकस्यान्वयः ।। १३० ।।

**तृणीकर्तुं रिपुं चैव निरायुधतयाऽगमत् ।**
**कृष्णभीमार्जुनास्तेन विप्रवेषाश्च तेऽभवन् ।।१३१।।**

**व्यासतीर्थीया–** विप्रवेषाः किमर्थमभवन्नित्यतः तस्य भावमाह– **तेनेति** ।। १३१ ।।

**वादिराजतीर्थीया–** 'तेन विप्रवेषाश्च तेऽभवन्' इत्यत्र तेन जरासन्धतृणीकरणाख्यप्रयोजनेन । श्राद्धभोजिनो ब्राह्मणा अपि त्वां हन्युः किमुत क्षत्रिया इति सूचनाय 'विप्रवेषाश्चाभवन्' इत्युक्तमिति भावः ।। १३१-१३२ ।।

**वरदराजीया–** रिपुं च तृणीकर्तुं निरायुधतया आयुधरहिततया ते तं अगमन् । ते कृष्णभीमार्जुनाः तेन कारणेन निरायुधतया गन्तुमित्यर्थः । विप्रवेषाश्च अभवन् ।।१३१।।

**जनार्दनीया–** रिपुं च तृणीकर्तुं निरायुधतया अगमत्, हरिरिति शेषः ।।१३१।।

**भारतश्री–** तेन तदर्थम् ।। १३१ ।।

**चट्टि–** रिपुं च तृणीकर्तुमेव निरायुधतया अगमत्, श्रीकृष्ण इति शेषः ।। १३१ ।।

**निरायुधः क्षत्रवेषो नैव योग्यः कथञ्चन ।**
**ततो जग्मुर्विप्रवेषास्तृणीकर्तुं हि मागधम् ।।१३२।।**

**व्यासतीर्थीया–** निरायुधत्वे विप्रवेषेण भाव्यं किमित्यत आह– **निरायुध इति** ।। निरायुधाः किमर्थं जग्मुरित्यतः तद्भावमाह– **तृणीकर्तुमिति** ।। १३२ ।।

**वरदराजीया–** यतः तत्कृते क्षत्रवेषो निरायुधः न योग्यः निरायुधो भवितुं न योग्यः । ततः कारणाद्विप्रवेषाः भूत्वा जग्मुः । ननु तर्हि सायुधतया क्षत्रवेषेणैव किमिति न जग्मुरित्यत उक्तम्– **तृणीकर्तुमिति** ।। तृणीकर्तुमवश्यं निरायुधतया गन्तव्यम् । क्षत्रवेषे सति निरायुधत्वं न योग्यमिति । अतो विप्रवेषा भूत्वा जग्मुरिति भावः ।। १३२ ।।

**जनार्दनीया–** येन कारणेन निरायुधो क्षत्रवेषो नैव योग्यः तेन कारणेन ते कृष्णाद्याः विप्रवेषा अभवन् । ततः निरायुधत्वगमनेन मागधं तृणीकर्तुं विप्रवेषाः सन्तः जग्मुः ।।१३२।।

**भारतश्री–** निगमयति– **ततो जग्मुः विप्रवेषा इति** ।। १३२-१४४ ।।

**चट्टि–** येन कारणेन निरायुधः क्षत्रवेषः कथञ्चन नैव योग्यः तेन कारणेन ते कृष्णभीमार्जुनाः विप्रवेषाश्च अभवन् । ततः निरायुधत्वगमनेन मागधं तृणीकर्तुं विप्रवेषाः सन्तः जग्मुः ।। १३२ ।।

**मागधस्य ससैन्यस्य स्वगृहे संस्थितस्य च ।**
**निरायुधेन भीमेन समाह्वाने कृतेऽमितम् ।**
**धर्मं यशश्च भीमस्य वर्धयामास केशवः ।।१३३।।**

**व्यासतीर्थीया–** निरायुधत्वेन गमने निमित्तान्तरमाह– **मागधस्येति** ।। १३३ ।।

**वेदाङ्गतीर्थीया–** 'तृणीकर्तुं रिपुं चैव निरायुधतयाऽगमत्' इत्येतद्विवृणोति– **मागधस्येत्यादिना** ।। समाह्वाने कृते । निमित्तसप्तमीयम् ।। १३३ ।।

**वादिराजतीर्थीया–** 'धर्मं यशश्च' इत्यत्र निरायुधतया गृहे स्थितं प्रति सायुधतया आगमनस्याधर्मत्वादिति भावः । इदं चोपलक्षणम् । दुर्मार्गवर्तिनं प्रति अमार्गेण गमनस्य न्याय्यत्वादद्वारेण गमनं चेत्यपि द्रष्टव्यम् ।।१३३ ।।

**सत्याभिनवीया–** तत्रैव 'निरायुधेन भीमेन..' इति श्लोकः । तस्यार्थः- केशवेन निरायुधेन भीमेन समाह्वाने कृते कारिते सति केशवः भीमस्य अमितं धर्मं यशश्च वर्धयामासेति । एतेन केशवेन निरायुधेन भीमेन समाह्वाने कारिते सति केशवो भीमस्य धर्मं यशश्च वर्धयामासेति वक्तव्यम् । निरायुधेन भीमेन समाह्वाने कृते सति केशवः धर्मं यशश्च वर्धयामासेति कथनमनुपपन्नमिति चोद्यं प्रत्युक्तम् । केशव इत्यस्य अर्थवशात् केशवेनेति विपरिणामं कृते इत्यस्य अन्तर्णीतण्यर्थत्वं च स्वीकृत्य केशवेन भीमेन समाह्वाने कारिते सति केशवो धर्मं यशश्च वर्धयामासेत्यर्थस्योक्तत्वात् ।। १३३-१३९ ।।

**वरदराजीया–** निरायुधतया गमनेऽन्यदपि प्रयोजनं सिद्धमित्याह– **मागधस्येति** ।। सैन्येन सह वर्तमानस्य स्वगृहे स्थितस्य मागधस्य निरायुधेन भीमेन रणाय समाह्वाने कृते सति भीमस्यामितं परिपूर्णं धर्मं यशश्च वर्धयामास अभिवर्धयामास ।। १३३ ।।

**जनार्दनीया–** निरायुधत्वे प्रयोजनान्तरमाह– **मागधस्येत्यादिना** ।। भीमेन मागधस्य समाह्वाने कृते । निमित्तसप्तमीयम् । अमितं अपरिमितम् ।।१३३।।

**चट्टि–** निरायुधत्वेन गमने प्रयोजनान्तरमाह– **मागधस्येत्यादिना** ।। ससैन्यस्य गृहे संस्थितस्य च मागधस्य निरायुधेन भीमेन समाह्वाने कृते सति भीमस्य अमितं धर्मं यशश्च केशवः वर्धयामास ।।१३३।।

**तृतीयमर्जुनं चैव समादाय ययौ रिपुम् ।**
**हरिस्तस्माच्च भीमस्य महाधिक्यं प्रकाशयन् ।**
**मुखेन मागधस्यैव वृण्वेकं न इति ब्रुवन् ।।१३४।।**

**व्यासतीर्थीया–** भीमो मागधं हनिष्यति ततः कृष्णो अर्जुनमादाय स्वयं किमर्थं ययावित्यतः तावदर्जुनमादाय गमने भावमाह– **तृतीयमिति** ।। तस्मादर्जुनात् ।। १३४ ।।

**वेदाङ्गतीर्थीया–** अर्जुनमुपादाय गच्छतो हरेरभिप्रायमाह– **तृतीयमित्यादिना** ।। एकं वृण्विति ब्रुवन् मागधस्य मुखेनैव तस्मादर्जुनाच्च भीमस्य महाधिक्यं प्रकाशयन्नेव हि तृतीयमर्जुनं समादाय रिपुं ययाविति योजना ।। १३४ ।।

**वादिराजतीर्थीया–** 'मुखेन मागधस्यैव' इत्यत्र नः अस्माकं मध्ये एकं वृण्विति ब्रुवन् हरिः मागधस्य मुखेनैव तस्मात् अर्जुनाद् भीमस्य महाधिक्यं प्रकाशयन् अर्जुनमादाय ययाविति पूर्वेणान्वयः।।१३४-१३६।।

**वरदराजीया–** नन्वर्जुनः किमर्थं सहानीत इत्यत आह– **तृतीयमिति** ।। कृष्णभीमापेक्षया तृतीयमर्जुनं चादाय रिपुं जरासन्धं प्रति हरिर्ययौ । किं कुर्वन्? तस्मादर्जुनाद्भीमस्य महाधिक्यं मागधस्य मुखेनैव प्रकाशयन् प्रकाशयितुं नोऽस्माकं मध्ये एकं वृणु स्वीकुर्विति ब्रुवन् ययावित्यर्थः ।। १३४ ।।

**अनन्तभट्टीया–** 'एकं वृणु' इति ब्रुवन् हरिः भीमस्य तस्मादर्जुनात् महाधिक्यं मागधस्य मुखेनैव प्रकाशयन् सन् अर्जुनं समादाय ययावित्यन्वयः ।।१३४-१३५।।

**जनार्दनीया–** अर्जुनमुपादाय गच्छतो हरेरभिप्रायमाह– **तृतीयमित्यादिना** ।। नोऽस्माकं मध्ये एकं वृणु स्वीकुरु इति ब्रुवन् हरिः । तस्मादर्जुनाच्च । मागधस्य मुखेनैव भीमस्य महाधिक्यं प्रकाशयन् सन् तृतीयमर्जुनं समादाय रिपुं प्रति ययाविति योजना ।।१३४।।

**ताम्रपर्णीया–** ।। **तृतीयमिति** ।। 'वृण्वेकं नः' इति ब्रुवन् हरिः मागधस्य मुखेनैव तस्मादर्जुनाद्भीमस्य महाधिक्यं प्रकाशयन् तृतीयमर्जुनं समादाय ययाविति योजना ।।१३४-१३५।।

**चट्टि–** अर्जुनमुपादाय गच्छतो हरेरभिप्रायमाह– **तृतीयमित्यादिना** ।। नोऽस्माकं मध्ये एकं वृणु स्वीकुरु इति ब्रुवन्, हरिस्तस्मादर्जुनाच्च मागधस्य मुखेनैव भीमस्य महाधिक्यं प्रकाशयन् सन् तृतीयमर्जुनं च समादायैव रिपुं प्रति ययाविति योजना ।। १३४ ।।

**[1]वृण्वेकमस्मास्विति स प्रोक्त आह जरासुतः ।**
**कुर्यां नैवार्जुनेनाहमबलेनैव सङ्गरम् ।।१३५।।**

**व्यासतीर्थीया–** अवलेन बालेनेति भावः । अपरथा वालत्वोपपादनस्यासङ्गतेः ।। १३५ ।।

**वेदाङ्गतीर्थीया–** तत्कथमित्याह– **वृण्वेकमिति** ।। अवलेनैव वलरहितेन, बालेनेति यावत् ।।१३५।।

**वरदराजीया–** अस्मास्वेकं वृण्विति प्रोक्तः जरासुत इत्याह । किमिति? अवलेनैव सर्वथा वलरहितेन अर्जुनेन सङ्गरं न कुर्यामेव ।। १३५ ।।

---

१. 'त्रयाणां केन ते राजन् योद्धुमुत्सहते मनः । अस्मदन्यतमेनेह सज्जीभवतु को युधि ।।' सभापर्वणि-२४.२.

**जनार्दनीया–** तत्कथमित्यत आह– **वृष्णिति** ।। अस्मासु मध्ये एकं वृष्णिति प्रोक्तः आह । किमिति? अहमबलेनैव बलरहितेनैव, बालेनेति यावत् । अर्जुनेन सङ्गरं न कुर्याम् ।।१३५।।

**चट्टि–** तत्कथमित्यत आह– **वृष्णेकमित्यादिना** ।। अस्मासु मध्ये एकं वृष्णिति प्रोक्तः सः जरासुतः आह । किमिति? अहमबलेन बलरहितेनैव, बालेनेति यावत् । अर्जुनेन सङ्गरं न कुर्यामेव ।। १३५ ।।

**पञ्चपञ्चाशदब्दोऽय [1]ह्ययमेव च बालवत् ।**
**अबलत्वाद् युवाऽप्येष [2]बाल एव मतो मम ।।१३६।।**

**व्यासतीर्थीया–** ननु कथं पञ्चपञ्चाशदब्दो बाल इत्यत आह– **पञ्चेति** ।। १३६-१३७ ।।

**वेदाङ्गतीर्थीया–** युवायमबलत्वेन कुतो बालोऽभिप्रेत इत्यत आह– **पञ्चेति** ।। अयमद्य इदानीं पञ्च-पञ्चाशदब्दो हि । एवं च पञ्चपञ्चाशदब्दत्वेऽपि बालवत् बालसदृशः । तत्कुत इत्यत आह– **अबलत्वादिति**।।

**वरदराजीया–** ननु पञ्चाधिकपञ्चाशद्वर्षोऽयमर्जुनः कथं बालवदित्युच्यते इत्यत आह– **पञ्चेति** ।। अद्येदानीं पञ्चपञ्चाशदब्दोऽयमर्जुनो बालवदेव । कुतः? अबलत्वाद् बलरहितत्वात् । अतो युवाप्येषोऽर्जुनो मम बाल एव मतः ।। १३६ ।।

**अनन्तभट्टीया–** अबलो बाल इति भावः । 'पञ्चपञ्चाशदब्दः' इति अर्जुनविशेषणम् ।।१३६-१४६।।

**जनार्दनीया–** ननु युवा अयमर्जुनः कथं बाल इत्यत आह– **पञ्चेति** ।। अयमद्येदानीं पञ्चपञ्चाशदब्दो हि पञ्चाधिकपञ्चाशद्वर्षोऽपि बालवदेव बालसदृश एव । तत्कुत इत्यत आह– **अबलत्वादिति** ।। अबलत्वात् बलरहितत्वात् युवाप्येषः बाल एवेति मम मतः सम्मतः ।।१३६।।

**ताम्रपर्णीया–** एवं च पञ्चपञ्चाशदब्दोऽपीत्यन्वयः । न केवलमिदानीं बालवत् किन्तु युवाप्येष मम बाल एव मत इत्यर्थः ।।१३६-१४४।।

**चट्टि–** ननु युवाप्ययमर्जुनः कथं बाल इत्यत आह– **पञ्चेति** ।। अयमर्जुनः अद्येदानीं पञ्चपञ्चाशदब्दो हि पञ्चाधिकपञ्चाशद्वर्षो हि । बालवत् एव बालसदृश एव । तत्कुत इत्यत आह– **अबलत्वादिति** ।। अबलत्वात् बलरहितत्वात् युवाप्येषः बाल एवेति मम मतः सम्मतः ।। १३६ ।।

**इत्युक्तोऽप्यर्जुनो नाऽह कुरु तर्हि परीक्षणम् ।**
**बाहुभ्यां [3]धनुषा वेति शङ्कमानः पराजयम् ।।१३७।।**

---

१. 'ह्ययमेवं च' इति वेदाङ्गतीर्थीयपाठः स्यात् । ताम्रपर्णीयपाठोऽपि तथैव ।

२. 'अर्जुनं वासुदेवश्च वर्जयित्वा स मागधः । मत्वा देवं गोप इति बालोऽर्जुन इति स्म ह ।।' इति सभापर्वणि-२४.५. 'अयं तु वयसाऽतुल्यो नातिसत्वो न मे समः । अर्जुनो न भवेद्योद्धा भीमस्तुल्यबलो मतः ।।' भागवते-१०.८०.३२.

३. 'धनुषा चेति' इति जनार्दनीय-चट्टीपाठः ।

**वादिराजतीर्थीया–** 'इत्युक्तोऽप्यर्जुनो नाऽह' इत्यत्र इति धिक्कारपूर्वकं उक्तोऽप्यर्जुनः बाहुभ्यां धनुषा वा परीक्षणं कुर्विति नाहेत्यन्वयः ।। १३७-१३९ ।।

**वरदराजीया–** इत्युक्तस्तिरस्कृतोऽर्जुनो जरासन्धं प्रति तर्हि बाहुभ्यां धनुषा वा मम परीक्षणं परीक्षां कुर्विति नाह नोक्तवान् । किन्तु स्वापकर्षणं श्रुत्वापि तूष्णीं स्थितः । कुतः? यतः पराजयं जरासन्धात् स्वस्य पराभवं शङ्कमान इत्यर्थः ।। १३७ ।।

**जनार्दनीया–** इत्युक्तोऽपि निन्द्योत्तरेणोक्तोऽपि । बाहुभ्यां बाहुयुद्धेनेत्यर्थः । धनुषा च धनुर्युद्धेनेत्यर्थः । तर्ह्यबलत्वं मन्यमानस्त्वं परीक्षणं मम परीक्षां कुर्विति नाह । कुतः? पराजयं शङ्कमानः, स्वस्येति शेषः ।। १३७ ।।

**चट्टि–** इत्युक्तोऽपि निन्द्योत्तरणोक्तोऽप्यर्जुनः बाहुभ्यां बाहुयुद्धेनेत्यर्थः । धनुषा च धनुर्युद्धेन इत्यर्थः । तर्हि अबलत्वं मन्यमानस्त्वं परीक्षणं मम परीक्षां कुर्विति नाह । कुतः? पराजयं शङ्कमानः, स्वस्येति शेषः ।। १३७ ।।

**अतो भीमे बलाधिक्यं सुप्रसिद्धमभून्महत् ।**
**एतदर्थं हि कृष्णेन सहाऽनीतः स फल्गुनः ।।१३८।।**

**व्यासतीर्थीया–** पूर्वमर्जुनायने यन्निमित्तमुक्तं तत्स्पष्टयति– **एतदर्थमिति** ।। १३८ ।।

**वेदाङ्गतीर्थीया–** अतः जरासन्धोक्तस्य अर्जुननाप्रत्युत्तरदानात् ।। १३८ ।।

**वरदराजीया–** अतो जरासन्धवचनादर्जुनस्य पराजयशङ्कया तूष्णीम्भावादग्र निःशङ्कया प्रवर्तमाने भीमे महाबलाधिक्यं सुप्रसिद्धमभूत् । एतदर्थं महद्बलाधिक्यस्य सुप्रसिद्ध्यर्थम् ।। १३८ ।।

**जनार्दनीया–** अतः स्वापकर्षं श्रुत्वा अनुक्तत्वात्, एतदर्थं भीमे बलाधिक्यप्रसिद्ध्यर्थम् ।।१३८।।

**चट्टि–** अतः स्वापकर्षं श्रुत्वा अनुक्तत्वात् भीमे महाबलाधिक्यं सुप्रसिद्धमभूत् । एतदर्थं भीमे बलाधिक्यप्रसिद्ध्यर्थं श्रीकृष्णेन सः फल्गुनः सहानीतः ।। १३८ ।।

**जानन् कृष्णे बलं घोरमविषह्यं स मागधः ।**
**कुत्सयन् गोप इति तं भयान्नैवाऽह्वयत् प्रभुम् ।।१३९।।**

**व्यासतीर्थीया–** कृष्णं कस्माद्युद्धाय नाह्वयदित्यतस्तस्य भावमाह– **जानन्निति** ।। १३९ ।।

**वेदाङ्गतीर्थीया–** घोरम् अत एवाविषह्यम् ।। १३९ ।।

**वरदराजीया–** तर्हि दुर्बलत्वादर्जुनमनाहूय कृष्णं किमिति नाहूतवानित्यत आह– **जानन्निति** ।। घोरं भयङ्करमसह्यं सोढुमशक्यं बलं कृष्णे जानन् त्वं गोप इति कुत्सयन् प्रभुं कृष्णं भयादेव नाह्वयत्।।१३९।।

**जनार्दनीया–** ननु कृष्णं किमर्थं नाह्वयदित्यत आह– **जानन्निति** ।। घोरं क्रूरम् । अत एवाविषह्यं सोढुमशक्यम् । प्रभुं बलादिना समर्थम् । गोप इति कुत्सयन् निन्दयन् भयादेव ।।१३९।।

**चट्टि–** ननुः श्रीकृष्णं किमर्थं नाह्वयदित्यत आह– **जानन्निति** ।। सः मागधः श्रीकृष्णं घोरं क्रूरमत एव अविषह्यं सोढुमशक्यं बलं जानन् त्वं गोप इति कुत्सयन् निन्दयन् प्रभुं बलादिना समर्थं तं श्रीकृष्णं भयादेव नाह्वयत् ।। १३९ ।।

**आह्वयामास भीमं तु स्याद् वा मे जीवनं त्विति ।**
**हनिष्यत्येव मां कृष्ण इत्यासीन्नृपतेर्भयम् ।**
**तस्मात् तं नाऽह्वयामास वासुदेवं स मागधः ।।१४०।।**

**व्यासतीर्थीया–** भीमस्यैवाह्वाने निमित्तमाह– **स्यादिति** ।। कृष्णाह्वानेऽपि पक्षे जीवनं स्यादित्यत आह– **हनिष्यत्येवेति** ।। १४० ।।

**वादिराजतीर्थीया–** 'स्याद्वा मे जीवनं तु' इत्यत्र भीमेन सह युद्धे उभयोः समबलत्वात् मे जीवनं स्याद्वेति पाक्षिकजीवनाशया भीममेवाह्वयामास । कृष्णेन तु अष्टादशवारमपि परीक्षितस्य तस्य कृष्णो मां हनिष्यत्येव इति भयमासीदिति योजना ।। १४०-१४१ ।।

**सत्याभिनवीया–** तत्रैव 'आह्वयामास भीमं तु..' इत्यस्ति । तस्यार्थः- मे जीवनं स्यात् भवतु वा माभूद्वेति जीवनसन्देहं कृत्वा तु कृत्वैव भीमं तु भीममेव आह्वयामासेति । एतेन स्याद्वा मे जीवनमित्येतत् अनन्वितमिति दूषणं निराकृतम् । माभूदित्यध्याहृतेनान्वय इत्यभ्युपगमात् । एतेनैव तुशब्दद्वयं व्यर्थमिति दूषणं निरस्तम् । तुशब्दद्वयस्य अवधारणार्थत्वम् एकस्य भीममित्यनेनान्वयः द्वितीयस्य सन्देहं कृत्वेत्यध्याहृतेनान्वयं चाभ्युपेत्यार्थस्योक्तत्वात् ।। १४०-१४६ ।।

**वरदराजीया–** तर्हि भीमान्न भयं जरासन्धस्य कथमित्यत आह– **आह्वयामासेति** ।। भीमेन युद्धे सति मे जीवनं स्यात् वा पाक्षिकजीवनं भविष्यति । कृष्णेन तु युद्धे एकान्तिकं मरणमेव स्यादिति बुद्ध्या भीममाह्वयामासेत्याह– **हनिष्यत्येवेति** ।। नृपतेर्जरासन्धस्य मरणभयमासीत् । तस्मादैकान्तिकमरणाद्वरं पाक्षिकमिति न्यायेन पाक्षिकजीवनाशया भीममेवाह्वयामास । वासुदेवं तु नाह्वयामास ।। १४० ।।

**जनार्दनीया–** तर्हि भीमबलं घोरं किं न स्यादित्यत आह– **आह्वयामासेति** ।। मे जीवनं स्याद्वा पाक्षिकं जीवनं स्यात् इति भीममाह्वयामास । हनिष्यत्येवेति भयं मृतिभयम् आसीत् यस्मात् तस्मान्नाह्वायमास ।।१४०।।

**चट्टि–** तर्हि भीमबलं घोरं किं न स्यादित्यत आह– **आह्वयामासेत्यादिना** ।। मे जीवनं स्याद्वा पाक्षिकं जीवनं भविष्यति वेति भीममाह्वयामास । पाक्षिकजीवनं स्यादिति श्रीकृष्णमेव किमर्थं

नाह्वयामासेत्यत आह– **श्रीकृष्णः मां हनिष्यत्येवेति** ।। नृपतेः जरासन्धस्य यस्माद् भयमासीत् तस्मात् सः मागधः तं वासुदेवं नाह्वयामास ।। १४० ।।

**अर्जुने तु जिते कृष्णभीमौ मां निहनिष्यतः ।**
**त्रयाणां दुर्बलाह्वानान्नश्येत् कीर्तिश्च मे ध्रुवम् ।।१४१।।**

**व्यासतीर्थीया–** अर्जुनेन युद्धे जयो निश्चित एव तथापि तं कस्मात् नाह्वयामास इत्यतस्तत्र निमित्तद्वयमाह– **अर्जुने त्विति** ।। १४१-१४३ ।।

**वरदराजीया–** ननु तदपेक्षयार्जुनस्यावलत्वात् तदाह्वानं कुतो न क्रियत इत्यत आह– **अर्जुने त्विति** ।। सत्यमर्जुनेन युद्धे सति मम जयः स्यादिति, तथाप्यर्जुने जिते पराजिते सति कृष्णभीमौ मां निहनिष्यत एव । केवलं कीर्तिनाशोऽवशिष्यत इत्याह– **त्रयाणामिति** ।। त्रयाणां मध्ये दुर्बलस्यार्जुनस्य युद्धार्थमाह्वाने मे कीर्तिर्ध्रुवं नश्येत् ।। १४१ ।।

**जनार्दनीया–** ननु जीवनापेक्षया अर्जुनं किमर्थं नाह्वयदित्यत आह– **अर्जुन इति** ।। त्रयाणां मध्ये ।।१४१।।

**चट्टि–** ननु जीवनापेक्षया अर्जुनं किमर्थं नाह्वयदित्यत आह– **अर्जुन इति** ।। अर्जुने मया जिते सति श्रीकृष्णभीमौ मां निहनिष्यतः । कीर्तिनाशोऽपि भविष्यतीत्यत आह– **त्रयाणामिति** ।। त्रयाणां मध्ये दुर्बलाह्वानात् मे कीर्तिश्च ध्रुवं नश्येत् ।। १४१ ।।

**इति मत्वाऽऽह्वयामास भीमसेनं स मागधः ।**
**कथञ्चिज्जीवितं वा स्यान्न तु नश्यति मे यशः ।।१४२।।**

**वरदराजीया–** इति मत्वा भीमसेनमाह्वयामास । भीमसेनाह्वानेऽयं गुणः स्यादित्याह– **कथञ्चिदिति** ।।१४२।।

**जनार्दनीया–** मत्वा ज्ञात्वा । कथञ्चिज्जीवितं स्याद्वा यशो न नश्यति इति भीमसेनं आह्वयामास ।।१४२।।

**चट्टि–** इति मत्वा ज्ञात्वा । सः मागधः भीमसेनमाह्वयामास । भीमसेनाह्वाने को लाभ इत्यत आह– **कथञ्चिदिति** ।। कथञ्चिज्जीवितं स्याद्वा मे यशश्च न नश्यति ।। १४२ ।।

**[1]इति स्म भीमं प्रतियोधनाय सङ्गृह्य राजा स जरासुतो बली ।**
**[2]राज्ये निजं चाऽत्मजमभ्यषिञ्चत् पुरा ख्यातं पत्रतापाख्यरुद्रम् ।।१४३।।**

---

१. 'इतीक्ष्य भीमं' इति वरदराजीय-चट्टीपाठः ।

२. 'एवमुक्त्वा जरासन्धः सहदेवाभिषेचनम । आज्ञापयत्तदा राजा युयुत्सुर्भीमकर्मभिः ।।' सभापर्वणि-२२.४१.

**वेदाङ्गतीर्थीया–** इति स्म उक्तहेतोरेव । सङ्गृह्य अङ्गीकृत्य ।। १४३ ।।

**वादिराजतीर्थीया–** 'इति स्म भीमं प्रतियोधनाय' इत्यत्र प्रतियोधनाय स्वात्मानं प्रति युद्धाय । भीममेव सङ्गृह्य स्वमनसा ग्रहणं कृत्वेत्यर्थः ।। १४३-१४४ ।।

**वरदराजीया–** इतीक्ष्य निश्चित्य प्रतियोधनाय युद्धाय भीमं सङ्गृह्य समाहूय बली बलाधिकोऽपि राज्ये निजमात्मजं सहदेवाख्यमभ्यषिश्चत् । स पूर्वं क इत्यत आह– **पुरेति** ।। पुरा पूर्वं मूलरूपे पत्रताप इति आख्या यस्य तं रुद्रमात्मजमभ्यषिश्चदित्यर्थः ।। १४३ ।।

**चट्टि–** इति ईक्ष्य निश्चित्य प्रतियोधनाय युद्धाय भीमं सङ्गृह्य अङ्गीकृत्य बली राजा सः जरासुतः राज्ये निजमात्मजं पुत्रं सहदेवमभ्यषिश्चत् । सः पूर्वं क इत्यत आह– **पुरेति**।। पुरा पूर्वं मूलरूपे पत्रताप इति आख्या यस्य सः पत्रतापाख्यः स चासौ रुद्रश्च तं ख्यातं प्रसिद्धं आत्मजमभ्यषिश्चत् इति सम्बन्धः ।।१४३।।

**बलं भीमे मन्यमानोऽधिकं तु गदाशिक्षामात्मनि चाधिकां नृपः ।**
**भीतो नियुद्धेऽस्य ददौ गदां स भीमाय चान्यां स्वयमग्रहीद् बली ।।१४४।।**

**व्यासतीर्थीया–** मुष्टियुद्धं कस्मान्नाकरोदित्यतो निमित्तमाह– **भीत इति** ।। नियुद्धे मुष्टियुद्धे । अस्य सकाशाद्भीतः । आयुधान्तरमपहाय गदां कस्माद् ददावित्यत उक्तम्– **गदेति** ।। १४४-१४७ ।।

**वरदराजीया–** भीमेऽधिकं बलं मन्यमानो आत्मनि स्वस्मिन् गदाशिक्षामधिकां च मन्यमानो नियुद्धे द्वन्द्वयुद्धे अस्य सकाशाद्भीतो नृपो जरासन्धो भीमाय गदां ददौ । अन्यां द्वितीयां गदां स्वयमग्रहीत् । यतो बलीत्यर्थः ।। १४४ ।।

**जनार्दनीया–** भीमे अधिकं शारीरबलं आत्मनि अधिकां गदाशिक्षां मन्यमानः नियुद्धे मुष्टियुद्धे । अस्य भीमस्य सकाशाद्भीतः सन् ।।१४४।।

**चट्टि–** नृपः जरासन्धः भीमे अधिकं बलं शारीरबलं आत्मनि अधिकां गदाशिक्षां च मन्यमानः सन् नियुद्धे मुष्टियुद्धे अस्य भीमस्य सकाशाद्भीतः सन् भीमाय गदां ददौ । बली सः जरासन्धः अन्यां गदां स्वयमग्रहीत् ।। १४४ ।।

**तदर्थमेवाऽशु गदां प्रगृह्य भीमो ययौ मागधसंयुतो बहिः ।**
**पुरात् सकृष्णार्जुन एव तत्र त्वयुध्यतां केशवपार्थयोः पुरः ।।१४५।।**

**वेदाङ्गतीर्थीया–** तदर्थमेव जरासन्धार्थमेव ।। १४५ ।।

**वादिराजतीर्थीया–** 'तदर्थमेवाशु' इत्यत्र तदर्थमेव गदभ्यासकौशलप्रदर्शनार्थमेव ।। १४५-१४७ ।।

**वरदराजीया–** तदर्थं जरासन्धाभिलषितसिद्ध्यर्थमेव गदामाशु प्रगृह्य मागधेन संयुतः सकृष्णार्जुनो भीमो वहिः पुराद्वहिः वहिःप्रदेशं ययौ । केशवपार्थयोः पुरः पुरतः तत्र वहिःप्रदेशे अयुध्यतां युद्धं कृतवन्तौ ।। १४५ ।।

**अनन्तभट्टीया–** ।। तदर्थमेवेति ।। स्वस्य गदापेक्षाभावेऽपि मागधार्थमेव ।। १४५ ।।

**जनार्दनीया–** तदर्थमेव जरासन्धाभिलषितसिद्ध्यर्थमेव । पुराद् वहिः । पुरः अग्रे ।। १४५ ।।

**ताम्रपर्णीया–** तदर्थमेव स्वस्य गदापेक्षाभावात् मागधार्थमेव ।।१४५-१४७।।

**भारतश्री–** तदर्थं जरासन्धार्थम् ।। १४५-१५९ ।।

**चट्टि–** तदर्थं जरासन्धाभिलषितसिद्ध्यर्थमेव गदामाशु प्रगृह्य मागधेन संयुतः सकृष्णार्जुन एव भीमः पुराद् बहिःप्रदेशं ययौ । केशवपार्थयोः पुरः पुरतः तत्र बहिःप्रदेशे अयुध्यताम् युद्धं कृतवन्तौ ।। १४५ ।।

**वाचाऽजयत् तं प्रथमं वृकोदरः शिवाश्रयं विष्णुगुणप्रकाशया ।**
**[1]ततो गदाभ्यामभिपेततुस्तौ विचित्रमार्गानभिदर्शयन्तौ ।।१४६।।**

**वेदाङ्गतीर्थीया–** विचित्रमार्गान् मण्डलप्रसाराभिसारादिविचित्रमार्गविशेषान् ।। १४६-१५४ ।।

**वरदराजीया–** तत्र प्रथमं वाग्युद्धे प्रवृत्ते जरासन्धः पराजित इत्याह । शिवाश्रयो दैवतं यस्य स तथा तम् । प्रथमं वाचा वेदवाचा अजयत् । कथम्भूतया वाचा? विष्णुगुणान् प्रकाशयतीति तथा तयेत्यर्थः । ततो वाचा पराजयानन्तरं गदाभ्यां परस्परं अभिपेततुः सङ्घटितवन्तौ । किं कुर्वन्तौ? विचित्रमार्गान् गदायुद्धे नानाविधान् मार्गानभिदर्शयन्तौ ।। १४६ ।।

**जनार्दनीया–** प्रथमममादौ विष्णुगुणप्रकाशया विष्णुगुणान् प्रकाशयतीति विष्णुगुणप्रकाशा तया । वाचा वेदेन । विचित्रमार्गान् मण्डलप्रसाराभिसारादिविचित्रमार्गविशेषान् । अभिपेततुः परस्परं प्राप्तावित्यर्थः ।।१४६।।

**चट्टि–** वृकोदरः प्रथमममादौ शिवः आश्रयो यस्य स तथा तं जरासन्धं विष्णुगुणान् प्रकाशयतीति विष्णुगुणप्रकाशा तया वाचा वेदेन अजयत् । ततः भीमजरासन्धौ विचित्रमार्गन् गदायुद्धे मण्डलप्रसाराभिसारादिविचित्रमार्गविशेषान् अभिदर्शयन्तौ गदाभ्यामभिपेततुः परस्परं प्राप्तावित्यर्थः ।। १४६ ।।

**[2]तयोर्गदे तेऽशनिसन्निकाशे चूर्णीकृते [3]देहमहाद्रढिम्ना ।**
**अन्योन्ययोर्वक्षसि पातिते रुषा यथाऽश्मनोः पांसुपिण्डौ सुमुक्तौ ।।१४७।।**

---

१. 'ततः समबलौ वीरौ संयत्तावितरेतरम् । जघ्नतुर्वज्रकल्पाभ्यां गदाभ्यां रणदुर्मदौ ।। मण्डलानि विचित्राणि सव्यं दक्षिणमेव च । चरतोः शुशुभे युद्धं नटयोरिव रङ्गिणोः ।।' भागवते- १०.८०.३४-३५.

२. 'इत्युक्त्वा भीमसेनाय दत्वा स महतीं गदाम् । द्वितीयां स्वयमादाय निर्जगाम पुराद्बहिः ।।' भागवते- १०.८०.३३.

३. जरासन्धदेहः जायमानस्यैव वज्रसारमयमासीत् । तदुक्तं सभापर्वणि-१७.५५. 'ततः सा राक्षसी राजन् विस्मयोत्फुल्ललोचना । न शशाक समुद्वोढुं वज्रसारमयं शिशुम् ।।' इति ।

**सत्याभिनवीया–** तत्रैव 'तयोर्गदे तेऽशनिसन्निकाशे..' इति श्लोके 'अन्योन्ययोः वक्षसि पातिते रुषा' इत्यस्य अन्योन्ययोः अन्योन्यकलहयुक्तयोः भीमजरासन्धयोः वक्षसि रुषा पातिते इत्यर्थः । एतेन अन्योन्यकलहयुक्तयोरिति वक्तव्यम् । अन्योन्ययोरिति कथनमनुपपन्नमिति दूषणं परास्तम् । अन्योन्यशब्देन अन्योन्यकलहयुक्तत्वं लक्षणया गृह्यते इत्यभ्युपगमात् ।। १४७-१५२ ।।

**वरदराजीया–** तयोः भीमजरासन्धयोस्ते गदे । कथम्भूते? अशनिसन्निकाशे वज्रतुल्ये देहस्य महाद्रढिम्ना अतिदृढत्वेन चूर्णीकृते । पुनः कथम्भूते? अन्योन्ययोः भीमजरासन्धयोः परस्परं वक्षसि रुषा कोपेन पातिते । तत्र दृष्टान्तः– **यथेति** ।। अश्मनोः शिलयोरुपरि पांसुपिण्डौ सुमुक्तौ सम्यक् पातितौ चूर्णीभवतः तथेत्यर्थः । वक्षसोर्गदयोश्च द्वित्वाद् दृष्टान्ते 'अश्मनोः' इति 'पांसुपिण्डौ' इति द्विवचनम् ।।१४७।।

**अनन्तभट्टीया–** ।। **रुषेति** ।। तदा मरणस्य सन्निहितत्वादिति भावः ।।१४७।।

**जनार्दनीया–** अशनिसन्निकाशे वज्रसदृशे ते गदे देहमहाद्रढिम्ना देहस्यातिकठिनत्वेन । भीमजरासन्धयोर्देहौ अतिकठिनाविति भावः । कथम्भूते गदे? अन्योन्ययोर्भीमजरासन्धयोः वक्षसि परस्परं पातिते, भीमजरासन्धाभ्यामिति शेषः । कयोः काविव? अश्मनोः पाषाणयोः पांसुपिण्डौ धूलिपिण्डौ सुमुक्तौ सुतरां बलेन मुक्तौ क्षिप्तौ यथा तथेति सम्बन्धः ।।१४७।।

**चट्टि–** अशनिसन्निकाशे वज्रसदृशे ते गदे अश्मनोः पाषाणयोः सुमुक्तौ पांसुपिण्डौ यथा चूर्णीकृता भवतः तथान्योन्ययोः वक्षसि रुषा पातिते सत्यौ तयोर्देहमहाद्रढिम्ना देहस्यातिकठिनत्वेन चूर्णीकृते ।।१४७।।

**सञ्चूर्णितगदौ वीरौ जघ्नतुर्मुष्टिभिर्मिथः ।**
**ब्रह्माण्डस्फोटसङ्काशैर्यथा केशवकैटभौ ।।१४८।।**

**व्यासतीर्थीया–** ब्रह्माण्डस्फोटसङ्काशैः ब्रह्माण्डस्फोटसङ्काशान् शब्दान् कुर्वद्भिः मुष्टिभिरित्यर्थः ।।१४८-१५०।।

**वादिराजतीर्थीया–** 'ब्रह्माण्डस्फोटसङ्काशैः' इत्यत्र ब्रह्माण्डस्य स्फोटो विदारणं यैस्ते ब्रह्माण्डस्फोटाः । ब्रह्माण्डस्फोटा इव सङ्काशाः सम्यक्प्रकाशमानाः । 'काशृ दीप्तौ' इति धातोः । कर्त्रर्थे पचाद्यचि कृते काशाः काशमानाः इति शब्दनिष्पत्तिः ।। १४८-१५२ ।।

**मधुसूदनीया–** ब्रह्माण्डस्फोटसङ्काशैः, रवैर्युक्ताभिरिति शेषः । मुष्टिभिर्जघ्नतुः ।। १४८ ।।

**वरदराजीया–** वीरौ मुष्टिभिः जघ्नतुः । यतः सञ्चूर्णितगदावित्यर्थः । सञ्चूर्णिते गदे ययोस्तौ तथा । कथम्भूतैः मुष्टिभिः? ब्रह्माण्डस्फोटसङ्काशैः ब्रह्माण्डं स्फोटयन्तीति ब्रह्माण्डस्फोटाः, तद्वद्विद्यमानैरित्यर्थः । यथा कैटभकेशवौ तथा निजघ्नतुः ।। १४८ ।।

**जनार्दनीया–** सञ्चूर्णितगदौ सञ्चूर्णिते गदे याभ्यां तौ तथा । ब्रह्माण्डस्फोटसङ्काशैः ब्रह्माण्डं स्फोटयन्तीति ब्रह्माण्डस्फोटाः शब्दाः, तैः सकाशैः सदृशैः । मुष्टिभिः ब्रह्माण्डस्फोटनसमर्थशब्देन सदृशैरिति भावः ।।१४८।।

**ताम्रपर्णीया–** ब्रह्माण्डस्फोटसङ्काशैः ब्रह्माण्डस्फोटोत्थशब्दसङ्काशशब्दं कुर्वद्भिः । यद्वा ब्रह्माण्डस्फोटवत् प्रतीयमानैः ।। १४८-१४९ ।।

**चट्टि–** वीरौ भीमजरासन्धौ सञ्चूर्णिते गदे याभ्यां तौ तथा सन्तौ ब्रह्माण्डस्फोटसङ्काशैः ब्रह्माण्डस्फोटेन समर्थशब्देन सदृशैः इति भावः । मुष्टिभिः मिथः परस्परं केशवकैटभौ यथा तथा जघ्नतुः । 'अक्लीवौ मुष्टिमस्थू द्वौ' इत्यमरः।। १४८ ।।

**चचाल पृथ्वी गिरयश्च चूर्णिताः कुलाचलाश्चेलुरलं विचुक्षुभुः ।**
**समस्तवाराम्पतयः सुरासुरा विरिञ्चशर्वादय आसदन्नभः ।।१४९।।**

**मधुसूदनीया–** गिरयः युद्धभूमिस्थिता गिरयः चूर्णिताः, अङ्घ्रिपातादिभिरिति शेषः । यत्तु 'गिरयः पृथिव्यां विद्यमानाः गिरयश्चूर्णिता आसन्' इति वरदराजीयव्याख्यानम् । तन्न । युद्धभूमिस्थपर्वतानां अङ्घ्रिपातादिना कारणेन चूर्णितत्वेऽपि स्थलान्तरे स्थितगिरीणां अङ्घ्रिपातादिकारणाभावेन चूर्णितायोगात् । कारणस्य समानदेशीयस्यैव कार्यजनकतानियमात् ।। १४९ ।।

**वरदराजीया–** पृथिवी चचाल कम्पितवती । गिरयः पृथिव्यां विद्यमानाश्चूर्णिताः चूर्णीकृताः आसन् । कुलाचलाः कुलपर्वताश्चेलुः चालितवन्तः । समस्तवाराम्पतयः समुद्राः । षष्ठ्याः अलुक् । अलं विचुक्षुभुः क्षोभं प्राप्ताः । विरिञ्चशर्वादयः सुरासुराः नभः आकाशं प्रत्यासदन् आगताः ।। १४९ ।।

**अनन्तभट्टीया–** 'समस्तवाराम्पतयः' इत्यत्र षष्ठ्याः अलुक् ।।१४९-१५१।।

**जनार्दनीया–** कुलाचलाः पर्वताः । समस्तवाराम्पतय इत्येकं पदम् । षष्ठ्याः अलुक् । अलं विचुक्षुभुः कलुषत्वं प्राप्ता इत्यर्थः । नभः आकाशमासदन् आययुः ।।१४९।।

**चट्टि–** पृथ्वी चचाल कम्पिता, गिरयः युद्धभूमिस्थिताः गिरयश्च चूर्णीकृताः, अङ्घ्रिपाताभिरिति शेषः । कुलाचलाः कुलपर्वताश्चेलुः चलितवन्तः समस्तवाराम्पतयः इत्येकं पदम् । षष्ठ्याः अलुक् । अलं विचुक्षुभुः क्षोभं प्राप्ताः । विरिञ्चशर्वादयः सुरासुराः नभः आकाशमासदन् आययुः ।। १४९ ।।

**सुरास्तु भीमस्य जयाभिकाङ्क्षिणस्तथाऽसुराद्या मगधाधिपस्य ।**
**पश्यन्ति सर्वे क्रमशो बलं स्वं समाददे मारुतनन्दनोऽपि ।।१५०।।**

**मधुसूदनीया–** ।। क्रमशो बलं स्वं समदद इति ।। 'पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः । नागायुतसमप्राणः त्वया नीतः कथं वशम् ।।' इति भारते(३.१८१.३) भीमस्य नागायुतबलवत्त्वप्रसिद्धेः जरासन्धस्याऽपि भारतादौ नागायुतबलवत्त्वप्रसिद्धेः उभयोरपि बलसाम्यप्रतीतेः भीमदेहस्थबलापेक्षया-

धिकवलं समादद इति भावः । तथाचोक्तम्– 'यत्तद्देवं परं सत्वं यच्च ते मातरिश्वानः । बलं भीम जरासन्धे दर्शयाशु तदद्य वै ।।' इति कृष्णवचनात् सभापर्वणि (२५.४) ।। १५०-१५८ ।।

**वरदराजीया–** तत्र सुरास्तु भीमस्य जयाभिकाङ्क्षिणः जयं अभिकाङ्क्षन्त इति तथाभूताः सन्तः पश्यन्ति, युद्धमिति शेषः । तथा असुराद्याः असुरराक्षसदानवादयो मगधाधिपस्य जयाभिकाङ्क्षिणः सर्वे पश्यन्तीत्यर्थः । क्रमशः क्रमेण स्वं स्वकीयं मूलवलं समाददे व्यक्तीचकार ।। १५० ।।

**जनार्दनीया–** असुराद्याः आद्यशब्देन राक्षसाः पिशाचाः ग्राह्याः । जयाभिकाङ्क्षिणः इति उभयत्र सम्बध्यते । सर्वे देवा असुराः पश्यन्ति । मारुतनन्दनः स्वमपि स्वकीयमेव वलं क्रमशः क्रमेण आददे । मूलरूपे विद्यमानं वलमित्यर्थः ।।१५०।।

**ताम्रपर्णीया–** ।। **क्रमश इति** ।। मूलरूपं संस्मृत्य मूलरूपगतं स्ववलं क्रमात् समाददे स्वीचकार । तदुक्तं सभापर्वणि– 'यत्तवैव परं सत्वं पितुस्ते मातरिश्वनः । वलं भीम जरासन्धे दर्शयस्व तदद्य नः ।।' 'वायुं चिन्त्य महाबाहो जहि त्वं मागधाधिपम् । एवमुक्तस्तदा भीमो मनसा चिन्त्य मारुतम् ।। जनार्दनं नमस्यैव परिष्वज्य च फल्गुनम् । प्रभञ्जनवलाविष्टो जरासन्धमरिन्दमः ।।'(२५.४.८-९) इत्यादि ।। १५०-१५२ ।।

**अतिविशद–** 'क्रमशो वलं स्वं समाददे मारुतिनन्दनोऽपि' इत्यत्र 'स्वं स्वकीयं वलं समाददे व्यक्तीचकार' इति केचित् । अन्ये तु- 'स्वकीयं स्वस्मिन्नेव विद्यमानं वलं मानुषं वलं क्रमात् समाददे गृहीतवानिति । एकदैव सर्वं मानुषं वलं न व्यक्तीचकारेत्यर्थः' इति । 'दैवं वलं सुशक्तोऽपि व्यक्तं चक्रे न मारुतिः' (२२.३४२) इत्युत्तरत्र वक्ष्यमाणत्वात् । अत्राप्येवमिति ।। १५० ।।

**भावचन्द्रिका–** क्रमशः दिनक्रमेण साधनक्रमेण वा वलाधिक्यार्थं कृष्णेन मूलरूपस्मारणे..* विद्यमानमेव वलमिच्छादिना अभिव्यक्तमभवदित्यर्थः ।। १५०-१६२ ।।

**चट्टि–** सुरास्तु भीमस्य जयमभिकाङ्क्षन्तीति जयाभिकाङ्क्षिणः सन्तः पश्यन्ति, युद्धमिति शेषः । तथा असुराद्याः आदिशब्देन राक्षसपिशाचाः ग्राह्याः । सर्वे मगधाधिपस्य जयाभिकाङ्क्षिणस्सन्तः पश्यन्तीति सम्बन्धः । मारुतनन्दनः भीमः स्वमपि स्वकीयमेव वलं क्रमशः क्रमेण समाददे व्यक्तीचकार । मूलरूपे विद्यमानं वलमित्यर्थः । 'नागायुतवलप्राणो भीमो भीमपराक्रमः । असकृद्वलदेवेन वाहुयुद्धे पराजितः ।।' इत्यादिना हरिवंशे । 'पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः । नागायुतसमप्राणः त्वयानीतः कथं वशे ।।' इति भारते । भीमस्य नागायुतवलवत्वप्रसिद्धेः जरासन्धस्यापि भारतादौ नागायुतवलवत्वप्रसिद्धेः उभयोरपि वलसाम्यप्रतीतेः भीमदेहस्थवलापेक्षया अधिकवलं समादद इति भावः । तथा चोक्तम्- 'यत्तद्देवं परं सत्वं यच्च ते मातरिश्वनः । वलं भीम जरासन्धे दर्शयाशु तदद्य वै ।। तवैष वध्यो दुर्वुद्धिः जरासन्धो महारथः । इत्यन्तरिक्षे त्वश्रौषं यदा वायुरवाप्यते ।।' इति कृष्णवचनात् सभापर्वणि ।।१५०।।

**मानयित्वा वरं धातुर्दिवसान् दश पञ्च च[1]।**
**वासुदेवाज्ञया भीमः शत्रुं हन्तुं मनो दधे ॥१५१॥**

**व्यासतीर्थीया–** रिपुं झडित्यहत्वा अनेन ताड्यमानो वहुकालं किमर्थं युयुध इत्यत आह– **मानयित्वेति** ॥ १५१ ॥

**वरदराजीया–** 'क्रमशः' इत्येतद्विवृणोति– **मानयित्वेति** ॥ दशपञ्चदिवसान् पक्षमात्रमित्यर्थः । वासुदेवाज्ञया श्रीकृष्णाज्ञया शत्रुं जरासन्धं हन्तुं मनो दधे उद्युक्तवान् ॥ १५१ ॥

**जनार्दनीया–** पञ्चदशदिवसान् एकपक्षम् । दधे दध्रे ॥ १५१ ॥

**अतिविशद–** 'वासुदेवाज्ञया भीमः' इत्यत्र [2]''शत्रोर्जन्ममृती विद्वान् जीवितञ्च जराकृतम् । पार्थमाप्याययन्स्वेन तेजसा चिन्तयन् हरिः ॥ सञ्चिन्त्यारिवधोपायं भीमस्यामोघदर्शनः । दर्शयामास विटपं पाटयन्निव सञ्ज्ञया ॥' इति (१०.८०.४०-४१) भागवतोक्तत्वात् । सञ्ज्ञया ज्ञातव्या ॥१५१-१६१॥

**चट्टि–** 'क्रमशः' इत्येतद्विवृणोति– **मानयित्वेति** ॥ दशपञ्चदिवसान् एकपक्षं धातुः ब्रह्मणः वरं मानयित्वा भीमः वासुदेवाज्ञया शत्रुं हन्तुं मनः दधे ॥ १५१ ॥

**[3]स प्रणम्य हृषीकेशं हर्षादाश्लिष्य फल्गुनम् ।**
**रिपुं जग्राह [4]मुकुटे वारणं मृगराडिव ॥१५२॥**

**व्यासतीर्थीया–** 'आश्लिष्य' इत्युक्त्या युध्यन् भटः आसन्नकालं जानन् प्रियानालिङ्ग्य युध्येत् । तथात्रापि प्राप्तमत उक्तम्– **हर्षादिति** ॥ १५२-१५३ ॥

**वरदराजीया–** स भीमः वारणं मृगराट् सिंह इव रिपुं मुकुटप्रदेशे जग्राह ॥ १५२ ॥

**अनन्तभट्टीया–** मुकुटं गृहित्वा तं परावर्त्य ॥१५२॥

**जनार्दनीया–** स भीमः मुकुटे किरीटे जग्राह । कः कमिव ? मृगराट् सिंहः वारणमिव गजमिव ॥१५२॥

---

१. 'कार्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि । तदा तद्युद्धमभवद्दिनानि दश पञ्च च । अनाहारं दिवारात्रं अविश्रान्तमवर्तत । तद्वृत्तन्तु त्रयोदश्यां समवेतं महात्मनोः ॥ चतुर्दश्यां निशायान्तु निवृत्तो मागधः क्रमात् ॥' सभापर्वणि- २४.३३-३४.

२. BORI- सभापर्व.पृ-११८.

३. 'एवमुक्तस्ततो भीमो मनसाऽऽचिन्त्य मारुतम् । जनार्दनं नमस्कृत्य परिष्वज्य च फल्गुनम् ॥' सभापर्वणि-२५.८.

४. 'मकुटे' इति चट्टीपाठः ।

**चट्टि–** सः भीमः हर्षात् हृषीकेशं श्रीकृष्णं प्रणम्य, फल्गुनमाश्लिष्य आलिङ्ग्य मृगराट् सिंहः वारणं गजमिव रिपुं शत्रुं मागधं मकुटे किरीटं जग्राह ।। १५२ ।।

**पृष्ठेऽस्य जानुमाधाय कूर्मदेशं बभञ्ज च ।**
**मृतिकाले पुनर्देहं विददार यथा पुरा ।।१५३।।**

**वादिराजतीर्थीया–** 'कूर्मदेशं बभञ्ज ह' इत्यत्र कूर्मदेशं पृष्ठमूलम् । पुरा जननकाले ।।१५३-१५९।।

**सत्याभिनवीया–** तत्रैव 'मृतिकाले पुनर्देहं विददार..' इत्यस्ति । तस्यार्थः- भीमः पुरा जन्मकाले यथा शकलद्वयमभूत् तथा मृतिकाले पुनः शकलद्वयभवनार्थं देहं विददारेति । एतेन पूर्वं भीमेन जरासन्धदेहविदारणस्याकृतत्वात् पुरा यथा विददार तथा पुनः देहं विददारेति कथनमनुपपन्नमिति दूषणस्यानवकाशः । पुरा यथेत्यस्य विददारेत्यनेनान्वयो न किन्तु शकलद्वयमित्याद्यध्याहृतेनान्वयः । पुनःशब्दस्य तु शकलभवनार्थमित्यनेनान्वय इति चाभ्युपगमात् ।। १५३-१६० ।।

**वरदराजीया–** अस्य पृष्ठे जानुं स्वजानुमाधाय स्थापयित्वा कूर्मदेशं बभञ्ज । यथा पुरा जननकालेऽस्य देहो विदारितः तथा मृतिकाले पुनर्भङ्गानन्तरं विददार ।। १५३ ।।

**अनन्तभट्टीया–** अस्य पृष्ठे जानुमादाय कूर्मदेशं बभञ्ज ।। १५३-१५७ ।।

**लघ्वनन्तभट्टीया–** ।। **मृतिकाल इति** ।। अन्यथा मर्माज्ञानभ्रान्तिः स्यादिति भावः ।। १५३ ।।

**जनार्दनीया–** जानुं आधाय निधाय । 'जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमरः । अस्त्रियामिति त्रिभिः सम्बध्यते । अर्धर्चादित्वात् पुंस्त्वमिति मुकुटः । कूर्मदेशं कटिप्रदेशं पुरा जन्मकाले यथा शकलद्वयमभूत् तथा पुनः विददार, भीम इति शेषः ।।१५३।।

**ताम्रपर्णीया–** कूर्मदेशं पृष्ठदेशम् । 'बभञ्ज पृष्ठे संक्षिप्य' (सभापर्वणि-२५.१०) इति भारते ।। **मृतिकाल इति** ।। अन्यथा मर्माज्ञानभ्रान्तिः स्यादिति भावः ।। १५३-१५९ ।।

**चट्टि–** अस्य मागधस्य पृष्ठे जानुं स्वजानुमाधाय स्थापयित्वा कूर्मप्रदेशं कटिप्रदेशं बभञ्ज ह । पुरा जन्मकाले यथा शकलद्वयमभूत् तथा मृतिकाले मरणानन्तरं पुनर्देहं विददार, भीम इति शेषः ।। १५३ ।।

**मर्मण्येव न हन्तव्यो मयाऽयमिति मारुतिः ।**
**स्वपौरुषप्रकाशाय बभञ्जैनं न मर्मणि ।।१५४।।**

**व्यासतीर्थीया–** अमर्मदेशे किमर्थं बभञ्जेत्यतो निमित्तमाह– **न मर्मणीति** ।। १५४-१५५ ।।

**वरदराजीया–** अयं जरासन्धः । मर्मणि मर्मस्थाने मया नैव हन्तव्य इति स्वपौरुषप्रकाशाय मर्मणि न बभञ्ज ।। १५४ ।।

**जनार्दनीया–** अयं मागधः । मर्मणि मर्मस्थाने । इति मारुतिः स्वपौरुषप्रकाशाय । एनं मागधम् । अमर्मणि मर्मरहितस्थले, कूर्मदेश इत्यर्थः । न बभञ्ज ।।१५४।।

**चट्टि–** मयाऽयं मागधः मर्मणि मर्मस्थाने एव न हन्तव्यः । इति मारुतिर्भीमः स्वपौरुषप्रकाशायैनं मागधममर्मणि मर्मरहिते स्थले, कूर्मदेश इत्यर्थः । न बभञ्ज ।। १५४ ।।

**भज्यमाने शरीरेऽस्य ब्रह्माण्डस्फोटसन्निभः ।**
**बभूव रावो येनैव त्रस्तमेतज्जगत्त्रयम् ।।१५५।।**

**वेदाङ्गतीर्थीया–** ब्रह्माण्डस्फोटसन्निभः ब्रह्माण्डस्फोटोत्थशब्दसन्निभः ।। १५५ ।।

**वरदराजीया–** अस्य शरीरे भज्यमाने सति ब्रह्माण्डस्फोटसन्निभो रावः शब्दो बभूव । येन रावेण जगत्त्रयं त्रस्तं भीतम् ।। १५५ ।।

**जनार्दनीया–** ब्रह्माण्डस्फोटसन्निभः ब्रह्माण्डस्फोटे यः शब्दः तेन सन्निभः सदृशो रावः शब्दः । येन शब्देन । त्रस्तं भीतम् ।।१५५।।

**चट्टि–** अस्य मागधस्य शरीरे भज्यमाने सति ब्रह्माण्डस्फोटसन्निभः ब्रह्माण्डस्फोटो विदारणे यः शब्दस्तेन सन्निभः सदृशो रावः शब्दो बभूव । येन रावेणैव एतज्जगत्त्रयं त्रस्तं स्तम्भितम् ।। १५५ ।।

**निहत्य कृष्णस्य रिपुं स भीमः समर्पयामास तदर्चनं हरेः ।**
**कृतां हि भीमेन समर्चनां तां समक्षमादातुमिहाऽगतो ह्यजः ।।१५६।।**

**व्यासतीर्थीया–**मागधवधानन्तरकथां कथयन् कृष्णागमनस्य प्रयोजनमाह– **निहत्येति**।।१५६-६१।।

**वेदाङ्गतीर्थीया–** तदर्चनं शत्रुहननात्मकमर्चनम् ।। १५६ ।।

**वरदराजीया–** कृष्णस्य रिपुं द्वेषिणं निहत्य तत् अर्चनं पूजनं हरेः हरये समर्पयामास । स कृष्णः अजः भीमेन कृतां तां शत्रुवधरूपां समर्चनां समक्षं प्रत्यक्षमादातुं स्वीकर्तुमिहागतः ।। १५६ ।।

**जनार्दनीया–** कृष्णस्य रिपुं द्वेषिणम् । अर्चनं पूजनं हरेः हरये समर्पयामास । अजः कृष्णो भीमेन कृतां तां शत्रुवधरूपां समर्चनां समक्षं प्रत्यक्षमादातुं स्वीकर्तुमिहागतः ।।१५६।।

**चट्टि–** सः भीमः श्रीकृष्णस्य रिपुं शत्रुं मागधं निहत्य, तच्छत्रुहननात्मकमर्चनं पूजां हरेः हरये समर्पयामास । श्रीकृष्णस्यागमने कारणमाह– **कृतामिति** ।। भीमेन कृतां तां शत्रुवधरूपां समर्चनां समक्षं प्रत्यक्षमेवादातुं स्वीकर्तुमिहागतः ।। १५६ ।।

**स्वीकृत्य पूजां च वृकोदरस्य दृढं समाश्लिष्य च तं जनार्दनः ।**
**प्रीतो नितान्तं पुनरेव कृष्णं ननाम भीमः प्रणतोऽर्जुनेन ।।१५७।।**

**वेदाङ्गतीर्थीया–** तं दृढं समाश्लिष्य नितान्तं प्रीतः, अभूदिति शेषः ।। १५७ ।।

**वरदराजीया–** वृकोदरस्य पूजां स्वीकृत्य तं वृकोदरं दृढं समाश्लिष्य नितान्तं प्रीतः । भीमः पुनरेव कृष्णं ननाम । अर्जुनेन च प्रणतोऽभूत् ।। १५७ ।।

**जनार्दनीया–** भीमं दृढं समाश्लिष्य प्रीतः, बभूवेति शेषः । अर्जुनेन प्रणतो भीमः पुनः कृष्णं ननाम । नितान्तं, प्रीतिमिति शेषः ।। १५७ ।।

**चट्टि–** अच्युतः नाशरहितः जनार्दनः श्रीकृष्णः वृकोदरस्य पूजां च स्वीकृत्य, तं वृकोदरं दृढं समाश्लिष्य च नितान्तं प्रीतः, बभूवेति शेषः । अर्जुनेन प्रणतो भीमः पुनरेव श्रीकृष्णं ननाम ।। १५७ ।।

**जग्मुः सुराश्चातितरां प्रहृष्टा ब्रह्मादयो दीनतराश्च दैत्याः ।**
**बलादुमेशस्य वरे प्रभग्ने वृकोदरेणाच्युतसंश्रयेण ।।१५८।।**

**वेदाङ्गतीर्थीया–** निजबलात् उमेशस्य वरे । उपलक्षणमेतत् । ब्रह्मादिवरेऽपीत्यर्थः ।। १५८-१५९ ।।

**वरदराजीया–** ब्रह्मादयः सुराः अतितरां प्रहृष्टाः जग्मुः । दैत्याश्च दीनतराः भूत्वा जग्मुः । उभयत्र निमित्तमाह– **वृकोदरेणेति** ।। बलादुमेशस्य वरे प्रभग्ने सति । पुनः कथम्भूतेन वृकोदरेण? अच्युत-संश्रयेण ।। १५८ ।।

**अनन्तभट्टीया–** दैत्यानां दीनतरत्वे निमित्तमाह– **उमेशस्य वरे प्रभग्ने इति**।। १५८-१५९ ।।

**जनार्दनीया–** दीनतराः अत्यन्तदुःखिनः सन्तः । दीनतरत्वे कारणमाह– **बलादिति** ।। वृकोदरेण बलात् स्वाभाविकबलात् । उमेशस्य वरे । उपलक्षणमेतत् । ब्रह्मचण्डकौशिकयोः वरेऽपीत्यर्थः ।।१५८।।

**चट्टि–** अच्युतः संश्रयो यस्य स तथा तेन वृकोदरेण बलात् स्वाभाविकबलात् । उमेशस्य वरे । उपलक्षणमेतत् । ब्रह्मदूर्वाससोरपि इत्यर्थः । प्रभग्ने सति ब्रह्मादयः सुराश्च अतितरां प्रहृष्टास्सन्तः जग्मुः । दैत्याश्च नितान्तं दीनतराः अत्यन्तदुःखिनस्सन्तः जग्मुः ।। १५८ ।।

**सुतो ययौ शरणं तान् रमेशभीमार्जुनान् [१]सहदेवोऽस्य धीमान् ।**
**रथं स्वसारं च ददौ स मारुतेर्ननाम कृष्णं परयैव भक्त्या ।।१५९।।**

**वरदराजीया–** अस्य जरासन्धस्य सुतः सहदेवः तन्नामा रमेशादीन् शरणं जगाम । यतो धीमानित्यर्थः । सहदेवो रथं स्वसारं भगिनीं च मारुतेः ददौ । परया भक्त्यैव कृष्णं ननाम ।। १५९ ।।

**जनार्दनीया–** अस्य जरासन्धस्य धीमान् ज्ञानी सुतः सहदेवः ।।१५९।।

---

१. 'भयार्ताय ततस्तस्मै कृत्वा कृष्णोऽभयं तदा । अभ्यषिञ्चत राजानं सहदेवं जनार्दनः ।। मागधानां महीपालं जरासन्धात्मजं तदा ।।' सभापर्वणि- २५.६७.

**चट्टि–** अस्य जरासन्धस्य सुतः धीमान् ज्ञानी सहदेवः तन्नामा तान् रमेशभीमार्जुनान् शरणं ययौ । सः सहदेवः मारुतेः भीमस्य रथं स्वसारं च ददौ । परयैव भक्त्या श्रीकृष्णं ननाम ।।१५९।।

**रथो ह्यसौ वसुना वासुदेवाच्छक्रान्तराऽऽप्तो वसुवंशजत्वात् ।**
**जरासुतस्याऽस वृकोदरस्तं हरे रथं प्रार्पयामास तस्मै[1] ।।१६०।।**

**वेदाङ्गतीर्थीया–** अयं रथो न यादृशतादृश इत्याह– **रथो हीति** ।। वसुना वसुनाम्ना राज्ञा । शक्रान्तरा शक्रव्यवधानेन ।। १६०-१६१ ।।

**वादिराजतीर्थीया–** 'रथो ह्यसौ वसुना' इत्यत्र शक्रान्तरा इन्द्रव्यवधानेन वासुदेवात् वसुना वसुचक्रवर्तिना आप्तः प्राप्तो हि ।। १६०-१६१ ।।

**मधुसूदनीया–** असौ सहदेवदत्तो रथः वसुना वसुसञ्ज्ञकराज्ञा वासुदेवादाप्तः प्राप्तः । ननु साक्षाद्वसवे (वासुदेवेन दत्तं) किमित्यत आह– **शक्रान्तरेति** ।। शक्रव्यवधानेन शक्रेण दापयामास नतु स्वयं दत्तवानिति भावः ।। **रथो ह्यसाविति** ।। 'शुशुभे रथवर्योऽसौ दुर्जयः सर्वधन्विभिः । शक्रविष्णू हि

---

१. अस्य रथस्य नाम सौदर्यवान् । तदुक्तं सभापर्वणि-२५.२६ 'यः स सौदर्यवान्नाम द्वियोधी कृष्णसारथिः' इति। तथा सभापर्वणि-२५.२८. 'शक्रविष्णू हि सङ्ग्रामे चेरतुस्तारकामये' इति । जरासन्धवधानन्तरं कृष्णः भीमार्जुनाभ्यां सह रथमारुरोह । तदा कृष्णः गरुडं सस्मार । स्मृतः सः ध्वजे स्थितोऽभूदिति सभापर्वणि- अ-२५.कथा । तत्र भीमेन कृष्णाय रथं समर्पितमिति नोक्तम् । परन्तु हरिवंशादिषु विद्यते । तदत्र ग्राह्यमित्यभिप्रायेणाचार्यैः मध्ये निवेशितम् । स्वप्रसङ्गे तस्यानुक्तिमात्रम् । यद्वा महाभारते कृष्णस्य द्वारकागमनसमये सभापर्वणि-२५.८४.'एवं संभाष्य कौन्तेयः प्रादाद्रथवरं प्रभोः । प्रतिगृह्य तु गोविन्दो जरासन्धस्य तं रथम् ।।' इति । तथा तत्रैव श्लो-९२. 'तेनैव रथमुख्येन मनसस्तुल्यगामिना । धर्मराजविसृष्टेन..' इति धर्मजेन दत्तमित्युक्तम्, तद्रथं शक्रः ययातये ददौ इत्यादि कथा हरिवंशपर्वणि ३०अध्याये.६-१६ । 'तस्मै शक्रो ददौ प्रीतो रथं परमभास्वरम् । असङ्गं काञ्चनं दिव्यं दिव्यैः परमवाजिभिः । युक्तं मनोजवैः शुभ्रैर्येन भार्या-मुवाह सः । स तेन रथमुख्येन षड्रात्रेणाजयन्महीम् । ययातिर्युधि दुर्धर्षस्तथा देवान् सवासवान् । सः रथः पौरवाणां तु सर्वेषामभवत् तदा ।। यावत्तु वसुनाम्नो वै कौरवाज्जनमेजयः । कुरोः पुत्रस्य राजेन्द्र राज्ञः पारीक्षितस्य ह । जगाम स रथो नाशं शापाद्गार्ग्यस्य धीमतः । गार्ग्यस्य हि सुतं बालं स राजा जनमेजयः । वाक्क्रूरं हिंसयामास ब्रह्महत्यामवाप सः । स लोहगन्धी राजर्षिः परिधावन्नितस्ततः । पौरजानपदैस्त्यक्तो न लेभे शर्म कर्हिचित् । ततः स दुःखसन्तप्तो नालभत् संविदं क्वचित् । इन्द्रोऽतः शौनकं राजा शरणं प्रत्यपद्यत । याजयामास चेन्द्रोऽतः शौनको जनमेजयम् । अश्वमेधेन राजानं पावनार्थं द्विजोत्तमः । स लोहगन्धो व्यनशत् तस्यावभृथमेत्य ह । स च दिव्यो रथो राजन् वसोश्चेदिपतेस्तदा । दत्तः शक्रेण तुष्टेन लेभे तस्माद् बृहद्रथः ।।' इति हरिवंशे हरिवंशपर्वणि । यद्वा- 'बृहद्रथात् क्रमेणैव गतो बार्हद्रथं नृपम् । ततो हत्वा जरासन्धं भीमस्तं रथमुत्तमम् ।। प्रददौ वासुदेवाय प्रीत्या कौरवनन्दनः ।।' तथा ब्रह्मपुराणे-१०.६, तथा वायुपुराणेऽपि उत्तरार्धे- ३१.२७ । अतः बहुप्रमाणाविरोधाय सभापर्ववाक्यं पुरुषव्यत्यासेनोक्तमिति निर्णेतव्यमित्यभिप्रायेणाचार्यैः तत्कथानिर्णयः कृत इति भाति ।

सङ्ग्रामे चेरतुस्तारकामये । रथेन तेन कृष्णस्तु समारुह्य ययौ तदा ।।'(सभापर्वणि-२५.२७-२८)। 'यं लेभे वासवाद्राजा वसुस्तस्माद् बृहद्रथः । बृहद्रथात्क्रमेणाऽपि प्राप्तो बार्हद्रथो नृपम् ।।' इत्यादि सभापर्वणि (२५.४१)।।१६०-१६८।।

**वरदराजीया–** कस्यायं रथः कथं जरासन्धेन प्राप्तः इत्यत आह– **रथो हीति** ।। वसुना तथानामकेन राज्ञा वासुदेवात् प्राप्तः इत्यर्थः । किं साक्षाद्वासुदेवात् प्राप्तो, नेत्याह । शक्रान्तरात् आप्तः शक्रद्वारा प्राप्त इत्यर्थः । वासुदेवाच्छक्रेण प्राप्तः, शक्राद्वसुराजेन प्राप्त इति भावः । स तादृशो रथो जरासुतस्यास बभूव । कुतः? जरासन्धस्य वसुवंशजत्वात् । वृकोदरस्तु हरेः एव रथं तस्मै प्रार्पयामास ।। १६० ।।

**अनन्तभट्टीया–** ।। **शक्रान्तराप्त इति** ।। शक्रस्यान्तरं वासुदेवात् कृष्णेन आप्तः । तस्माद्वसुना वसुना इत्यर्थः ।। १६० ।।

**जनार्दनीया–** जरासन्धस्य रथप्राप्तिः कथमित्यत आह– **रथो हीति** ।। असौ रथः सहदेवदत्तरथः । वसुना राज्ञा शक्रान्तरा शक्रव्यवधानेन । अन्तरेत्यव्ययम् । वासुदेवान्नारायणादाप्तो हि । जरासन्धस्य वसुवंशजत्वात् वसुराज्ञः कुलोत्पन्नत्वात् आस । वृकोदरस्तं रथं तस्मै कृष्णाय प्रार्पयामास ।।१६०।।

**ताम्रपर्णीया–** ।। **वासुदेवादिति** ।। तारकासुरसंग्रामे वासुदेवादिन्द्रेण प्राप्तं रथमिन्द्रो वसुराज्ञे अदादिति भावः । 'शक्रविष्णू हि संग्रामे चेरतुस्तारकामये । रथेन येन तं कृष्णादुपारुह्योपयात् तदा ।।' इति भारते ।। १६०-१६१ ।।

**भारतश्री–** वसुना उपरिचरवसुना । बृहद्रथः तत्पुत्रो जरासन्धः । सः रथः नारायणेन शक्रस्य पूर्वं दत्तः शक्रः सन्तुष्टः वसवे दत्तवान् । तेन रथेन उपरि अन्तरिक्षादौ चरः सञ्चरति अतः उपरिचर इति तस्य नाम प्रसिद्धं बभूवेति कथा भारते ।। १६० ।।

**चट्टि–** कस्यायं रथः कथं जरासन्धेन प्राप्त इत्यत आह– **रथ इति** ।। असौ सहदेवदत्तो रथः वसुना वसुसञ्ज्ञकराज्ञा वासुदेवाद्वामनात् शक्रान्तरा शक्रव्यवधानेन । अन्तरेत्यव्ययम् । आप्तः प्राप्तः वामनः शक्रेण दापयामास । न तु स्वयं दत्तवानिति भावः । वसुवंशजत्वाद् वसुराज्ञः कुलोत्पन्नत्वाज्जरासुतस्य रथः आस बभूव । वृकोदरो हरेः तं रथं तस्मै श्रीकृष्णाय प्रार्पयामास ।। 'रथो ह्यसौ' इत्यत्र 'शुशुभे रथवर्योऽसौ दुर्जयस्सर्वधन्विभिः । शक्रविष्णू हि सङ्ग्रामे चेरतुस्तारकामये ।। रथेन तेन कृष्णस्तु समारुह्य ययौ तदा ।।' 'यं लेभे वासवाद्राजा वसुस्तस्मात् बृहद्रथः । बृहद्रथात् क्रमेणाऽपि प्राप्तो बार्हद्रथो नृपम् ।' इत्यादि सभापर्वणि ।। १६० ।।

**कृष्णोऽस्मरद् गरुडं स ध्वजेऽभूद् रथं कृष्णोऽथाऽरुहत् पाण्डवाभ्याम् ।**
**भीमः कन्यां सहदेवस्य हेतोः समग्रहीदनुजस्याऽत्मनः सः ।।१६१।।**

**सत्याभिनवीया–** तत्रैव 'कृष्णोऽस्मरद्गरुडं स..' इति श्लोके अर्जुनस्य आत्मन इत्यस्य आत्माभिन्नस्य अनुजस्येत्यर्थः । एतेन अनुजेत्येवोक्ते योग्यतया आत्मसम्बन्धिनः अनुजस्येत्यर्थस्य लाभात् । आत्मन इत्येतद्व्यर्थमिति दूषणं पराकृतम् । आत्मनः अनुजस्येत्यनयोः वैय्यधिकरण्यं न किन्तु सामानाधिकरण्यमिति स्वीकृत्य अतिशयेन आत्मप्रियत्वज्ञापनार्थं गौणात्माभेदः अनुजस्योच्यत इत्यभ्युपगमात् ।।

**वरदराजीया–** सः कृष्णो गरुडमस्मरत् । गरुडः आगत्य रथस्य ध्वजेऽभूत् । अनन्तरं पाण्डवाभ्यां भीमार्जुनाभ्यां सह रथमारुहत् । आत्मनः स्वस्य योऽनुजः सहदेवः तस्य हेतोः तदर्थं स भीमः समग्रहीत् ।।१६१ ।।

**जनार्दनीया–** स गरुडः ध्वजेऽभूत् । पाण्डवाभ्यां भीमार्जुनाभ्याम् । स भीमः आत्मनः अनुजस्य सहदेवस्यार्थे कन्यां समग्रहीदिति ।। १६१ ।।

**भारतश्री–** ।। **सहदेवस्य हेतोरिति** ।। तस्याः उषावतारत्वात् ।। १६१-१६५ ।।

**चट्टि–** श्रीकृष्णः गरुडमस्मरत् । सः गरुडः ध्वजेऽभूत् । अथ श्रीकृष्णः पाण्डवाभ्यां भीमार्जुनाभ्यां सह रथमारुहत् । सः भीमः आत्मनो अनुजस्य सहदेवस्य हेतोः सहदेवार्थं कन्यां समग्रहीत् ।। १६१ ।।

**नकुलस्याऽदान्मद्रराजो हि पूर्वं स्वीयां कन्यां सा तथैषाऽप्युषा हि ।**
**एका पूर्वं तेऽश्विनोश्चैव भार्या यमौ रेमाते यदुषा अश्विभार्या ।**
**ततः कृष्णायामग्रजभ्रातृभार्यावृत्तिं हि तौ चक्रतुर्माद्रिपुत्रौ ।।१६२।।**

**व्यासतीर्थीया–** सा मागधकन्या तथा एषा मद्रराजकन्यापि ते उभे भार्ये अश्विनोरेव भार्ये । एका उषा हि । 'ताभ्यां यमौ रेमाते' इत्यत्र उषाः उषा इत्युभयथा पदसम्भवात् । ननूषा अनिरुद्धभार्या, अतः कथमाश्विभार्येति शङ्कां स्पष्टं पदविभागकरणेन वारयति– **उषा इति** ।। १६२-१६५ ।।

**वेदाङ्गतीर्थीया–** 'सहदेवस्य हेतोः समग्रहीत्' इति सहदेवस्य द्वितीयविवाहोक्तिप्रसङ्गात् नकुलस्यापि द्वितीयं विविच्याह– **नकुलस्येत्यादिना** ।। मद्रराजः पूर्वं नकुलस्य स्वीयां कन्यामदाद्धि । सा मद्रराजसुता तथा एषा जरासुतसुतापि ते चैव पूर्वमश्विनोर्भार्या, एका उषा हि । एवं हिशब्दौ प्रसिद्धवाचकौ । यमौ रेमाते, ताभ्यामिति शेषः । ननूषा अनिरुद्धभार्या, अतोऽश्विनोर्भार्या कथमुच्यत इत्याशङ्क्याऽह– **यदुषा इति** ।। अश्विनोर्भार्या उषा यत्, सकारान्तोषस्शब्दवाच्या यस्मात्, तस्मात् सा आकारान्तोषाशब्दवाच्याया अनिरुद्धभार्याया अन्येति वाक्यशेषः । ततः द्वितीयविवाहानन्तरम् ।। १६२ ।।

**वादिराजतीर्थीया–** 'नकुलस्याऽदान्मद्रराजः' इत्यत्र पूर्वं सहदेवविवाहात्पूर्वं मद्रराजः नकुलस्य स्वीयां कन्यां अदाद्धि । सा मद्रराजपुत्री तथा एषा जरासन्धपुत्रीति ते उभे च पूर्वं मूलरूपे अश्विनोश्च भार्या, एका उषैव हि । ताभ्यां यमौ रेमाते । ननु उषानाम्न्यनिरुद्धपत्नी, तस्याः कथमश्विभार्यात्वमित्यत

आह– **यदुषा इति** ।। यत् यस्मात् कारणात् । अश्विभार्या उषाः उषःकालाभिमानित्वात् सकारान्तोषःशब्दवाच्या, अनिरुद्धभार्या तु आकारान्तोषाशब्दवाच्येति तयोर्विभागः इति भावः । अतो न पौनरुक्त्यमिति ज्ञेयम् । अत एव 'अनिरुद्धश्च तत्सूनुरुषारमण उच्यत' इत्यनुशासनम् ।। १६२ ।।

**सत्याभिनवीया–** तत्रैव 'नकुलस्याऽदान्मद्रराजो हि..' इति श्लोकः । तस्यार्थः- मद्रराजः शल्यः पूर्वं सहदेवकृतजरासन्धसुतास्वीकारात् पूर्वं स्वीयां कन्यां नकुलस्य नकुलाय अदात् इत्येतत् हि प्रसिद्धम् । तथा अपिशब्दौ परस्परसमुच्चये । सा तथा जरासन्धकन्या च एषाऽपि मद्रराजकन्याऽपि उषाः उषा इति नामवती इत्येतत् हि प्रसिद्धम् । नकुलसहदेवभार्ययोः उभयोः उषा इत्येकनामवत्त्वमुपपादयति– **एकेति** ।। यत् यस्मात् ते कन्ये पूर्वं एका रूपभेदरहिता अश्विभार्या अश्विनोः भार्या उषाः उषा इति नामवती च तस्मात् शल्यपुत्री जरासन्धपुत्री च अश्विनोः नकुलसहदेवयोः भार्या उषाः इति नामवती च जाता । यमौ नकुलसहदेवौ ताभ्यां रेमाते इति ।। १६२-१६६ ।।

**वरदराजीया–** ननु ज्येष्ठे नकुले सति कथं सहदेवार्थं कन्यां समग्रहीदित्यत आह– **नकुलस्येति** ।। मद्रराजः शल्योऽपि स्वीयां कन्यां नकुलस्य पूर्वमेवादात् । ननु जरासन्धस्य सुता पूर्वं का? मद्रराजस्य सुता पूर्वं केत्यत आह– **सेति** ।। सा जरासन्धस्य सुता सहदेवार्थं गृहीता तथा एषा मद्रराजस्य कन्या नकुलाय पूर्वं दत्ता च ते उभे कन्ये एका, पूर्वं अश्विनोर्या भार्या उषा इत्यर्थः । यमौ नकुलसहदेवौ पत्नीद्वयं प्राप्य रेमाते । 'उषा हि' इत्यत्र उषा उषेति द्विधापि पदच्छेदसम्भवात् आकारान्तोषाशब्दवाच्या अनिरुद्धभार्या एका । सकारान्तोषस्शब्दवाच्या अश्विपत्नी उक्ता इत्यर्थः । ततः पत्नीद्वयप्राप्त्यनन्तरं माद्रीपुत्रौ नकुलसहदेवौ कृष्णायां द्रौपद्यां अग्रजस्य भार्यायां या वृत्तिस्तां चक्रतुः ।। १६२ ।।

**भावविवृतिः–** ।। **नकुलस्यादात्..अश्विभार्या इति** ।। मद्रराजः शल्यः स्वीयां कन्यां पूर्वं पूर्वजन्मनि अश्विभार्यांशम्भवां पूर्वं सहदेवविवाहात् पूर्वं नकुलायादात् । जरासन्धपुत्री चाश्विभार्यांशसम्भवा मूलरूपे अश्विनोरेकैव नियतपत्नीत्वात् द्विरूपेणासेत्यर्थः । हिशब्देन नकुलस्य शल्यपुत्र्यपेक्षया पार्वतीनाम्नी अन्या भार्याऽसीदिति ज्ञातव्यम् । उक्तञ्च अंशावतरणे- 'पार्वती नकुलस्त्री या नाम्ना पूर्वं तिलोत्तमा' इति (श्लोक-४६) ।। १६२-१६७ ।।

**अनन्तभट्टीया–** सा मागधकन्या तथा एषा मद्रराजकन्या अपि ते उभे अश्विनोर्भार्ये एका उषा हि । अत्र उषाः उषेति द्वेधा पदच्छेदसम्भवात् उषा अनिरुद्धभार्या इति जातां शङ्कां स्पष्टयन् [१]पदविन्यासकरणेन वारयति– **यदुषा इति** ।। **कृष्णायामिति** ।। अग्रजभ्रातृभार्यावृत्तिं ज्येष्ठभ्रातुः भार्यायां या वृत्तिः प्रवर्तनं तां चक्रतुः । स्वनियतवत्सरे कृष्णादेहस्थस्वभार्यासङ्गं न चक्रतुरिति भावः ।।१६२।।

**लघ्वनन्तभट्टीया–** 'उषा हि' इत्यत्र उषाः हीति पदच्छेदः । आकारान्तोषाशब्दस्य अनिरुद्धभार्यात्वात् या उषा अश्विभार्या । तस्माद्धीमः, स्वार्थं नाग्रहीदिति शेषः । टीकायामयमर्थः स्पष्टः ।। १६२ ।।

१. 'पदविभागकरणेन' इति क्वचित् कोशेषु ।

**जनार्दनीया–** सहदेवस्य द्वितीयविवाहोक्तिप्रसङ्गात् नकुलस्यापि द्वितीयविवाहं दर्शयति– **नकुलस्ये-त्यादिना** ।। मद्रराजः पूर्वं नकुलस्य स्वीयां कन्यामदाद्धि । पूर्वं सा केत्यत आह– **सेति** ।। सा जरासन्धस्य कन्या तथा एषापि मद्रराजस्य कन्या उषा हि । ते जरासन्धशल्यकन्ये पूर्वं एकैव पूर्वं अश्विनोर्भार्या । एवहिशब्दौ प्रसिद्धिवाचकौ । यमौ रेमाते, ताभ्यामिति शेषः । ननु उषा अनिरुद्धभार्या, अतो अश्विभार्या कथमुच्यत इत्याशङ्क्याऽह– **यदुषा इति** ।। यत् यस्मात् सकारान्तोपःशब्दवाच्योषा अश्विभार्या । तस्मात् सकारान्तोषःशब्दवाच्यायाः उषसः आकारान्तोषाशब्दवाच्याऽनिरुद्धभार्या अन्या इति वाक्यशेषः । यद्वा उषा एकैव अश्विभार्या तस्मात् नकुलसहदेवभोगार्थं रूपद्वयेन सम्प्रजातेति वाक्यशेषः । ततः द्वितीयविवाहानन्तरम् । माद्रिपुत्रौ नकुलसहदेवौ । 'ङ्यापोः सञ्ज्ञा छन्दसोर्बहुलम्' (सि.कौ.१००१)। अग्रजभ्रातृभार्यावृत्तिं ज्येष्ठभ्रातृभार्यायां या वृत्तिः प्रवर्तनं तां चक्रतुः । स्वनियतवत्सरे कृष्णादेहस्थस्वभार्यासङ्गं न चक्रतुरिति भावः ।।१६२।।

**ताम्रपर्णीया–** ननु नकुलस्याग्रजत्वात् तदर्थं स्वार्थं वा कन्यामगृहीत्वा किमर्थं भीमः सहदेवार्थं कन्यामग्रहीदित्यत आह– **नकुलस्यादादिति** ।। हि यस्मान्नकुलस्य शल्यः कन्यामदादतः तदर्थमगृहीत्वा सहदेवस्यार्थेऽग्रहीदिति योजना । स्वार्थं तदग्रहे निमित्तमाह– **यदुषेति** ।। यद्यस्मादुषाः अश्विनोर्भार्या अतः स्वयमगृहीत्वा सहदेवार्थमग्रहीदिति सम्बन्धः । उषसोऽश्विभार्यात्वे जरासन्धपुत्र्याः किमित्यत आह– **सेति** ।। सा शल्यपुत्री एषा जरासन्धपुत्री च पूर्वमुषाः भिन्नयोरेकनामत्वं किमित्यत उक्तम्– **एकेति** ।। ननु एकस्या उषसः कथमुभयभार्यात्वमित्यत आह– **एकेति** ।। यतः पूर्वमेकैवोषाः अश्विनोर्नियतभार्या, अतस्ते यमौ रेमाते । यमयोरप्यश्वित्वादिति भावः । यद्वा ननु उषानिरुद्धभार्या कथमश्विभार्येति शङ्कां स्पष्टं पदविभागकरणेन वारयति– **यदिति** ।। यद्यस्मादुषाः सकारान्तोषस्शब्दवाच्या-श्विभार्याऽतोऽत्र नानिरुद्धभार्योच्यते । 'उषा हि' इत्यत्रापि उषाः हीति पदविभाग इति भावः । यद्यपि 'रात्रिमानमजानद्भिः ततो नामेत्युषा स्मृता (अ-७.खं-१) इति छान्दोग्यभाष्ये । 'सूषाच मे सुदिनं च मे' इति श्रुतौ चाश्विभार्यायामप्याकारान्तोषा शब्दःप्रयुक्तः । अत एव छान्दोग्यभाष्यटीकायां व्यासतीर्थमुनिभिः 'सूषाच मे' इति प्रयोगप्रदर्शनेनाश्विभार्यायामाकारान्तोषाशब्दः समर्थितः । तथापि बहुप्रयोगापेक्षयैतदिति ज्ञातव्यम् । पूर्वयोजनायां न कश्चित्क्षुद्रोपद्रवः ।। १६२-१६६ ।।

**अतिविशद–** 'नकुलस्यादात्...भार्या' इत्यत्र या उषा अश्विभार्या इत्यस्य वैय्यर्थ्यमाशङ्क्य, ननु उषा अनिरुद्धभार्या, अश्विभार्या कथमुच्यते इत्याशङ्क्याऽह– **यदुषा इति** ।। यद्यस्मात् सकारान्तोषःशब्दवाच्या उषाः अश्विभार्या तस्मात् सकारान्तोषःशब्दवाच्या या उषातः अनिरुद्धभार्या अन्या आवन्ता इति । यद्वा एकैव उषा अश्विभार्या यत् तस्मात् नकुलसहदेवभोगार्थं रूपद्वयेन सम्प्राजाता इत्याहुः । इति यस्मात् तस्मात् यमौ रेमात इत्यन्ये ।। १६२ ।।

**चन्द्रि–** सहदेवस्य द्वितीयविवाहोक्तिप्रसङ्गात् नकुलस्यापि द्वितीयं विवाहं दर्शयति– **नकुलस्येत्यादिना** ।। मद्रराजः शल्यः पूर्वं नकुलस्य स्वीयां कन्यां अदाद्धि । पूर्वं केत्यत आह– **सेति** ।। सा जरासन्धकन्या एषा मद्रराजकन्यापि उषा हि ते जरासन्धशल्यकन्ये पूर्वमेकैव अश्विनोः भार्या । हिशब्दो प्रसिद्धिवाचकः । यमौ नकुलसहदेवौ रेमाते, ताभ्यामिति शेषः । ननु उषा अनिरुद्धभार्या अतः अश्विभार्या इति कथमुच्यत इत्याशङ्क्याऽह– **यदुषा इति** ।। यद्यस्मात् सकारान्तोषःशब्दवाच्या उषाः अश्विभार्या तस्मात् सकारान्तोषःशब्दवाच्यायाः उषसः अनिरुद्धभार्या अन्या इति वाक्यशेषः । यद्वा उषाः एकैव अश्विभार्या यत् तस्मान्नकुलसहदेवभार्यार्थं रूपद्वयेन सम्प्रजातेति वाक्यशेषः । ततः द्वितीयस्य विवाहानन्तरं माद्रीपुत्रौ नकुलसहदेवौ कृष्णायां द्रौपद्यां अग्रजभ्रातृभार्यावृत्तिं ज्येष्ठभ्रातुः भार्यायां या वृत्तिः प्रवर्तनं तां चक्रतुः । स्वनियतवत्सरे कृष्णादेहस्थस्वभार्यासङ्गं न चक्रतुरिति भावः ।। १६२ ।।

**जरासुतस्याऽत्मजः केशवादीन् रत्नैः समभ्यर्च्य ययावनुज्ञया ।**
**तदाज्ञया [1]पितृकार्याणि कृत्वा तदाज्ञयैवामुचत् तान् नृपांश्च ।**
**तैः संस्तुतः केशवो भीमपार्थयुक्तो [2]दृष्ट्वा भक्तिनम्रैर्यथावत् ।।१६३।।**

**वेदाङ्गतीर्थीया–** ययौ, पुरवाह्यतः पुरीमिति शेषः । तैः राजभिः ।। १६३-१६४ ।।

**वादिराजतीर्थीया–** 'भक्तिनम्रैर्यथावत्' इत्यत्र भक्तिनम्रैस्तैर्दृष्ट्वा भीमपार्थयुक्तः केशवः यथावत्संस्तुत इति योजना ।। १६३-१६५ ।।

**वरदराजीया–** प्रासङ्गिकं वर्तिष्यमाणं उक्त्वा प्रकृतमनुसरति– **जरासुतस्येति** ।। सहदेवः केशवादीन् कृष्णभीमार्जुनान् रत्नैः समभ्यर्च्यानुज्ञया तदनुज्ञया ययौ । तदाज्ञया कृष्णाज्ञया पितृकार्याणि मृतपित्रर्थं तिलाञ्जलिदानादिकार्याणि कृत्वा तदाज्ञयैव तान् जरासन्धेन निरोधितान् नृपांश्च अमुचत् । तैः नृपैः भीमपार्थयुक्तः केशवो यथावत् योग्यतानतिक्रमेण संस्तुतः । कथम्भूतैः तैः? दृष्ट्वा कृष्णभक्तिनम्रैः तद्दर्शनभक्त्या नम्रैः ।। १६३ ।।

**अनन्तभट्टीया–** यथावत् योग्यतानुसारेण ।।१६३।।

**जनार्दनीया–** अनुज्ञया, कृष्णादीनामिति शेषः । ययौ, रणस्थानात् स्वगृहमिति शेषः । तदाज्ञया कृष्णायाज्ञया पितृकर्माणि जरासन्धमुद्दिश्य तिलाञ्जलिपिण्डदानादिकृत्यानि कृत्वा, तदाज्ञयैव तान् पशुत्वे कल्पितान् नृपान् अमुञ्चत् । तैः राजभिः यथावत् स्वयोग्यतानुसारेण संस्तुतः सम्यक् माहात्म्यज्ञानपूर्वकं यथा भवति तथा स्तुतः सन् ययौ ।।१६३।।

---

१. 'पितृकर्माणि' इति जनार्दनीयपाठः स्यात् ।

२. 'दृष्ट्वा ययौ भक्तिनम्रैः' इति जनार्दनीयपाठः ।

**भावचन्द्रिका—** तदाज्ञया तस्य कृष्णस्याज्ञया । न तु तेषाम् । 'न चौर्ध्वदैहिकानुज्ञाम्' (ता.नि-) इत्युक्तत्वात् ।। १६३-१६७ ।।

**चट्टि—** प्रासङ्गिकमुक्त्वा प्रकृतमनुसरति— **जरासुतेति** ।। जरासुरतस्यात्मजः सहदेवः केशवादीन् रत्नैः समभ्यर्च्यत् अनुज्ञया तदनुज्ञया ययौ, रणस्थानात् स्वगृहमिति शेषः । तदाज्ञया तस्य श्रीकृष्णस्याज्ञया पितृकार्याणि जरासन्धमुद्दिश्य तिलाञ्जलिपिण्डदानादिकृत्यानि कृत्वा, तदाज्ञयैव तान् जरासन्धेन निरोधितान् नृपांश्चामुचत् । आत्मानं दृष्ट्वा भक्तिनम्रैस्तै नृपैः भीमापार्थयुक्तः केशवः श्रीकृष्णः यथावत् स्वयोग्यतानुसारेण संस्तुतः सम्यङ् माहात्म्यज्ञानपूर्वकं यथाभवति तथा स्तुतः सन्, ययाविति शेषः ।।

**सम्भावितास्ते सहदेवेन सम्यक् [1]प्रशस्य कृष्णं भीमसेनं च सर्वे ।**
**ययुर्गृहान् स्वानपतत् केशवद्विड् जरासुतोऽन्धे तमसि क्रमेण ।।१६४।।**

**वरदराजीया—** ते नृपाः सहदेवेन जरासन्धसुतेन सम्यक् सम्भाविताः वस्त्रालङ्कारादिभिर्मानिताः कृष्णं भीमसेनं च प्रणम्य सर्वे स्वगृहान् ययुः । जरासुतः क्रमेण अन्धे तमसि अपतत् । यतः केशवद्विट् इत्यर्थः ।।१६४।।

**जनार्दनीया—** सहदेवेन जरासन्धपुत्रेण सम्यक् सम्भाविताः मानिताः ते सर्वे राजानः । कृष्णं भीमसेनं च प्रशस्य प्रशंसनं कृत्वा । 'प्रणम्य' इति कुत्रचित्पाठः । असिपत्राद्यनेकनरकभोगक्रमेण अपतत् ।।१६४।।

**चट्टि—** सर्वे ते राजानः सहदेवेन जरासन्धसुतेन सम्यक् सम्भाविताः वस्त्रालङ्कारादिभिः मानिताः सन्तः श्रीकृष्णं भीमसेनं च प्रशस्य प्रशंसनं कृत्वा । 'प्रणम्य' इति कचित् पाठः । स्वान् गृहान् ययुः । केशवद्विट् जरासुतः क्रमेण असिपत्राद्यनेकनरकभोगक्रमेणान्धे तमसि अपतत् ।। १६४ ।।

**कृष्णश्च पार्थौ च तथैकयानं समास्थिता धर्मजमभ्यगच्छन् ।**
**तेषां शङ्खध्वनिसम्बोधितात्मा राजा प्रीतश्चातितरां बभूव ।।१६५।।**

**वेदाङ्गतीर्थीया—** शङ्खध्वनिसम्बोधितात्मा शङ्खध्वनिनोद्बोधितमनाः । पूर्वं शङ्कितमना इति भावः ।।

**वरदराजीया—** पार्थौ भीमार्जुनौ च एकयानमेकरथं समास्थिताः आरूढाः । तेषां कृष्णादीनां शङ्खध्वनिभिः पाञ्चजन्यधनञ्जयादिशङ्खध्वनिभिः । सम्बोधित आत्मा यस्य स तथा । अतितरां प्रीतश्च बभूव ।। १६५ ।।

**जनार्दनीया—**पार्थौ भीमार्जुनौ ।राजा युधिष्ठिरः ।तेषां कृष्णभीमार्जुनानाम् ।शङ्खध्वनिसम्बोधितात्मा शङ्खानां ध्वनिभिः सम्बोधितः सम्यक् बोधितः आत्मा मनो यस्य स तथा । पूर्वं शङ्कितमना इति भावः ।।१६५।।

---

१. 'प्रणम्य' इति जनार्दनीये तथा चट्टिटिप्पण्यां पाठान्तरम् ।

**चट्टि–** श्रीकृष्णः पार्थौ भीमार्जुनौ च एकयानमेकरथं समास्थिताः आरुढास्सन्तः धर्मजमभ्यगच्छन् । राजा युधिष्ठिरस्तेषां कृष्णभीमार्जुनानां शङ्खध्वनिसम्बोधितात्मा शङ्खानां ध्वनिभिः सम्बोधितः सम्यक् वोधितः आत्मा मनो यस्य स तथाभूतः सन् अतितरां प्रीतश्च बभूव । पूर्वं शङ्कितमना इति भावः ।।१६५।।

**द्वैपायनोऽथ भगवानभिगम्य पार्थानाज्ञापयत् सकलसम्भृतिसाधनाय ।**
**तं राजसूयसहितं [1]परमाश्वमेधयज्ञं समादिशदनन्यकृतं विरिञ्चात् ।।१६६।।**

**व्यासतीर्थीया–** सम्भृतिः साधनम् ।। १६६-१६७ ।।

**वेदाङ्गतीर्थीया–** सकलसम्भृतिसाधनाय यज्ञाङ्गभूतसकलसाधनसम्पादनाय ।। १६६ ।।

**वादिराजतीर्थीया–** 'तं राजसूयसहितम्' इत्यत्र राज्ञां सूयं सूदनम् । जय इति यावत् । तेन सहितं वराश्वमेधम् । 'वरम्' इति विशेषणं सगरादिभिः कृतराजसूयादप्यस्योत्तमत्वज्ञापनार्थम् । उत्तमत्वं च भक्त्याद्यतिशयेन । अत एव 'विरिञ्चादनन्यकृतम्' इत्युक्तम् । भीमसेनसदृशभक्तेः विरिञ्चादितरत्रासम्भवादिति भावः।। १६६ ।।

**वरदराजीया–** सः कृष्णः सम्भृतिसाधनाय समस्तयज्ञसम्पादनाय तथा राजसूयेन सहितं परमं अनल्पसाध्यं अश्वमेधम् । कथम्भूतम्? विरिञ्चादनन्यकृतं ब्रह्मपदायोग्यैः अन्यैः येन प्रकारेण कर्तुं न शक्यते तत्प्रकारविशिष्टमाज्ञापयामास ।। १६६ ।।

**अनन्तभट्टीया–** सम्भृतिः सम्भारः तस्य साधनाय सम्पादनाय । अनन्यकृतं अन्येन न कृतमित्यर्थः ।।

**जनार्दनीया–** अथ कृष्णादीनामागमनानन्तरम् । सकलसम्भृतिसाधनाय यज्ञाङ्गभूतनिखिलसाधनस्य सम्पादनाय । विरिञ्चाद् ब्रह्मणः सकाशाद् अनन्यकृतं अन्यैर्न कृतम् । विरिञ्चादन्यस्यायोग्यमिति भावः । राजसूयसहितं राजसूययज्ञेन सहितम् । तं विरिञ्चयोग्यमिति प्रसिद्धम् । परमाश्वमेधयज्ञं परमः उत्तमकल्पसाध्यः अश्वमेधः अश्वमेधाख्यो यो यज्ञः तं अश्वमेधयज्ञं अदिशत्, व्यास इति शेषः ।। १६६ ।।

**भारतश्री–** 'प्रोक्षितं ते हयं राजन् राजसूये महाक्रतौ' इति भारतोक्तेरभिप्रायमाह– **तं राजसूयसहितमित्यादिना** ।। १६६-१६८ ।।

**चट्टि–** अथ श्रीकृष्णादीनां गमनानन्तरं भगवान् द्वैपायनः श्रीवेदव्यासः पार्थानभिगम्य सकलसम्भृतिसाधनाय यज्ञाङ्गभूतनिखिलसाधनसम्पादनाय आज्ञापयत् । विरिञ्चाद् ब्रह्मणः सकाशात् अनन्यकृतं अन्यैः अकृतम् । विरिञ्चादन्यस्यायोग्यमिति भावः । राजसूयसहितं राजसूययज्ञेन सहितम् । तं विरिञ्चयोग्यमिति प्रसिद्धम् । परमाश्वमेधयज्ञं परमः उत्तमकल्पसाध्यः अश्वमेधः अश्वमेधाख्यो यो यज्ञः तं अश्वमेधयज्ञम् अदिशत्, व्यास इति शेषः ।।१६६।।

---

१. 'वरमश्वमेधयज्ञं' इति वादिराजतीर्थानां पाठः ।

**कर्ता हि तस्य परमेष्ठिपदं प्रयाति यद्यन्यसद्गुणवरैः परमेष्ठितुल्यः ।**
**भीमेमखस्य [1]फलमत्यधिकं विधातुं व्यासः क्रतुं तमदिशद्गुरुरब्जजस्य ।।१६७।।**

**वेदाङ्गतीर्थीया–** अन्यसद्गुणवरैः राजसूयादन्यैः सद्गुणश्रेष्ठैः यदि परमेष्ठितुल्यः (तर्हि) तस्य राजसूयस्य कर्ता परमेष्ठिपदं प्रयाति हि यस्मात् तस्मात् अन्यसद्गुणवरैः परमेष्ठितुल्यत्वात् मखस्य फलं भीमे अभ्यधिकं अतिपूर्णं विधातुम् ।। १६७ ।।

**वादिराजतीर्थीया–** 'यद्यन्यसद्गुणवरैः परमेष्ठितुल्यः' इत्यत्र अन्यसद्गुणवरैः परमेष्ठिपदस्थत्वमात्र-व्यतिरिक्तज्ञानभक्त्यादिसद्गुणवरैरित्यर्थः ।। १६७-१६८ ।।

**सत्याभिनवीया–** तत्रैव 'कर्ता हि तस्य परमेष्ठिपदं..' इति श्लोके 'अन्यसद्गुणवरैः परमेष्ठितुल्यः' इत्यस्य चतुर्मुखत्वादिगुणेभ्यः अन्यैः सद्गुणवरैः परमेष्ठितुल्य इत्यर्थः । एतेन अन्येत्येतत् व्यर्थमिति दूषणं पराकृतम् । चतुर्मुखत्वादिगुणानां परमेष्ठ्यसाधारणत्वेन अन्यत्रासम्भावितत्वात् सद्गुणवरैः परमेष्ठितुल्य इत्येवोक्ते बाधः स्यात् । स माभूदिति अन्येत्युक्तमित्यभ्युपगमात् ।। १६७-१८९ ।।

**वरदराजीया–** कुत इत्यत आह– **कर्ता हीति** ।। तस्योक्तविधस्य यज्ञस्य कर्ता असाधारणकर्ता अधिकारी परमेष्ठिपदं ब्रह्मपदं प्राप्नोति । कः प्राप्नोति? यदि अन्यैरसाधारणैः सद्गुणैर्ज्ञानभक्त्यादिभिः परमेष्ठितुल्यः ब्रह्मणा समान इत्यर्थः । पाण्डवेषु भीम एव तादृश इति तस्मिन्नभ्यधिकं पूर्णं फलं विधातुं अब्जजस्य गुरुर्व्यासः तं क्रतुं समादिशत् ।। १६७ ।।

**अनन्तभट्टीया–** ।। **अन्यसदिति** ।। सर्वचेतनसाधारणगुणेभ्यो अन्ये ये अन्यसद्गुणवराः तैः । 'तं क्रतुम्' इत्यनेन इतरक्रतूनामन्याधिकारित्वसम्भवात् अस्यैव तत्र मुख्यत्वं सूचितम् ।।१६७।।

**जनार्दनीया–** यदि अन्यसद्गुणवरैः राजसूयादन्यैर्ज्ञानभक्त्यादिसद्गुणोत्तमैः परमेष्ठितुल्यस्तर्हि तस्य राजसूयस्य कर्ता परमेष्ठिपदं प्रयाति । हि यस्मात् तस्मादन्यसद्गुणवरैः परमेष्ठितुल्यत्वात् भीमे मखस्य अति पूर्णं अधिकं फलं ब्रह्मपदप्राप्तिरूपफलं विधातुं, अब्जजस्य ब्रह्मणः गुरुर्हितोपदेष्टा व्यासः अत एव तं क्रतुं राजसूयाख्यं अदिशत् आज्ञपयामास ।। १६७ ।।

**ताम्रपर्णीया–** अन्यसद्गुणवरैः पारमेष्ठ्यपदातिरिक्तसद्गुणवरैः ।। १६७ ।।

**चट्टि–** कुत इत्यत आह– **कर्तेति** ।। तस्योक्तविधस्य यज्ञस्य कर्ता असाधारणकर्ता अधिकारी, यदि अन्यैः सद्गुणवरैः श्रेष्ठज्ञानभक्त्यादिभिः परमेष्ठितुल्यः ब्रह्मणः समश्चेत् परमेष्ठिपदं ब्रह्मपदं प्रयाति । परमेष्ठितुल्यत्वात् भीमे मखस्य अभ्यधिकं अतिपूर्णं फलं ब्रह्मपदप्राप्तिरूपं फलं विधातुं अब्जजस्य ब्रह्मणः गुरुः हितोपदेष्टा श्रीव्यासः क्रतुं राजसूयाख्यं अदिशत् आज्ञापयामास ।। १६७ ।।

---

१. 'फलमभ्यधिकं' इति वेदाङ्गतीर्थीय-वरदराजीयपाठः ।

**असाधारणहेतुर्यः कर्मणो यस्य चेतनः ।**
**स एव तत्फलं पूर्णं भुङ्क्तेऽन्योऽल्पमिति स्थितिः ।**
**विना विष्णुं निर्णयोऽयं स हि कर्मफलोज्झितः ॥१६८॥**

**व्यासतीर्थीया–** ननु युधिष्ठिरादीनामपि कर्तृत्वे कथं भीमे मखफलमधिकं स्यादित्यत आह– **असाधारणेति** ।। तर्हि विष्णोरेवासाधारणहेतुत्वात् तस्यैवाधिकफलं स्यादित्यत आह– **विनेति** ।।१६८।।

**वेदाङ्गतीर्थीया–** ननु युधिष्ठिरादीनामपि तत्कर्तृत्वात् कथं भीमे फलमभ्यधिकं विधातुं शक्यमित्यत आह– **असाधारणेति** ।। अयं निर्णयश्चेत् असाधारणहेतुत्वात् विष्णोरेव मुख्यफलं स्यादित्यत आह– **विनेति** ।। १६८ ।।

**वरदराजीया–** ननु तस्य क्रतोः सर्वैरपि साधितत्वात् कथं भीमे एवाभ्यधिकफलप्रदानमित्यत आह– **असाधारणेति** ।। यस्य कर्मणः यः असाधारणं हेतुश्चेतनः स एव तत्कर्मणः पूर्णं मुख्यं फलं भुङ्क्ते, अन्यः साधारणहेतुरल्पं स्वयोग्यतानुसारिफलं भुङ्क्ते इति स्थितिर्नियमः । फलयोग्यचेतनापेक्षयैवायं नियम इत्याह– **विना विष्णुरिति** ।। तस्य पूर्णत्वेन फलप्राप्त्ययोग्यत्वादसाधारणहेतुत्वेऽपि न नियमभङ्ग इत्यर्थः ।। १६८ ।।

**भावविवृतिः–** 'असाधारणहेतुर्यः..स्थितिः' इत्यत्र यश्चेतनो यस्य कर्मणोऽसाधारणहेतुः मुख्यकारणं स एव तत्फलं स्वकृतपुण्यपापरूपकर्मफलं पूर्णं अधिकं भुङ्क्ते । अन्यः स्वस्वशक्त्यनुसारेण सहायभूतश्चेतनोऽल्पं तत्कर्मफलं भुङ्क्ते इति स्थितिः ।

ननु 'यत्प्रेरणात्सपवनस्य भवेत् प्रवृत्तिः । लोकस्य सप्रकृतिकस्य सरुद्रकालकर्मादिकस्य' (ता.नि-६.११) इत्याद्युक्तरीत्या सर्वचेष्टयितुर्विष्णोरेव पुण्यपापफलभोक्तृत्वं स्यादित्यत आह– **विना विष्णुं निर्णयोऽयमिति** ।। अयं निर्णयः कर्मकर्तुः फलभोक्तृत्वमिति निर्णयो विष्णुं विना । हिशब्दात् रमाश्च विना इति वक्तव्यम् । तौ विना अन्यब्रह्मादिचेतनेषु अयं निर्णय इत्यर्थः । कुत इत्यत आह– **स हि कर्मफलोज्झित इति** ।। हि यतः कर्मफलोज्झितः रहित अत इत्यर्थः । यद्वा कर्मफलोज्झितत्वादिति हेतुगर्भविशेषणम् । तदा हिशब्दः 'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' (सू.भा-१.२.११)। 'स्वातन्त्र्येणैव भोक्तृत्वात् दुःखाभोगाच्च सर्वदा' (आथ.भा-२.१.१)। 'अकृम्यपेक्षया' 'अपरवशत्वापेक्षया' इत्यादिना उक्तार्थसङ्ग्राहकः ।।१६८।।

**अनन्तभट्टीया–** यस्य कर्मण इति सम्बन्धः । अन्यः साधारणः । अस्य न्यायस्य विष्णावेव प्रवृत्तिं हेतुपूर्वकमाह– **विनेति** ।। १६८ ।।

**जनार्दनीया–** यस्य कर्मणः असाधारणहेतुः मुख्यहेतुर्यः चेतनो जीवः पुरुष इत्यर्थः । स एव तस्य कर्मणः तत्कर्मजनितं पूर्णं मुख्यं फलं भुङ्क्ते । अन्यः साधारणहेतुः अल्पकर्मकरणानुसारि भुङ्क्ते, फलमिति

शेषः । इति स्थितिः निर्णयः, शास्त्रेष्विति शेषः । तर्हि सर्वत्र अयं निर्णयश्चेत् विष्णोरसाधारणहेतुत्वात् तस्यैव सर्वकर्मफलं मुख्यं स्यादित्यत आह– **विनेति** ।। स विष्णुः कर्मफलोज्झितः प्रेरकत्वेन मुख्यकर्तापि, कर्मफलेन पापपुण्ययोः फलेन स्वर्गनरकादिभोगोज्झितो रहितः ।। १६८ ।।

**ताम्रपर्णीया–** ननु युधिष्ठिरादीनामपि यज्ञहेतुत्वात् कथं भीमे मखफलमधिकं स्यादित्येन आह– **असाधारणेति** ।। **कर्मफलोज्झित इति** ।। यद्यपि गुहाधिकरणे विष्णोः कर्मफलभोक्तृत्वमुक्तम् । तथाप्यत्र देवेष्विव अपूर्वोत्पत्तिद्वारा कर्मफलभोक्तृत्वाभावादशुभभोगस्य सर्वथाभावाच्च तदभावोक्तिः ।।

**भावचन्द्रिका–** ।। **विनेति** ।। 'शुभं पिबत्यसौ' इत्युक्तत्वात् । 'अनश्नन्' इत्यशुभापेक्षया इति भगवत्पादवचनात् कर्मफलाभावः ।। १६८ ।।

**चट्टि–** ननु तस्य क्रतोः सर्वैरपि साधितत्वात् कथं भीमे एवाभ्यधिकफलसम्पादनमित्यत आह– **असाधारणेति** ।। यः चेतनः जीवः पुरुषः इत्यर्थः । यस्य कर्मणः असाधारणहेतुः मुख्यहेतुः, स एव तस्य कर्मणः पूर्णं मुख्यं फलं भुङ्क्ते । अन्यः साधारणहेतुरल्पं स्वयोग्यतानुसारिफलं भुङ्क्ते इति स्थितिः निर्णयः, शास्त्रेष्विति शेषः । तर्हि सर्वत्रायं निर्णयः चेत्? विष्णोरसाधारणहेतुत्वात् तस्यैव कर्मफलं मुख्यं स्यादित्यत आह– **विनेति** ।। अयं निर्णयः विष्णुं विना । सः विष्णुः कर्मफलोज्झितः प्रेरकत्वेन मुख्यकर्तापि कर्मफलेन पापपुण्ययोः फलेन स्वर्गनरकादिभोगेन उज्झितः रहितः ।। १६८ ।।

**हेतवोऽपि हि पापस्य न प्रायः फलभागिनः[१] ।**
**देवाः पुण्यस्य दैत्याश्च [२]मानुषास्तु द्विभागिनः ॥१६९॥**

**व्यासतीर्थीया–** कर्मफलभाजस्तदसाधारणकारणस्य मुख्यं फलमित्यत्र विशेषमाह– **हेतव इति** ।।

**वेदाङ्गतीर्थीया–** तद्विभागिनः शुभाशुभकर्मफलविभागिनः ।। १६९ ।।

**वादिराजतीर्थीया–** 'हेतवोऽपि हि पापस्य' इत्यत्र देवाः पापस्य हेतवोऽपि प्रायः फलभागिनोऽपि न भवन्ति । दैत्याश्च प्रायः स्वकृतपुण्यस्य फलभागिनो न भवन्ति । दुर्योधनादयो दैत्याश्च पुण्डरीकयागादिपुण्यं कुर्वन्ति । तस्यापि सम्पूर्णफलं तदाविष्टो मुख्यप्राण एव गृह्णाति । तेषामपि दम्भेन वा ईर्ष्यया वा कर्तृत्वात् किञ्चिदेव फलं भवतीति भावः । मानुषास्तु द्विभागिनः देवदैत्यापहृतपुण्यपापफलयोः भागिनः । एकैकभागवन्त इति योजना ।। १६९-१७० ।।

**मधुसूदनीया–** ।। **हेतवोऽपि हीति** ।। देवाः सुराः प्रायः पापस्य हेतवः कर्तारोऽपि पापहेतवोऽपि पापस्य फलभागिनो न किन्तु पुण्यस्यैव फलभागिनः । दैत्यास्तु प्रायः पुण्यस्य हेतवोऽपि कर्तारोऽपि

१. 'फलभागिनः' इति अनन्तभट्टीयपाठः ।

२. 'मानुषास्तद्विभागिनः' इति वेदाङ्गतीर्थीयपाठः ।

पुण्यस्य फलभागिनो न किन्तु पापस्यैव फलभागिनः । मनुष्यास्तु द्विभागिनः पापपुण्यफलभागिनः । 'पापद्वेषादिका दोषा अवराणां न संशयः । भक्त्यादिगुणपूगस्तु पराणामाविरश्वतः ।। स्वातन्त्र्यात् सर्वदेहेषु स्थितानामपि सर्वशः । स्पृश्यन्ते नैव दोषैस्ते गुणादानैकतत्पराः ।।' (भा.ता-११.१२.२४) इति स्मृतेः । 'यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति । पुण्यमेवामुं गच्छति । न हवै देवान् पापं गच्छति ।' इति (बृ.उ-) श्रुतेश्च । देवदैत्यानां पुण्यपापफलानुभवः तस्मिन्नेव जन्मनि, मनुष्याणां तु जन्मान्तर इति ज्ञेयम् । 'पूर्वदेहकृतं कर्म भुञ्जते तदिह प्रजाः । इहैव यत्कृतं पुंसां तत्परत्र भविष्यति ।। देवानामसुराणां च अमरत्वात्तपोबलात् । एकेनैव शरीरेण भुज्यते कर्मणां फलम् ।।' इत्याद्यनुशासनोक्तेः (२२४.१०-११) ।। १६९-१७९ ।।

**वरदराजीया–** देवाः पापस्य प्रेरकत्वेन हेतवोऽपि असाधारणहेतवोऽपि प्रायेण फलभागिनो न भवन्ति । अष्टमवसुभार्यावराङ्गयादिव्यावृत्त्यर्थं 'प्रायः' इत्युक्तम् । दैत्याश्च पुण्यहेतवोऽपि न फलभागिन इत्यर्थः । मानुषास्तु द्विभागिनः स्वहेतुकपुण्यपापफलभागिन इत्यर्थः । तथाच तत्फलयोग्यत्वं चेतनविशेषणमिति न क्वापि नियमभङ्ग इत्यर्थः ।। १६९ ।।

**भावविवृतिः–** अस्वतन्त्रत्रिविधोऽपि चेतनसमूहः स्वस्वकर्मानुसारेण फलं भुङ्क्ते इत्युक्तम् । तत्र तत्वाभिमानिनां देवासुराणां विशेषोऽस्तीत्याह– **हेतवोऽपि हि पापस्य न प्रायः फलभागिनः । देवाः पुण्यस्य दैत्याश्च मानुषा तद्विभागिनः इति** ।। यद्यपि देवा दैत्येषु पुण्यपापेभ्यो नियामकाः तथापि पुण्यभागिन एव । पापभागिनो नैव । प्रायःशब्दोऽवधारणार्थकः । 'प्रायःपदं स्यात्प्राचुर्ये आक्षेपात्माऽवधारणे' (भा.ता-४.२१.२९) इत्यभिधानात् । दैत्याः देवेषु पापप्रेरकाः पापफलभागिन एवेति विशेषार्थद्योतकस्तुशब्दः । मानुषाः देवासुरोभयप्रेरणया पुण्यपापकर्तारः पुण्यपापोभयफलभागिनः । मानुषेषु प्रेरका दैत्याः मुख्यतः पापफलभागिनः, देवास्तु पुण्यप्रेरकाः मुख्यतः पुण्यभागिन इति देवानामध्यात्मादिप्रेरणया पापाभावेऽपि अधिदेवादिदेहेन कृतश्रेष्ठापराधादेः प्राप्तव्यानन्दह्रासत्वं प्रारब्धसूचकत्वं ऐहिकमनःखेदकत्वञ्चेति सूचनाय हिशब्दः।। १६९-१७१ ।।

**अनन्तभट्टीया–** देवाः पापस्य कर्मणो हेतवोऽपि फलभोगिनः पापकर्मफलभोगिनो न । अष्टमवसुभार्या वराङ्गयादौ व्यभिचारमाशङ्क्योक्तम्– **प्राय इति** ।। बाहुल्येनेत्यर्थः । दैत्याश्च पुण्यकर्महेतवोऽपि तत्फलभागिनो न भवन्ति इत्यर्थः । मानुषास्तु द्विभागिनः स्वहेतुकपुण्यपापकर्मफलभागिन इत्यर्थः ।।१६९-१७०।।

**लघ्वनन्तभट्टीया–** ननु राजसूयाश्वमेधकर्तारो युधिष्ठिरादयोऽपि परमेष्ठिपदं प्रयान्ति किं नेत्याह– **हेतव इति** ।। साक्षात्स्वकृतफलसद्भावात् 'प्रायः' इत्युक्तम् ।। **पुण्यस्येति** ।। अन्तःप्रेरकाणां पुण्यकारयितृत्वाभावात् साक्षात्क्रियमाणपुण्यस्येत्यर्थः । आचार्यतेजसा स्वर्गप्राप्तेः 'प्रायः' इत्युक्तम् ।। १६९-१७५ ।।

**जनार्दनीया–** देवाः पापस्य हेतवोऽपि कर्तारोऽपि प्रेरकत्वेन प्रायः बाहुल्येन फलभागिनो न। भीष्मादिव्यावृत्त्यर्थं 'प्रायः' इत्युक्तम्। दैत्याः पुण्यस्य हेतवोऽपि प्रायः फलभागिनो न। बलिप्रह्लादादि-व्यावृत्त्यर्थं 'प्रायः' इत्युक्तम् इति अध्याहारेण योज्यम्। मानुषास्तु द्विभागिनः शुभाशुभकर्मफलभागिनः। तुशब्देन विशेषात् मनुष्यमध्यमाः विवक्षिताः। तेषां त्रिदिवनिरयगोचरत्वात्॥ १६९॥

**ताम्रपर्णीया–**॥ **हेतव इति**॥ प्रेरकाणामपि युनामकवस्वादीनां साक्षत्स्वकृतपापफलसद्भावात् 'प्रायः' इत्युक्तम्। प्रेरणाप्रयुक्तं पापं तु नास्त्येवेति भावः। तदुक्तमनुव्याख्याने- 'प्रेरका अपि पापानां न देवाः पापमाप्नुयुः' (३.४.फलश्रुत्यधिकरण) इति। यद्वा देवाः पापस्य हेतवः साक्षात्कर्तारोऽपि फलभागिनो न भवन्ति। उत्तमद्रोहेण प्राप्तव्यहानेः 'प्रायः' इत्युक्तम्। उत्तमद्रोहातिरिक्तपापेष्वपि वृत्रहत्यादिना प्रारब्धानर्थसूचनात् अशुभाभावजोत्राहस्याशुभे कृते अभावाच्च 'प्रायः' इत्युक्तम्॥ **पुण्यस्य दैत्या इति**॥ दैत्यानां पुण्यकारयितृत्वाभावात् साक्षात् स्वक्रियमाणपुण्यस्येत्यर्थः। आचार्य-तेजसा दुर्योधनादीनां स्वर्गतिप्राप्तेः 'प्रायः' इत्युक्तम्। द्विभागिनः शुभाशुभफलभागिनः॥१६९-१७६॥

**भावचन्द्रिका–**॥ **हेतव इति**॥ यथा दैत्यावेशात् पापहेतुत्वं तथा देवावेशात् दैत्यानां पुण्यहेतुत्व..* ॥१६९-२१५॥

**भारतश्री–** हेतवो कारणभूताः पुरुषाः। प्रायः बहुलम्॥ १६९-१७६॥

**चट्टि–** देवाः पापस्य हेतवोऽपि कर्तारोऽपि प्रेरकत्वेन वा प्रायो बाहुल्येन फलभागिनो न भवन्ति। भीष्मादिव्यावृत्त्यर्थं 'प्रायः' इत्युक्तम्। दैत्याश्च पुण्यस्य हेतवोऽपि प्रायः फलभागिनो न। बलिप्रह्लादादि-व्यावृत्त्यर्थं 'प्रायः' इत्युक्तं इत्यावृत्त्या योज्यम्। मानुषास्तु द्विभागिनः शुभाशुभकर्मफलभागिनः॥१६९॥

**असाधारणहेतुश्च भीम एव प्रकीर्तितः।**
**यज्ञस्यास्य जरासन्धवधात् कर्णजयादपि ॥१७०॥**

**व्यासतीर्थीया–** असाधारणहेतुः मुख्यफलभाक्, भीमस्यासाधारणहेतुत्वं कुत इत्यत आह– **असाधारणेति**॥१७०॥

**वेदाङ्गतीर्थीया–** अस्तु विष्णोरन्यस्यासाधारणकारणस्य मुख्यं फलम्। भीमस्य त्वेतन्मखं प्रति असाधारणहेतुत्वं कुत इत्यत आह– **असाधारणेति**॥ १७०॥

**वरदराजीया–** प्रकृते चास्य यज्ञस्य असाधारणहेतुर्भीम एव प्रकीर्तितः। कुतः? इत्यतः तत्र निमित्तान्याह– **जरासन्धेत्यादिना**॥१७०॥

**जनार्दनीया–** अस्तु विष्णोरन्यस्यासाधारणकारणस्य मुख्यं फलम्। भीमस्य राजसूये असाधारण-हेतुत्वं कुत इत्यत आह– **असाधारणेति**॥ अस्य यज्ञस्य असाधारणहेतुः भीम एव प्रकीर्तितः उक्तः। तत्र हेतुमाह– **जरासन्धेत्यादिना**॥१७०॥

**चट्टि–** अस्तु विष्णोरन्यस्यासाधारणकारणस्य मुख्यं फलम् । भीमस्य राजसूये असाधारणहेतुत्वं कुत इत्यत आह– **असाधारणहेतुरिति** ।। अस्य यज्ञस्य असाधारणहेतुश्च भीम एव प्रकीर्तितः उक्तः । तत्र हेतुमाह– **जरासन्धेत्यादिना** ।। १७० ।।

**जयाच्च कीचकादीनामन्यैर्जेतुमशक्यतः[1]।**
**द्वितीयः फल्गुनश्चैव तृतीयस्तु युधिष्ठिरः ।।१७१।।**

**व्यासतीर्थीया–** मागधादिवधादिना कथमस्यासाधारणहेतुत्वमित्यत उक्तम्– **अन्यैरिति**।।१७१-७५।।

**वादिराजतीर्थीया–** 'अन्यैर्जेतुमशक्यतः' इत्यत्र अशक्यत इति भावप्रधानो निर्देशः ।।१७१-१७६।।

**वरदराजीया–** ननु जरासन्धादिवधादिकर्तृत्वेऽपि कुतोऽसाधारणहेतुत्वमित्यत आह– **अन्यैरिति** ।। अशक्यतः अशक्यत्वादित्यर्थः । द्वितीयो हेतुः फल्गुनः । तृतीयो हेतुर्युधिष्ठिरः ।। १७१ ।।

**अनन्तभट्टीया–** अशक्तः अशक्तत्वादित्यर्थः । द्वितीयो धर्मजाद्यपेक्षया मुख्यहेतुरित्यर्थः । एवं धर्मजोऽपि ।। १७१-१७५ ।।

**जनार्दनीया–** अस्तु जरासन्धवधादसाधारणहेतुत्वं भीमस्य, कर्णादिजयादप्येतत् कुतः? कर्णादिः अर्जुनादिभिरपि जेतुं शक्यत्वादित्यत आह– **अन्यैरिति** ।। अशक्यतः अशक्यत्वादित्यर्थः । फल्गुनो द्वितीयः युधिष्ठिराद्यपेक्षया मुख्यहेतुरित्यर्थः । तु तथा तृतीयः ।।१७१।।

**चट्टि–** जरासन्धवधात् कर्णजयादपि कीचकादीनां जयाच्च भीम एव असाधारणहेतुरिति पूर्वेण अन्वयः । अस्तु जरासन्धवधादसाधारणहेतुत्वं भीमस्य, कर्णजयादप्येतत् कुतः? अर्जुनादिभिरपि कर्णादिजयस्य कृतत्वादित्यत आह– **अन्यैरिति** ।। अन्यैर्जेतुमशक्यतः अशक्यत्वादित्यर्थः । फल्गुनश्च द्वितीयहेतुरेव । युधिष्ठिरस्तु तृतीयो हेतुः ।। १७१ ।।

**तस्माद् ब्रह्मपदप्राप्त्यै व्यासो भीमस्य तं क्रतुम् ।**
**अनन्यकृतमादिश्य दिशां विजयमादिशत् ।।१७२।।**

**वेदाङ्गतीर्थीया–** 'कर्ता हि तस्य परमेष्ठिपदं प्रयाति' इत्याद्युक्तमुपपाद्योपसंहरति– **तस्मादिति** ।। तस्मादसाधारणहेतुत्वात् ब्रह्मपदाधिकारित्वाच्च । आदिश्य कुरु त्वमिति । आदिशत् कुरुतेति।।१७२-७३।।

**वरदराजीया–** तस्माद्ब्रह्मपदप्राप्त्यै तद्रूपपूर्णफलायानन्यकृतमन्येन कर्तुमशक्यं तं क्रतुमादिश्य भीमस्य दिशां विजयमादिशत् । भीमेन दिग्विजयः कर्तव्य इत्याज्ञापयामास ।। १७२ ।।

---

१. 'अशक्तः' इति अनन्तभट्टीयपाठः ।

**भावविवृतिः–** 'दिशां विजयमादिशत्' इत्यत्र भागवते दिग्विजयानन्तरं मागधवधोक्तेः कथमत्र तद्वधानन्तरं दिग्विजयोक्तिरिति चेत् । सत्यम् । एतदभिप्रायस्तु आचार्यैरेवोक्ता दशमतात्पर्ये । तथाहि सभापर्वणि पश्चाद् दिग्विजयोक्तेः । 'पूर्वाः कथाः परं ब्रूयुः पराः पूर्वं तथैव च । मोहनार्थाय दुष्टानां सर्वव्यत्यास इष्यते ।। विस्तारे तु यदुक्तं स्यात् तद्ब्राह्ममविरोधतः । सङ्क्षेपोक्तविरोधे तु गुणोक्तिश्च सतां यथा ।।' इति शब्दनिर्णये । 'जरासन्धं निहत्यैव पाण्डवैस्तु दिशो जिताः । प्रसादाद्वासुदेवस्य राजसूयक्रतुः कृतम् ।।' (भा.ता-१०.८०.१५) इति मात्स्ये ।। १७२-२९४ ।।

**जनार्दनीया–** 'कर्ता हि तस्य परमेष्ठिपदं प्रयाति' इत्याद्युक्तं उपपाद्योपसंहरति– **तस्मादिति** ।। तस्मात् असाधारणहेतुत्वाद् ब्रह्मपदाधिकारत्वाच्च । क्रतुमादिश्य, पार्थान् कुरुध्वमित्याज्ञाप्य विजयं कुरुतेत्यादिशत् ।।१७२।।

**अतिविशद–** 'तस्माद् ब्रह्मपदप्राप्त्यै व्यासो भीमस्य तं क्रतुम् । अनन्यकृतमादिश्य दिशां विजयमादिशत्' इत्यत्र भीमस्यानेन कर्मणा ब्रह्मपदावाप्तिः श्रूयते । तदनुपपन्नम् । ब्रह्मणो दिवसे भीमेन तत्कर्म पुनःपुनः क्रियते च पुनः व्यासेन तत्कर्मणा च ब्रह्मफलावाप्तिः फलमित्युच्यते । इदं कथमुपपन्नं भवेत्? प्राप्तस्य पुनः प्राप्त्ययोगात् । तथा रामेण- 'भोगाश्च ये यानि च कर्मजातान्यनाद्यनन्तानि ममेह सन्ति । मदाज्ञया तान्यखिलानि सन्ति धातुः पदे तत्सहभोगनाम ।। एतादृशं मे सहभोजनं ते मया प्रदत्तम्' (ता.नि-८.२४१-२४२) इत्युच्यते । पुनःपुनः ब्रह्मणो दिवसे तेन क्रियते तेन तत्फलं दीयते । तस्मादेतस्य सर्वस्य कोऽभिप्राय इति चेत्? धातुः पदे बहवो अंशभेदाः सन्ति । तत्रैकैककर्मणा एकैकफलावाप्तिः । एवं ब्रह्मणः शतवर्षपर्यन्तं क्रियमाणेन सम्पूर्णफलावाप्तिरिति ज्ञेयम् ।। १७२-३२८ ।।

**चट्टि–** कर्ता हि तस्य परमेष्ठिपदं प्रयातीत्याद्युक्तं उपपाद्योपसंहरति– **तस्मादिति** ।। तस्मात् असाधारणहेतुत्वात् ब्रह्मणः पदाधिकारित्वाच्च भीमस्य ब्रह्मपदप्राप्त्यै व्यासः अनन्यकृतमन्येन कर्तुमशक्यं तं क्रतुं आदिश्य दिशां विजयमादिशत् । भीमेन दिग्विजयः कर्तव्य इत्याज्ञापयामास ।। १७२ ।।

**गूढकर्तृक–** 'तस्मात् ब्रह्मपदप्राप्त्यै व्यासो भीमस्य तं क्रतुम् । अनन्यकृतमादिश्य' इत्यत्र भीमस्यानेन कर्मणा ब्रह्मपदावाप्तिः श्रूयते । तदनुपपन्नम् । ब्रह्मणोऽन्यस्मिन् दिवसे भीमेन पुनः तत्कर्म क्रियते चेत्पुनः व्यासेन तत्कर्मणः ब्रह्मपदावाप्तिः फलमित्युच्यते । इदं कथमुपपन्नं भवेत्? प्राप्तस्य पुनःप्राप्त्ययोगात् । 'भोगाश्च ये यानि च कर्मजातान्यनाद्यनन्तानि ममेह सन्ति । मदाज्ञया तान्यखिलानि सन्ति धातुः पदे तत्सहभोगनाम ।। एतादृशं वै सहभोजनं मे मया प्रदत्तम्' इत्युच्यते । पुनः पुनः ब्रह्मणो दिवसे तेन क्रियते अनेन दीयते च तत्फलम्, तस्मादेतस्य सर्वस्य कोऽभिप्राय इति चेत्? धातुः पदे बहवो अंशभेदास्सन्ति । तत्र एकैककर्मणा एकैकफलावाप्तिः । एवं ब्रह्मणः शतवर्षपर्यन्तं क्रियमाणेन सम्पूर्णफलावाप्तिरिति ज्ञेयम् ।। १७२-३०९ ।।

।। इति गूढकर्तृके एकविंशोऽध्यायः ।।

**अथाब्रवीद् धनञ्जयो धनुर्ध्वजो रथो वरः ।**
**ममास्ति तद् दिशां जयो ममैव वाञ्छितः प्रभो ॥१७३॥**

**वरदराजीया—** अथ धनञ्जयोऽब्रवीत् । किमिति? मम धनुरस्ति तथा ध्वजो वानरलक्षणोऽस्ति । वरो रथश्चास्ति । तत्तस्मात् दिशां जयो ममैव वाञ्छितोऽपेक्षितोऽस्ति ॥१७३ ॥

**अनन्तभट्टीया—** तत् तस्मात् ॥१७३॥

**जनार्दनीया—** तत् तस्मात् । ममैव वाञ्छितः अपेक्षितो, अस्तीति शेषः ॥१७३॥

**चट्टि—** अथ धनञ्जयः अब्रवीत् । किमिति? मम धनुः परः श्रेष्ठः ध्वजः वरः रथश्च ममास्ति । तत् तस्माद् दिशां जयः हे प्रभो! श्रीवेदव्यास! ममैव वाञ्छितो अपेक्षितः, अस्तीति शेषः ॥ १७३ ॥

**[1]इतीरितोऽखिलप्रभुर्जगाद सत्यमस्ति ते ।**
**समस्तसाधनोन्नतिर्महच्च वीर्यमस्ति ते[2] ॥१७४॥**

**वेदाङ्गतीर्थीया—** इदं धनुरादिकं सत्यमस्ति । सत्यमित्यर्धाङ्गीकारः । तदेव विवृणोति— **अस्तीत्यादीना** ॥ ते **समस्तसाधनोन्नतिरस्ति । ते महद्वीर्यं चास्ति** ॥१७४॥

**वरदराजीया—** अखिलप्रभुर्व्यासः । सत्यं त्वयोक्तं समस्तसाधनोन्नतिरस्ति । अतिवीर्यपराक्रमोऽस्ति हि ॥१७४॥

**जनार्दनीया—** ते इदं धनुरादि । सत्यमित्यर्धाङ्गीकारः । तदेव विवृणोति— **अस्तीत्यादिना** ॥ ते समस्तसाधनोन्नतिरस्ति । ते महद्वीर्यं चास्ति ॥ १७४ ॥

---

१. 'इतीरितेऽखिलप्रभुः' इति चट्टीपाठः । 'पार्थः प्राप्य धनुःश्रेष्ठमक्षय्यौ च महेषुधी । रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ॥ धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् । प्राप्तमेतन्मया राजन् दुष्प्रापं यदभीप्सितम् । तत्र कृत्यमहं मन्ये कोशस्यास्य विवर्धनम् । करमाहरयिष्यामि राज्ञः सर्वान् नृपोत्तम ॥ ततो व्यासो महाबुद्धिरुवाचेदं वचोऽर्जुनम् । साधु साध्विति कौन्तेय दिष्ट्या ते बुद्धिरीदृशी ॥ पृथिवीमखिलां जेतुमेको व्यवसितो भवान् । धन्यः पाण्डुर्महीपालो यस्य पुत्रस्त्वमीदृशः ॥ सर्वं प्राप्स्यति राजेन्द्रो धर्मपुत्रो युधिष्ठिरः । त्वद्वीर्येण स धर्मात्मा सार्वभौमत्वमेष्यति ॥ सुनयाद् वासुदेवस्य भीमार्जुनबलेन च । यमयोश्चैव वीर्येण सर्वं प्राप्स्यति धर्मराट् ॥ तस्माद् दिशं देवगुप्तामुदीचीं गच्छ फल्गुन । शक्तो भवान् सुरान् जित्वा रत्नान्याहर्तुमोजसा ॥ प्राचीं भीमो बलश्लाघी प्रयातु भरतर्षभ । याम्यां तत्र दिशं यातु सहदेवो महारथः ॥ प्रतीचीं नकुलो गन्ता वरुणेनाभिपालिताम् । एषा मे नैष्ठिकी बुद्धिः क्रियतां भरतर्षभाः ॥ श्रुत्वा व्यासवचो हृष्टाः ऊचुः पाण्डुनन्दनाः । एवमस्तु मुनिश्रेष्ठ यथाऽऽज्ञापयसि प्रभो । तेऽप्यनुज्ञाप्य राजानं सैन्येन महता वृताः ॥' इत्यादि । सभापर्व- BORI पृ-373.

२. 'वीर्यमस्ति हि' इति वरदराजीयपाठः ।

**चट्टि–** इतीरिते, सत्यखिलप्रभुः श्रीवेदव्यासः जगाद । ते इदं धनुरादिकं सत्यमस्ति । सत्यम् इत्यर्धाङ्गीकारः । तदेव विवृणोति– **समस्तेति** ।। समस्तसाधनोन्नतिः महद्वीर्यं पराक्रमश्च तवास्ति ।।१७४।।

**तथापि कीचकादयो वृकोदरादृते वशम् ।**
**न यान्ति नापि ते वशं प्रयाति कर्ण एव च ।।१७५।।**

**वेदाङ्गतीर्थीया–** तथापीत्यादिनोन्नत्या सर्वदिग्विजयं प्रतिषेधति ।। १७५ ।।

**वरदराजीया–** तथापि कीचकादयो भीमादृते वशं न यान्ति । कर्णोऽपि वशं न प्रयात्येव ।। १७५ ।।

**जनार्दनीया–** तथापि इत्यादिना सर्वदिग्विजयं प्रतिषेधति ।।१७५।।

**चट्टि–** तथापि कीचकादयो वृकोदराद्भीमादृते ते वशं न यान्ति । कर्णश्च ते वशं न प्रयात्येव ।।१७५।।

**बलाधिकोऽसि कर्णतस्तथाऽपि नामृतः करम् ।**
**ददाति ते ह्यतिस्पृधा न वध्य एष तेऽद्य च ।।१७६।।**

**व्यासतीर्थीया–** अमृतः करं न दास्यति चेत् हत्वाऽऽनयेयमित्यत आह– **अतिस्पृधेति** ।। अतिक्रान्ता च सा स्पृक् च अतिस्पृक् तया अतिस्पृधा, स्पर्धाद्यभावेनेत्यर्थः । प्रतीतार्थत्वे शापानुपपत्तिप्रसङ्गः ।। १७६ ।।

**वेदाङ्गतीर्थीया–** तर्हि हनिष्यामीत्यत आह– **न वध्य इति** ।।१७६।।

**वरदराजीया–** त्वं कर्णतो बलाधिको यद्यपि, तथापि कर्णो अमृतः जीवन् ते भयात् करं न ददाति । जीवति सति भयादिना करं न ददात्येवेत्यर्थः । तत्र निमित्तमाह– **अतिस्पृधेति** ।। त्वया साकं अतिस्पर्धया निमित्तभूतयेत्यर्थः । सर्वदा त्वयाऽतिस्पर्धायुक्तत्वात् त्वदपेक्षयापकर्षं न सहत इत्यर्थः । तर्हि बलाधिकोऽहं हनिष्यामीत्यत आह– **न वध्य इति** ।। एष कर्णोऽद्येदानीं ते न वध्य एव ।। १७६ ।।

**अनन्तभट्टीया–** अमृतः जीवन्नित्यर्थः । तर्हि तं हनिष्यामीत्यत आह– **न वध्य इति** ।। तत्र कारणमाह– **अतिस्पृधेति** ।। अतिक्रान्ता अविद्यमाना स्पृक् अतिस्पृक् तया स्पृधाभावेनेत्यर्थः ।।१७६।।

**लघ्वनन्तभट्टीया–** अमृतः जीवन् । तत्र हेतुमाह– **अतिस्पृधेति** ।। अत्यन्तं स्पृधेत्यर्थः । पराजितोऽपीति शेषः ।। १७६ ।।

**जनार्दनीया–** कर्णतः त्वं बलाधिकोऽसि यद्यपि, तथापि अमृतः जीवन् कर्णः अतिस्पृधा अतिस्पर्धया ते करं न ददाति हि । तर्हि हनिष्यामीत्यत आह– **न वध्य इति** ।। एषः कर्णः ते त्वया । अद्य इदानीम् ।।१७६।।

**ताम्रपर्णीया—** अमृतो जीवन् करं कुतो न ददातीत्यतो निमित्तमाह— **अतिस्पृधेति** ।। सर्वदा त्वया अतिस्पर्धायुक्तत्वादपकर्षभयान्न ददातीत्यर्थः ।। १७६ ।।

**चट्टि—** यद्यपि कर्णतस्त्वं बलाधिकोऽसि, तथापि अमृतः जीवन् कर्णः ते करं न ददाति हि । तर्हि हनिष्यामीत्यत आह— **नेति** ।। अतिक्रान्ता च सा स्पृक् च अतिस्पृक् तया अतिस्पृधा । एषः कर्णश्च प्रतीतार्थत्वे शापानुपपत्तिप्रसङ्गः । त्वया अद्येदानीं न वध्यः ।। १७६ ।।

**[१]सवर्मकुण्डलत्वतो न वध्य एष यत् त्वया ।**
**ततो वृकोदरो दिशं प्रयातु ते पितुः प्रियाम् ।।१७७।।**

**व्यासतीर्थीया—** कारणान्तरं चाह— **सवर्मेति** ।। १७७ ।।

**वेदाङ्गतीर्थीया—** तत्र निमित्तमाह— **सवर्मेति** ।। ते पितुः प्रियां दिशं ऐन्द्रीम् । भरतखण्डापेक्षयेति भावः । अन्यथा 'द्वीपान् सप्त चाशेषदिक्षु' (१८१) इति वक्ष्यमाणविरोधात् ।।१७७-१८०।।

**वादिराजतीर्थीया—** 'दिशं प्रयातु ते पितुः प्रियाम्' इत्यत्र ते पितुः प्रियां ऐन्द्रीमित्यर्थः । इदमपि भरतखण्डापेक्षया । अन्यथा 'द्वीपान् सप्त चाशेषदिक्षु' इति वक्ष्यमाणविरोधात् ।। १७७ ।।

**वरदराजीया—** तदेव हेतुकथनेन स्पष्टयति— **सवर्मेति** ।। सहजवर्मकुण्डलोपेतत्वादित्यर्थः । यद्यस्मात्ततः कारणात्ते पितुः इन्द्रस्य प्रियां ऐन्द्रीं दिशं वृकोदरः प्रयातु ।। १७७ ।।

**अनन्तभट्टीया—** यदि स्पर्धा स्यात् तदा न तज्जयः स्यात् इत्यतो निमित्तान्तरमाह— **सवर्मेति** ।।१७७।।

**जनार्दनीया—** तत्र निमित्तमाह— **सवर्मेति** ।। सवर्मकुण्डलत्वतः कवचकुण्डलैः सहितत्वात् न वध्यः यत् ततः तस्मात् कारणात् ते पितुः प्रियां दिशं इन्द्रदेवतां पूर्वां दिशमित्यर्थः । भरतखण्डापेक्षयेति भावः । अन्यथा 'द्वीपान् सप्त चाशेषदिक्षु' इत्युत्तरश्लोकविरोधः ।। १७७ ।।

**भारतश्री—** ते पितुः इन्द्रस्य ।। १७७ ।।

**चट्टि—** तदेव हेतुकथनेन स्पष्टयति— **सवर्मेति** ।। सवर्मकुण्डलत्वतः कवचकुण्डलैः सहितत्वात् एषः कर्णः त्वया न वध्यः यत् ततः कारणात् वृकोदरः भीमः ते पितुरिन्द्रस्य प्रियां दिशं पूर्वां दिशं इत्यर्थः । प्रयातु ।। १७७ ।।

---

१. 'यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे । आयुषः प्रक्षयं गत्वा मृत्योर्वशमुपैष्यसि । कवचेन समायुक्तः कुण्डलाभ्यां च मानद । अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ।' वनपर्वणि-३०१.१८-१९ । 'अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः ।' वनपर्वणि-३०३.१२ । 'न तु त्वामर्जुनः शक्तः कुण्डलाभ्यां समन्वितम् । विजेतुं युधि यद्यस्य स्वयमिन्द्रः शरो भवेत् ।' वनपर्वणि-३०२.१७ इति कर्णं प्रति सूर्यवाक्यम् ।

**जीवग्राहभयात् कर्णो ददाति करमञ्जसा ।**
**भीमाय नात्र सन्देहो जितोऽनेन च संयुगे ॥१७८॥**

**व्यासतीर्थीया–** अवध्यः कथं भीमाय करं दद्यादित्यत आह– **जीवेति** ।। जीवतो ग्राहो ग्रहणम् ।। १७८-१८१ ।।

**वादिराजतीर्थीया–** 'जीवग्राहभयात्' इत्यत्र जीवग्राहो नाम जीवत एव बलात् ग्रहणम् ।।१७८-१८१।।

**वरदराजीया–** अनेन जितः कर्णो जीवग्राहभयाज्जीवतः स्वस्य भीमस्य भीमकर्तृकग्रहणभयात् भीमायाञ्जसा करं ददाति । अत्र सन्देहो न कर्तव्यः ।। १७८ ।।

**अनन्तभट्टीया–** ननु भीमेनापि जितः करमतिस्पर्धया न ददातीति किम्? न शक्यमित्याह– **जीवेति** ।। जीवन्तं गृहीत्वा स्वपुरं नयेदिति भयादित्यर्थः । अर्जुनेन जीवग्रहस्याशक्यत्वात् जितोऽपि पुनःपुनः युध्यन्नतिस्पर्धया न ददातीति भावः ।। १७८-१८६ ।।

**लघ्वनन्तभट्टीया–** जीवग्राहः जीवतो ग्रहणम् ।। १७८-१७९ ।।

**जनार्दनीया–** अनेन भीमेन । संयुगे जितश्च, पूर्वमिति शेषः । जीवग्राहभयात् जीवतो ग्राहः ग्रहणं तद्भयात् । जितमात्मानं भीमो ग्रहिष्यतीति भयादित्यर्थः ।। १७८ ।।

**ताम्रपर्णीया–** ।।**जीवग्राहभयादिति**।। जीवन्तं गृहीत्वा स्वपुरं नयेदिति भयादित्यर्थः ।।१७८-८२

**भारतश्री–** ।। **जीवग्राहभयादिति** ।। भीमाय नात्र सन्देहः । तव चेत् सन्देहः । यद्यपि त्वमधिकः तथापि चतुर्गुणबलत्वं तव नास्ति च । 'जेतुं चतुर्गुणबलः' (ता.नि-६.७) इत्युक्तेः । चतुर्गुणबले सन्देहो नास्ति अन्यत्र तु संशयः । भीमस्य तु बहुगुणबलत्वात् न सन्देह इति भावः ।। **जितोऽनेन च संयुगे इति** ।। यद्यपि कर्णः अर्जुनेनापि द्रौपदीस्वयंवरे जितस्तथापि भीमसहितेन जितः न तेनैवेति भावः । तदानीमप्येतत् सन्निधानं एतत्सहायेनैव जितो अतो भीमेनैव जित इति 'जितोऽनेन' इत्युक्तम् । उक्तं च पूर्वम्- 'आयान्तमीक्ष्य तरुहस्तमिमं समीरसूनुं सुयोधनमुखा अखिलास्सकर्णाः । भूरिश्रवाः शकुनिभूरिजयद्रथाश्च सर्वेऽपि दुद्रुवुरथो विविशुः पुरं स्वम् ।।' (ता.नि-१९.१७०) इति । प्रत्येकं क्रीडायुद्धादौ चानेन जित इत्यर्थः ।। १७८-२१५ ।।

**चट्टि–** अनेन भीमेन संयुगे जितश्च, पूर्वमिति शेषः । जीवग्राहभया जीवतो ग्रहः ग्रहणं तद्भयात् जीवन्तमात्मानं भीमो ग्रहीष्यतीति भयादित्यर्थः । कर्णः भीमायाञ्जसा करं बलिं ददाति । अत्र सन्देहो नास्ति ।। १७८ ।।

**अजेयौ शर्ववचनाद् रणे कीचकपौण्ड्रकौ ।**
**वशं प्रयातो भीमस्य तथाऽवध्योऽपि चेदिपः ॥१७९॥**

**वरदराजीया–** तथा कीचकपौण्ड्रकौ शर्ववचनाद्वररूपाद् रणे अवध्यावपि भीमस्य वशं प्रयातः प्रयास्यतः । तथा अवध्यश्चेदिपः शिशुपालोऽपि वशं प्रयास्यति ।। १७९ ।।

**जनार्दनीया–** चेदिपः शिशुपालः ।। १७९ ।।

**चट्टि–** शर्ववचनाद्रणे अजेयो कीचकपौण्ड्रकौ भीमस्य वशं प्रयातः । तथा अवध्यः चेदिपः शिशुपालोऽपि वशं प्रयास्यति ।। १७९ ।।

**जीवग्राहभयं ह्येषां भीमान्मागधपातनात् ।**
**तस्मात् करं प्रयच्छन्ति जिता वा पूर्वमेव वा ॥१८०॥**

**मधुसूदनीया–** पूर्वमेव वा युद्धात्पूर्वमेव युद्धकरणात्प्रागेव जीवग्राहभयात् करं दास्यन्तीति भावः । जिता वा भीमेन साकं युद्धं कृत्वा भीमात् पराजिता वा करं दास्यन्तीति योजना ।। १८० ।।

**वरदराजीया–** कुतः? हि यस्मादेषां कीचकादीनां जीवग्राहभयम् । तदपि कुतः? मागधपातनात्, भीमेन मागधस्य पातितत्वादित्यर्थः । तस्मात् भयाज्जिताः जयात् पूर्वमेव वा करं प्रयच्छन्ति ।।१८०।।

**अनन्तभट्टीया–** भीमाज्जीवग्राहभयम् । तत्र हेतुः– **मागधपातनादिति** ।। भीमेन मागधस्य पातितत्वादित्यर्थः ।। १८०-१८२ ।।

**जनार्दनीया–** भीमात् कृतात् मागधपातनात् एषां कीचकादीनां जीवग्राहभयं हि यस्मात् तस्माज्जिताः सन्तः पूर्वमेव वा, जयादिति शेषः ।।१८०।।

**चट्टि–** भीमात् भीमकृतात् मागधपातनादेषां कीचकादीनां जीवग्राहभयं हि यस्मात् तस्मात् जिता वा पूर्वं जयात् पूर्वं एव वा करं दास्यन्ति ।।१८०।।

**प्रयाहि च त्वं धनदप्रपालितां दिशं द्वीपान् सप्त चाशेषदिक्षु ।**
**नागांश्च दैत्यांश्च तथाऽधरस्थान् विजित्य शीघ्रं पुनरेहि चाऽत्र ॥१८१॥**

**वेदाङ्गतीर्थीया–** अशेषदिक्षु सप्त द्वीपांश्च ।।१८१।।

**मधुसूदनीया–** अशेषदिक्षु सप्तद्वीपस्थाशेषदिक्ष्वित्यर्थः ।।१८१-१८२ ।।

**वरदराजीया–** त्वं च धनदप्रपालितामुदीचीं दिशं प्रयाहि । तथाच सप्तद्वीपाश्च प्रयाहि । तथा चाशेषदिक्षु च प्रयाहि । तथाऽधरस्थान् भूविवरस्थान् नागान् दैत्यांश्च विजित्य शीघ्रं पुनरेहि ।। १८१ ।।

**जनार्दनीया–** धनदप्रपालितां दिशं उदीचीं दिशम् । 'इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वारुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात् ।।' इत्यमरः । अर्जुनदिग्विजये- 'यात एव दिशमुत्तरां तदा' (ता.नि-२१.२१०) इति प्रथमश्लोकादपि उदीचीदिगिति ज्ञेयम् । सोमकुवेरावुभावपि उत्तरदिगधिपती । 'धनदप्रपालिताम्' इत्यत्र ईशानीं दिशं इति केचित् । अशेषदिक्षु सप्तद्वीपान्, स्थितानिति शेषः । प्रयाहि । तथा अधरस्थान् पातालादिसप्तलोकस्थितान् नागान् दैत्यांश्च विजित्य पुनः पूर्वं नागपुरे विजित्य यथागतस्तथा अत्र यज्ञस्थलं प्रति एहि ।। १८१ ।।

**चट्टि–** त्वं च धनदपालितां धनदेन कुबेरेण प्रपालितां दिशं उदीचीं दिशं प्रयाहि । तथा सप्तद्वीपांश्च प्रयाहि । अशेषदिक्षु च प्रयाहि । तथा अधरस्थान् पातालसप्तकस्थितान् नागांश्च दैत्यांश्च विजित्य शीघ्रं पुनरत्र यज्ञस्थलं प्रत्येहि ।। १८१ ।।

**रथो हि दिव्योऽम्बरगस्तवास्ति दिव्यानि चास्त्राणि धनुश्च दिव्यम् ।**
**येऽन्ये च बाणप्रमुखा अजेयाः शर्वाश्रयास्तानपि भीम एतु ।।१८२।।**

**वेदाङ्गतीर्थीया–** कथमप्यस्य सप्तद्वीपगमनं घटत इत्यत आह– **रथो हीत्यादिना** ।। १८२-१८३ ।।

**वादिराजतीर्थीया–** बहुलक्षयोजनाभ्यन्तरितसप्तसमुद्रोत्तरणं कथमर्जुनस्येत्यत उक्तम्– **रथो हि दिव्योऽम्बरग इति** ।। १८२ ।।

**वरदराजीया–** एतत्कार्यपर्याप्तसाधनोन्नतिः तवास्तीत्याह– **रथो हीति** ।। दिव्यो अलौकिकः । ये च शर्वाश्रयाः अत एव अजेयाः बाणप्रमुखाश्चैतानपि प्रति भीम एव गच्छतु ।। १८२ ।।

**जनार्दनीया–** ननु अर्जुनस्य सप्तद्वीपगमनं कथं घटत इत्यत आह– **रथो हीति** ।। अम्बरगः अम्बरे आकाशे गच्छतीत्यम्बरगः । एतु प्राप्नोतु ।।१८२।।

**चट्टि–** ननु अर्जुनस्य सप्तद्वीपगमनं कथं घटत इत्यत आह– **रथो हीति** ।। अम्बरे आकाशे गच्छन्तीत्यम्बरगो दिव्यः आलौकिकः रथस्तवास्ति । दिव्यान्यस्त्राणि च सन्ति दिव्यं धनुश्चास्ति । अतः सप्तद्वीपादिगमनं युक्तमित्यर्थः । शर्वः आश्रयो येषां ते तथा । अत एवाजेयाः बाणप्रमुखाः येऽन्ये राक्षसास्तानपि भीमः एतु प्राप्नोतु ।। १८२ ।।

**[१]तथा सुराश्चापि समस्तशोऽस्य बलिं प्रयच्छन्ति मदाज्ञयेतरे ।**
**दिशं प्रतीचीमथ दक्षिणां च यातां यमौ क्रमशो ह्यध्वरार्थे ।।१८३।।**

**व्यासतीर्थीया–** प्रतीचीं पश्चिमाम् ।। १८३-१९२ ।।

---

१. 'तथाऽसुराः' इति वरदराजीय-जनार्दनीयपाठः ।

**वादिराजतीर्थीया–** 'तथा सुराश्चापि समस्तशः' इत्यत्र सुरा इति पदच्छेदः । 'हिमवच्छिखरे देवान्' (१८९) इति वक्ष्यमाणत्वात् ।। १८३ ।।

**मधुसूदनीया–** इतरे उर्वरितौ दिशौ प्रति यमौ याताम् । तदेव विशदयति– **दिशं प्रतीचीमित्यादिना** ।।१८३।।

**वरदराजीया–** तथा समस्तशः इतरेऽसुरा अपि मदाज्ञया मत्प्रेरणया तस्य भीमस्य बलिं प्रयच्छन्ति । क्रमशः प्रतीचीं नकुलो यातु । दक्षिणां सहदेवो यात्वित्यर्थः ।। १८३ ।।

**अनन्तभट्टीया–** 'तथासुराः' इत्यत्र सुरा इति छेदः ।। १८३-१८४ ।।

**जनार्दनीया–** तथा इतरे कीचकबाणादिभ्योऽन्ये असुराः बलिं करं प्रयच्छन्ति, तवेति शेषः । ननु त्रैगर्तादयोऽसुराः रुद्रादिवराढजेयाः कथं बलिं प्रयच्छन्तीत्यत आह– **मदाज्ञयेति** ।। केचित् 'तथासुराः' इत्यत्र 'सुराः' इति पदच्छेदं कुर्वन्ति । तत्र सुराः बलिं प्रयच्छन्ति । भीमायेत्यध्याहारेण योज्यम् । अध्वरार्थे यज्ञार्थे । नकुलः प्रतीचीम्, सहदेवः दक्षिणामिति क्रमशः क्रमेण योज्यम् ।।१८३।।

**ताम्रपर्णीया–** ।। **तथा सुराश्चापीति** ।। मदाज्ञया समस्तशः शक्रादिसुराश्च करं दास्यन्ति । तथा इतरे शेषगरुडरुद्राश्च मदाज्ञया दास्यन्तीत्यर्थः । यद्वा तथा बाणादिवत्समस्तशो असुराश्च करं प्रयास्यन्ति । तथा इतरे असुरेभ्य इतरे देवाः मदाज्ञया दास्यन्तीत्यर्थः । वरदराजीये तु- तथा समस्तश इतरे असुरा अपि मदाज्ञया मत्प्रेरणया भीमस्य करं दास्यन्तीत्यर्थः उक्तः ।।१८३-२०२।।

**चट्टि–** तथा इतरे कीचकबाणदिभ्योऽन्ये समस्तशोः सुराश्चाप्यस्यभीमस्य मदाज्ञया बलिं प्रयच्छन्ति । केचित्- 'तथासुराः' इत्यत्र सुरा इति पदच्छेदं कुर्वन्ति । 'हिमवच्छिखरे देवान्' इति वक्ष्यमाणत्वात् । इतरे उर्वरिताः दिशो प्रति यमौ यातामिति वा । तदेव विशदयति– **दिशं प्रतीचीमित्यादिना** ।। अथ अध्वरार्थे यज्ञार्थे नकुलः प्रतीचीं दिशं प्रति, सहदेवः दक्षिणां दिशं इति क्रमशः क्रमेण यमौ नकुलसहदेवौ च याताम् ।। १८३ ।।

> **यशश्च धर्मश्च तयोरपि स्यादिति स्म कृष्णेन सुतेन काल्याः ।**
> **उक्ते ययुस्ते तमभिप्रणम्य दिशो यथोक्ताः [1]परमोरुसद्गुणम् ।।१८४।।**

**वेदाङ्गतीर्थीया–** काल्याः सत्यवत्याः । परमोरुसद्गुणाः ययुः ।। १८४ ।।

**वादिराजतीर्थीया–** 'कृष्णेन सुतेन काल्याः' इत्यत्र काल्याः सत्यवत्याः इत्यर्थः ।।१८४-१९४।।

**मधुसूदनीया–** ।। **ययुस्त इति** ।। सैन्यसहिता इति शेषः । तथाचोक्तम्- 'इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः । अग्निदत्तेन दिव्येन रथेनाद्भुतकर्मणा ।। तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ । ससैन्याः प्रययुस्सर्वे धर्मराजेन पूजिताः ।।' इत्यादि सभापर्वणि (२६.९-११)।। १८४-१८६ ।।

---

१. 'परमोरुसद्गुणाः' इति वेदाङ्गतीर्थीयपाठः ।

**वरदराजीया–** तयोर्नकुलसहदेवयोः । इति काल्याः सत्यवत्याः सुतेन व्यासेन उक्ते सति परमोरुसद्गुणं तं व्यासम् ।। १८४ ।।

**जनार्दनीया–** तयोर्यमयोः । स्यादिति काल्याः सत्यवत्याः सुतेन कृष्णेन श्रीवेदव्यासेनोक्ते सति । ते भीमादयः तं व्यासम् । यथोक्ताः व्यासोक्तप्रकारेण ताः दिशः प्रति ययुरित्यर्थः ।।१८४।।

**चट्टि–** तयोर्नकुलसहदेवयोः यशश्च धर्मश्च स्यादिति काल्याः सत्यवत्याः सुतेन कृष्णेन श्रीवेदव्यासेन उक्ते सति, ते भीमादयः परमोरुसद्गुणं तं व्यासमभिप्रणम्य तेन यथोक्ताः दिशः प्रति ययुः, सैन्यसहिता इति शेषः । तथाचोक्तम्- 'इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः । अग्निदत्तेन दिव्येन रथेनाद्भुत-कर्मणा ।। तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ । ससैन्याः प्रययुस्सर्वे धर्मराजेन पूजिताः ।।' इत्यादि सभापर्वणि ।।१८४।।

**[1]वृकोदरोऽजयन्नृपान् विराटमाससाद ह ।**
**जितेऽत्र कीचके रणे समाददे करं ततः ।।१८५।।**

**वेदाङ्गतीर्थीया–** अत्र विराटसमीपे । ततः विराटात् ।। १८५-१८६ ।।

**वरदराजीया–** नृपान् अजयत् । विराटं नृपं आससाद । कीचके रणे जिते सति ततो विराटात् करं समाददे ।। १९६ ।।

**अनन्तभट्टीया–** वृकोदरो नृपानजयत् । विराटमाससाद । अत्र विराटसन्निधौ ।। १८५-१८६ ।।

**जनार्दनीया–** अत्र विराटनगरे । ततः विराटात् ।।१८५।।

**चट्टि–** वृकोदरो भीमः नृपान् जयन् विराटमाससाद । अत्र विराटनगरे कीचके रणे जिते सति ततः विराटात् करं समाददे ।। १८५ ।।

**ततः क्रमान्नृपान् जित्वा [2]चेदीनां विषयं गतः ।**
**मातृवाक्याद् भयाच्चैव शिशुपालेन पूजितः ।।१८६।।**

**वरदराजीया–** चेदीनां विषयं देशम् । मातृवाक्याद्भीमस्य मातृष्वसुः शिशुपालमातुः श्रुतश्रवसः वाक्यादित्यर्थः । भयाद्भीमस्य भयात् ।। १८६ ।।

---

१. 'युध्यमानं बलात्संख्ये विजिग्ये पाण्डवर्षभः । ततो मत्स्यान् महातेजा मलदांश्च महाबलान् ।' सभापर्वणि-३१.८.

२. 'ततो निवेद्य तद्राष्ट्रं चेदिराजो विशाम्पते । उवाच भीमं प्रहसन् किमिदं कुरुषेऽनघ ।। तस्य भीमस्तदाचख्यौ धर्मराजचिकीर्षितम् । स च तं प्रतिगृह्यैव तथा चक्रे नराधिपः । ततो भीमस्तत्र राजन्नुषित्वा त्रिदशाः क्षपाः। सत्कृतः शिशुपालेन ययौ सबलवाहनः ।।' सभापर्वणि-३०.१४-१६.

**जनार्दनीया–** चेदीनां विषयं चेदिदेशम् ।।१८६।।

**चर्ट्टि–** क्रमात् नृपान् जित्वा ततश्चेदीनां विषयं देशं गतः सन् मातृवाक्याद् भयाद् भीमस्य भयाच्चैव शिशुपालेन पूजितः सन् ।। १८६ ।।

**मातृष्वसुर्गृहे चोष्य दिवसान् कतिचित् सुखम् ।**
**करं सुमहदादाय ततः पूर्वं दिशं ययौ ।।१८७।।**

**वेदाङ्गतीर्थीया–** ततः शिशुपालात् सुमहत् करमादाय ।।१८७-८।।

**मधुसूदनीया–** ।। **दिवसान् कतिचित्सुखमिति** ।। कतिचिद्दिवसान् त्रिंशद्दिनानीत्यर्थः । 'ततो भीमस्तत्र राजन्नुषित्वा त्रिदशक्षपाः । सत्कृतः शिशुपालेन ययौ सबलवाहनः ।।' इति सभापर्वोक्तेः (३०.१६) ।। १८७ ।।

**वरदराजीया–** कतिचिद्दिवसान् उष्य उषित्वा स्थित्वा । ततः शिशुपालात् ।। १८७।।

**अनन्तभट्टीया–** शिशुपालस्य शिशुपालापेक्षया तद्गृहे अवस्थानं द्रष्टव्यम् ।। १८७ ।।

**जनार्दनीया–** मातृष्वसुः कुन्तीभगिन्याः । गृहे सुखं यथा भवति तथा । कतिचिद् दिवसानुष्य स्थित्वा । ततः शिशुपालादादाय ततः चेदिविषयाद्वा पूर्वां ययौ ।। १८७ ।।

**चर्ट्टि–** मातृष्वसुः कुन्तीभगिन्याः गृहे सुखं यथा भवति तथा कतिचिद्दिवसान् त्रिंशद्दिनानि इत्यर्थः । उष्य स्थित्वा ततः शिशुपालात् सुमहत्करं आदाय, ततश्चेदिविषयात् तत इत्यस्यावृत्तिः । पूर्वां दिशं ययौ । 'ततो भीमस्तत्र राजन्नुषित्वा त्रिदशक्षपाः । सत्कृतः शिशुपालेन ययौ सबलवाहनः ।।' इति सभापर्वोक्तेः ।। १८७ ।।

**क्रमेण सर्वान् निर्जित्य [१]पौण्ड्रकं च महाबलम् ।**
**विरथीकृत्य [२]कर्णं च करमादाय सर्वतः ।।१८८।।**

**मधुसूदनीया–** ।।**करमादाय सर्वत इति**।। सर्वतः दशार्णाधिपसुधर्मादिसर्वनृपेभ्यश्च ।।१८८-२१५।।

**वरदराजीया–** पौण्ड्रकं निर्जित्य, कर्णं च विरथीकृत्य । सर्वतः पौण्ड्रकादेः सकाशात् ।। १८८ ।।

---

१. 'ततः पुण्ड्राधिपं वीरं वासुदेवं समाययौ । इदानीं वृष्णिवीरेण न योत्स्यामीति पौण्ड्रकः ।। कृष्णस्य भुजसन्त्रासात् करमाशु ददौ नृपः ।।' सभापर्वणि-३१.२२.

२. 'स कम्पयन्निव महीं बलेन चतुरङ्गिणा । युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ।। सः कर्णं युधि निर्जित्य वशे कृत्वा च भारत ।।' सभापर्वणि-३१.१९-२०.

**जनार्दनीया–** क्रमेण सर्वान् पूर्वादिदिशि संस्थितान् नृपान् निर्जित्य जित्वा, तथा महावलं पौण्ड्रकं च विनिर्जित्य, तथा महावलं कर्णं विरथीकृत्य, सर्वतः सर्वेभ्यः करमादाय ।।१८८।।

**चट्टि–** भीमः क्रमेण सर्वान् पूर्वदिशि स्थितान् नृपान् निर्जित्य जित्वा, तथा महावलं पौण्ड्रकं च निर्जित्य, तथा महावलं कर्णं च विरथीकृत्य सर्वतः दशार्णाधिपसुधर्मादिसर्वनृपेभ्यः करमादाय ।।१८८।।

**हिमवच्छिखरे देवान् जित्वा शक्रपुरोगमान् ।**
**क्रीडार्थं युध्यतस्तेभ्यस्तुष्टेभ्यो [1]रत्नसञ्चयम् ।।१८९।।**

**वेदाङ्गतीर्थीया–** युध्यतः युद्धं कुर्वाणान् देवान् ।। १८९-१९५ ।।

**वरदराजीया–** हिमवतः पर्वतस्य शिखरे क्रीडार्थं भीम इति परिज्ञानात् क्रीडार्थमेव युध्यतः युद्धं कुर्वाणान् शक्रपुरोगमान् देवान् जित्वा तेभ्यः शक्रादिभ्यः तुष्टेभ्यः तोषं प्राप्तेभ्यः रत्नसञ्चयं समादायेति सम्बन्धः ।। १८९ ।।

**अनन्तभट्टीया–** क्रीडार्थं युध्यतः अस्य भीमत्वपरिज्ञानादिति भावः ।। १८९ ।।

**जनार्दनीया–** क्रीडार्थं अयं भीम इति ज्ञात्वा तद्बलप्रकाशार्थम् । युध्यतः युद्धं कुर्वाणान् देवान् । तुष्टेभ्यः भीमबलम्, दृष्ट्वेति शेषः । तेभ्यः शक्रादिभ्यः रत्नसञ्चयान् रत्नसमूहानाप ।। १८९ ।।

**चट्टि–** हिमवतः हिमवत्पर्वतस्य तस्य शिखरे क्रीडार्थमयं भीम इति ज्ञात्वा तद्बलप्रकाशार्थं युध्यतः युद्धं कुर्वाणान् शक्रपुरोगमान् देवान् जित्वा तुष्टेभ्यः भीमबलम्, दृष्ट्वेति शेषः । तेभ्यः शक्रादिभ्यः रत्नसञ्चयमाप ।। १८९ ।।

**वाहुयुद्धेन शेषं च गरुडं च महाबलम् ।**
**[2]क्रीडमानौ विनिर्जित्य भूषणान्याप तोषतः ।**
**ताभ्यां च दृढमाश्लिष्टः स्नेहविक्लिन्नया धिया ।।१९०।।**

**सत्याभिनवीया–** तत्रैव 'वाहुयुद्धेन शेषं च..' इति श्लोकः । तस्यार्थः- भीमः वाहुयुद्धेन क्रीडमानौ क्रीडमानं महावलं शेषं च गरुडं च विनिर्जित्य, तोषतः तोषेण दत्तानि भूषणानि आपेति । एतेन शेषं गरुडमिति पदद्वयस्य द्वितीयैकवचनान्तत्वात् क्रीडमानमिति वक्तव्यम् । क्रीडमानौ इति कथनमनुपपन्नमिति दूषणं परिहृतम् । क्रीडमानमिति द्वितीयैकवचनस्य क्रीडमानाविति द्वितीयाद्विवचनादेश इत्यभ्युपगमात् । एतेनैव तोषतो दत्तानिति वक्तव्यम् । तद्भावात् न्यूनतेति शङ्कानवकाशः । दत्तानीत्यस्य शेष इत्यङ्गीकारात् ।। १९०-१९१ ।।

---

१. 'रत्नसञ्चयान्' इति जनार्दनीयपाठः ।

२. 'क्रीडमानो' इति वरदराजीय-चट्टीपाठः ।

**वरदराजीया–** 'क्रीडमानः' इत्यनेन शेषगरुडाभ्यां सह क्रीडयैव बाहुयुद्धमिति दर्शयति । तोषतः सन्तोषतः ताभ्यां भूषणान्याप । ताभ्यां शेषगरुडाभ्याम् । स्नेहविक्लिन्नया स्नेहार्द्रया ।। १९० ।।

**अनन्तभट्टीया–** तोषतः, शेषगरुडयोरिति शेषः ।। १९० ।।

**जनार्दनीया–** बाहुयुद्धेन क्रीडमानौ शेष च गरुडं च विनिर्जित्य, तोषतः सन्तोषात्, शेषगरुडयोरिति शेषः । ताभ्यां शेषगरुडाभ्यां भूषणानि आप । ताभ्यां च शेषगरुडाभ्यां च विक्लिन्नया आर्द्रया आश्लिष्टः आलिङ्गितः सन् ।।१९०।।

**चट्टि–** महाबलं शेषं च गरुडं च क्रीडमानः सन् बाहुयुद्धेन निर्जित्य, ताभ्यां शेषगरुडाभ्यां तोषतः सन्तोषात् भूषाणानि चाप । ताभ्यां शेषगरुडाभ्यां स्नेहविक्लिन्नया धिया दृढमाश्लिष्ट आलिङ्गितः सन्।।१९०

**पोप्लूयमानः स ततोऽम्बुधौ बली जगाम बाणस्य पुरं हरं च ।**
**रणेऽजयद् वारणरूपमास्थितं क्रीडन्तमेतेन च तोषितो हरः ।।१९१।।**

**वरदराजीया–** स भीमस्ततोऽनन्तरं अम्बुधौ पोप्लूयमानः सम्यक् प्लवन् बाणस्यासुरस्य पुरं जगाम । तत्र वारणरूपं गजरूपमास्थितं हरं तं क्रीडन्तमित्यनेन क्रीडयैव युद्धमित्याह । एतेन सः हरस्तोषितस्तोषं प्रापितः ।। १९१ ।।

**अनन्तभट्टीया–** ततः बली सः अम्बुधौ पोप्लूयमान इति सम्बन्धः । वारुणरूपमास्थितं हरं क्रीडन्तमित्यनेन शिवः क्रीडार्थं युद्धं चकारेति सूचितम् । एतेन युद्धेन तोषितः तुष्ट इत्यर्थः ।। १९१ ।।

**जनार्दनीया–** ततोऽम्बुधौ पोप्लूयमानः बाहुभ्यां प्लवन्नित्यर्थः । अत एव बली स भीमः बाणस्य बाणनाम्नोऽसुरस्य पुरं पुरीं जगाम च । अत्र बाणपुरे वारणरूपं हस्तिस्वरूपमास्थितं प्राप्तं क्रीडन्तं क्रीडार्थं युध्यन्तमित्यर्थः । हरं अजयत् । एतेन भीमकृतयुद्धेन हरः तोषितः सन्तोषं प्रापितः ।। १९१ ।।

**चट्टि–** ततः अम्बुधौ पोप्लूयमानः बाहुभ्यां प्लवन्नित्यर्थः । अत एव बली सः भीमः बाणस्य बाणनाम्नोऽसुरस्य पुरं जगाम । अत्र बाणपुरे वारणरूपं गजरूपमास्थितं प्राप्तं क्रीडन्तं क्रीडार्थं युध्यन्तमित्यर्थः । हरं च रणे अजयत् । एतेन भीमकृतेन युद्धेन हरस्तोषितस्तोषं प्रापितश्च ।। १९१ ।।

**पृष्टश्च गिरिशेनासौ [1]विस्तरं दिग्जयस्य च ।**
**सिंहव्याघ्रादिरूपाश्च आत्मना विजिता यथा ।**
**गरुत्मच्छेषशक्राद्या देवाः सर्वे तदब्रवीत् ।।१९२।।**

---

१. 'विस्तारम्' इति वरदराजीयपाठः ।

**जनार्दनीया—** क्रमेण सर्वान् पूर्वादिदिशि संस्थितान् नृपान् निर्जित्य जित्वा, तथा महावलं पौण्ड्रकं च विनिर्जित्य, तथा महावलं कर्णं विरथीकृत्य, सर्वतः सर्वेभ्यः करमादाय ।।१८८।।

**चट्टि—** भीमः क्रमेण सर्वान् पूर्वदिशि स्थितान् नृपान् निर्जित्य जित्वा, तथा महावलं पौण्ड्रकं च निर्जित्य, तथा महावलं कर्णं च विरथीकृत्य सर्वतः दशार्णाधिपसुधर्मादिसर्वनृपेभ्यः करमादाय ।।१८८।।

**हिमवच्छिखरे देवान् जित्वा शक्रपुरोगमान् ।**
**क्रीडार्थं युध्यतस्तेभ्यस्तुष्टेभ्यो [१]रत्नसञ्चयम् ।।१८९।।**

**वेदाङ्गतीर्थीया—** युध्यतः युद्धं कुर्वाणान् देवान् ।। १८९-१९९ ।।

**वरदराजीया—** हिमवतः पर्वतस्य शिखरे क्रीडार्थं भीम इति परिज्ञानात् क्रीडार्थमेव युध्यतः युद्धं कुर्वाणान् शक्रपुरोगमान् देवान् जित्वा तेभ्यः शक्रादिभ्यः तुष्टेभ्यः तोषं प्राप्तेभ्यः रत्नसञ्चयं समादायेति सम्बन्धः ।। १८९ ।।

**अनन्तभट्टीया—** क्रीडार्थं युध्यतः अस्य भीमत्वपरिज्ञानादिति भावः ।। १८९ ।।

**जनार्दनीया—** क्रीडार्थं अयं भीम इति ज्ञात्वा तद्बलप्रकाशार्थम् । युध्यतः युद्धं कुर्वाणान् देवान् । तुष्टेभ्यः भीमवलम्, दृष्ट्वेति शेषः । तेभ्यः शक्रादिभ्यः रत्नसञ्चयान् रत्नसमूहानाप ।। १८९ ।।

**चट्टि—** हिमवतः हिमवत्पर्वतस्य तस्य शिखरे क्रीडार्थमयं भीम इति ज्ञात्वा तद्बलप्रकाशार्थं युध्यतः युद्धं कुर्वाणान् शक्रपुरोगमान् देवान् जित्वा तुष्टेभ्यः भीमवलम्, दृष्ट्वेति शेषः । तेभ्यः शक्रादिभ्यः रत्नसञ्चयमाप ।। १८९ ।।

**बाहुयुद्धेन शेषं च गरुडं च महाबलम् ।**
**[२]क्रीडमानौ विनिर्जित्य भूषणान्याप तोषतः ।**
**ताभ्यां च दृढमाश्लिष्टः स्नेहविक्लिन्नया धिया ।।१९०।।**

**सत्याभिनवीया—** तत्रैव 'वाहुयुद्धेन शेषं च..' इति श्लोकः । तस्यार्थः- भीमः वाहुयुद्धेन क्रीडमानौ क्रीडमानं महावलं शेषं च गरुडं च विनिर्जित्य, तोषतः तोषेण दत्तानि भूषणानि आपेति । एतेन शेषं गरुडमिति पदद्वयस्य द्वितीयैकवचनान्तत्वात् क्रीडमानमिति वक्तव्यम् । क्रीडमानौ इति कथनमनुपपन्नमिति दूषणं परिहृतम् । क्रीडमानमिति द्वितीयैकवचनस्य क्रीडमानाविति द्वितीयाद्विवचनादेश इत्यभ्युपगमात् । एतेनैव तोषतो दत्तानिति वक्तव्यम् । तद्भावात् न्यूनतेति शङ्कानवकाशः । दत्तानीत्यस्य शेष इत्यङ्गीकारात् ।। १९०-१९१ ।।

---

१. 'रत्नसञ्चयान्' इति जनार्दनीयपाठः ।

२. 'क्रीडमानो' इति वरदराजीय-चट्टीपाठः ।

**वरदराजीया–** 'क्रीडमानः' इत्यनेन शेषगरुडाभ्यां सह क्रीडयैव वाहुयुद्धमिति दर्शयति । तोषतः सन्तोषतः ताभ्यां भूषणान्याप । ताभ्यां शेषगरुडाभ्याम् । स्नेहविक्लिन्नया स्नेहार्द्रया ।। १९० ।।

**अनन्तभट्टीया–** तोषतः, शेषगरुडयोरिति शेषः ।। १९० ।।

**जनार्दनीया–** वाहुयुद्धेन क्रीडमानौ शेषं च गरुडं च विनिर्जित्य, तोषतः सन्तोषात्, शेषगरुडयोरिति शेषः । ताभ्यां शेषगरुडाभ्यां भूषणानि आप । ताभ्यां च शेषगरुडाभ्यां च विक्लिन्नया आर्द्रया आश्लिष्टः आलिङ्गितः सन् ।।१९०।।

**चट्टि–** महावलं शेषं च गरुडं च क्रीडमानः सन् वाहुयुद्धेन निर्जित्य, ताभ्यां शेषगरुडाभ्यां तोषतः सन्तोषात् भूषाणानि चाप । ताभ्यां शेषगरुडाभ्यां स्नेहविक्लिन्नया धिया दृढमाश्लिष्ट आलिङ्गितः सन्।।१९०

**पोप्लूयमानः स ततोऽम्बुधौ बली जगाम बाणस्य पुरं हरं च ।**
**रणेऽजयद् वारणरूपमास्थितं क्रीडन्तमेतेन च तोषितो हरः ।।१९१।।**

**वरदराजीया–** स भीमस्ततोऽनन्तरं अम्वुधौ पोप्लूयमानः सम्यक् प्लवन् वाणस्यासुरस्य पुरं जगाम । तत्र वारणरूपं गजरूपमास्थितं हरं तं क्रीडन्तमित्यनेन क्रीडयैव युद्धमित्याह । एतेन सः हरस्तोषितस्तोषं प्रापितः ।। १९१ ।।

**अनन्तभट्टीया–** ततः वली सः अम्वुधौ पोप्लूयमान इति सम्वन्धः । वारुणरूपमास्थितं हरं क्रीडन्तमित्यनेन शिवः क्रीडार्थं युद्धं चकारेति सूचितम् । एतेन युद्धेन तोषितः तुष्ट इत्यर्थः ।। १९१ ।।

**जनार्दनीया–** ततोऽम्वुधौ पोप्लूयमानः वाहुभ्यां प्लवन्नित्यर्थः । अत एव वली स भीमः वाणस्य वाणनाम्नोऽसुरस्य पुरं पुरीं जगाम च । अत्र वाणपुरे वारणरूपं हस्तिस्वरूपमास्थितं प्राप्तं क्रीडन्तं क्रीडार्थं युध्यन्तमित्यर्थः । हरं अजयत् । एतेन भीमकृतयुद्धेन हरः तोषितः सन्तोषं प्रापितः ।। १९१ ।।

**चट्टि–** ततः अम्वुधौ पोप्लूयमानः वाहुभ्यां प्लवन्नित्यर्थः । अत एव वली सः भीमः वाणस्य वाणनाम्नोऽसुरस्य पुरं जगाम । अत्र वाणपुरे वारणरूपं गजरूपमास्थितं प्राप्तं क्रीडन्तं क्रीडार्थं युध्यन्तमित्यर्थः । हरं च रणे अजयत् । एतेन भीमकृतेन युद्धेन हरस्तोषितस्तोषं प्रापितश्च ।। १९१ ।।

**पृष्टश्च गिरिशेनासौ [१]विस्तरं दिग्जयस्य च ।**
**सिंहव्याघ्रादिरूपाश्च आत्मना विजिता यथा ।**
**गरुत्मच्छेषशक्राद्या देवाः सर्वे तदब्रवीत् ।।१९२।।**

---

१. 'विस्तारम्' इति वरदराजीयपाठः ।

**सत्याभिनवीया–** तत्रैव 'सिंहव्याघ्रादिरूपाश्च आत्मना..' इति श्लोकः । तस्यार्थः- भीमः आत्मना सिंहव्याघ्रादिरूपाः गरुत्मच्छेषशक्राद्याः सर्वे देवाः यथा विजिताः तच्च तथैव दिग्विजयस्य विस्तरं अब्रवीदिति । एतेन यथेत्युक्तत्वात् तथेति वक्तव्यम् । तदिति कथनमयुक्तमिति चोद्यं परास्तम् । तदित्यव्ययं तथेत्यर्थे वर्तते इति स्वीकरणात् ।। १९२-१९४ ।।

**वरदराजीया–** असौ भीमः दिग्विजयस्य विस्तारं पृष्टः सन् सिंहव्याघ्रादिरूपाः गरुत्मच्छेषशक्राद्याः सर्वे देवाः आत्मना यथा विजिताः तत्सर्वमब्रवीत् ।। १९२ ।।

**अनन्तभट्टीया–** असौ दिग्विजयस्य विस्तरं पृष्टः सन् सिंहव्याघ्रादिरूपाः गरुत्मच्छेषशक्राद्याः सर्वे देवा आत्मना यथा विजिताः तत्सर्वमब्रवीत् ।। १९२ ।।

**जनार्दनीया–** दिग्जयस्य दिशां विजयस्य विस्तरं विस्तारकरणमित्यर्थः । पृष्टोऽसौ भीमः सिंहव्याघ्रादिरूपाः देवाः यथात्मना निर्जितास्तदब्रवीत् ।। १९२ ।।

**चट्टि–** दिग्जयस्य दिशां विजयस्य विस्तरं विस्तारं करणमित्यर्थः । गिरिशेन पृष्टोऽसौ भीमः सिंहव्याघ्रादिरूपाः गरुत्मच्छेषशक्राद्याः सर्वे देवाश्च आत्मना यथा जिताः तच्चाब्रवीत् ।। १९२ ।।

**निशम्य शङ्करोऽखिलं मखस्य च प्रसाधकम् ।**
**हरिं ततो बलेः सुताद् [1]ददौ च रत्नसञ्चयम् ।।१९३।।**

**व्यासतीर्थीया–** बलेः सुतादादाय ।। १९३-१९९ ।।

**वरदराजीया–** शङ्करोऽखिलं राजसूयस्य प्रसाधकं हरिं निशम्य बलेः सुतात् बाणासुरात् रत्नसञ्चयं गृहीत्वा ददावित्यर्थः ।। १९३ ।।

**अनन्तभट्टीया–** बलेः सुतात् रत्नसञ्चयम्, आदायेति शेषः ।। १९३-१९४ ।।

**जनार्दनीया–** शङ्करोऽखिलं भीमोक्तं निशम्य, मखस्य प्रसाधकं प्रकृष्टकारणं हरिं कृष्णं श्रीवेदव्यासं च, ज्ञात्वेति शेषः । ततः बलेः सुतात् बाणात् रत्नसञ्चयं ददौ, आदायेति शेषः ।। १९३ ।।

**चट्टि–** शङ्करः अखिलं भीमोक्तं निशम्य मखस्य राजसूययज्ञस्य प्रसाधकं प्रकृष्टकारणं हरिं श्रीकृष्णं वेदव्यासं वा, ज्ञात्वेति शेषः । बलेः सुतात् ततः बाणासुरात् सुदिव्यरत्नसञ्चयं, आदायेति शेषः ।।१९३।।

**स बाणदैत्यतो महच्छिवेन दत्तमुत्तमम् ।**
**प्रगृह्य रत्नसञ्चयं स्वकं पुरं समाययौ ।।१९४।।**

**वरदराजीया–** स भीमः शिवेन दत्तं दापितं बाणदैत्यतः प्रगृह्य स्वकं पुरमिन्द्रप्रस्थाख्यम् ।। १९४ ।।

---

१. 'सुदिव्यरत्नसञ्चयम्' इति चट्टीपाठः ।

**जनार्दनीया–** स भीमः वाणदैत्यतः शिवेन दत्तम्, अदायेति शेषः । रत्नसञ्चयं प्रगृह्य ।। १९४ ।।

**चट्टि–** शिवेन दत्तं उत्तमं महद् अधिकं रत्नसञ्चयं वाणदैत्यतः प्रगृह्य स्वकं पुरं समाययौ ।। १९४ ।।

**स विप्रयादवेश्वरं द्विधा स्थितं जनार्दनम् ।**
**पुरो निधाय तद् वसु प्रभूतमानमत् तदा ।।१९५।।**

**वादिराजतीर्थीया–** 'स विप्रयादवेश्वरम्' इत्यत्र प्रभूतं वसु पुरो निधाय विप्रयादवेश्वरं जनार्दनं आनमदिति सम्वन्धः।। १९५-२०२ ।।

**सत्याभिनवीया–** तत्रैव 'स विप्रयादवेश्वरं द्विधा..' इति श्लोके भीमेन आगमनोत्तरक्षण एव वहुवसु-समर्पणं कृत्वा द्विरूपजनार्दननमस्कारः कृत इति ज्ञापनार्थं तदा इत्युक्तम् । एतेन आगमनोत्तरक्षण एवेति वक्तव्यम् । तदेति कथनमनुपपन्नमिति दूषणं निरस्तम् । तदेत्यस्य आगमनकाले एवेत्यर्थमनङ्गीकृत्य आगमनोत्तरक्षण एवेत्यर्थे तात्पर्यमित्यभ्युपगमात् ।। १९५ ।।

**वरदराजीया–** स भीमो विप्रयादवेश्वरम् । व्यासः कृष्णश्चेति द्विधा स्थितं जनार्दनमानम्येत्यर्थः । किं कृत्वा? प्रभूतं समग्रं तद्वसु रत्नसञ्चयादिरूपं पुरतो निधायेत्यर्थः ।। १९५ ।।

**अनन्तभट्टीया–** प्रभूतं समग्रं वसु ।। १९५ ।।

**जनार्दनीया–** स भीमः द्विधा द्विरूपेणेत्यर्थः । स्थितं विप्रयादवेश्वरं वेदव्यासकृष्णरूपं जनार्दनं आनमत् । किं कृत्वा? प्रभूतं समग्रं तद्वसु दिग्विजयार्जितद्रव्यं पुरो निधाय ।। १९५ ।।

**चट्टि–** सः भीमः द्विधारूपेणेत्यर्थः । स्थितं विप्रयादवेश्वरं श्रीवेदव्यासकृष्णरूपं जनार्दनं प्रभूतं समग्रं तद्वसु दिग्विजयार्जितं पुरः निधाय तदा आनमत् ।। १९५ ।।

**[1]सोऽभिवन्द्याग्रजं चैव यथावृत्तं न्यवेदयत् ।**
**आत्मनः कृष्णयोः सर्वं धर्मराजाग्रतो मुदा ।।१९६।।**

**वेदाङ्गतीर्थीया–** आत्मनो वृत्तं सर्वं यथास्थितं न्यवेदयत् ।। १९६ ।।

**सत्याभिनवीया–** तदनन्तरमेव 'सोऽभिवन्द्याग्रजं चैव..' इति श्लोकः । तस्यार्थः- सः भीमः अग्रजं अभिवन्द्य धर्मराजाग्रतः कृष्णयोश्च अग्रतः आत्मनो वृत्तं यथा जातमभूत् तथैव सर्वं वृत्तं मुदा न्यवेदयदिति । एतेन एवकारो व्यर्थ इति दूषणं निरस्तम् । एवकारस्य अध्याहतेन तथेत्यनेनान्वयमङ्गीकृत्य अर्थस्योक्तत्वात् ।। १९६-१९७ ।।

---

१. 'सोऽभिवाद्याग्रजं' इति चट्टीपाठः ।

**वरदराजीया–** स भीमोऽग्रजं युधिष्ठिरं आत्मनो यथा तथा । कृष्णयोः व्यासयादवेश्वरयोः धर्मजाग्रतो मुदा सर्वं न्यवेदयत् ।। १९६ ।।

**अनन्तभट्टीया–** आत्मनो यथावृत्तम् ।। १९६ ।।

**जनार्दनीया–** स भीमः अग्रजं अभिवन्द्य, आत्मनः स्वस्य वृत्तं सर्वं यथा यथा स्थितं धर्मराजाग्रतः युधिष्ठिरस्य पुरः, कृष्णयोः वेदव्यासवसुदेवसून्वोः मुदा न्यवेदयत् ।। १९६ ।।

**चट्टि–** सः भीमः अग्रजं चैवाभिवाद्य अभिवन्द्य कृष्णयोः व्यासवसुदेवसून्वोः धर्मराजाग्रतः मुदा आत्मनः सर्वं वृत्तं यथा स्थितं न्यवेदयत् ।। १९६ ।।

**यथा जिताः कीचकाद्या एकलव्यसहायवान् ।**
**यथा जितः पौण्ड्रकश्च कर्णाद्याश्च तथाऽपरे ।।१९७।।**

**वेदाङ्गतीर्थीया–** उक्तमेव विवृणोति– **यथेत्यादिना** ।। एकलव्यसहायवान् पौण्ड्रकश्च।।१९७-१९९।।

**वरदराजीया–** कीचकाद्या यथा जिताः । एकलव्यः सहायोऽस्यास्तीति । स पौण्ड्रकश्च यथा जितः तथापरे कर्णाद्याश्च यथा जिताः ।। १९७ ।।

**अनन्तभट्टीया–** एकलव्यसहायवान् पौण्ड्रकः।। १९७-१९९ ।।

**जनार्दनीया–** उक्तमेव विवृणोति– **यथेत्यादिना** ।। एकलव्यसहायवान् पौण्ड्रकश्च यथा जितः । तथापरे कर्णाद्याः ।। १९७ ।।

**चट्टि–** उक्तमेव विवृणोति– **यथेत्यादिना** ।। कीचकाद्याः यथा जिताः, एकलव्यसहायवान् पौण्ड्रकश्च यथा जितः तथा अपरे कर्णाद्याश्च ।। १९७ ।।

**यथा सिंहादितनवः शेषवीन्द्रेन्द्रपूर्वकाः ।**
**यथा गजतनुः शर्वस्तच्च सर्वमवर्णयत् ।।१९८।।**

**सत्याभिनवीया–** तत्रैव 'यथा सिंहादितनवः शेषवीन्द्रेन्द्रपूर्वकाः' इति श्लोकः । तस्यार्थः- भीमः सिंहादितनवः शेषवीन्द्रेन्द्रपूर्वकाः यथा युद्धादिकं कृतवन्तः गजतनुः शर्वश्च यथा युद्धादिकं कृतवान् तथा तत्सर्वं युद्धादिकं सर्वं अवर्णयदिति एतेन युद्धादिकमित्यादेरभावात् न्यूनतेति शङ्कानवकाशः । युद्धादिकमित्यादेः शेष इत्यभ्युपगमात् ।। १९८-२०१ ।।

**वरदराजीया–** यथा च सिंहादितनवः शेषाद्या जिताः यथा गजतनुः शर्वो जितः तथा तत् सर्वम-वर्णयत् ।। १९८ ।।

**जनार्दनीया**—यथा सिंहादितनवः सिंहव्याघ्रवृकस्वरूपाः । तच्च सर्वं अवर्णयत् अब्रवीदित्यर्थः ।।१९८।।

**चट्टि**— यथा जिताः सिंहादितनवः सिंहव्याघ्रवृकस्वरूपाः शेषवीन्द्रेन्द्रपूर्वकाः यथा जिताः, गजतनुः शर्वश्च यथा जितः तथा च तत् सर्वं अवर्णयत् ।। १९८ ।।

**सम्भावितश्च कृष्णाभ्यां राज्ञा च सुमहाबलः ।**
**आज्ञया व्यासदेवस्य यज्ञाङ्गानि समार्जयत् ।।१९९।।**

**वरदराजीया**— महाबलो भीमः कृष्णादिभिः सम्भावितो मानितः व्यासदेवस्याज्ञया यज्ञाङ्गानि यज्ञसाधनानि ।। १९९ ।।

**जनार्दनीया**—सम्भावितः मानितः भीमः यज्ञाङ्गानि यज्ञस्य साधनानि समार्जयत् सम्पादयामास।।१९९।।

**चट्टि**— सुमहाबलः भीमः कृष्णाभ्यां राज्ञा च सम्भावितः मानितः सन् व्यासदेवस्याज्ञया यज्ञाङ्गानि यज्ञसाधनानि समार्जयत् सम्पादयामास ।। १९९ ।।

**ऊचे तं भगवान् व्यासो जितं सर्वं त्वयाऽरिहन् ।**
**जये सर्वस्य यज्ञोऽयं पूर्णो भवति नान्यथा ।।२००।।**

**व्यासतीर्थीया**— 'आज्ञया' इत्युक्तमादेशं प्रशंसापूर्वमाह— **ऊच इति** ।। २००-२०२ ।।

**वेदाङ्गतीर्थीया**— आत्मनियोगाद् भीमकृतं दिग्विजयं प्रशंसन्नेव यज्ञाङ्गसमार्जने तात्पर्यं द्योतयन् पुनरादिशदित्याह— **ऊच इति** ।। २००-२०२ ।।

**वरदराजीया**— तं भीमं त्वया सर्वं जगज्जितं सर्वजये सत्येव ।। २०० ।।

**अनन्तभट्टीया**— ।। **सर्वस्येति** ।। राजमण्डलस्येत्यर्थः ।। २००-२०३ ।।

**जनार्दनीया**— आत्माज्ञया भीमकृतं दिग्विजयं प्रशंसन्नेव यज्ञाङ्गसमार्जने तात्पर्यं द्योतयन् पुनरादिशदित्याह— **ऊच इति** ।। तं भीमं ऊचे । किमिति? हे अरिहन्! सर्वं राजमण्डलं जितम् । सर्वस्य राजमण्डलस्य जये सति अयं यज्ञः पूर्णो भवति । नान्यथा सर्वजयाभावे सति न भवतीत्यर्थः ।।२००।।

**चट्टि**— आत्मनियोगात् भीमकृतं दिग्विजयं प्रशंसन्नेव यज्ञाङ्गसमार्जने तात्पर्यं द्योतयन् पुनरादिशदित्याह— **ऊच इति** ।। भगवान् व्यासस्तं भीमं ऊचे । किमिति? हे अरिहन्! त्वया सर्वं जगज्जितं सर्वस्य जये सत्ययं यज्ञः पूर्णो भवति । अन्यथा न सर्वजयाभावे सति पूर्णो न भवति इत्यर्थः ।।२००।।

**विरिञ्चः सर्वजित् पूर्वं द्वितीयस्त्वमिहाभवः ।**
**इत्युक्त्वैनं समाश्लिष्य यज्ञाङ्गानि समादिशत् ।।२०१।।**

**वरदराजीया–** पूर्वं विरिञ्चः सर्वजिज्जातः । त्वं द्वितीयः सर्वजिदभवः ।। २०१ ।।

**जनार्दनीया–** पूर्वं विरिञ्चः सर्वजित् । इह अस्मिन् काले त्वं द्वितीयो अभवः । एनं भीमं यज्ञाङ्गानि यज्ञसाधनभूतपात्रादीनि समादिशत् आज्ञापयामास । तस्माद्वेदव्यासस्याज्ञया समार्जयदिति पूर्वेण सम्बन्धः ।। २०१ ।।

**चट्टि–** पूर्वं विरिञ्चः सर्वजित् इहास्मिन् काले त्वं द्वितीयः सर्वजित् अभवः । इत्युक्त्वा एनं भीमं समाश्लिष्य यज्ञाङ्गानि यज्ञसाधनभूतपात्रादीनि समादिशत् आज्ञापयामास । तस्य व्यासदेवस्य आज्ञया समार्जयदिति पूर्वेणान्वयः ।। २०१ ।।

> **तदैवान्ये दिशो जित्वा समीयुस्तस्य येऽनुजाः ।**
> **सहदेवो दक्षिणाशां जित्वा रत्नान्युपाहरत् ।।२०२।।**

**वरदराजीया–** एवं तस्यानुजास्तेऽपि दिशो जित्वा समीयुः । सङ्क्षिप्योक्त्वा विशदयति– **सहदेव इत्यादिना** ।। २०२ ।।

**जनार्दनीया–** तस्य भीमस्य । समीयुः, पुरमिति शेषः । तेषां दिग्विजयं विशदयति– **सहदेव इत्यादिना** ।। २०२ ।।

**चट्टि–** तस्य भीमस्य अन्ये येऽनुजाः तेऽपि तदैव दिशो जित्वा समीयुः, पुरमिति शेषः । संक्षिप्योक्तं तेषां दिग्विजयं विशदयति– **सहदेव इति** ।। सहदेवः दक्षिणाशां जित्वा रत्नान्युपाहरत् ।।२०२।।

> **तत्र रुक्मी न युयुधे सहदेवेन वीर्यवान् ।**
> **[1]जितः कृष्णेन पूर्वं यः शर्वादाप धनुर्वरम् ।।२०३।।**

**व्यासतीर्थीया–** रुक्मी सहदेवेन किमर्थं न युयुध इत्यतो निमित्तमाह– **जित इति** ।। धनुराप वरं चाप ।। २०३-२०४ ।।

**वेदाङ्गतीर्थीया–** तत्र तस्मिन् काले । 'न युयुधे' इत्यत्र कारणमाह– **जित इति** ।। २०३-२०४ ।।

---

१. 'यद्यप्यनुस्मरन् वैरं रुक्मी कृष्णावमानितः । व्यतरद् भागिनेयाय सुतां कुर्वन् स्वसुः प्रियम् । तदेवानुस्मरन् वैरं रुक्मी कृष्णावमानितः । तोषयामास तपसा श्रीशैलनिलयं हरम् ।। तपसाराधितो रुद्रो रुक्मिणा वरदर्षभः । वरेण च्छन्दयामास स च वव्रे दृढं धनुः । अजेयं शत्रुसङ्घानामभेद्यं त्रिदशैरपि । तथेति कार्मुकं दत्वा वाक्यं चोवाच शङ्करः । यदा विरुध्यसे विष्णौ तदेतत् कार्मुकं नृप । हित्वा तदा त्वा मामेव प्रतिपत्स्यति नान्यथा। इत्युक्त्वा कार्मुकं दत्वा शङ्करो न व्यदृश्यत । सोऽपि लब्धवरो राजा प्राप्य भोजकटं पुरम् ।। तेन चापेन सकलान् नृपान् प्रख्यातपौरुषान् । वशीचकार सङ्ग्रामे रुक्मी कृष्णमृते नृप ।। विगेद्धुं वासुदेवेन रुक्मी नैवाकरोन्मनः । धनुर्लोभात् महाराज न मैत्रीमप्यकल्पयाम् ।। यद्यप्यनुस्मरन् वैरं गिरिशस्य स्मरन् वचः ।।' इति भागवते-१०.७६.२२-३०

**वादिराजतीर्थीया–** 'तत्र रुक्मी' इत्यत्र तत्र दक्षिणाशायाम् । रुक्मी कुण्डिनपुरस्थो रुक्मी ॥ २०३-२१० ॥

**वरदराजीया–** तत्र दक्षिणस्यां दिशि वीर्यवानपि रुक्मी सहदेवेन सह न युयुधे युद्धं न कृतवान् । युद्धाकरणे निमित्तमाह– **जित इति** ॥ पूर्वं रुक्मिण्याहरणसमये कृष्णेन जितः ॥ २०३ ॥

**जनार्दनीया–** तत्र दक्षिणायां दिशि । 'न युयुधे' इत्यत्र कारणमाह– **जित इति** ॥ यः रुक्मी पूर्वं रुक्मिणीहरणकाले कृष्णेन जितः सन् रुक्मी तपसा तोषिताच्छर्वात् वरं धनुरुत्तमं धनुराप । वरं चापेति वा ॥ २०३ ॥

**ताम्रपर्णीया–** धनुराप वरं चाप ॥ २०३-२०६ ॥

**चट्टि–** तत्र दक्षिणस्यां दिशि वीर्यवानपि रुक्मी सहदेवेन न युयुधे युद्धं न कृतवान् । युद्धाकरणे कारणमाह– **जित इति** ॥ यः रुक्मी पूर्वं रुक्मिणीहरणकाले श्रीकृष्णेन जितः सन् । तपसा तोषिताच्छर्वात् वरमुत्तमं धनुराप वरं चापेति वा ॥ २०३ ॥

**तपसा तोषितात् कृष्णादन्यानेवामुनाऽखिलान् ।**
**विजेष्यसि यदा कृष्णविरोधस्ते तदा धनुः ।**
**मामेष्यतीति तेनोक्तो न व्यरुध्यत केशवे ॥२०४॥**

**वरदराजीया–** तपसा सन्तोषिताच्छर्वाद्धनुर्वरमाप । अमुना धनुषा कृष्णादन्यान् विजेष्यति । यदा ते कृष्णविरोधो भविष्यति तदा धनुः मामेष्यति इति तेन शङ्करेणोक्तो रुक्मी केशवेन न व्यरुध्यत विरोधं न कृतवान् ॥ २०४ ॥

**अनन्तभट्टीया–** तपसा तोषिताच्छर्वात् वरश्चाप । वरदाने शिवोक्तमाह– **कृष्णादिति** ॥ २०४ ॥

**जनार्दनीया–** वरदानसमये शर्वोऽप्याह– **कृष्णादिति** ॥ अमुना धनुषा कृष्णादखिलानन्यानेव विजेष्यसि । न तु कृष्णमिति भावः । यदा ते कृष्णविरोधः कृष्णेन सह विरोधो, भविष्यतीति शेषः । तदा धनुः मां एष्यति इति । तेन शङ्करेण उक्तो रुक्मी केशवे न व्यरुध्यत विरोधं न चकार ॥२०४॥

**चट्टि–** वरदानसमये शर्वोक्तमाह– **कृष्णादिति** ॥ अमुना धनुषा कृष्णादन्यानेवाखिलान् विजेष्यसि । न तु कृष्णमिति भावः । यदा ते श्रीकृष्णविरोधः कृष्णेन विरोधः, भविष्यतीति शेषः । तदा धनुर्मामेष्यतीति तेन शङ्करेणोक्तः रुक्मी केशवे श्रीकृष्णे न व्यरुध्यत विरोधं न चकार ॥ २०४ ॥

**[१]स्वसुः स्नेहाच्च कृष्णस्य यज्ञकारयितृत्वतः ।**
**भीमार्जुनबलाच्चैव माद्रेयाय ददौ करम् ।**
**जिग्ये बलेनान्यनृपान् सहदेवः प्रतापवान् ॥२०५॥**

**व्यासतीर्थीया–** एवं वरभावे कृष्णेन विरोधो न कार्यः । सहदेवेन विरोधाकरणे किं निमित्तमित्यत आह– **कृष्णस्येति** ॥ २०५ ॥

**वेदाङ्गतीर्थीया–** रुद्रवाक्यात् कृष्णविरोध एव हि त्याज्यः । सहदेवेन विरोधाकरणे किं निमित्तमित्यत आह– **कृष्णस्येति** ॥ २०५-२०६ ॥

**वरदराजीया–** स्वसुर्भगिन्याः रुक्मिण्याः स्नेहाच्च न व्यरुध्यत । उभयत्र हेतुः– **कृष्णस्येति** ॥ तथा भीमार्जुनभयादपि माद्रेयाय सहदेवाय करं रुक्मी ददावित्यर्थः । अन्यान् नृपान् बलेन जिग्ये ॥ २०५ ॥

**अनन्तभट्टीया–** सहदेवाय करदाने निमित्तमाह– **कृष्णस्येति** ॥ २०५ ॥

**जनार्दनीया–** केशवे विरोधाकरणे निमित्तान्तरमाह– **स्वसुरिति** ॥ सहदेवेन विरोधाकरणे किं निमित्तमित्यत आह– **कृष्णस्येति** ॥ कृष्णस्य यज्ञकारयितृत्वतः यज्ञं कारयतीति यज्ञकारयिता, तस्य भावः यज्ञकारयितृत्वम् । यज्ञकारयितृत्वहेतोरित्यर्थः । सहदेवाय करदाने निमित्तान्तरमाह– **भीमार्जुनबलादेव चेति** ॥ भीमार्जुनबलादपि । बलेन स्वाभाविकबलेन । अत एव प्रतापवान् ॥२०५॥

**चट्टि–** केशवे विरोधाकरणे निमित्तान्तरमाह– **स्वसुरिति** ॥ स्वसुर्भगिन्याः रुक्मिण्याः स्नेहाच्च न व्यरुध्यत । सहदेवेन विरोधाकरणे किं निमित्तमित्यत आह– **श्रीकृष्णस्येति** ॥ कृष्णस्य यज्ञकारयितृत्वतः यज्ञं कारयतीति यज्ञकारयिता तस्य भावः यज्ञकारयितृत्वं तस्मात् यज्ञकारयितृत्वतः । माद्रेयाय सहदेवाय करं ददौ । सहदेवकरदाने निमित्तान्तरमाह– **भीमार्जुनबलादिति** ॥ भीमार्जुनबलाच्चैव करं ददाविति सम्बन्धः । प्रतापवान् सहदेवः अन्यनृपान् बलेन स्वाभाविकबलेन जिग्ये ॥ २०५ ॥

**[२]तथा स्मृतं समागतं घटोत्कचं विभीषणे ।**
**समादिशद् ययौ च सोऽप्यसौ ददौ महाकरम् ॥२०६॥**

---

१. 'सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणं । राज्ञे भोजकटस्थाय महामात्राय धीमते ॥ भीष्मकाय स धर्मात्मा साक्षादिन्द्रसखाय वै । स चास्य प्रतिजग्राह ससुतः शासनं तदा ॥ प्रीतिपूर्वं महाराज वासुदेवमवेक्ष्य च ।' सभापर्वणि-३२.६४-६६.

२. स राक्षसपरीवारः तं प्रणम्याशु संस्थितः । घटोत्कचं महात्मानं राक्षसं घोरदर्शनम् ॥ तत्रस्थः प्रेषयामास पौलस्त्याय महात्मने । विभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः । स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् । तच्च कृष्णकृतं धीमान् अभ्यमन्यत स प्रभुः ॥ ततः सम्प्रेषयामास रत्नानि विविधानि च । चन्दनागरुकाष्ठानि दिव्यान्याभरणानि च । वासांसि च महार्हाणि मणींश्चैव महाधनान् ॥ सभापर्वणि-३२.७८-८२.

**व्यासतीर्थीया–** विभीषणो अशक्त्या करमदात् किमिति जिज्ञासायामाह–**सोऽपीति** ।। घटोत्कचस्य। शक्तोऽपीति ।।२०६ ।।

**वरदराजीया–** तथा स्वेन स्मृतं स्मरणमात्रेण समागतं घटोत्कचं विभीषणे विभीषणजयार्थं समादिशत् । सोऽपि घटोत्कचोऽपि । असौ विभीषणः महत्करम् ।।२०६।।

**अनन्तभट्टीया–** ।। **स्मृतमिति** ।। समागमने निमित्तम्– **सोऽपीति** ।। सोऽपि विभीषणोऽपि । अपिशब्दस्तस्य सामर्थ्यसूचने ।।२०६।।

**जनार्दनीया–** 'स्मृत्याभियान उभयोरपि सा प्रतिज्ञां तेषां विधाय' (ता.नि-१९.६४) इति पूर्वं हिडिम्ब्या यथा प्रतिज्ञा कृता तथा प्रतिज्ञानुसारेण स्मृतम्, सहदेवेनेति शेषः । समागतं सम्यक् हर्षेणागतम् । घटोत्कचं विभीषणे विभीषणजयविषये समादशित् । स घटोत्कचः ययौ । असावपि विभीषणोऽपि । अपिशब्दस्तत्पराक्रमसूचकः । महाकरं ददौ ।। २०६ ।।

**चट्टि–** 'स्मृत्याभियान उभयोरपि सा प्रतिज्ञां तेषां विधाय' इति हिडिम्ब्या पूर्वमुक्तत्वात्, तथा प्रतिज्ञानुसारेण स्मृतं समागतं सम्यक् हर्षेणागतं घटोत्कचं सहदेवः विभीषणे विभीषणविजये समादिशत् । स च घटोत्कचः ययौ । असौ विभीषणोऽपि अपिशब्दस्तत्पराक्रमसूचकः । महाकरं ददौ अददात् ।।२०६।।

**[1]पुरा हि राघवोदितं [2]तदस्य सोऽखिलं तदा ।**
**विचार्य केशवं च तं बलं च भीमपार्थयोः ।**
**दिवौकसश्च पाण्डवानवेत्य सोऽददात् करम् ।।२०७।।**

**व्यासतीर्थीया–** अस्य विभीषणस्य पुरा राघवोदितं हि तदखिलं विचार्य अदात्करमिति सम्बन्धः ।। २०७-२१३ ।।

---

१. 'विभीषणश्च धर्मात्मा कृष्णाज्ञां शिरसा दधत् । संस्मृत्य रामवचनं कृष्णाज्ञां पालयत् तदा ।। मन्दोदर्यै निवेद्याथ कृष्णरामप्रसादजम् । कृष्णं द्रष्टुं गमिष्यामि आज्ञापय नृपात्मजे । जगत्सारं रत्नजातं दशग्रीवेण रक्षितम् । आनीतं विबुधादींश्च जित्वा तच्च समृद्धिमत् । प्रेषयिष्यामि तत्सर्वं कृष्णप्रीत्यै नृपात्मजे । पश्यतोभयतः पादौ रत्नजैः पूरितैर्धनैः । इन्द्रप्रस्थं गत उत कृष्णश्चासौ महायशाः । राक्षसा यादवेन्द्रं तं द्रष्टुं गच्छाम माचिरम् ।। इति श्रुत्वा वचस्तस्य विस्मिता वाक्यमब्रवीत् । मानुषेभ्यः कथं राजन् करं दत्से वदस्व मे ।। विभीषण उवाच । पुरा रामेण कथितं ममाग्रे मयनन्दिनि । जन्म मे यादवे वंशे द्वापरे समुपस्थिते । साहाय्यं पाण्डवस्यार्थे करिष्यामि तदाव्रज । इन्द्रप्रस्थे महाबाहो दर्शनं ते करोम्यहम् ।।' इत्यादि पूनास्थ भण्डारकर प्राच्यसंशोधन द्वारा प्रकाशिते सभापर्वणि अपेण्डिक्स् भागे देशान्तरस्थकोशेषु एतानि वाक्यानि दृश्यन्ते । BORI. पृ-384.

२. 'यदस्य' इति वेदाङ्गतीर्थीयपाठः स्यात् ।

**वेदाङ्गतीर्थीया–** रामानुग्रहादजेयः सन् विभीषणः (कथं) करमदादित्यत आह– **पुरेति** ।। यत् करदानं अस्य विभीषणस्य राघवोदितं 'घटोत्कचे समागते करं देहि' इत्यादि राघवोदितम् । तदा घटोत्कचागमनसमये सः तदखिलम् अस्मरद्धि इति क्रियाध्याहारः ।। २०८-२१३ ।।

**वरदराजीया–** महाकरदाने निमित्तमाह– **पुरा हीति** ।। अस्य विभीषणस्य पुरा रामावतारे राघवेणोदितं तत्सर्वं तदा विचार्य स्मृत्वा तं कृष्णं व्यासं केशवं च विचार्य भीमपार्थयोर्बलं च विचार्य पाण्डवान् दिवौकसो देवा इति अवेत्य निश्चित्य स विभीषणः करमदात् ।। २०७ ।।

**अनन्तभट्टीया–** तस्य करदाने निमित्तमाह– **पुरा हीति** ।। अस्य विभीषणस्य । पुरा राघवोदितम् । हि सः बलवत्वेनातिप्रसिद्धः । प्रत्येकमित्यर्थः । सः विभीषणः ।। २०७-२१२ ।।

**जनार्दनीया–** राघवप्रसादेन जयी विभीषणः किमर्थं घटोत्कचाय महाकरं ददावित्यत आह– **पुरेति** ।। पुरा अस्य विभीषणस्य 'घटोत्कचे समागमे करं देहि' इत्यादि राघवोदितं यत् तत् अखिलं तदा घटोत्कचागमनकाले स विभीषणः अस्मरद्धीत्यध्याहारः । पुनः करदाने कारणत्रयं दर्शयति– **विचार्येति** ।। तं राघवं केशवं कृष्णमिति विचार्य ज्ञात्वेत्यर्थः । भीमपार्थयोः बलं विज्ञाय, पाण्डवान् दिवौकसः देवानवेत्य ज्ञात्वा च स विभीषणः करं ददौ ।।२०७।।

**ताम्रपर्णीया–** विभीषणोऽशक्त्या करमदात् किमिति जिज्ञासायामाह– **पुरेति** ।। अस्य विभीषणस्य पुरा राघवोदितं 'घटोत्कचे समागते करं देहि' इत्यादि तदखिलं स विभीषणः, अस्मरदिति शेषः । यद्वा स विभीषणः पुरा राघवोदितं तत्सर्वं तदा विचार्य संस्मृत्य तं कृष्णं व्यासं च केशवं विचार्यानुसन्धाय भीमपार्थयोर्बलं च विचार्य पाण्डवान् दिवौकसोऽवेत्य अस्य घटोकचस्य करमददात् । 'सोऽददात् करम्' इत्यत्र विद्यमानतच्छब्दस्य भीमसेनजः इत्यनेनान्वयः ।।२०७-२१३।।

**चट्टि–** राघवप्रसादेन जयी विभीषणः किमर्थं घटोत्कचाय करं ददवित्यत आह– **पुरेति** ।। पुरा श्रीरामावतारे अस्य विभीषणस्य राघवोदितं 'घटोत्कचे समागते सति करं देहि' इत्यादि राघवोदितं तदखिलं च तदा विचार्य स्मृत्वा तं श्रीरामं केशवं कृष्णमिति च विचार्य ज्ञात्वेत्यर्थः । भीमपार्थयोः वलं च विचार्य पाण्डवान् दिवौकसः देवानवेत्य ज्ञात्वा सः विभीषणः करमदात् ।। २०७ ।।

**महौघरत्नसञ्चयं स आप्य भीमसेनजः ।**
**ययौ च माद्रिनन्दनं स चाऽययौ स्वकं पुरम् ।।२०८।।**

**वरदराजीया–** स भीमसेनजो घटोत्कचो महौघसङ्ख्याकरत्नसञ्चयं च विभीषणादाप्य माद्रिनन्दनं सहदेवं ययौ । स च सहदेवः स्वकं पुरमाययौ ।। २०८ ।।

**जनार्दनीया–** सः आप्य लब्ध्वा, माद्रिनन्दनं सहदेवं ययौ प्राप । स च सहदेवः ।।२०८।।

**चट्टि—** सः भीमसेनजः घटोत्कचः महौघसङ्ख्याकरत्नसञ्चयं विभीषणादाप्य माद्रीनन्दनं सहदेवं ययौ प्राप । स च सहदेवः स्वकं पुरमाययौ ।। २०८ ।।

**नकुलः पश्चिमाशायां विजिग्येऽखिलभूभृतः ।**
**करमाप च वीरोऽसौ सौहार्ददिव मातुलात् ।**
**आययौ च महारत्नसञ्चयेन स्वकं पुरम् ।।२०९।।**

**वरदराजीया—** नकुलोऽखिलभूभृतः सर्वान्नृपान् विजिग्ये । केवलं सौहार्दात् निमित्तात् मातुलाच्छल्यात् करमाप च । महारत्नसञ्चयेन साकं पुरमाययौ ।। २०९ ।।

**जनार्दनीया—** वीरश्च वीरोऽपि असौ नकुलः सौहार्ददिव स्नेहादेव मातुलाच्छल्यात् करमाप । न तु पराक्रमादिति भावः । महारत्नसञ्चयेनोत्तमरत्नसमूहेन, सहित इति शेषः ।।२०९।।

**चट्टि—** नकुलः पश्चिमाशायामखिलभूभृतः विजिग्ये । वीरोऽप्यसौ नकुलः मातुलात् शल्यात् सौहार्दात् एव करमाप च । न तु पराक्रमादिति भावः । महारत्नसञ्चयेनोत्तमरत्नसमूहेन, सहितः इति शेषः । स्वकं पुरं चाऽययौ ।। २०९ ।।

**अर्जुनः कपिवरोच्छ्रितध्वजं स्यन्दनं समधिरुह्य गाण्डिवी ।**
**यात एव दिशमुत्तरां [१]यदा पार्वतेयकुनृपाः समाययुः ।।२१०।।**

**वरदराजीया—** कपिवरेणोच्छ्रितो ध्वजो यस्य स तथा । तथाभूतं स्यन्दनं रथं समधिरुह्य गाण्डिवी सन् उत्तरां दिशं यातः तदा पार्वतेयकुनृपास्तन्नाम्नो नृपाः समाययुः ।। २१० ।।

**जनार्दनीया—** कपिवरोच्छ्रितध्वजं कपिवरेण वानरश्रेष्ठेन हनूमता, उच्छ्रितः उन्नतः ध्वजो यस्मिन् तथा तत् स्यन्दनं रथम् । यदैव यातः तदैव पार्वतेयकुनृपाः पर्वतसम्बन्धिनः पार्वतेयाः, पार्वतेयाश्च ते कुत्सिताश्च ते नृपाश्चेति । पर्वते विद्यमानाः आभीरनिषादादिकुत्सितनृपा इत्यर्थः । न तु क्षत्रकुलोत्पन्नाः । समाययुः, युद्धार्थमिति शेषः ।। २१० ।।

**चट्टि—** अर्जुनः कपिवरेणोच्छ्रितः ध्वजो यस्मिन् तत् तथाभूतं स्यन्दनं रथं समधिरुह्य गाण्डिवी सन् यदा उत्तरां दिशं यातस्तदैव पार्वतेयाः नृपाः पर्वतसम्बन्धिनः पार्वतेयास्ते च ते कुत्सिताश्च ते नृपाश्च ते तथा । समाययुः ।। २१० ।।

---

१. 'तदा' इति वरदराजीयपाठः ।

**[1]त्रैगर्ताः [2]पार्वतेयाश्च सहिताः पाण्डुनन्दनम् ।**
**अभ्येत्य योधयामासुर्जानन्तस्तच्चिकीर्षितम् ॥२११॥**

**वादिराजतीर्थीया–** 'त्रैगर्ताः पार्वतेयाः' इत्यत्र पार्वतेयनृपाणां मध्ये त्रिगर्ताधिपतिः कश्चन राजा वर्तते ॥ २११-२१३ ॥

**वरदराजीया–** त्रैगर्तकगणाः पार्वतेयाश्च सहिताः सन्तः तस्यार्जुनस्य चिकीर्षितं जानन्तो योधयामासुः ॥ २२५ ॥

**जनार्दनीया–** त्रैगर्ताः त्रिगर्ताख्यगणाः । तच्चिकीर्षितं तस्य अर्जुनस्य कर्तुमिष्टं जानन्तः सन्तः ॥

**चट्टि–** त्रैगर्ताः त्रिगर्ताख्यगणाः पार्वतेयाश्च सहिताः सन्तः पाण्डुनन्दनमर्जुनं अभ्येत्य तस्यार्जुनस्य चिकीर्षितं कर्तुमिष्टं जानन्तः सन्तः योधयामासुः ॥ २११ ॥

**तान् विजित्य युगपत् स पाण्डवः सञ्जयन् क्रमश एव तां दिशम् ।**
**प्राव्रजच्च [3]भगदत्तमूर्जितं तेन चास्य समभून्महारणः ॥२१२॥**

**वरदराजीया–** स पाण्डवोऽर्जुनः युगपत् तान् पार्वतेयादीन् विजित्य तां उत्तरां दिशं क्रमशः एव सञ्जयन् भगदत्तं प्राव्रजत् । तेन भगदत्तेन अस्यार्जुनस्य ॥ २१२ ॥

**जनार्दनीया–** युगपत् सर्वान् एकदैव । तां दिशं उदीचीं दिशम् । ऊर्जितं बाहुबलादिनोत्कृष्टं भगदत्तं प्राव्रजत् प्राप । तेन भगदत्तेन । अस्यार्जुनस्य ॥२१२॥

**चट्टि–** सः पाण्डवः अर्जुनस्तान् युगपद्विजित्य तामुत्तराशां दिशं क्रमश एव सञ्जयन्नूर्जितं बाहुबलादिना उत्कृष्टं भगदत्तं च प्राव्रजत् । तेन भगदत्तेन अस्य अर्जुनस्य महारणः समभूत् ॥ २१२ ॥

**सोऽभियुध्य सगजो दिनाष्टकं श्रान्त आह पुरुहूतनन्दनम् ।**
**ब्रूहि ते समरकारणं त्विति प्राह देहि करमित्यथार्जुनः ॥२१३॥**

---

१. 'ततस्त्रिगर्ताः कौन्तेयं दार्वाः कोकनदास्तथा । अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः ॥' सभापर्वणि-२८.१८.

२. 'विजित्य पर्वतान् सर्वान्' सभापर्वणि-२८.४.

३. 'तत्र राजा महानासीद्भगदत्तो विशांपते । तेनासीत्सुमहद्युद्धं पाण्डवस्य महात्मनः ॥ स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् । अन्यैश्च बहुभिर्योधैः सागरानूपवासिभिः । ततः स दिवसानष्टौ योधयित्वा धनञ्जयम् । उपपन्नं महाबाहो त्वयि कौरवनन्दन ॥ पाकशासनदायादे वीर्यमाहवशोभिनि । अहं सखा महेन्द्रस्य शक्रादनवरो रणे । न शक्ष्यामि च ते तात स्थातुं प्रमुखतो युधि ॥ त्वमीप्सितं पाण्डवेय ब्रूहि किं करवाणि ते । यद्वक्ष्यसि महाबाहो तत्करिष्यामि पुत्रक ॥' सभापर्वणि- २७.१७-२२.

**वरदराजीया–** सगजः सुप्रतीकेन गजेन सह वर्तमानः दिनाष्टकमभियुध्य श्रान्तः सन्नाह । किमिति? समरस्य युद्धस्य कारणं ब्रूहीति । करं देहीत्यर्जुनः प्राह ।। २१३ ।।

**अनन्तभट्टीया–** सगजः गजसहितः ।। २१३ ।।

**जनार्दनीया–** सगजः सुप्रतीकाख्यगजसहितः स भगदत्तः श्रान्तः सन्नाह । किमिति? ते तव समरकारणं युद्धकारणं ब्रूहि । इत्याहेति सम्बन्धः । अथार्जुनः तु विशेषेण करं देहीति प्राह ।।२१३।।

**चट्टि–** सः भगदत्तः सगजः सुप्रतीकेन गजेन सहितः सन् दिनाष्टकमभियुध्य श्रान्तः सन् पुरुहूतस्येन्द्रस्य नन्दनमर्जुनं प्रति ते समरस्य युद्धस्य कारणं ब्रूहीत्याह । अथार्जुनः करं देहीति प्राह ।। २१३ ।।

**सोऽप्यदात् करममुष्य वासवो मद्गुरुस्तव पितेति सादरम् ।**
**नैव जेतुमिह शक्ष्यसि त्वमित्यावदद्धरिवरास्त्रतेजसा ।।२१४।।**

**व्यासतीर्थीया–** हरेर्नारायणास्त्रतेजसा ।। २१४-२२२ ।।

**वेदाङ्गतीर्थीया–** हरिवरास्त्रतेजसा श्रीवराहदत्तवैष्णवास्त्रतेजसेति भावः ।। २१४-२१५ ।।

**वादिराजतीर्थीया–** 'हरिवरास्त्रतेजसा' इत्यत्र हरेः नारायणस्य वरास्त्रं श्रेष्ठास्त्रम् । वराहदत्तवैष्णवास्त्रतेजसेत्यर्थः ।। २१४ ।।

**वरदराजीया–** सोऽपि भगदत्तोऽपि तव पिता वासवो मद्गुरुरित्युक्त्वा, सादरममुष्यार्जुनस्य करमदात् । त्वां जित्वा गृहीत्वा करं ग्रहीष्यामीति चेत् तत्राह– **नैवेति** ।। मां जेतुं नैव शक्ष्यसि शक्तो न भवसीत्यवदत् । केन हेतुना? हरेर्वराहस्य वरास्त्रतेजसा सामर्थ्येनेत्यर्थः ।। २१४ ।।

**अनन्तभट्टीया–** तव पिता मद्गुरुः । हरेः वराहस्य वरास्त्रतेजसा ।। २१४-२१५ ।।

**जनार्दनीया–** सोऽपि भगदत्तोऽपि तव पिता वासवः मद्गुरुः, इत्यर्जुनं प्रत्युक्त्वेति शेषः । सादरं प्रीतिपूर्वकं अमुष्य करमदात् । 'पितुः शिष्यो ह्यात्मशिष्यः' (ता.नि-१९.२३) इति वचनात् अर्जुनोऽपि मद्गुरुरित्यभिप्रायेण करं ददाविति भावः । इह अस्त्रे विद्यमानसमये त्वं हरिवरास्त्रतेजसा नरकाय श्रीवराहदत्तोत्तमास्त्रतेजसा जेतुं नैव शक्ष्यसि न शक्तोऽसि, मामिति शेषः । इत्यवदत् ।।२१४।।

**ताम्रपर्णीया–** हरिवरास्त्रतेजसा श्रीवराहदत्तवैष्णवास्त्रतेजसेत्यर्थः ।।२१४-२१६।।

**चट्टि–** सोऽपि भगदत्तोऽपि तव पिता वासवः मद्गुरुः, इत्युक्त्वेति शेषः । सादरं प्रीतिपूर्वकं अमुष्य अर्जुनस्य करमदात् । 'पितुः शिष्यो ह्यात्मशिष्यः' इति वचनात् । अर्जुनोऽपि मद्गुरुरित्यभिप्रायेण करमदादिति भावः । त्वां जित्वा करं ग्रहिष्यामीति चेत् तत्राह– **नैवेति** ।। इह अस्मिन् समये त्वं हरिवरास्त्रतेजसा नरकाय श्रीवराहात् दत्तमस्त्रतेजसा, मामिति शेषः । जेतुं नैव शक्ष्यसि शक्तो न भवसीत्यवदत् ।। २१४ ।।

**स्नेहपूर्वं प्रदत्ते तु करे नैवाऽह चोत्तरम् ।**
**अर्जुनो व्यर्थकलहमनिच्छन् स्नेहयन्त्रितः ॥२१५॥**

**वादिराजतीर्थीया–** 'नैवाह चोत्तरम्' इत्यत्र त्वं न शक्ष्यसीति धिकृतेऽपि उत्तरं प्रत्युत्तरं नैवाह ॥

**वरदराजीया–** स्नेहपूर्वकं करे प्रदत्ते तु उत्तरं परिहाररूपं नैवाह अर्जुनः । कुतः? व्यर्थकलहमनिच्छन् स्नेहेन यन्त्रितश्चेत्यर्थः ॥ २१५ ॥

**जनार्दनीया–** उत्तरं तर्हि परीक्षणं कुर्वित्युत्तरं नैवाह । कथम्भूतः? व्यर्थकलहं अनिच्छन् करः प्राप्तः कलहेन किं प्रयोजनमित्यभिप्रायवानित्यर्थः । तर्हि स्वापकर्षं श्रुत्वा, कथं तूष्णीं स्थित इत्यत आह– **स्नेहेति** ॥ स्नेहयन्त्रितः स्नेहवद्धः ॥ २१५ ॥

**चट्टि–** स्नेहपूर्वं, भगवत्तेनेति शेषः । करे प्रदत्ते सत्यर्जुनः व्यर्थकलहमनिच्छन्, उत्तरं तर्हि परीक्षणं कुर्वित्युत्तरं च नैवाह । तर्हि स्वापकर्षं श्रुत्वा कथं तूष्णीं स्थित इत्यत आह– **स्नेहेनेति** ॥ स्नेहेन यन्त्रितः प्रेरितः सन् नैवाहेति पूर्वेण सम्बन्धः ॥ २१५ ॥

**पार्थो [१]जित्वाऽष्टवर्षाणि षड् द्वीपानपरानपि[२] ।**
**अजयच्चतुर्दिशमपि सर्वशः शस्त्रतेजसा ॥२१६॥**

---

१. सभा.२९. स श्वेतपर्वतं वीरः समतिक्रम्य वीर्यवान् । देशं किंपुरुषावासं द्रुमपुत्रेण रक्षितम् ॥ ..अजयत् पाण्डवश्रेष्ठः करे चैनं न्यवेशयत् ॥१-२॥ तं जित्वा हाटकं नाम देशं गुह्यकरक्षितम् । ..तांस्तु सान्त्वेन निर्जित्य.. ॥३-४॥ गन्धर्वरक्षितं देशमजयत् पाण्डवस्ततः ॥५॥ हरिवर्षं विवेशाथ सैन्येन महता वृतः । ..वशे चक्रे स रत्नानि लेभे च सुवहूनि च ॥१०॥ विवेश मध्यमं वर्षं पार्थो दिव्यमिलावृतम् । ..दृष्ट्वा तानजयद्रम्यान् स तैश्च ददृशे तदा ॥१२,१४॥ स ददर्श ततो मेरुं शिखरीणां प्रभुं महत् ॥१६॥ तत्र लेभे ततो जिष्णुः सिद्धैः दिव्यैश्च चारणैः । रत्नानि वहुसाहस्रं दत्तान्याभरणानि च ॥२६॥ तथा जम्बूनदीतीरस्थैः करमाप इति ३५-३६ श्लोकं । गन्धमादनमासाद्य ततस्तानजयत् प्रभुः ॥३८॥ केतुमालं ददर्शाथ वर्षं रत्नसमन्वितम् । ..तं जित्वा चार्जुनो राजन् करं च विनिवेश्यच ॥३९-४०॥ भद्राश्वं प्रविवेशाथ वर्षं स्वर्गोपमं शुचिम् । ..जित्वा तान् स्ववशे कृत्वा करे च विनिवेश्य च ॥ नीलं नाम गिरिं गत्वा तत्रस्थानजयत् प्रभुः ॥४८॥ विवेश रम्यकं वर्षं सङ्कीर्णं मिथुनैः शुभैः । तं देशमथ जित्वा स करं च विनिवेश्य च ॥४९॥ वर्षं हिरण्यवतं नाम विवेशाथ महीपते ॥५३॥ रत्नैः विभूषणैश्चैव अभ्यवर्षंश्च पाण्डवम् । अथ जित्वा समस्तांस्तान् करं च विनिवेश्य च ॥६१॥ उत्तरं हरिवर्षं तु स समासाद्य पाण्डवः । विद्याधरगणांश्चैव यक्षेन्द्रांश्च विनिर्जयन् ॥६४॥ उत्तराः कुरवो ह्येते नात्र युद्धं प्रवर्तते ॥७०॥ ..ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च । क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम् ॥७५॥ तथैव सभापर्वणि-७९. उपागृह्णद्यमिन्द्राय पुराकल्पे प्रजापतिः । तमस्मै शङ्खमाहार्षीद् वारुणं कलशोदधेः । शैक्यं निष्कसहस्रेण सुकृतं विश्वकर्मणा । तेनाभिषिक्तः कृष्णेन तत्र मे कश्मलोऽभवत् ॥१४-१६॥ इति वरुणेन निष्कसहस्रसहितशङ्खसमर्पणमुक्तम् ।

२. 'द्वीपानितरानपि' इति वेदाङ्गतीर्थीयपाठः ।

**वेदाङ्गतीर्थीया–** अष्टवर्षाणि जम्बूद्वीपगताष्टखण्डान् । इतरान् जम्बूद्वीपेतरान् षड्द्वीपानपि । सर्वशोऽपि चतुर्दिशं चतसृभिर्दिग्भिर्युतं यथा भवति तथा अजयत् । जम्बूद्वीपगताष्टवर्षापेक्षया प्राक् 'सप्तद्वीपांश्च प्रयाहि' इत्युक्तम् ।। २१६ ।।

**वादिराजतीर्थीया–** 'पार्थो जित्वाऽष्टवर्षाणि' इत्यत्र अष्टवर्षाणि भारतवर्षव्यतिरिक्त किम्पुरुषाद्यष्ट-वर्षाणि अपरान् जम्बूद्वीपव्यतिरिक्तप्लक्षादिषड्द्वीपान् चतुर्दिशं चतस्रः दिशः यथा जिता भवन्ति तथा चतुर्दिशम् ।। २१६-२१८ ।।

**मधुसूदनीया–** ।। **पार्थो जित्वाऽष्टवर्षाणीति** ।। अष्टवर्षाणि किम्पुरुषाद्यष्टवर्षाणि, अपरान् षड्द्वीपान् प्लक्षादिषड्द्वीपान् । तथाचोक्तम्- 'शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः । अर्जुनस्य च सैन्यस्थैः सङ्ग्रामस्तुमुलोऽभवत् ।। स तानपि महेष्वासा विजित्य पुरुषर्षभ ।।' इत्यादि सभापर्वणि (२७.१४-१५) ।। २१६-२२१ ।।

**वरदराजीया–** अष्टवर्षाणि भारतवर्षव्यतिरिक्तानि जम्बूद्वीपव्यतिरिक्तानपरान् षड्द्वीपान् प्लक्षादीन् अपि जित्वा चतुर्दिशं चतस्रो दिशश्च सर्वशो जित्वा ।। २१६ ।।

**अनन्तभट्टीया–** अपरान् प्लक्षादीन् षड्द्वीपान् चतुर्दिशं चतस्रो दिश इत्यर्थः ।। २१६-२१८ ।।

**जनार्दनीया–** अष्टवर्षाणि भरतखण्डोत्तरं जम्बूद्वीपस्थाष्टखण्डान् । अपरान् जम्बूद्वीपव्यतिरिक्तान् षड्द्वीपान् प्लक्षादिषड्द्वीपानपि । अपिशब्देन अन्यागम्यत्वं सूचितम् । चतुर्दिशमपि चतस्रो दिशो यस्यां क्रियायां तद्यथा भवति तथा अजयत् । पूर्वं जम्बूद्वीपस्थाष्टखण्डापेक्षया 'सप्तद्वीपांश्च प्रयाहि' इति व्यासेनोक्तमिति ज्ञापयितुं 'पार्थः..' इत्यस्मिन् श्लोकस्थतृतीयपादे नवाक्षराणि ।।२१६।।

**भावचन्द्रिका–** भारतवर्षापेक्षया उत्तरदिगुक्त्या तद्दिक्कृताष्टवर्षा अपि गृह्यन्ते । द्वीपान् षट् सप्त अतलादींश्च..* तत्राशेषदिक्षु नागादीन् जित्वा पुनरेहीति योजना । नच अधरस्थान् इत्युक्तत्वात् सप्तेति व्यर्थम् । समस्तस्थानपरत्वेन प्रयाहीति क्रियान्वयात् । षट्सप्तेत्यध्याहारस्तु 'पार्थो जित्वा' इति वक्ष्यमाणज्ञापकात् ।। २१६-२२३ ।।

**भारतश्री–** चतुर्दिशः जम्बूद्वीपातिरिक्तद्वीपेषु चतुर्दिशमप्यजयदित्यर्थः ।। २१६-२२० ।।

**चट्टि–** पार्थोऽर्जुनः अष्टवर्षाणि किम्पुरुषाद्यष्टवर्षाणि अपरान् षड्द्वीपान् प्लक्षादिषड्द्वीपानपि जित्वा, अपिशब्देन अन्यागम्यत्वं सूचितम् । चतुर्दिशमपीत्यर्थः । चतसृणां दिशां समाहारश्चतुर्दिशं चतस्रो दिश इत्यर्थः । सर्वशः विदिशश्च स्वात्नतेजसा अजयत् । तथाचोक्तम्- 'शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः । अर्जुनस्य च सैन्यस्थैः सङ्ग्रामस्तुमुलोऽभवत् ।। स तानपि महेष्वासा विजित्य पुरुषर्षभ ।।' इत्यादि सभापर्वणि । अस्मिन् श्लोके तृतीयपादे नवाक्षराणि छन्दस्तुल्यत्वद्योतनार्थम् ।। २१६ ।।

**पातालसप्तकं गत्वा जित्वा दैतेयदानवान् ।**
**बलेश्च विष्णुवचनात् करं जग्राह सामतः ॥२१७॥**

**वेदाङ्गतीर्थीया–** विष्णुवचनात् बलिद्वारस्थविष्णुवचनात् ।। २१७-२१९।।

**वरदराजीया–** तथा पातालसप्तकं अतलवितलादिकं गत्वा, तत्र दैतेयादीन् जित्वा, बलेः सकाशादपि विष्णुवचनात् त्रिविक्रमवचनात् सामतः करं जग्राह ।। २१७ ।।

**जनार्दनीया–** विष्णुवचनाद् बलिद्वारस्थवामनाख्यविष्णुवचनात् ।। २१७ ।।

**ताम्रपर्णीया–** विष्णुवचनाद् बलिद्वारस्थवामनवचनात् ।। २१७ -२२२ ।।

**चट्टि–** पातालसप्तकमतलवितलादिकं गत्वा, तत्र दैतेयान् दानवान् जित्वा, श्रीविष्णुवचनात् बलि-द्वारस्थकपिलाख्यविष्णुवचनात् बलेः सकाशात् च सामतः करं जग्राह ।। २१७ ।।

**जित्वा च वासुकिं भूरि रत्नमादाय सत्वरः ।**
**आजगाम पुरं स्वीयं वीरो वत्सरमात्रतः ॥२१८॥**

**वरदराजीया–** वासुकिं नागं जित्वा, सत्वरः त्वरावान् वत्सरमात्रतः एकेन वत्सरेण स्वीयं पुरमाजगाम ।। २१८ ।।

**जनार्दनीया–** रत्नमिति जात्येकवचनम् । अत एव भूरि बह्विति विशेषणम् । सत्वरः त्वरया सहितः। वत्सरमात्रतः एकवत्सरमात्रेण ।।२१८।।

**चट्टि–** वासुकिं च जित्वा, रत्नमिति जात्येकवचनम् । भूरि रत्नमादाय त्वरया सहितः सत्वरः सन् वीरोऽर्जुनः वत्सरमात्रतः वत्सरेण स्वीयं पुरमाजगाम ।। २१८ ।।

**सुर्वणरत्नगिरयश्चतुर्भिस्तैः समार्जिताः ।**
**चत्वारो योजनानां हि दश त्रिंशच्छतं तथा ॥२१९॥**

**वेदाङ्गतीर्थीया–** प्रतीच्याद्यपसव्येन पश्चिमां दिशमारभ्य अप्रादक्षिण्येन क्रमात् तैश्चतुर्भिः नकुल-सहदेवभीमार्जुनैः चत्वारः चतुःसङ्ख्याविशिष्टाः सुवर्णरत्नगिरयः समार्जिताः सम्पादिताः आसन् ।।२१९।।

**वादिराजतीर्थीया–** 'सुवर्णरत्नगिरयश्चतुर्भिस्तैः समार्जिताः' इत्यत्र प्रतीच्याद्यपसव्येन प्रतीचीं दिशम् आरभ्यापसव्येन अप्रादक्षिण्येन 'वामं शरीरे सव्यं स्यादपसव्यं तु दक्षिणम्' इत्यनुशासने । 'शरीरे' इति विशेषणादपसव्यपदं शरीरकरचरणादिष्वेव दक्षिणवाचकम् । अन्यत्र तु वामवाचकमपीति सूचितम् । अतो दिग्विषयत्वात् अपसव्यपदं वामवाचकमिति ज्ञेयम् । तैश्चतुर्भिः नकुलसहदेवभीमार्जुनैः । चत्वारः सुवर्णरत्नगिरयः दिग्भ्यः समार्जिताः । तेषां गिरीणां प्रमाणमाह– **योजनानामिति** ।। योजनानां दश । योजनानां त्रिंशत् । योजनानां शतम् । योजनानां चतुःशतं चेति दिग्जयार्जिताश्चत्वारो गिरयः ।।२१९।।

**वरदराजीया–** तैः भीमसेनादिभिश्चतुर्भिः सुवर्णरत्नगिरयः चत्वारः समार्जिताः सम्पादिताः । सम्पादितगिरीणां परिमाणमाह– **योजनानामिति** ।। दशयोजनोच्छ्रितः एकः । त्रिंशद्योजनोच्छ्रितो द्वितीयः । शतयोजनोच्छ्रितः तृतीयः । चतुश्शतयोजनोच्छ्रितश्चतुर्थ इत्यर्थः ।। २१९ ।।

**अनन्तभट्टीया–** ।। **सुवर्णेति** ।। चत्वारः सुवर्णगिरयः । तत्परिमाणमाह– **योजनानां हीति** ।। एको गिरिर्दशयोजनोच्छ्रितः । अपरस्त्रिंशद्योजनोच्छ्रितः । अन्यः शतयोजनोच्छ्रितः । इतरः चतुःशत-योजनोच्छ्रितः ।। २१९ ।।

**जनार्दनीया–** चतुर्भिः नकुलसहदेवभीमार्जुनैः चत्वारो ये सुवर्णरत्नगिरयः समार्जिताः सम्पादिताः आसन् । ते दिग्विजयार्जिताः । हिशब्दः प्रसिद्धवाची । न तु याचयित्वेत्यर्थः । तेषां प्रमाणमाह– **योजनानामिति** ।।२१९।।

**चट्टि–** चतुर्भिः नकुलसहदेवभीमार्जुनैश्चत्वारो ये सुवर्णरत्नगिरयः समार्जिताः सम्पादिता आसन् । ते दिग्जये अर्जिताः हि । हिशब्दः प्रसिद्धवाची । तेषां प्रमाणमाह– **योजनानामिति** ।। २१९ ।।

**चतुःशतं च क्रमश उच्छ्रिता दिग्जयार्जिताः ।**
**प्रतीच्याद्यपसव्येन क्रमाद् दिग्भ्यः समार्जिताः ।।२२०।।**

**वेदाङ्गतीर्थीया–** दिग्जयार्जिताः ते क्रमशः उक्तक्रमात् योजनानां दश त्रिंशत् तथा शतं चतुःशतं उच्छ्रिताः इति योजना ।। २२०-२२१ ।।

**वादिराजतीर्थीया–** क्रमशः क्रमेण । उच्छ्रिताः आयामवन्तः । नकुलार्जितो गिरिः दशयोजनोच्छ्रितः। सहदेवार्जितः त्रिंशद्योजनोच्छ्रितः । भीमसेनार्जितः शतयोजनोच्छ्रितः । अर्जुनार्जितः सुवर्णरत्नगिरिः चतुश्शतयोजनोच्छ्रित इति भावः । सप्तद्वीपाश्रितवित्तानि अर्जुनस्य इन्द्रावतारत्वाद् देवदूतैरानीतानीति ज्ञेयम् ।। २२०-२२४ ।।

**वरदराजीया–** 'क्रमशः' इत्यनेन कः क्रमो विवक्षित इत्यत उक्तम्– **प्रतीच्याद्यपसव्येनेति** ।। प्रतीच्यां नकुलेन दशयोजनोच्छ्रितो रत्नसुवर्णमयो गिरिः समार्जितः, दक्षिणस्यां दिशि सहदेवेन त्रिंशद्योजनोच्छ्रितः । प्राच्यां दिशि भीमेन शतयोजनोच्छ्रितः । उत्तरस्यां दिशि अर्जुनेन चतुःशत-योजनोच्छ्रितः सम्पादित इत्युक्तं भवति । तत्रार्जुनस्य बहुदूरं गतत्वाद् बहुकालं स्थितत्वाद् बहुभ्यो गृहीतत्वाच्च तत्सम्पादितगिरेराधिक्यं द्रष्टव्यम् ।।२२०।।

**अनन्तभट्टीया–** 'क्रमशः' इत्युक्तं विवृणोति– **प्रतीचीति** ।। प्रतीच्यादीनामपसव्येनोपलक्षण-क्रमादित्यर्थः ।। २२०।।

**जनार्दनीया–** क्रमशः उक्तक्रमेण योजनानां दशत्रिंशच्छतं तथा चतुःशतं उच्छ्रिताः उन्नताः । एकस्तु दशयोजनोच्छ्रितः । अपरः त्रिंशद्योजनोच्छ्रितः । अन्यः शतयोजनोच्छ्रितः । इतरस्तु चतुःशतयोजनमुच्छ्रितः । केन कः पर्वतः सम्पादितः? इत्यत आह– **प्रतीचीति** ।। प्रतीच्याद्यपसव्येन प्रतीची आदिर्यस्य, तच्च तदपसव्यं च तेनापसव्येन अप्रदक्षिणेन क्रमाद् दशत्रिंशदादिक्रमाद् दिग्भ्यः पश्चिमदक्षिणपूर्वोत्तरदिग्भ्यः समार्जिताः सम्पादिताः, नकुलसहदेवभीमार्जुनैरिति शेषः ।।२२०।।

**चट्टि–** 'क्रमशः' उक्तक्रमेण योजनानां दशत्रिंशच्छतं तथा चतुशतं चोच्छ्रिताः उन्नताः । एकस्तु दशयोजनोच्छ्रितः । द्वितीयस्य त्रिंशद्योजनोच्छ्रितः । तृतीयस्य शतयोजनोच्छ्रितः । चतुर्थः चतुःशतयोजनोच्छ्रितः । केन कः पर्वतः सम्पादितः इत्यत आह– **प्रतीचीति** ।। प्रतीच्याद्यपसव्येन प्रतीची दिगादिः यासां तास्तथा दक्षिणादयः तासामपसव्येन अप्रदक्षिणेन क्रमाद् दशत्रिंशदादिक्रमाद् दिग्भ्यः पश्चिमदक्षिणपूर्वोत्तरदिग्भ्यः समार्जिताः सम्पादिताः, नकुलसहदेवभीमार्जुनैरिति शेषः ।।२२०।।

**विश्वकर्मकृतत्वात्तु पुरस्याल्पेऽपि च स्थले ।**
**अन्तर्गतास्ते गिरयस्तदद्भुतमिवाभवत् ।।२२१।।**

**वरदराजीया–** ननु दिग्भ्यः आनीतानां सुवर्णरत्नगिरीणां अल्पपरिमाणे पुरे कथमवस्थानमित्यत आह– **विश्वकर्मेति** ।। पुरस्यैन्द्रप्रस्थस्य विश्वकर्मकृतत्वात् तत्राल्पेऽपि स्थले गिरयोऽन्तर्गताः अतस्तस्मात् सर्वेषां पश्यतां अद्भुतमाश्चर्यमिवाभवत् ।। २२१ ।।

**अनन्तभट्टीया–** पुरस्याल्पेऽपि ।। २२१-२२३ ।।

**जनार्दनीया–** ननु शक्रप्रस्थे तेषामवस्थानं कथमभूदित्यत आह– **विश्वकर्मेति** ।। अन्तर्गताः ग्राममध्ये प्रविष्टा इत्यर्थः । तत्तेषां प्रवेशनं अद्भुतमिवाभवत्, पश्यतामिति शेषः ।।२२१।।

**भारतश्री–** अन्तर्गताः ईश्वराचिन्त्यशक्त्येति भावः ।।२२१-२२९।।

**चट्टि–** नन्वल्पपरिमाणे इन्द्रप्रस्थे तेषामवस्थानं कथमभूदित्यत आह– **विश्वकर्मेति** ।। विश्वकर्मकृतत्वात् पुरस्याल्पेऽपि च स्थले ते गिरयः अन्तर्गताः अन्तः प्रविष्टाः तत्तेषां प्रवेशनं अद्भुतमिवाभवत्, पश्यतामिति शेषः ।। २२१ ।।

**[1]ततो यज्ञः प्रववृते कृष्णद्वैपायनेरितः ।**
**ऋत्विजो मुनयोऽत्रासन् सर्वविद्यासु निष्ठिताः ।**
**द्वैपायनोक्तविधिना [2]दीक्षयाश्चक्रिरे नृपम् ।।२२२।।**

---

१. 'ततो द्वैपायनो राजन् ऋत्विजः समुपानयत् । वेदानिव महाभागान् साक्षान्मूर्तिमतो द्विजान् । स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवती सुतः ।।' सभापर्वणि- ३६.३३-३४.

२. 'दीक्षितं' इति जनार्दनीयपाठः । वेदाङ्गतीर्थीयपाठोऽपि तथैव इति भाति ।

**वेदाङ्गतीर्थीया–** चक्रिरे, ऋत्विज इति शेषः ।। २२२ ।।

**सत्याभिनवीया–** तत्रैव 'द्वैपायनोक्तविधिना..' इति श्लोके 'दीक्षायाश्चक्रिरे नृपम्' इत्यस्य नृपं दीक्षायां बद्धं चक्रिरे इत्यर्थः । एतेन दीक्षायामित्येतत् अनन्वितमिति दूषणं निरस्तम् । अध्याहृतेन बद्धमित्यनेनान्वय इत्यभ्युपगमात् ।। २२२-२४७ ।।

**मधुसूदनीया–** ।। **ततो यज्ञः प्रववृते कृष्णद्वैपायनेरित इति** ।। यत्र कृष्णद्वैपायनो ब्रह्मत्वम्, वसिष्ठ आध्वर्यवमित्याद्यूह्यम् । तथाचोक्तम्- 'स्वयं ब्रह्मत्वमकरोत्तस्मिन् सत्यवतीसुतः । धनञ्जयानामृषभः ससुतः सामगोऽभवत् ।। याज्ञवल्क्यो बभूवाथ वसिष्ठोऽध्वर्युसत्तमः । पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ।।' इत्यादि च सभापर्वणि (३६.३४-३५)।। २२२-२२८ ।।

**वरदराजीया–** प्रववृते प्रवृत्तोऽभूत् । अत्र यज्ञे मुनयो ऋत्विजः आसन् । सर्वविद्यासु यज्ञविद्यासु निष्ठिताः निष्णाताः विद्यानिष्ठितकुशलाः । ज्येष्ठत्वान्नृपं युधिष्ठिरं दीक्षायाश्चक्रिरे दीक्षितं चक्रुः ।।२२२।।

**जनार्दनीया–** प्रववृते प्रवृत्तोऽभवत् । अत्र यज्ञे सर्वविद्यासु निष्ठिताः तत्वविद्यादिसर्वविद्यासु, सुनिष्ठिताः सुतरां कुशला इत्यर्थः । नृपं युधिष्ठिरं दीक्षितं चक्रिरे, ऋत्विज इति शेषः । 'दीक्षायाश्चक्रिरे' इत्यपि पाठः ।। २२२ ।।

**चट्टि–** ततः कृष्णद्वैपायनेरितः यज्ञः प्रववृते प्रवृत्तोऽभूत् । अत्र यज्ञे सर्वविद्यासु निष्ठिताः तत्त्वविद्यादिसर्वविद्यासु सुनिष्ठिताः सुतरां कुशलाः मुनयः ऋत्विजो आसन् । अत्र कृष्णद्वैपायनो ब्रह्मत्वं वसिष्ठ आध्वर्यवं इत्याद्यूह्यम् । तथा चोक्तम्- 'स्वयं ब्रह्मत्वमकरोत्तस्मिन् सत्यवतीसुतः । धनञ्जयानामृषभः ससुतः सामगोऽभवत् ।। याज्ञवल्क्यो बभूवाथ वसिष्ठोऽध्वर्युसत्तमः । पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ।।' इत्यादि च सभापर्वणि ।। २२२ ।।

**ज्येष्ठत्वाद् याजमान्यं[१] तु प्रणिधाय युधिष्ठिरे ।**
**भीमार्जुनादयः सर्वे सह तेन समासिरे ।।२२३।।**

**व्यासतीर्थीया–** याजमान्यं यजमानत्वम् ।। २२३-२२४ ।।

**वेदाङ्गतीर्थीया–** याजमान्यं यजमानत्वम् ।। २२३-२२९ ।।

**वरदराजीया–** किं कृत्वा? याजमान्यं यजमानत्वं युधिष्ठिरे प्रणिधाय । तेन युधिष्ठिरेण सहान्ये समासिरे उपविष्टाः ।। २२३ ।।

**अनन्तभट्टीया–** याजमान्यं यजमानतया ।।२२३।।

---

१. 'याजमानम्' इति ताम्रपर्णीयः पाठः ।

**जनार्दनीया–** भीमार्जुनादयः ज्येष्ठत्वात् याजमान्यं यजमानत्वं युधिष्ठिरे प्रणिधाय, तेन युधिष्ठिरेण सह । समासिरे उपविष्टाः ।। २२३ ।।

**ताम्रपर्णीया–** याजमानं याजमान्यम् ।। २२३-२२९ ।।

**चट्टि–** भीमार्जुनादयः सर्वे ज्येष्ठत्वाद्युधिष्ठिरे याजमान्यं यजमानत्वं प्रणिधाय द्वैपायनोक्तविधिना नृपं दीक्षयाञ्चक्रिरे दीक्षितं चक्रुः । तेन युधिष्ठिरेण सह समासिरे उपविष्टाः ।। २२३ ।।

**ब्रह्माणीपदयोग्यत्वात् कृष्णैका यज्ञपत्न्यभूत् ।**
**पदायोग्यतया नान्याः पत्न्यस्तेषां सहाऽसिरे ।।२२४।।**

**वरदराजीया–** कृष्णा द्रौपदी एकैव यज्ञपत्न्यभूत् । कुतः? ब्रह्माणीपदस्य सरस्वतीपदस्य योग्यत्वात् । तेषामन्याः पत्न्यः पदायोग्यत्वात् ब्रह्माणीपदायोग्यत्वात् न सहासिरे नोपविष्टाः ।। २२४ ।।

**अनन्तभट्टीया–** पदायोग्यतया ब्रह्माणीपदायोग्यतया ।।२२४।।

**जनार्दनीया–** ब्रह्माणी सरस्वती तस्याः । तेषां पाण्डवानां अन्याः पत्न्यः पदायोग्यतया ब्रह्माणीपदस्य अयोग्यतया न सहासिरे तैः सह नोपविष्टाः ।। २२४ ।।

**भावचन्द्रिका–** पदायोग्यतया पदायोग्ययुधिष्ठिरादिवत् अस्य च अवस्थानं स्यादित्यत आह– **पदेति** ।। पदायोग्यतया यज्ञपत्नीपदायोग्यतया सवर्णासवर्णसमवाये सवर्णा यज्ञपत्नी, सवर्णसमवाये ज्येष्ठैवेति नियमात् । तदुक्तं कात्यायनस्मृतौ– 'उपविष्टादिशुश्रूषां बहुभार्यः सवर्णया । कारयेत् तद्बहुत्वं चेत् ज्येष्ठा या गर्हिता न चेत् ।' इति ।।२२४-२२८ ।।

**चट्टि–** ब्रह्माणीपदस्य सरस्वतीपदस्य योग्यत्वात् एका कृष्णा यज्ञपत्नी अभूत् । तेषां अन्याः पत्न्यः पदायोग्यतया ब्रह्माणीपदायोग्यत्वात् सह नासिरे नोपविष्टाः ।। २२४ ।।

**आज्ञयैव जगद्धातुर्व्यासस्यानन्ततेजसः ।**
**स्थलमप्यत्र सर्वं हि [१]रत्नहेममयं त्वभूत् ।**
**किमु पात्रादिकं सर्वं शिबिराणि च सर्वशः ।।२२५।।**

**व्यासतीर्थीया–** सर्वासामपि यज्ञपत्नीत्वापेक्षितत्वात् केन नियताः सह नासिर इति जिज्ञासायामाह– **आज्ञयेति** ।। २२५-२२९ ।।

---

१. 'स यज्ञस्तां गणैस्तत्र ग्रहैर्द्यौरिव सम्बभौ । शय्यासनविहारांश्च सुबहून् रत्नसंवृतान ।। घटान् पात्रीकटाहानि कलशानि समन्ततः । न ते किञ्चिदसौवर्णमपश्यंस्तत्र पार्थिवाः ।।' सभापर्वणि-७१.७-८.

**वादिराजतीर्थीया–** 'शिविराणि च सर्वशः' इत्यत्र शिविराणि द्रष्टुमागतानां राज्ञां नूतनतया कृतानि सेनास्थानानि ।। २२५-२२९ ।।

**वरदराजीया–** 'आज्ञयैव' इत्यस्यात्र हेतुत्वेन सम्बन्धः । स्थलं सर्वमपि रत्नहेममयमभूत् । पात्रादिकं सर्वं रत्नादिमयम् । सर्वाणि शिविराणि यज्ञशालाः रत्नादिमयानीति किमु वक्तव्यम् ।। २२५ ।।

**अनन्तभट्टीया–** अर्जुनादीनां ब्रह्मत्वायोग्यत्वेऽपि क्रत्वङ्गनिवर्तकत्वेन तदुपकारकत्वात् युधिष्ठिरेण सहासनमिति भावेनाह– **आज्ञयेति** ।। २२५-२२९ ।।

**जनार्दनीया–** ननु 'अर्जुनादयः सहाऽसिरे' इत्युक्तत्वात् तत्पत्नीनां सर्वासामपि यज्ञपत्नीत्वापेक्षित्वात् कथं 'नान्याः' इत्युक्तमित्यत आह– **आज्ञयैवेति** ।। अत्र यज्ञे । व्यासस्याज्ञयैव इच्छयैवेत्यर्थः । पात्राणि आदीनि यस्य स तथा । स्वार्थे कप्रत्ययः । सर्वमासनग्रहोपस्करं, सर्वशः शिविराणि, यज्ञशाला अश्वशालाश्च किमु वक्तव्यम् ।। २२५ ।।

**चट्टि–** अनन्ततेजसः जगद्धातुः जगत्पोषकस्य श्रीव्यासस्य आज्ञयैव इच्छयैवेत्यर्थः । अत्र यज्ञे सर्वं स्थलमपि रत्नमयमेवाभूत् । सर्वं पात्रादिकम्, सर्वशः सर्वाणि शिविराणि, यज्ञशालाश्च रत्नहेममयानि आसन्निति किमु वक्तव्यम् ।। २२५ ।।

**आहूतं दिग्जये पार्थैस्तदा लोकद्विसप्तकम् ।**
**सर्वमत्राऽगमद् [1]ब्रह्मशर्वशक्रादिपूर्वकम् ।।२२६।।**

**वरदराजीया–** दिग्जये दिग्विजयसमये पार्थैः भीमसेनादिभिः लोकं द्विसप्तकमाहूतम् आमन्त्रितम् । तत्सर्वं ब्रह्मशर्वादिपूर्वकमत्रागमत् ।। २२६ ।।

**जनार्दनीया–** पार्थैः भीमादिचतुर्भिः दिग्जये दिग्जयसमये आहूतमाकारितम् । ब्रह्मशर्वशक्रादयः पूर्वकाः यस्य तत्तथा । सर्वं लोकद्विसप्तकं पातालादिसप्तकं पृथिव्यादिसप्तकं च तदा यज्ञसमये अत्र यज्ञस्थलं प्रति अगमत् ।। २२६ ।।

**चट्टि–** पार्थैः भीमादिचतुर्भिः दिग्जये दिग्विजयसमये आहूतमाकारितं ब्रह्मशर्वशक्रादयः पूर्वकाः यस्य तत्तथा । सर्वं लोकद्विसप्तकं पातालसप्तकं पृथिव्यादिसप्तकं तदा यज्ञसमये अत्र यज्ञस्थलं प्रत्यगमत् ।।२२६।।

---

१. 'हिमः किलोपकरणो वरुणस्य यथा पुरा । इन्द्रादयो लोकपाला विरिञ्चिभवसंयुताः ।। सगणाः सिद्धगन्धर्वा विद्याधरमहोरगाः । मुनयो यक्षरक्षांसि खगाः किन्नरचारणाः ।। राजानश्च समाहूता राजपत्न्यश्च सर्वशः । राजसूयं समीयुः स्म राज्ञः पाण्डुसुतस्य वै ।।' भागवते-१०.८२.१३-१५ । तथा सभापर्वणि BORI पुस्तके ४३२ पत्रे । दैवैरन्यैश्च यक्षैश्च उरगैर्दिव्यमानुषैः । विद्याधरगणैः कीर्णैः पाण्डवस्य महात्मनः ।। स राजसूयः शुशुभे धर्मराजस्य धीमतः । गन्धर्वगणसंकीर्णः शोभितोऽप्सरसां गणैः । स किम्पुरुषगीतैश्च किंनरैरुपशोभितः ।।

**भीष्मो द्रोणश्च विदुरो धृतराष्ट्रः सहात्मजः ।**
**सस्त्रीका आययुस्तत्र बाह्लीकश्च सहात्मजः ॥२२७॥**

**वरदराजीया–** भीष्मादयोऽप्याययुरिति सम्बन्धः । सहात्मजः बाह्लीकश्चाययौ ॥ २२७ ॥

**जनार्दनीया–** सहात्मजो धृतराष्ट्रः ॥ २२७ ॥

**चट्टि–** भीष्मद्रोणौ विदुरः सहात्मजः धृतराष्ट्रश्चेत्येते आययुः । तत्र यज्ञे सहात्मजः बाह्लीकश्च आययौ ॥ २२७ ॥

**तथैव यादवाः सर्वे बलभद्रपुरोगमाः ।**
**रुक्मिणीसत्यभामाद्या महिष्यः केशवस्य च ॥२२८॥**

**वरदराजीया–** केशवस्य कृष्णस्य अष्टोत्तरशताधिकषोडशसहस्रमहिष्यः ॥ २२८ ॥

**जनार्दनीया–** महिष्यः जाम्बवत्यादिषट् । चशब्देन शताधिकषोडशसहस्रस्त्रियः ॥२२८॥

**चट्टि–** तथैव बलभद्रपुरोगमाः सर्वे यादवाश्चाययुः । रुक्मिणीसत्यभामाद्याः केशवस्य महिष्यः अष्टोत्तरशताधिकषोडशसहस्रमहिष्यश्च आययुः ॥ २२८ ॥

**[1]तत्र सर्वजगदेकसङ्गमे तत्त्वनिर्णयकथा बभूविरे ।**
**प्राश्निकोऽत्र परिपूर्णचिद्घनो व्यास एव भगवान् बभूव ह ॥२२९॥**

**मधुसूदनीया–** प्राश्निक इत्यर्थः । अशेषसंशयच्छेत्ता निस्संशयः सर्वज्ञः सर्वदोषविवर्जितः प्राश्निक इत्यर्थः । 'अशेषसंशयच्छेत्ता निस्संशय उदारधीः । एकश्चेत् प्राश्निको ज्ञेयः सर्वदोषविवर्जितः ॥' (कथालक्षणे.६) इति वचनात् ॥ २२९-२४७ ॥

**वरदराजीया–** तत्त्वनिर्णयार्थाः कथाः वादरूपाः । अत्र वादकथासु परिपूर्णचिद्घनो व्यासः प्राश्निको बभूव ॥ २२९ ॥

---

१. 'तस्मिन् यज्ञे प्रवृत्ते तु वाग्विदो हेतुवादिनः । हेतुवादान् बहून् प्राहुः परस्परजिगीषवः ॥ कर्मान्तरमुपासन्तो जजल्पुरमितौजसः । एवमेतन्न चाप्येवमेवं चैतन्न चान्यथा । इत्यूचुर्बहवस्तत्र वितण्डां वै परस्परम् । कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्वते । अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चयैः । तत्र मेधाविनः केचिदर्थमन्यैरुदीरितम् । विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् । केचिद् धर्मार्थकुशलाः केचित् तत्र महाव्रताः । रेमिरे कथयन्तश्च सर्वभाष्यविदां वराः ॥' सभापर्वणि- ३९ । 'ब्राह्मणा वेदशास्त्रज्ञाः कथाश्चक्रुश्च सर्वतः । रेमिरे च कथान्ते तु सर्वे तस्मिन् महाक्रतौ ॥२९॥ पाण्डित्यदर्शनार्थाय केचन द्विजसत्तमाः । तर्कार्थमागताः केचित् केचिद्विद्याभिमानिनः ॥३१॥ इतिहासपुराणानि आख्यानानि च सर्वशः । ऊचुर्वै शब्दशास्त्रज्ञा नित्यं कर्मान्तरेष्वथ ॥४२॥' सभापर्वणि-७१.

**जनार्दनीया–** सर्वजगतां एकत्र सङ्गमः मेलनं यस्मिन् तत्तथा तस्मिन् । तत्र यज्ञस्थले । अत्र विवादकथासु व्यासः प्राश्निको बभूव । प्राश्निकलक्षणं 'हरिः' 'परिपूर्णचिद्घनः' 'भगवान्' इति विशेषणत्रयेण दर्शितम् । तथोक्तम्– 'अशेषसंशयच्छेत्ता निःसंशय उदारधीः । एकश्चेत् प्राश्निको ज्ञेयः सर्वदोषविवर्जितः ।।' इति ।।२२९।।

**भावचन्द्रिका–** ।। **प्राश्निक इति** ।। तदुक्तं भगवत्पादैः कथालक्षणे- 'अशेषसंशयच्छेत्ता निःसंशय उदारधीः । एकश्चेत् प्राश्निको ज्ञेयः सर्वदोषविवर्जितः ।।' इति । टीकायाम्– 'तत्राद्येन विशेषणेन भग्नप्रतिबोधनादौ सामर्थ्यातिशयो दर्शितः, द्वितीयेन सिद्धान्तद्वयरहस्यवेदित्वाद्यतिशयः, तृतीयेन परोक्तग्रहणादिपाटवातिशयः, चतुर्थेन रागादीनामशेषतोऽभावः' इत्युक्तम् । तत्सर्वाभिप्रायेण 'परिपूर्णचिद्घनः' 'भगवान्' इति च उक्तम् ।। २२९-२३० ।।

**चट्टि–** सर्वजगतामेकत्र सङ्गमो मेलनं यस्मिन् तत्तथा तस्मिन् । तत्र यज्ञस्थले । तत्वनिर्णयकथाः वादरूपाः बभूविरे । अत्र विवादकथासु परिपूर्णचिद्घनः भगवान् व्यास एव प्राश्निको बभूव । अशेषसंशयच्छेत्ता निस्संशयः सर्वज्ञः सर्वदोषविवर्जितः प्राश्निक इत्यर्थः । 'अशेषसंशयच्छेत्ता निस्संशय उदारधीः । एकश्चेत्प्राश्निको ज्ञेयः सर्वदोषविवर्जितः ।।' इति वचनात् ।। २२९ ।।

**तत्वनिर्णयकथासु निर्णयो वासुदेवगुणविस्तरोऽभवत् ।**
**नास्ति तत्सदृश उत्तमः कुतः पार एष न ततोऽन्य इत्यपि ।।२३०।।**

**व्यासतीर्थीया–** तत्वनिर्णयकथासु वादकथासु ।।२३०।।

**वेदाङ्गतीर्थीया–** तत्वनिर्णयकथासु 'तत्सदृशः नास्ति, उत्तमः कुतः? एषः पारः प्रकृतिमतीतः' इति वासुदेवगुणविस्तरोऽभवत् । एवं परतत्वनिर्णयोऽभवत् । ततः वासुदेवात् अन्यः पारोऽवधिः नेति निर्णयोऽभवत् । एवं परतत्वनिर्णयोऽप्यभवदिति भावः ।। २३० ।।

**वादिराजतीर्थीया–** 'वासुदेवगुणविस्तरोऽभवत्' इत्यत्र वासुदेवगुणानां विस्तरो यस्मिन्निति समासः ।। २३०-२३८ ।।

**वरदराजीया–** निर्णयोऽभवत् । कथम्भूतः? वासुदेवगुणानां विस्तरः पूर्णता यस्मात् तस्य वासुदेवस्य सदृशो नास्ति । तत उत्तमः कुतः? एष वासुदेवः पारोऽवधिः ततोऽन्योऽधिको नास्ति यत इत्यर्थः ।।२३०।।

**अनन्तभट्टीया–** वासुदेवगुणानां विस्तरो विस्तारो यस्मिन् स तथोक्तः । तत्सदृशो नास्ति उत्तमः कुतः? एषः पारः उत्तमत्वे सीमा इत्यर्थः ।। २३० ।।

**जनार्दनीया–** तत्वनिर्णयकथासु तत्समो नास्ति । उत्तमः कुतः? एषः पारः प्रकृतिमतीतः । उत्तमत्वसीमेति वा । वासुदेवगुणविस्तरः गुणानां विस्तरोऽभवत् । परतत्त्वनिर्णयोऽभवत् । ततः वासुदेवादन्यः पारो नास्तीति निर्णयोऽभवत् ।। २३० ।।

**ताम्रपर्णीया–** तत्वनिर्णयकथासु वादकथासु वासुदेवगुणविस्तरः पूर्तिः, पूर्तिविषय इति यावत् । निर्णयोऽवधारणज्ञानमभवत् । वासुदेवगुणविस्तरः निर्णीयत इति निर्णयः । निर्णीत इति वा । यद्वा वासुदेवगुणानां विस्तरो व्याप्तिः । निखिलसज्जनेषु प्रसिद्धिस्तद्रूपो निर्णयोऽभवदित्यर्थः । तथा यत एषः पारः । 'सा काष्ठा सा परागतिः' इत्युक्तरीत्या पारः प्रकृतिमतीतः । ततोऽन्यः पारो न ततस्तस्मात् तत्सदृशो नास्ति, तत उत्तमोऽन्यः कुतः स्यान्न कुतोऽपीत्यपि निर्णयोऽभवदिति योजना ।।२३०।।

**भारतश्री–** पारः तारतम्यावधिभूतः ।। २३०-२३४ ।।

**चट्टि–** तत्वनिर्णयकथासु तस्य वासुदेवस्य सदृशः समो नास्ति । उत्तमः कुतः? एषः वासुदेवः पारः प्रकृतिमतीतः । ततो वासुदेवादन्यः पारो नास्तीति । एवं वासुदेवगुणानां विस्तरो विस्तारो यस्मिन् स तादृशः निर्णयः परतत्वनिर्णयः अभवत् ।। २३० ।।

**बादरायणभृगूत्थरामयोः शृण्वतोः परमनिर्णये कृते ।**
**मोदमानजनतासमागमेऽपृच्छदत्र नृपतिर्यतव्रतम् ।।२३१।।**

**वेदाङ्गतीर्थीया–** प्राश्निकत्वेनाधिकृतयोः बादरायणभृगूत्थरामयोः । परमनिर्णये परावरतत्वविषयक-सकलनिर्णये ।। २३१ ।।

**वरदराजीया–** बादरायणो व्यासः भृगूत्थरामः परशुरामः तयोः शृण्वतोः सतोः परमनिर्णये कृते सति मोदमानायाः जनतायाः जनसमूहस्य समागमे अत्रावसरे नृपतिर्युधिष्ठिरो यतव्रतं भीष्ममपृच्छत् ।।२३१।।

**अनन्तभट्टीया–** मोदमानजनतायाः समागमे सभायामित्यर्थः । यतव्रतं भीष्मम् ।। २३१-२३८ ।।

**जनार्दनीया–** मोदमाना च सा जनता च तस्याः समागमे सति । अत्र सभायां नृपतिः धर्मजः यतव्रतं भीष्ममपृच्छत् । अग्रपूजार्हः क इति अपृच्छदित्यर्थः ।।२३१।।

**ताम्रपर्णीया–** ।। **परमनिर्णय इति** ।। परमनिर्णये कृते, ब्रह्मादिभिरिति शेषः ।।२३१-२३५।।

**भावचन्द्रिका–** रामोऽपि यदा प्राश्निकः तदा किमु वक्तव्यमित्यभिप्रायेणाह– **बादरायणेति** ।। २३१-२५० ।।

**चट्टि–** बादरायणः श्रीव्यासः भृगूत्थरामः परशुरामः तयोः शृण्वतोः सतोः परमनिर्णये कृते सति तेन मोदमानायाः जनतायाः जनसमूहस्य समागमे अत्र सदसि नृपतिः धर्मजः यतव्रतं भीष्ममपृच्छत् अग्रपूजार्हः क इत्यपृच्छदित्यर्थः ।। २३१ ।।

**जानमानोऽपि नृपतिः सर्वपूज्यतमं हरिम् ।**
**संशयं भूभृतां भेत्तुं भीष्मं पप्रच्छ धर्मवित् ।।२३२।।**

**वेदाङ्गतीर्थीया–** जानन्नपि नृपतिः भीष्ममेव किमर्थमपृच्छदित्यत आह– **जानमान इति** ।। संशयं पूज्यत्वे हरिः पूज्यतमो नवेति ।। २३२ ।।

**वरदराजीया–** अग्रे कः पूज्य इत्यपृच्छदित्यर्थः । सर्वेषां पूज्यतमं अतिपूज्यतमं हरिं जानमानोऽपि भीष्मं पप्रच्छ ।। २३२ ।।

**जनार्दनीया–** भूभृतां संशयं कृष्णः नारायणो वा न वेति संशयं भेत्तुम् ।।२३२।।

**चट्टि–** सर्ववित् सर्वज्ञः नृपतिः युधिष्ठिरः हरिं श्रीकृष्णं सर्वपूज्यतमं जानमानोऽपि भूभृतां राज्ञां संशयं कृष्णः नारायणो वा नेति संशयं भेत्तुं भीष्मं पप्रच्छ ।। २३२ ।।

**नास्ति नारायणसममिति वादेन निर्णये ।**
**कृते ब्रह्मादिभिरपि कृष्णं मर्त्यं हि मेनिरे ।।२३३।।**

**व्यासतीर्थीया–** ननु वादेन सर्वोत्तमत्वेन नारायणस्य सिद्धत्वात् भूभृतां संशयो गतः । कृष्णश्च स एव, अतः किमर्थमग्रपूजां पप्रच्छेत्यत आह– **नास्तीति** ।। २३३-२३४ ।।

**वेदाङ्गतीर्थीया–** ब्रह्मादिभिर्नारायणस्य सर्वोत्तमत्वस्य निर्णीतत्वात् कृष्णस्यैव नारायणत्वात् कुतो भूभृतां संशय इत्यत आह– **नास्तीति** ।। सत्यम् । ब्रह्मादिभिः नारायणसमो नास्तीति निर्णयः कृतः । इति एवं निर्णये कृतेऽपि नृपाः, कृष्णस्य नारायणत्वमवजानन्त इति शेषः । मर्त्यं मेनिरे हि यस्मात् तस्मात् ।। २३३-२३४ ।।

**वरदराजीया–** ननु विष्णुः सर्वपूज्यतम इति तत्त्वनिर्णये जाते कथं भूभृतामपि कृष्णे संशय इत्यत आह– **नास्तीति** ।। नारायणसमं वस्तु नास्तीति ब्रह्मादिभिः निर्णये कृतेऽपि कृष्णं नारायणं न मेनिरे, किन्तु मर्त्यमेव मेनिरे ।। २३३ ।।

**जनार्दनीया–** निर्णये कृते भूभृतां संशयः कुतः? इत्यत आह– **नास्तीति** ।। ब्रह्मादिभिः नास्ति नारायणसममिति वादेन निर्णये कृते सत्यपि नृपाः, कृष्णस्य नारायणत्वमजानन्त इति शेषः । कृष्णं मर्त्यं मेनिरे ।।२३३।।

**चट्टि–** ननु विष्णुः सर्वपूज्यतम इति निर्णये कृतेऽपि कथं भूभृतां संशय इत्यत आह– **नास्तीति** ।। नारायणसमं वस्तु नास्तीति वादेन ब्रह्मादिभिः निर्णये कृतेऽपि नृपाः, श्रीकृष्णस्य नारायणत्वमजानन्त इति शेषः । कृष्णं मर्त्यं मेनिरे ।। २३३ ।।

**नृपास्तस्मादयं कृष्णो नारायण इति स्म ह ।**
**सम्यग् ज्ञापयितुं धर्मसूनुर्भीष्ममपृच्छत ।।२३४।।**

**वरदराजीया–** नृपास्तस्मादयं कृष्णो नारायण इति सम्यग् ज्ञापयितुं अपृच्छतेत्यर्थः ।। २३४ ।।

**जनार्दनीया–** हि यस्मात् । तस्मादयं कृष्णः नारायण इति सम्यक् ज्ञापयितुं अपृच्छत, राज्ञामिति शेषः ।।२३४।।

**चट्टि–** हि यस्मात् तस्मात् अयं श्रीकृष्णः नारायण इति सम्यक् ज्ञापयितुम्, राज्ञामिति शेषः । धर्मसूनुः भीष्मं अपृच्छत् ।।२३४।।

**ब्रह्मादयः सुरा यस्माद् दृश्यन्ते मर्त्यवन्नृभिः ।**
**न चैवातितराभ्यासो नृणामस्ति मुनिष्वपि ।।२३५।।**

**व्यासतीर्थीया–** सर्वशास्त्रविदो ब्रह्मादीन् कस्मान्नापृच्छदित्यत आह– **ब्रह्मादय इति** ।। मनुष्यवत् प्रतीत्या ब्रह्माद्युक्तौ न विश्वसनीयः । ऋषीन् कस्मान्न अपृच्छदित्यत आह– **मुनिष्विति** ।। २३५ ।।

**वेदाङ्गतीर्थीया–** तर्हि तत्रस्था ब्रह्मादयः किमिति न पृष्टा इत्यत आह– **ब्रह्मादय इति** ।। ब्रह्मादयः नृभिः मर्त्यवद् दृश्यन्ते यस्मात् तस्मात् नृणां विश्वासासम्भवात् तान्न अपृच्छदिति भावः । नृभिः अभ्यस्ता मुनयः किमिति न पृष्टा इत्यत आह– **न चेति** ।। अतस्तानपि नापृच्छदित्याशयः ।। २३५ ।।

**वरदराजीया–** तत्र ब्रह्मादिषु सत्सु भीष्ममेव किमर्थमपृच्छतेत्यत आह– **ब्रह्मादय इति** ।। तत्रत्यैः नृभिः ब्रह्मादयः सुराः मर्त्यवद् दृश्यन्ते । अतस्तद्वचने विश्वासाभावात् न तान् अपृच्छतेत्यर्थः । तर्हि ऋषीन् प्रति किमर्थं न प्रश्नः इत्यत आह– **मुनिष्विति** ।। मुनिषु नृणामतितराभ्यासो नास्ति ।।२३५।।

**जनार्दनीया–** ननु यदि ब्रह्माद्याः अत्रस्थास्तर्हि तान् किमर्थं नापृच्छदित्यत आह– **ब्रह्मादय इति** ।। ब्रह्मादयो नृभिर्मर्त्यवद् दृश्यन्ते । यस्मात् तस्मात् तदुक्तौ नृणां विश्वासाभावात् तान्न अपृच्छदिति भावः । तर्हि मुनयः किमर्थं न पृष्टा इत्यत आह– **न चेति** ।। अतः तान्न अपृच्छदित्याशयः ।।२३५।।

**भारतश्री–** ब्रह्मादयः कुतो मर्त्यवद् दृश्यन्त इत्यत आह– **न चैवेति** ।। मुनिष्वपि किमु सुरेष्वपीत्यर्थः । अतः अभ्यासाभावात् मर्त्यवद् दृश्यन्त इति भावः ।। २३५-२४१ ।।

**चट्टि–** ननु तत्र ब्रह्मादिषु सत्सु भीष्ममेव किमर्थमपृच्छत् इत्यत आह– **ब्रह्मादय इति** ।। ब्रह्मादयः सुराः नृभिः मर्त्यवद् दृश्यन्ते यस्मात् तस्मात् तदुक्तौ नृणां विश्वासाभावात् तान्न अपृच्छत् इति भावः । तर्हि मुनीन् किमर्थं न पृष्टवान् इत्यत आह– **न चेति** ।। नृणां मुनिष्वप्यतितराभ्यासो नास्त्येव अतस्तानपि नापृच्छत् इत्याशयः ।। २३५ ।।

**सर्वशास्त्रविदं भीष्मं जानन्त्येते नृपा अपि ।**
**तस्माद् भीष्ममपृच्छत् स कुलवृद्धत्वतस्तथा ।।२३६।।**

**व्यासतीर्थीया**– भीष्मोक्तेऽपि कथं विश्वासः स्यादित्यत आह– **सर्वेति** ।। २३६ ।।

**वेदाङ्गतीर्थीया**– तर्हि भीष्मोक्तौ कथं विश्वास इत्यत आह– **सर्वेति** ।। भीष्मं प्रष्टुं निमित्तान्तरमप्याह– **कुलेति** ।। २३६ ।।

**वरदराजीया**– भीष्मं तु सर्वशास्त्रविदं जानन्ति । तस्मात् स युधिष्ठिरो भीष्ममपृच्छत् । द्रोणादिपरित्यागे कारणमाह– **कुलवृद्धत्वत इति** ।। २३६।।

**जनार्दनीया**– तर्हि भीष्मोक्तौ कथं विश्वास इत्यत आह– **सर्वेति** ।। एते नृपा अपि जानन्ति यस्मात् तस्मात् भीष्ममपृच्छत् । भीष्मं प्रष्टुं कारणान्तरमाह– **कुलेति** ।।२३६।।

**ताम्रपर्णीया**– द्रोणत्यागे कारणमाह– **कुलवृद्धत्वत इति** ।। २३६-२४१ ।।

**चट्टि**– तर्हि भीष्मोक्तौ कथं विश्वास इत्यत आह– **सर्वेति** ।। एते नृपाः अपि भीष्मं सर्वशास्त्रविदं जानन्ति यस्मात् तस्मात् सः युधिष्ठिरः भीष्ममपृच्छत् । द्रोणादिपरित्यागेऽपि कारणमाह– **कुलेति** ।। कुलवृद्धत्वतस्तथा कुलवृद्धत्वतश्च अपृच्छदिति सम्बन्धः ।।२३६।।

**पितामहाग्र्यपूजार्हः कोऽत्र लोकसमागमे ।**
**ब्रह्मशर्वादयश्चात्र सन्ति राजान एव च ।**
**इति पृष्टोऽब्रवीद् भीष्मः कृष्णं पूज्यतमं हरिम्[1] ।।२३७।।**

**व्यासतीर्थीया**– अग्रपूजार्हः क इति प्रश्ने बीजमाह– **ब्रह्मेति** ।। २३७ ।।

**वेदाङ्गतीर्थीया**– भीष्ममपृच्छदित्युक्तम् । किमपृच्छदित्यत आह– **पितामहेत्यादिना** ।। अग्र्यपूजार्हः क इति प्रश्ने बीजं सूचयति– **ब्रह्मेत्यादिना** ।। राजानश्च सन्त्येव ।। २३७-२३९ ।।

**वरदराजीया**– हे पितामह! अग्रपूजार्हः प्रथमतः क्रियमाणपूजायोग्यः कः? किमर्थं प्रश्न इत्यतः कारणमाह– **ब्रह्मेति** ।। प्रभुं कृष्णं पूज्यतममब्रवीत् ।। २३७ ।।

**जनार्दनीया**– भीष्मं किमपृच्छदित्यत आह– **पितामहेत्यादिना** ।। अग्रपूजार्हः अग्रे आदौ, पूजायामर्हः योग्यः । प्रश्नस्य अभिप्रायमाह– **ब्रह्मेत्यादिना** ।। अत्र यज्ञस्थले हरिं हर्यात्मकं श्रीकृष्णं पूज्यतममब्रवीत् । 'पूज्यतमं प्रभुम्' इति वा पाठः ।।२३७।।

**चट्टि**– किमिति? हे पितामह! लोकस्य जनस्य समागमो यस्मिन् स तथा तस्मिन् । अत्र यज्ञे अग्रपूजार्हः अग्रे आदौ पूजायामर्हः योग्यः कः? किमर्थं प्रश्न इत्यत आह– **ब्रह्मेत्यादिना** ।। ब्रह्मशर्वादयश्च राजान एव चात्र यज्ञे सन्ति । अतः पूजार्हः क इत्याशयः । इति पृष्टः भीष्मः प्रभुं श्रीकृष्णं पूज्यतमं अब्रवीत् । 'हरिम्' इति वा पाठः ।। २३७ ।।

---

१. 'पूज्यतमं प्रभुम्' इति जनार्दनीयपाठान्तरम् । 'पूज्यतमं हरिम्' इति चट्टीपाठान्तरम् ।

**यद्यप्येकस्त्रिधा विष्णुर्वसिष्ठभृगुवृष्णिषु ।**
**प्रादुर्भूतस्तथाऽप्येते नृपा हि व्यासरामयोः ॥२३८॥**

**व्यासतीर्थीया–** ननु व्यासपरशुरामयोरपि विष्णुत्वात् तयोरेकं पूज्यतमं कस्मान्नावददित्यत आह– **यद्यपीति** ॥ तेषां नृपाणां कृष्णे यादृशस्तत्र व्यासरामयोस्तादृशो विरोधो नहीति सम्बन्धः ॥ २३८ ॥

**वरदराजीया–** ननु नारायणात्मके व्यासे भार्गवरामे विद्यमाने सति, किमिति कृष्णमेवाब्रवीद्भीष्म इत्यत आह– **यद्यपीति** ॥ यद्यपि वासिष्ठे व्यासः, भृगौ रामः, वृष्णिषु कृष्ण इति एक एव विष्णुस्त्रिधा त्रिविधो प्रादुर्भूतः, तथाप्येते नृपाः व्यासरामयोः विप्रत्वाद्विप्ररूपत्वान्न विरुध्यन्ते विरोधं न कुर्वन्ति ॥२३८॥

**जनार्दनीया–** ननु हर्यात्मके व्यासे भार्गवे च सति, भीष्मः किमर्थं कृष्णमेवाब्रवीदित्यत आह– **यद्यपीत्यादिना** ॥ यद्यपि प्रादुर्भूतः, तथापि एते नृपाः व्यासरामयोर्विप्रत्वात् पूजार्हाविति न विरुध्यन्ते विरोधं न कुर्वन्ति ॥२३८॥

**चट्टि–** ननु हर्यात्मके व्यासभार्गवे च सति भीष्मः किमर्थं श्रीकृष्णमेव अब्रवीत् इत्यत आह– **यद्यपीति** ॥ यद्यपि विष्णुरेक एव त्रिधा वासिष्ठभृगुवृष्णिषु प्रादुर्भूतः, तथाप्येते नृपाः व्यासरामयोः विप्रत्वात् पूजार्हाविति न विरुध्यन्ते विरोधं न कुर्वन्ति ॥२३८॥

**विप्रत्वान्न विरुध्यन्ते तत एव च युक्तताम् ।**
**मन्यन्ते न विरोधश्च तेषां तत्र हि तादृशः ॥२३९॥**

**व्यासतीर्थीया–** वासिष्ठकृष्णरामयोरेकस्याग्रपूजायां क्रियमाणायां विप्रत्वान्न विरुध्येरन् । अत एव युक्ततां च मन्येरन् । कृष्णस्य तु क्रियमाणायां विरुध्येरन्निति ॥ २३९ ॥

**वेदाङ्गतीर्थीया–** व्यासरामयोः विप्रत्वात् ताभ्यामग्र्यपूजायां दत्तायामेते नृपा न विरुध्यन्ते । तत एव विप्रत्वादेव युक्ततां मन्यन्ते च । तेषां राज्ञां तत्र व्यासरामयोर्विषये तादृशः तादृशविरोधो न, यादृशः कृष्णे इत्यर्थः ॥ २३९ ॥

**वादिराजतीर्थीया–** 'न विरोधश्च तेषां तत्र हि तादृशः' इत्यत्र तादृशः यादृशः कृष्णे युद्धादिना नृपाणां विरोधः कलहोऽस्ति, तादृशः विरोधश्च कलहोऽपि तत्र व्यासपरशुरामयोः न । अतो न पौनरुक्त्यम् ॥ २३९ ॥

**वरदराजीया–** तत एव तत्पूजायां युक्ततां मन्यन्ते । तादृशः यथा कृष्णे न तादृश इत्यर्थः विरोधाभावादविवादः ॥ २३९ ॥

**अनन्तभट्टीया–** तत एव विप्रतिपन्नत्वादेव । तत्र व्यासपरशुरामयोः । तादृशः वासुदेवे कृष्णे कृष्णविषये ।। २३९-२४२ ।।

**जनार्दनीया–** तत एव विप्रत्वादेव युक्ततां मन्यन्ते, अग्रपूजायामिति शेषः । तेषां राज्ञां तत्र व्यासरामयोर्विषये तादृशः तादृशविरोधो न : यादृशः कृष्णे इत्यर्थः ।।२३९।।

**चट्टी–** तत एव विप्रत्वादेव युक्ततां मन्यन्ते, अग्रपूजायामिति शेषः । तेषां राज्ञां तत्र व्यासरामयोः विषये तादृशः विरोधो न । यादृशः कृष्णे इत्यर्थः ।।२३९।।

**अविवादे प्रसिद्धिश्च नैवास्य भविता क्वचित् ।**
**तस्मात् कृष्णाय दातव्यमिति भीष्मेण चिन्तितम् ।।२४०।।**

**व्यासतीर्थीया–** विवादो माभूदित्यत आह– **अविवाद इति** ।। २४० ।।

**वेदाङ्गतीर्थीया–** अविवादेऽस्य कृष्णस्य प्रसिद्धिर्न भविता । कृष्णाय दत्ते राजानः अञ्जसा विवादं कुर्युः । विवादेन च वासुदेवस्य विस्तृता कीर्तिः स्यात् । तस्मात् कृष्णाय दातव्यमग्र्यार्हणमिति भीष्मेण चिन्तितम् ।। २४०-२४७ ।।

**वादिराजतीर्थीया–** 'अविवादे प्रसिद्धिश्च' इत्यत्र अविवादे कृष्णाय दत्वा विवादस्य अकारितत्वे । अस्य कृष्णस्य ।। २४०-२४६ ।।

**वरदराजीया–** अविवादे चास्य कृष्णस्य नारायणत्वप्रसिद्धिर्न भविता । तस्मादुक्तहेतोः कृष्णाय आदौ दातव्यमिति चिन्तितं निश्चितम् ।। २४० ।।

**जनार्दनीया–** अविवादे सति अस्य कृष्णस्य प्रसिद्धिर्नैव भविता, अयं नारायण इतीति शेषः । यस्मात् तस्मात् कृष्णाय दातव्यं अग्रार्हणमिति भीष्मेण चिन्तितमिति योजना ।।२४०।।

**चट्टी–** अविवादे सति अस्य श्रीकृष्णस्य क्वचित् प्रसिद्धिर्नैव भविता, अयं नारायणः इति शेषः । यस्मात् तस्मात् कृष्णाय दातव्यम्, अग्रार्हणमिति शेषः । भीष्मेण चिन्तितमिति योजना ।। २४०।।

**कृष्णाय दत्ते राजानो विवादं कुर्युरञ्जसा ।**
**विवादेन च कीर्तिः स्याद् वासुदेवस्य विस्तृता ।**
**ततः कृष्णायाग्रपूजा दत्ता पार्थैर्जगत्पुरः ।।२४१।।**

**व्यासतीर्थीया–** कृष्णाय दत्ते विवादं कुर्युः किं येन कीर्तिः स्यादित्यत आह– **कृष्णायेति** ।। ततः अनन्तरम् ।। २४१-२४३ ।।

**वरदराजीया–** यस्मात् कृष्णाय दत्ते सति राजानः विवादं कुर्युः । विवादेन च कीर्तिर्विस्तृता स्यात् । तत्तस्मात् पार्थैः कृष्णायाग्रपूजा जगतः पुरो दत्ता ।। २४१ ।।

**जनार्दनीया–** कृष्णाय दत्ते सति अञ्जसा राजानो विवादं कुर्युः । विवादेन च वासुदेवस्य विस्तृता कीर्तिः स्यात् । ततः विवादार्थम् । पुरः अग्रे ।।२४१।।

**चट्टि–** कृष्णाय दत्ते अञ्जसा राजानो विवादं कुर्युः । विवादेन च वासुदेवस्य विस्तृता कीर्तिः स्याद् । ततः विवादार्थं पार्थैः जगतां पुरः कृष्णाय अग्रपूजा दत्ता ।। २४१ ।।

**व्यासभार्गवयोः साक्षात् तदैक्यात् तदनन्तरम् ।**
**अग्र्यां पूजां ददुश्चान्यान् यथायोग्यमपूजयन् ।।२४२।।**

**वरदराजीया–** तदनन्तरं कृष्णानन्तरं व्यासभार्गवयोरग्र्यां पूजां ददुः । कुतः? साक्षात्तदैक्यात् तेन कृष्णेनात्यन्ताभेदात् । अन्यानपि यथायोग्यं भवति तत्तथा अपूजयत् ।। २५८ ।।

**जनार्दनीया–** तदनन्तरं कृष्णानन्तरं व्यासभार्गवयोः अग्र्यां पूजां ददुः, पार्था इति शेषः । तत्कुतः? साक्षात्तदैक्यात् तेन कृष्णेन अत्यन्तैक्यात् । यथायोग्यं योग्यतामनतिक्रम्येति यथायोग्यम् । तारतम्येनेति भावः । अन्यानपि ब्रह्मादीनपि ।। २४२ ।।

**ताम्रपर्णीया–** साक्षत्तदैक्यादत्यन्ताभेदात् । इन्द्रार्जुनादिवद्विशेषशून्यात् । मुख्यैक्यादिति वा । सादृश्याभेदवारणाय वा साक्षात्पदम् । तथाच व्यासभार्गवयोः कृष्णतन्मात्रत्वादनन्तरदानेऽपि अग्र्यपूजाविरोधो न एकस्यैव पुनः पुनः पूजारूपत्वादिति भावः ।। २४२-२४७ ।।

**भारतश्री–** तदेकत्वात् तयोरपि सा पूजा दत्तेत्यर्थः । लोकविडम्बनार्थं तदनन्तरं च पूजां ददुः ।। २४२-२५५ ।।

**चट्टि–** तदनन्तरं श्रीकृष्णानन्तरं व्यासभार्गवयोश्च साक्षात्तदैक्यात् कृष्णेनात्यन्ताभेदात् अग्र्यां पूजां ददुः, पार्था इति शेषः । अन्यान् ब्रह्मादीन् अपि योग्यतामनतिक्रम्य यथा योग्यं तारतम्यक्रमेण अपूजयन् ।। २४२ ।।

**अग्र्योपहार उपयापित एव कृष्णे कोपादनिन्ददमुमाशु च चेदिराजः ।**
**श्रुत्वैव तत् पवनजोऽभिययौ नृपं तं हन्तुं जगद्गुरुविनिन्दकमृद्धमन्युः ।।**

**वरदराजीया–** अग्र्योपहारे अग्रपूजायां कृष्णे कृष्णार्थं उपयापिते समर्पिते सति चेदिराजः शिशुपालोऽनिन्दत् । तं निन्दनं श्रुत्वा जगद्गुरोः कृष्णस्य निन्दकं नृपं शिशुपालं हन्तुं पवनजोऽभिययौ । कथम्भूतः? ऋद्धोऽभिवृद्धो मन्युर्यस्य स तथा ।। २४३ ।।

**अनन्तभट्टीया–** अग्र्योपहारे यापिते सत्येव ।।२४३।।

**जनार्दनीया–** कृष्णे कृष्णविषये अग्र्योपहारे अग्र्यार्हणे उपयापिते समर्पिते सति चेदिराजः शिशुपालः अमुं कृष्णमनिन्दत् । तन्निन्दनम् । जगद्गुरुविनिन्दकं जगद्गुरुः कृष्णः तस्य विनिन्दकम् । ऋद्धमन्युः अभिवृद्धकोपः ।। २४३ ।।

**चट्टि–** श्रीकृष्णे कृष्णविषये अग्र्योपहारे अग्र्यार्हणे उपयापिते समर्पिते सत्येव चेदिराजः शिशुपालः कोपादमुं श्रीकृष्णमनिन्दत् । पवनजो भीमः तन्निन्दनं श्रुत्वैव आशु ऋद्धमन्युः अभिप्रवृद्धकोपः सन् जगद्गुरोः श्रीकृष्णस्य विनिन्दकं तं नृपं शिशुपालं हन्तुमभिययौ ।। २४३ ।।

**दूरेऽपि केशवविनिन्दनकारिजिह्वामुच्छेत्स्य इत्युरुतराऽस्य सदा प्रतिज्ञा ।**
**भीमस्य तं तु जगृहे [1]सरिदात्मजोऽथ सम्प्रोच्य केशववचो निजयोर्वधाय ।।**

**व्यासतीर्थीया–** सर्वेषु स्थितेषु भीमः कस्मादुत्थित इत्यत आह– **दूरेऽपीति** ।। २४४-२४७ ।।

**वरदराजीया–** यतोऽस्य भीमस्योरुतरा प्रतिज्ञा सदाऽस्ति । किमिति? दूरेऽपि केशवस्य विनिन्दां कर्तुः जिह्वामुच्छेत्स्ये इति । तं भीमं सरिदात्मजो भीष्मः जगृहे करं गृहीत्वा निवारितवान् । किं कृत्वा? निजयोर्द्वारपालयोः वधाय यत्केशववचः तत् सम्प्रोच्य ।। २४४ ।।

**अनन्तभट्टीया–** दूरेऽपि परोक्षेऽपि । निजयोः स्वभृत्ययोः ।। २४४ ।।

**जनार्दनीया–** कृष्णविनिन्दने भीमस्य कोपे कारणमाह– **दूर इति** ।। दूरेऽपि परोक्षेऽपि विनिन्दनं करोतीति विनिन्दनकारी, केशवविनिन्दनकारिणो जिह्वामुच्छेत्स्ये उत्पाटयामीति अस्य भीमस्य उरुतरा अतिशयेन उर्वी दृढा प्रतिज्ञा, अस्तीति शेषः । सरिदात्मजः नदीजो भीष्मः निजयोः स्वद्वारपयोः केशववचः केशवोक्तं वचः भीमस्य सम्प्रोच्य, तं भीमं जगृहे ।। २४४ ।।

**चट्टि–** श्रीकृष्णनिन्दने भीमस्य कोपकारणमाह– **दूरे इति** ।। दूरेऽपि परोक्षेऽपि केशवस्य विनिन्दनं करोतीति विनिन्दकारी तस्य जिह्वामुच्छेत्स्ये उत्पाटयामीति अस्य भीमस्य सदा उरुतरा अतिशयेनोर्वी दृढा प्रतिज्ञा, अस्तीति शेषः । अथ सरिदात्मजः भीष्मः निजयोः स्वद्वारपयोः वधाय केशववचः केशवोक्तं वचः भीमस्य सम्प्रोच्य, तं भीमं जगृहे ।। २४४ ।।

**मयैव वध्याविति तावाह यत् केशवः पुरा ।**
**तच्छ्रुत्वा भीमसेनोऽपि स्थितो भीष्मकरग्रहात् ।।२४५।।**

---

१. 'तस्य भीमस्य भीष्मेण वार्यमाणस्य भारत । गुरुणा विविधैर्वाक्यैः क्रोधःप्रशममागतः । नातिचक्राम भीष्मस्य स हि वाक्यमरिन्दमः ।।' सभापर्वणि-६५.१४

**वरदराजीया–** किं तत्केशववचः? पुरा शापसमये केशवो मयैव वध्याविति जयविजयौ प्रत्याह । तद्वचः श्रुत्वा भीष्मेण स्वकरग्रहात् स्थितः ।। २४५ ।।

**अनन्तभट्टीया–** भीष्मकरग्रहात् भीष्मकृतस्वकरग्रहादित्यर्थः ।। २४५ ।।

**जनार्दनीया–** केशवोक्तं स्पष्टयति– **मयैवेति** ।। पुरा शापकाले केशवः मयैव वध्यौ, भवत इति शेषः । एवकारोऽन्ययोगव्यवच्छेदकः । इति तौ जयविजयौ यदाह तत् श्रुत्वा, भीष्मकरग्रहात् भीष्मकृतस्वकरग्रहादित्यर्थः । भीमोऽपि शत्रूणां भयङ्करोऽपि स्थितः, तूष्णीमिति शेषः ।। २४५ ।।

**चट्टि–** केशवोक्तं वचः स्पष्टयति– **मयैवेति** ।। पुरा शापकाले केशवः मयैव वध्याविति तौ जयविजयौ प्रति यद्वचः आह । एवकारः अन्ययोगव्यवच्छेदकः । तद्वचः श्रुत्वा भीमसेनोऽपि भीष्मेण स्वकरग्रहात् स्थितः ।। २४५ ।।

**जानन्नपि हरेरिष्टं स्वकर्तव्यतयोत्थितः ।**
**भीम एतावदुचितमिति मत्वा स्थितः पुनः ।।२४६।।**

**वरदराजीया–** हरेरिष्टं तद्वधं जानन्नपि स्वकर्तव्यतया प्रतिज्ञापालनार्थं उत्थितो भीम एतावदुत्थानमुचितं स्वकर्तव्यमिति मत्वा पुनः स्थितः उपविष्टोऽभूत् ।। २४६ ।।

**जनार्दनीया–** हरेरिष्टं तद्धननाभावः इष्टमिति जानन्नपि स्वकर्तव्यतया प्रतिज्ञापालनस्य स्वकर्तव्यतया उत्थितो भीमः एतावदुद्योगकरणं उचितं न तु हननमुचितमिति मत्वा, स्थितः उपविष्ट इत्यर्थः । भीष्मकरग्रहव्याजेनेति शेषः । पुनः, हननोद्योगं न चकारेति शेषः ।। २४६ ।।

**चट्टि–** हरेरिष्टं तद्धननमिष्टमिति जानन्नपि स्वकर्तव्यतया प्रतिज्ञापालनं स्वकर्तव्यतया उत्थितो भीमः एतावदुद्योगकरणमुचितं न तु हननमुचितमिति मत्वा, पुनः स्थितः उपविष्टः ।। २४६ ।।

**देवसङ्घभविनां महानभूदीक्ष्य[१] तोष इह केशवेऽधिकाम् ।**
**अर्चनां य इह मानुषो जनो मध्य एव स तु संस्थितोऽभवत् ।।२४७।।**

**वादिराजतीर्थीया–** 'देवसङ्घभविनाम्' इत्यत्र देव इव सङ्घः देवसङ्घः तत्र भवो येषामस्तीति देवसङ्घभविनः तेषाम् । उत्तमजीवानामित्यर्थः ।। २४७ ।।

**वरदराजीया–** देवसर्गे उत्पत्तिर्येषामस्तीति तथा तेषां सज्जनानां केशवे अधिकामर्चनां अग्रपूजामीक्ष्य दृष्ट्वा महाँस्तोषः सन्तोषोऽभूत् । इह सभायां यो मानुषो जनो नित्यसंसारी स तु मध्यम एव न तोषो नाप्यतोष इत्यवस्थायां स्थितः ।। २४७ ।।

---

१. 'महानभृद् वीक्ष्य' इति अन्तभट्टीयपाठः ।

**अनन्तभट्टीया–** अधिकां अर्चनां वीक्ष्य देवसङ्घभविनां सज्जीवानामित्यर्थः । मध्यः मानुषो जनः ।। २४७-२४८ ।।

**जनार्दनीया–** इह केशवे अस्मिन् कृष्णे अधिकामर्चनां अग्रयपूजामीक्ष्य, देवसङ्घभविनां देवसमूहोत्पन्नानां सतामित्यर्थः । महाँस्तोष· आनन्दोऽभूत् । इह सभायां यो मध्यः मध्यमो मानुषो जनः नित्यसंसारी जनः स तु मध्य एव मध्यावस्थायां संस्थितोऽभवत् । नित्यसंसारिणः सुखदुःख-स्वभावत्वादित्यर्थः । मध्यः मध्ये इति एवेत्यव्ययबलेन आवृत्य पदच्छेदः ।।२४७।।

**चट्टि–** देवसङ्घे भवः उत्पत्तिः येषामस्तीति ते तथा । तेषां सतामिह केशवे अस्मिन् श्रीकृष्णे अधिकामर्चनामग्रपूजामीक्ष्य महांस्तोषः आनन्दोऽभूत् । इह सभायां यः मध्यमः मानुषो जनः नित्यसंसारिजनः स तु मध्ये एव । न तोषो नाप्यपरितोषो इति तस्यामवस्थायां संस्थितः अभवत् । 'मध्य एव' इत्यत्र मध्यः मध्ये इति आवृत्या पदच्छेदः ।। २४७ ।।

**आसुरा इह सुयोधनादयस्तत्र ते विमनसो बभूविरे ।**
**दुर्वचोभिरधिकं च चेदिपः कृष्णमार्च्छदुरुसद्गुणार्णवम् ।।२४८।।**

**व्यासतीर्थीया–** दुर्वचोभिरिति इत्थम्भूतलक्षणे तृतीया । दुर्वचांसि (श्रावयन्) केश(वमधिकं दोष-मार्च्छत् प्राप) ।। २४८-२५४ ।।

**वेदाङ्गतीर्थीया–** दुर्वचोभिरिति इत्थम्भूतलक्षणे तृतीया । आर्च्छत् प्राप । दुर्वचांसि वदन् प्रापेति भावः ।। २४८-२५० ।।

**वादिराजतीर्थीया–** 'दुर्वचोभिरधिकम्' इत्यत्र दुर्वचोभिः अधिकं दोषं आर्च्छत् । 'ऋच्छ गमने' इति धातोरन्तर्णीतो णिच् । आर्च्छत् प्रापयामासेत्यर्थः ।। २४८-२५१ ।।

**सत्याभिनवीया–** तत्रैव 'दुर्वचोभिरधिकं च चेदिपः..' इति श्लोकः । तस्यार्थः- चेदिपः शिशुपालः कृष्णं दुर्वचोभिः अधिकं तिरस्कुर्वंश्च तिरस्कुवन्नेव आर्च्छत् प्रापेति । एतेन दुर्वचोभिरित्येतत् अनन्वित-मिति दूषणं निरस्तम् । तिरस्कुर्वन्नित्यध्याहृतेनान्वयस्योक्तत्वात् । एतेनैव चकारो व्यर्थ इति दूषणं परास्तम् । चकारस्य तिरस्कुर्वन्नित्यध्याहृतेनान्वयमङ्गीकृत्य अवधारणार्थस्योक्तत्वात् ।।२४८-२५२।।

**मधुसूदनीया–** इह भूमौ दुर्योधनादयः । तत्र अन्तरिक्षे असुराः कल्याद्याः मूलदैत्याः ।।२४८-२४९।।

**वरदराजीया–** इह ये सुयोधनादयो असुराः ते तत्र कार्ये विमनसो विरुद्धमनसः बभूविरे । उरुभिः सद्गुणैरर्णवं तं कृष्णं चेदिपः शिशुपालो दुर्वचोभिः अधिकं यथा भवति तथा आर्च्छत् निन्दितवान् ।।२४८।।

**जनार्दनीया–** तत्र केशवपूजाविषये विमनसः विरुद्धमनसः । चेदिपः अधिकं यथा भवति तथा । दुर्वचोभिरिति इत्थम्भूतलक्षणे तृतीया । कृष्णं आर्च्छत् प्राप । 'ऋ गतौ' इति धातुः । 'उरुसद्गुणार्णवम्' इति विशेषणेन दुर्वचसामास्पदत्वं निरस्तम् । दुर्वचांसि श्रावयन् आपेति भावः ।।२४८।।

**ताम्रपर्णीया–** दुर्वचोभिरिति इत्थम्भूतलक्षणे तृतीया । अर्च्छत् प्राप । दुर्वचांसि वदन् प्रापेति भावः । दुर्वचोभिः करणैः आर्च्छत् । सम्बन्धितवानिति वा ।।२४८-२५४।।

**चट्टि–** इह भूमौ दुर्योधनादयः तत्रान्तरिक्षे असुराः कल्याद्याः मूलदैत्याश्च ये ते विमनसः विरुद्धमनसो बभूविरे । उरुभिः सद्गुणैरर्णव इव तथा तम् । श्रीकृष्णं चेदिपः शिशुपालः अधिकं यथा भवति तथा । दुर्वचोभिरिति इत्थम्भूतलक्षणे तृतीया । आर्च्छत् प्राप । 'ऋ गतौ' इति धातुः । दुर्वचांसि श्रावयन् प्रापेति भावः ।। २४८ ।।

**समाह्वयच्च केशवं युधे तमाशु केशवः ।**
**निवार्य तस्य सायकाञ्जघान चारिणा प्रभुः ।।२४९।।**

**वरदराजीया–** युधे युद्धार्थं केशवं समाह्वयच्च । केशवस्तस्य सायकानाशु निवार्य अरिणा चक्रेण तं जघान ।। २४९ ।।

**अनन्तभट्टीया–** युधे युद्धाय । अरिणा चक्रेण ।। २४९ ।।

**जनार्दनीया–** युधे युद्धार्थम् । अरिणा चक्रेण ।। २४९ ।।

**चट्टि–** युधे युद्धार्थं केशवं समाह्वयच्च । प्रभुः श्रीकृष्णः तस्य शिशुपालस्य सायकान् निवार्य अरिणा चक्रेण तं शिशुपालं जघान च ।। २४९ ।।

**निकृत्तमानकन्धरः स भक्तिमानभूद्धरौ ।**
**तमाश्रितश्च योऽसुरो महत्तमः प्रपेदिवान् ।।२५०।।**

**वरदराजीया–** निकृत्तमानकन्धरः छिद्यमानशिराः हरौ भक्तिमानभूत् । तं जयमाश्रितो योऽसुरः महत्तमः प्रपेदिवान् प्राप्तवान् ।। २५० ।।

**अनन्तभट्टीया–** सः सज्जीवः ।। २५०-२५१ ।।

**जनार्दनीया–** निकृत्तमानकन्धरः छिन्नगलः स जयः । तं जयं आश्रितोऽसुरः अन्धन्तमः प्राप्तवानित्यर्थः ।।२५०।।

**चट्टि–** सः निकृत्तमाना छिन्ना कन्धरा ग्रीवा यस्य सः तथाभूतस्सन् हरौ भक्तिमान् अभूत् । तमाश्रितः यः असुरः स च महत्तमः प्रपेदिवान् ।। २५० ।।

**जयः प्रविश्य केशवं पुनश्च पार्षदोऽभवत् ।**
**असौ च पाण्डवक्रतुः प्रवर्तितो यथोदितः ।।२५१।।**

**वेदाङ्गतीर्थीया–** पार्षदः द्वारपालः ।। २५१ ।।

**मधुसूदनीया–** ।। **जयः प्रविश्य केशवमिति** ।। 'अथ ब्रुवत एवास्य भगवान् मधुसूदनः । व्यपाहरच्छिरः क्रुद्धः चक्रेणाऽमित्रकर्शनः ।। ततश्चेदिपतेर्देहात् तेजोऽग्र्यं ददृशुर्नृपाः । उत्पतन्तं महाराज गगनादिव भास्करम् ।। ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् । ववन्दे च तदा तेजो विवेश च नराधिप ।। तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः । यद्विवेश महाबाहुं...।।' इत्यादि सभापर्वोक्तेः (७०.५१-५३) । तात्पर्यमुक्तमिति बोध्यम् ।। २५१-२६८ ।।

**वरदराजीया–** जयश्च केशवं प्रविश्य पुनः पार्षदो द्वारपोऽभूत् । यथोदितो व्यासेन तथा प्रवर्तितः ।।

**जनार्दनीया–** जयः केशवं कृष्णं प्रविश्य, इदानीमिति शेषः । कृष्णे स्वलोकं प्राप्ते सति पुनः पार्षदः द्वारपालोऽभवदित्यध्याहारेण योज्यम् । असौ क्रतुः राजसूयः यथोदितः येन प्रकारेण राजसूयविधिः उक्तः तथा पाण्डवैः प्रवर्तितः ।।२५१।।

**भावचन्द्रिका–** *..पुनरित्युक्त्या पूर्वोक्तविजयवदेवेति ज्ञेयम् ।। २५१ ।।

**चट्टि–** जयः केशवं श्रीकृष्णं प्रविश्य, इदानीमिति शेषः । श्रीकृष्णे स्वलोकं प्राप्ते सति पुनश्च पार्षदः द्वारपालः अभवदित्याद्यध्याहारेण योज्यम् । असौ क्रतुः राजसूयश्च यथोदितः येन प्रकारेण राजसूयविधिरुक्तः तथा पाण्डवैः प्रवर्तितः । 'जयः प्रविश्य केशवम्' इत्यत्र 'अथ ब्रुवत एवास्य भगवान् मधुसूदनः । व्यपाहरच्छिरः क्रुद्धः चक्रेणाऽमित्रकर्शनः ।। ततश्चेदिपतेर्देहात् तेजोऽग्र्यं ददृशुर्नृपाः । उत्पतन्तं महाराज गगनादिव भास्करम् ।। ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् । ववन्दे च तदा तेजो विवेश च नराधिप ।। तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः । यद्विवेश महाबाहुं..।।' इत्यादि सभापर्वोक्तेः तात्पर्यमुक्तमिति भावः ।।२६६।।

> **सुवर्णरत्नभारकान् बहून् नृपा उपानयन् ।**
> **उपायनं[१] सुयोधनं नृपोऽदिशद् ग्रहेऽस्य च ।।२५२।।**

**वेदाङ्गतीर्थीया–** अस्य उपायनस्य ग्रहे ग्रहणे ।। २५२ ।।

**वादिराजतीर्थीया–** 'ग्रहेऽस्य च' इत्यत्र ग्रहे ग्रहणे ।। २५२-२५४ ।।

**सत्याभिनवीया–** तत्रैव 'सुवर्णरत्नभारकान् बहून् ..' इति श्लोकः । तस्यार्थः- नृपाः बहून् सुवर्णरत्न-भारकान् उपानयन् । नृपैः यद्यत् उपायनमानीतं तस्यास्य सर्वस्य ग्रहे ग्रहणार्थं नृपः सुयोधनमदिशदिति । एतेन उपायनमित्यस्य एकवचनान्तत्वेन बहून् सुवर्णरत्नभारकानित्यनेनान्वयायोगात् अनन्वितमिति दूषणं परास्तम् । यदित्यादेरध्याहारमङ्गीकृत्यान्वयस्योक्तत्वात् ।।२५२-२६७।।

---

१. 'उपायनं' इति जनार्दनीयपाठः ।

**वरदराजीया–** आगताः नृपाः वहून् सुवर्णरत्नभारकान् उपायनं पार्थानामुपानयन् । अस्योपायनस्य ग्रहे सङ्ग्रहे सुयोधनमादिशत् ।। २५२ ।।

**अनन्तभट्टीया–** उपायनं उपानयन् । अस्योपायनस्य ग्रहे ग्रहणे ।। २५२-२५३ ।।

**जनार्दनीया–** उपायने विषये । सुवर्णरत्नभारकान् उपानयन् । अस्य उपायनस्य ग्रहे ग्रहणे नृपो युधिष्ठिरः सुयोधनमादिशत् ।।२५२।।

**भावचन्द्रिका–** ।। **सुयोधनमिति** ।। क्षत्रियपूजने सञ्जयः, दक्षिणादाने कृपः, दुर्योधनस्तु अर्हणानि प्रतिजग्राह सर्वदा इति भारते ।। २५२-३१० ।।

**चट्टि–** नृपाः वहून् सुवर्णरत्नभारकांश्चोपायनमुपानयन् नृपो युधिष्ठिरो अस्य उपायनस्य ग्रहे ग्रहणे सुयोधनं अदिशच्च ।। २५२ ।।

**अभोजयंस्तथा द्विजान् [1]यथेष्टभक्ष्यभोज्यकैः ।**
**सुवर्णरत्नभारकान् बहूंश्च [2]दक्षिणा ददुः ।।२५३।।**

**वेदाङ्गतीर्थीया–** वहून् सुवर्णरत्नभारकान् ।। २५३ ।।

**वरदराजीया–** यथेष्टभक्ष्यभोज्यकैरन्नैः द्विजानभोजयन् । सुवर्णरत्नभारकान् वहून् दक्षिणा द्विजेभ्यः ददुः ।। २५३ ।।

**जनार्दनीया–** ददुः, द्विजेभ्य इति शेषः ।।२५३।।

**चट्टि–** पार्थाः यथेष्टभक्ष्यभोज्यकैः द्विजान् अभोजयन् । तथा वहून् सुवर्णरत्नभारकान् दक्षिणां च ददुः ।।२६८।।

**यदिष्टमास यस्य तत् प्रदत्तमेव पाण्डवैः ।**
**समस्तमत्र सर्वशोऽथ सम्रुरुद्धता[3] मुदा ।।२५४।।**

**वेदाङ्गतीर्थीया–** तत् समस्तम् ।। २५४ ।।

**वरदराजीया–** अत्र यज्ञे यस्य यदिष्टं अपेक्षितमास, तत्समस्तमेव प्रदत्तम् । अथानन्तरं मुदा हर्षेणोद्धृताः परिपूर्णाः सम्रुरवभृतं स्नातवन्तः ।। २५४ ।।

---

१. 'विविधान्यन्नपानानि लेह्यानि विविधानि च । तेषां नृपोपभोग्यानि ब्राह्मणेभ्यो ददुः स्म ते ।। नानाविधानि भक्ष्याणि स्वादुपुण्यफलानि च । गुडानि स्वादुक्षौद्राणि ददुस्ते ब्राह्मणेषु वै ।। सभापर्वणि- ७१.१९.-२०.

२. 'निष्कहेमजभाण्डानि भूषणानि च सर्वशः । प्रददौ तत्र विप्राणां धर्मराजो युधिष्ठिरः ।।' सभापर्वणि-७१.४९..

३. 'सम्रुरुद्धताः' इति जनार्दनीय-चट्टीपाठः ।

**अनन्तभट्टीया–** ।। **समस्तमिति** ।। दृष्टमिति शेषः ।। २५४ ।।

**जनार्दनीया–** अत्र यज्ञे अस्य अतिथेः यदिष्टमपेक्षितमास तत्समस्तं पाण्डवैः प्रदत्तमेव । अथ यज्ञ-समाप्त्यनन्तरं सर्वशः सबान्धवाः पाण्डवाः मुदा उद्धताः परिपूर्णा इत्यर्थः । सस्नुः अवभृतस्नानं चक्रुः ।।२५४।।

**चट्टि–** अत्र यज्ञे यस्यातिथेः यदिष्टमपेक्षितमास । तत्समस्तं च पाण्डवैः प्रदत्तमेव । अथ यज्ञसमाप्त्य-नन्तरं सर्वशः सबान्धवाः पाण्डवाः मुदा उद्धताः परिपूर्णा इत्यर्थः । सस्नुः अवभृथस्नानं चक्रुः ।।२५४।।

**नदत्सुरोरुदुन्दुभिप्रगीतदेवगायकाः[1]।**
**प्रनृत्तदिव्ययोषितः [2]सुरापगां व्यगाहयन्** ।।२५५।।

**व्यासतीर्थीया–** प्रकृष्टं गीतं येषां ते प्रगीताः ।। २५५-२६१ ।।

**वेदाङ्गतीर्थीया–** नदन्तः सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः, प्रकृष्टं गीतं येषां ते प्रगीताः, प्रगीताः देवगायका येषां ते प्रगीतदेवगायकाः, नदत्सुरोरुदुन्दुभयश्च ते प्रगीतदेवगायकाश्च नदत्सुरोरु-दुन्दुभिप्रगीतदेवगायकाः ।। २५५-२५७ ।।

**वादिराजतीर्थीया–** 'नदत्सुरोरुदुन्दुभिप्रगीतदेवगायकाः' इत्यत्र नदन्तः सुरोरुदुन्दुभयः प्रकृष्टगीतानि च येषां ते तथोक्ताः । ते च ते देवगायकाश्च । प्रकृष्टं नृत्तं यासां ताः तथोक्ताः । ताश्च ताः दिव्ययोषितश्च नृत्तगानवादित्रध्वनिं कुर्वन्तः सुरापगां व्यगाहयन्निति योजना ।। २५५-२६५ ।।

**वरदराजीया–** नदन्तः सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः, प्रकृष्टं गीतं येषां ते तथा, ते च ते देवगायकाश्च येषां ते तथा । ततः पूर्वविशेषणेन कर्मधारयप्रवृत्तिः । प्रनृत्ताः दिव्ययोषितः येषां ते तथा । सुरापगां गङ्गां व्यगाहयन् ।। २५५ ।।

**अनन्तभट्टीया–** 'सर्वशः सर्वे सस्नुः' इत्युक्तं विवृणोति– **नदत्स्विति** ।। प्रकृष्टं गीतं येषां ते तथा ।। २५५-२५९ ।।

**जनार्दनीया–** नदन्तः शब्दं कुर्वन्तः, सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः, प्रकृष्टं गीतं येषां ते तथा, प्रगीताः देवगायकाः येषां ते प्रगीतदेवगायकाः, नदत्सुरोरुदुन्दुभयश्च ते प्रगीतदेवगायकाश्चेति

---

१. 'गन्धर्वगणसंकीर्णः शोभितोऽप्सरसांगणैः । देवैर्मुनिगणैर्यक्षैः देवलोक इवापरः ।। स किंपुरुषगीतैश्च किन्नरै-रुपशोभितः । नारदश्च जगौ तत्र तुम्बुरुश्च महाद्युतिः ।। विश्वावसुश्चित्रसेनस्तथाऽन्ये गीतकोविदाः । रमयन्ति स्म तान् सर्वान् यज्ञकर्मान्तरेष्वथ ।।' सभापर्वणि- ७१.३८-४०.

२. 'ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतमहार्हणदक्षिणाभिः । चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्तत-स्त्ववभृथस्नपनं द्युनद्याम् ।।' इति भागवते- १०.८३.८.

**वरदराजीया–** आगताः नृपाः बहून् सुवर्णरत्नभारकान् उपायनं पार्थानामुपानयन् । अस्योपायनस्य ग्रहे सङ्ग्रहे सुयोधनमादिशत् ।। २५२ ।।

**अनन्तभट्टीया–** उपायनं उपानयन् । अस्योपायनस्य ग्रहे ग्रहणे ।। २५२-२५३ ।।

**जनार्दनीया–** उपायने विषये । सुवर्णरत्नभारकान् उपानयन् । अस्य उपायनस्य ग्रहे ग्रहणे नृपो युधिष्ठिरः सुयोधनमादिशत् ।।२५२।।

**भावचन्द्रिका–** ।। **सुयोधनमिति** ।। क्षत्रियपूजने सञ्जयः, दक्षिणादाने कृपः, दुर्योधनस्तु अर्हणानि प्रतिजग्राह सर्वदा इति भारते ।। २५२-३१० ।।

**चट्टि–** नृपाः बहून् सुवर्णरत्नभारकांश्चोपायनमुपानयन् नृपो युधिष्ठिरो अस्य उपायनस्य ग्रहे ग्रहणे सुयोधनं अदिशच्च ।। २५२ ।।

**अभोजयंस्तथा द्विजान् [1]यथेष्टभक्ष्यभोज्यकैः ।**
**सुवर्णरत्नभारकान् बहूंश्च [2]दक्षिणा ददुः ।।२५३।।**

**वेदाङ्गतीर्थीया–** बहून् सुवर्णरत्नभारकान् ।। २५३ ।।

**वरदराजीया–** यथेष्टभक्ष्यभोज्यकैरन्नैः द्विजानभोजयन् । सुवर्णरत्नभारकान् बहून् दक्षिणा द्विजेभ्यः ददुः ।। २५३ ।।

**जनार्दनीया–** ददुः, द्विजेभ्य इति शेषः ।।२५३।।

**चट्टि–** पार्थाः यथेष्टभक्ष्यभोज्यकैः द्विजान् अभोजयन् । तथा बहून् सुवर्णरत्नभारकान् दक्षिणां च ददुः ।।२६८।।

**यदिष्टमास यस्य तत् प्रदत्तमेव पाण्डवैः ।**
**समस्तमत्र सर्वशोऽथ सस्नुरुद्धता[3] मुदा ।।२५४।।**

**वेदाङ्गतीर्थीया–** तत् समस्तम् ।। २५४ ।।

**वरदराजीया–** अत्र यज्ञे यस्य यदिष्टं अपेक्षितमास, तत्समस्तमेव प्रदत्तम् । अथानन्तरं मुदा हर्षेणोद्धृताः परिपूर्णाः सस्नुरवभृतं स्नातवन्तः ।। २५४ ।।

---

१. 'विविधान्यन्नपानानि लेह्यानि विविधानि च । तेषां नृपोपभोग्यानि ब्राह्मणेभ्यो ददुः स्म ते ।। नानाविधानि भक्ष्याणि स्वादुपुण्यफलानि च । गुडानि स्वादुक्षौद्राणि ददुस्ते ब्राह्मणेषु वै ।। सभापर्वणि- ७१.१९.-२०.

२. 'निष्कहेमजभाण्डानि भूषणानि च सर्वशः । प्रददौ तत्र विप्राणां धर्मराजो युधिष्ठिरः ।।' सभापर्वणि-७१.४०..

३. 'सस्नुरुद्धताः' इति जनार्दनीय-चट्टीपाठः ।

**अनन्तभट्टीया–** ।। **समस्तमिति** ।। दृष्टमिति शेषः ।। २५४ ।।

**जनार्दनीया–** अत्र यज्ञे अस्य अतिथेः यदिष्टमपेक्षितमास तत्समस्तं पाण्डवैः प्रदत्तमेव । अथ यज्ञ-समाप्त्यनन्तरं सर्वशः सबान्धवाः पाण्डवाः मुदा उद्धताः परिपूर्णा इत्यर्थः । सस्नुः अवभृतस्नानं चक्रुः ।।२५४।।

**चट्टि–** अत्र यज्ञे यस्यातिथेः यदिष्टमपेक्षितमास । तत्समस्तं च पाण्डवैः प्रदत्तमेव । अथ यज्ञसमाप्त्य-नन्तरं सर्वशः सबान्धवाः पाण्डवाः मुदा उद्धताः परिपूर्णा इत्यर्थः । सस्नुः अवभृथस्नानं चक्रुः ।।२५४।।

**नदत्सुरोरुदुन्दुभिप्रगीतदेवगायकाः[1]।**
**प्रनृत्तदिव्ययोषितः [2]सुरापगां व्यगाहयन् ।।२५५।।**

**व्यासतीर्थीया–** प्रकृष्टं गीतं येषां ते प्रगीताः ।। २५५-२६१ ।।

**वेदाङ्गतीर्थीया–** नदन्तः सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः, प्रकृष्टं गीतं येषां ते प्रगीताः, प्रगीताः देवगायका येषां ते प्रगीतदेवगायकाः, नदत्सुरोरुदुन्दुभयश्च ते प्रगीतदेवगायकाश्च नदत्सुरोरु-दुन्दुभिप्रगीतदेवगायकाः ।। २५५-२५७ ।।

**वादिराजतीर्थीया–** 'नदत्सुरोरुदुन्दुभिप्रगीतदेवगायकाः' इत्यत्र नदन्तः सुरोरुदुन्दुभयः प्रकृष्टगीतानि च येषां ते तथोक्ताः । ते च ते देवगायकाश्च । प्रकृष्टं नृत्तं यासां ताः तथोक्ताः । ताश्च ताः दिव्ययोषितश्च नृत्तगानवादित्रध्वनिं कुर्वन्तः सुरापगां व्यगाहयन्निति योजना ।। २५५-२६५ ।।

**वरदराजीया–** नदन्तः सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः, प्रकृष्टं गीतं येषां ते तथा, ते च ते देवगायकाश्च येषां ते तथा । ततः पूर्वविशेषणेन कर्मधारयप्रवृत्तिः । प्रनृत्ताः दिव्ययोषितः येषां ते तथा । सुरापगां गङ्गां व्यगाहयन् ।। २५५ ।।

**अनन्तभट्टीया–** 'सर्वशः सर्वे सस्नुः' इत्युक्तं विवृणोति– **नदत्स्विति** ।। प्रकृष्टं गीतं येषां ते तथा ।। २५५-२५९ ।।

**जनार्दनीया–** नदन्तः शब्दं कुर्वन्तः, सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः, प्रकृष्टं गीतं येषां ते तथा, प्रगीताः देवगायकाः येषां ते प्रगीतदेवगायकाः, नदत्सुरोरुदुन्दुभयश्च ते प्रगीतदेवगायकाश्चेति

---

१. 'गन्धर्वगणसंकीर्णः शोभितोऽप्सरसांगणैः । देवैर्मुनिगणैर्यक्षैः देवलोक इवापरः ।। स किंपुरुषगीतैश्च किन्नरै-रुपशोभितः । नारदश्च जगौ तत्र तुम्बुरुश्च महाद्युतिः ।। विश्वावसुश्चित्रसेनस्तथाऽन्ये गीतकोविदाः । रमयन्ति स्म तान् सर्वान् यज्ञकर्मान्तरेष्वथ ।।' सभापर्वणि- ७१.३८-४०.

२. 'ऋत्विक्सदस्यबहुवित्सु सुहृत्तमेषु स्विष्टेषु सूनृतमहार्हणदक्षिणाभिः । चैद्ये च सात्वतपतेश्चरणं प्रविष्टे चक्रुस्तत-स्त्ववभृथस्नपनं द्युनद्याम् ।।' इति भागवते- १०.८३.८.

तथा । प्रनृत्ताः नृत्यं कुर्वन्त्यः, दिव्याः योषितः येषां ते तथा । पार्थाः सुरापगां गङ्गाम्, प्रति गत्वेति शेषः । व्यगाहयन् 'स्रष्टारं सर्वलोकानां स्मृत्वा' (स.स्मृति–४) इत्याद्यवगाहविधिविशेषविधिना अवगाहयन् । अघमर्षणं चक्रुः ।।२५५।।

**ताम्रपर्णीया–** नदन्तः सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः । प्रकृष्टं गीतं गानं येषां ते प्रगीताः, प्रगीताः देवगायका येषां ते प्रगीतदेवगायकाः । ततः कर्मधारय इति द्रष्टव्यम् ।।२५५-२६२।।

**चट्टि–** नदन्तः शब्दं कुर्वन्तः सुरोरुदुन्दुभयो येषां ते नदत्सुरोरुदुन्दुभयः, प्रकृष्टं गीतं येषां ते तथा, प्रगीताः देवगायकाः येषां ते प्रगीतदेवगायकाः, नदत्सुरोरुदुन्दुभयश्च ते प्रगीतदेवगायकाश्चेति । प्रनृत्ताः दिव्ययोषितो येषां ते तथा । पार्थाः सुरापगां गङ्गाम्, प्रति गत्वेति शेषः । व्यगाहयन् ।। २५५ ।।

**समस्तराजसंयुता विगाह्य जाह्नवीजले ।**
**पुरं ययुः पुनश्च ते स्वसद्म चागमन् सुराः ।।२५६।।**

**वरदराजीया–** समस्तराजसंयुताः पाण्डवाः जाह्नवीजले विगाह्य अवगाह्य पुनः स्वपुरं ययुः । सुराश्च स्वसद्म स्वलोकमगमन् ।। २५६ ।।

**जनार्दनीया–** ते पार्थाः । विगाह्य स्नात्वा । पुरं शक्रप्रस्थम् । सुराः यज्ञार्थमागताः सुराः । स्वसद्म स्वलोकम् ।।२५६।।

**भारतश्री–** ।। **विगाह्य जाह्नवीजल इति** ।। इन्द्रप्रस्थात् अवभृतार्थं जाह्नवीं गता इति ज्ञातव्यम् ।। २५६-२६५ ।।

**चट्टि–** ते पार्थाः समस्तराजसंयुताः सन्तः जाह्नवीजले विगाह्य स्नात्वा पुनश्च पुरं शक्रप्रस्थमाययुः । सुराश्च स्वसद्म स्वलोकमगमन् ।। २५६ ।।

**[1]गतेषु सर्वराजसु [2]स्वकां पुरं स्वकेषु च ।**
**सभीष्मकेषु सर्वशः सहाऽम्बिकेयकेषु च ।।२५७।।**

**वरदराजीया–** सर्वराजसु स्वकां पुरं गतेषु भीष्मकेषु सहाम्बिकेयकेषु स्वकेषु च सर्वशः गतेषु सत्सु ।।२५७।।

**जनार्दनीया–** सर्वराजसु स्वकं पुरं गतेषु सत्सु, सभीष्मकेषु सहाम्बिकेयकेषु सर्वशः स्वकेषु स्वकं पुरं गतेषु सत्सु ।। २५७ ।।

---

१. 'अन्वगच्छन् तथैवान्यान् क्षत्रियान् क्षत्रियर्षभाः । एवं सुपूजितास्सर्वे जग्मुर्विप्राः सहस्रशः ।' सभापर्वणि-७२.१९.
२. 'स्वकं पुरं' इति जनार्दनीयपाठः ।

**चट्टि–** सर्वराजसु च स्वकां पुरं गतेषु सत्सु सभीष्मकेषु सहाम्बिकेयकेषु च सर्वशः स्वकेषु स्वकं पुरं गतेषु सत्सु ।। २५७।।

**विचित्ररत्ननिर्मिते रविप्रभे [१]सभातले ।**
**सकेशवो वरासने विवेश धर्मनन्दनः ।।२५८।।**

**वरदराजीया–** धर्मनन्दनः विचित्ररत्ननिर्मिते, अत एव रविप्रभे सभातले तत्रापि वरासने सकेशवः सकृष्णः विवेश ।।२५८।।

**जनार्दनीया–** विचित्ररत्नकारिते, मयेनेति शेषः ।।२५८।।

**चट्टि–** धर्मनन्दनः विचित्ररत्नैर्निर्मिते, मयेनेति शेषः । अतः रविप्रभे सभातले वरासने सकेशवः सकृष्णः सन् विवेश ।। २५८ ।।

**तथैव रुक्मिणीमुखाः परिग्रहा रमेशितुः ।**
**तथैव भीमफल्गुनावुपाविशन् हरेरुप ।।२५९।।**

**वेदाङ्गतीर्थीया–** तथैव रुक्मिणीमुखाः रमेशितुः परिग्रहाः भार्याः तथा भीमफल्गुनौ हरेरुपैव उपाविशन् ।। २५९ ।।

**वरदराजीया–** तथैव रुक्मिणीमुखाः रमेशितुः परिग्रहाः याः महिष्यः तथा भीमफल्गुनौ च हरेः कृष्णस्योप समीपे आविशन्नुपविष्टौ ।। २५९ ।।

**जनार्दनीया–** परिग्रहाः भार्याः । तथैव भीमफल्गुनौ हरेरुप कृष्णस्य समीपे उपाविशन् उपविष्टाः ।।२५९।।

**चट्टि–** तथैव रुक्मिणीमुखाः रमेशितुः श्रीकृष्णस्य परिग्रहाः भार्याः तथैव भीमफल्गुनौ च हरेः श्रीकृष्णस्य उप समीपे उपाविशन् उपविष्टाः ।। २५९ ।।

**सहैव वायुसूनुना तथैव पार्षतात्मजा ।**
**उपैव रुक्मिणीं शुभां तथैव सत्यभामिनीम्[२] ।।२६०।।**

**वेदाङ्गतीर्थीया–** ससत्यभामिनीं सत्यभामासहितां रुक्मिणीम् ।। २६०-२६१ ।।

---

१. 'सभायां मयक्लृप्तायां क्वापि धर्मसुतो विराट् । वृतोऽनुजैर्बन्धुभिश्च कृष्णेनापि स्वचक्षुषा ।। आसीनः काञ्चने साक्षादासने मघवानिव । पारमेष्ठ्यश्रिया जुष्टः स्तूयमानश्च वन्दिभिः ।।' भागवते-१०.८३.३४-३५.

२. 'तथा ससत्यभामिनीम्' इति वेदाङ्गतीर्थपाठः स्यात् ।

**वरदराजीया–** वायुसूनुना भीमेन सह पार्षतात्मजा द्रौपदी । रुक्मिणीं तथा सत्यभामां उप समीपे उपविष्टाः ।। २६० ।।

**अनन्तभट्टीया–** उप समीपे रुक्मिणीं तथा सत्यभामाम् । उप अनुसृत्येत्यर्थः ।। २६० ।।

**जनार्दनीया–** वायुसूनुना सहैव सहिता पार्षतात्मजा द्रौपदी । सत्यभामिनीं रुक्मिणीं उपैव, उपविष्टेति शेषः ।।२६०।।

**चट्टि–** तथैव वायुसूनुना भीमसेनेन सहैव सहिता पार्षतात्मजा द्रौपदी शुभां रुक्मिणीं सत्यभामिनीं चोपैव, उपविष्टेति शेषः ।। २६० ।।

**यमौ च पार्षतात्मजो धनञ्जयान्तिकेऽविशन् ।**
**तथैव रामसात्यकी समीप एव भूभृतः ।।२६१।।**

**वरदराजीया–** यमौ नकुलसहदेवौ पार्षतात्मजो धृष्टद्युम्नो धनञ्जयस्यार्जुनस्यान्तिके समीपे आविशन् उपविष्टाः । तथैव रामसात्यकी भूभृतो युधिष्ठिरस्य समीप एव समासतां उपविष्टावित्यर्थः ।। २६१ ।।

**अनन्तभट्टीया–** भूभृतः धर्मराजस्य ।।२६१।।

**जनार्दनीया–** यमौ पार्षतादयः धृष्टद्युम्नादयो बान्धवाः अविशन् उपाविष्टाः । भूभृतो युधिष्ठिरस्य समीपे रामसात्यकी समासताम् ।।२६१-२६२।।

**चट्टि–** यमौ नकुलसहदेवौ पार्षतात्मजो धृष्टद्युम्नश्च धनञ्जयान्तिके अर्जुनसमीपे अविशन् उपविष्टाः । तथैव रामसात्यकी भूभृतः युधिष्ठिरस्य समीप एव समासताम् ।। २६१ ।।

**समासतां तु सा सभा व्यरोचताधिकं तदा ।**
**यथा सभा स्वयम्भुवः समास्थिता च विष्णुना ।।२६२।।**

**व्यासतीर्थीया–** समासतां समासाताम् । आकारस्य अकारो वर्णविकारः ।। २६२ ।।

**वेदाङ्गतीर्थीया–** समासताम् (उपाविशताम्) ।। २६२ ।।

**वरदराजीया–** तदा तस्यां अवस्थायां सा सभा अधिकं यथा भवति तथा व्यरोचत । यथा विष्णुना समास्थिता स्वयम्भुवो ब्रह्मणः सभा तथेत्यर्थः ।। २६२ ।।

**अनन्तभट्टीया–** समासतां निविशतामित्यर्थः ।। २६२ ।।

**लघ्वनन्तभट्टीया–** विदुषां विशतामित्यर्थः ।। २६२।।

**चट्टि–** तदा सभा अधिकं यथा भवति तथा व्यराजत । विष्णुना समास्थिता स्वयम्भुवो ब्रह्मणः सभा यथा तथा व्यराजतेत्यर्थः ।। २६२ ।।

**विचित्रहेममालिनः शुभाम्बराश्च तेऽधिकम् ।**
**स्फुरत्किरीटकुण्डला विरेजुरत्र ते नृपाः ।।२६३।।**

**व्यासतीर्थीया–** ते ते नृपा इति वीप्सायां द्विरुक्तिः ।। २६३-२७२ ।।

**वेदाङ्गतीर्थीया–** ते प्रसिद्धाः कुलवीर्यज्ञानादिगुणैः प्रसिद्धा इत्यर्थः ।। २६३-२६५ ।।

**वरदराजीया–** अत्र सभायां विचित्रहेममालाः येषां ते विचित्रहेममालिनः । शुभान्यम्बराणि येषां ते शुभाम्बराः । स्फुरन्ति किरीटानि कुण्डलानि येषां ते तथा । एवम्भूतास्ते नृपाः अत्र सभायां अधिकं विरेजुः । ते इति वीप्सायां सर्वेषां विराजनं सूचयति ।। २६३ ।।

**अनन्तभट्टीया–** ते ते नृपाः विरेजुः । ते ते इत्यनेन प्रत्येकं विराजनं सूचयति ।। २६३-२६४ ।।

**जनार्दनीया–** विचित्राः आश्चर्याः, हेममाला सुवर्णमाला विद्यन्ते येषां ते तथा । शुभाम्बराः शुभवस्त्राः । स्फुरन्ति दीप्यमानानि, किरीटकुण्डलानि येषां ते तथा । ते प्रसिद्धाः कुलवीर्यज्ञानादिगुणैः प्रसिद्धा इत्यर्थः । ते नृपाः सभायां उपविष्टा नृपाः अत्र सभायां अधिकं यथा भवति तथा विरेजुः ।।२६३।।

**ताम्रपर्णीया–** ते ते नृपा इति वीप्सायां द्विरुक्तिः ।। २६३-२८१ ।।

**चट्टि–** अत्र सभायां विचित्राः आश्चर्याः हेममालाः येषां सन्तीति तथा । शुभाम्बराः शुभवस्त्राः सन्तः स्फुरन्ति दीप्यमानानि किरीटकुण्डलानि येषां ते तथा । ते प्रसिद्धाः कुलवीर्यज्ञानादिगुणैः प्रसिद्धा इत्यर्थः । ते नृपाः सभायां उपविष्टा नृपाः अधिकं यथा भवति तथा विरेजुः ।। २६३ ।।

**विशेषतो जनार्दनः सभार्यको जगत्प्रभुः ।**
**यथा दिवौकसां सदस्यनन्तसद्गुणार्णवः ।।२६४।।**

**वरदराजीया–** जनार्दनो विशेषतो विरेजे । यथा दिवौकसां ब्रह्मादिदेवानां सदसि सभायां अनन्तैः सद्गुणैरर्णव इव विष्णुर्यथा तथेत्यर्थः ।। २६४ ।।

**जनार्दनीया–** जनार्दनो, विरेजे इति शेषः । दिवौकसां देवानाम् ।।२६४।।

**चट्टि–** अनन्तसद्गुणार्णवः जगत्प्रभुः सभार्यकः जनार्दनः श्रीकृष्णः दिवौकसां देवानां सदसि यथा तथा विशेषतः, विरेजे इति शेषः ।। २६४ ।।

**[1]उपासिरे च तं नृपाः समस्तशः सुहृद्गणाः ।**
**तदाऽऽजगाम खड्गभृत् सहानुजः सुयोधनः ॥२६५॥**

**वरदराजीया–** तं कृष्णं समस्तशो नृपाः सुहृद्गणाश्चोपासिरे उपासितवन्तः । तदा तस्यां दशायां खड्गभृत् खड्गधरो भूत्वा सुयोधनः सहानुजः अनुजैः सहितः आजगाम, सभां प्रतीति शेषः ॥ २६५ ॥

**अनन्तभट्टीया–** तं कृष्णम् ॥ २६५ ॥

**जनार्दनीया–** नृपाः सुहृद्गणाश्च तं कृष्णं उपासिरे उपासनं चक्रुरित्यर्थः । तदा तस्मिन्नवसरे ॥२६५॥

**चट्टि–** समस्तशो नृपाः सुहृद्गणाश्च तं श्रीकृष्णं उपासिरे उपासनं चक्रुरित्यर्थः । तदा तस्मिन् काले सहानुजः खड्गभृत् सुयोधन आजगाम ॥ २६५ ॥

**द्वारं सभाया हरिनीलरश्मिव्यूढं न जानन् स विहाय भित्तिम् ।**
**अभ्यन्तराणां [2]दृशिनोऽविघातिनीं संस्फाटिकामाशु दृढं चुचुम्बे[3] ॥२६६॥**

**वेदाङ्गतीर्थीया–** व्यूढमाच्छन्नम् । अभ्यन्तराणां सभान्तर्वर्तिनां दृशि दर्शने नो विघातिनीं अप्रतिवन्धिनीं भित्तिं चुचुम्ब ॥ २६६ ॥

**वादिराजतीर्थीया–** 'अभ्यन्तराणां दृशि' इत्यत्र अभ्यन्तराणां दृशि दर्शने ॥ २६६-२८१ ॥

**वरदराजीया–** स सुयोधनः सभायाः द्वारं विहाय भित्तिं चुचुम्बे प्रतिहतवानिति सम्बन्धः । अद्वारे द्वारबुद्ध्या भित्तौ द्वारबुद्ध्या गच्छन् द्वारं प्रतिहतवानित्यर्थः । ननु द्वारे अद्वारभ्रमः केन निमित्तेनेत्यत उक्तम्– **हरिनीलरश्मिव्यूढमिति** ।। हरिनीलानां इन्द्रनीलमणीनां रश्मिभिर्व्यूढं छन्नमित्यर्थः । तर्हि भित्तौ कथं द्वारप्रत्ययः येन चुचुम्बेत्युच्यत इत्यत उक्तम्– **अभ्यन्तरेति** ।। अभ्यन्तराणां भित्तिव्यवहितानां सभासन्निविष्टानां दृशिनो ज्ञानस्य अविघातिनीं भित्तिम् । यद्वा दृशीति सप्तम्यन्तम् । दृष्टिविषये नो सम्यग्दृष्टिविघातिनीमित्यर्थः । ननु भित्तिरभ्यन्तराणां दर्शने कथमप्रतिबन्धका स्वव्यवहितपदार्थ-ज्ञानप्रतिवन्धकत्वदर्शनात् इत्यतो विशेषणान्तरेण भित्तिं विशिनष्टि– **संस्फाटिकामिति** ।। समीचीन-स्फाटिकामयीमित्यर्थः । अतोऽभ्यन्तरपदार्थज्ञानाप्रतिवन्धकत्वं तद्भित्तेर्युक्तमिति भावः ।।२६६।।

**अनन्तभट्टीया–** व्यूढं व्याप्तं छन्नमित्यर्थः । द्वारं विहाय भित्तिं चुचुम्बे प्रतिहतवानित्यर्थः । ननु भित्तिं कथं न जानातीत्यत आह– **अभ्यन्तराणामिति** ।। अभ्यन्तराणां भित्तेरन्तस्थितानां वस्तूनां दृशिनः ज्ञानस्य अविघातिनीम् । अथवा दृशीति छेदः । दृग्विषये भित्यन्तस्थितवस्तुपरिज्ञानाद् द्वारवुद्धिर्जात इत्यर्थः । अभ्यन्तरवस्त्वपरिज्ञाने निमित्तम्– **संस्फाटिकामिति** ।। २६६ ।।

---

१. 'तत्र दुर्योधनो मानी परीतो भ्रातृभिः प्रियैः । किरीटमाली न्यविशदसिहस्तः क्षिपन् रुषा ।।' भागवते-१०.८४.१.

२. 'दृशि नो विघातिनीम्' इति वेदाङ्गतीर्थीय-वादिराजतीर्थीय-वरदराजीयपाठः ।

३. 'दृढं चुचुम्ब' इति वेदाङ्गतीर्थीयपाठः । भारतश्रीपाठोऽपि तथैव ।

**जनार्दनीया–** स सुयोधनः हरिनीलरश्मिव्यूढं इन्द्रनीलमणिदीप्त्या व्यूढमाच्छन्नं सभाद्वारमजानन् सन् । विहाय, द्वारमिति शेषः । संस्फाटिकां समीचीनस्फटिकनिर्मिताम् । अत एव अभ्यन्तराणां भित्तेरन्तस्थितानां पदार्थानां दृशिनः दर्शनस्य अविघातिनीं अप्रतिबन्धिनीं भित्तिं सभायाः आवरणभूतां भित्तिं चुचुम्बे प्रतिहतवानित्यर्थः । यद्वा दशि दर्शनविषये नो विघातिनीम् ।।२६६।।

**भारतश्री–** द्वारं विहाय भित्तिं चुचुम्ब इत्यन्वयः । अभ्यन्तराणां कुड्यन्तरे..* दृशिनः (द्रष्टुं) अविघातिनीं अप्रतिघातिनीम् । सेवकास्तु राजसन्निधौ न पुरो आगच्छन्ति अत्यल्पस्थान..* इति ज्ञेयम् ।। २६६-२९५ ।।

**चट्टि–** सः दुर्योधनः हरिनीलरश्मिव्यूढां हरिनीलानामिन्द्रनीलानां रश्मिभिर्दीप्तिभिः व्यूढमाच्छन्नं सभायाः द्वारमजानन् विहाय संस्फाटिकां समीचीनस्फटिकनिर्मिताम् । अत एव अभ्यन्तराणां भित्तेरन्तस्थितानां पदार्थानां दृशिनः दर्शनस्य अविघातिनीं अप्रतिबन्धिनीं भित्तिं सभाया आवरणभूतभित्तिं चुचुम्बे प्रतिहतवानिति सम्बन्धः । यद्वा दृशि दर्शनविषये नो विघातिनीम् ।। २६६ ।।

**प्रवेशयेतां च यमौ तमाशु सभां भुजौ गृह्य नृपोपदिष्टौ ।**
**तत्रोपविश्य क्षणमन्यतोऽगादमृष्यमाणः श्रियमेषु दिव्याम् ।।२६७।।**

**व्यासतीर्थीया–** अन्यतो द्वारेण ।। २७९ ।।

**वेदाङ्गतीर्थीया–** गृह्य गृहीत्वा । क्षणमुपविश्य ।। २६७ ।।

**वरदराजीया–** एवं भ्रान्तं तं सुयोधनं नृपेण युधिष्ठिरेणोपदिष्टावाज्ञप्तौ यमौ नकुलसहदेवौ भुजौ प्रगृह्य द्वारं प्रदर्श्य सभां प्रवेशयेतां प्रवेशयामासतुः । स तत्र सभायां क्षणं क्षणमात्रमुपविश्यान्यत्रागात् । कथम्भूतः? एषु पाण्डवेषु दिव्यां श्रियं सम्पत्तिममृष्यमाणोऽसहमानः ।। २६७ ।।

**अनन्तभट्टीया–** नृपेण धर्मराजेनोपदिष्टौ ।। २६७-२६८ ।।

**जनार्दनीया–** नृपोपदिष्टौ नृपेण युधिष्ठिरेण उपदिष्टौ आज्ञापितौ यमौ भुजौ गृह्य, ल्यपप्रतिरूपकमव्ययम् । गृहीत्वा, दुर्योधनस्येति शेषः । तां सभां प्रवेशयेतां प्रवेशयामासतुः । तत्र सभायां क्षणमात्रमुपविष्टः एषु पार्थेषु दिव्यामलौकिकां श्रियं सम्पदममृष्यमाणः असहमानः दुर्योधनः अन्यतः अन्यत्रागात् ।।२६७।।

**चट्टि–** नृपोपदिष्टौ नृपेण युधिष्ठिरेणोपदिष्टौ आज्ञापितौ यमौ भुजौ प्रगृह्य गृहीत्वा, तस्येति शेषः । तं दुर्योधनं सभां प्रवेशयेतां प्रवेशयामासतुः । तत्र सभायां क्षणं क्षणमात्रमुपविश्य एषु पार्थेषु दिव्यामलौकिकां श्रियं सम्पदममृष्यमाणः असहमानो दुर्योधनः अन्यतो अन्यप्रदेशं प्रत्यगात् ।।२६७।।

**तत्रेन्द्रनीलभुवि रत्नमयानि दृष्ट्वा पद्मानि नीरमनसा जगृहे स्ववस्त्रम् ।**
**रत्नोरुदीधितिनिगूढजलं स्थलं च मत्वा पपात सहितोऽवरजैर्जलौघे ।।२६८।।**

**वेदाङ्गतीर्थीया–** नीरमनसा नीरमिदमिति बुद्ध्या रत्नोरुदीधितिनिगूढजलं च स्थलं मत्वा ।।२६८-२६९।।

**सत्याभिनवीया–** तत्रैव 'तत्रेन्द्रनीलभुवि रत्नमयानि..' इति श्लोके 'जगृहे स्ववस्त्रम्' इत्यस्य स्ववस्त्रं ऊर्ध्वं नीत्वा जगृहे इत्यर्थः । एतेन ऊर्ध्वं स्ववस्त्रं नीत्वा जगृहे इति वक्तव्यम् । स्ववस्त्रं जगृहे इत्येतदनुपपन्नमिति चोद्यस्यानवकाशः । ऊर्ध्वं नीत्वेत्यस्य शेषेण स्ववस्त्रं ऊर्ध्वं नीत्वा जगृहे इत्यर्थस्योक्तत्वात् ।।२६८।।

**वरदराजीया–** तत्रान्यत्र गमने इन्द्रनीलभुवि इन्द्रनीलमणिमयभूमौ रत्नमयानि रत्ननिर्मितानि पद्मानि दृष्ट्वा नीरमनसा जलमिदमिति बुद्ध्या स्ववस्त्रं जगृहे उपरिचकार । रत्नानामुर्वीभिर्दीधितिभिः रश्मिभिः निगूढजलं स्थलं च मत्वा अवरजैर्दुःशासनादिभिः सहितो जलौघे अगाधजले पपात ।। २६८ ।।

**जनार्दनीया–** तत्र गमनसमये इन्द्रनीलमणिमयभूमौ नीरमनसा इदं जलमिति बुद्ध्या स्ववस्त्रं स्वपरिधानवस्त्रमार्द्रं भविष्यतीति जगृहे ऊर्ध्वं चकार । रत्नानां उरुदीधितिभिः अतिदीप्तिभिः निगूढमाच्छन्नं जलं स्थलमिति मत्वा ।। २६८ ।।

**चट्टि–** तत्र गमनसमये इन्द्रनीलभुवीन्द्रनीलमणिमयभूमौ रत्नमयानि पद्मानि दृष्ट्वा नीरमनसा इदं जलमिति बुद्ध्या स्ववस्त्रं स्वपरिधानवस्त्रमार्द्रं भविष्यतीति जगृहे ऊर्ध्वं चकार । रत्नानां उरुदीधितिभिः निगूढमाच्छन्नं जलं च स्थलमिति मत्वा अवरजैः सहितस्सन् जलौघे पपात ।। २६८ ।।

**[१]तं प्राहसद् भगवता क्षितिभारनाशहेतोः सुसूचित उरुस्वरतोऽत्र भीमः ।**
**पाञ्चालराजसुतया च समं तथाऽन्यैः स्वीयैस्तथाऽनु जहसुर्भगवन्महिष्यः ।।**

**सत्याभिनवीया–** तदनन्तरमेव 'तं प्राहसद्भगवता क्षितिभार..' इति श्लोके 'भीमः उरुस्वरतः प्राहसत्' इत्यस्य उरुस्वरतः उरुस्वरेण उरुध्वनिना युक्तस्सन् प्राहसदित्यर्थः । एतेन हासं प्रति उरुध्वनेः

---

१. 'तत्रावहसितश्चासीत् प्रस्कन्दन्निव सम्भ्रमात् । प्रत्यक्षं वासुदेवस्य भीमेनानभिजातवत् ।।' 'अनभिजातवत् ग्रामीणवदित्यर्थः ।' इति नीलकण्ठः । आदिपर्वणि-१.१८७ । तथा सभापर्वणि- 'जले निपतितं दृष्ट्वा भीमसेनो महाबलः । जहास जहसुश्चैव किङ्कराश्च सुयोधनम् ।।' ७४.७. तत्रैव पुनः- 'तत्र मां प्राहसत् कृष्णः पार्थेन सह सुस्वरम् । द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम ।।' ७७.३२ । भागवते (१०.८६) 'जहास भीमस्तं दृष्ट्वा स्त्रियो भूपाश्च केचन । निवार्यमाणा अप्यङ्ग राज्ञा कृष्णानुमोदिताः' ।।४।। अस्मिन्नेव अध्याये- 'बभूव तूष्णीं भगवान् भुवो भरं जिहीर्षुरन्तर्हितमात्मनि स्मरन् । तदाविरासीत् जगदीशसन्निधौ मुनिः सुराराधितपादपङ्कजः' ।।८।।

कारणत्वाभावात् उरुस्वरतः प्राहसदिति कथनमनुपपन्नमिति दूषणं निरस्तम् । उरुस्वरत इत्यस्य प्राहसदित्यनेनान्वयो न किन्तु अध्याहृतेन युक्तः सन्नित्यनेनान्वय इत्यभ्युपगमात् ।।२६९-३००।।

**मधुसूदनीया–** ।। तं प्राहसदिति ।। यद्यपि सभापर्वणि कृष्णगमनानन्तरं पाण्डवैः दुर्योधनपरिहासः कृत इत्युक्तः । तथापि दशमस्कन्धानुसारेणात्र भगवत्पादैरेवमुक्तम् । भारतं तु कालव्यत्यासेन प्रवृत्तमिति न विरोध इति ध्येयम् ।। २६९-३२६ ।।

**वरदराजीया–** अत्र सभायां भगवता कृष्णेन सुसूचितः अपहासः कर्तव्य इति सूचितो भीम उरुस्वरतः उच्चैर्ध्वनिभिः तं दुर्योधनं प्राहसत् । कुतः? क्षितिभारनाशहेतोः तेन अतिविरोधे सति शीघ्रमेव नाशः स्यादित्येतदर्थमित्यर्थः । पाञ्चालराजतनया द्रौपदी च अन्यैः स्वीयैः धृष्टद्युम्नादिभिः समन्ततः भीमवदेव प्राहसत् । तदनु भगवन्महिष्यो जहसुः ।। २६९ ।।

**अनन्तभट्टीया–** भगवता सुसूचितः । उरुस्वरतः उरुस्वरेण ।।२६९।।

**जनार्दनीया–** अत्र सभायां भूभाररूपदुर्योधनादिनाशहेतोः भगवता कृष्णेन सूचितः हासविषये नेत्रादिना सूचितो भीमः, द्रौपद्या समं तथा अन्यैः स्वीयैः स्वकीयैः सात्यकिधृष्टद्युम्नाद्यैः समं तं दुर्योधनं उरुस्वरतः उच्चध्वनिना प्राहसत् । तथा अनु भीममनु भगवन्महिष्यः कृष्णभार्याः जहसुः ।।२६९।।

**चट्टि–** अत्र सभायां क्षितिभाररूपदुर्योधननाशहेतोः भगवता श्रीकृष्णेन सुसूचितः हासविषये नेत्रादिना सूचितो भीमः पाञ्चालराजसुतया द्रौपद्या समं तथान्यैः स्वकीयैः स्वीयैः सात्यकिधृष्टद्युम्नाद्यैश्च समं तं दुर्योधनं उरुस्वरतः उच्चध्वनिना प्राहसत् । तथा अनु भीममनु भगवन्महिष्यः श्रीकृष्णभार्याः जहसुः।।२६९।।

**मन्दस्मितेन विलसद्वदनेन्दुबिम्बो नारायणस्तु मुखमीक्ष्य मरुत्सुतस्य ।**
**नोवाच किञ्चिदथ धर्मसुतो निवार्य प्रास्थापयद् वसनमाल्यविलेपनानि ।।**

**वेदाङ्गतीर्थीया–** निवार्य हसतो भीमादीन् निवार्य ।। २७० ।।

**वरदराजीया–** विलसद्वदनमेव इन्दुबिम्बं यस्य स तथा तम् । मन्दस्मितेन मुखमीक्ष्य किञ्चिदपि नोवाच निराकरणं न कृतवानिष्टत्वादिति भावः । अथ धर्मसुतो निवार्य नेत्युक्त्वा वसनादिकं प्रास्थापयत् ।। २७० ।।

**अनन्तभट्टीया–** निवार्य, हसनमिति शेषः ।।२७०-२७५।।

**जनार्दनीया–** निवार्य, हसनमिति शेषः । प्रास्थापयत् प्रेषयामास, दुर्योधनार्थमिति शेषः । जले पतितस्य परिधानाद्यर्थे वस्त्रमाल्यगन्धान् प्रेषयामासेति भावः ।। २७० ।।

**चट्टि–** मन्दस्मितेन मन्दहासेन विलसद्वदनेन्दुबिम्बः नारायणः श्रीकृष्णः मरुत्सुतस्य भीमस्य मुखमीक्ष्य किञ्चिदपि नोवाच । अथ धर्मसुतः निवार्य हसतो भीमादीन् निवार्य वसनमाल्यविलेपनानि प्रस्थापयत्, दुर्योधनार्थमिति शेषः । जले पतितस्य दुर्योधनादेः वस्त्रमाल्यगन्धान् प्रेषयामासेति भावः।।२७०।।

**कृष्णावृकोदरगतं बहुलं निधाय क्रोधं ययौ सशकुनिर्धृतराष्ट्रपुत्रः।**
**सुव्रीडितो [१]नृपतिदत्तवराम्बरादीन् न्यकृत्य मार्गगत आह स मातुलं स्वम् ।।**

**वेदाङ्गतीर्थीया–** सुव्रीडितः धृतराष्ट्रपुत्रः कृष्णावृकोदरगतं तद्विषयं क्रोधं निधाय, स्वमनसीति शेषः । नृपतिदत्तवराम्वरादीन् न्यकृत्य ययौ, स्वमालयमिति शेषः । स मार्गगतः स्वं मातुलमाह ।।२७१-२७२।

**वरदराजीया–** कृष्णावृकोदरगतं द्रौपदीभीमसेनविषयं क्रोधं मनसि निधाय कृत्वा स दुर्योधनः सुव्रीडितोऽत्यन्तं लज्जितः सन् नृपतिना युधिष्ठिरेण दत्तान् सदम्वरादीन् न्यकृत्य मार्गगतः पुरमार्गं गतश्च मातुलं शकुनिमाह ।। २७१ ।।

**जनार्दनीया–** कृष्णावृकोदरगतं द्रौपदीभीमविषये विद्यमानं क्रोधं निधाय, स्वमनसीति शेषः । सुव्रीडितः सन् अत्यन्तं लज्जितः सन् नृपतिदत्तवराम्वरादीन् युधिष्ठिरदत्तवस्त्रादीन् न्यकृत्य निराकृत्य ययौ, स्वपुरमिति शेषः । मार्गगतः पुरमार्गगतः स दुर्योधनः स्वं मातुलं शकुनिं आह ।।२७१।।

**चट्टि–** कृष्णावृकोदरगतं द्रौपदीभीमविषये विद्यमानं क्रोधं बहुलं सन्तं निधाय, स्वमनसि इति शेषः । सशकुनिः धृतराष्ट्रसूनुः व्रीडितो लज्जितः सन् नृपतिदत्तसदम्वरादीन् युधिष्ठिरदत्तवस्त्रादीन् न्यकृत्य निराकृत्य ययौ, स्वपुरमिति शेषः । मार्गगतः स दुर्योधनः स्वं मातुलं शकुनिमाह ।। २७१ ।।

**यौ मामहसतां कृष्णाभीमौ कृष्णस्य सन्निधौ ।**
**तयोरकृत्वा सन्तापं नाहं जीवितुमुत्सहे ।।२७२।।**

**वरदराजीया–** किमिति? यौ कृष्णाभीमौ मां प्रहसतां हासं कुर्वन्तौ विशेषतः कृष्णसन्निधौ तयोः कृष्णाभीमयोः सन्तापं दुःखमकृत्वा अनुत्पाद्याहं जीवितुं नोत्सहे नेच्छामि ।। २७२ ।।

**जनार्दनीया–** यौ मां अहसतां अपहासं चक्रतुः, तयोः द्रौपदीभीमयोः सन्तापं महद्दुःखमकृत्वा अहं जीवितुं न उत्सहे न सहे । जीवनं सोढुमशक्तोऽहमिति भावः ।। २७२ ।।

**चट्टि–** यौ कृष्णाभीमौ श्रीकृष्णस्य सन्निधौ मामहसतां अपहासं चक्रतुः । तयोः द्रौपदीभीमयोः सन्तापं महादुःखमकृत्वा अहं जीवितुं नोत्सहे नेच्छामि ।। २७२ ।।

---

१. 'नृपतिदत्तसदम्वरादीन्' इति वरदराजीय-चट्टीपाठः ।

**यदि मे शक्तिरत्र स्याद् घातयेयं वृकोदरम् ।**
**[१]अग्रपूजां च कृष्णस्य विलुम्पेयं न संशयः ॥२७३॥**

**व्यासतीर्थीया–** कृतामप्यग्रपूजां विलुम्पेयं दोषोक्त्या ।। २७३-२८१ ।।

**वेदाङ्गतीर्थीया–** अत्र घातने । दत्तामपि अग्र्यपूजां विलुम्पेयम् । दोषोक्त्या । अत्र संशयो न ।। २७३-२७४ ।।

**वरदराजीया–** अत्र हाससमये यदि मे शक्तिः स्यात्तर्हि वृकोदरं घातयेयम् । कृष्णस्याग्रपूजां च विलुम्पेयम् । शक्त्याद्यभावादेव तदुभयं न कृतमित्यर्थः ।। २७३ ।।

**जनार्दनीया–** यदि अत्र अस्मिन् अपहाससमये मे शक्तिः स्यात् तर्हि वृकोदरं घातयेयम् । कृष्णस्य अग्रपूजां विलुम्पेयम् । न संशयः । शक्त्यभावात् तद्वयं न कृतमिति भावः ।।२७३।।

**चट्टि–** अत्रापहाससमये यदि मे शक्तिः स्यात् तर्हि वृकोदरं घातयेयम् । श्रीकृष्णस्याग्रपूजां च विलुम्पेयं संशयो नास्ति । शक्तेरभावाद् द्वयं न कृतमिति भावः ।। २७३ ।।

**ईदृशं पाण्डवैश्वर्यं दृष्ट्वा को नाम जीवितम् ।**
**इच्छेत करदा येषां वैश्यवत् सर्वभूमिपाः ॥२७४॥**

**वरदराजीया–** पाण्डवैश्वर्यं दृष्ट्वा को नाम जीवितुमिच्छेत् । एषां पाण्डवानां वैश्याः यथा राज्ञः तथा सर्वभूमिपाः करदाः ।। २७४ ।।

**जनार्दनीया–** क इच्छेत? न कोऽपीत्यर्थः ।। २७४ ।।

**चट्टि–** ईदृशं पाण्डवनामैश्वर्यं दृष्ट्वा को नाम जीवितुमिच्छेत् न कोऽपीत्यर्थः । एषां पाण्डवानां सर्वभूमिपाः वैश्यवत् वैश्या इव करदाः ।। २७४ ।।

**इत्युक्तः शकुनिर्वैरं दृढीकर्तुं वचोऽब्रवीत् ।**
**किं ते वैरेण राजेन्द्र बलिभिर्भ्रातृभिः पुनः ॥२७५॥**

**वेदाङ्गतीर्थीया–** वलिभिः पुनः भ्रातृभिः । बलिभिः विरोधोऽशक्यः । भ्रातृभिः विरोधोऽधर्म इति भावः ।। २७५ ।।

**वरदराजीया–** शकुनेः शिष्टवद् वचनस्य तात्पर्यं प्रथमत एवोक्तं– **वैरं दृढीकर्तुमिति** ।। हे राजेन्द्र! बलिभिः भ्रातृभिः पाण्डवैस्ते तव वैरेण किं प्रयोजनम्? न किमपि ।। २७५ ।।

---

१. 'अग्र्यपूजां' इति वेदाङ्गतीर्थीयपाठः स्यात् ।

**जनार्दनीया–** पुनः पूर्वं गेहान्निष्कासिताः अत एव 'पुनः' इत्युक्तम् । बलिभिः भ्रातृभिस्तैः वैरेण किम्? न किमपीत्यर्थः ।।२७५।।

**चट्टि–** इत्युक्तः शकुनिः, दुर्योधनेनेति शेषः । वैरं दृढीकर्तुं वचः अब्रवीत् । किमिति? हे राजेन्द्र! बलिभिः भ्रातृभिः ते वैरेण किम् । न किमपीत्यर्थः ।। २७५ ।।

**अनुजीवस्व तान् वीरान् गुणज्येष्ठान् बलाधिकान् ।**
**इतीरितोऽतिसंवृद्धकोप आह सुयोधनः ।।२७६।।**

**वेदाङ्गतीर्थीया–** अनुजीवस्व तदनुसारेण जीव ।। २७६-२७७ ।।

**वरदराजीया–** उक्तविशेषणविशिष्टान्ताननुजीवस्व उपजीवस्व इतीरितः सुयोधनोऽतिसंवृद्धकोपः सन् आह ।। २७५ ।।

**अनन्तभट्टीया–** अनुजीवस्व अनुसृत्य जीवेत्यर्थः ।। २७६-२७८ ।।

**जनार्दनीया–** तान् पार्थान् । अनुजीवस्व अनुसृत्य जीव ।।२७६।।

**चट्टि–** बलाधिकान् गुणज्येष्ठान् वीरान् तान् पार्थान् अनुजीवस्व इति शकुनिना ईरिते सति सुयोधनः अतिसंवृद्धकोपः सन् आह ।। २७६ ।।

**यदि तेषां तदैश्वर्यं न मां गच्छेदशेषतः ।**
**सर्वथा [1]नैव जीवेयमिति सत्यं ब्रवीमि ते ।।२७७।।**

**वरदराजीया–** तेषां पाण्डवानां यादृशं मया दृष्टमैश्वर्यमशेषतः सर्वं मां न गच्छेत् यदि तर्हि नैव जीवेयमिति ते सत्यं ब्रवीमि ।। २७७ ।।

**जनार्दनीया–** अशेषतः समस्तम् । सर्वथा निश्चयेन ।।२७७।।

**चट्टि–** यदि तेषां पाण्डवानां तदैश्वर्यं अशेषतः साकल्येन मां न गच्छेत्, तर्हि अहं सर्वथा निश्चयेन नैव जीवेयम् इति ते सत्यं ब्रवीमि ।। २७७ ।।

**न च बाहुबलाच्छक्ष्य आदातुं तां श्रियं क्वचित् ।**
**नेन्द्रोऽपि समरे शक्तस्तान् जेतुं किमु मानुषाः ।।२७८।।**

**वेदाङ्गतीर्थीया–** बाहुबलात् तां श्रियमादातुं न शक्ष्ये । किन्तु केनाप्युपायेनाहर्तव्येति भावः ।। २७८-२८१ ।।

---

१. 'वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषम् । अपो वापि प्रवेक्ष्यामि न हि शक्ष्यामि जीवितुम् ।।' सभापर्वणि-७४.३०.

**वरदराजीया–** वाहुवलात् पाण्डवानां तां श्रियमादातुं नैव शक्ष्ये । इन्द्रोऽपि तान् पाण्डवान् समरे युद्धे जेतुं न शक्तः । मानुषाः जेतुं न शक्ता इति किमु वक्तव्यमित्यर्थः ।। २७८ ।।

**जनार्दनीया–** वाहुवलात् तां श्रियमादातुं न शक्ष्ये न समर्थ इत्यर्थः । किन्तु केनाप्युपायेन आहर्तव्या इति भावः । तत्कुतः? इन्द्रोऽपि न शक्तः । मानुषाः किमु ।।२७८।।

**चट्टि–** वाहुवलात् तां श्रियमादातुं कचिदपि न शक्ष्ये न समर्थ इत्यर्थः । किन्तु केनाप्युपायेन आहर्तव्येति भावः । तत्कुतः? इन्द्रोऽपि समरे युद्धे तान् पाण्डवान् जेतुं न शक्तः । मानुषा न शक्ता इति किमु वक्तव्यम् ।। २७८ ।।

**इतीरितः पापतम आह गान्धारको नृपः ।**
**पापानामखिलानां च [1]प्रधानं चक्रवर्तिनाम् ।।२७९।।**

**वरदराजीया–** अखिलानां पापानां प्रधानः मुख्यः गान्धारकः शकुनिः नृपं किमित्याह इत्यत उक्तम्– **चक्रवर्तिनामिति** ।।२७९।।

**अनन्तभट्टीया–** चक्रवर्तिनां यां यां श्रियं पाण्डवेषु प्रपश्यसि ।। २७९-२८१ ।।

**जनार्दनीया–** नृपः शकुनिः पापिनां प्रधानं मुख्यं दुर्योधनमाह ।। २७९ ।।

**चट्टि–** इति दुर्योधनेनेरितः पापतमः अतिशयेन पापः गान्धारको नृपः शकुनिः अखिलानां पापानाञ्च प्रधानं मुख्यं दुर्योधनमाह ।। २७९ ।।

**यां यां श्रियं प्रदीप्तां त्वं पाण्डवेषु प्रपश्यसि ।**
**तामक्लेशत [2]आदास्ये क्रीडन्नक्षैस्त्वदन्तिके ।।२८०।।**

**वरदराजीया–** किमिति? चक्रवर्तिनां विद्यमानां यां यां श्रियं पाण्डवेषु प्रपश्यसि तां तां श्रियं त्वदन्तिके अक्षैः क्रीडन्नादास्ये ।। २८० ।।

**जनार्दनीया–** किमिति? चक्रवर्तिनां प्रदीप्तां प्रकाशमानां यां यां श्रियं सम्पदं पाण्डवेषु प्रपश्यसि । तां तां अक्लेशतः अप्रयासेन त्वदन्तिके तव समीपे अक्षैः यूतसश्चारिकाष्ठविशेषैः क्रीडन्नादास्ये ।।२८०।।

**चट्टि–** किमिति? चक्रवर्तिनां प्रदीप्तां प्रकाशमानां यां यां श्रियं सम्पदं त्वं पाण्डवेषु प्रपश्यसि । तां श्रियमक्लेशतः अप्रयासेन त्वदन्तिके तव समीपे अक्षैः यूतसश्चारिकाष्ठविशेषैः क्रीडन्नादास्ये इति सम्वन्धः।।

---

१. 'प्रधानः' इति वरदराजीयपाठः ।

२. 'तस्याक्षकुशलो राजन् आदास्येऽहमसंशयम् । राज्यं श्रियं च तां दीप्तां त्वदर्थं पुरुषर्षभ ।।' सभापर्वणि-७५.२३.

**इतीरितः प्रसन्नधीः सुयोधनो बभूव ह ।**
**प्रजग्मतुश्च तावुभौ विचित्रवीर्यजं नृपम् ॥२८१॥**

**वरदराजीया–** इतीरितः सुयोधनः स्वस्थचित्तोऽभवत् । तावुभौ शकुनिसुयोधनौ विचित्रवीर्यजं नृपम् ॥ २८१ ॥

**जनार्दनीया–** तावुभौ शकुनिदुर्योधनौ नृपं धृतराष्ट्रं प्रति जग्मतुः ॥२८१॥

**चट्टि–** इति शकुनिना ईरितः सुयोधनः प्रसन्नधीः स्वस्थचित्तो बभूव । तावुभौ शकुनिदुर्योधनौ च विचित्रवीर्यजं नृपं धृतराष्ट्रं प्रतिजग्मतुः ॥ २८१ ॥

**धृतराष्ट्रमथोवाच द्वापरांशोऽतिपापकृत् ।**
**नास्तिक्यरूपः शकुनिर्विवर्णं हरिणं कृशम् ॥२८२॥**

**व्यासतीर्थीया–** हरिणं पाण्डुरम् ॥२८२॥

**वेदाङ्गतीर्थीया–** विवर्णं पूर्ववर्णविपरीतवर्णम् । तदेवाह– **हरिणमिति** ॥ हरिणं पाण्डुरं कृशं दुर्योधनं धृतराष्ट्रमुवाच ॥२८२-२८४॥

**वादिराजतीर्थीया–** 'विवर्णं हरिणं कृशम्' इत्यत्र विवर्णं विगतपूर्ववर्णं 'हरिणः पाण्डुरः पाण्डुः' इत्यभिधानात् । कामलाव्याधिग्रस्तवत् पाण्डुवर्णम् ॥ २८२-२८४ ॥

**वरदराजीया–** द्वापरांशः संशयाभिमानिनास्तिक्यरूपो नास्तिक्यनीत्यभिमानीशकुनिः धृतराष्ट्रं प्रति दुर्योधनं विवर्णं विगतपूर्ववर्णं अत एव हरिणं पाण्डुरं कृशमुवाच । एतादृशामवस्थां प्राप्त इत्युवाचेत्यर्थः ॥

**अनन्तभट्टीया–** हरिणं पाण्डुवर्णं सन्तम् ॥२८२-२८४॥

**जनार्दनीया–** द्वापरांशः द्वापरनाम्नोऽसुरस्य अंशः । नास्तिक्यरूपः नास्तिक्याभिमानी । शकुनिः विवर्णं पूर्ववर्णाद्विपरीतवर्णम् । तदेवाह । हरिणं पाण्डुरं कृशं दुर्योधनं धृतराष्ट्रं प्रति उवाच ॥२८२॥

**ताम्रपर्णीया–** हरिणं पाण्डुरम् । हरितवर्णं वा ॥ २८२-२८७ ॥

**चट्टि–** द्वापरांशः संशयाभिमानी नास्तिक्यरूपः नास्तिक्यनीत्यभिमानी अतिपापकृत् शकुनिः धृतराष्ट्रं प्रति दुर्योधनं विवर्णं विगतपूर्ववर्णं अत एव हरिणं पाण्डुरं कृशमुवाच ॥ २८२ ॥

**दुर्योधनं तु तच्छ्रुत्वा कुत इत्याह दुर्मनाः ।**
**अब्रूतां तौ नृपायाऽशु द्वाभ्यां यन्मन्त्रितं पथि ॥२८३॥**

**वेदाङ्गतीर्थीया—** तच्छ्रुत्वा दुर्मनाः । कुत इत्याह । कस्मात् कारणात् एतादृशः स जात इति पप्रच्छ ।।२८३।।

**वरदराजीया—** तद्वचः श्रुत्वा दुर्मनाः सन् कुत इत्याह । तौ शकुनिदुर्योधनौ पथि यन्मन्त्रितं तदब्रूताम् ।। २८३ ।।

**जनार्दनीया—** तच्छ्रुत्वा दुर्मनाः विमनाः सन् कुतः कस्माद्धेतोः विवर्णादिकं जातमित्याह । द्वाभ्यां शकुनिदुर्योधनाभ्यां पथि यन्मन्त्रितं विचारितं तत्तावब्रूताम् ।।२८३।।

**चट्टि—** तच्छ्रुत्वा दुर्मनाः विमनाः सन् कुतः कस्माद्धेतोः विवर्णादिकं जातमित्याह । द्वाभ्यां शकुनिदुर्योधनाभ्यां पथि मार्गे यन्मन्त्रितं विचारितं तत् तावाशु नृपाय धृतराष्ट्रायाब्रूताम् ।। २८३ ।।

**श्रुत्वैव तन्नेत्यवदत् स भूपतिर्विरोधि धर्मस्य विनाशकारणम् ।**
**कुमन्त्रितं वो न ममैतदिष्टं स्वबाहुवीर्याप्तमहाश्रियो[1] हि ते ।।२८४।।**

**वरदराजीया—** स भूपतिः धृतराष्ट्रस्तद्वचनं श्रुत्वैव नेत्यवदत् । धर्मस्य विरोधितया विनाशकारणम्, कुलस्येति शेषः । वः एतत्कुमन्त्रितं ममेष्टं न भवति हि यस्मात्ते पाण्डवाः स्वबाहुवीर्येण । आप्ता महाश्रीः येषां ते तथा ।। २८४ ।।

**जनार्दनीया—** स भूमिपः तत् अक्षक्रीडनं श्रुत्वा इदं धर्मस्य विरोधि विनाशकारणम्, युष्माकमिति शेषः । नैव मा कुरुध्व इत्यवदत् । वः युष्माकं एतत्कुमन्त्रितं कुत्सितविचारः मम इष्टं अभीष्टं न । हि यस्मात् ते पार्थाः स्वबाहुवीर्येण आप्तमहाश्रियः प्राप्तोत्कृष्टसम्पदः ।। २८४ ।।

**चट्टि—** सः भूपतिः धृतराष्ट्रः तद्वचनं श्रुत्वैव नेत्यवदत् । इदं धर्मस्य विरोधि विनाशकारणम्, युष्माकमिति शेषः । वः युष्माकमेतत् कुमन्त्रितं ममेष्टं न भवति । हि यस्मात् ते पार्थाः स्वबाहुवीर्येणात्तमहाश्रियः प्राप्तोत्कृष्टसम्पदः ।। २८४ ।।

**त्वयाऽपि निर्जित्य दिशो मखाद्याः कार्याः [2]स्पृधो मा गुणवत्तमैस्तैः ।**
**विशेषतो भ्रातृभिरग्र्यपौरुषैरित्युक्त आहाऽशु सुयोधनस्तम् ।।२८५।।**

**व्यासतीर्थीया—** स्पृध इत्यडागमाभावो न माङ्योगात् ।। २८५-२८६ ।।

**वेदाङ्गतीर्थीया—** मा स्पृधः स्पर्धा न कुरु ।। २८५-२८६ ।।

**वादिराजतीर्थीया—** 'स्पृधो मा गुणवत्तमैः' इत्यत्र गुणवत्तमैः पाण्डवैः मा स्पृधः स्पर्धा मा करोः ।।

---

१. 'स्वबाहुवीर्यात्तमहाश्रियः' इति चट्टीपाठः ।

२. 'अयुक्तमिदमेतत्तु परस्वहरणं भृशम् । उभयोर्लोकयोर्दुःखं सुहृदां काङ्क्षतोऽनयम् ।।' सभापर्वणि-८०.९.

**वरदराजीया–** दिशो निर्जित्य त्वयापि मखाग्र्याः कार्याः । गुणवत्तमैस्तैर्पाण्डवैर्मा स्पृधः स्पर्धां मा कुरु । अग्र्यं पौरुषं येषां ते तथा । भ्रातृभिर्विशेषतो मा स्पृधः । तं धृतराष्ट्रम् ।। २८५ ।।

**अनन्तभट्टीया–** मा स्पृधः स्पर्धां मा कुर्वित्यर्थः ।। २८५ ।।

**जनार्दनीया–** मा स्पृधः स्पर्धां मा कुर्वित्यर्थः । विशेषतः भ्रातृभिः मा स्पृधः ।। २८५ ।।

**चट्टि–** त्वयापि दिशो निर्जित्य मखाग्र्याः कार्याः गुणवत्तमैः विशेषतः भ्रातृभिः अग्र्यपौरुषैः श्रेष्ठपराक्रमैः तैः पार्थैः मा स्पृधः स्पृधां मा कुरु । 'स्पृध स्पर्धने' इति धातोः लङ् । 'न माङ्योगे' इति अडागमप्रतिषेधः । इत्युक्तः, धृतराष्ट्रेणेति शेषः । सुयोधनस्तं धृतराष्ट्रं आह ।। २८५ ।।

**यदि श्रियं पाण्डवानां [1]नाक्षैराहर्तुमिच्छसि ।**
**मृतमेवाद्य मां विद्धि पाण्डवैस्त्वं सुखी भव ।।२८६।।**

**वरदराजीया–** अक्षैर्पाशैराहर्तुं यदि नेच्छसि तर्हि अद्येदानीं मृतं विद्धि । अनन्तरं पाण्डवैः सह त्वं सुखी भव ।। २८६ ।।

**अनन्तभट्टीया–** आच्छेत्तुं आहर्तुम्[2] ।। २८६-२८७ ।।

**जनार्दनीया–** विद्धि जानीहि ।।२८६।।

**चट्टि–** त्वं पाण्डवानां श्रियमक्षैः पाशैराहर्तुं यदि नेच्छसि । तर्हि अद्य मां मृतमेव विद्धि जानीहि । पाण्डवैः त्वं सुखी भव ।। २८६ ।।

**यदि मज्जीवितार्थी त्वमानयाऽश्विह पाण्डवान् ।**
**सभार्यान् देवनायैव न चाधर्मोऽत्र कश्चन ।।२८७।।**

**व्यासतीर्थीया–** 'विरोधि धर्मस्य' इत्यस्योत्तरमाह– **न चाधर्म इति** ।। २८७ ।।

**वेदाङ्गतीर्थीया–** 'विरोधि धर्मस्य' इत्येतत्सोपपत्तिकं परिहरति– **न चेत्यादिना** ।। अत्र द्यूते श्रिय आकर्षे ।। २८७ ।।

**वरदराजीया–** यदि मम जीवनमर्थयसि तर्हि सभार्यान् पाण्डवान् देवनाय अक्षैः क्रीडार्थं इह आश्वानय । देवने कश्चनाधर्मोऽपि न ।। २८७ ।।

**जनार्दनीया–** इह नागपुरं प्रति । देवनाय द्यूतार्थम् । 'विरोधि धर्मस्य' इत्येतत्सोपपत्तिकं परिहरति– **न चेत्यादिना** ।। अत्र द्यूतकर्मणि नाधर्मः ।।२८७।।

---

१. 'नाक्षैराच्छेत्तुमिच्छसि' इति अनन्तभट्टीयपाठः ।

२. 'आदातुम्' इति क्वचित् कोशेषु ।

**चट्टि–** त्वं यदि मज्जीवनार्थी तर्हि सभार्यान् पाण्डवान् आशु इह नागपुरं प्रति देवनाय द्यूतार्थमेव आनय । 'विरोधि धर्मस्य' इत्येतत् सोपपत्तिकं परिहरति– **न चेत्यादिना** ।। अत्र द्यूतकर्मणि कश्चन अधर्मश्च नास्ति ।। २८७ ।।

**वेदानुजीविनो विप्राः क्षत्रियाः शस्त्रजीविनः ।**
**[१]त्रुट्यते येन शत्रुश्च तच्छस्त्रं नैव चेतरत् ।।२८८।।**

**व्यासतीर्थीया–** अत्राधर्मः कुतो नास्ति । शास्त्राभावे जीवित्वाभावादित्यत शस्त्रशब्दस्यार्थमाह– **त्रुट्यत इति** ।। २८८-२९० ।।

**वेदाङ्गतीर्थीया–** त्रुट्यते । 'त्रुटी च्छेदने' इति धातुः ।। २८८-२९० ।।

**वादिराजतीर्थीया–** शास्यते येन वैरी तच्छस्त्रमिति सहजव्युत्पत्तिं विहाय स्वानुकूलव्युत्पत्तिमाह– **त्रुट्यत इति** ।। 'अप्यक्षरसाम्यान्निर्ब्रूयात्' इति वचनात्, 'त्रुटी च्छेदने' इति धातोः, कर्मणि डप्रत्यये कृते शः शत्रुः त्रुट्यते येन तच्छस्त्रम् । निरुक्तत्वात् सकारागम इति दुर्भावः।। २८८-२९० ।।

**वरदराजीया–** कुतः? विप्राः वेदानुजीविनः । क्षत्रियास्तु शस्त्रजीविनः । ननु देवनं कथं शस्त्रमित्यत शस्त्रशब्दं निर्वक्ति– **त्रुट्यत इति** ।। येन शत्रुस्त्रुट्यते छिद्यते तच्छस्त्रं शस्त्रशब्दवाच्यम् । देवनं च तथा । अतः क्षत्रियाणां धर्म एवेत्यर्थः ।। २८८ ।।

**अनन्तभट्टीया–** द्यूतं शस्त्रं न भवतीत्याशङ्क्य शस्त्रशब्दार्थमाह– **त्रुट्यत इति** ।। २८८-२८९ ।।

**जनार्दनीया–** येन शत्रुः त्रुट्यते छिद्यते । 'त्रुटी च्छेदने' इति धातुः । तच्छस्त्रम्, इत्युच्यते इति शेषः । इतरत् शत्रुच्छेदकादन्यत् नैव शस्त्रं नैवेत्यर्थः ।।२८८।।

**ताम्रपर्णीया–** ननु देवनं कथं शस्त्रमित्यतः शस्त्रशब्दार्थमाह– **त्रुट्यत इति** ।। त्रुट्यते छिद्यते येन तच्छस्त्रम् । 'त्रुटी च्छेदने' इति धातोः । शंस्यते येन तच्छस्त्रं शंसनं च छेद एवेति भावेन 'त्रुट्यते' इत्युक्तम् ।।२८८-२९२।।

**चट्टि–** कुतः? विप्राः वेदानुजीविनः क्षत्रियास्तु शस्त्रजीविनः शस्यते अनेनेति शस्त्रम् । 'शृ हिंसायाम्' इति धातुः । इति सहजव्युत्पत्तिं विहाय स्वानुकूलव्युत्पत्तिमाह– **त्रुट्यत इति** ।। शत्रुः येन त्रुट्यते भिद्यते । 'त्रुटी भेदने' इति धातुः । तच्छस्त्रम्, इत्युच्यते इति शेषः । इतरच्छत्रुच्छेदनादन्यच्छस्त्रं नैव इत्यर्थः ।। २८८ ।।

**अतः स्वधर्म एवायं तवापि स्यात् फलं महत् ।**
**इत्युक्तो मा फलं मेऽस्तु तवैवास्त्विति सोऽब्रवीत् ।।२८९।।**

---

१. 'शत्रुश्चैव हि मित्रश्च न लेख्यं न च मातृका । यो वै सन्तापयति यं स शत्रुः प्रोच्यते नृप ।।' सभापर्वणि-८१.१०.

**वरदराजीया–** तवापि तेन धर्मेण महत्फलं स्यात् । इत्युक्तः स धृतराष्ट्रः फलं मे मम मास्तु । तवैव फलमस्त्वित्यब्रवीत् ।। २८९ ।।

**अनन्तभट्टीया–** तव महत्फलं स्यात् । पुत्रलालनादिति भावः ।। २८९ ।।

**जनार्दनीया–** तवापि महत्फलं स्यात्, पुत्रपालनादिति शेषः ।।२८९।।

**चट्टि–** ततः अयं स्वधर्म एव । तवापि तेन धर्मेण महत्फलं स्यात् । इत्युक्तः सः धृतराष्ट्रः मे फलं मास्तु तवैव फलमस्त्वित्यब्रवीत् ।। २८९ ।।

**एवं ब्रुवन्नपि नृप आविष्टः कलिना स्वयम् ।**
**पुत्रस्नेहाच्च विदुरमादिशत् पाण्डवान् प्रति ।।२९०।।**

**वेदाङ्गतीर्थीया–** प्रत्यादिशत् पाण्डवान्, आनेतुमिति शेषः ।। २९० ।।

**वरदराजीया–** एवं ब्रुवन्नपि कलिना आविष्टः पुत्रस्नेहाच्च विदुरमादिशत्, आनेतुमिति शेषः ।।२९०।।

**जनार्दनीया–** नृपः राजा कलिना आविष्टः सन् पाण्डवान् प्रत्यादिशत्, पार्थानानेतुमिति शेषः ।।२९०।।

**चट्टि–** एवं ब्रुवन्नपि नृपः धृतराष्ट्रः कलिना स्वयमाविष्टस्सन् पुत्रस्नेहाच्च विदुरं पाण्डवान् प्रति आदिशत्, आनेतुमिति शेषः ।।२९०।।

**आविवेश कलिस्तं हि यदा पुत्रत्वसिद्धये ।**
**अंशेन तत आरभ्य नैवास्मादपजग्मिवान् ।।२९१।।**

**व्यासतीर्थीया–** आविष्टः कलिः तदानीमेव निर्गतः किमिति जिज्ञासायामाह– **आविवेशेति** ।। २९१-२९५ ।।

**वेदाङ्गतीर्थीया–** 'कलिना आविष्टः' इत्युक्तम् । तदावेशः कदा कियत्कालपर्यन्तमित्यत आह– **आविवेशेत्यादिना** ।। कलिः यदा पुत्रत्वसिद्धये (तं) पूर्वमाविवेश । प्रथमं पितृप्रवेशः पश्चान्मातृप्रवेशः इति नियमात् तं पितृभूतमाविवेश, तत आरभ्य यावत् यदा पुरं परित्यज्यैव धृतराष्ट्रो वनं प्रविवेश तावत्पर्यन्तं अस्मादंशेन नैवापजग्मिवान् ।। २९१ ।।

**वादिराजतीर्थीया–** 'आविवेश कलिस्तं हि' इत्यत्र प्रथमं पितृप्रवेशः पश्चान्मातृप्रवेश इति नियमात् अंशेन पुत्रत्वसिद्धये यदा कलिः तं धृतराष्ट्रं आविवेश, तत आरभ्य पुनरंशान्तरेण अस्मान्नापजग्मिवान् एकांशेन पुत्रोऽभूत् । पुनरंशान्तरेण धृतराष्ट्रबुद्धिमन्यथीकर्तुं तत्रैव स्थितवानिति भावः ।। २९.१ ।।

**वरदराजीया–** यदा स्वस्य पुत्रत्वसिद्धये कलिः धृतराष्ट्रम् अंशेनाविवेश, तत आरभ्य अस्माद्धृतराष्ट्रात् यदा पुरं हस्तिनपुरं परित्यज्य वनं वनमेव विवेश तावन्नापजग्मिवान् ।। २९१ ।।

**अनन्तभट्टीया–** कलिः पुत्रत्वसिद्धये आत्मनः धृतराष्ट्रपुत्रत्वसिद्धये इत्यर्थः ।। २९१-२९२ ।।

**जनार्दनीया–** कलिः यदा पुत्रत्वसिद्धये उत्पत्तुं तं आविवेश । प्रथमं पितृप्रवेशः पश्चान्मातृप्रवेश इत्यादिनियमात्तं पितृभूतं आविशत्, तत आरभ्य यावत् यदा पुरं परित्यज्यैव धृतराष्ट्रो वनं प्रविवेश । तावत्पर्यन्तं अस्माद्धृतराष्ट्रात् अंशेन नैवापजग्मिवान् ।।२९१।।

**चट्टि–** यदा कलिः पुत्रत्वसिद्धये तं धृतराष्ट्रं अंशेनाविवेश तत आरभ्य यावद् यदा पुरं परित्यज्यैव धृतराष्ट्रो वनं प्रविवेश, तावत् पर्यन्तं अस्माद्धृतराष्ट्रात् नापजग्मिवान् ।।२९१।।

**यावत् पुरं परित्यज्य वनमेव विवेश ह ।**
**तदन्तरा ततस्तस्य पापयुक्तं मनोऽभवत् ।।२९२।।**

**वादिराजतीर्थीया–** 'यावत्पुरं परित्यज्य' इत्यत्र सः धृतराष्ट्रः यावत्पुरं परित्यज्य वयसोऽन्ते वनं तपोवनं विवेश । तदन्तरा तन्मध्ये ।। २९२ ।।

**वरदराजीया–** ततः कारणात् तदन्तरा तन्मध्ये तस्य धृतराष्ट्रस्य मनः पापयुक्तमभवत् ।। २९२ ।।

**जनार्दनीया–** ततः कल्यावेशात् । तदन्तरा पुत्रार्थं कलिप्रवेशकालस्य धृतराष्ट्रवनगमनकालस्य मध्ये । तस्य धृतराष्ट्रस्य ।। २९२ ।।

**चट्टि–** ततः कारणात् तदन्तरा तन्मध्ये तस्य धृतराष्ट्रस्य मनः पापयुक्तमभवत् ।। २९२ ।।

**न्यवारयत् तं विदुरो महत् ते पापं कुलस्यापि विनाशकोऽयम् ।**
**समुद्यमो नात्र विचार्यमस्ति कृथा न तस्मादयशश्च ते स्यात् ।।२९३।।**

**वेदाङ्गतीर्थीया–** तस्मान्न कृथाः न कुरु ।। २९३ ।।

**वादिराजतीर्थीया–** 'बहुलं छन्दस्यमाङ्योगेऽपि' (सि.कौ-३५४६) इति वचनात् न कृथाः नाकृथाः ।। २९३-२९७ ।।

**वरदराजीया–** तं धृतराष्ट्रं विदुरो न्यवारयत् । किमिति? अयं समुद्यमः उद्योगः पापं पापसाधनं कुलस्य विनाशकोऽपि तस्मात् तं समुद्यमं न कृथाः मा कृथाः । तत्करणे अयशोऽपकीर्तिः स्यात् ।।२९३।।

**अनन्तभट्टीया–** पापम्, स्यादिति शेषः । तस्मान्न कृथाः । अडभावः छान्दसत्वात् ।।२९३-२९५।।

**जनार्दनीया–** तं धृतराष्ट्रं इति न्यवारयत् । इतीति किम्? अयं समुद्यमः उद्योगः ते तव महत्पापं पापसाधनम्, स्यादिति शेषः । कुलस्यापि विनाशकः नाशकरो यस्मात् तस्मात् न कृथाः न कुरुत । अयशश्चायं कुलनाशहेतुरित्यपकीर्तिश्च स्यात् ।। २९३ ।।

**ताम्रपर्णीया–** तस्मात्तं समुद्यमं मा कृथाः ।। २९३-२९९ ।।

**चट्टि–** महामतिः विदुरस्तं धृतराष्ट्रं न्यवारयत् । किमिति? अयमेव समुद्यमः उद्योगः ते तव पापं पापसाधनम्, स्यादिति शेषः । कुलस्यापि विनाशकः नाशकरो यस्मात् तस्मात् न कृथाः मा कुर्वित्यर्थः। ते अयशश्चायं कुलनाशहेतुरिति अपकीर्तिश्च स्यात् । अत्र विचार्यं नास्ति ।। २९३ ।।

**इति ब्रुवाणं कलहोऽत्र न स्यान्निवारयामो वयमेव यस्मात् ।**
**द्रष्टुं सुतान् क्रीडत एकसंस्थानिच्छामि पार्थांश्च सुयोधनादीन् ।।२९४।।**

**वेदाङ्गतीर्थीया–** इति ब्रुवाणम्, धृतराष्ट्र आहेति शेषः ।। २९४ ।।

**वरदराजीया–** इति ब्रुवाणम्, विदुरमाह इति शेषः । अत्र देवने कलहो न स्यात् यस्मात् वयमेव कलहं निवारयामः । पार्थान् सुयोधनादींश्च सुतान् क्रीडतः क्रीडां कुर्वाणान् एकसंस्थान् एकत्रोपविष्टान् द्रष्टुं इच्छामि ।।२९४।।

**जनार्दनीया–** इति ब्रुवाणम्, धृतराष्ट्र आहेति शेषः । किमिति? अत्र अस्मिन् द्यूते कलहो न स्यात् । कुतः? वयमेव निवारयामः । तर्हि द्यूतेन किं प्रयोजनमित्यत आह– **यस्मादिति** ।। एकसंस्थान् एकत्र संस्थितान् क्रीडतः देवनक्रीडां कुर्वाणान् पार्थान् सुयोधनादीन् सुतान् द्रष्टुमिच्छामि यस्मात् तस्मात् कलहो न स्यादिति सम्बन्धः ।। २९४ ।।

**चट्टि–** इति ब्रुवाणम्, विदुरं प्रति धृतराष्ट्रः आहेति शेषः । किमिति? अत्रास्मिन् द्यूते कलहो यथा न स्यात् तथा वयमेव निवारयामः । तर्हि द्यूतेन किं प्रयोजनमित्यत आह– **यस्मादिति** ।। एकसंस्थानेकत्र संस्थितान् क्रीडतः देवनक्रीडां कुर्वाणान् पार्थान् सुयोधनादींश्चेति सुतान् द्रष्टुमिच्छामि यतस्तस्मादिति सम्बन्धः ।। २९४ ।।

**अतः क्षिप्रमुपानेयाः पार्था इति बलोदितः ।**
**ययौ स विदुरः पार्थान् द्वारकां केशवे गते ।।२९५।।**

**वेदाङ्गतीर्थीया–** केशवे इन्द्रप्रस्थात् द्वारकां गते सति ।। २९५-२९६ ।।

**वरदराजीया–** बलोदितो बलात्कारेण प्रेरितो विदुरः पार्थान् ययौ । द्वारकां प्रति केशवे कृष्णे गते सति ।। २९५ ।।

**भावविवृतिः–** 'ययौ स विदुरः पार्थान् द्वारकां केशवे गते' इत्यत्र स विदुरः केशवे द्वारकां प्रति गते सति पार्थान् ययौ ।।२९५।।

**जनार्दनीया–** पार्थाः उपानेयाः आनेतव्या इति वलोदितः वलात्कारेण आनेतुमुदितः । विदुरः केशवे इन्द्रप्रस्थाद् द्वारकां प्रति गते सति, पार्थान् प्रति ययौ ।।२९५।।

**चट्टि–** अतः पार्थाः क्षिप्रमुपानेया आनेतव्या इति वलोदितो वलात्कारेणोदितः सः विदुरः केशवे श्रीकृष्णे इन्द्रप्रस्थाद् द्वारकां प्रति गते सति पार्थान् प्रति ययौ ।। २९५ ।।

**गते हि पार्थसन्निधेः सुयोधने तु नारदः ।**
**शशंस धर्मसूनुना प्रचोदितोऽरिमागतम् ।।२९६।।**

**व्यासतीर्थीया–** केशवस्य पार्थसन्निधेर्द्वारकां प्रति गमने निमित्तजिज्ञासायामाह– **गते हीति** ।।

**वरदराजीया–** सुयोधने पार्थसन्निधेः गते सति अथानन्तरं नारदो धर्मसूनुना वदेति चोदितो पृष्टः आगतं तपसो निवृत्तमरिं साल्वं शशंस ।। २९६ ।।

**अनन्तभट्टीया–** केशवासन्निधाने निमित्तमाह– **गत इति** ।। २९६ ।।

**भावविवृतिः–** 'गते हि' इत्यत्र नारदो दुर्योधने पार्थसन्निधेः सकाशात् नागपुरं गते सति अनु अनन्तरमेवागतः कृष्णे विद्यमान एवेत्यर्थः । विदुरस्तु कृष्णे इन्द्रप्रस्थात् द्वारकां गते सति आगत इत्यर्थः ।।२९६-३०५।।

**जनार्दनीया–** कृष्णस्य द्वारकां प्रति गमने कारणमाह– **गत इति** ।। पार्थसन्निधेः पार्थसमीपात् । अथ नारदः अत्रागतो नारदः धर्मसूनुना प्रचोदितः वार्तां वदेति प्रेरितः पृष्ट इत्यर्थः । आगतं अरिं शत्रुं साल्वं शशंस अकथयत्, स्वराष्ट्रं प्रतीति शेषः ।।२९६।।

**भारतश्री–** पाण्डवसभातलात् सुयोधनगमनानन्तरं श्रीकृष्णस्य द्वारकागमनप्रकारमाह– **गते हि पार्थसन्निधेरित्यादिना**।। २९६-३०५।।

**चट्टि–** श्रीकृष्णस्य द्वारकां प्रतिगमने कारणमाह– **गत इति** ।। पार्थसन्निधेः पार्थसमीपात् सुयोधने गते सति अथ नारदः अत्रागतो नारदः धर्मसूनुना प्रचोदितः वार्तां वदेति प्रेरितः पृष्ट इत्यर्थः । आगतमरिं शत्रुं साल्वं शशंस अकथयत्, स्वराष्ट्रं प्रतीति शेषः ।। २९६ ।।

**[१]क उद्यमी नृपेष्विति प्रपृष्ट आह नारदः ।**
**स सौभराड् वरं शिवादवाप [२]वृष्णिनिर्जयम् ।।२९७।।**

---

१. नृपाणां शौर्ययुक्तानां सर्वमण्डलवासिनाम् । इदानीं कतमः शूरो नित्योद्योगेन वर्तते ।। इति भागवते- १०.८४.११ नारदं प्रति धर्मराजप्रश्नः वर्तते ।

२. 'वृष्णिनिर्जयं' इति जनार्दनीय-चट्टीपाठान्तरम् ।

**व्यासतीर्थीया–** 'गते हि' इत्युक्तं विवृणोति– **क इति** ।। २९७-२९९ ।।

**वेदाङ्गतीर्थीया–** 'नारदः शशंस' इत्युक्तं विवृणोति– **क उद्यमीति** ।। २९७-२९९ ।।

**वरदराजीया–** उक्तमेव विशदयति– **क इति** ।। नृपेषु मध्ये को नृपः उद्यमी युद्धार्थमुद्योगी तिष्ठति इति प्रपृष्टः नारद आह । किमिति? सौभराट् साल्वः वृष्णीनां यादवानां निर्जयो यस्मात्तं वरं शिवादवाप ।।

**अनन्तभट्टीया–** प्रपृष्टः, धर्मजेन इति शेषः । सः प्रसिद्धः । वृष्णीनां निर्जयो यस्मात्तं वरम् ।।२९७।।

**जनार्दनीया–** 'नारदः शशंस' इत्युक्तं विवृणोति– **क उद्यमीति** ।। नृपेषु मध्ये कः उद्यमी उद्योगी, विजयायेति शेषः । इति पृष्टः नारद आह, युधिष्ठिरेणेति शेषः । किमिति? स सौभराट् सौभपतिः साल्वः शिवाद्वरं अवाप, पूर्वमिति शेषः । वृष्णिनिर्जयं रुक्मिणीहरणे वृष्णिना कृष्णेन निर्जयं पराजयं प्राप्य । 'अयादवीं महीमिमां करिष्ये' इति प्रतिज्ञां कृत्वा, पांसुमुष्टिं पांसूनामेकमुष्टिं सकृदेकवारं ग्रसतीति ग्रासी । एतादृशः साल्वः । कृष्णजये विषयसप्तमी । बहूनब्दान् तपश्चरन् हरात् पुनः वरं आप्याजगाम, स्वराष्ट्रमिति शेषः । इत्यध्याहारेण श्लोकद्वयस्यान्वयः । 'वृष्णिनिर्जये' इति पाठे सति सप्तमी, प्राप्ते सतीति शेषः ।। २९७-२९८ ।।

**चट्टि–** 'नारदः शशंस' इत्युक्तं विवृणोति– **क उद्यमीति** ।। नृपेषु मध्ये कः नृपः उद्यमी युद्धार्थमुद्यमीति प्रपृष्टः नारदः आह, युधिष्ठिरेणेति शेषः । किमिति? सौभराट् साल्वः शिवाद्वरमवाप, पूर्वमिति शेषः । वृष्णिनिर्जयं रुक्मिणीहरणे वृष्णिना श्रीकृष्णेन निर्जयं पराजयं प्राप्य 'अयादवीं महीमिमां करिष्ये' इति प्रतिज्ञां कृत्वा, पांसुमुष्टिं सकृदेकवारं ग्रसतीति ग्रासी । एतादृशः साल्वः कृष्णजये श्रीकृष्णजयविषये बहून् अब्दान् तपश्चरन् हरात् पुनः वरमाप्य जगाम, स्वराष्ट्रमिति शेषः । इत्यध्याहारेण श्लोकद्वयस्यान्वयः । 'वृष्णिनिर्जये' इति पाठे सति सप्तमी, प्राप्ते सति इति शेषः ।। २९७-२९८ ।।

**[1]पांसुमुष्टिं सकृद्ग्रासी बहूनब्दांस्तपश्चरन् ।**
**आजगाम हरादाप्य वरं कृष्णजये पुनः ।।२९८।।**

**वादिराजतीर्थीया–** 'पांसुमुष्टिं सकृद्ग्रासी' इत्यत्र सकृत् ग्रसत इति सकृद्ग्रासीति समस्तं पदम् । तेन द्वितीयोपपत्तिः ।। २९८ ।।

**वरदराजीया–** अकस्माद्वरावाप्तिः कुतः? इत्यत आह– **पांस्विति** ।। पांसुमुष्टिं सकृदेकवारं ग्रसतीति तथा सन् । हरात् कृष्णजयविषये वरमवाप्य पुनराजगाम ।। २९८ ।।

**अनन्तभट्टीया–** सकृत्पांसुमुष्टिम् । कृष्णजये इति विषयसप्तमी ।।२९८-२९९।।

---

१. 'तपस्तप्त्वा स नृपतिः देवं पशुपतिं प्रभुम् । आराधयामास वने पांसुमुष्टिं सकृद् ग्रसन् ।।' भागवते-१०.७६.४.

**स श्रुत्वा मागधवधं दिशां विजयमेव च ।**
**राजसूयक्रतुं चैव शिशुपालवधं तथा ।।२९९।।**

**वरदराजीया–** स साल्वो मागधवधादिकं श्रुत्वा यदून् प्रत्युद्यममुद्योगं करोतीत्याहेति पूर्वेणान्वयः ।।

**जनार्दनीया–** विजयम्, पार्थानामिति शेषः ।।२९९।।

**चट्टि–** सः साल्वः मागधस्य जरासन्धस्य वधं दिशां विजयं पार्थानां दिग्विजयमेव च । राजसूयक्रतुं चैव तथा शिशुपालवधं च श्रुत्वा तूर्णं यदून् प्रत्युद्यमं उद्योगं करोतीत्याह इति पूर्वेण सम्बन्धः ।। २९९ ।।

**यदून् प्रत्युद्यमं तूर्णं करोतीति निशम्य तत् ।**
**समैक्षद् धर्मजः [१]कृष्णमुखशीतांशुमण्डलम् ।।३००।।**

**व्यासतीर्थीया–** 'कृष्णमुखशीतांशुमण्डलम्' इति प्राप्तेऽपि विरोधे खेदाभावं सूचयति।।३००-३०४।।

**वेदाङ्गतीर्थीया–** 'कृष्णमुखशीतांशुमण्डलम्' इत्यनेन विरोध्यागमनेऽपि व्याकुलताभावः सूचितः ।।

**वादिराजतीर्थीया–** नारदेन बहुधा क्रोधजनकवचने उक्तेऽपि क्रीडामात्रेण सकलजगत्संहरणशक्तस्य कृष्णस्य क्रोधो नाभूदिति सूचनाय 'कृष्णमुखशीतांशुमण्डलम्' इत्यब्रवीत् । तदुक्तं भागवते- 'किञ्चित् प्रहस्य अस्तु नामेत्याह । सा हि महात्मता' इति । तस्मादेवाचार्यैः 'अस्त्वित्युक्त्वा' इत्युक्तम् । अतो न केवलमर्थतः साम्यं किन्तु शब्दतोऽपि गुरुशिष्यग्रन्थयोः साम्यम् । कचित् कचित् गुरुवाक्यरत्नैः सह स्वसुवाक्यहेममणिमालामलङ्कुरुते भगवानाचार्य इति ज्ञेयम् ।।३००-३०६।।

**वरदराजीया–** तत् नारदवचनं निशम्य शीतांशुमण्डलं चन्द्रमण्डलवत् विद्यमानं कृष्णमुखं समैक्षत् ।।३००।।

**अनन्तभट्टीया–** करोतीत्याहेत्यन्वयः । धर्मजः निशम्य तत् प्रत्युद्यममित्यर्थः ।। ३०० ।।

**जनार्दनीया–** उद्यमं उद्योगं करोतीत्याहेति सम्बन्धः । धर्मजः तन्नारदोक्तं निशम्य, कृष्णमुखशीतांशुमण्डलं कृष्णमुखचन्द्रं समैक्षत् । मुखस्य चन्द्रबिम्बदृष्टान्तेन कृष्णस्यानाकुलत्वं सूचितम् ।।३००।।

**ताम्रपर्णीया–** 'कृष्णमुखशीतांशुमण्डलम्' इति खेदाभावं सूचयति ।।३००-३०६।।

**चट्टि–** धर्मजस्तन्नारदोक्तं निशम्य शीतांशुमण्डलवच्चन्द्रमण्डलवद् विद्यमानं श्रीकृष्णमुखं समैक्षत् । मुखस्य चन्द्रबिम्बदृष्टान्तेन श्रीकृष्णस्य अव्याकुलत्वं सूचितम् ।।३००।।

---

१. 'कृष्णमुखं शीतांशुमण्डलम्' इति वरदराजीयचट्टीपाठः ।

**अस्त्वित्युक्त्वा स गोविन्दः प्रेषयामास यादवान् ।**
**प्रद्युम्नादीन् दिनैः कैश्चित् स्वयं चागात् सहाग्रजः ॥३०१॥**

**वेदाङ्गतीर्थीया–** अस्त्वित्युक्त्वा । स्वमुखमवलोकयतो धर्मसुतस्य यादवाः प्रेषणीयाः इत्यभिप्रायम्, ज्ञात्वेति शेषः ॥ ३०१ ॥

**सत्याभिनवीया–** तत्रैव 'अस्त्वित्युक्त्वा स गोविन्दः..' इति श्लोके 'दिनैः कैश्चित् स्वयं चागात् सहाग्रजः' इत्यस्य सहाग्रजः कृष्णः कैश्चित् कानिचित् दिनैः दिनानि पाण्डवसमीपे एव स्थित्वा स्वयं चागादित्यर्थः । एतेन कैश्चित् दिनैरित्येतत् अनन्वितमिति दूषणं परिहृतम् । पाण्डवसमीप एव स्थित्वा इत्यनेनाध्याहृतेनान्वयस्योक्तत्वात् । एतेनैव 'कालाध्वनोरत्यन्तसंयोगे' इत्यनेन द्वितीयाविधानात् कानिचित् दिनानीति वक्तव्यम् । कैश्चित् दिनैरिति कथनमयुक्तमिति चोद्यं परास्तम् । कैश्चित् दिनैरिति तृतीया कानिचित् दिनानीति द्वितीयादेश इत्यभ्युपगमात् ॥ ३०१-३०३ ॥

**वरदराजीया–** अस्तु, किं तावतेत्युक्तो प्रद्युम्नादीन् यादवान् प्रेषयामास पुरत इत्यर्थः । कैश्चित् कतिपयैर्दिनैः सहाग्रजः स्वयं चागच्छत् ॥ ३०१ ॥

**जनार्दनीया–** स गोविन्दः । अस्तु तथास्तु आगच्छतु । किं करिष्यतीत्यर्थः । इत्युक्त्वा कैश्चिद्दिनैः कतिपयदिनैः कालान्तरेणेत्यर्थः । स्वयमागात् ॥ ३०१ ॥

**चट्टि–** सः गोविन्दः श्रीकृष्णः अस्तु तथास्तु आगच्छतु । किं करिष्यतीत्युक्त्वा प्रद्युम्नादीन् यादवान् प्रेषयामास । कैश्चित् दिनैः कतिपयैः दिनैः कालान्तरेणेत्यर्थः । स्वयं च सहाग्रजः बलभद्रेण सहितः सन्नगात् ॥ ३०१ ॥

**विदुरस्तु ततो गत्वा धर्मराजमथाऽह्वयत् ।**
**भ्रातृभिर्वार्यमाणोऽपि कृष्णया च स धर्मराट् ।**
**सार्धं मात्रा भ्रातृभिश्च कृष्णया च ययौ द्रुतम् ॥३०२॥**

**वेदाङ्गतीर्थीया–** कारणपूर्वकं कृष्णगमनमुक्त्वाऽह्वातुं गतेन विदुरेण किं कृतमित्याह– **विदुरस्त्वि-त्यादिना** ॥ ३०२ ॥

**वरदराजीया–** एवं कृष्णे गते सति, ततोऽनन्तरं विदुरो गत्वा धर्मराजं समाह्वयत् । कृष्णया द्रौपद्या च वार्यमाणः मात्रादिभिः सार्धं द्रुतं शीघ्रं ययौ ॥ ३०२ ॥

**जनार्दनीया–** ततः कृष्णगमनानन्तरम् । आह्वयत्, द्यूतार्थमिति शेषः । वार्यमाणोऽपि तैः सार्धं ययौ, द्यूतार्थमिति शेषः ॥ ३०२ ॥

**चट्टि–** ततः कृष्णगमनानन्तरं विदुरो गत्वा धर्मराजमाह्वयत्, द्यूतार्थमिति शेषः । सः धर्मराट् भ्रातृभिः कृष्णया द्रौपद्या च वार्यमाणोऽपि मात्रा कुन्त्या भ्रातृभिश्च कृष्णया च सार्धं द्रुतं ययौ ।।३०२।।

**ज्येष्ठाज्ञयैव विदुर आह्वयन्नपि धर्मजम् ।**
**नाऽगन्तव्यमिति प्राह दोषानुक्त्वाऽक्षजान् बहून् ।।३०३।।**

**वेदाङ्गतीर्थीया–** अक्षजान् अक्षक्रीडाजातान् ।। ३०३ ।।

**वरदराजीया–** ज्येष्ठस्य धृतराष्ट्रस्य आज्ञयैवाह्वयन्नपि न आगन्तव्यमित्येव प्राह । किं कृत्वा? अक्षजान् दोषान् बहूनुक्त्वा ।। ३०३ ।।

**जनार्दनीया–** ज्येष्ठाज्ञयैवाह्वयन्नपि । अक्षजान् अक्षक्रीडाजातान् 'सभामेति कितवः' (ऋ.१०.३४.६) इत्यादि श्रुत्युक्तान् बहून् दोषान् उक्त्वा नागन्तव्यमिति प्राह ।।३०३।।

**चट्टि–** विदुरः ज्येष्ठस्य धृतराष्ट्रस्य आज्ञयैव धर्मजमाह्वयन्नपि अक्षजान् अक्षक्रीडाजातान् बहून् दोषानुक्त्वा नागन्तव्यमिति प्राह ।। ३०३ ।।

**इतीह दोषसञ्चयस्तथापि ते पितुर्वचः ।**
**समीक्ष्य तद् द्वयं स्वयं कुरुष्व कार्यमात्मनः ।।३०४।।**

**वेदाङ्गतीर्थीया–** इह द्यूतक्रियायाम् ।। ३०४ ।।

**सत्याभिनवीया–** तत्रैव 'इतीह दोषसञ्चयस्तथाऽपि..' इति श्लोकः । तस्यार्थः- इह अस्मिन् आगमनपक्षे दोषसञ्चयः अस्ति । ते पितुः तथा वचः आगन्तव्यमिति वचोऽप्यस्ति । इति हेतोः तद्द्वयं त्वं स्वयं स्वातन्त्र्येण समीक्ष्य विचार्य आत्मनः कार्यं कुरुष्वेति । एतेन स्वयं समीक्ष्य करोतु इति वक्तव्यम् । स्वयं समीक्ष्य कुरुष्वेति कथनमनुपपन्नमिति दूषणं पराकृतम् । स्वयम् इत्यस्य भवानित्यर्थो न किंतु स्वतन्त्र्येणेत्यर्थ इत्यभ्युपगमात् ।। ३०४-३११ ।।

**वरदराजीया–** इत्युक्तप्रकारेण इह देवने दोषसञ्चयो यद्यपि तथापि ते तव पितृवचोऽप्यस्ति । स्वयं समीक्ष्यात्मनः कार्यं कुरुष्व ।।३०४ ।।

**अनन्तभट्टीया–** इह ग्लहने इत्यर्थः । इत्युक्तप्रकारेण दोषसञ्चयोऽनर्थसमूह इत्यर्थः । तर्हि स्थास्यामीत्यत आह– **तथेति** ।। तथा ते पितुः वचोऽपि अवस्थानप्रतिरोधकमिति भावः । दोषसञ्चयपितृवचनलक्षणं तद्द्वयम् ।।३०४।।

**जनार्दनीया–** इत्युक्तप्रकारेण इह अक्षक्रीडायां दोषसञ्चयो यद्यपि तथापि ते पितुर्वचः अक्षक्रीडा कर्तव्येति पितृवचः, अस्तीति शेषः । तद्द्वयं अक्षक्रीडोक्तं दोषसञ्चयं पितृवचनं चेति द्वयं स्वयं समीक्ष्य विचार्य आत्मनः कार्यं कर्तुं योग्यं कुरुष्व ।।३०४।।

**चट्टि–** इत्युक्तप्रकारेण अक्षक्रीडायां दोषसञ्चयान् दोषसमूहो यद्यप्यस्ति तथापि ते पितुः धृतराष्ट्रस्य वचः अक्षक्रीडा कर्तव्येति पितुर्वचः, अस्तीति शेषः । तद्द्वयमक्षक्रीडोक्तदोषं पितुर्वचनं चेति द्वयं स्वयं समीक्ष्य विचार्यात्मनः कार्यं कर्तुं योग्यं कुरुष्व ।। ३०४ ।।

**इतीरितोऽपि पाण्डवो ययौ कलिप्रवेशतः ।**
**विचित्रवीर्यजं च तं समासदत् ससैनिकः ।।३०५।।**

**व्यासतीर्थीया–** भ्रात्रादिनिवारितो द्यूताय अधर्मकरणाय कुतो ययावित्यतो निमित्तमाह– **कलीति** ।।

**वेदाङ्गतीर्थीया–** नाऽगन्तव्यमित्यभिप्रायेण इतीरितोऽपि ।। ३०५-३०६ ।।

**वरदराजीया–** इतीरितोऽपि कलिप्रवेशतः कारणाद्ययौ । ससैनिकः सन् समासदत् प्रायात् ।।३०५।।

**जनार्दनीया–** पाण्डवः कलिप्रवेशतः निमित्तात् समासदत् प्राप ।।३०५।।

**चट्टि–** पाण्डवो युधिष्ठिरः इतीरितोऽपि कलिप्रवेशतः निमित्तात् ययौ । ससैनिकः सन् विचित्रवीर्यजं नृपं समासदत् प्राप ।। ३०५ ।।

**[१]कल्यावेशान्नृपतिः प्रतिजज्ञे पूर्वमेव धर्मात्मा ।**
**आहूतो [२]द्यूतरणान्निवर्तेयं नैव वारितोऽपीति ।।३०६।।**

**वरदराजीया–** ननु सर्वैर्निवार्यमाणोऽपि कथमागत इत्यत आह– **कल्यावेशादिति** ।। द्यूतकरणात् पूर्वमेव प्रतिजज्ञे प्रतिज्ञां कृतवान् । किमिति? आहूतोऽहं द्यूताख्यरणाद्वारितोऽपि नैव निवर्तेयमिति प्रतिजज्ञ इत्यर्थः ।। ३०६ ।।

**भावविवृतिः–** 'कल्यावेशात्.....वारितोऽपि' इत्यत्र धर्मनृपतिः द्यूतकरणात्, द्वन्द्वैकवद्भावः । द्यूतकरणाभ्यां निमित्तपञ्चमी । द्यूतरणयोर्निमित्तादित्यर्थः । द्यूताख्यरणनिमित्तादिति वा । आहूतोऽहं सुहृद्भिर्वारितोऽपि न निवर्तेयमिति कल्यावेशात्पूर्वमेव, अस्त्रसङ्ग्रहकाल इत्यर्थः । प्रतिजज्ञे ।।३०६।।

**अनन्तभट्टीया–** पूर्वम् एतद् द्यूतकरणात्प्रागित्यर्थः । निवारितोऽपि न निवर्तेयम् । ये द्यूतकरण-प्रतिज्ञायाम् ।। ३०६ ।।

**जनार्दनीया–** गमने कारणान्तरमाह– **कल्यावेशादिति** ।। पूर्वमेव शस्त्रसङ्ग्रहणकाले प्रतिजज्ञे । किमिति? आहूतोऽहम्, देवनार्थमिति शेषः । वारितोऽपि द्यूतकरणात् नैव निवर्तेयमिति प्रतिजज्ञे इति सम्बन्धः ।।३०६।।

---

१. 'न चाकामः शकुनिना देविताहं न चेन्मां जिष्णुराह्वयिता सभायाम् । आहूतोऽहं न निवर्ते कदाचित् तदाहितं शाश्वतं वै व्रतं मे ।।' सभापर्वणि- ८३.१६.

२. 'द्यूतकरणात्' इति जनार्दनीयपाठः । भावविवृतिकाराणां तथा भारतश्रीटिप्पण्यां पाठान्तरञ्च ।

**भारतश्री–** ।। **आहूतो द्यूतरणात् निवर्तेयं नैव वारितोऽपीति** ।। द्यूतरणादिति एकवद्भावः । द्यूतरणाभ्यामित्यर्थः । 'द्यूतकरणात्' इति पाठः प्रायः पुस्तकेषु नास्ति । कल्यावेशस्य द्यूतांशे उपयोगः ।।३०६-३२६।।

**चट्टि–** गमने कारणान्तरमाह– **कल्यावेशादिति** ।। धर्मात्मा नृपतिः युधिष्ठिरः पूर्वं शस्त्रसङ्ग्रहकाले कल्यावेशादेव प्रतिजज्ञे प्रतिज्ञां कृतवान् । किमिति? आहूतो द्यूताख्यरणादहं वारितोऽपि नैव निवर्तेयम् इति प्रतिजज्ञे इति सम्बन्धः ।। ३०६ ।।

**तेनाऽयात् [1]स्वसुहृद्भिर्निवार्यमाणोऽपि नागपुरमाशु ।**
**न हि धर्मो द्यूतकृतो विशेषतः क्षत्रियस्य लोकगुरोः ।।३०७।।**

**व्यासतीर्थीया–** सुहृदोऽपि किमर्थं न्यवारयन्नित्यत आह– **न हीति** ।। ३०७-३११ ।।

**वेदाङ्गतीर्थीया–** लोकगुरोः कर्मप्रवर्तकत्वेन ।। ३०७ ।।

**वादिराजतीर्थीया–** 'न हि धर्मो द्यूतकृतः' इत्यत्र द्यूतकृतः पुरुषस्य धर्मो नहि । विशेषतः लोकगुरोः क्षत्रिस्य धर्मो नेति निवार्यमाणोऽपीति पूर्वेणान्वयः ।। ३०७ ।।

**वरदराजीया–** तेन कारणेन निवार्यमाणोऽप्यायात् । द्यूतकरणे कल्यावेशः किमर्थं वक्तव्य इत्यत आह– **न हीति** ।। द्यूतकृतः पुरुषस्य न धर्मः । क्षत्रियस्य लोकगुरोः लोकश्रेष्ठस्य विशेषतो न धर्मो हि यस्मात् तस्मात् कल्यावेशाभावे कथं तत्प्रवृत्तिरिति भावः ।। ३०७ ।।

**भावविवृतिः–** 'तेनाऽयात्' इत्यत्र न केवलं कलिप्रवेशादायात् किन्तु तेनाप्यस्त्रसङ्ग्रहकाले एवं प्रतिज्ञाकरणेनापि । धर्मजः सुहृद्भिर्वार्यमाणोऽपि नागपुरमायादित्यर्थः । यद्वा नृपतिः कल्यावेशान्निमित्तात् द्यूतकरणात् पूर्वमेव द्यूतार्थमाहूतोऽहं वारितोऽपि न निवर्तेयमिति प्रतिजज्ञे । तेन कारणेन प्रतिज्ञारक्षार्थं आगत इत्यर्थः । 'द्यूतकरणात्' इत्यपि क्वचित्पाठः । द्यूतकरणार्थमित्यर्थः ।। ३०७-३४३ ।।

**अनन्तभट्टीया–** कल्यावेशः किमित्युक्तमित्यत आह– **नहीति** ।। ३०७-३०८ ।।

**जनार्दनीया–** तेन प्रतिज्ञाकरणेन आयात् । किमर्थं निवारित इत्यत आह– **न हीति** ।। द्यूतकृतः पुरुषस्य न धर्मः । विशेषतः लोकगुरोः कर्मप्रवर्तकत्वेन लोकगुरोः क्षत्रियस्य न धर्मः हि यस्मात् तस्मादिति सम्बन्धः ।।३०७।।

**ताम्रपर्णीया–** कुतः स्वसुहृद्भिर्वारित इत्यत आह– **न हि धर्म इति** ।। हि शब्दो यस्मादित्यर्थे । तस्माद्वार्यमाणोऽपीत्यन्वयः ।।३०७-३११।।

---

१. 'स सुहृद्भिः' इति चट्टीपाठः ।

**चट्टि–** तेन कारणेन सः युधिष्ठिरः सुहृद्भिर्निवार्यमाणोऽपि आशु नागपुरं प्रत्यायात् । किमर्थं निवारित इत्यत आह– **न हीति** ।। द्यूतकृतः पुरुषस्य धर्मो नास्ति । विशेषतः लोकगुरोः कर्मप्रवर्तकत्वेन लोकगुरोः क्षत्रियस्य न धर्मः हि यस्मात् तस्मात् इति सम्बन्धः ।। ३०७ ।।

**वैचित्रवीर्यतनयेन तु पाण्डुपुत्राः**
**सम्भावितास्तमुप च न्यवसन् निशायाम् ।**
**प्रातश्च भीष्ममुखराः सकलाश्च भूपा**
**आसेदुराशु च सभां सह पाण्डुपुत्रैः ।।३०८।।**

**वेदाङ्गतीर्थीया–** वैचित्रवीर्यतनयेन विचित्रवीर्य एव वैचित्रवीर्य इति स्वार्थेऽण्प्रत्यये कृते वैचित्रवीर्यतनयो धृतराष्ट्रः तेन । तदाह्वायितानां धृतराष्ट्रप्राप्तौ तत्सम्भावितत्वस्य तत्समीपे निवासस्य चोपपन्नत्वान्न प्रतीतार्थ उक्तः ।। ३०८-३०९ ।।

**वादिराजतीर्थीया–** 'वैचित्रवीर्यतनयेन' इत्यत्र विचित्रवीर्य एव वैचित्रवीर्यः । सहस्रमेव साहस्रमितिवत् । स्वार्थेऽण् । तस्य तनयेनेत्यर्थः ।। ३०८-३०९ ।।

**वरदराजीया–** तं वैचित्रवीर्यं उप समीपे न्यवसन् । भीष्मादयः पाण्डुपुत्रैः सह प्रातः सभामासेदुः आगताः ।।३०८।।

**जनार्दनीया–** वैचित्रवीर्यतनयेन विचित्रवीर्य एव वैचित्रवीर्यः । स्वार्थेऽण्प्रत्यये कृते, वैचित्रवीर्यः तस्य तनयः वैचित्रवीर्यतनय इत्यर्थः । तेन धृतराष्ट्रेण । तथा तमुप धृतराष्ट्रसमीपे मुखराः मुख्याः आसेदुः प्रापुः ।।३०८।।

**चट्टि–** वैचित्रवीर्यः स्वार्थेऽण्प्रत्यये कृते विचित्रवीर्यस्तस्य तनयः वैचित्रवीर्यतनयस्तेन धृतराष्ट्रेण पाण्डुपुत्राः पार्थाः सम्भाविताः सन्तः तमुप धृतराष्ट्रसमीपे निशायां न्यवसंश्च । प्रातः भीष्ममुख्याः सकलाश्च भूपाः पाण्डुपुत्रैः सह सभां चासेदुः ।। ३०८ ।।

**वैचित्रवीर्यनृपतिर्विदुरान्वितोऽस्य गान्धारराजसहितास्तनयाः सकर्णाः ।**
**प्राप्ताः सभातलमथाऽह्वयदत्र धर्मराजं सुतः सुबलकस्य स देवनाय ।।३०९।।**

**वरदराजीया–** वैचित्रवीर्यो नृपतिः धृतराष्ट्रः विदुरान्वितः, तथा अस्य वैचित्रवीर्यस्य तनया दुर्योधनादयः सकर्णाः प्रातः सभातलं प्राप्ताः । अत्र सभातले सः सुबलकस्य सुतः शकुनिः देवनाय द्यूतक्रीडार्थं धर्मराजं समाह्वयत् ।। ३०९ ।।

**अनन्तभट्टीया–** अस्य वैचित्र्यवीर्यस्य तनयाः । स सुबलकस्य सुतः ।। ३०९ ।।

**जनार्दनीया–** अस्य धृतराष्ट्रस्य तनयाः दुर्योधनाद्याः गान्धारराजसहिताः शकुनिसहिताः । अथात्र सभायां सुवलकस्य सुतः शकुनिः देवनाय द्यूतक्रीडायै ।। ३०९ ।।

**चट्टि–** विदुरान्वितः वैचित्रवीर्यो नृपतिः धृतराष्ट्रः सकर्णाः गान्धारजेन शकुनिना सहिताः अस्य धृतराष्ट्रस्य तनयाः सभातलं प्राप्ताः । अथात्र सभायां सुवलकस्य सुतः सः शकुनिः देवनाय द्यूतक्रीडायै धर्मराजमाह्वयत् ।। ३०९ ।।

**सर्वांश्च तत्र कलिराविशदेव भीमपूर्वान् विनैव चतुरः सपृथां च कृष्णाम् ।**
**क्षत्तारमेव च ततो न हि भीष्ममुख्यैस्ते वारिताः कुलविनाशनकर्मवृत्ताः ।।**

**वेदाङ्गतीर्थीया–** ततो हि कल्यावेशादेव । (वृत्ताः) प्रवर्तमानाः ।। ३१०-३११ ।।

**वादिराजतीर्थीया–** 'कलिराविशदेव' इत्यत्र कलिरेवाविशदिति एवकारसम्बन्धः । न त्वन्यं कश्चिद्दैत्यं प्रेषितवानिति भावः ।। ३१०-३१२ ।।

**वरदराजीया–** ननु भीष्मादिभिः कथं न निवारित इत्यत आह– **सर्वानिति** ।। सर्वानित्यस्यापवादमाह– **भीमेति** ।। भीमपूर्वांश्चतुरो भ्रातॄन् सपृथां कुन्त्या सह वर्तमानां कृष्णां च क्षत्तारं विदुरं विनेति कुलविनाशहेतुभूते कर्मणि देवने प्रवृत्ता अपि ते न वारिताः न निवारिताः ।। ३१० ।।

**अनन्तभट्टीया–** 'सर्वान्' इत्यस्य सङ्कोचमाह– **भीमेति** ।। चतुरः भ्रातॄनित्यर्थः । ततः कल्यावेशतः ।।

**जनार्दनीया–** तत्र सभायां भीमादिसप्त चतुरो भ्रातॄन्, सपृथां कुन्त्या सह वर्तमानां कृष्णां च क्षत्तारं विदुरं विनैव सर्वानाविशदेव । ततः कल्यावेशत् कुलविनाशहेतुभूतद्यूतकर्मणि प्रवृत्ताः ते दुर्योधनादयः भीष्ममुख्यैः न निवारिताः ।। ३१० ।।

**चट्टि–** ननु भीष्मादिभिः कथं न निवारिता इत्यत आह– **सर्वानिति** ।। 'सर्वान्' इत्यस्य अपवादमाह– **भीमपूर्वान् विनेति** ।। तत्र सभायां भीमपूर्वान् चतुरः सपृथां कृष्णां च क्षत्तारमेव चेति सप्त विनैव सर्वांश्च कलिराविशदेव । ततः कारणात् कुलविनाशकर्मवृत्ताः कुलविनाशनहेतुभूतद्यूतकर्मणि प्रवृत्ताः ते दुर्योधनादयः भीष्ममुख्यैः न निवारिताः ।। ३१० ।।

**भीमादिभिः स विदुरेण च वार्यमाणो**
**द्यूते निधाय पणमप्यखिलं स्ववित्तम् ।**
**गान्धारकेण विदिताक्षहृदा जितो द्राक्**
**पाण्डोः सुतोऽथ नकुलं न्यदधात् पणाय ।।३११।।**

**सत्याभिनवीया–** तत्रैव 'भीमादिभिस्स विदुरेण च वार्यमाणो..' इति श्लोके 'नकुलं न्यदधात् पणाय' इत्यस्य पणनिधानप्रतिज्ञासंरक्षणाय नकुलं पणं न्यदधादित्यर्थः । एतेन नकुलं पणं न्यदधादिति वक्तव्यम् । नकुलं पणाय न्यदधादिति कथनमनुपपन्नमिति दूषणं प्रत्युक्तम् । पणायेत्यस्य आवृत्तिं पणमिति अर्थवशात् विपरिणामं चाभ्युपेत्य वित्तापहारानन्तरं नकुलरूपेणद्रव्यनिधानं करिष्ये इति प्रतिज्ञारक्षणाय नकुलं पणं न्यदधादित्यर्थ उच्यत इत्यभ्युपगमात् ।। ३११-३१५ ।।

**वरदराजीया–** स पाण्डोः सुतः युधिष्ठिरः भीमादिभिः वार्यमाणोऽपि द्यूतेऽखिलं स्ववित्तं पणं निधाय गान्धारकेण शकुनिना द्राक् आशु जितः । कथम्भूतेन गान्धारकेण? विदिताक्षहृदा ज्ञाताक्षसर्वस्वेन । अथानन्तरं वित्ते पराजिते सति पणाय नकुलं न्यदधात् स्थापितवान् ।। ३११ ।।

**जनार्दनीया–** विदिताक्षहृदा ज्ञाताक्षाभिप्रायेण गान्धारकेण शकुनिना द्राक् शीघ्रं जितः पराजितोऽभूत् । अथ नकुलं पणाय न्यदधात् ।।३११।।

**भावचन्द्रिका–** आदौ नकुलम् ।।३११-३५२।।

**चट्टि–** पाण्डोः सुतो युधिष्ठिरः भीमादिभिश्च विदुरेण च वार्यमाणोऽपि द्यूते अखिलं स्ववित्तमपि पणं निधाय विदिताक्षहृदा ज्ञाताक्षाभिप्रायेण गान्धारेण शकुनिना द्राक् शीघ्रं जितः पराजितोऽभूत् । अथ नकुलं पणाय न्यदधात् ।। ३११ ।।

**तस्मिन् जितेऽथ सहदेवमथार्जुनं च भीमं च सोमकसुतां स्वमपि क्रमेण ।**
**राजा निधाय विजितोऽथ सुयोधनः स्वं सूतं दिदेश पृषतात्मजपुत्रिकायाः ।।**

**व्यासतीर्थीया–** पृषदात्मजपुत्रिकायाः, सकाशमिति शेषः ।। ३१२-३१३ ।।

**वेदाङ्गतीर्थीया–** तस्मिन् जिते पणतया निहिते नकुले पराजिते । (अथ) पराजयानन्तरं पणतयोत्सृष्टे सति । निधाय, पणमिति शेषः । पृषतात्मजपुत्रिकायाः, आनयनार्थमिति शेषः ।। ३१२ ।।

**वरदराजीया–** तस्मिन्नकुले जिते सति सः सहदेवं पणाय न्यदधात् । अथ अर्जुनं च न्यदधात् । भीमं च पणाय न्यदधात् । सोमकसुतां द्रौपदीं च स्वमपि स्वात्मानमपि राजा युधिष्ठिरो निधाय विजितः । अथानन्तरं सुयोधनः स्वसूतं सारथिं पृषतात्मजस्य द्रुपदस्य पुत्रिकायाः द्रौपद्याः, आनयनार्थमिति शेषः । दिदेश आज्ञापितवान् ।। ३१२ ।।

**अनन्तभट्टीया–** पृषतात्मजपुत्रिकायाः, आनयनायेति शेषः ।। ३१२-३१३ ।।

**जनार्दनीया–** सोमकसुतां कृष्णाम् । राजा स्वमपि आत्मानमपि । निधाय, पणमिति शेषः । विजितः पराजितोऽभूत् । पृषतात्मजपुत्रिकायाः द्रौपद्याः दिदेश, आनयनार्थमिति शेषः ।।३१२।।

**ताम्रपर्णीया–** ।। **तस्मिन् जित इति** ।। पणतया निहिते नकुले जिते पराजयानन्तरं पणतयोत्सृष्टे सतीत्यर्थः । पृषदात्मजपुत्रिकायाः, आनयनार्थमिति शेषः ।।३१२-३१३।।

**भावचन्द्रिका–** सूतं प्रातिकामिनामकम् ।। ३१२ ।।

**चट्टि–** तस्मिन् नकुले पराजिते सति सहदेवं तस्मिन् जिते सति अथार्जुनं चाथ भीमं चाथ सोमकसुतां द्रौपदीं च स्वमप्यात्मानमपि क्रमेण राजा युधिष्ठिरः पणाय निधाय विजितः पराजितः अभूदिति सम्बन्धः । अथ सुयोधनः स्वं सूतं पृषतात्मजपुत्रिकायाः द्रौपद्याः, आनयनार्थमिति शेषः । दिदेश ।।

**सूतो गत्वा तदन्तं समकथयदिमां द्यूतमध्ये जिताऽसि**
**क्षिप्रं चाऽयाहि राज्ञां समितिमुरुतरामित्यथो साऽप्यवादीत् ।**
**नाहं यास्ये [१]गुरूणां समितिमिति ययौ सोऽप्यमुं भीमभीतं**
**ज्ञात्वा दुःशासनं सोऽप्यदिशदथ नृपो धार्तराष्ट्रोऽनुजं स्वम् ।।३१३।।**

**वेदाङ्गतीर्थीया–** जितासि पणतयोत्सृष्टासि ।। ३१३ ।।

**वादिराजतीर्थीया–** 'क्षिप्रं चायाहि राज्ञां समितिम्' इत्यत्र गान्धार्याद्याश्रितप्रासादात् राज्ञां समितिमायाहीति योग्यपदाध्याहारेण योजना ।। ३१३-३१५ ।।

**वरदराजीया–** तदन्तं तस्याः समीपं गत्वा सूतः इमां द्रौपदीमकथयत् कथयामास । किमिति? त्वं द्यूतमध्ये जितासि पराजितासि । अतः उरुतरां राज्ञां समितिं सभां प्रति क्षिप्रमायाहीति । अथोऽनन्तरं सा द्रौपद्यपि अवादीत् । किमिति? अहं गुरूणां श्वशुरादीनां समितिं सभां प्रति न यास्ये इति । स सूतोऽपि ययौ । अमुं सूतं भीमाद्भीतं ज्ञात्वा, सोऽपि धार्तराष्ट्रः स्वमनुजं दुःशासनमादिशत् ।। ३१३ ।।

**जनार्दनीया–** सूतः तदन्तं द्रौपदीसमीपं गत्वा, इमां कृष्णां प्रति समकथयत् कथयामास । किमिति? द्यूतमध्ये जितासि पणतयोत्सृष्टासि । समितिं समूहं प्रति आयाहीति सम्बन्धः । अथो सा द्रौपदी अब्रवीत् । अहं गुरूणाञ्च श्वशुरभीष्मादीनां समितिं न यास्ये इत्यब्रवीदिति सम्बन्धः । स सूतः ययौ । सोऽपि धार्तराष्ट्रोऽपि नृपः भीमभीतं बलात्कारकरणे भीमो मां हनिष्यतीति भीमाद्भीतं अमुं सूतं ज्ञात्वा, दुःशासनमदिशत्, कृष्णानयनायेति शेषः ।।३१३।।

**चट्टि–** सूतस्तदन्तं च तस्याः द्रौपद्याः अन्तं समीपं गत्वा प्राप्येमां कृष्णां प्रति समकथयत् कथयामास । किमिति? त्वं द्यूतमध्ये जिता पराजितासि । क्षिप्रं राज्ञां उरुतरामुत्कृष्टां समितिं समूहं आयाहि इति सम्बन्धः । अथानन्तरं सा द्रौपदी अहं कुरूणां कौरवाणां समितिं समूहं न यास्य इत्यवादीत् । सः सूतोऽपि ययौ । अथ सः धार्तराष्ट्रो नृपः दुर्योधनः अमुं सूतं भीमभीतं भीमाद्भीतं ज्ञात्वा, स्वमनुजं दुःशासनमदिशत्, कृष्णानयनायेति शेषः ।।३१३।।

---

१. 'कुरूणां' इति चट्टीपाठः ।

**[1]स पापपूरुषोत्तमः प्रगृह्य केशपक्षके ।**
**पुरः स्वमातुरानयत् सभामयुग्मवाससीम्[2]** **॥३१४॥**

**व्यासतीर्थीया–** केशपक्षके केशभागे ॥ ३१४-३१५ ॥

**वेदाङ्गतीर्थीया–** केशपक्षके उत्तमकेशभागे । अयुग्मवाससीं उत्तरीयवस्त्ररहिताम् ॥ ३१४ ॥

**वरदराजीया–** पापपुरुषेषूत्तमः आद्यो सः दुःशासनः केशपक्षके केशभागे प्रगृह्य स्वमातुः गान्धार्याः पुरः पुरत एवायुग्मवाससीमेकवस्त्रां द्रौपदीं सभां प्रत्यानयत् ॥ ३१४ ॥

**अनन्तभट्टीया–** आमात्रातः केशपक्षके केशभागे । स्वमातुः गान्धार्याः ॥ ३१४-३१७ ॥

**जनार्दनीया–** सः दुःशासनः केशपक्षके केशभागे प्रगृह्य, स्वमातुः पुरः अयुग्मवाससीं उत्तरीयवस्त्र-रहिताम् ॥ ३१४ ॥

**ताम्रपर्णीया–** केशपक्षके पुरत स्थितकेशभागे ॥ ३१४ ॥

**चट्टि–** पापपुरुषोत्तम अनार्यः सः दुःशासनः केशपक्षके केशभागे प्रगृह्य स्वमातुः गान्धार्याः पुरोऽग्रे अयुग्मवाससीमेकवस्त्रां द्रौपदीं सभां प्रत्यानयत् ॥ ३१४ ॥

**समाहृता रजस्वला जगाद भीष्मपूर्वकान् ।**
**अधर्म एष वार्यते न धर्मिभिर्भवद्विधैः** **॥३१५॥**

**वेदाङ्गतीर्थीया–** रजस्वला सती समाहृता । एषः सभां प्रति कुलाङ्गनाहरणात्मकः ॥ ३१५ ॥

**वरदराजीया–** समाहृता सा जगाद । किमिति? धर्मिभिः धर्मज्ञैर्भवद्विधैः अधर्म एष कथं न वार्यते ॥

**जनार्दनीया–** रजस्वला सति समाहृता, सभां प्रतीति शेषः । धर्मिभिः धर्मो विद्यते येषां ते धर्मिणः तैस्तथा । भवद्विधैः भवत्सदृशैः एषः अधर्मः कथं न वार्यते ॥ ३१५ ॥

**ताम्रपर्णीया–** एषः सभां प्रति रजस्वलाकुलाङ्गनाहरणात्मकः ॥ ३१५-३१७ ॥

**चट्टि–** रजस्वला सा द्रौपदी समाहृता सती, सभामिति शेषः । भीष्मपूर्वकान् जगाद । किमिति? धर्मिभिः भवद्विधैः भवत्सदृशैः एषः अधर्मः कथं न वार्यते ॥ ३१५ ॥

---

१. 'ततो जवेनाभिससार रोषाद्दुःशासनस्तामभिगर्जमानः । दीर्घेषु नीलेष्वथ चोर्मिमत्सु जग्राह केशेषु नरेन्द्रपत्नीम्। ये राजसूयाऽऽवभृथे जलेन महाक्रतौ मन्त्रपूतेन सिक्ताः। ते पाण्डवानां परिभूय वीर्यं बलात्प्रमृष्टा धृतराष्ट्रजेन॥' सभापर्वणि-८०..४१-४२.

२. 'एकवस्त्रा त्वधोनीवी रोदमाना रजस्वला । सभामागम्य पाञ्चाली श्वशुरस्याग्रत भव ॥ अथ त्वामगतां सभा दृष्ट्वा राजपुत्रीं सभा तदा । सभ्याः सर्वे विनिन्देरन् मनोभिर्धृतराष्ट्रजम् ॥' सभापर्वणि-८०..३१-३२.

**कथं छलात्मके द्यूते जिते धर्मजयो भवेत् ।**
**न हि द्यूतं [1]धर्ममाहुर्विशेषेण च भूभुजाम् ॥३१६॥**

**व्यासतीर्थीया–** कथं अधर्म एष इत्यत आह– **कथमिति** ॥ छलात्मके धर्माभासे । जिते जये । धर्माभासत्वं कथमस्येत्यत आह– **न हीति** ॥ ३१६ ॥

**वेदाङ्गतीर्थीया–** द्यूतजिताया आहरणं धर्म एव नाधर्म इत्याशङ्क्याह– **कथमिति** ॥ छलात्मके जिते सति । नपुंसके भावे क्तः । धर्मजयः धर्मेण जयः । द्यूतमेव धर्मो न भवति । छलात्मकं सुतरामधर्मः । अतस्तेन जयः कथं धर्मजयो भवेदित्यभिप्रायेणाह– **न हीति** ॥ धर्म्यं धर्मादनपेतम् । तस्मादयमधर्मो निवारणीय इति भावः ॥ ३१६ ॥

**वादिराजतीर्थीया–** 'कथं छलात्मके द्यूते' इत्यत्र छलं छद्म स्वेच्छानुसारेण पतदस्थिविशेषकृताक्षरूपत्वात् 'छलात्मकम्' इत्युक्तम् ॥ ३१६-३१७ ॥

**सत्याभिनवीया–** तत्रैव 'न हि द्यूतं धर्ममाहुर्विशेषेण..' इत्यस्ति । तस्यार्थः- विद्वांसः द्यूतं धर्मं नाहुः । भूभुजां धर्मो न भवतीत्येतत् विशेषेण च विशेषेणैवेत्याहुरित्येतत् हि प्रसिद्धमिति । एतेन द्यूतस्य विशेषतो धर्मत्वं नास्तीत्युक्ते किञ्चिद्धर्मत्वप्राप्तेः भूभुजां द्यूतं विशेषेण धर्मं नाहुरिति कथनमनुपपन्नमिति दूषणं निराकृतम् । धर्ममित्यस्य अर्थवशात् धर्म इति विपरिणामं भवति इति शब्दयोरध्याहारं नञः आवृत्तिं च स्वीकृत्य भूभुजां धर्मो न भवतीत्येतत् हि विशेषेणैवेत्यर्थः । भूभुजां विशेषत एवाधर्म इति तात्पर्यार्थ उच्यत इत्यभ्युपगमात् ॥ ३१६-३१७ ॥

**वरदराजीया–** कथं छलात्मके छलरूपद्यूते जिते सति धर्मस्य पराजयः स्यात् । द्यूतं पण्डिताः न धर्ममाहुः । विशेषेण भूभुजां राज्ञां न धर्ममाहुः ॥ ३१६ ॥

**जनार्दनीया–** छलात्मके छद्मस्वरूपे द्यूते जिते सति धर्मजयः धर्मेण जयः कथं भवेत् । द्यूतमेव धर्मो न भवति । छलात्मकं सुतरामधर्मः । अतः छलात्मकेन द्यूतेन जयः धर्मजयः कथं भवेत्? द्यूतस्याधर्मत्वमुपपादयति– **न हीति** ॥ द्यूतं धर्म्यं धर्मादनपेतं न आहुः, पण्डिता इति शेषः । 'धर्ममाहुः' इति कचित्पाठः । विशेषेण भूभुजां धर्मो नेत्यर्थः । तस्मादधर्मो निवारणीय इति भावः ॥३१६॥

**चट्टि–** छलात्मके छद्मस्वरूपे द्यूते जिते सति धर्मजयः कथं भवेत् । द्यूतस्याधर्मत्वमुपपादयति– **न हीति** ॥ द्यूतं धर्मं नाहुः, पण्डिता इति शेषः । विशेषेण च भूभुजां राज्ञां धर्मो नेत्यर्थः । तस्मादधर्मो निवारणीय इति भावः ॥ ३१६ ॥

---

१. 'धर्म्यमाहुः' इति वेदाङ्गतीर्थीय-जनार्दनीयपाठः । 'धर्ममाहुः' इति जनार्दनीये पाठान्तरम् ।

**[१]येऽधर्मं न वदन्तीह न ते वृद्धा इतीरिताः ।**
**[२]अवृद्धमण्डितां नैव सभेत्याहुर्मनीषिणः ॥३१७॥**

**व्यासतीर्थीया–** माभूद् द्यूतजयो धर्मजयस्तथा च अस्माकं किमित्यत आह– **य इति** ।। अधर्ममिति पदविभागः । वृद्धत्वाभावे च किमित्यत आह– **अवृद्धेति** ।। ३१७ ।।

**वेदाङ्गतीर्थीया–** अधर्मानिवारणे दोषमाह– **य इति** ।। अधर्ममिति पदविभागः । अधर्मं सन्तमधर्मं इति न वदन्ति । ये धर्मं जानन्तः धर्मं न वदन्ति इति वा ।। ३१७ ।।

**वरदराजीया–** इह सभायां ये धर्मं न वदन्ति ते न वृद्धाः । अवृद्धैर्मण्डिता अलंकृता या भवति तां मनीषिणः सभेति नैवाहुः ।। ३१७ ।।

**जनार्दनीया–** अधर्मानिवारणे दोषमाह– **य इति** ।। ये विदुषः इह सभायां अधर्मं अधर्ममिति न वदन्ति न कथयन्ति । यद्वा ये धर्मं जानन्तः सन्तः धर्मं न वदन्ति ते वृद्धा न ज्ञानवृद्धाः नैवेत्यर्थः । इतीरिता, विद्वद्भिरिति शेषः । मनीषिणः पण्डिताः अवृद्धमण्डितां वृद्धैः ज्ञानवृद्धैः मण्डिता अलंकृता न भवतीत्यवृद्धमण्डिता तां तथा । सभामिति शेषः । सभेति नैवाहुः ।।३१७।।

**चट्टि–** अधर्मानिवारणे दोषमाह– **य इति** ।। ये विदुषः इह सभायां धर्मं न वदन्ति । ते वृद्धाः ज्ञानवृद्धा इति नेरिताः । मनीषिणः पण्डिताः । अवृद्धमण्डिता वृद्धैः मण्डिता अलंकृता न भवतीत्यवृद्धमण्डिता या सा सभा नैवेत्याहुः ।। ३१७ ।।

**कथं द्यूते जिता चाहमजिते स्वपतौ स्थिते ।**
**समानधर्मिणीमाहुर्भार्यां यस्माद् विपश्चितः ॥३१८॥**

**व्यासतीर्थीया–** एवं द्यूतजयस्याधर्मत्वमुपपाद्य द्यूतमध्ये जितासीत्यस्योत्तरमाह– **कथं चेति** ।। एवं द्यूतजयस्याधर्मत्वमुपपाद्य स्वपतेर्जितत्वाभावेन स्वस्य जितत्वाभावोक्त्या च धर्मस्य जयमभिमत्याजितोऽपि तव पतिर्भृत्यकर्म न करोतु । त्वं तु कुर्विति शङ्कां न्यायपूर्वकं परिहरति– **समानेति सार्धश्लोकेन** ।।

**वेदाङ्गतीर्थीया–** प्राग् जितत्वमभ्युपगम्य तद्धर्मेण नेत्युक्तम् । इदानीं जितत्वमेव नास्तीत्येतत् सोपपत्तिकमाह– **कथमित्यादिना** ।। ३१८ ।।

---

१. 'ये धर्मं' इति जनार्दनीये तथा चट्टीटिप्पण्यां पदविभागः कृतः ।

२. 'तिष्ठन्ति चेमे कुरवः सभायामीशाः सुतानां च तथा स्नुषाणाम् । समीक्ष्य सर्वे मम चापि वाक्यं विब्रूत मे प्रश्नमिमं यथावत् ।। न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम् । नासौ धर्मो यत्र न सत्यमस्ति न तत्सत्यं यच्छलेनानुविद्धम् ।।' सभापर्वणि-८०.६४-६५.

**वादिराजतीर्थीया–** 'अजिते स्वपतौ स्थिते' इत्यत्र धर्मेण जयो हि जयः । न त्वधर्मेण जयो हि जयः । शकुनिनाऽधर्मं पुरस्कृत्य प्रवृत्तत्वान्नायं जयो जयः । न हि निद्रां कुर्वाणस्य शिरच्छेदेन वधो जय इत्युच्यत इति भावः ।। ३१८ ।।

**सत्याभिनवीया–** तत्रैव 'कथं द्यूतजिता चाहं..' इति श्लोके 'स्वपतौ' इत्यत्र युधिष्ठिरादिव्यावृत्त्यर्थं स्वेत्युक्तम् ।। ३१८-३३१ ।।

**वरदराजीया–** किञ्चाहं कथं जिता? किं कृत्वा जिता? स्वपतौ अजिते तिष्ठति अहमेव जिता किम्? स्वपतौ जिते सति कथमहं जिता? नाथ इत्याह– **कथमिति** ।। अजिते स्वपतौ स्थिते सति कथमहं जिता । कुत इत्यत आह– **समानेति** ।। यस्माद्विपश्चितः पण्डिताः भार्यां समानधर्मिणीं पत्या समानधर्मयुक्तामाहुः ।। ३१८ ।।

**अनन्तभट्टीया–** अजिते पत्यौ जित इति विकल्प्य आद्यं निराकरोति– **कथमिति** ।। तत्र युक्तिमाह– **समानेति** ।। ३१८ ।।

**जनार्दनीया–** प्राग् जितत्वमभ्युपगम्य तद्धर्मत्वं नेत्युक्तम् । इदानीं जितत्वमेव नास्तीत्येतत् सोपपत्तिकमाह– **कथमित्यादिना** ।। अजिते स्वपतौ स्थिते अहं कथं द्यूते जिता । विपश्चितः पण्डिताः समानधर्मिणीं भार्यामाहुः । यस्मात् तस्मात् कथमहं जितेति सम्बन्धः ।।३१८।।

**ताम्रपर्णीया–** द्यूतजिताया आहरणं धर्म एव नाधर्म इत्यतो नाहं जिता पत्युरजितत्वादिति भावेनाह– **कथमिति** ।। जिते, मत्पताविति शेषः । अस्तु त्वत्पत्युरजितत्वं त्वदाकर्षणं कुतो न स्यादित्यत आह– **कथमिति** ।। ३१८ ।।

**चट्टि–** प्राग् जितत्वमभ्युपगम्य तदधर्मत्वेनेत्युक्तम् । इदानीं जितत्वमेव नास्ति इत्येतत् सोपपत्तिकमाह– **कथमित्यादिना** ।। अजिते स्वपतौ स्थिते सति अहं द्यूते कथं जिता विपश्चितः पण्डिता भार्यां समानधर्मिणीमाहुः । यस्मात् तस्मात् कथमहं जिता इति सम्बन्धः ।। ३१८ ।।

**सहैव कर्म कर्तव्यं पतौ दासे हि भार्यया ।**
**दासीत्वं न पृथङ् मे स्याज्जितेऽपि हि पतौ ततः ।।३१९।।**

**व्यासतीर्थीया–** यस्मादेवं न्यायस्ततः पत्यौ दासे भार्यया सहैव हि कर्म कर्तव्यम् । ततो हि न्यायात् पत्यौ जितेऽपि पृथग् दासीत्वं न स्यादित्यर्थः ।। ३१९-३२० ।।

**वेदाङ्गतीर्थीया–** पृथक् पत्युः । ततः भार्यात्वात् ।। ३१९-३२१ ।।

**वादिराजतीर्थीया–** 'पतौ दासे हि भार्यया' इत्यत्र पतौ दासे जाते सत्यपि भार्यया सहैव स्वपतिना सहैव कर्म कर्तव्यम् । स्वपतिर्दासो भूत्वा यत्कर्म करोति तदेव कर्म तेन सहैव कर्तव्यम् । न तु पतिं

विना । पतिव्रता केवलमन्यदासी न भवतीति भावः। यतः पतौ दासेऽपि भार्यया सहैव कर्म कर्तव्यम् । ततः अकरणादिति सम्बन्धः ।। ३१९-३२० ।।

**वरदराजीया–** नापि द्वितीय इत्याह– **सहैवेति** ।। जितेऽपि पतौ वा दासे जिते सति सहैव भार्ययापि कर्म कर्तव्यम् । परन्तु दासीत्वं पृथङ् मे न स्यात् ।। ३१९ ।।

**अनन्तभट्टीया–** द्वितीयं निराकरोति– **सहैवेति** ।। दास इत्येतत् जितस्योपलक्षणम् ।। ३१९ ।।

**जनार्दनीया–** पतौ पत्यौ दासे सति भार्यया सहैव कर्म कर्तव्यम् । ततः कारणात् । मद्दासीत्वं पृथङ् न स्यात् ।।३१९।।

**ताम्रपर्णीया–** अस्तु वा पत्युर्जितत्वं तथापि नाहं सभां प्रति कर्षणीयेत्याह– **सहैवेति** ।। पतौ जितेऽपि तत एव पतौ दासेऽपि भार्याया यतः सहैव कर्म कर्तव्यम् । ततो मे दासीत्वं पृथङ् न स्यादित्यर्थः ।। ३१९-३४३ ।।

**चट्टि–** पतौ पत्यौ दासे सति भार्यया सहैव कर्म कर्तव्यम् । पतौ पत्यौ जितेऽपि मे दासीत्वं ततः पत्युः पृथङ् न स्यात् ।। ३१९ ।।

**इत्युक्ता अपि [1]भीष्माद्याः कल्यावेशेन मोहिताः ।**
**पृच्छ धर्मजमित्युक्त्वा तूष्णीमेव बभूविरे ।।३२०।।**

**वरदराजीया–** इत्युक्ता अपि कल्यावेशेन मोहं प्रापिताः धर्मजं पृच्छेत्युक्त्वा तूष्णीमेव बभूविरे मौनमालम्ब्य स्थिताः ।। ३२० ।।

**अनन्तभट्टीया–** ।। **पृच्छ धर्मजमिति** ।। वयं वक्तुं न शक्ता इति भावः ।। ३२० ।।

**जनार्दनीया–** इत्युक्ता अपि भीष्माद्याः । धर्मराजं पृच्छ, धर्माधर्माविति शेषः ।।३२०।।

**चट्टि–** इत्युक्ता अपि भीष्माद्याः कल्यावेशेन मोहिताः सन्तः धर्मजं पृच्छेत्युक्त्वा, धर्ममिति शेषः । तूष्णीमेव बभूविरे ।। ३२० ।।

**[2]दुर्योधनप्रतीपं हि न कश्चिदशकत् तदा ।**
**उवाच विदुरस्तत्र न धर्मोऽयमिति स्फुटम् ।।३२१।।**

---

१. 'एते द्रोणादयश्चैव वृद्धा धर्मविदो जनाः । शून्यैः शरीरैस्तिष्ठन्ति गतासव इवानताः ।। युधिष्ठिरस्तु प्रश्नेऽस्मिन् प्रमाणमिति मे मतिः । अजितां वा जितां वेति स्वयं व्याख्यातुमर्हति ।।' सभापर्वणि-९१.२०-२१.

२. 'तथा तु दृष्ट्वा बहु तत्र देवीं रोरूयमाणां कुररीमिवार्ताम् । नोचुर्वचः साध्वथवाऽप्यसाधु महीक्षितो धार्तराष्ट्रस्य भीताः ।।' सभापर्वणि-९२.१.

**व्यासतीर्थीया–** तूष्णीं स्थितौ कारणान्तरमाह– **दुर्योधनेति** ।। ३२१ ।।

**वादिराजतीर्थीया–** 'दुर्योधनप्रतीपं हि' इत्यत्र कर्तुं वक्तुं वेति योग्यपदाध्याहारः । 'उवाच विदुरस्तत्र' इत्यत्र विदुरस्यापि यमरूपत्वेन कल्यावेशसम्भवेऽपि 'अविद्यानिद्रां विद्राव्य' इति वचनात् कलिमद-निर्भेदिभीमसेनपक्षपातित्वात् न कल्यावेश इति ज्ञेयम् ।। ३२१-३२२ ।।

**वरदराजीया–** दुर्योधने प्रतीपम्, कर्तुमिति शेषः । तत्र सभायां विदुर आह । किमिति? अयं धर्मो न भवतीति ।। ३२१ ।।

**अनन्तभट्टीया–** दुर्योधनप्रतीपम्, कर्तुं वक्तुं वेति शेषः । अयं धर्मो नेति सम्बन्धः ।। ३२१ ।।

**जनार्दनीया–** दुर्योधनप्रतीपम्, कर्तुमिति शेषः । कश्चित् पुरुषः नाशकद्यदा तदा तत्र सभायां विदुरः अयमधर्म इति स्फुटं व्यक्तं यथा भवति तथोवाच ।।३२१।।

**चट्टि–** दुर्योधनप्रतीपम्, कर्तुमिति शेषः । कश्चिदपि पुरुषः यदा नाशकत् तदा तत्र सभायां विदुरः अयं धर्मो न भवति इति स्फुटं व्यक्तं यथा भवति तथा उवाच ।। ३२१ ।।

**न तस्य वाचं जग्राह धृतराष्ट्रः सहात्मजः ।**
**ऊर्ध्वबाहुः स चुक्रोश देवानां ख्यापयँस्तदा ।।३२२।।**

**व्यासतीर्थीया–** देवानां स्वाशक्तिं ख्यापयन् ।। ३२२ ।।

**वेदाङ्गतीर्थीया–** देवानां स्वाशक्तिं ख्यापयन् ऊर्ध्वबाहुः ।। ३२२-३२५ ।।

**वरदराजीया–** तस्य विदुरस्य । देवानां स्वाशक्तिं ख्यापयन् स विदुरः केवलं चुक्रोश ।। ३२२ ।।

**जनार्दनीया–** तस्य विदुरस्य वाक्यं न जग्राह नाङ्गीचकार । यदा तदा स विदुरः देवानां स्वाशक्तिं स्वस्याशक्तिं ख्यापयन् ऊर्ध्वबाहुः सन् चुक्रोश ।। ३२२ ।।

**चट्टि–** सहात्मजः धृतराष्ट्रः तस्य विदुरस्य वाक्यं न जग्राह नाङ्गीचकार । यदा तदा सः विदुरः देवानां स्वाशक्तिं स्वस्य अशक्तिं ख्यापयन् ऊर्ध्वबाहुः सन् चुक्रोश ।। ३२२ ।।

**स्वाशक्तिं द्रौपदीं चाऽह जिता नैवासि धर्मतः ।**
**अधर्मो हि महानेतां सभामाक्रम्य तिष्ठति ।।३२३।।**

**व्यासतीर्थीया–** धर्मतो जिता न चेत्कुतः कोऽपि तथा न वदतीत्यत आह– **अधर्म इति** ।।३२३-२६

**वादिराजतीर्थीया–** 'स्वाशक्तिं द्रौपदीम्' इत्यत्र स्वाशक्तिं देवानां ख्यापयन्निति पूर्वेणान्वयः ।।३२३-३३४।।

**वरदराजीया–** द्रौपदीं चाह विदुरः । धर्मतः धर्मेण जिता नैवासि । महानधर्मो हि सभामाक्रम्य व्याप्य तिष्ठति ।। ३२३ ।।

**अनन्तभट्टीया–** स्वाशक्तिं ख्यापयन् यस्मादशक्तस्येत्यन्वयः । तस्मादिति शेषः ।। ३२३-३२५ ।।

**जनार्दनीया–** द्रौपदीं चाह । किमिति? धर्मतः धर्मेण जिता नैवासि, त्वमिति शेषः ।।३२३।।

**चट्टि–** द्रौपदीं चाह । किमिति? धर्मतः धर्मेण जिता नैवासि, त्वमिति शेषः । महानधर्मः एतां सभामाक्रम्य तिष्ठतीति आहेति सम्बन्धः ।। ३२३ ।।

**एवं तु विदुरेणोक्ते [1]विकर्णः पापकोऽपि सन् ।**
**आह दम्भार्थमेवात्र धर्मवित्त्वं प्रकाशयन् ।**
**अधर्म एवायमिति [2]कर्णोऽथैनमभर्त्सयत् ।।३२४।।**

**वरदराजीया–** हि यस्माद्विकर्णो दुर्योधनानुजः दम्भार्थमेव आह । किमिति? अयमधर्म एवेति । एनं विकर्णम् ।। ३२४ ।।

**जनार्दनीया–** विकर्णः विकर्णनामा सुयोधनानुजः धर्मवित्त्वं धर्मज्ञत्वं प्रकाशयन्नाह, स्वस्येति शेषः । किमिति? अयमधर्म एवेत्याहेति सम्बन्धः । एनं विकर्णम् ।।३२४।।

**चट्टि–** एवं विदुरेणोक्ते सति विकर्णः विकर्णनामा दुर्योधनानुजः पापकोऽपि सन् अत्र सभायां दम्भार्थमेव धर्मवित्त्वं धर्मज्ञत्वं प्रकाशयन्नाह, स्वस्येति शेषः । किमिति? अयमधर्म एवेत्याहेति सम्बन्धः । अथैनं विकर्णं कर्णोऽभर्त्सयत् ।। ३२४ ।।

**दृष्ट्वा भीमः क्लिश्यमानां च कृष्णां धर्मात्ययं धर्मराजे च दृष्ट्वा ।**
**राजा शास्यो युवराजेन धर्माच्चलन् यस्माद् वाक्यमिदं बभाषे ।।३२५।।**

**वरदराजीया–** क्लिश्यमानां क्लेशमनुभूयमानां दृष्ट्वा यस्मात् कारणाद्धर्माच्चलन् धर्मच्युतो भवन् राजा युवराजेन शास्यः शिक्षणीयः तस्मादिदं शिक्षारूपं वाक्यं बभाषे ।। ३२५ ।।

---

१. 'उक्त्वाऽसकृत्तथा सर्वान् विकर्णः पृथिवीपतीन् । पाणौ पाणिं विनिष्पिष्य निःश्वसन्निदमब्रवीत् ।। विब्रूत पृथिवीपाला वाक्यं मा वा कथञ्चन । मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः ।। चत्वार्याहुर्नरश्रेष्ठाः व्यसनानि महीक्षिताम् । मृगयां पानमक्षांश्च ग्राम्ये चैवातिरक्तताम् । एतेषु हि नरः सक्तो धर्ममुत्सृज्य वर्तते। यथाऽयुक्तेन च कृतां क्रियां लोको न मन्यते । तदयं पाण्डुपुत्रेण व्यसने वर्तता भृशम् । समाहूतेन कितवैरास्थितो द्रौपदीपणः ।। साधारणी च सर्वेषां पाण्डवानामनिन्दिता । जितेन पूर्वं चानेन पाण्डवेन कृतः पणः ।। इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना । एतत्सर्वं विचार्याहं मन्ये न विजितामिमाम् ।।' सभापर्वणि-९०.१८-२४.

२. 'दृश्यन्ते वै विकर्णेह वैकृतानि बहून्यपि । तज्जातस्तद्विनाशाय यथाग्निररणिप्रजः ।।' सभापर्वणि-९०.२७.

**जनार्दनीया–** क्लिश्यमानां दुःखमनुभूयमानाम् । धर्मात्ययं धर्मातिलङ्घनमित्यर्थः । धर्माच्चलन् राजा युवराजेन शास्यः शिक्षणीयो यस्मात् इदं शिक्षारूपं वाक्यं बभाषे ।। ३२५ ।।

**चट्टि–** भीमः क्लिश्यमानां क्लेशमनुभूयमानां कृष्णां च दृष्ट्वा धर्मराजे धर्मात्ययं च धर्मातिलङ्घनमित्यर्थः । दृष्ट्वा धर्माच्चलन् राजा युवराजेन शास्यः शिक्षणीयः यस्मात् तस्मादिदं शिक्षारूपं वाक्यं बभाषे ।।३२५।।

**[1]इमां न्यस्तवतो द्यूते धक्षणीयौ हि ते भुजौ ।**
**नैवमित्यर्जुनोऽवादीत् तमाहाथ वृकोदरः ।।३२६।।**

**वेदाङ्गतीर्थीया–** नैवं एवं न वक्तव्यमिति ।। ३२६ ।।

**वरदराजीया–** तत्किमित्यत आह– **इमामिति** ।। द्यूते इमां द्रौपदीं पणत्वेन न्यस्तवतस्ते भुजौ धक्षणीयौ भस्मीकरणीयाविति बभाष इत्यर्थः । अर्जुनो मैवं वक्तव्यमित्यवादीत् । तमर्जुनम् ।। ३४२ ।।

**अनन्तभट्टीया–** धक्षणीयौ बन्धनीयौ इत्यर्थः ।। ३२६-३२८ ।।

**जनार्दनीया–** किमिति? इमां कृष्णां द्यूते पणत्वेन न्यस्तवतः स्थापितवतः तव भुजौ धक्षणीयौ भस्मीकरणीयाविति बभाष इत्यर्थः । अर्जुनो नैवं एवं न वक्तव्यं इति अवादीत् ।।३२६।।

**चट्टि–** किमिति? इमां कृष्णां द्यूते पणत्वेन न्यस्तवतः स्थापितवतः ते भुजौ धक्षणीयौ भस्मीकरणीयौ इति बभाष इति सम्बन्धः । अर्जुनः एवं न वक्तव्यमित्यवादीत् । अथ वृकोदरस्तमर्जुनमाह ।। ३२६ ।।

**वक्तव्यं न तु कर्तव्यं तस्मान्न हि मया कृतम् ।**
**उत्तमे वचसा शिक्षा मध्यमेऽर्थापहारणम् ।**
**अधमे देहदण्डश्च तस्माद् वाच्यो युधिष्ठिरः ।।३२७।।**

**व्यासतीर्थीया–** धर्माच्चलन्नुत्तमो वक्तव्य इति कुत इत्यतो विवेकेनाह– **उत्तम इति** ।। ३२७-३३०।।

**वेदाङ्गतीर्थीया–** वक्तव्यं अत्र मया वक्तुं योग्यम् । तदेवोपपादयति– **उत्तम इति** ।। ३२७-३२८ ।।

**मधुसूदनीया–**।।अधमेदेहदण्डश्चेति।।चशब्देनवचसाशिक्षां अर्थापहरणञ्चसमुच्चिनोति।।३२७-४२।।

**वरदराजीया–** उत्तमं प्रति वक्तव्यं न तु तथा कर्तव्यम् । तस्मादुक्तमेव मया न तु कृतम् । यस्मात् उत्तमे स्वोत्तमविषये वचसा शिक्षा कर्तव्या शिक्षारूपं वाक्यं वक्तव्यमित्यर्थः । मध्यमेऽपराधिनि अर्थापहरणं द्रव्यापहारः कर्तव्यः । अधमेऽपराधिनि देहदण्डः ताडनादिरूपः कर्तव्यः । तस्मादुत्तमत्वात् युधिष्ठिरो वाच्यः ।। ३२७ ।।

---

१. 'अस्याः कृते मन्युरयं त्वयि राजन्निपात्यते । बाहू ते सम्प्रधक्ष्यामि सहदेवाग्निमानय ।।' सभापर्वणि-९०.६.

**अनन्तभट्टीया–** किमु वक्तव्यं युधिष्ठिरमित्यत आह– **युधिष्ठिर इति** ।।३२७।।

**जनार्दनीया–** वक्तव्यं वक्तुं योग्यम् । न तु कर्तव्यं यस्मात् । तस्मात् मया तत्र कृतं शिक्षा न कृता । वक्तव्यमित्युक्तमुपपादयति– **उत्तम इति** ।। उत्तममध्यमाधमापराधिषु भर्त्सनम्, द्रव्यापहरणम्, ताडनं क्रमात् कर्तव्यं यस्मात् तस्मात् युधिष्ठिरो वाच्यः वक्तुं योग्यः, मयेति शेषः । इत्याहेति सम्बन्धः ।।३२७।।

**भारतश्री–** ।। **उत्तमे वचसा शिक्षेति** ।। उत्तमे ब्राह्मणे, मध्यमे क्षत्रियवैश्ययोः, अधमे शूद्रे । सामान्यधर्मोऽयम् । ब्राह्मणेषु ब्राह्मणानां धर्मं उत्तमे वचसा शिक्षा, मध्यमे अर्थापहारणम्, अधमे देहदण्डः प्रहारादिकम्, न त्ववयवच्छेदादिः । क्षत्रियेष्वपि एवमेव । वैश्ये क्षत्रियवत् । शूद्रे देहदण्डः छेदादिकः । अयं विशेषः धर्मः शास्त्रादवगन्तव्यः ।। ३२७-३२८ ।।

**चट्टि–** किमिति? उत्तमं प्रति वक्तव्यं न कर्तव्यम् । यस्मात् तस्मात् मया न कृतं हि शिक्षा न कृता । वक्तव्यमित्युक्तमुपपादयति– **उत्तम इति** ।। उत्तमे स्वोत्तमे विषये वचसा शिक्षा कर्तव्या शिक्षारूपं वाक्यं वक्तव्यमित्यर्थः । मध्यमेऽपराधिनि अर्थापहारणं द्रव्यापहारः कर्तव्यः । अधमेऽपराधिनि देहदण्डः ताडनरूपश्च कर्तव्यः । यस्मात् तस्मात् वाच्यः वक्तुं योग्यः, मयेति शेषः । इत्याहेति सम्बन्धः ।।३२७।।

**[1]अथ कर्णोऽब्रवीत् कृष्णामपतिर्ह्यसि शोभने ।**
**[2]धार्तराष्ट्रगृहं याहीत्यथ दुर्योधनोऽवदत् ।**
**परस्परविरोधार्थं पाण्डवानामिदं वचः ।।३२८।।**

**वरदराजीया–** हे शोभने! त्वमपतिः पतिरहिताऽसि । अतो धार्तराष्ट्रगृहं याहीति कृष्णां प्रति कर्णः अब्रवीत् । दुर्योधनः कृष्णामिदं वचोऽवदत् । किमर्थम्? पाण्डवानां परस्परविरोधार्थम् ।। ३२८ ।।

**जनार्दनीया–** अपतिः पतिरहिता । पाण्डवानां परस्परविरोधार्थं विरोधोत्पादनार्थं इदं द्वेषोत्पादकं वचः दुर्योधनोऽवदत् ।।३२८।।

**चट्टि–** अथ कर्णः कृष्णां द्रौपदीं प्रति हे शोभने! त्वमपतिः पतिरहिताऽसि । धार्तराष्ट्रस्य दुर्योधनस्य गृहं याहीत्यब्रवीत् । अथ दुर्योधनः पाण्डवानां परस्परविरोधार्थं परस्परविरोधोत्पादनार्थं इदं द्वेषोत्पादकं वचः कृष्णां प्रत्यवदत् ।। ३२८ ।।

---

१. 'एको भर्ता स्त्रिया देवैर्विहितः कुरुनन्दन । इयं त्वनेकवशगा बन्धकीति विनिश्चिता ।। अस्या सभामानयनं न चित्रमिति मे मतिः ।।' सभापर्वणि-९०.३५.

२. 'प्रविश्य राज्ञः परिवारं भजस्व तत्ते कार्यं शिष्टमादिश्यतेऽत्र । ईशास्तु सर्वे तव राजपुत्रि भवन्ति वै धार्तराष्ट्रा न पार्थाः ।।' सभापर्वणि-९२.२०.

**'युधिष्ठिरो दुःखहेतुस्तवैको यद्येनमन्ये न गुरुर्न एषः ।**
**इति ब्रूयुरथवा भीमपार्थावेकोऽपि वा भीम इहोत्सृजे त्वाम् ॥३२९॥**

**वेदाङ्गतीर्थीया–** अन्ये भीमादयश्चत्वारः ॥ ३२९ ॥

**वरदराजीया–** हे द्रौपदी! एको युधिष्ठिर एव तव दुःखहेतुरतो यद्येनं युधिष्ठिरं अन्ये भीमाद्याः चत्वारः युधिष्ठिरो नास्माकं गुरुः पूज्य एव न भवतीति ब्रूयुः । अथवा भीमपार्थौ न गुरू इति ब्रूयाताम् । अथवा भीम एव वा मम गुरुर्न भवतीति ब्रूयात् । तर्हि इह सभायां त्वामुत्सृजे मुञ्चामि ॥ ३२९ ॥

**अनन्तभट्टीया–** अन्ये इमे भीमादयश्चत्वारः । एकः केवलः युधिष्ठिरः तव दुःखहेतुः । एषः धर्मजः नः गुरुः न इति । एनं धर्मजं यदि ब्रूयुः । अथवा भीमपार्थौ ब्रूयाताम् । एको भीमो ब्रूयात् । तर्हि त्वामहमुत्सृजेयं मुञ्चेयमित्यर्थः ॥ ३२९ ॥

**जनार्दनीया–** किमिति? युधिष्ठिरः तव दुःखहेतुः । एषः युधिष्ठिरः नोऽस्माकं न गुरुः पूज्यो न इति यदि अन्ये भीमादयश्चत्वारः एनं ब्रूयुः । अथवा भीमपार्थौ ब्रूयाताम् । एकः भीमोऽपि वा ब्रूयात् । तर्हि इह सदसि त्वामुत्सृजे मुञ्चामि ॥ ३२९ ॥

**अतिविशद–** 'युधिष्ठिरो...धर्मजोऽसंशयेन' इत्यत्र दुर्योधनेन द्रौपदीं प्रत्युच्यते । एषः धर्मजः अस्माकं न गुरुरित्यन्ये ब्रूयुः । अथवा भीमपार्थौ एकोऽपि भीमः ब्रूयात् । तर्हि त्वामुत्सृजे इत्येतत् श्रुत्वा भीमेनोच्यते 'पूज्योऽस्माकं धर्मजः संशयो न' इति । अत्र गुरुरिति वक्तव्यम् । धर्मजः अस्माकं पूज्य इति वचनं वस्तुतोऽस्य गुरुत्वं नास्तीति सूचनार्थम् । तदुक्तम्- 'स गुरुर्यः क्रियाः कृत्वा वेदं तस्मै ददाति च । उपनीय वदेद्वेदं आचार्यः समुदाहृतः ॥ एकदेश उपाध्यायः ऋत्विजश्च स उच्यते । एते मान्या यथापूर्वं...॥' इति ॥ ३२९-३४३ ॥

**भारतश्री–** अन्ये भीमार्जुननकुलसहदेवाः नः एषः युधिष्ठिरः गुरुः नेति यदि ब्रूयुः । भीमपार्थौ इत्यादौ यथायोग्यं क्रियाध्याहारः॥ ३२९ ॥

**चट्टि–** किमिति? एको युधिष्ठिरस्तव दुःखहेतुः । यद्यन्ये भीमादयश्चत्वारः एषो युधिष्ठिरो नोऽस्माकं गुरुः पूज्यो न भवतीति एनं युधिष्ठिरं ब्रूयुः । अथवा भीमपार्थौ ब्रूयाताम् । एको भीमोऽपि वा ब्रूयात् । तर्हि इह सदसि त्वामुत्सृजे मुञ्चामि ॥ ३२९ ॥

---

१. 'भीमस्य वाक्ये तद्वदेवार्जुनस्य स्थितोऽहं वै यमयोश्चैवमेव । युधिष्ठिरं ते प्रवदन्त्वनीशमथो दास्यात् मोक्ष्यसे याज्ञसेनि ॥' सभापर्वणि-९२.३८.

**इत्युक्त ऊचे 'पवमानसूनुः पूज्योऽस्माकं धर्मजोऽसंशयेन ।**
**गुरुश्चाहं वोऽखिलानां यतो हि बलज्येष्ठं क्षत्रमाहुर्महान्तः ॥३३०॥**

**वेदाङ्गतीर्थीया–** बलज्येष्ठं क्षत्रं क्षत्राणां गुरुमाहुः ॥ ३३० ॥

**वरदराजीया–** इत्युक्ते पवमानस्य सूनुः भीमः ऊचे । किमिति? अस्माकं सर्वेषां धर्मजः पूज्यो गुरुः । अखिलानां वः युष्माकं अहं गुरुः पूज्यः । बलज्येष्ठं क्षत्रं क्षत्रियं गुरुमाहुः ॥ ३३० ॥

**अनन्तभट्टीया–** क्षत्रं बलज्येष्ठः ॥३३०॥

**जनार्दनीया–** इत्युक्ते सति धर्मजः अस्माकं पूज्यः गुरुश्च । अहं वः युष्माकं गुरुः । यतः महान्तः बलज्येष्ठं क्षत्रं क्षत्रियं क्षत्रियाणां गुरुमाहुः ॥३३०॥

**चट्टि–** दुर्योधनेनेत्युक्ते सति पवमानसूनुः भीमः ऊचे । धर्मजः अस्माकं पूज्यः गुरुश्च । अहमखिलानां वः युष्माकं गुरुः यतः महान्तः बलज्येष्ठं क्षत्रं क्षत्रियजातिविशिष्टं पुरुषम्, क्षत्रियाणां गुरुमिति शेषः । आहुः ॥ ३३० ॥

**बलज्यैष्ठ्ये यदि वः संशयः स्यादुत्तिष्ठध्वं सर्व एवाद्य वीराः ।**
**मृद्नामि वः पादतलेन सर्वान् सहानुबन्धान् यश्च मां योद्धुकामः ॥३३१॥**

**व्यासतीर्थीया–** उत्तिष्ठध्वं घटध्वं प्रयतध्वमित्यर्थः । सानुबन्धान् परिवारसहितान् । यो मां योद्धुकामः ॥ ३३१ ॥

**वेदाङ्गतीर्थीया–** वीराः वीरंमन्यमानाः! उत्तिष्ठध्वं सन्नद्धा भवत । न त्वासनादुत्तिष्ठतेति । तथात्वे 'उदोनूर्ध्वकर्मणि' (सि.कौ-२६९१) इति प्रतिषेधादात्मनेपदासम्भवात् । यश्च मां योद्धुकामः स मामायातु ॥ ३३१-३३४ ॥

**वरदराजीया–** मम बलज्येष्ठत्वे वः युष्माकं यदि संशयः स्यात्तर्हि सर्वे एव वीराः उत्तिष्ठध्वम्, युद्धार्थमिति शेषः । सर्वान् वो युष्मान् पादतलेन मृद्नामि मर्दयामि । यो मां योद्धुकामः तं च मृद्नामीत्यर्थः ॥ ३३१ ॥

**अनन्तभट्टीया–** उत्तिष्ठध्वं प्रयतध्वमित्यर्थः । मृद्नामि हनिष्यामीत्यर्थः । यश्च यो वा को वापि ॥

---

१. 'तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदम् । प्रगृह्य रुचिरं दिव्यं भुजं चन्दनचर्चितम् ॥ यद्येष गुरुरस्माकं धर्मराजो महामनाः । न प्रभुः स्यात् कुलस्यास्य न वयं मर्षयेमहि ॥ ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः । मन्यते जितमात्मानं यद्येष विजिता वयम् ॥ न हि मुच्येत मे जीवन् पदा भूमिमुपस्पृशन् । मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्धजानिमान् ॥ पश्यध्वं ह्यायतौ वृत्तौ भुजौ मे परिघाविव । नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः ॥ … धार्तराष्ट्रानिमान् पापान् निष्पिंषेयं तलासिभिः ।' सभापर्वणि-९२.११-१७.

**जनार्दनीया—** हे वीराः! वीरंमन्यमानाः! मम वलज्यैष्ठ्ये वो युष्माकं यदि संशयः स्यात् तर्हि उत्तिष्ठध्वं सन्नद्धाः भवध्वम्, युद्धार्थमिति शेषः । वः युष्मान् मृद्नामि मर्दिष्यामि । यः पुरुषः मां प्रति योद्धुकामः तं मृद्नामीत्यर्थः ।। ३३१ ।।

**चट्टि—** हे वीराः! वलज्यैष्ठ्ये वो युष्माकं यदि संशयः स्यात् तर्हि सर्व एवाद्य उत्तिष्ठध्वं सन्नद्धा भवध्वम्, युद्धार्थमिति शेषः । सहानुबन्धान् सर्वान् वो युष्मान् पादतलेन मृद्नामि मृदिष्ये । यश्च पुरुषः मां प्रति योद्धुकामस्तं मृद्नामीत्यर्थः ।।३३१।।

**इति ब्रुवन् समुत्थितो नदन् वृकोदरो यदा ।**
**विघूर्णिता सभाऽखिला भयान्न चाऽह किञ्चन[१] ।।३३२।।**

**व्यासतीर्थीया—** तदा विघूर्णिता प्रचलिता ।। ३३२-३३८ ।।

**सत्याभिनवीया—** तत्रैव 'विघूर्णिता सभाऽखिला भयान्न..' इत्यस्ति । तस्यार्थः- भयात् विघूर्णिता कम्पिता अखिला सभा किञ्चन न च नैवाहेति । एतेन भयजन्यकम्पात् किमपि नाहेति वक्तव्यम् । भयान्नाहेति भयस्यैव हेतुत्वाभिधानमनुपपन्नम् । अन्यथा कम्पोक्तिः व्यर्था स्यादिति दूषणं परास्तम् । भयादित्यस्य नाहेत्यनेनान्वयो न किन्तु विघूर्णितेत्यनेनान्वयः इत्यभ्युपेत्य भयजनितकम्पनात् नाहेत्यर्थे तात्पर्यमित्यभ्युपगमात् ।। ३३२-३४३ ।।

**वरदराजीया—** यदा नदन् समुत्थितः तदाऽखिला सभा विघूर्णिता भयेन विलोलिता, भयान्न कश्चनाह ।। ३३२ ।।

**अनन्तभट्टीया—** विघूर्णिता चञ्चलेत्यर्थः ।। ३३२ ।।

**जनार्दनीया—** विघूर्णिता चञ्चलेत्यर्थः । किञ्चन किमपि न चाह ।।३३२।।

**चट्टि—** इति ब्रुवन् वृकोदरः भीमः नदन् यदा समुत्थितः तदा अखिला सभा विघूर्णिता चञ्चलेत्यर्थः । भयात् किञ्चन किमपि न चाह ।। ३३२ ।।

**[२]भीष्मो द्रोणो विदुराद्याः क्षमस्व सर्वं त्वयोक्तं सत्यमित्येव हस्तौ ।**
**गृहीत्वैनं स्थापयामासुरस्मिन् स्थिते शान्तिं चाऽपिरे धार्तराष्ट्राः ।।३३३।।**

**वरदराजीया—** भीष्माद्याः एनं भीमं स्थापयामासुः उपवेशयामासुः । किं कृत्वा? हे भीम! क्षमस्व । त्वयोक्तं सर्वं सत्यमिति हस्तौ गृहीत्वेत्यर्थः । अस्मिन् भीमे स्थिते उपविष्टे सति शान्तिं स्वस्थतामापिरे ।।

---

१. 'न चाह कश्चन' इति वरदराजीयपाठः ।

२. तमुवाच तदा भीष्मो द्रोणो विदुर एव च । क्षम्यतामिदमित्येवं सर्वं सम्भाव्यते त्वयि ।। सभापर्वणि-९२.१८

**अनन्तभट्टीया–** *...शान्तिं स्वास्थ्यमित्यर्थः ।। ३३३-३३४ ।।

**जनार्दनीया–** एवं भीमे स्थिते सति उपविष्टे सति । शान्तिं स्वास्थ्यमित्यर्थः ।।३३३।।

**चट्टि–** भीष्मः द्रोणः विदुराद्याश्च हे भीम! क्षमस्व । त्वयोक्तं सर्वं सत्यमेव इति हस्तौ गृहीत्वा एनं भीमं स्थापयामासुः । अस्मिन् भीमे स्थिते उपविष्टे सति धार्तराष्ट्राश्च शान्तिं स्वास्थ्यमित्यर्थः । आपिरे ।।

**[1]निवारितो धर्मजेन गुरुभिश्चापरैस्तदा ।**
**माननार्थं गुरूणां तु न भीमस्तान् जघान ह ।।३३४।।**

**वरदराजीया–** अपरैर्गुरुभिर्भीष्मादिभिः । गुरूणां माननार्थं तान् न जघान ।। ३३४ ।।

**अनन्तभट्टीया–** अपरैः सभास्थैः ।। ३३४ ।।

**जनार्दनीया–** अपरैः सभोपविष्टैः ।।३३४।।

**चट्टि–** भीमो धर्मजेन अपरैः गुरुभिश्च भीष्मादिभिश्च तदा निवारितः सन्, गुरूणां माननार्थं तान् धार्तराष्ट्रान् न जघान ।। ३३४ ।।

**[2]न चात्यवर्तत ज्येष्ठं धर्मात्मानं युधिष्ठिरम् ।**
**तेषां पापाभिवृद्ध्यर्थं ज्येष्ठवृत्तिं च दर्शयन् ।।३३५।।**

**वेदाङ्गतीर्थीया–** वृत्तिं अनुवृत्तिं दर्शयन् लोकस्य ।।३३५-३३७।।

**वादिराजतीर्थीया–** 'तेषां पापाभिवृद्ध्यर्थम्' इत्यत्र तेषां दुर्योधनादीनां पापाभिवृद्ध्यर्थं भीमसेनादपि युधिष्ठिरो ज्येष्ठ इत्यादि भ्रमजननेन पापाभिवृद्ध्यर्थम् । त्रयोदशवर्षपर्यन्तं पुनरपि विष्णुवैष्णवद्रोहेण पापाभिवृद्ध्यर्थं वा ।। ३३५ ।।

**वरदराजीया–** ज्येष्ठं धर्मात्मजं युधिष्ठिरं नैवातिवर्तत । अतिक्रान्तो नाभूत् । कुतः? तेषां दुर्योधनादीनां पापाभिवृद्ध्यर्थं, ज्येष्ठेऽनुजस्य वृत्तिं दर्शयंश्च नैवात्यवर्तत इति सम्बन्धः ।। ३३५ ।।

**जनार्दनीया–** भीमः ज्येष्ठवृत्तिं ज्येष्ठमनुवर्तनं दर्शयन् सन् । तेषां पापाभिवृद्ध्यर्थम् । ज्येष्ठं नातिवर्तते नातिक्रमते ।। ३३५ ।।

**चट्टि–** ज्येष्ठवृत्तिं ज्येष्ठस्य अनुवृत्तिं च दर्शयन् तेषां दुर्योधनादीनां पापाभिवृद्ध्यर्थं ज्येष्ठं धर्मात्मानं युधिष्ठिरं नैवात्यवर्तत ।। ३३५ ।।

---

१. 'तच्चाप्यप्रियमस्माकं पुत्रस्ते समुपाचरत् । द्रौपद्या यत्सभामध्ये सव्यमूरू व्यदर्शयत् ।। तत्रैव वध्यः सोऽस्माकं दुराचारोऽम्ब ते सुतः । धर्मराजाज्ञया चैव स्थिताः स्म समये पुरा ।।' स्त्रीपर्वणि- १४.८-९.

२. 'न चातिवर्तते' इति जनार्दनीयपाठः ।

**अथ दुर्योधनः पापो भीमसेनस्य पश्यतः ।**
**[1]ऊरुं सन्दर्शयामास कृष्णायै भीम आह तम् ॥३३६॥**

**वादिराजतीर्थीया–** 'ऊरुं सन्दर्शयामास' इत्यत्र मम भार्या भूत्वा ऊरावुपविश इति दुर्भावेन ऊरुं वामोरुं प्रदर्शयामासेत्यर्थः॥ ३३६ ॥

**वरदराजीया–** भीमसेनस्य पश्यतः पश्यन्तं भीमसेनमनादृत्य कृष्णायै द्रौपद्यै ऊरुं स्वोरुं दर्शयामास । तं दुर्योधनं भीमः आह ॥ ३३६ ॥

**जनार्दनीया–** ऊरुं अङ्कम् ॥३३६॥

**चट्टि–** अथ पापः दुर्योधनः भीमसेनस्य पश्यतः सतः कृष्णायै द्रौपद्यै ऊरुं सन्दर्शयामास । भीमस्तमाह ॥ ३३६ ॥

**तवोरुमेनं गदयोरुवेगया बिभेत्स्य इत्येव पुनः सुयोधनः ।**
**ऊचे नान्यद् भवतामस्ति वित्तं द्यूते कृष्णं स्थापयध्वं पणाय ॥३३७॥**

**वादिराजतीर्थीया–** बिभेत्स्य एवेति सम्बन्धः ॥ ३३७-३५३ ॥

**वरदराजीया–** एवं सन्दर्शितमूरुं उरुवेगया गदया बिभेत्स्ये भेत्स्यामि । पुनः सुयोधन ऊचे । किमिति? भवतामन्यद्वित्तं नास्ति । सर्वस्य मया हृतत्वात् तस्मात् कृष्णं स्थापयध्वम् ॥ ३३७ ॥

**अनन्तभट्टीया–** बिभेत्स्ये भेत्स्यामि ॥ ३३७ ॥

**जनार्दनीया–** बिभेत्स्ये भेत्स्यामि ॥३३७॥

**चट्टि–** तवैनमूरुमङ्कमुरुवेगया गदया बिभेत्स्ये भेत्स्यामीत्येव भीम आहेति सम्बन्धः । पुनः सुयोधन ऊचे । किमिति? भवतामन्यद्वित्तं नास्ति । सर्वस्य मया हृतत्वात् तस्मात् कृष्णं द्यूते पणाय स्थापयध्वमिति ॥ ३३७ ॥

**अथाब्रवीद् वृकोदरः कृतेऽवमानने हरेः ।**
**निपात्य भूतले हि ते [2]शिरो मृदिष्य इत्यलम् ॥३३८॥**

**वेदाङ्गतीर्थीया–** अलं मृदिष्ये ॥ ३३८ ॥

**वरदराजीया–** हरेः अवमानने कृते सति । शिरोऽलं मृदिष्ये मर्दयिष्यामि ॥ ३३८ ॥

---

१. 'अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव । द्रौपद्याः प्रेक्षमाणायाः सव्यमूरू व्यदर्शयत् ॥' सभापर्वणि-९२.३०.
२. 'सुयोधनमिमं पापं हन्ताऽस्मि गदया युधि । शिरः पादेन चास्याहं अधिष्ठास्यामि भूतले ॥' सभापर्वणि-९२.६२.

**अनन्तभट्टीया–** अलं मृदिष्ये ।। ३३८ ।।

**जनार्दनीया–** मृदिष्ये मृद्नामि ।। ३३८ ।।

**चट्टि–** हरेरवमानने कृते सति अथ वृकोदरः अहं त्वां भूतले निपात्य ते शिरो मृदिष्ये मृद्नामीत्यब्रवीत् ।।

**स वध्य एव मे सदा परोक्षतोऽपि यो हरिम् ।**
**विनिन्दयेदिति ध्रुवं [१]प्रतिश्रुतं हि मारुतेः ।।३३९।।**

**व्यासतीर्थीया–** कृष्णावज्ञाकरणे शिरो मृदिष्य इत्युक्ते निमित्तमाह– **स वध्य इति** ।।३३९-३४३।।

**वेदाङ्गतीर्थीया–** प्रतिश्रुतं प्रतिज्ञा । भावे क्तः ।। ३३९-३४० ।।

**वरदराजीया–** किमर्थमेवमब्रवीदित्यत आह– **स इति** ।। यः परोक्षतो दूरेऽपि हरिं विनिन्दयेत्, स मे मम वध्य एवेति सदा ध्रुवं दृढं प्रतिश्रवं प्रतिज्ञा मारुतेरस्ति । हि यस्मात्तस्मान्मृदिष्ये इत्युक्तमित्यर्थः ।।

**अनन्तभट्टीया–** किमर्थमेवमुक्तमित्यत आह– **स इति** ।। यः परोक्षतोऽपि परोक्षे हरिं विनिन्दयेत् स मे सदा वध्य एवेति मारुतेः ध्रुवं प्रतिश्रुतं हि ।। ३३९ ।।

**जनार्दनीया–** परोक्षतोऽपि परोक्षेऽपि यो हरिं विनिन्दयेत् । स्वार्थे णिच् । विनिन्दयेत् स मे वध्य एवेति मारुतेः सदा प्रतिश्रुतं प्रतिज्ञा । हि प्रसिद्धिः ।।३३९।।

**चट्टि–** परोक्षतः परोक्षेऽपि ये हरिं विनिन्दयेत् । स्वार्थे णिच् । निन्देत् स सर्वथा मे मम वध्य एवेति मारुतेः सदा ध्रुवं प्रतिश्रुतं प्रतिज्ञा हि ।। ३३९ ।।

**पुनश्च पापवृद्धये तदैव नो जघान तम् ।**
**विकर्तनात्मजः पुनर्जगाद [२]सोमकात्मजाम् ।।३४०।।**

**वरदराजीया–** तर्हि किमर्थमिदानीं न हन्यत इत्यत आह– **पुनश्चेति** ।। तं दुर्योधनं तदैव नो जघान । विकर्तनात्मजः कर्णः । सोमकात्मजां द्रौपदीम् ।। ३४० ।।

**अनन्तभट्टीया–** विकर्तनात्मजः कर्णः ।। ३४०-३४२ ।।

**जनार्दनीया–** तर्हि किमर्थं न जघानेत्यत आह– **पुनरिति** ।। विकर्तनः सूर्यः, तस्यात्मजः कर्णः । सोमकात्मजां कृष्णाम् ।।३४०।।

**चट्टि–** तर्हि किमर्थं न जघानेत्यत आह– **पुनरिति** ।। पुनश्च पापवृद्धये तथैव तं दुर्योधनं नो जघान । विकर्तनात्मजः कर्णः सोमकात्मजां द्रौपदीं प्रति पुनर्जगाद ।। ३४० ।।

---

१. 'प्रतिश्रवं' इति वरदराजीयपाठः ।

२. 'कर्णो दुःशासनं त्वाह कृष्णां दासीं गृहाणय ।।' सभापर्वणि- ९०.९.१.

**प्रयाहि भूभृतो हि नो गृहं न सन्ति पाण्डवाः ।**
**इतीरिते समुत्थितौ वृकोदरोऽनु चार्जुनः ॥३४१॥**

**वेदाङ्गतीर्थीया–** न सन्ति । मृतप्राया इति भावः ॥३४१-३४२॥

**वरदराजीया–** नोऽस्माकं भूभृतो राज्ञो दुर्योधनस्य गृहं याहि । पाण्डवाः तव न सन्ति इति ईरिते सति वृकोदरः उत्थितः अनु अर्जुनश्चोत्थितः ॥ ३४१ ॥

**जनार्दनीया–** नः भूभृतः राज्ञः दुर्योधनस्य । पाण्डवाः न सन्ति, तवेति शेषः । अनु भीममनु ॥३४१॥

**चट्टि–** नोऽस्माकं भूभृतः राज्ञः दुर्योधनस्य गृहं प्रयाहि । पाण्डवा न सन्ति । कर्णेनेतीरिते सति वृकोदरः समुत्थितः अनु भीममनु अर्जुनश्च समुत्थितः ॥ ३४१ ॥

**उभौ च तौ युधिष्ठिरो न्यवारयत् तथाऽपरे ।**
**ततो निषण्णयोस्तयोः [1]सुयोधनो वचोऽब्रवीत् ॥३४२॥**

**वरदराजीया–** उभौ भीमार्जुनौ । तथा अपरे न्यवारयन् । निषण्णयोरुपविष्टयोः ॥ ३४२ ॥

**जनार्दनीया–** अपरे भीष्मादयः । निषण्णयोरुपविष्टयोः सतोः ॥३४२॥

**चट्टि–** तौ उभौ च युधिष्ठिरः न्यवारयत् । तथा अपरे भीष्मादयश्च न्यवारयन् । ततस्तयोर्भीमार्जुनयोः निषण्णयोः सतोः सुयोधनः वचोऽब्रवीत् ॥ ३४२ ॥

**[2]दुःशासनैषां वासांसि दासानां नो व्यपाकुरु ।**
**इत्युक्तोऽभ्यगमत् पार्थान् स्ववासाँस्यथ ते ददुः ॥३४३॥**

**वेदाङ्गतीर्थीया–** व्यपाकुरु अपाहर ॥ ३४३ ॥

**मधुसूदनीया–** नो दासानां अस्मद्दासभूतानां एषां पाण्डवानाम् ॥ ३४३-३५० ॥

**वरदराजीया–** किमित्यब्रवीदित्यत आह– **दुःशासनेति** ॥ एषां नोऽस्माकं दासानां वासांसि व्यपाकुरु अपाहरेत्यर्थः । ते पाण्डवाः अस्य वासांसि ददुः ॥ ३४३ ॥

**अनन्तभट्टीया–** नो भूभृतः नः दासानां व्यपाकुरु ॥ ३४३ ॥

**जनार्दनीया–** व्यपाकुरु अपहर । अथ ते वासांसि ददुः, दुःशासनस्येति शेषः ॥३४३॥

---

१. 'दुःशासन सुबाहोऽयं विकर्णः प्राज्ञवादिकः । पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर ॥' सभापर्वणि-९०.३८. भारते कर्णवचनमिदम् ॥

२. 'तच्छ्रुत्वा पाण्डवाः सर्वे स्वानि वासांसि भारत । अवकीर्योत्तरीयाणि सभायां समुपाविशत् ॥' सभापर्वणि-९०.३९.

**चट्टि–** हे दुःशासन! नो दासानां अस्मद्दासाभूतानां एषां पाण्डवानां वासांसि व्यपाकुरु अपाहर । इत्युक्तः सन् पार्थानभ्यगमत् । अथ ते पार्थाः स्ववासांसि ददुः ।। ३४३ ।।

**ते चर्मवसना[1] भूत्वा तानशिष्टान् प्रकाश्य च ।**
**निषेदुश्च [2]क्षमायान्ते क्षमामालम्ब्य विस्तृताम् ।।३४४।।**

**व्यासतीर्थीया–** 'ते चर्म' इत्यत्र प्रथमश्चशब्दः समर्था अपीत्येतमर्थमाह ।। ३४४-३४९ ।।

**वेदाङ्गतीर्थीया–** ते क्षमायान्ते । आयः आयतिः । क्षमायाः आयस्य चान्ते समाप्तौ चर्मवसना भूत्वा विस्तृतां क्षमां शान्तिमालम्ब्य तानशिष्टान् अधमान् प्रकाश्य निषेदुः इत्यन्वयः ।। ३४४-३४६ ।।

**सत्याभिनवीया–** तत्रैव 'ते चर्मवसना भूत्वा..' इति श्लोकः । तस्यार्थः- ते पाण्डवाः ते च तेऽपि शौर्यादिगुणवत्तया प्रसिद्धा अपि चर्मवसना भूत्वा तान् दुर्योधनादीन् अशिष्टान् प्रकाश्य विस्तृतां महतीं क्षमां आलम्ब्य च क्षमायां भूमौ निषेदुरिति । एतेन ते चर्मवसना भूत्वा इत्यत्रत्य ते इत्यनेन पूर्णत्वात् क्षमायां ते इत्यत्रत्य ते इत्येतद् व्यर्थमिति दूषणं पराकृतम् । क्षमायां ते इत्यत्रत्य ते इति शब्दस्य तान् अशिष्टान् प्रकाश्य च इति चशब्देनान्वयं तस्य अप्यर्थत्वं चाभ्युपेत्य शौर्यादिगुणवत्तया प्रसिद्धा अपीत्यर्थस्योक्तत्वात् ।। ३४४-३५५ ।।

**वरदराजीया–** ते पाण्डवास्तान् कौरवान् अशिष्टान् । तां विस्तृतां महतीं क्षमां शान्तिमवलम्ब्य क्षमायां भूमौ निषेदुः उपविष्टाः ।। ३४४ ।।

**भावविवृतिः–** 'ते चर्मवसना भूत्वा...विस्तृताम्' इत्यत्र पाण्डवाश्चर्मवसनाः देहस्थचर्मैव वसनं वस्त्रं येषां ते तथा । उपरि परिधानरहिता इत्यर्थः । दिग्वासा इति यावत् । यद्वा कृष्णाजिनादिचर्मपरिधाना इत्यर्थः । यद्वा 'अचर्मवसनाः' इति विभागः । अजिनादिनापि रहिता इत्यर्थः । तान् दुर्योधनादीन् अशिष्टान् दुष्टान्, लोके इति शेषः । विस्तृतां महतीं क्षमामालम्ब्य आश्रित्य क्षमायान्ते 'क्षमाया द्यूतभूमिः स्यात्' इत्यभिधानम् । अन्त्यप्रदेशे निषेदुः उपविष्टा इत्यर्थः । गुहाशयाशब्दवत् क्षमायाशब्दः आकारान्तः ।।३४४-३०९।।

।। इति वासुदेवयतीन्द्राणां पूर्वाश्रमतनूजरामाचार्यकृतायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावविवृतौ एकविंशोऽध्यायः ।।

---

१. 'ते अचर्मवसना' इति भावविवृतौ पदविभागः कृतः ।

२. 'क्षमायां ते' इति सत्याभिनवतीर्थाः । अनन्तभट्टीय-वरदराजीय-चट्टीपाठोऽपि तथैवेति भाति । 'सभायान्ते' इति जनार्दनीये, अतिविशदकाराणां तथा चट्टीपाठे पाठान्तरम् । 'क्षमायाः अन्ते' इत्यपि पदविभागः ।

**अनन्तभट्टीया–** तान् दुर्योधनादीन् अशिष्टानप्रयोजकान् प्रदर्श्य विस्तृतां महतीं क्षमामालम्ब्य क्षमायां भूमौ निषेदुरिति सम्बन्धः । यद्वा 'क्षमाया अन्ते' इति पदच्छेदः । 'प्रियः प्रियायार्हसि देव सोढुम्' (भ.गी-११.४४) इति चतुर्विंश...। अशिष्टान् दुष्टान् अन्यायकारिणः । क्षमायां भूमौ ।।३४४।।

**जनार्दनीया–** ते तान् दुर्योधनादीन् अशिष्टान् अपवित्रान् प्रकाश्य, विस्तृतां महतीं क्षमां शान्तिं आलम्ब्य स्वीकृत्य । क्षमायान्ते इत्येकं पदम् । आयः आयतिर्नाम विस्तारः, क्षमायाः आयः क्षमायः, क्षमायस्य अन्ते समाप्तौ । सभातलस्थभूमेः प्रान्तभागे इति भावः । निषेदुः उपविष्टा इत्यन्वयः । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । 'सभायाम्' इति वा पाठः ।।३४४।।

**ताम्रपर्णीया–** ।। **ते चर्मेति** ।। अत्र प्रथमश्चशब्दः पूर्वोक्तरीत्या समर्था अपीत्येतमर्थमाह । 'क्षमायान्ते' इत्यत्र क्षमायाः अन्ते इति पदच्छेदः । सभाभूम्यन्त इत्यर्थः । 'प्रियः प्रियायार्हसि देव सोढुम्' इतिवत् विसर्गलोपेन 'क्षमायान्त' इति प्राप्तम् ।। ३४४-३४६ ।।

**अतिविशद–** 'ते चर्मवसना भूत्वा तानशिष्टान् प्रकाश्य च । विस्तृतां क्षमामालम्ब्य क्षमायां निषेदुश्च क्षमायान्ते क्षमामालम्ब्य विस्तृताम्' इत्यत्र 'ते ते' इति पदद्वयमस्ति । ते चर्मवसाना भूत्वा तानशिष्टान् प्रकाश्य च विस्तृतां क्षमामालम्ब्य क्षमायां निषेदुश्चेत्यन्वये एकेनैव चरितार्थत्वात् एकस्य वैय्यर्थ्यमिति चेन्न । क्षमायान्ते इत्यस्य एकपदत्वात् नैकस्यापि वैयर्थ्यमित्येक आहुः । क्षमा भूमिः तस्याः आयः विस्तारः तस्यान्त इत्यर्थः । *..वेदिकारूपो योऽयं भूमेर्विस्तारः तस्यान्त उपविष्टा इत्यर्थ उक्तं भवति । 'क्षितिक्षान्त्योः क्षमा' इत्यमरः । सभायां तदन्तिके इति केचित्पठन्ति । अन्ये त्वाहुः- अचर्मवसनास्ते भूत्वा चर्मवसना भूत्वेति । अपरे त्वाहुः- ते यां क्षमामालम्ब्य निषेदुः सैव क्षमेति । अस्मिन् पक्षे 'क्षमा' 'यां' 'ते' इति पदत्रयमित्युक्तं भवति ।। ३४४-३५० ।।

**भारतश्री–** ।। **ते चर्मवसना भूत्वेति** ।। अचर्मवसना पाण्डवास्ते चर्मवसना भूत्वेति योजना ।। ३४४-३४९ ।।

**चट्टि–** ते समर्था अपि पाण्डवाश्चर्मवसना भूत्वा तान् दुर्योधनादीन् अशिष्टान् अपवित्रान् प्रकाश्य च विस्तृतां महतीं क्षमां शान्तिमालम्ब्य स्वीकृत्य क्षमायां भूमौ निषेदुः उपविष्टाः । यद्वा क्षमायान्ते इत्येकं पदम् । आयः आयतिः आयतिर्नाम विस्तारः, क्षमायाः आयः क्षमायः, क्षमायस्यान्ते समाप्तौ सभातलस्थभूमेः प्रान्तभाग इति भावः । निषेदुः उपविष्टाः । 'सभायान्ते' इति वा पाठः ।।३४४।।

**पुनर्दुर्योधनेनोक्तः पार्थानामथ पश्यताम् ।**
**चकर्ष वासो द्रौपद्यास्तदाऽवादीद् वृकोदरः ।।३४५।।**

**वरदराजीया–** द्रौपद्या अपि वासो व्यपाकुरु इत्युक्तो दुःशासनो द्रौपद्याः वासश्चकर्ष ।। ३४५ ।।

**अनन्तभट्टीया–** ।। उक्त इति ।। द्रौपद्या अपि वासो अपाकुर्वित्युक्त इत्यर्थः ।। ३४५ ।।

**जनार्दनीया–** पुनरुक्तः कृष्णाया अपि वस्त्रं अपहरेति उक्तः, दुःशासन इति शेषः । यदा चकर्ष तदा अवादीत् ।।३४५।।

**चट्टि–** पुनर्दुर्योधनेनोक्तः कृष्णाया अपि वस्त्रमपहरेत्युक्तः, दुःशासन इति शेषः । पार्थानामभिपश्यतां सतां द्रौपद्या वासश्चकर्ष तदा वृकोदरः अवादीत् ।।३६३।।

**पापेषु पूर्वस्य तथाऽधमस्य वंशे कुरूणामुरुधर्मशीलिनाम् ।**
**दुःशासनस्यास्य विदार्य वक्षः [1]पिबामि रक्तं जगतः समक्षम् ।।३४६।।**

**वरदराजीया–** पापेषु पापिष्ठेषु पूर्वस्याद्यस्य कुरूणां वंशे अधमस्यास्य दुःशासनस्य वक्षो विदार्य जगतः समक्षं पश्यतो रक्तं पिबामि ।। ३४६ ।।

**अनन्तभट्टीया–** पापेषु पापिष्ठेषु पूर्वस्य आद्यस्य कुरूणां वंशे अधमस्य नीचस्य ।।३४६।।

**जनार्दनीया–** किमिति? पूर्वस्य आद्यस्य मुख्यस्येत्यर्थः । वंशे अधमस्य ।। ३४६ ।।

**चट्टि–** किमिति? पापेषु पूर्वस्य आद्यस्य मुख्यस्येत्यर्थः । उरुधर्मशीलिनां कुरूणां वंशे अधमस्य अस्य दुःशासनस्य वक्षो विदार्य जगतः समक्षं रक्तं पिबामि इत्यवादीति पूर्वेण सम्बन्धः ।। ३४६ ।।

**विकृष्यमाणे वसने तु कृष्णा [2]सस्मार कृष्णं सुविशेषतोऽपि ।**
**तदाऽन्यदासीद् वसनं च तस्या दिव्यं सुसूक्ष्मं कनकावदातम् ।।३४७।।**

**वेदाङ्गतीर्थीया–** कृष्णा वसने विकृष्यमाणे तु विकृष्यमाणे सत्यपि 'कृष्णं सुविशेषतोऽपि सस्मार' इत्युक्त्या महापद्यपि तस्या मनो भगवन्नियतमेवेत्युक्तं भवति । न त्वापन्निवृत्त्यर्थं तत्स्मरणम् । तस्याः शुद्धभागवतधर्मरतत्वेन काम्यानुष्ठानरहितत्वात् । तदा तद्वसनविकर्षणावसरे ।। ३४७-३४८ ।।

**वरदराजीया–** कृष्णा कृष्णं सुविशेषतोऽपि सस्मार । सर्वदा स्मरणे विद्यमानेऽपि तदा विशेषेण स्मारितवती इत्यर्थः । तस्याः द्रौपद्याः अन्यद्वसनमासीत् । कथम्भूतं? दिव्यमलौकिकं कनकावदातं पीताम्बरम् ।। ३४७ ।।

---

१. 'अस्य पापस्य दुर्बुद्धेर्भारतापसदस्य च । न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ।।' सभापर्वणि-९०.५७.

२. 'कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन । प्रपन्नां पाहि गोविन्द कुरुमध्येऽवसीदतीम् ।। इत्यनुस्मृत्य कृष्णं सा हरिं त्रिभुवनेश्वरम् । प्रारुदद्दुःखिता राजन् मुखमाच्छाद्य भामिनी ।। तस्य प्रसादाद् द्रौपद्याः कृष्यमाणेऽम्बरे तदा । तद्रूपमपरं वस्त्रं प्रादुरासीदनेकशः । नानारागविरागाणि वसनान्यथ वै प्रभो । प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् ।।' सभापर्वणि-९०.४७-५०.

**जनार्दनीया—** कृष्णा वसने विकृष्यमाणे तु विकृष्यमाणे सत्यपि 'कृष्णं सुविशेषतोऽपि सस्मार' इत्युक्त्या महापद्यपि तस्याः मनो भगवन्नियतमेवेत्युक्तं भवति । न त्वापन्निवृत्त्यर्थं तत्स्मरणम् । तस्याः शुद्धभागवतधर्मनिरतत्वेन काम्यानुष्ठानरहितत्वात् । तदा तद्वसनविकर्षणावसरे तस्मात् पूर्वपरिधान-वसनात् दिव्यं उत्तमं कनकावदातं कनकवत अवदातो यस्य तत् तथा । पीतमित्यर्थः । अन्यद्वसनमासीत् ।।

**ताम्रपर्णीया—** कनकावदातं कनकवत्पीतम् । 'अवदातः सिते रक्ते पीते श्यामे च कथ्यते' इत्यभिधानम् ।। ३४७-३४९ ।।

**चट्टि—** वसने विकृष्यमाणे तु सत्यपि कृष्णा द्रौपदी 'श्रीकृष्णं सुविशेषतोऽपि सस्मार' इत्युक्त्या महापद्यपि तस्याः मनो भगवन्निष्ठमेवेत्युक्तं भवति । न त्वापन्निवृत्त्यर्थं तत्स्मरणम् । तस्याः शुद्धभागवतधर्मनिरतत्वेन काम्यानुष्ठानरहितत्वात् । तदा तद्वसनविकर्षणावसरे तस्याः द्रौपद्याः दिव्यं पूर्वपरिधानवसनादुत्तमं सुसूक्ष्ममतिसूक्ष्मं कनकावदातं कनकवदवदातो यस्य तत् तथा । पीतमित्यर्थः । अन्यच्च वसनमासीत् ।। ३४७ ।।

**पुनःपुनश्चैव विकर्षमाणे दुःशासनेऽन्यानि च तादृशानि ।**
**बभूवुरन्तं न जगाम पापः श्रान्तो न्यषीदत् स्विन्नगात्रः सभायाम् ।।३४८।।**

**वरदराजीया—** विकर्षमाणे दुःशासने सति अन्यानि तादृशानि वसनानि बभूवुः । वसनानामन्तं न जगाम । स्विन्नगात्रः स्वेदयुक्तशरीरः श्रान्तः सन् सभायां न्यषीदत् उपविष्टः ।। ३४८ ।।

**जनार्दनीया—** स्विन्नगात्रः स्वेदयुक्तदेहः ।। ३४८ ।।

**चट्टि—** पुनः पुनश्च दुःशासनेन विकर्षमाणे सति अन्यानि तादृशान्येव च वसनानि बभूवुः । पापः दुःशासनः अन्तम्, वसनानामिति शेषः । न जगाम । स्विन्नगात्रः स्वेदयुक्तशरीरः श्रान्तः सन् सभायां न्यषीदत् ।। ३४८ ।।

**वस्त्रोच्चये शैलनिभे प्रजाते दुर्योधनः प्राह सञ्जातकोपः ।**
**प्रवेशयेमां गृहमेव शीघ्रं किं नश्चिरेणेति[1] सुमन्दबुद्धिः ।।३४९।।**

**वेदाङ्गतीर्थीया—** नः अस्माकं चिरेण विलम्बेन ।। ३४९-३५० ।।

**वरदराजीया—** वस्त्रोच्चये शैलनिभे पर्वतसदृशे जाते सति सञ्जातकोपः इमां द्रौपदीं नोऽस्माकं चिरेण विलम्बेन किम्? ।। ३४९ ।।

**अनन्तभट्टीया—** नः भृशम् ।।३४९।।

**जनार्दनीया—** नोऽस्माकं चिरेण विलम्बेन किम्? किं प्रयोजनमित्यर्थः । इति प्राह ।।३४९।।

---

१. 'न चीरेणेति' इति चट्टीपाठान्तरम् ।

**चट्टि–** वस्त्रोचये वस्त्रसमूहे शैलनिभे पर्वतसदृशे प्रजाते सति सुमन्दबुद्धिः दुर्योधनः सञ्जातकोपः सन्नोऽस्माकं चिरेण विलम्बनेन किं? किं प्रयोजनमित्यर्थः । 'चीरेण' इति पाठे चीरेण वस्त्रेण नः किं प्रयोजनम् । एनां द्रौपदीमेव शीघ्रं गृहं प्रवेशयेति प्राह ।। ३४९ ।।

**तच्छ्रुत्वा वचनं [1]कृष्णा प्रतिज्ञामकरोत् तदा ।**
**[2]भीमो दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।**
**शकुनिं त्वक्षकितवं सहदेवो हनिष्यति ।।३५०।।**

**व्यासतीर्थीया–** ।। **दुर्योधनं हन्तेति** ।। हन्तेति लुट् ।। ३५०-३५२ ।।

**वरदराजीया–** तद्वचनं श्रुत्वा दुर्योधनादीन् भीमो हन्तेति लुट् । अक्षेषु कितवं धूर्तम् ।। ३५० ।।

**अनन्तभट्टीया–** हन्तेति लुट् ।।३५०।।

**जनार्दनीया–** हन्तेति लुट् । अक्षकितवं द्यूतधूर्तम् ।। ३५० ।।

**ताम्रपर्णीया–** दुर्योधनं हन्ता इत्यादि लुट् ।। ३५०-३५३ ।।

**भारतश्री–** ।। **शकुनिमिति** ।। सहदेवस्य ज्येष्ठत्वात् तद्ग्रहणम् । नकुलस्तु उर्वरित इति द्रौपद्या अभिप्रायः । यः 'यो अश्विनोर्ज्येष्ठः' इति वचनात् । पूर्वोत्पन्ननकुलापेक्षया सहदेवस्य ज्येष्ठत्वं ज्ञेयम् । 'नकुलः पूर्वजातः सहदेवोऽभूत् पश्चिमस्तौ यमौ च'(१२-१२५) इत्युक्तेः ।। ३५० ।।

**चट्टि–** कृष्णा द्रौपदी तद्वचनं श्रुत्वा तदा प्रतिज्ञामकरोत् । किमिति? भीमः दुर्योधनं हन्ता हनिष्यति । हन्तेति लुट् । धनञ्जयः अर्जुनः कर्णं हन्ता । अक्षेषु कितवं धूर्तं शकुनिं सहदेवो हनिष्यति ।। ३५० ।।

**इत्युक्ते तत् तथेत्याह भीमसेनः सभातले ।**
**प्रतिज्ञामाददे पार्थस्तां माद्रीनन्दनस्तथा ।**
**नकुलः प्रतिजज्ञेऽथ शाकुनेयवधं प्रति ।।३५१।।**

---

१. 'यस्माच्चोरुं दर्शयसे यस्माच्चोरुं निरीक्षसे । तस्मात्तव ह्यधर्मिष्ठ ऊरौ मृत्युर्भविष्यति । यस्माच्चैवं क्लेशयति भ्राता ते मां दुरात्मवान् । तस्माद्रुधिरमेवास्य पास्यते वै वृकोदरः ।। इमं च पापिष्ठमतिं कर्णं ससुतसबान्धवम् । सामात्यं सपरिवारं हनिष्यति धनञ्जयः ।। क्षुद्रधर्मं नैकृतिकं शकुनिं पापचेतसम् । सहदेवो रणे क्रुद्धो हनिष्यति सबान्धवम् ।। एवमुक्ते तु वचने द्रौपद्या धर्मशीलया। ततोऽन्तरिक्षात् सुमहत्पुष्पवर्षमवापतत् ।। तेषां तु वचनं श्रुत्वा नोचुस्तत्र सभासदः । अर्जुनस्य भयाद्राजन् अभूत्त्रिश्शब्दमत्र वै ।।' सभापर्वणि-९२.७९-८४.

२. 'अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः । शकुनिं चाक्षकितवं सहदेवो हनिष्यति ।। इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः । सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ।।' सभापर्वणि-९२.६०-६१ भागे भीमवचनम् ।।

**वेदाङ्गतीर्थीया–** तां द्रौपद्युक्तां प्रतिज्ञाम् ।। ३५१-३५२ ।।

**मधुसूदनीया–** शाकुनेयवधं प्रति शाकुनेयस्य शकुनिपुत्रस्योलूकस्य वधं प्रतीत्यर्थः । 'उलूकं च दुरात्मानं सौबलस्य सुतं प्रियम् । क्रूरं हन्तास्मि समरे [१]भीमसेनाभ्यनुज्ञया ।।' इति सभापर्वोक्तेः (९२.७७) । यद्यप्युत्तरत्र- 'उलूकं सहदेवोऽथ शाकुनिं चातिपापिनम् । जघान द्रौणिहार्दिक्यकृपान् भीमार्जुनौ ततः ।।' (ता.नि-२८.३३) इत्यत्रोलूकः सहदेवेन हत इत्युच्यते । तथापि 'त्वत्कृतं मत्कृतं चैव' इत्यर्जुनेन भीमं प्रत्युक्तत्वात् अनुजकृतं ज्येष्ठकृतमेवेति न तत्प्रतिज्ञाभङ्ग इति भावः । यद्वा नकुलः शाकुनेयवधं प्रतिजज्ञे । सहदेवस्तथा शाकुनेयं हनिष्यतीति प्रतिज्ञां कृतवानित्यर्थः । हन्तास्मि सहदेवेन हतं करोमीति सभापर्ववाक्यार्थः । 'नियोगाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् । निर्धार्तराष्ट्रां पृथिवीं कर्तास्मि नचिरादिव ।।' (सभापर्वणि-९२.७८) इत्युत्तरत्र नकुलेन पृथिवीं निर्धार्तराष्ट्रां कर्तास्मि इत्युच्यते । न च तद्युज्यते । भीमेनैव धार्तराष्ट्राणां हन्यमानत्वात् । तस्मात् भीमेन निर्धार्तराष्ट्रां पृथिवीं कारयिष्यामि इत्यभिप्राय इति वक्तव्यम् । एवं उलूकं हन्तास्मीति पूर्ववाक्यस्याप्येवमेवाभिप्राय इति वक्तव्यम् । तत्प्रकरणत्वादिति ।। ३५१-३५२ ।।

**वरदराजीया–** इत्युक्ते द्रौपद्या द्रौपदीवचनं तथा सत्यमेवेत्याह । पार्थोऽपि तां प्रतिज्ञां कर्णं हनिष्यामीत्येवंरूपाम्, माद्रीनन्दनः सहदेवः तामेव शकुनिं हनिष्यामीत्येवंरूपाम् । शाकुनेयवधं शकुनेः पुत्रस्य वधं प्रतिजज्ञे ।। ३५१ ।।

**अनन्तभट्टीया–** तथेति भवत्वित्यर्थः ।। ३५१-३५३ ।।

**जनार्दनीया–** तत् कृष्णावचनम् । तथा यथोक्तं तथा भविष्यतीत्यर्थः । तां प्रतिज्ञां कृष्णाकृत-प्रतिज्ञाम् । माद्रीनन्दनः सहदेवः । शकुनेरपत्यं शाकुनेयः, तस्य वधं प्रति ।।३५१।।

**अतिविशद–** 'नकुलः प्रतिजज्ञेऽथ शाकुनेयवधं प्रति' इत्यत्र नकुलः प्रतिजज्ञे । किमिति? अहं शाकुनेयं शकुनिपुत्रं हनिष्ये इति प्रतीयते । तदनुपपन्नम् । 'दुर्योधनस्यावरजान् अवशिष्टान् वृकोदरः । सर्वान् जघान सेनाश्च निःशेषामकरोद्रणे ।। उलूकं सहदेवोऽथ शकुनिं चातिपापिनम् । जघान द्रौणिहार्दिक्यकृपान् भीमार्जुनौ ततः ।। बहुशो विरथीकृत्य पीडयित्वा पुनःपुनः । द्रावयामासतुस्ते तु भीषिता विविशुर्वनम् ।।' (ता.नि-२८.३२-३४) इत्यादिवाक्यपर्यालोचनया सहदेवहतप्रतीतेः । न च 'अन्यं शकुनिपुत्रं हनिष्ये' इति नकुलः प्रतिजज्ञ इति वाच्यम् । उलूकस्यैव शकुनिपुत्रप्रधानत्वेन अन्यस्यापि पिपीलिकासमस्य हननप्रतिज्ञाया अनौचित्यात् कथमिति चेन्न । 'भीमो दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः । शकुनिं त्वक्षकितवं सहदेवो हनिष्यति ।।' इति यथा द्रौपद्या प्रतिज्ञा कृता तथा नकुलेनापि प्रतिज्ञा कृतेत्यङ्गीकर्तव्यत्वात् । तथाच यथा द्रौपद्या प्रतिज्ञास्वीकारः सहदेवेन कृतः । तथा

---

१. 'मम शत्रुं नराधमम्' इत्युपलभ्यमानः पाठः ।

नकुलप्रतिज्ञास्वीकारोऽपि सहदेवेन कृत इत्युक्तं भवति । परकृतप्रतिज्ञास्वीकारकरणात् । एवमङ्गीकारे प्रकरणानुगुण्यं नकुलेनैव अहं शकुनिपुत्रं हनिष्ये । न मम प्रतिज्ञा द्रौपदीप्रतिज्ञावत् परस्वीकारार्था इति प्रतिज्ञा कृता इत्यर्थस्वीकारेऽनानुगुण्यं निरर्थकत्वञ्च, तद्धननस्य कृतत्वात् ।। ३५१-३९९ ।।

।। इति श्रीजनार्दनाचार्यसुततिरुमलाचार्यविरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां अतिविशदवाक्यार्थविवृतौ एकविंशोऽध्यायः ।।

**भारतश्री–** ताम्, आश्रिति शेषः । शाकुनेयवधं प्रति शाकुनेयं च सहदेव एव वधिष्यतीति प्रतिजज्ञे इति ज्ञेयम् । 'उलूकं सहदेवोऽथ शकुनिं चापि पापिनम् । जघान द्रौणिहार्दिक्यकृपान् भीमार्जुनौ तथा ।।' इत्युत्तरत्राचार्यैरेव कथनात् । 'सहदेववचः श्रुत्वा नकुलोऽपि विशाम्पते । दर्शनीयतमो नृणामिदं वचनमब्रवीत् ।। उलूकं च दुरात्मानं सौबलस्य सुतं प्रियम् । शूरं हन्तास्मि समरे मम शत्रुं नराधमम् ।। इति भारतोक्तेः अभिप्रायमाहानेनाचार्यवर्यः । शाकुनेयवधं प्रत्येव प्रतिजज्ञे 'तं त्वहमेव हनिष्यामि' इति । हन्तास्मि इत्यत्र अन्तर्णीतणिच् । मारितास्मीत्यर्थः । सहदेवेन मुक्तश्चेत् अहं हन्तास्मीति वा । अन्यथा शल्यपर्वणि- 'ततोऽस्यापततः शूरः सहदेवः प्रतापवान् । उलूकस्य महाराज भल्लेनापहरच्छिरः ।। पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत । साश्रुकण्ठो विनिश्वस्य क्षत्तुर्वाक्यमनुस्मरन् ।।' (२७.३१,३३) इत्युक्तिर्विरुध्येत इति भावः ।। ३५१ ।।

**चट्टि–** इति द्रौपद्या उक्ते सति सः भीमसेनः तद् द्रौपदीवचनं तथा यथोक्तं तथा भविष्यतीति सभातले आह । पार्थः अर्जुनोऽपि तां प्रतिज्ञां कर्णं हनिष्यामीत्येवंरूपामकरोत् । माद्रीनन्दनस्तथा शकुनिं हनिष्यामीति प्रतिज्ञामकरोत् । अथ नकुलः शकुनेरपत्यं शाकुनेयस्तस्योलूकस्य वधं प्रति प्रतिजज्ञे । 'उलूकं च दुरात्मानं सौबलस्य सुतं प्रियम् । क्रूरं हन्तास्मि समरे भीमसेनाभ्यनुज्ञया ।।' इति सभापर्वण्युक्तेः । यद्यप्युत्तरत्र- 'उलूकं सहदेवोऽथ शकुनिं चातिपापिनम् । जघान द्रौणिहार्दिक्यकृपान् भीमार्जुनौ ततः ।।' इत्युलूकः सहदेवेन हत इत्युच्यते । तथापि 'त्वत्कृतं मत्कृतं चैव' इति अर्जुनं प्रति भीमवाक्यादनुजकृतमपि ज्येष्ठकृतमेवेति न तत्प्रतिज्ञाभङ्ग इति भावः । यद्वा नकुलः शाकुनेयवधं प्रति प्रतिजज्ञे । सहदेवस्तथा शाकुनेयं हनिष्यतीति प्रतिज्ञां कृतवानित्यर्थः । हन्तास्मि सहदेवेन हतं करोमीति सभापर्वस्थवाक्यार्थः ।। ३५१ ।।

**ततः सुयोधनानुजश्चकर्ष पार्षतात्मजाम् ।**
**गृहाय तां निशाम्य तु क्रुधाऽऽह मारुतात्मजः ।।३५२।।**

**वरदराजीया–** सुयोधनानुजो दुःशासनो पार्षदात्मजां द्रौपदीं गृहाय दुर्योधनगृहं प्रति चकर्ष । तां द्रौपदीं निशाम्यालोक्य ।। ३५२ ।।

**जनार्दनीया–** गृहाय कर्मणि चतुर्थी । गृहं प्रति, नेतुमिति शेषः । निशाम्य दृष्ट्वा क्रुधा कोपेनाह ।।

**चट्टि–** ततः सुयोधनानुजः दुःशासनः पार्षतात्मजां द्रौपदीं गृहाय गृहं प्रति, नेतुमिति शेषः । चकर्ष । मारुतात्मजः तां द्रौपदीं निशाम्य दृष्ट्वा क्रुधा कोपेन आह, अर्जुनमिति शेषः ।। ३५२ ।।

> **अर्जुनार्जुन नैवात्र क्षमा मे तात रोचते ।**
> **पतितस्यास्य देहस्य काष्ठविष्ठासमस्य च ।**
> **फलानि त्रीणि शिष्यन्ते विद्या कर्म सुता इति ।।३५३।।**

**व्यासतीर्थीया–** क्षमानिमित्तं वक्तुमाह– **पतितस्येति** ।। दाहे काष्ठसमस्य तदभावे विष्ठासमस्य च अस्य शरीरस्य त्रीणि फलानि ।। ३५३ ।।

**वेदाङ्गतीर्थीया–** अर्जुनार्जुनेति सम्भ्रमेण द्विरुक्तिः । अत्र जायोपहतिप्राप्तिसमये । दाहे काष्ठसमस्य । अदाहे विष्ठासमस्य इति त्रीणि फलानि ।। ३५३ ।।

**मधुसूदनीया–** ।। **पतितस्येति** ।। पतितस्य प्राणरहितस्येत्यर्थः । काष्ठविष्ठासमस्य प्राणवियोगाऽनन्तरं काष्ठवत् बन्धुभिस्त्यज्यमानत्वात् काष्ठसाम्यं, वियोगानन्तरं विष्ठावत् स्पर्शाद्यनर्हत्वात् विष्ठासाम्यमुक्तमिति ध्येयम् । तथाचोक्तम्- 'त्रीणि ज्योतींषि पुरुषे त्रीणि वै देवलोऽब्रवीत् । अपत्यं कर्म विद्या च यतस्सृष्टाः प्रजास्ततः ।। अमेध्ये वै गतप्राणे शून्ये ज्ञातिभिरुज्झिते । देहे तृतीयमेवैतत् पुरुषस्योपयुज्यते ।।' इति भीमेनार्जुनं प्रति सभापर्वणि (९४.५-६)। 'मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ । विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ।।' इति इतिहाससमुच्चये च (आश्वमेधिकपर्वणि-) ।। ३५३-३६८ ।।

**वरदराजीया–** अत्रास्यामवस्थायां क्षमा मे मह्यं न रोचते । अत्रैव किमिति न रोचत इत्यत आह– **पतितस्येति** ।। काष्ठविष्ठासमस्य च अवस्थाभेदेन काष्ठादिसदृशस्य पतितस्य परित्यक्तस्याप्यस्य देहस्य । त्रीणि फलानि निर्दिशति– **विद्येति** ।। ३५३ ।।

**जनार्दनीया–** अर्जुनार्जुनेति सम्भ्रमाद् द्विरुक्तिः । अत्र आत्मजायोपहतिप्राप्तिसमये । पतितस्य मृतस्येत्यर्थः । काष्ठविष्ठासमस्य दाहे काष्ठसमः स्याद्, अदाहे विष्ठासमः स्यात् । एतादृशस्य अस्य देहस्य विद्या कर्म सुता इति त्रीणि फलानि शिष्यन्ते अवशिष्यन्ते ।।३५३।।

**भावचन्द्रिका–** उत्तममध्यमाधमक्रमेणाह– **विद्येति** ।। ३५३ ।।

**चट्टि–** अर्जुनार्जुनेति सम्भ्रमे द्विरुक्तिः । हे तात! अत्रात्मजायोपहतिप्राप्तिसमये मे मह्यं क्षमा नैव रोचते । पतितस्य मृतस्य इत्यर्थः । काष्ठविष्ठासमस्य च दाहे काष्ठसमः अदाहे विष्ठासमः स्यात् । एतादृशस्य अस्य देहस्य विद्या कर्म सुता इति त्रीणि फलानि शिष्यन्ते ।। ३५२ ।।

**इति वेदोदितं वाक्यं न सुतो दारधर्षणे ।**
**दुष्टदारो न चाऽप्नोति लोकानर्द्धो हि दूषितः ।**
**[1]अरक्षणाद् दूषिताया न त्यागाच्च शुभं भवेत् ॥३५४॥**

**व्यासतीर्थीया–** प्रकृते किमायातमित्यत आह– **न सुत इति** ॥ न केवलदारधर्षणे सुताभावः दोषान्तरमाह– **दुष्टेति** ॥ दुष्टदारपरिग्रहे हि लोकप्राप्त्यभावः त्यागे तु कस्य लोको भवेदित्यत आह– **अरक्षण इति** ॥ ३५४-३५८ ॥

**वेदाङ्गतीर्थीया–** दारधर्षणे का हानिरित्यत आह– **न सुत इति** ॥ दारदूषणे दोषान्तरं चाह– **दुष्टेति** ॥ दुष्टदारस्वीकार एव लोकाभावः, परित्यागे लोकाभावो न भवेदित्यत आह– **अरक्षणादिति** ॥

**वादिराजतीर्थीया–** 'अरक्षणाद्दूषितायाः' इत्यत्र दूषिताया अरक्षणात् पुनः पुनः पापं न करिष्यति तथा शृङ्खलादिना निर्बन्धं कृत्वा किञ्चिदन्नपानादिकं दत्वा रक्षणाभावाच्च अशुभं न भवति । अग्निसाक्षिकतया गृहीतपाणेर्भार्यायाः सङ्गमात्रं त्यक्त्वा अन्नस्याप्यदानेन परलोको नास्तीति भावः । त्यागात् सर्वथा परित्यागात् उपरि तया पुनःपुनः क्रियमाणस्य पापस्य उपेक्षणात् परलोको न भवति । स्वाध्यक्ष एव पुनः पुनः पापकरणेन स्वयशोभङ्गादैहिकं च शुभं न भवतीति भावः । तर्हि निर्बन्धेनैव सा रक्षणीया तदा का हानिरिति चेत्सत्यम् । स्वगृह एव सदा निर्बन्धमनुभवन्त्याः स्वभार्याया दर्शनस्य नित्यदुःखदायकत्वेन ऐहिकनरकोपमतया ततोऽपि शुभाभावादिति भावः ॥ ३५४-३५६ ॥

**वरदराजीया–** इति वेदे उदितं वाक्यमस्ति । ततः किं पृच्छत इत्यत आह– **न सुत इति** ॥ दारधर्षणे प्राप्ते सुताख्यं तृतीयं फलं न स्यादित्यर्थः । किञ्च दारधर्षणे दुष्टदारः पुरुषो लोकान् स्वलोकान्नाप्नोति । कुतः? अर्धो वामाङ्गो हि दूषितः स्यात् । तर्हि दूषितार्धत्याग एव कीर्तितव्य इत्यत आह– **अरक्षणादिति** ॥ दूषितायां त्यागात् प्राप्तात् अरक्षणान्निमित्ताच्छुभं न भवेत् ॥ ३५४ ॥

**अनन्तभट्टीया–** दूषितायाः परिग्रहे लोकप्राप्त्यभावश्चेत् त्यागः कार्य इत्यत आह– **अरक्षणादिति** ॥

**जनार्दनीया–** इति वेदोदितं वाक्यम्, अस्तीति शेषः । दारधर्षणे सति न सुतः सुताख्यं फलं न स्यादित्यर्थः । दारधर्षणे दोषान्तरमाह– **दुष्टेति** ॥ दुष्टदारः दुष्टाः दूषिताः दाराः यस्य स तथा । लोकान् उत्तमलोकान् नाप्नोति । कुतः? हि यस्मात् अर्धः वामार्धः दूषितः तस्मादिति सम्बन्धः । तर्हि परित्यागे लोकाभावो न भवेदित्यत आह– **अरक्षणादिति** ॥ अरक्षणात् निमित्तात् रक्षणविषये शक्त्यभावादिति भावः ॥३५४॥

---

१. 'अरक्षणाद् दूषितायां' इति वरदराजीयपाठः । 'अरक्षणे दूषितायाः' इति व्यासतीर्थीय-ताम्रपर्णीयपाठः, 'अरणाद् दूषितायाः' इति ताम्रपर्णीये पाठान्तरञ्च । 'अरक्षणे दूषितायाः' इति चन्द्रीपाठान्तरम्, 'अरक्षणे अदूषितायाः' इति पदविभागश्च ।

**ताम्रपर्णीया–** दुष्टदारपरिग्रहे लोकप्राप्त्यभावः । त्यागे तु न दोषः इत्यत आह– **अरक्षण इति** ।। निमित्तसप्तमी । अरक्षणान्निमित्ताद् दूषितायास्त्यागादपि शुभं न भवेदित्यर्थः । 'अरक्षणाद्दूषितायाः' इति केचित्पठन्ति ।। ३५४-३५५ ।।

**भावचन्द्रिका–** सम्भवतः अधममध्यमत्यागो न सम्भवतीत्याह– **नेति** ।। ३५४-३७५ ।।

**भारतश्री–** कर्मपदं लोकं सुतपदं पुण्यं । दारदूषणे न सुताः स्युरिति शेषः । हि यस्मात् दाराः दूषितम्। उक्तं च भारते– 'त्रीणि ज्योतींषि पुरुषे सन्ति वै देवलोऽब्रवीत् । अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः ।। (१.९४.५) इत्याद्युक्त्वा, 'तन्नो ज्योतिर्विरहितमस्याः स्यादभिमर्शनात्' (९.४.७) इत्यादि भीमसेनवचनम् ।। ३५४-३६१ ।।

**चट्टि–** इति वेदोदितं वाक्यम्, अस्तीति शेषः । दारधर्षणे सति न सुतः सुताख्यं फलं न स्यादित्यर्थः । दारधर्षणे दोषान्तरमाह– **दुष्टेति** ।। दुष्टाः दाराः यस्य स तथा दुष्टदारः लोकानुत्तमलोकान्नाप्नोति । कुतः? हि यस्मात् अर्धः वामार्धः दूषितस्तस्मादिति सम्बन्धः । तर्हि परित्यागेन लोकाभावो न भवेदित्यत आह– **अरक्षणादिति** ।। दूषितायाः त्यागात् प्राप्तात् अरक्षणान्निमित्तात् च शुभं न भवेत् । 'अरक्षणे दूषितायाः' इति पाठे, दुर्भार्यायाः सङ्गमात्रं त्यक्त्वा अरक्षणे अन्नस्याप्यदाने परलोको, नास्ति इति शेषः । त्यागात् सर्वथा परित्यागाच्छुभं न भवेत् । यद्वा 'अदूषितायाः' इति पदविभागः । दूषिताया अरक्षणे रक्षणाभावे सति यः त्यागः प्राप्तस्तस्मात् त्यागाच्च शुभं न भवेत् ।। ३५४ ।।

**अतोऽद्य सानुबन्धकान् निहन्मि धार्तराष्ट्रकान् ।**
**इति ब्रुवन् व्यलोकयद् रिपून् दहन्निवौजसा ।।३५५।।**

**वेदाङ्गतीर्थीया–** अतः एतादृशसमये क्षमाया अनुचितत्वात् ।। ३५५ ।।

**वरदराजीया–** अतोऽद्येदानीं सानुबन्धकान् सपरिवारान् धार्तराष्ट्रकान् निहन्मि इति ब्रुवन् भीमो रिपून् दहन्निव व्यलोकयत् ।। ३५५ ।।

**जनार्दनीया–** अतः क्षमायाः अनुचितत्वात् । ओजसा स्वरूपसामर्थ्येन ।।३५५।।

**चट्टि–** अतः क्षमाया अनुचितत्वात् अद्येदानीं सानुबन्धकान् सपरिवारान् धार्तराष्ट्रान् दुर्योधनादीन् निहन्मीति ब्रुवन् भीमः स्वरूपसामर्थ्येन रिपून् दहन्निव व्यलोकयत् ।। ३५५ ।।

**ददर्श च महाघोरमादातुं परिघं रुषा ।**
**कर्तुं व्यवसितो बुद्ध्या निःशेषान् धृतराष्ट्रजान् ।।३५६।।**

**वेदाङ्गतीर्थीया–** व्यवसितः निश्चितः ।। ३५६ ।।

**सत्याभिनवीया–** तत्रैव 'ददर्श च महाघोरं..' इति श्लोकः । तस्यार्थः- भीमः रुषा धार्तराष्ट्रकान् निःशेषांश्च निःशेषानेव कर्तुं बुद्ध्या व्यवसितः निश्चयवान् सन् महाघोरं परिघम् आदातुं परिघं ददर्शेति मन्दानां भ्रान्तिमुत्पादितवानिति । एतेन भीमस्य भ्रान्तेरयोगात् भीमः धार्तराष्ट्रकान् निःशेषान् कर्तुं निश्चयवान् सन् परिघं ददर्शेति कथनमनुपपन्नमिति दूषणस्यानवकाशः । इति मन्दानां भ्रान्तिरुत्पादितवान् इत्यस्य शेषमभ्युपेत्य यद्यपि भीमस्य परिघदर्शनमेव न तु धार्तराष्ट्रकान् निःशेषान् कर्तुं निश्चयः । तथापि धार्तराष्ट्रकान् निःशेषान् कर्तुं निश्चयवान् सन् परिघं ददर्शेति मन्दानां भ्रान्तिमुत्पादितवान् इत्यर्थः उच्यत इति स्वीकरणात् ।। ३५६-३६१ ।।

**वरदराजीया–** महाघोरं भयानकं परिघं आयुधविशेषमादातुं ददर्श विलोकितवान् । कथम्भूतः? धार्तराष्ट्रकान् निःशेषान् कर्तुं व्यवशेषान् कर्तुं बुद्ध्या व्यवसितो निश्चयवान् ।।३५६।।

**अनन्तभट्टीया–** व्यवसितः कृतनिश्चयोऽभूदित्यर्थः ।। ३५६ ।।

**जनार्दनीया–** निःशेषान् कर्तुं वुद्ध्या व्यवसितः कृतनिश्चयः घोरं क्रूरं परिघं आयुधविशेषं ददर्श व्यलोकयत् ।। ३५६ ।।

**ताम्रपर्णीया–** ।। **कर्तुं व्यवसित इति** ।। यदि धार्तराष्ट्रा द्रौपदीं न मुञ्चेयुः, तदा निःशेषान् करोमीति व्यवसित इति भावः ।।३५६-३६६।।

**चट्टि–** धार्तराष्ट्रकान्निःशेषान् कर्तुं वुद्ध्या व्यवसितः निश्चयः भीमः रुषा कोपेन महाघोरं अतिक्रूरं परिघं आयुधविशेषं ददर्श व्यलोकयत् ।। ३५६ ।।

**तदा शिवा ववाशिरे सुयोधनाग्निगेहतः[१] ।**
**तथैव तत्पितुर्गृहेऽप्यभूद् भयानकं बहु ।।३५७।।**

**वेदाङ्गतीर्थीया–** ववाशिरे कुत्सितशव्दं चक्रुः । 'वाशृ शव्दकुत्सायाम्' इति धातुः । गेहतः गेहे । सार्वविभक्तिकस्तसिः । भयानकं भयङ्करम्, निमित्तमिति शेषः ।। ३५७-३५८ ।।

**वादिराजतीर्थीया–** 'सुयोधनाग्निगेहतः' इत्यत्र अग्निगेहतः अग्निहोत्रगेहात् ।। ३५७-३५९ ।।

**वरदराजीया–** सुयोधनस्याग्निगेहतो अग्निगेहे शिवा सृगालभार्याः ववाशिरे रुरुदुः । तस्य दुर्योधनस्य पितुः धृतराष्ट्रस्य गेहेऽपि तथैव वहु भयानकं अरिष्टं भूकम्पादिकमभूत् ।।३५७।।

---

१. 'ततो राज्ञो धृतराष्ट्रस्य गेहे गोमायुरुच्चैः व्याहरदग्निहोत्रे । तं रासभाः प्रत्यभाषन्त राजन् समन्ततः पक्षिणश्चैव रौद्राः ।। तं वै शव्दं विदुरस्तत्त्ववेदी शुश्राव घोरं सुवलात्मजा च । भीष्मो द्रोणो गौतमश्चापि विद्वान् स्वस्ति स्वस्तीत्यपि चैवाहुरुच्चैः ।। ततो गान्धारी विदुरश्चापि विद्वान् समुत्पातं घोरमालक्ष्य राज्ञे । निवेदयामासतुरार्तवत्तदा ततो राजा वाक्यमिदं वभाषे ।।' सभापर्वणि-०.३.७१-२३.

**अनन्तभट्टीया–** गेहतः गेहे ।। ३५७-३६२ ।।

**जनार्दनीया–** शिवाः गोमायवः ववाशिरे कुत्सितशब्दं चक्रुः । 'वाशृ शब्दकुत्सायाम्' इति धातुः । गेहतः गेहे । सार्वविभक्तिकस्तसिः । तथैव तत्पितुः धृतराष्ट्रस्य गेहे बहु भयानकं भयङ्करम्, निमित्तमिति शेषः ।।३५७।।

**चट्टि–** तदा शिवाः गोमायवः ववाशिरे कुत्सितशब्दं चक्रुः । 'वाशृ शब्दकुत्सितायाम्' इति धातुः । सुयोधनस्याग्निगेहतः अग्निगेहे । सार्वविभक्तिकस्तसिः । तथैव तत्पितुः धृतराष्ट्रस्य गेहेऽपि बहु भयानकं भयङ्करम्, निमित्तमिति शेषः । अभूत् ।। ३५७ ।।

**निमित्तान्यतिघोराणि कुपिते मारुतात्मजे ।**
**दृष्ट्वाऽम्बिकेयो विदुरं पप्रच्छैषां फलं द्रुतम् ।।३५८।।**

**वरदराजीया–** मारुतात्मजे भीमे कुपिते सति अतिघोराणि निमित्तानि दृष्ट्वा आम्बिकेयो धृतराष्ट्रः एषां निमित्तानां फलं कथमिति विदुरं पप्रच्छ ।। ३५८ ।।

**अनन्तभट्टीया–** निमित्तानि दृष्ट्वा ।।३५८-३६१।।

**जनार्दनीया–** कुपिते सति निमित्तानि चिह्नानि । 'निमित्तं हेतुलक्ष्मणोः' इत्यमरः । दृष्ट्वा, एषां निमित्तानाम् ।।३५८।।

**चट्टि–** मारुतात्मजे भीमे कुपिते सति आम्बिकेयो धृतराष्ट्रः अतिघोराणि निमित्तानि दृष्ट्वा, एषां निमित्तानां फलं विदुरं द्रुतं पप्रच्छ ।। ३५८ ।।

**आह तं विदुरो ज्येष्ठं क्षणेऽस्मिंस्तव पुत्रकाः ।**
**सानुबन्धा [1]नशिष्यन्ति वृकोदरबलाहताः ।।३५९।।**

**व्यासतीर्थीया–** नशिष्यन्ति । 'नश अदर्शने' ।। ३५९-३६० ।।

**वेदाङ्गतीर्थीया–** न शिष्यन्ति नङ्क्ष्यन्ति । अवशिष्टा न भविष्यन्तीति वा ।। ३५९ ।।

**वरदराजीया–** अस्मिन् क्षणे सानुबन्धास्तव पुत्रकाः वृकोदरबलेन हताः नशिष्यन्ति नाशं प्राप्नुवन्ति ।।

**जनार्दनीया–** न शिष्यन्ति अवशिष्टा न भविष्यन्ति ।।३५९।।

**चट्टि–** विदुरस्तं ज्येष्ठं धृतराष्ट्रं प्रति आह । किमिति? अस्मिन् क्षणे तव पुत्रकाः सानुबन्धाः वृकोदरबलेन आहताः सन्तः नशिष्यन्ति ।। ३५९ ।।

---

१. 'न शिष्यन्ति' इति वेदेङ्गतीर्थीय-जनार्दनीयपाठः ।

**क्रीडसेऽर्भकवत् त्वं हि किं जितं किं जितं त्विति ।**
**अधर्मेण जितानत्र जितान् पश्यसि पाण्डवान् ॥३६०॥**

**वेदाङ्गतीर्थीया–** किं जितं किं जितम् । अस्मिन् द्यूते पणत्वेनोत्सृष्टेषु किं जितम् , इदानीं पणत्वेनोत्सृष्टं किं जितमिति, वदन्निति शेषः ॥ ३६०-३६२ ॥

**वादिराजतीर्थीया–** 'किं जितं किं जितम्' इत्यत्र किं देवनं किं देवनं जितमिति अर्भकवत्क्रीडसे विनोदं करोषीत्यर्थः ॥ ३६०-३६७ ॥

**वरदराजीया–** त्वं हि किं जितं किं जितं त्विति अर्भकवद्बालकवत् क्रीडसे । अधर्मेण जितान् पाण्डवान् पश्यसि ॥ ३६० ॥

**जनार्दनीया–** त्वं किं जितं किं जितम्? इति अर्भकवद्बालकवत् क्रीडसे । अर्भकवत् बालकतुल्यस्त्वम्, विवेकरहितत्वादिति शेषः । अत्र द्यूते ॥३६०॥

**चट्टि–** त्वं किं जितं किं जितं इत्यर्भकवद्बालकवद् विनोदं करोषीत्यर्थः । अत्र अधर्मेण जितान् पाण्डवान् जितान् पश्यसि ॥३६०॥

**स्त्रीषु द्यूतेषु वा दत्तं मदान्धेन नरेण वा ।**
**न दत्तमाहुर्विद्वांसस्तस्य बन्धुभिरेव च ॥३६१॥**

**व्यासतीर्थीया–** 'अधर्मेण जितान्' इति द्यूतस्याधर्मत्वमुक्तं तत्कथमित्यत आह– **स्त्रीष्विति** ॥ ३६१-३६२ ॥

**वरदराजीया–** स्त्रीषु दत्तं द्यूतेषु वा पणत्वेन दत्तं मदान्धेन पुरुषेण वा दत्तं विद्वांसो दत्तं नाहुः । तस्य दातुः बन्धुभिः पुनराहार्यमाहुश्च ॥ ३६१ ॥

**जनार्दनीया–** स्त्रीषु दत्तं द्यूतेषु वा दत्तं मदान्धेन नरेण वा दत्तं विद्वांसो ज्ञानिनः दत्तं नाहुः । तस्य बन्धुभिः पुनराहार्यमेव आहर्तुं योग्यं इत्याहुश्च ॥३६१॥

**चट्टि–** स्त्रीषु दत्तं द्यूतेषु वा दत्तं मदान्धेन नरेण वा दत्तं विद्वांसः ज्ञानिनः दत्तं नाहुः ॥ ३६१ ॥

**आहार्यं पुनराहुश्च तथाऽपि न तु पाण्डवैः ।**
**तत् कृतं तव पुत्राणां ख्यापयद्भिरशिष्टताम् ॥३६२॥**

**सत्याभिनवीया–** तत्रैव 'आहार्यं पुनराहुश्च तथाऽपि..' इति श्लोके 'आहार्यं पुनराहुश्च' इत्यत्र आहार्यं च आहार्यमेवेति पुनः पुनराहुरित्यर्थः । एतेन आहार्यम् इत्यनेनैव पूर्णत्वात् पुनराहार्यमिति

पुनःशब्दो व्यर्थ इति दूषणं निरस्तम् । पुनःशब्दस्य आहार्यमित्यनेनान्वयो न किन्तु पुनःशब्दस्य आवृत्तिः आहुरित्यनेनान्वयश्चेति स्वीकृत्य पुनः पुनराहुरित्यर्थस्योक्तत्वात् ।।३६२-३७१।।

**वरदराजीया–** तथापि पाण्डवैस्तत्पुनराहरणं न कृतम् । कुतः? तव पुत्राणां अशिष्टतां ख्यापयद्भिरिति हेतुगर्भविशेषणम् ।। ३६२ ।।

**अनन्तभट्टीया–** पुनराहार्यम् । तत् आहरणम् ।।३६२।।

**जनार्दनीया–** तथापि तव पुत्राणां अशिष्टतां दुष्टतां ख्यापयद्भिः । 'ख्या प्रकथने' इति धातुः । पाण्डवैः तत्पुनराहरणं न कृतम् ।।३६२।।

**भारतश्री–** आहार्यं स्वीकार्यम् ।। ३६२-३९९ ।।

।। इति डम्बलानन्दाचार्यशिष्येण भारतश्रीनिवासाचार्येण विरचितायां
श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां एकविंशोऽध्यायः ।।

**चट्टि–** तस्य बन्धुभिः पुनः आहार्यमेव आहर्तुं योग्यमित्याहुश्च । तथापि तव पुत्राणां अशिष्टतां दुष्टत्वं ख्यापयद्भिः । 'ख्या प्रकथने' इति धातोः । पाण्डवैस्तत्पुनराहरणं न कृतम् ।। ३६२ ।।

**इत्युक्त आहाऽम्बिकेयो निमित्तानां फलं कथम् ।**
**न भवेदिति स प्राह द्रुतं कृष्णा विमोच्यताम्[1] ।।३६३।।**

**व्यासतीर्थीया–** त्वदुक्तं फलम् ।। ३६३-३७० ।।

**वेदाङ्गतीर्थीया–** द्रुतं कृष्णा विमोच्यताम् ।। ३६३ ।।

**वरदराजीया–** इति विदुरेणोक्तो निमित्तानां फलं कथं न भवेदित्याह अपृच्छत् । निमित्तानां फलाजनने कः प्रतीकार इति प्रश्नाभिप्रायः । स विदुरः प्राह । द्रुतं शीघ्रं कृष्णा विमुच्यताम् । द्रौपदीमोक्षणमेव प्रतीकारः इति भावः ।। ३६३ ।।

**अनन्तभट्टीया–** ।। **निमित्तानां फलं कथं न भवेदिति** ।। किं कृते दुर्निमित्तशान्तिर्भवेदित्यर्थः ।। ३६३-३६९ ।।

**लघ्वनन्तभट्टीया–** ।। **निमित्तानां फलं कथं न भवेदिति** ।। किं कृते दुर्निमित्तशान्तिर्भविष्यतीत्यर्थः ।।३६३।।

**जनार्दनीया–** इत्युक्तः विदुरेणोक्तः । फलं कथं न भवेदित्याह पप्रच्छ । सः विदुरः द्रुतं शीघ्रं कृष्णा विमोच्यतामिति प्राह ।। ३६३ ।।

---

१. 'विमुच्यताम्' इति वरदराजीय-चट्टीपाठः ।

**चट्टि–** इति विदुरेणोक्तः आम्बिकेयः धृतराष्ट्रः निमित्तानां दुर्निमित्तानां फलं कथं न भवेदित्याह । सः विदुरोऽपि द्रुतं कृष्णा द्रौपदी विमुच्यतामिति प्राह ।। ३६३ ।।

**तोषयस्व वरैश्चैनामन्यथा ते सुतान् मृतान् ।**
**विद्धि भीमेन निष्पिष्टान् [१]माऽत्र ते संशयो भवेत् ।।३६४।।**

**वेदाङ्गतीर्थीया–** तोषयस्व वरैश्चैनाम् । एवं सति निमित्तफलं न भवेदिति वाक्यशेषः ।।३६४-३६६।।

**वरदराजीया–** वरैर्दत्तैः एनां द्रौपदीं तोषयस्व सन्तोषयुक्तां कुरु । अन्यथा एतदकरणे भीमेन निष्पिष्टान् मर्दितान् अत एव हतान् ते सुतान् विद्धि । अत्रार्थे ते संशयो न भवेत् ।। ३६४ ।।

**जनार्दनीया–** एनां कृष्णां वरैः तोषयस्व । अन्यथा मदुक्तस्याकरणे । निष्पिष्टान् मर्दितानित्यर्थः । अत्र पुत्राणां मृतिविषये ते संशयो मा भवेदित्यन्वयः ।।३६४।।

**चट्टि–** एनां कृष्णां च वरैः तोषयस्व । अन्यथा मदुक्तस्याकरणे भीमेन निष्पिष्टान् मर्दितानित्यर्थः । ते सुतान् मृतान् विद्धि । अत्र पुत्राणां मृतिविषये ते संशयो न भवेत् ।। ३६४ ।।

**कृष्णा च पाण्डवाश्चैव तपोवृद्धिमभीप्सवः ।**
**तपसा नैव धक्ष्यन्ति तेन जीवन्ति ते सुताः ।।३६५।।**

**वरदराजीया–** स्वस्वतपोवृद्धिमभीप्सवः कृष्णाद्याः ते सुतान् तपसा नैव धक्ष्यन्ति । तेन कारणेन ते सुताः जीवन्ति ।। ३६५ ।।

**जनार्दनीया–** नैव धक्ष्यन्ति न दहन्ति । तेन कारणेन ।।३६५।।

**चट्टि–** पाण्डवाश्च कृष्णा चैव तपोवृद्धिमभीप्सवः सन्तः तपसा ते, सुतानिति शेषः । नैव धक्ष्यन्ति । तेन कारणेन ते सुता जीवन्ति ।। ३६५ ।।

**तथाऽपि यदि कृष्णां त्वं न मोचयसि ते सुतान् ।**
**हनिष्यति न सन्देहो बलेनैव वृकोदरः ।।३६६।।**

**वरदराजीया–** तथापि कृष्णां न मोचयसि यदि तर्हि भीमसेनः ते सुतान् हनिष्यत्येव ।। ३६६ ।।

**जनार्दनीया–** यद्यपि ते सुताः जीवन्ति तथापि ।।३६६।।

**चट्टि–** यद्यपि ते सुताः जीवन्ति तथापि त्वं यदि कृष्णां न मोचयसि तर्हि वृकोदरस्ते सुतान् बलेनैव हनिष्यति । सन्देहो न इति विदुरः प्राहेति पूर्वेण सम्बन्धः ।। ३६६ ।।

---

१. 'नात्र ते संशयः' इति वरदराजीय-चट्टीपाठः ।

**इतीरितो विनिर्भर्त्स्य[१] पुत्रं दुःशासनं नृपः ।**
**अमोचयद् वरैश्चैनां छन्दयामास पार्षतीम् ॥३६७॥**

**वेदाङ्गतीर्थीया–** छन्दयामास तोषयामास वरान् वृणीष्वेति ॥ ३६७-३६९ ॥

**वरदराजीया–** नृपः स धृतराष्ट्रः दुःशासनं विनिर्भर्त्स्य कृष्णाममोचयत् । एनां कृष्णां वरैश्च छन्दयामास अभिमुखीचकार ॥ ३६७ ॥

**अनन्तभट्टीया–** छन्दयामास असान्त्वयत् ॥ २६७ ॥

**जनार्दनीया–** तर्हि छन्दयामास तोषयामास ॥ ३६७ ॥

**ताम्रपर्णीया–** छन्दयामास प्रलोभयामास । अभिमुखीचकारेति यावत् ॥ ३६७ ॥

**चट्टि–** इति विदुरेणेरितः नृपः धृतराष्ट्रः पुत्रं दुःशासनं विनिर्भर्त्स्य कृष्णां अमोचयत् । एनां पार्षतीं द्रौपदीं वरैः छन्दयामास तोषयामास ॥ ३६७ ॥

**छन्दिता सा वरैस्तेन धर्मे भागवते स्थिता ।**
**नैवाऽत्मनो वरान् वव्रे वव्रे तेषां विमोक्षणम् ॥३६८॥**

**वादिराजतीर्थीया–** अन्यायेनापहृतस्य पुनरुपादानं वर एव न भवतीत्युक्तं 'धर्मे भागवते स्थिता' इति ॥ ३६८-३७१ ॥

**वरदराजीया–** सा द्रौपदी तेन धृतराष्ट्रेण वरैः छन्दिताऽभिमुखीकृता भागवते शुद्धे धर्मे स्थिता आत्मनोऽर्थे वरान्न वव्रे । तेषां पाण्डवानां विमोक्षणं वव्रे ॥ ३६८ ॥

**जनार्दनीया–** तेन धृतराष्ट्रेण वरैश्छन्दिता सन्तोषिता सा कृष्णा आत्मनः अर्थे वरान्न वव्रे । कथम्भूता? भागवते धर्मे स्थितेति हेतुगर्भविशेषणम् । तेषां पार्थानाम् ॥३६८॥

**ताम्रपर्णीया–** भागवते भगवद्विषये । धर्मे धर्मशास्त्रे ॥ ३६८-३७८ ॥

**चट्टि–** तेन धृतराष्ट्रेण वरैः छन्दिता सन्तोषिता सा कृष्णा आत्मनः स्वस्य अर्थे वरान् न वव्रे । कथम्भूता कृष्णा? भागवते धर्मे स्थिता इति हेतुगर्भविशेषणम् । तेषां पार्थानां विमोक्षणं वव्रे ॥३६८॥

**युधिष्ठिरस्य सभ्रातुः सराष्ट्रस्य विमोक्षणम् ।**
**ददौ नृपोऽस्या न पुनश्छन्द्यमानाऽपि साऽवृणोत् ॥३६९॥**

---

१. 'विनिर्भर्त्स्य' इति वरदराजीयपाठः ।

**मधुसूदनीया–** ।। **युधिष्ठिरस्य सभ्रातुरिति** ।। अत्र युधिष्ठिरस्य च विमोक्षणमेकं वरम् । 'सराष्ट्रस्य सभ्रातुः' इत्यनेन सराष्ट्रभीमार्जुनादि विमोक्षणमन्यं वरं याचतेति । वरद्वयमयाचतेति भावः । तथाचोक्तम् । द्रौपद्युवाच– 'ददासि चेद्वरं मह्यं वृणोमि भरतर्षभ । सर्वधर्मानुगः श्रीमान् न दासोऽस्तु युधिष्ठिरः ।।' धृतराष्ट्रः- 'एवं भवतु कल्याणि यथा त्वमभिभाषसे । द्वितीयं वै वरं भद्रे ददानि वरयस्व ह ।। मनो हि मे वितरति नैकं त्वं वरमर्हसि ।।' द्रौपदी- 'सरथौ सधनुष्कौ च भीमसेनधनञ्जयौ । नकुलं सहदेवं च द्वितीयं वरये वरम् ।।' धृतराष्ट्रः- 'तथास्त्विति महाभागे यथा त्वं नन्दिनीच्छसि । तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसत्कृता ।।' इति सभापर्वणि(९३.२७,३०-३२)।। ३६९ ।।

**वरदराजीया–** युधिष्ठिरादेर्विमोक्षणम् । अस्याः द्रौपद्याः वरं ददौ । पुनः छन्दमानापि वरं नाऽवृणोत् ।।

**जनार्दनीया–** अस्याः कृष्णायाः ।। ३६९ ।।

**चट्टि–** सभ्रातुः सराष्ट्रस्य युधिष्ठिरस्य मोक्षणमस्याः कृष्णायाः नृपः धृतराष्ट्रः ददौ । पुनश्छन्द्यमानापि सा कृष्णा, वरमिति शेषः । नावृणोत् ।। ३६९ ।।

**भर्तुर्विष्णोश्च नान्यस्माद् वरस्वीकार इष्यते ।**
**एवं हि भगवद्धर्मस्तस्मात् सा नावृणोत् परम् ।।३७०।।**

**वेदाङ्गतीर्थीया–** आत्मार्थं किमिति वरान् न वव्र इत्यत आह– **भर्तुरिति** ।। नेष्यते, परम-भागवतधर्मस्थैरिति शेषः । कुतो नेत्यत आह– **एवं हीति** ।। परं अन्यम्, वरमिति शेषः ।।३७०।।

**मधुसूदनीया–** ।। **नावृणोत्परमिति** ।। परं तृतीयं वरमित्यर्थः । लोभस्य सकलधर्मनाशकत्वात् लोभात्तृतीयं वरं नायाचतेति भावः । तदुक्तम् । द्रौपदी- 'लोभो धर्मविनाशाय भगवन्नाहमुत्सहे । अनर्हा वरमादातुं तृतीयं राजसत्तम ।। एकमाहुर्वैश्यवरं द्वौ वरौ क्षत्रियस्त्रियः । त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः ।।' इति सभापर्वणि (९३.३३-३४) ।। ३७०-३९९ ।।

।। इति श्रीमद्विद्याधीशतीर्थपूज्यपादशिष्येण मधुसूदनभिक्षुणा विरचिते
श्रीमन्महाभारततात्पर्यनिर्णयार्थप्रमाणसङ्ग्रहे एकविंशोऽध्यायः ।।

**वरदराजीया–** विष्णोर्भर्तुः स्वभर्तुश्च अन्यस्माद्वरस्वीकारो नेष्यते हि यस्मादेवं भागवतधर्माः सन्ति । तस्मात् सा नावृणोत् परम् ।। ३७० ।।

**जनार्दनीया–** आत्मार्थं किमिति वरान्न वव्र इत्यत आह– **भर्तुरिति** ।। भर्तुः स्वभर्तुः विष्णोश्चान्यस्माद् वरस्वीकारो नेष्यते न प्रशस्यते । एवं भगवद्धर्मः । हि यस्मात् तस्मात् परं अन्यद्वरं नावृणोत् ।।३७०।।

**चट्टि–** आत्मार्थं किमिति वरान्न वव्र इत्यत आह– **भर्तुरिति** ।। भर्तुः धारकस्य पोषकस्य विष्णोः स्वभर्तुर्विष्णोरपीति वा । अन्यस्माद् वरस्वीकारो नेष्यते न प्रशस्यते । एवं भगवद्धर्माः सन्ति हि यस्मात् तस्मात् सा वरमन्यद्वरं नावृणोत् नाङ्गीकृतवती ।।३७०।।

**अधर्मतो हृतत्वात्तु तद् दानं न वरो भवेत् ।**
**इति मत्वा पाण्डवानां वव्रे कृष्णा विमोक्षणम् ॥३७१॥**

**व्यासतीर्थीया–** ननु भर्तुर्विष्णोरन्यस्माद्वरस्वीकारो भागवतधर्मो न चेत् कथं धृतराष्ट्राद्वरान् वव्र इत्यत आह– **अधर्मत इति** ॥ ३७१ ॥

**वेदाङ्गतीर्थीया–** एवं तर्हि युधिष्ठिरादिविमोक्षणवरस्वीकारेऽपि धर्महानिरित्यत आह– **अधर्मत इति** ॥ तद्दानं युधिष्ठिरादिविमोक्षणदानम् ॥ ३७१ ॥

**वरदराजीया–** तर्हि युधिष्ठिरादित्रयविमोक्षणरूपं वरत्रयं कथं वव्रे इत्यत आह– **अधर्मत इति** ॥ दुर्योधनेन अधर्मतो अधर्मेण राष्ट्रादेः हृतत्वात् तद्दानं सराष्ट्रादिदानं वरो न भवेदिति मत्वा पाण्डवानां सराष्ट्राणां विमोक्षणं वव्रे ॥ ३७१ ॥

**अनन्तभट्टीया–** भर्तुर्विष्णोश्च व्यतिरिक्ताद्यदि (न) वरस्वीकारः तर्हि कथं धृतराष्ट्रात् वरस्वीकार इत्यत आह– **अधर्मत इति** ॥ तद्दानं राष्ट्रादिदानम् ॥३७१॥

**जनार्दनीया–** तर्हि युधिष्ठिरादिविमोक्षणरूपवरस्वीकारोऽपि कथं कृत इत्यत आह– **अधर्मत इति** ॥ तद्विमोक्षणम् । दानं राष्ट्रदानम् ॥ ३७१ ॥

**चट्टि–** तर्हि युधिष्ठिरादिमोक्षणरूपवरस्वीकरोऽपि कथं कृत इत्यत आह– **अधर्मत इति** ॥ दुर्योधनेनाधर्मतः हृतत्वात् तद्विमोक्षणं दानं राष्ट्रदानं च वरो न भवेत् । इति मत्वा कृष्णा पाण्डवानाम्, सराष्ट्राणां इति शेषः । विमोक्षणं वव्रे । अन्यायेनापहृतस्य पुनरुपादानं वर एव न भवतीत्यतो न भागवतधर्महानिरित्युक्तम् ॥ ३७१ ॥

**श्वशुरादैहिकवराः क्षत्रियायास्त्रयो यतः ।**
**उक्ताः शतं च विप्राया धर्मे भागवते ततः ।**
**हेतुनाऽनेन वव्रे सा नान्यत् किञ्चिदतः परम् ॥३७२॥**

**व्यासतीर्थीया–** समाधानान्तरञ्चाह– **श्वशुरादिति** ॥ धर्मे धर्मशास्त्रे । यतो धर्महेतुः ततः श्वशुरात् सा वरान् वव्र इति सम्बन्धः । अतः परं त्रिभ्यो वरेभ्यः परमुपरि सा न वव्र इति सम्बन्धः ॥

**वेदाङ्गतीर्थीया–** प्रकारान्तरेणापि भागवतधर्महानिर्नाभूदित्याह– **श्वशुरादिति** ॥ ततः भागवत-धर्महानिः नाभूदिति वाक्यशेषः । अनेन हेतुना श्वशुराद् वरत्रयस्वीकारेऽपि भागवतधर्माविरोधेन हेतुना । अतः वृतेभ्यो वरेभ्यो परमुपरि अन्यत् किञ्चिदभीष्टं न वव्रे ॥ ३७२-३७४ ॥

**वादिराजतीर्थीया–** प्रकारान्तरेणाऽपि भागवतधर्महानिर्न भवतीत्याह– **श्वशुरादिति** ॥३७२-३७८।

**सत्याभिनवीया–** तत्रैव 'उक्ताः शतं च विप्राया..' इति श्लोके 'वव्रे सा नान्यत्किञ्चिदतः परम्' इत्यस्य सा द्रौपदी परं परमात्मानं कृष्णम्, कृष्णप्रीतिमिति यावत् । उद्दिश्य अतः वरत्रयात् अन्यत् किञ्चित् न वव्रे इत्यर्थः । एतेन अतो नान्यत् किञ्चित् वव्रे इत्यनेनैव पूर्णत्वात् परमित्येतत् व्यर्थमिति चोद्यस्यानवकाशः । उद्दिश्येत्यस्य शेषमभ्युपेत्य कृष्णप्रीतिमुद्दिश्येत्यर्थस्योक्तत्वात् ।।३७२-३७८।।

**वरदराजीया–** क्षत्रियायाः स्त्रियः श्वशुरादैहिकवरास्त्रय एव वरणणीयत्वेनोक्ताः । विप्रायाश्च ततः श्वशुराच्छतं वरा वरणीयत्वेन भागवते धर्मे तत्प्रतिपादके शास्त्रे उक्ताः । अनेन हेतुना अतो वरत्रयात् परं अन्यत् किञ्चन सा न वव्रे ।।३७२।।

**अनन्तभट्टीया–** धर्मे धर्मशास्त्रे यतः ततः ।।३७२-३७६।।

**जनार्दनीया–** वरस्वीकारे कारणान्तरमाह– **श्वशुरादिति** ।। यतः कारणात् क्षत्रियायाः त्रयः ऐहिकवराः श्वशुरादुक्ताः । विप्रायाः ततः श्वशुरात् शतं शतसङ्ख्याकाः ऐहिकवराः ग्राह्याः । इति भागवते धर्मे उक्ताः । तेन हेतुना सा वव्रे । अतः दत्तेभ्यः वरेभ्यः परमुपरि अन्यत् किञ्चिदभीष्टं न वव्रे ।। ३७२ ।।

**चट्टि–** प्रकरान्तरेणापि भागवतधर्महानिः नास्तीत्याह– **श्वशुरादिति** ।। यतः कारणात् क्षत्रियायाः त्रयः ऐहिकवराः श्वशुराद् ग्राह्यत्वेनोक्ताः । विप्रायाः ततः श्वशुरात् शतमैहिकवराः ग्राह्या इति भागवतधर्मे तत्प्रतिपादकशास्त्रे उक्ताः । अनेन हेतुना सा वव्रे । अतः दत्तेभ्यो वरेभ्यो परमपरं अन्यत् किञ्चिदभीष्टं न वव्रे ।। ३७२ ।।

**ततो विमुक्ताः प्रययुश्च पार्था गुरून् प्रणम्य स्वपुरं सकृष्णाः ।**
**[1]दुर्योधनानन्तरजो जगाद तातं निजं पापकृतां प्रधानः ।।३७३।।**

**वरदराजीया–** ततः अनन्तरं वरेण विमुक्ताः सन्तः गुरून् भीष्मादीन् । सकृष्णाः कृष्णासहिताः । दुर्योधनान्तरजो दुःशासनः निजं तातम् ।। ३७३ ।।

**जनार्दनीया–** स्वपुरं इन्द्रप्रस्थम् । दुर्योधनान्तरजः दुःशासनः ।।३७३।।

**चट्टि–** ततोऽनन्तरं विमुक्ताः पार्थाः सकृष्णाः द्रौपद्या सहिताः सन्तः गुरून् भीष्मादीन् प्रणम्य स्वपुरमिन्द्रप्रस्थं प्रति प्रययुश्च । पापकृतां प्रधानः दुर्योधनानन्तरजः दुःशासनः निजं तातं धृतराष्ट्रं जगाद ।। ३७३ ।।

**[2]समस्तपाण्डवश्रियं समागतामहो पुनः ।**
**व्यमोचयो वृकोदराद् वधश्च नो ध्रुवो भवेत् ।।३७४।।**

---

१. 'दुःखेनैतत्समानीतं स्थविरो नाशयत्यसौ । शत्रुसाद्गमयद् द्रव्यं तद्बुध्यध्वं महारथाः ।।' सभापर्वणि-९६.४.

२. 'आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः । निःशेषान्नः करिष्यन्ति क्रुद्धा ह्याशीविषा इव ।।' सभापर्वणि-९६.११.

**व्यासतीर्थीया–** पाण्डवानां विमोक्षणे वृकोदरो वा हनिष्यतीत्यतस्तदकरणेऽपि वधः सिद्ध इत्याह– **वृकोदरादिति** ।। ३७४-३८२ ।।

**वरदराजीया–** समस्तां पाण्डवश्रियं व्यमोचयः मोचितवानसि । तेन नोऽस्माकं वृकोदराद्वधो ध्रुवो निश्चितो भवेत् ।। ३७४ ।।

**जनार्दनीया–** पुनः समागतां वारणावतगमनापेक्षया पुनः । वधः भवेद्यतः ।।३७४।।

**चट्टि–** समागतां पाण्डवसमस्तां श्रियं पुनः व्यमोचयः । अहो आश्चर्यम् । वृकोदराद् ध्रुवः निश्चितः वधश्च नो अस्माकं भवेत् ।। ३७४ ।।

**अतः पुनश्च पाण्डवान् [१]समाह्वयस्व नः कृते ।**
**पुनश्च देवनं भवेज्जिता वनं प्रयान्तु च ।।३७५।।**

**वेदाङ्गतीर्थीया–** नः कृते अस्मदर्थे । जिता वनं प्रयान्त्विति । जितानां वनप्रयाणं नः पणः कर्तव्य इति भावः ।।३७५-३७६ ।।

**वरदराजीया–** नः कृते अस्मदर्थं पुनरपि तैः सह अक्षैर्देवनं भवेत् । जिताः पराजिताः यदि तर्हि वनं प्रति प्रयान्तु ।। ३७५ ।।

**जनार्दनीया–** अतः नः कृते अस्मदर्थे समाह्वयस्व । 'समानयस्व' इति वा पाठः । जिताः पराजिताः वनं प्रयान्त्विति जितानां वनप्रयाणं वै पणः कर्तव्य इति भावः ।।३७५।।

**चट्टि–** यतः अतः नः कृते अस्मदर्थे पुनश्च पाण्डवान् समाह्वयस्व । पुनरपि तैः सह अक्षैः देवनं भवेत् । ते पार्थाः जिताः पराजिताः सन्तः वनं प्रयान्तु ।। ३७५ ।।

**तेनोक्तः स तदा राजा पाण्डवान् पुनराह्वयत् ।**
**पुनः पित्रा समाहूतो देवनाय युधिष्ठिरः ।**
**[२]भ्रातृभिर्वार्यमाणोऽपि कृष्णया चाऽगमत् सभाम् ।।३७६।।**

**वरदराजीया–** तेन दुःशासनेन पुनः देवनायाहूतो सभां प्रत्यागमत् ।। ३७६ ।।

---

१. 'समानयस्व' इति जनार्दनीये पाठान्तरम् ।

२. 'एवं दैवबलाविष्टो धर्मराजो युधिष्ठिरः । भीष्मद्रोणाऽऽवार्यमाणो विदुरेण च धीमता ।। युयुत्सुना कृपेणाथ सञ्जयेन च भारत । गान्धार्या पृथया चैव भीमार्जुनयमैस्तथा ।। विकर्णेन च वीरेण द्रौपद्या द्रौणिना तथा । सोमदत्तेन च तथा वाह्लीकेन च धीमता ।। वार्यमाणोऽपि सततं न च राजन्नियच्छति । एवं संवार्यमाणोऽपि कौन्तेयो हितकाम्यया ।।' सभापर्वणि- ९८.२४-२७.

**सत्याभिनवीया–** तत्रैव 'उक्ताः शतं च विप्राया..' इति श्लोके 'वव्रे सा नान्यत्किञ्चिदतः परम्' इत्यस्य सा द्रौपदी परं परमात्मानं कृष्णम्, कृष्णप्रीतिमिति यावत् । उद्दिश्य अतः वरत्रयात् अन्यत् किञ्चित् न वव्रे इत्यर्थः । एतेन अतो नान्यत् किञ्चित् वव्रे इत्यनेनैव पूर्णत्वात् परमित्येतत् व्यर्थमिति चोद्यस्यानवकाशः । उद्दिश्येत्यस्य शेषमभ्युपेत्य कृष्णप्रीतिमुद्दिश्येत्यर्थस्योक्तत्वात् ।।३७२-३७८।।

**वरदराजीया–** क्षत्रियायाः स्त्रियः श्वशुरादैहिकवरास्त्रय एव वरणीयत्वेनोक्ताः । विप्रायाश्च ततः श्वशुराच्छतं वरा वरणीयत्वेन भागवते धर्मे तत्प्रतिपादके शास्त्रे उक्ताः । अनेन हेतुना अतो वरत्रयात् परं अन्यत् किञ्चन सा न वव्रे ।।३७२।।

**अनन्तभट्टीया–** धर्मे धर्मशास्त्रे यतः ततः ।।३७२-३७६।।

**जनार्दनीया–** वरस्वीकारे कारणान्तरमाह– **श्वशुरादिति** ।। यतः कारणात् क्षत्रियायाः त्रयः ऐहिकवराः श्वशुरादुक्ताः । विप्रायाः ततः श्वशुरात् शतं शतसङ्ख्याकाः ऐहिकवराः ग्राह्याः । इति भागवते धर्मे उक्ताः । तेन हेतुना सा वव्रे । अतः दत्तेभ्यः वरेभ्यः परमुपरि अन्यत् किञ्चिदभीष्टं न वव्रे ।। ३७२ ।।

**चट्टि–** प्रकारान्तरेणापि भागवतधर्महानिः नास्तीत्याह– **श्वशुरादिति** ।। यतः कारणात् क्षत्रियायाः त्रयः ऐहिकवराः श्वशुराद् ग्राह्यत्वेनोक्ताः । विप्रायाः ततः श्वशुरात् शतमैहिकवराः ग्राह्या इति भागवतधर्मे तत्प्रतिपादकशास्त्रे उक्ताः । अनेन हेतुना सा वव्रे । अतः दत्तेभ्यो वरेभ्यो परमपरं अन्यत् किञ्चिदभीष्टं न वव्रे ।। ३७२ ।।

**ततो विमुक्ताः प्रययुश्च पार्था गुरून् प्रणम्य स्वपुरं सकृष्णाः ।**
**[1]दुर्योधनानन्तरजो जगाद तातं निजं पापकृतां प्रधानः ।।३७३।।**

**वरदराजीया–** ततः अनन्तरं वरेण विमुक्ताः सन्तः गुरून् भीष्मादीन् । सकृष्णाः कृष्णासहिताः । दुर्योधनान्तरजो दुःशासनः निजं तातम् ।। ३७३ ।।

**जनार्दनीया–** स्वपुरं इन्द्रप्रस्थम् । दुर्योधनान्तरजः दुःशासनः ।।३७३।।

**चट्टि–** ततोऽनन्तरं विमुक्ताः पार्थाः सकृष्णाः द्रौपद्या सहिताः सन्तः गुरून् भीष्मादीन् प्रणम्य स्वपुरमिन्द्रप्रस्थं प्रति प्रययुश्च । पापकृतां प्रधानः दुर्योधनानन्तरजः दुःशासनः निजं तातं धृतराष्ट्रं जगाद ।। ३७३ ।।

**[2]समस्तपाण्डवश्रियं समागतामहो पुनः ।**
**व्यमोचयो वृकोदराद् वधश्च नो ध्रुवो भवेत् ।।३७४।।**

---

१. 'दुःखेनैतत्समानीतं स्थविरे नाशयत्यसौ । शत्रुसाद्गमयद् द्रव्यं तद्बुद्ध्यध्वं महारथाः ।।' सभापर्वणि-९६.४.

२. 'आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः । निःशेषान्नः करिष्यन्ति क्रुद्धा ह्याशीविषा इव ।।' सभापर्वणि-९६.११.

**व्यासतीर्थीया–** पाण्डवानां विमोक्षणे वृकोदरो वा हनिष्यतीत्यतस्तदकरणेऽपि वधः सिद्ध इत्याह– **वृकोदरादिति** ।। ३७४-३८२ ।।

**वरदराजीया–** समस्तां पाण्डवश्रियं व्यमोचयः मोचितवानसि । तेन नोऽस्माकं वृकोदराद्वधो ध्रुवो निश्चितो भवेत् ।। ३७४ ।।

**जनार्दनीया–** पुनः समागतां वारणावतगमनापेक्षया पुनः । वधः भवेद्यतः ।।३७४।।

**चट्टि–** समागतां पाण्डवसमस्तां श्रियं पुनः व्यमोचयः । अहो आश्चर्यम् । वृकोदराद् ध्रुवः निश्चितः वधश्च नो अस्माकं भवेत् ।। ३७४ ।।

**अतः पुनश्च पाण्डवान् [१]समाह्वयस्व नः कृते ।**
**पुनश्च देवनं भवेज्जिता वनं प्रयान्तु च ।।३७५।।**

**वेदाङ्गतीर्थीया–** नः कृते अस्मदर्थे । जिता वनं प्रयान्त्विति । जितानां वनप्रयाणं नः पणः कर्तव्य इति भावः ।।३७५-३७६ ।।

**वरदराजीया–** नः कृते अस्मदर्थं पुनरपि तैः सह अक्षैर्देवनं भवेत् । जिताः पराजिताः यदि तर्हि वनं प्रति प्रयान्तु ।। ३७५ ।।

**जनार्दनीया–** अतः नः कृते अस्मदर्थे समाह्वयस्व । 'समानयस्व' इति वा पाठः । जिताः पराजिताः वनं प्रयान्त्विति जितानां वनप्रयाणं वै पणः कर्तव्य इति भावः ।।३७५।।

**चट्टि–** यतः अतः नः कृते अस्मदर्थे पुनश्च पाण्डवान् समाह्वयस्व । पुनरपि तैः सह अक्षैः देवनं भवेत् । ते पार्थाः जिताः पराजिताः सन्तः वनं प्रयान्तु ।। ३७५ ।।

**तेनोक्तः स तदा राजा पाण्डवान् पुनराह्वयत् ।**
**पुनः पित्रा समाहूतो देवनाय युधिष्ठिरः ।**
**[२]भ्रातृभिर्वार्यमाणोऽपि कृष्णया चाऽगमत् सभाम् ।।३७६।।**

**वरदराजीया–** तेन दुःशासनेन पुनः देवनायाहूतो सभां प्रत्यागमत् ।। ३७६ ।।

---

१. 'समानयस्व' इति जनार्दनीये पाठान्तरम् ।

२. 'एवं दैववलाविष्टो धर्मराजो युधिष्ठिरः । भीष्मद्रोणाऽऽवार्यमाणो विदुरेण च धीमता ।। युयुत्सुना कृपेणाथ सञ्जयेन च भारत । गान्धार्या पृथया चैव भीमार्जुनयमैस्तथा ।। विकर्णेन च वीरेण द्रौपद्या द्रौणिना तथा । सोमदत्तेन च तथा बाह्लीकेन च धीमता ।। वार्यमाणोऽपि सततं न च राजन्निरच्छति । एवं संवार्यमाणोऽपि कौन्तेयो हितकाम्यया ।।' सभापर्वणि- ९८.२४-२७.

**अनन्तभट्टीया–** पुनः, वरत्रयात् जित्वा याहीति शेषः ।।३७६।।

**जनार्दनीया–** समाहूतः सम्यक् मानपुरःसरं आहूतः । दुर्योधनादिप्रियकाम्ययेति शेषः ।। ३७६ ।।

**भावचन्द्रिका–** ।। **पुनः पित्रेति** ।। 'ततोऽप्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम् । उवाच वचनाद्राज्ञः धृतराष्ट्रस्य दुर्मतेः ।।' इति (२.९८.१) भारतवचनात् विशेषो ज्ञेयः ।। ३७६-३८० ।।

**चट्टि–** तेन दुःशासनेन तथोक्तः राजा धृतराष्ट्रः पाण्डवान् पुनराह्वयत् । युधिष्ठिरः पित्रा धृतराष्ट्रेण पुनर्देवनाय समाहूतः सम्यक् बहुमानपुरःसरमाहूतः सन् भ्रातृभिः कृष्णया च वार्यमाणोऽपि सभां प्रत्यागमत् ।। ३७६ ।।

**द्वादशाब्दं वने वासमज्ञातं चैकवत्सरम् ।**
**वासं प्रसिद्धनृपतेः पुरे नैवातिदूरतः ।।३७७।।**

**वेदाङ्गतीर्थीया–** अतिदूरतो न, हस्तिनानगरादिति शेषः । प्रसिद्धनृपतेः पुरे एकवत्सरमज्ञातवासं च ।। ३७७-३७८ ।।

**वरदराजीया–** अस्मिन् देवने किं पणं दुर्योधनश्चक्रे इत्यतः पणस्वरूपं निरूपयति– **द्वादशाब्दमिति** ।। वने द्वादशाब्दं द्वादशाब्दपर्यन्तं वासं पणं चक्रे इति सम्बन्धः । तथा एकवत्सरं एकवत्सरपर्यन्तं अज्ञातवासम् । तत्रापि विशेषोऽस्तीत्याह । प्रसिद्धस्य नृपतेः राज्ञः पुरे तत्रापि अतिदूरतो नैव ।।३७७।।

**अनन्तभट्टीया– नैवातिदूरतः** प्रसिद्धनृपतेः पुरे एकवत्सरमज्ञातवासमित्यन्वयः ।। ३७७-३७८ ।।

**जनार्दनीया–** दुर्योधनः दुःशासनोक्त्या बुद्ध्या पणं चक्रे । पणस्वरूपं निरूपयति– **द्वादशाब्दमिति** ।। द्वादशाब्दं वने वासं, एकवत्सरं अज्ञातं अज्ञातवासं पणं चक्र इति सम्बन्धः । अज्ञातवासे विशेषं दर्शयति– **वासमित्यादिना** ।। प्रसिद्धनृपतेः पुरे वासम् । तत्राप्यतिदूरतो नैव, नागपुरादिति शेषः ।।३७७।।

**चट्टि–** अस्मिन् देवने दुर्योधनः किं पणं चक्रे इत्यतः पणस्वरूपं निरूपयति– **द्वादशाब्दमिति** ।। द्वादशाब्दं द्वादशाब्दपर्यन्तं वने वासमेकवत्सरमज्ञातवासं पणं चक्र इति सम्बन्धः । अज्ञातवासे विशेषोक्तिं दर्शयति– **वासमित्यादिना** ।। प्रसिद्धनृपतेः पुरे वासम् । तत्राप्यतिदूरतः नैव, नागपुरादिति शेषः ।।

**कृष्णायाः पाण्डवानां वा दर्शनेऽज्ञातवासिनाम् ।**
**एकस्यापि समस्तानां द्वादशाब्दं पुनर्वनम् ।।३७८।।**

**वरदराजीया–** तत्रापि अज्ञातवासिनां वत्सरपर्यन्तं वासं कुर्वतां पाण्डवानां एकस्य वा समस्तानां वा कृष्णाया वा दर्शने सति । पुनः परावृत्य द्वादशाब्दं वनवासं वत्सराज्ञातवासं च पणं चक्रे ।।३७८।।

**जनार्दनीया–** अज्ञातवासिनां अज्ञातवासं कुर्वतां पाण्डवानां कृष्णाया वा दर्शने सति । एकस्यापि पाण्डवानां मध्ये एकस्य दर्शने सत्यपि समस्तानां पाण्डवानां पुनर्द्वादशाब्दपर्यन्तम् । वनं वनवासम् ।।३७८।।

**चट्टि–** अज्ञातवासं कुर्वतां पाण्डवानां कृष्णायाश्चेति समस्तानां दर्शने सति वा एकस्यापि दर्शने सति वा पुनः द्वादशाब्दं द्वादशवर्षपर्यन्तं वनवासम् ।। ३७८ ।।

**वत्सराज्ञातवासं च त्यागेऽप्युक्तविधेस्तथा ।**
**दुर्योधनः पणं चक्रे बुद्ध्या दुःशासनोक्तया ।।३७९।।**

**वेदाङ्गतीर्थीया–** उक्तनियमस्य त्यागेऽपि तथा वनवासादि ।। ३७९ ।।

**वादिराजतीर्थीया–** 'त्यागेऽप्युक्तविधेः' इत्यत्र उक्तविधेः उक्तनियमस्य त्यागे करणासामर्थ्येन स्वयमेव त्यागेऽपि तथा पूर्ववदेवेति पणं चक्र इति योजना ।। ३७९-३९० ।।

**सत्याभिनवीया–** तत्रैव 'दुर्योधनः पणं चक्रे..' इत्यस्ति । तस्यार्थः दुर्योधनः दुःशासनोक्तया दुःशासनवचनोत्पादितया वुद्ध्या पणं पणविषयकशब्दप्रयोगं चक्रे इति । एतेन दुःशासनवचनेनोत्पादितया बुद्ध्येति वक्तव्यम् । दुःशासनोक्तया बुद्ध्या इति कथनमनुपपन्नमिति दूषणमपाकृतम् । 'दुःशासनोक्तया' इत्यत्र क्तप्रत्ययः भावे । अतः उक्तशब्दः वचनवाची । तस्मात् मत्त्वर्थे अच्प्रत्यये दुःशासनोक्तं वचनम् उत्पादकत्वेन यस्याः वुद्धेरस्ति, सा दुःशासनोक्ता तया दुश्शासनोक्तयेति विग्रहे च कृते दुःशासनवचनोत्पादितयेत्यर्थो लभ्यते इत्यभ्युपगमात् । एतेनैव पणविषयकशब्दप्रयोगं चक्रे इति वक्तव्यम् । पणं चक्रे इति कथनमनुपपन्नमिति दूषणस्यानवकाशः । पणशब्देन पणविषयकशब्दप्रयोगस्य ग्रहणात् ।।३७९-३८० ।।

**वरदराजीया–** तथा उक्तविधेः प्रसिद्धनृपतेरित्यादिनोक्तप्रकारविशेषस्य त्यागेऽपि पुनर्द्वादशाब्दं वनं वनवासं वत्सराज्ञातवासं पणं चक्रे । दुःशासनोक्त्या बुद्ध्या युक्त्या पणं चक्र इति सम्वन्धः ।। ३७९ ।।

**अनन्तभट्टीया–** उक्तविधेस्त्यागे वनवासकाले नगरादिवासे कृत इत्यर्थः ।। ३७९ ।।

**जनार्दनीया–** वत्सराज्ञातवासं वत्सरपर्यन्तं अज्ञातवासम् । उक्तविधेस्त्यागे सति वनवासे नगरप्रवेशे, अज्ञातवासे अतिदूरवासः अप्रसिद्धनृपतेः पुरे वास इत्याद्युक्तविधेः त्यागे सति । तथा पुनः वनवासादिपूर्वोक्तवत् ।।३७९।।

**ताम्रपर्णीया–** उक्तविधेः वासं प्रसिद्धनृपतेरित्याद्युक्तविधेः । दुःशासनोक्तया दुःशासनवचनोत्पादितया ।। ३७९-३८२ ।।

**चट्टि–** वत्सराज्ञातवासं वत्सरपर्यन्तमज्ञातवासं च । उक्तविधेस्त्यागे सति वनवासे नगरवासः तथा अज्ञातवासे अतिदूरवासः अप्रसिद्धनृपतेः पुरे वास इत्यादिना उक्तविधेः त्यागे सति ततः पुनर्वनवासादि कर्तव्यमिति दुःशासनोक्तया बुद्ध्या दुर्योधनः पणं चक्रे इति पूर्वेण सम्बन्धः ।।३७९।।

**गान्धारेण पुनश्चाक्षहृदयज्ञेन धर्मजः ।**
**पराजितो वनं यातुमैच्छत् सभ्रातृको यदा ।।३८०।।**

**वेदाङ्गतीर्थीया–** अक्षहृदयज्ञेन अक्षहृदयविद्यां जानता ।। ३८०-३८२ ।।

**वरदराजीया–** अक्षहृदयज्ञेन अक्षसर्वस्वं जानता गान्धारकेण शकुनिना पराजितः यदा वनं यातुमैच्छत् ।। ३८० ।।

**अनन्तभट्टीया–** यातुमैच्छत् उद्युक्त इत्यर्थः ।। ३८०-३८२ ।।

**जनार्दनीया–** अक्षहृदयज्ञेन अक्षाभिप्रायं अक्षहृदयविद्यां वा जानता गान्धारेण पराजितः सन् यदा यातुमैच्छच्च ।।३८०।।

**चट्टि–** अक्षहृदयज्ञेनाक्षाभिप्रायमक्षहृदयविद्यां वा जानता गान्धारेण शकुनिना पुनः पराजितः सन् धर्मजो युधिष्ठिरः सभ्रातृकः सन् यदा वनं यातुमैच्छत् ।। ३८० ।।

**तदा ननर्त पापकृत् [1]सुयोधनानुजो हसन् ।**
**वदंश्च मारुतात्मजं पुनःपुनश्च गौरिति ।।३८१।।**

**सत्याभिनवीया–** तत्रैव 'तदा ननर्त पापकृत् सुयोधनानुजो..' इति श्लोके गौः इत्यस्य उत्सृष्टवृषभवत् वृथावृष इत्यर्थः । एतेन गौरित्येन दूषणस्यालाभात् गौरितिवदन्निति कथनमनुपपन्नमिति दूषणं निरस्तम् । गौरित्यनेन उत्सृष्टवृषभसादृश्यमुच्यत इति स्वीकरणात् ।।३८१-३८८।।

**वरदराजीया–** तदा ननर्त । गौरित्यपहासः ।।३८१।।

**जनार्दनीया–** तदा सुयोधनानुजः पुनःपुनः गौरिति वदन् मारुतात्मजं हसन् ननर्त ।।३८१।।

**ताम्रपर्णीया–** गौरित्युपहासहेतुरनुकरणशब्दः ।।३८१।।

**भावचन्द्रिका–** सकलराज्यदानादिकमेकं द्वादशेत्याद्येकं इति पणं चक्रे दुर्योधन इति भारते । व्याघ्रो हि गां नृत्यतीति सिद्धम् । भीमः पुरुषव्याघ्र इति सिद्धम् । व्याघ्रसमत्वात् वीर्येण सह इदानीं निरासकत्वं मन्वानो दुःशासनः स्वस्य व्याघ्रसमत्वं मत्वा भीमं गौरित्याह ।। ३८१-३८२ ।।

---

१. 'न सन्ति लोकेषु पुमांस ईदृशा इत्येव ये भावितबुद्धयः सदा । ज्ञास्यन्ति तेऽन्मानमिमेऽद्य पाण्डवा विपर्यये पण्डतिला इवाफलाः ।।' सभापर्वणि-९०..८ । एवं त्रुवाणमजिनैर्विवासितं दुःशासनस्तं परिनृत्यति स्म । मध्ये कुरूणां धर्मनिबद्धमार्गं गौगौरिति स्माह्वयन् मुक्तलज्जः ।। सभा.९०..१९

**चट्टि–** तदा पापकृत्सुयोधनानुजो दुःशासनः पुनःपुनः गौरिति वदन् मारुतात्मजं भीमं हसन् ननर्त ।।३८१।।

**[1]उवाच च पुनः कृष्णां नृत्यन्नेव सभातले ।**
**अपतिर्ह्यसि कल्याणि गच्छ दुर्योधनालयम् ।।३८२।।**

**वरदराजीया–** पुनः कृष्णामुवाच । हि यस्मादपतिरसि तस्मात् दुर्योधनालयं गच्छ ।। ३८२ ।।

**जनार्दनीया–** आलयं गृहम् ।।३८२।।

**चट्टि–** सभातले नृत्यन्नेव सः दुःशासनः कृष्णां प्रति हे कल्याणि! हि यस्मादपतिरसि तस्मात् दुर्योधनस्यालयं गृहं गच्छेति पुनरुवाच ।।३८२।।

**एतेऽखिलाः [2]षण्डतिलास्तमोऽन्धं प्राप्ता न चैषां पुनरुत्थितिः स्यात् ।**
**इति ब्रुवाणोऽनुचकार भीमं तदाऽहसन् धार्तराष्ट्राश्च सर्वे ।।३८३।।**

**व्यासतीर्थीया–** षण्ढतिलाः निर्वीर्याः ।। ३८३-३८४ ।।

**वेदाङ्गतीर्थीया–** षण्डतिलाः निर्वीर्याः । तमोऽन्धं प्राप्ताः । पुनरुत्थितिर्न स्यात् । तमोऽन्धं प्राप्तानां यथोर्ध्वगतिर्न भवेत् तथैव तेषामप्येतदापन्निवृत्तिः कदापि न च भविष्यतीति भावः । अनुचकार गमनादिना । तदा भीमगमनाद्यनुकारेण ।। ३८३ ।।

**वरदराजीया–** एतेऽखिला पार्थाः षण्डतिलाः निर्वीर्याः । अन्धंतमः व्यसनजालमाप्ताः । एषां पाण्डवानां तस्माद् व्यसनजालात् नैवोत्थितिः । पारं गमनं नास्त्येवेत्यर्थः । इति ब्रुवाणो दुःशासनोऽनुचकार तद्गमनादिकमनुचकारेत्यर्थः । तदा सर्वे धार्तराष्ट्राः विकर्णादयोऽहसन् ।।३८३।।

**अनन्तभट्टीया–** षण्ढतिलाः निर्वीर्याः ।। **अन्धन्तम इति** ।। व्यसनजालमिति भावः । उत्थितं निर्व्यसनत्वम् ।। ३८३-३८४ ।।

**जनार्दनीया–** पार्थेषु सत्सु 'अपतिर्ह्यसि' इति कथमाहेत्यत आह– **एत इति** ।। एतेऽखिलाः पार्थाः षण्ढतिलाः सन्तः निर्वीर्याः सन्तः तमोऽन्धं प्राप्ताः । एषां पुनः उत्थितिर्न स्यात् । तमोऽन्धं प्राप्तानां यथा ऊर्ध्वगतिर्न भवेत्, तथा तेषामप्येतदापन्निवृत्तिः कदापि न भविष्यतीति भावः । इति ब्रुवाणो दुःशासनः भीममनुचकार भीमगमनाद्यनुसारगमनादिना अनुचकार । तदा सर्वे धार्तराष्ट्राः अहसन् । सर्वे च शकुनिकर्णादयश्चेति वा ।।३८३।।

---

१. 'उवाच स पुनः' इति चट्टीपाठः स्यात् ।

२. 'षण्ढतिलाः' इति व्यासतीर्थीय-अनन्तभट्टीय-जनार्दनीय-भावचन्द्रिकाकाराणां पाठः ।

**ताम्रपर्णीया–** षण्डतिलाः निर्वीर्यतिलाः । अनुचकार तद्गत्यादिकमनुचकार ।। ३८३-३९६ ।।

**भावचन्द्रिका–** ।। **षण्ढतिला इति** ।। स्नेहविवर्जिततिलाः । दुर्बलत्वात् वायुना नीयमानतिल-साम्यमाह ।। ३८३-३९८ ।।

**चट्टि–** ननु पार्थेषु सत्सु 'अपतिर्ह्यसि' इति कथमाहेत्यत आह– **एत इति** ।। एते अखिलाः पार्थाः षण्डतिलाः निर्वीर्याः सन्तः तमोऽन्धं प्राप्ताः । एषां पाण्डवानां पुनरुत्थितिरुत्थानं न स्यात् । तमोऽन्धं प्राप्तानां यथा ऊर्ध्वगतिर्न स्यात्, तथैव तेषामप्येतदापन्निवृत्तिः कदापि न भविष्यति इति ब्रुवाणः सन् भीममनुचकार भीमगमनाद्यनुसारिगमनादिना अनुचकार । तथा सर्वे धार्तराष्ट्राः अहसन् । सर्वे च शकुनिकर्णादयश्चेति वा ।। ३८३ ।।

**तदाऽकरोद् [1]भीमसेनः प्रतिज्ञां हन्ताऽस्मि वो ह्यखिलान् सङ्गरेऽहम् ।**
**इतीरिते शरणं [2]द्रोणमेव जग्मुः समस्ता धृतराष्ट्रपुत्राः ।।३८४।।**

**व्यासतीर्थीया–** इतीरिते भीमेनैवमुक्ते ।। ३८४ ।।

**वेदाङ्गतीर्थीया–** हन्तास्मि हनिष्यामि ।। ३८४ ।।

**वरदराजीया–** अखिलान् वो युष्मान् हन्तास्मीति प्रतिज्ञां चकार । इति प्रतिज्ञारूपे वाक्ये ईरिते सति द्रोणं शरणं जग्मुः ।। ३८४ ।।

**जनार्दनीया–** हन्तास्मि हनिष्यामि । द्रोणमेव नान्यमित्यर्थः । एवकारोऽन्ययोगव्यवच्छेदः ।।३८४।।

**चट्टि–** तदा भीमसेनः सङ्गरे युद्धे अहमखिलान् वो युष्मान् हन्तास्मि इति प्रतिज्ञामकरोत् । इति भीमेनेरिते सति समस्ताः धृतराष्ट्रपुत्रा दुर्योधनादयः द्रोणमेव शरणं जग्मुः । नान्यमित्येवकारः अन्ययोगव्यवच्छेदः ।। ३८४ ।।

**[3]यत्र द्रोणस्तत्र पुत्रस्तत्र भीष्मः कृपस्तथा ।**
**न चात्येति गुरून् भीम इति तं शरणं ययुः ।।३८५।।**

**व्यासतीर्थीया–** द्रोणो भीमाद्बलाधिक इति किं तं शरणं जग्मुरिति तेषां भावजिज्ञासायामाह– **यत्रेति** ।। ३८५-३९६ ।।

**वेदाङ्गतीर्थीया–** किमभिप्रायेण द्रोणमेव जग्मुरित्यत आह– **यत्रेति** ।। पुत्रः अश्वत्थामा । द्रोणादीन् अतिक्रम्यापि भीमो निहनिष्यतीत्यत आह– **न चात्येति गुरुनिति** ।। ३८५-३८७ ।।

---

१. 'क्रूरः पापजनैर्जुष्टं अकृतार्थं प्रभाषसे । गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे ।। यथा तुदसि मर्माणि वाक्छरैरिह नो भृशम् । तथा स्मारयिता तेऽहं कृन्तन्मर्माणि संयुगे ।।' सभापर्वणि- ९१..१६-१७.

२. 'ततो दुर्योधनो कर्णः शकुनिश्चापि सौबलः । द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयन् ।।' सभापर्वणि-१०२.३९.

३. 'यतो भीष्मः ततो द्रोणः यद्भीष्मस्त्वाह तत्कुरु ।' इति उद्योगपर्वणि-१४८.१४.

**वरदराजीया–** भीमभीत्या द्रोणशरणमाप्तानां तेषां अभिप्रायमाह– **यत्रेति** ।। ततः किम्? इत्यत आह– **नचेति** ।। भीमो गुरून्नात्येति अतिक्रम्य न वर्तते इत्यभिप्रायेण तं द्रोणं शरणं ययुः ।। ३८५ ।।

**अनन्तभट्टीया–** द्रोणाभिसरणे निमित्तमाह– **यत्रेति** ।। न तु द्रोणो भीमादधिक इत्यभिप्रायेणेति भावः ।।३८५-३८७।।

**जनार्दनीया–** किमभिप्रायेण द्रोणमेव शरणं जग्मुरित्यत आह– **यत्रेति** ।। पुत्रः अश्वत्थामा । तानतिक्रम्य हनिष्यतीत्यत आह– **न चेति** ।। भीमः गुरून्नात्येति अतिक्रम्य न वर्तत इत्यभिप्रायेण ।।३८५।।

**चट्टि–** किमभिप्रायेण द्रोणमेव शरणं जग्मुरित्यत आह– **यत्रेति** ।। यत्र द्रोणः तत्र पुत्रः अश्वत्थामा तत्रैव भीष्मः कृपश्च । तानतिक्रम्य न हनिष्यति इत्यत आह– **न चेति** ।। भीमः गुरुन्नात्येति च इति वुद्ध्या तं द्रोणं शरणं ययुः, धार्तराष्ट्रा इति शेषः ।। ३८५ ।।

**अब्रवीद् धार्तराष्ट्रांश्च द्रोणो विप्रोऽपि सन्नहम् ।**
**सपुत्रः सकृपः शस्त्रं ग्रहीष्ये भवतां कृते ।।३८६।।**

**वरदराजीया–** विप्रोऽपि सन्नहं भवतां कृते भवदर्थं शस्त्रं ग्रहीष्ये ।। ३८६ ।।

**जनार्दनीया–** भवतां कृते भवदर्थे ।।३८६।।

**चट्टि–** द्रोणोऽहं विप्रः सन्नपि सपुत्रः सकृपः सन् भवतां कृते युष्मदर्थं शस्त्रं ग्रहीष्ये इति धार्तराष्ट्रानब्रवीच्च ।। ३८६ ।।

**रक्षणे भवतां चैव कुर्यां यत्नं स्वशक्तितः ।**
**न तु भीमाद् रक्षितुं वः शक्तः सत्यं ब्रवीम्यहम् ।।३८७।।**

**वरदराजीया–** भवतां रक्षणविषये स्वशक्तितो यत्नं कुर्याम् । भीमाद् वो युष्मान् रक्षितुं शक्तो नास्मीत्यवदत् ।। ३८७ ।।

**जनार्दनीया–** वो युष्मान् ।।३८७।।

**चट्टि–** भवतां रक्षणे विषये स्वशक्तितः यत्नं कुर्यामेव, भीमाद् वो युष्मान् रक्षितुं न शक्तः । अहं सत्यं ब्रवीमीत्यब्रवीत् इति ।। ३८७ ।।

**[1]ततो ययुः पाण्डवास्ते सभाया वनाय कृष्णासहिताः सुशूराः ।**
**गत्याऽनुचक्रे युवसिंहखेलगतिं भीमं धार्तराष्ट्रोऽपहस्य ।।३८८।।**

---

१. 'तस्य राजा सिंहगतेः सखेलं दुर्योधनो भीमसेनस्य हर्षात् । गतिं स्वगत्याऽनुचचार मन्दो निर्गच्छतां पाण्डवानां सभायाः ।।' सभापर्वणि-९९.२३.

**वेदाङ्गतीर्थीया–** युवसिंहखेलगतिं युवसिंह इव खेलगतिं चतुरगतिम् ।। ३८८ ।।

**वरदराजीया–** सभायाः सकाशाययुः । युवा चासौ सिंहश्च तत्खेलनवत् तत्खेलनसदृशी गतिर्गमनं यस्येति तम् । भीमं गत्या तद्गत्या अपहस्य अनुचक्रे ।

**अनन्तभट्टीया–** युवसिंहखेलगतिं भीमं गत्या अनुचक्रे ।। ३८८ ।।

**जनार्दनीया–** युवसिंहखेलगतिं युवसिंहवत् खेला चतुरा गतिः गमनं यस्य स तथा तम् । अपहस्य प्रहस्य गत्या गमनेन अनुचक्रे अनुकारं कृतवान् ।।३८८।।

**चट्टि–** ततोऽनन्तरं सुशूराः अतिशूरास्ते पाण्डवाः कृष्णया द्रौपद्या सहिताः सन्तः सभायां सकाशाद् वनाय ययुर्निर्गताः । धार्तराष्ट्रो [1]दुर्योधनः युवसिंहखेलगतिं युवसिंहवत् खेला चतुरा गतिः गमनं यस्य स तथा तम् । भीममपहस्य प्रहस्य गत्या गमनेनानुचक्रे ।। ३८८ ।।

**दृष्ट्वा सभाया अर्धनिष्क्रान्तदेहो व्यावृत्य भीमः प्राह संरक्तनेत्रः ।**
**ऊरुं तवान्यं च रणे विभेत्स्ये इत्युक्त्वाऽसौ निर्गतोऽसत्सभायाः ।।३८९।।**

**वेदाङ्गतीर्थीया–** असत्सभायाः दुर्योधनाद्यसत्तदनुवन्धिजनयुक्तत्वात् सभाया असत्त्वम् ।। ३८९ ।।

**सत्याभिनवीया–** तत्रैव 'दृष्ट्वा सभाया अर्धनिष्क्रान्तदेहो..' इति श्लोके सभाया अर्धनिष्क्रान्तदेह इत्यस्य सभाया निर्गतार्धदेह इत्यर्थः । एतेन सभाया निष्क्रान्तार्धदेह इति वक्तव्यम् । अर्धनिष्क्रान्तदेह इति कथनमनुपपन्नमिति दूषणं परिहृतम् । अर्धशब्दस्य निष्क्रान्तशब्दात् पूर्वं प्रयोगः छान्दसः इत्यभ्युपगमात् ।। ३८९-३९९ ।।

**वरदराजीया–** सभायाः सभाद्वारात् अर्धनिष्क्रान्तदेहो व्यावृत्य परावृत्याह । तवान्यं द्वितीयं चोरुं रणे विभेत्से । असत्सभायाः सकाशान्निर्गतः ।। ३८९ ।।

**अनन्तभट्टीया–** सभायाः शालायाः । अर्धनिष्क्रान्तो देहो यस्येति विग्रहः ।। **अन्यमिति** ।। अपरस्य पूर्वं विनियुक्तत्वादिति भावः ।। ३८९ ।।

**जनार्दनीया–** सभायाः अर्धनिष्क्रान्तदेहः अर्धनिष्क्रान्तः अर्धनिर्गतः देहो यस्य स तथा । भीमः व्यावृत्य दृष्ट्वा, अनुगमनं हासं चेति शेषः । प्राह । अन्यं द्वितीयं विभेत्स्ये । असत्सभायाः दुर्योधनाद्यसज्जनयुक्तत्वात् सभा असतीत्यर्थः । निर्गतः निर्ययौ ।।३८९।।

**चट्टि–** सभायाः अर्धनिष्क्रान्तो देहो यस्य स तथा । भीमः व्यावृत्य दृष्ट्वा, अनुगमनं हासं चेति शेषः । संरक्ते नेत्रे यस्य सः तथा सन् प्राह । तवान्यं द्वितीयमूरुं च रणे विभेत्स्ये इत्युक्त्वा, असौ भीमः असत्सभायाः दुर्योधनाद्यसज्जनयुक्तत्वात् सभा असदित्यर्थः । निर्गतः निर्ययौ ।। ३८९ ।।

---

१. 'दुःशासनः' इति क्वचित् कोशेषु ।

**प्रयातानन्नु तान् कुन्ती प्रययौ पुत्रगृद्धिनी ।**
**रोरुद्यमानां विदुरः स्थापयामास तां गृहे ।**
**प्रणम्य तां ययुः पार्थाः सकृष्णाः शीघ्रगामिनः ॥३९०॥**

**वेदाङ्गतीर्थीया–** प्रयातान् गच्छतः । कर्तरि क्तप्रत्ययः । पुत्रगृद्धिनी पुत्रस्नेहवती । रोरुद्यमानां भृशं रुदन्तीम् ॥ ३९० ॥

**वरदराजीया–** प्रयातान् तान् पाण्डवान् अनु सहैव कुन्ती प्रययौ निर्गतवती । यतः पुत्रगृद्धिनी पुत्रेषु स्नेहवती । रोरुद्यमानां भृशं रोदनं कुर्वन्तीं तां कुन्तीं विदुरो गृहे स्वगृहे स्थापयामास । पार्थास्तां कुन्तीं प्रणम्य, सकृष्णाः द्रौपद्या सहिताः शीघ्रगामिनो भूत्वा प्रययुः ॥ ३९० ॥

**अनन्तभट्टीया–** गृद्धिनी स्नेहवतीत्यर्थः । गृहे, स्वस्येति शेषः ॥ ३९० ॥

**जनार्दनीया–** प्रयातान् प्रयातुमारब्धान् गच्छतः । आदिकर्मणि निष्ठाः । कर्तरि क्तप्रत्ययः । तान् पार्थान् । पुत्रगृद्धिनी पुत्रस्नेहवती । विदुरः रोरुद्यमानां भृशं रुदन्तीं तां कुन्तीं गृहे स्वगृहे । तां कुन्तीम् ॥३९०॥

**चट्टि–** प्रयातान् गच्छतः । कर्तरि क्तः । तान् पार्थान् पुत्रगृद्धिनी पुत्रस्नेहवती कुन्ती अनुप्रययौ । विदुरः रोरुद्यमानां भृशं रुदन्तीं तां कुन्तीं गृहे स्वगृहे स्थापयामास । सकृष्णाः कृष्णया सहिताः पार्थाः तां कुन्तीं प्रणम्य, शीघ्रगामिनः सन्तः प्रययुः ॥ ३९० ॥

**युधिष्ठिरोऽवाग्वदनो ययौ न [१]क्रोधचक्षुषा ।**
**दहेयं कौरवान् सर्वानिति कारुणिको नृपः ॥३९१॥**

**वेदाङ्गतीर्थीया–** 'इति कारुणिको नृपः' इत्यादाविविशब्दस्य इत्यभिप्रायवानित्यर्थः ॥३९१-३९४॥

**वादिराजतीर्थीया–** 'न क्रोधचक्षुषा दहेयम्' इत्यत्र भीमसेनेन क्रोधचक्षुषा दर्शनेऽपि कुतः कौरवाणां न दाहः । धर्मराजस्य क्रोधचक्षुषा कुतो दाहशङ्का इति चेत्सत्यम् । भीमस्य विद्योपजीवनाभावात् न क्रोधचक्षुषा तपसो मेलनम् । अतो न दाहः । धर्मराजस्य तु विद्योपजीवित्वात् क्रोधेन सह तपो मिलितं गच्छेदेव अतस्तपःसामर्थ्यात् दाहो भवेदिति विवेकसम्भवात् । यथा हंसस्य नीरं विहाय क्षीरमात्रादाने शक्तिरस्ति । तथा श्रीभीमसेनः तपोऽसङ्कलय्य केवलं क्रोधमेव कर्तुं शक्नोति । धर्मराजस्य तु पक्ष्यन्तरवत् न तथा विवेचनशक्तिरस्ति । तस्माद्धर्मराजक्रोध एव दाहाशङ्केति भावः॥ ३९१-३९२ ॥

---

१. 'योऽसौ राजा घृणी नित्यं धार्तराष्ट्रेषु भारत । निकृत्या भ्रंशितः क्रोधात् उन्मीलयति लोचने ॥ नाहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा । स पिधाय मुखं राजा तस्माद्गच्छति पाण्डवः ॥' सभापर्वणि-१०२.११-१२.

**वरदराजीया–** युधिष्ठिरोऽवाग्वदनो अधोमुखः सन् ययौ । तथागन्तुर्युधिष्ठिरस्याभिप्रायमाह– **नेति** ।। कारुणिकः करुणावान् नृपो युधिष्ठिरो क्रोधचक्षुषा सर्वान् कौरवान् दहेयं यद्येतान् पश्येयमित्यभिप्रायेण इत्यर्थः ।। ३९१ ।।

**अनन्तभट्टीया–** अवाग्वदनगमने हेतुमाह– **नेति** ।। ३९१-३९६ ।।

**जनार्दनीया–** कारुणिकः कृपावान् नृपो धर्मराजः क्रोधचक्षुषा क्रोधदृष्ट्या न दहेयं इत्यभिप्रायेण अवाग्वदनोऽधोमुखः सन् ययौ ।।३९१।।

**चट्टि–** तेषां गमनप्रकारमाह– **युधिष्ठिर इति** ।। कारुणिकः कृपावान् नृपः युधिष्ठिरः क्रोधचक्षुषा क्रोधदृष्ट्या सर्वान् कौरवान् न दहेयमित्यभिप्रायेणावाग्वदनः अधोमुखः सन् ययौ ।। ३९१ ।।

**[1]उद्धृत्य बाहू प्रययौ बाहुशाली वृकोदरः ।**
**आभ्यामेवाखिलाञ्छत्रूञ्छक्तो हन्तुमहं त्विति ।।३९२।।**

**वरदराजीया–** वृकोदरो बाहू उद्धृत्य प्रययौ । तथागन्तुः वृकोदरस्याभिप्रायमाह– **आभ्यामिति** ।। आभ्यां बाहुभ्यां अखिलान् शत्रून् हन्तुमहमलं शक्त इत्यभिप्रायवान् ।। ३९२ ।।

**जनार्दनीया–** आभ्यां बाहुभ्याम् । हन्तुं शक्त इत्यभिप्रायेण बाहू उद्धृत्य प्रययौ ।।३९२।।

**चट्टि–** बाहुशाली वृकोदरः भीमश्च आभ्यां बाहुभ्यां एवाखिलान् शत्रून् हन्तुं शक्तः इत्यभिप्रायेण बाहू उद्धृत्य प्रययौ ।। ३९२ ।।

**[2]अबद्धकेशा प्रययौ द्रौपदी सा सभातलात् ।**
**मुक्तकेशा भविष्यन्ति धार्तराष्ट्रस्त्रियस्त्विति ।।३९३।।**

**वादिराजतीर्थीया–** 'धार्तराष्ट्रस्त्रियस्तु' इत्यत्र स्नानाभ्यञ्जनादौ मुक्तकेशत्वस्य पतिमतीष्वपि सम्भवात् तुशब्देन सर्वदा मुक्तकेशत्वं सूचयति ।। ३९३-३९६ ।।

**वरदराजीया–** सा द्रौपदी । अबद्धाः केशाः यस्याः सा तथा । भूत्वा सभातलात् प्रययौ । अस्याः अभिप्रायमाह– **मुक्तकेशा इति** ।। धार्तराष्ट्रेषु युद्धे हतेषु सत्सु तेषां स्त्रियः मुक्तकेशा भविष्यन्ति इत्यभिप्रायवतीत्यर्थः ।।३९३।।

---

१. 'यथा च भीमो व्रजति तन्मे निगदतः शृणु । बाह्वोर्बले नास्ति सव्यो ममेति भरतर्षभ । बाहू विशालौ कृत्वाऽसौ तेन भीमोऽपि गच्छति । बाहू विदर्शयन्राजन् बाहुद्रविणदर्पितः ।। चिकीर्षन्कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः । प्रदिशन् शरसम्पातान् कुन्तीपुत्रोऽर्जुनस्तदा ।।' सभापर्वणि.१०२.१३-१५

२. 'एकवस्त्रा प्ररुदती मुक्तकेशी रजस्वला । शोणितेनाक्तवसना द्रौपदीवाक्यमब्रवीत् ।। यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्दशे । हतपत्यो हतसुता हतबन्धुजनप्रियाः ।। बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः । एवं कृतोदका भार्याः प्रवेक्ष्यन्ति गजाह्वयम् ।।' सभापर्वणि.१०२.१९-२१.

**जनार्दनीया–** मुक्तकेशाः भविष्यन्ति, दुःखात् मृतपतीनालिङ्ग्येति शेषः । इति अवद्धकेशा: अबद्धाः केशाः यस्याः सा तथा ।।३९३।।

**चट्टि–** धार्तराष्ट्रेषु हतेषु सत्सु धार्तराष्ट्राणां धृतराष्ट्रपुत्राणां स्त्रियः मुक्तकेशाः भविष्यन्तीत्यवद्धकेशा सती सा द्रौपदी सभातलात् प्रययौ ।। ३०३ ।।

**वर्षन् पांसून् ययौ [1]पार्थ इत्थं शत्रुषु सायकान् ।**
**वर्षयानीत्यभिप्रायः परमास्त्रविदां वरः ।।३९४।।**

**वरदराजीया–** पार्थः पांसून् रजांसि वर्षन् ययौ । किमभिप्रायवान् इत्यतः इत्थं पांसून् यथा वर्षयामि तथा शत्रुषु सायकान् वर्षयामीति अभिप्रायो यस्य स तथा । यतः परमास्त्रविदां मध्ये वरः श्रेष्ठ इत्यर्थः ।।

**जनार्दनीया–** पांसून् धूलीः । सायकान् बाणान् ।।३९४।।

**चट्टि–** परमास्त्रविदां वरः पार्थः अर्जुनः इत्थं शत्रुषु सायकान् वर्षयामीत्यभिप्रायेण पांसून् धूलिसङ्घान् वर्षन् सन् ययौ ।। ३९४ ।।

**यमाववाङ्मुखौ यातौ नावयोः शत्रवो मुखम् ।**
**पश्यन्त्वस्यामवस्थायामित्येव धृतचेतसौ ।।३९५।।**

**वेदाङ्गतीर्थीया–** अस्यामवस्थायां एवं निर्गमनवेलायाम् ।। ३९५ ।।

**वरदराजीया–** यमौ नकुलसहदेवाववाङ्मुखौ सन्तौ यातौ ययतुः । तयोरपि तथागमने निमित्तमाह– **नावयोरिति** ।। अस्यामवस्थायां दुःखावस्थायां आवयोर्मुखं शत्रवः न पश्यन्त्वित्येतमर्थमित्यर्थः ।।

**जनार्दनीया–** अस्यामवस्थायां दुःखावस्थायां आवयोर्मुखं न पश्यन्त्विति । धृतचेतसौ धृतं चेतो याभ्यां तौ तथा ।।३९५।।

**चट्टि–** अस्यामवस्थायां दुरवस्थायां शत्रवः आवयोर्मुखं न पश्यन्तु इति धृतं चेतो याभ्यां तौ तथाभूतौ यमौ अवाङ्मुखौ सन्तौ यातौ ।। ३९५ ।।

**प्रेतसंस्कारसूक्तानि पठन् धौम्योऽग्रतो ययौ।**
**हतेषु धार्तराष्ट्रेषु मया कार्याः क्रिया इति ।।३९६।।**

**वरदराजीया–** अग्रतः पाण्डवानां पुरतः प्रेतसंस्कारे विनियुक्तानि सूक्तानि पठन् ययौ । प्रेतसूक्तानि पठतो धौम्यस्याभिप्रायमाह– **हतेष्विति** ।। क्रियाः प्रेतकार्याणि ।। ३९६ ।।

---

१. 'सिकता वपन् सव्यसाची राजानमनुगच्छति । असक्ताः सिकतास्तस्य यथा सम्प्रति भारत ।। असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु ।।' सभापर्वणि-१०२.१६.

**जनार्दनीया–** धौम्यः धौम्यनामा पार्थपुरोधाः क्रियाः प्रेतसंस्कारकर्माणि मया कार्या इत्यभिप्रायेण अग्रतः पाण्डवाग्रतः ययौ ।।३९६।।

**चट्टि–** धौम्यः धौम्यनामा पार्थानां पुरोधाः धार्तराष्ट्रेषु दुर्योधनादिषु हतेषु सत्सु क्रियाः प्रेतसंस्कार-कर्माणि मया कार्याः करणीयाः इत्यभिप्रायेण अग्रतः पाण्डवानां अग्रतः प्रेतसंस्कारसूक्तानि पठन् ययौ ।।

**[1]तानथानुययुः सूता रथैः परिचतुर्दशैः ।**
**सूदाः पौरोगवाश्चैव भृत्या ये त्वाप्तकारिणः ।।३९७।।**

**व्यासतीर्थीया–** पौरोगवाः सूदाध्यक्षाः गोपालस्वामिनो वा ।। ३९७-३९९ ।।

।। इति श्रीमज्जयतीर्थपूज्यपादशिष्यश्रीव्यासतीर्थविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भारतभावपञ्चिकायां एकविंशोऽध्यायः ।।

**वेदाङ्गतीर्थीया–** परितश्चतुर्दशैः उपरथत्वेन परितश्चतुर्दशरथयुक्तैः रथैः प्रधानरथैः । प्रधानभूतैकैकस्य परितश्चतुर्दशचतुर्दशोपरथा आसन्निति भावः । पौरोगवाः सूदाध्याक्षाः ।। ३९७-३९९ ।।

।। इति श्रीवेदाङ्गतीर्थभट्टारकविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां तात्पर्यदीपिकायां एकविंशोऽध्यायः ।।

**वादिराजतीर्थीया–** 'रथैः परिचतुर्दशैः' इत्यत्र परि परितः दशसङ्ख्याकाः उपरथा एषां ते तथोक्ताः तैः । पञ्चपाण्डवानां रथैः धर्मराजस्य राजतया पृष्ठगामित्वेन पृष्ठे न रथान्तरापेक्षा । अतस्तस्य पार्श्वे द्वावेव रथौ । अन्येषां योद्धृतया एकः पृष्ठे रथः । द्वौ द्वौ पार्श्वयोः । एवं चतुर्दश उपरथा इति ज्ञेयम् । 'सूदाः पौरोगवाश्च' इत्यत्र सूदयन्ति चूर्णयन्ति मरीचितण्डुलानिति सूदाः पाककर्तारः । पाकस्य पुरतो गौः चक्षुस्तत्सम्बन्धिनः पौरोगवाः, पाकसाक्षिणः इत्यर्थः । 'सूदा औदनिका गणाः । पौरोगवास्तदध्यक्षाः सूपकराः' इति च अनुशासनम् ।। ३९७-३९९ ।।

।। इति श्रीमत्कविकुलतिलकश्रीमद्वादिराजपूज्यचरणविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां भावप्रकाशिकायां एकविंशोऽध्यायः ।।

**वरदराजीया–** सूताः सारथयः परिचतुर्दशैश्च चतुर्दशसङ्ख्याकैः रथैः सहताननुययुः । सूदाः पाककर्तारः पौरोगवाः सूदाध्यक्षाः पुरोगन्तारो वा । आप्ताश्च ते कारिणः सेवकाः ये भृत्यास्तेऽप्यनुययुः ।।३९७।।

**अनन्तभट्टीया–** परिचतुर्दशैः चतुर्दशसङ्ख्याकैरित्यर्थः । सूदाः पक्तारः । पौरोगवाः सूदाध्यक्षाः । गोपालस्वामिनो वा ।। ३९७-३९९ ।।

।। इति श्रीमद्विद्वच्छिरोग्रामणिनरसिंहाचार्यसुतेन अनन्ताख्येन कृतायां तन्त्रमालायां एकविंशोऽध्यायः ।।

---

१. 'इन्द्रसेनादयश्चैतान् भृत्याः परिचतुर्दशम् । रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः ।।' वनपर्वणि-१.११.

**लघ्वनन्तभट्टीया–** पौरोगवाः पुरोगन्तारः ।।३९७-३९९।। वीरबाह्वर्पणमस्तु ।

।। इति लघ्वनन्तभट्टीये एकविंशोऽध्यायः सम्पूर्णम् ।।

**जनार्दनीया–** सूताः सारथयः । परिचतुर्दशैः परितः चतुर्दश एषां ते तथा तैः । चतुर्दशोपरथयुक्तैः रथैः प्रधानरथैः सह । एकैकरथस्य परितश्चतुर्दशचतुर्दशोपरथाः आसन्निति भावः । तान् पार्थान् अनुययुः । सूदाः पाककारिणः । पौरोगवाः सूदाध्यक्षाः । ये आप्तकारिणः सेवां कुर्वन्ति ते कारिणः, आप्ताश्च ते कारिणश्च ते सेवका इत्यर्थः । त एवानुययुः ।।३९७।।

**ताम्रपर्णीया–** परिचतुर्दशैः प्रत्येकं चतुर्दशरथयुक्तप्रधानरथैः । पाण्डवस्त्रिय आदाय ययुरित्यर्थः । 'इन्द्रसेनादयश्चैतान् भृत्याः परिचतुर्दशैः । रथैरन्वययुः शीघ्रं स्त्रिय आदाय सर्वशः' इति (वनपर्व-१.११) भारते । परिययुरिति वा । पौरोगवाः पुरोगन्तारः सूदाध्यक्षा वा । आप्तश्च ते कारिणः सेवकाः भृत्यास्तेऽप्यनुययुः ।। इत्यशेषमतिमङ्गलम् ।।३९७-३९९।।

।। इति श्रीविठ्ठलाचार्यतनूजश्रीमत्तीर्थाचार्यानुजेन तच्चरणसेविना श्रीनिवासेन विरचितायां प्रमेयमणिमालायां (प्रमाणमालायां) एकविंशोऽध्यायः ।।

**चट्टि–** सूताः सारथयः परिचतुर्दशैः परितः चतुर्दशोपरथयुक्तैः रथैः प्रधानरथैरेकैकरथस्य परितश्चतुर्दशोपरथा आसन्निति भावः । तान् पार्थान् अनुययुः । सूदयन्ति मरीचतण्डुलादीनिति सूदाः पाककर्तारः । पौरोगवाः सूदाध्यक्षाश्चैव ये आप्तकारिणः सेवां कुर्वन्ति ये भृत्याः ते सर्वे अनुययुः ।।३९७।।

**ततस्ते जाह्नवीतीरे वने वटमुपाश्रिताः ।**
**न्यषीदन्नागतान् दृष्ट्वा समस्तान् पुरवासिनः ।।३९८।।**

**वरदराजीया–** जाह्नवीतीरे विद्यमाने वने तत्रापि वटे पुरवासिनः सर्वानागतान् दृष्ट्वा न्यषीदन्नुपविष्टाः । तान्निवारयितुमित्यर्थः ।। ३९८ ।।

**जनार्दनीया–** ततः सभातलाद्गमनानन्तरं जाह्नवीतीरे स्थिते वने स्थितं वटमुपाश्रिताः सन्तः न्यषीदन् उपविष्टाः । किं कृत्वा? पुरवासिनः नागपुरवासिनः । दृष्ट्वा, वारयितुमिति शेषः ।।३९८।।

**चट्टि–** ततः सभातलात् गमनानन्तरं ते पार्थाः जाह्नवीतीरे स्थिते वने स्थितं वटमुपाश्रिताः सन्तः समस्तान् पुरवासिनः आगतान् दृष्ट्वा न्यषीदन् उपविष्टाः, वारयितुमिति शेषः ।। ३९८ ।।

**ततस्तु ते सर्वजगन्निवासं नारायणं नित्यसमस्तसद्गुणम् ।**
**स्वयम्भुशर्वादिभिरर्चितं सदा भक्त्याऽस्मरन् भक्तभवापहं प्रभुम् ।।३९९।।**

**।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमन्महाभारततात्पर्यनिर्णये एकविंशोऽध्यायः ।।**

**वरदराजीया–** ततस्ते पाण्डवा भक्त्या नारायणमस्मरन् स्मृतवन्त इति सम्बन्धः । सर्वस्य जगतो निवासमाश्रयम् । नित्याः समस्ताः अनन्ताः सन्तो गुणाः यस्य स तथा । सदा संसारे मुक्तौ च स्वयम्भुशर्वादिभिः दैवैरर्चितं भक्तानां भवस्य संसारस्यापहन्तारं प्रभुं समर्थं नारायणमिति सम्बन्धः ।।३९९।। इत्यशेषमतिमङ्गलम् ।

।। इति आद्यवरदराजाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां मन्दसुबोधिन्यां एकविंशोऽध्यायः ।।

**जनार्दनीया–** ते पार्थाः नारायणं भक्त्या तु विशेषेण अस्मरन् । कथम्भूतम्? भक्तभवापहं भक्तानां संसारनाशकम् । सदा संसारावस्थायां मुक्तौ च अर्चितं पूजितम् ।।३९९।।

यं गङ्गाजमदग्निजान्वयभवाद्विद्वद्धिरण्याभिधात्
पुत्रं प्राप जनार्दनं शमदमःस्वाध्यायसम्प्रयुतात् ।
पूर्तिं तस्य कृतौ सतां सुखकरोऽध्यायैकविंशः शुभः
श्रीमद्भारतभावनिर्णयपदार्थोद्दीपिकायामगात् ।।

।। इति जनार्दनभट्टविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटीकायां पदार्थदीपिकायां एकविंशोऽध्यायः ।।

**भावचन्द्रिका–** ऐश्वर्यप्रापकः परिहर्ता च स्वयमित्याह– **सर्वेति** ।। अज्ञादिस्थितत्वेन अज्ञानादि स्यादित्यत आह– **नारायणमिति** ।। तत्कुतः पूर्णज्ञानादिमत्वात् इत्याशयेन तत्पदस्यार्थान्तरमाह– **नित्येति** ।। *..उद्देश्यमाह– **भवापहमिति** ।। अनादिनिवर्तने सामर्थ्यमाह– **प्रभुरिति** ।। ३९९ ।।

।। इति श्रीनिवासाचार्यविरचितायां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां भावचन्द्रिकायां एकविंशोऽध्यायः ।।

**चट्टि–** ततस्ते पार्था सर्वजगन्निवासं सर्वस्य जगतः निवासमाश्रयं नित्याः समस्ताः सन्तोषगुणाः यस्य स तथा तम् । सदा संसारे मुक्तौ च स्वयम्भुशर्वादिभिर्देवैः अर्चितं भक्तानां भवस्य संसारस्योपहन्तारं प्रभुं समर्थं श्रीमन्नारायणं भक्त्या अस्मरन् ।। ३९९ ।।

।। इति चट्टिकोनेरिणा विरचितायां सर्वटीकानुसारिण्यां श्रीमन्महाभारततात्पर्यनिर्णयटिप्पण्यां एकविंशोऽध्यायः ।।

★★★

# श्लोकार्धानुक्रमणिका

ख



ग



घ



च

प

र

## ल



## व

### श



### ष



### स

